॥ श्रीः ॥

# श्रीसुभाषितसुधारत्नभाण्डागारम् ।

अथवा

## सुधातिशायिसुभाषितरत्नगर्भसंदर्भः

सटिप्पणीकः ।





खेमराज श्रीकृष्णदास

मालिक—"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस, बम्बई ।



# SUBHASHITASUDHA-RATNA-BHANDAGARAM

OR

## TREASURES OF SANSKRIT POETRY

BEING

A Collection of Amusing, Sarcastic and Instructive Verses.

Compiled and Annotated

BY

PANDIT SHIVADATTA KAVIRATNA.



Thoroughly Revised, Enlarged and Brought up to date



KHEMRAJ SHRIKRISHNADASS,

SHRI VENKATESHWAR STEAM PRESS,

BOMBAY.

श्रीः ।

# श्रीसुभाषितसुधारत्नभाण्डागारम्



अथवा

## सुधातिशायिसुभाषितरत्नगर्भमहासंदर्भः ।



शिवदत्तकविरत्नसंगृहीतस्तत्कृतटिप्पण्यलंकृतः,

पुनश्च

बहुभिर्विद्वद्भिर्भृशं संशोधितः ।



" सुभाषितेन गीतेन युवतीनां च लीलया ।
मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥ "

स एव

मुम्बय्यां

क्षेमराज-श्रीकृष्णदास-श्रेष्ठिना

स्वीये-"श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये.

मुद्रयित्वा प्रकाशितः ।

संवदब्दाः १९८५, शकाब्दाः १८५०.

॥ श्रीहरिः ॥

# उद्घोषणा !

आवर्जयति यथा सहसा महतामभहतां वा चेतः सुभाषितानां सन्दोहः, न तथाऽन्यदलङ्कारादि किमपि । सालङ्कारादयो हि सुभाषितविधुराः पराभूयन्ते, निरलङ्काराश्चापि सुभाषितैर्महिताः पुरस्क्रियन्ते सभ्यैः । अत एवाभाणि चाणक्येन—

"कथमिह मनुष्यजन्मा स प्रविशति सदसि विबुधगमनीये । येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः ॥" इति ।

तस्मात्सर्वैरपि सुभाषितसम्पन्नैर्भवितव्यमिति सहृदयानामवधारणा । सुभाषितानि च "वमति हि मधुधारां भाषितं सज्जनानाम्" इत्युक्तदिशा यथा महोदाराणां महनीयानि भवन्ति, न तथाऽन्येषाम् । एतानि चापि तत्तत्समयसव्यपेक्षाण्येव । एवंविधानि पुनर्नैकत्र कुत्रापि प्रायः सुलभानीति । ततस्ततः सङ्ग्राहं सङ्ग्राहं जनतोपकृतिकृतेऽनेके सन्दर्भाः सङ्कलिताः । इदं तु निर्विवादमेव, यन्न सर्वाणि काव्यान्यवगन्तुं कश्चित्प्रभवति। काव्यानि हि भूयांसीति सर्वेषां काव्यानां नाटकानां च सुभाषितमयत्वेऽपि स्थालीपुलाकन्यायेन दिङ्मात्रं निर्देश एव तावद्विधातुं पर्य्याप्तो गुणग्रहीतॄणां प्रसरद्बुद्धीनाम् । ततः परं तु स्वयं तथा भवितव्यं यथा परे तेषामपि भाषितान्युपादेयानि मन्येरन् ।

सुभाषितानि च त्रिषयभेदेन भिद्यन्ते । विषयाश्च केचनाभिवन्दनीयाः, केचिदभिनन्दनीयाः, केचिद्गर्हणीयाः, केचिद्भूय एभ्योऽपि विलक्षणाः । एतेऽपि सामान्येन वैशिष्ट्येन च निर्देष्टव्या भवन्तीति । तत्राभिवन्दनीया यथा--प्रथमे भाण्डे, परब्रह्मप्रभृतीनां ह्यभिवन्दनेन लोकानां श्रेयः । अभिनन्दनीया यथा--द्वितीये भाण्डे, काव्यानि, काव्यजीवातुभूता रसाश्च परमाह्लादमयतया पामरेतरस्य सर्वस्यापि जगतोऽभिनन्दनीयाः। गर्हणीयाः पुनस्तृतीये भाण्डे,अमी चाभिनन्दनीयसव्यपेक्षा इत्यभिनन्दनीया अपि तत्र निर्दिष्टाः । यथाऽसज्जनादयो गर्हणीयास्तथा सज्जनादयोऽभिनन्दनीया अपीत्येकत्रैवोपन्यस्ताः । यद्वा--एकस्य हि कार्यस्य निहन्तारो गर्हणीया गीयन्ते विधातारः पुनरभिनन्दनीयाः । इत्येवमेतेषां तत्र तत्रोभयेषामेवोद्देशानुसारं निर्देशः । यथाऽभिनन्दनीयत्वेन केचित्साक्षान्निर्देष्टव्यास्तथा वस्तुस्थितिनिर्देशेनाभिनन्दनीया अपि केचित्स्युरिति तथाविधानां निर्देशश्चतुर्थे भाण्डे । 'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।' इत्यादिलक्ष्यं काव्यशास्त्रं समस्याऽऽदिरूपम्, अस्य च पञ्चमे भाण्डे, सन्निवेशः । परब्रह्मणो यथा न साक्षाद्वचनं सम्भवति, तथा केषाञ्चिद्दोषा गुणा अपि कदाचिन्न वक्तुं शक्यन्ते निबोधनीयाश्चावश्यमित्येषामपह्नुत्यादिरूपाणां षष्ठे भाण्डे निक्षेपः । सप्तमे पुनर्विशिष्टानि वाक्यानि। एतानि तेभ्यः सर्वेभ्योऽपि विलक्षणानीति सप्तभाण्डमयोऽयं सन्दर्भः। अत्र च दुर्बोधानां पदार्थानां सुबोधताऽऽपादनायाधस्तादृिप्पण्या उपन्यासः । एवं परिष्कृत्य सम्पादितमिदं **सुभाषितसुधारत्नभाण्डागारं** श्रीमतां **क्षेमराज—श्रीकृष्णदासगुप्त**महोदयानामादेशानुसारं सम्पाद्य तेभ्य एव सर्वात्मना सार्वदिकतत्प्रकाशनाद्यधिकारदानपुरःसरं समर्प्यते । इति ॥

शिवदत्त—कविरत्नस्य ।

॥ श्रीः ॥

# सुभाषितसुधारत्नभाण्डागारस्य तत्तद्विषयपृष्ठपद्यसंख्यानिर्देशः ।



१ एतच्चिह्नान्तर्गतः प्रमादान्मूले त्रुटितः पाठः ।
२ एतच्चिह्नाऽन्तर्गतः पाठस्तु प्रमादान्मूले त्रुटितः ।

१ एताचिह्नान्तर्गतमेव पठनीयम्, मूले स्थितस्तु प्रामादिकः पाठः ।

## तृतीय–भाण्डम् ।

( विशिष्टकविवर्णनम् )



१ अस्मिन्प्रकरणे सप्तमपद्यान्ते विच्छेदः प्रामादिकः ।

## चतुर्थ-भाण्डम् ।

## पञ्चमं भाण्डम् ।

## षष्ठ—भाण्डम् ।

## तत्तद्विषयपृष्ठपद्यसंख्यानिर्देशः ।

समाप्तोऽयं सुभाषितसुधारत्नभाण्डागारस्य—तत्तद्विषयपृष्ठपद्यसंख्यानिर्देशः ।

श्रीः ।

# सुभाषितसुधारत्नभाण्डागारस्य—अकारादि-पद्यानुक्रमणिका ।



१ सर्वेति मूले पाठः प्रामादिकः ।

पद्यम् — पृष्ठे संख्या



१ अन्नमितिपाठश्चिन्त्यः ।

पद्यम् — पृष्ठे संख्या

१ 'अथ' इति प्रमादान्मूले पाठः पतितः।

१ अभिभूयेति पाठान्तरम्।

१ आकर इति पाठस्तु मले प्रमादात्पतितः ।

१ आवर्त्त एव नाभिस्त इति प्रकाशादौ ।

१ आस्तामिति पाठो मूले प्रमादात् पतितः ।

१ निन्दत इति मूले पाठस्तु प्रमादात् पतितः ।

१ इदमसाविति मूले पाठस्तु प्रमादात्पतितः ।

| पद्यम् | पृष्ठे. संख्या |
|---|---|
| उत्तिष्ठन्त्या रतान्ते भर ( निशा-नारायणस्य ) ... ... | २८।१५ |
| उत्तिष्ठमानस्तु परो नोपे ( माघस्य ) | ४७३।२०२ |
| उत्तुङ्गमत्तमातङ्गमस्तक ... | ६४६।२ |
| उत्तुङ्गवातायनगोपुराणि ... | २७०।५५ |
| उत्तुङ्गशैलशिखरस्थित ... | ६२२।२९ |
| उत्तुङ्गस्तनपर्वतादवतर ... ... | ८९।२८ |
| उत्तुङ्गस्तनभरतान्ततान्त ... | ६१।२७ |
| उत्तुङ्गस्तनभार एष तरले ... | ८९।२९ |
| उत्तुङ्गस्तनमण्डलोपरि ... ... | २७।१० |
| उत्थापितः संयति रेणु ( कालि-दासस्य ) ... ... | ४३८।३४ |
| उत्थाय हृदि लीयन्ते दरि ... | ३३२।२ |
| उत्थायोत्थाय बोद्धव्यं ... ... | ४९४।४३२ |
| उत्थितो निशि कलानिधि ... | ६९।२२ |
| उत्पत्स्युत्पन्नशिष्टा विविध ... | ४०८।३०८ |
| उत्पत्तिर्जमदग्नितः ... ... | ४१०।३ |
| उत्पादयत्यलमिदं मनसो ... | ११९।९ |
| उत्पादिता स्वयमियं यदि (भर्तृहरेः) | ३४०।३६ |
| उत्प्लुत्य यः शिखरिणं पद ... | ६२३।३४ |
| उत्प्लुत्यारादर्धचन्द्रेण लूने ( कालि-दासस्य ) ... ... | ४४०।८५ |
| उत्फुल्लगल्लैरालापाः क्रियन्ते ( त्रिविक्रमभट्टस्य ) ... | ५२।१२ |
| उत्फुल्लपङ्कजनिषक्तलस ... | २००।८६ |
| उत्फुल्लरम्यसहकाररसाल ... | ६३९।१८ |
| उत्फुल्लामलकोमलोत्पल ... | ३४।७ |
| उत्फुल्लार्जुनसर्जवासित ... ... | २१५।६१ |
| उत्सरङ्गकलितोरुकटारी ... | ५६८।१ |
| उत्सवे व्यसने चैव दुर्भिक्षे ... | ३६९।८ |
| उत्सार्य कुन्तलमपास्य ... ... | १८७।१० |
| उत्साहसंपन्नमदीर्घसूत्रं ( पञ्चतन्त्रे ) | ३२८।२५ |
| उत्साहस्य प्रभोर्मन्त्रस्यैवं ... | २७४।२२५ |
| उत्सृष्टं कुचसीम्नि ... ... | ३५।१ |
| उत्सिक्तः कुसुमासवैः ... ... | १८८।२९ |
| उत्स्वप्नमम्बुजदृशामिव ... ... | २००।८५ |
| उदग्रगोतावत ( कृष्णरामस्य ) | ४२९।१ |
| उदञ्चत्कावेरीलहरिषु (राक्षसपण्डितयोः) | २०३।१३ |
| उदञ्चद्दक्षोजद्वयतटभर ... | ६६।४१ |
| उदञ्चय दृगञ्चलं चलतु ... | १५६।४२ |
| उदधिरवधिरुर्व्यास्तं हनूमान् ... | ३०९।२२३ |
| उदन्वच्छन्ना भूः स च (राजशेखरस्य) | ३१०।२३९ |
| उदमज्जि कैटभजितः ( माघस्य ) | १४६।५७ |
| उदयगिरितटस्थः पद्मिनी[1] ... | १३६।६० |
| उदरार्थं ( संग्रहीतुः ) ... | ४७६।३०१ |
| उदयसिंह ( संग्रहीतुः ) ... | ४११।१ |
| उदयतटान्तरितमिमं ( श्रीहर्षस्य ) | १४४।११ |
| उदयति कलैमन्द्रैः कण्ठ ... | १४७।७९ |
| उदयाति तरुणिमसरणौ ... | ६४।१४ |
| उदयाति यदि भानुः पश्चिमे ... | ३१०।२२८ |
| उदयति विततोर्ध्वरश्मि ( माघस्य ) | १९०।५ |
| उदयदुदयदक्षिणाय पत्यु ... | ६१।२८ |
| उदयन्नेव सविता पद्मेष्वर्पयति | ३७०।२१ |
| उदयमयते दिङ्मालिन्यं (काव्यप्रकाशे) | १९१।१८ |
| उदयमुदितदीप्तिर्याति ( माघस्य ) | १८२।८ |
| उदयशिखरिशृङ्गप्राङ्गणे( माघस्य ) | १९०।१६ |
| उदयाद्रेरुड्डीनो ( रामकृष्णस्य ) | १३८।७७ |
| उदरम्भरिता ( संग्रहीतुः ) ... | ६३१।१ |
| उदयप्रभ ... ... | २८५।१ |
| उदयप्रभ ... ... | २८५।२ |
| उदरदरीयं गहना ... | ३८२।२ |
| उदये सविता रक्तो रक्त (काव्यप्रकाशे) | ३०१।२० |
| उदरद्वयभरणभयादर्धा (सार्वभौमस्य) | २५४।१७ |
| उदर्कभूतिमिच्छद्भिः सद्भिः ... | ४८८।२४३ |
| उदस्य धैर्यं दयितेन साद ( भारवेः ) | २०९।३५ |
| उदारचरितस्त्यागी याचितः ... | ३४१।१४ |
| उदारस्य तृणं वित्तं शूरस्य ... | ४८५।१५० |
| उदासीना लीनामपि वच ... | ६३।४९ |
| उदाहरणमाशीःषु प्रथमे ते (भारवेः) | ३५३।१७ |
| उदितं प्रियां प्रति सहार्द ( माघस्य ) | १२४।३७ |
| उदितवति द्विजराजे कस्य ... | ६४७।८ |
| उदितवाति परस्मिन्प्रत्य ... | ५४१।९२ |
| उदितेऽपि तवावनीन्द्रतेजः ... | ४४५।७ |
| उदितोरुसादमतिवेपथुं ( माघस्य ) | १६३।९ |
| उदीरितोऽर्थः पशुनापि ... | ५१०।९११ |

१ कमलेति पाठस्तु मूले प्रमादात्।

६

१ एतस्येति पाठस्तु प्रमादान्मूले पतितः।

१ गण्डेति पाठस्तु प्रामादिकः ।

१ मूले पद्याङ्कानिर्देशः प्रामादिकः ।

१ काचिदिति माघे पाठः ।

१ कुरङ्गाक्ष्यामेणीमिति मूलस्थः पाठस्तु प्रामादिकः।

१ कृच्छ्रानुवृत्तवः इति मूले पाठः प्रामादिकः।

१ क्षीणे इति प्रामादिकः पाठः।

१ क्षेमं ते पक्ष्मलेत्यादि ननु इति रहितः पाठः प्रमादात्।

१ नासादिति पाठस्तु प्रामादिकः।

१ स्तापनेति पाठस्तु प्रामादिकः ।

१ धावयन्तीति मूले पाठः प्रमादात्।

१ धूतेति पाठस्तु मूले प्रामादिकः।

१ मूले विसर्गान्तताऽभावः प्रमादात्।

१ चलेति मूले प्रामादिकः पाठः।



१ 'नव' इति मूले पाठस्तु प्रामादिकः।

१ निःस्नेहेति पाठस्तु मूले पाठितः ।

१ नीरजादपीति पाठस्तु प्रामादिकः।

१ 'पतान्ति' इति मूले प्रमादात्पातितः पाठः।

१ नद्य इति विसर्गहीनः पाठस्तु मूले प्रामादिकः।

| पद्यम् | पृष्ठ. संख्या |
|---|---|



| पद्यम् | पृष्ठ. संख्या |
|---|---|

१ प्रकृते इति मूले पाठो यन्त्रदोषात्।

१ इदं पद्यं चित्रमीमांसारसगंगाधरादावुपलभ्यते ।

१ ययाविति मूले पाठस्तु प्रमादात्पतितः ।

१ व्रजतीति शिशुपालवधे पाठः ।

१ मन्येऽरण्य इति मूले प्रमादात्पतितः पाठः ।

१ "मार्गे" इति पाठान्तरम् । पुष्पाकरस्येदं पद्यम् ।

[1] मौख्येति पाठस्तु प्रामादिकः।

१ यः काकिणीति पाठान्तरम्।

१ करणेति प्रामादिको मूले पाठः ।

1 प्रभवेति मूले पाठस्तु प्रामादिकः।

१ कृषेति प्रमादात्पाठो मूले।

१ रत्नान–इति पाठस्तु यन्त्रदोषाज्जातः।



१ राजानीति पाठस्तु प्रामादिकः।

पद्यम् पृष्ठे. संख्या

१ मिवेकामिति तु प्रमादात्पतितः पाठः ।

१ गरुत इति मूले पाठः प्रामादिकः।

१ अत्र तृतीयपादे" शीलाभट्टारिकावाचि " इति पठनीयः ' का' इत्यक्षरत्रुटिस्तु प्रमादात्।

अत्र शोधने प्रमादात् 'श्याम' इति परिवृत्तिर्बोध्या ।

१ अत्र प्राथमे पादे 'मातङ्गः' इति, चतुर्थे च दुर्गस्तस्य इति च पाठः प्रमादात्। अतः 'मातङ्गा' इति 'दुर्गश्चासौ' इति पाठश्च क्रमादवधेयः।

१ सत्येति मूले पाठः प्रामादिकः।

१ समेति पाठस्तु प्रामादिकः ।



१ दारुणेति मूले पाठः प्रामादिकः ।

१ सर्वप्रोद्गतेति मूले पाठस्तु प्रामादात् ।

[1] सव्रीडार्थेति मूलपाठश्चिन्त्यः ।

समाप्तेयं सुभाषितसुधारत्नभाण्डागारस्याकारादिपद्यानुक्रमणिका।

॥ श्रीवेङ्कटेशो विजयतेतराम् ॥

# सुभाषितसुधारत्नभाण्डागारम् ।

## प्राक्तनसहृदयमहाकविसरसविविधकवितानां सन्दोहः ।

## मङ्गलाचरणं नाम प्रथमं भाण्डम् ।

### मुखबन्धः ।

अभिवाद्य महेशानं गुरुं देवीं च भारतीम् । सुभाषितसुधारत्नकामिनां सुहृदां मुदे ॥ १ ॥
सुभाषितानि रत्नानि वाञ्छतां कृतिनां कृते । आविर्भावितसर्वस्वं कोशभूतं धनेशितुः ॥ २ ॥
निहितान्येव यानि स्वै रक्षितानि न वेति च । स्पृहामन्तः कृतवतां भाण्डागारनिदर्शनम् ॥ ३ ॥
सुभाषितसुधारत्नभाण्डागारं विभावये । तेन तुष्यतु सर्वात्मा सुहृदां हृदयङ्गमः ॥ ४ ॥

### परब्रह्मस्तुतिः ।

ओं तत् । चित् सत्[1] ॥ १ ॥ नित्यं शुद्धम् । ध्येयं ब्रह्म[2] ॥ २ ॥ निर्म्मलं स्वप्रभम् । ब्रह्म सद् भासते[3] ॥ ३ ॥ शुद्धं बुद्धं नित्यानन्दम् । ब्रह्मैवैकं ध्येयं विष्वक्[4] ॥ ४ ॥ व्योम्निपुरीवा—भाति त्रिलोकी । यत्र मृषाऽपि ब्रह्म तदेकम्[5] ॥ ५ ॥ परिमितिशून्यं प्रकृतिविशुद्धम् । त्रिभुवनदृश्यं निरवयवं तत्[6] ॥ ६ ॥ यदनवगमतोऽसदपि सदिव तत् । प्रकृतिविलसितं सदमलमुदितम्[7] ॥ ७ ॥ दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये । स्वानुभूत्येकमानाय नमः शान्ताय तेजसे[8] ॥ ८ ॥ अथ स्वस्थाय देवाय नित्याय हतपाप्मने । त्यक्तक्रमविभागाय चैतन्यज्योतिषे[9] नमः ॥ ९ ॥ शिवमनुपधि सद्भासं सकलमनवमानन्दम् । अमृतमुदितमात्मैकानुभवविषयरूपं सत्[10] ॥ १० ॥ त्रिभुवनविकाशनिदानं निरुपममनन्तररूपम् । परिहृतविकारमनन्तं सदनुभवमात्रमुपासे[11] ॥ ११ ॥ न यस्य जन्मादिविकारलिङ्गं तद् यस्य

---

काशीनाथं प्रणम्यादौ गुरुं च पितरौ मुदा । सुभाषितसुधारत्नभाण्डगारं प्रकाशये ॥

१ अत्र श्रीश्छन्दः ‘ग् श्रीः’ इति तल्लक्षणम् । चिदिति—चेतनं ज्ञानं वा । २ अत्र स्त्री छन्दः ‘गौ स्त्री’ इति तल्लक्षणम् । शुद्धमिति मायाशून्यम् । ३ अत्र मृगी छन्दः, ‘रो मृगी’ इति तल्लक्षणम् । स्वप्रभमिति स्वप्रकाशं परप्रकाशकत्वात् ‘तमेव भान्तमनुभाति सर्वम्’ इति श्रुतेः । ४ ‘मृगौ चेत् कन्या’ इति कन्यानामात्र च्छन्दः । विष्वगिति—सर्वत्रेत्यर्थः । ५ अत्र पङ्क्तिश्छन्दः ‘भ्भौ गिति पंक्तिः’ इति लक्षणात् । संयोगादिवर्णस्य गुरुत्वे सिद्धेऽपि भातीति ‘प्राप्य नाभिहृदमाशु’ इत्यादिवच्छीघ्रोच्चारणे गुरुत्वाप्रत्ययात् स्थाने । ६ अत्र शशिवदना नाम च्छन्दः, ‘शशिवदना न्यौ’ इति च तल्लक्षणम् । ७ अत्र मधु नाम च्छन्दः । ‘मधु यदि ननगाः, इति च तल्लक्षणम् । प्रकृतिविलसितमिति—स्वतः प्रकाशमानम् । ८ अत्रानुष्टुप्छन्दः, श्लोक इत्यन्ये, पथ्येत्यपरे । ९ निरवद्यायेत्यर्थः । १० अत्र भुजगशिशुभृता छन्दः ‘भुजगशिशुभृता नौ मः’ इति तल्लक्षणम् । ११ अत्र रमणी छन्दः ‘नससगुदितं रमणीयम्’ इति हि तल्लक्षणम् ।

सत्तावशतः सदाभम् । मायाविहीनं तदुदारमोदं स्वात्मस्वरूपं ननु तच्चकास्तु ॥ १२ ॥ निषेधे कृते नेतिनेत्यादिवाक्यैः समाधिस्थितानां यदाभाति पूर्णम् । अवस्थात्रयातीतमेकं तुरीयं तदेकं स्वमात्रप्रकाशं प्रपद्ये[2] ॥ १ ३ ॥ विश्वस्मिन् जगति समन्ततः प्रकाशस्याधाने कुशलमनन्तरं प्रभूतम् । उद्दीतं विकृतिविहीनमेकमाद्यं किञ्चित्तत्प्रकृतिपरं चकास्ति वस्तु[3] ॥ १४ ॥ न स्त्री न ना न च नपुंसकमायतं न नाल्पं महन्न न च पीनमपीनतोनम् । नासन् न सन्न विकलं सकलं च यन्न तत् केवलं स्फुरति भास्वररूपमेकम्[4] ॥ १५ ॥ गगनमिव विकारैर्हीनमाप्तं च विष्वक् प्रतिविषयमनन्यस्फूर्तिमत्स्वात्मरूपम् । श्रुतिशिरसि महीयःसत्प्रमोदैकहेतुं सकलवृजिनभङ्गं ज्योतिरेकं सदाद्यम्[5] ॥ १६ ॥ स्वयंप्रकाशमन्यसत्प्रकाशकप्रकाशकं सुराध्ववस्समस्तगं विकारसङ्गवञ्चितम् । निरीहमक्रियं क्रियाकलापकारणं परं परात्परं प्रकृत्यपेतमेकमर्थमाश्रये[6] ॥ १७ ॥ यथा स्थाणौ प्रेतो जलमिव मरौ व्योम्नि पुरवद् भुजङ्गो वा रज्जाविव भुवनमेतत् सदुपमम् । भ्रमाद्यत्राभातं तदविकलमेकं निरुपमं सदा सर्वत्रातं किमपि कमनीयं स्फुरति तत्[7] ॥ १८ ॥ यस्माद् विश्वमुदेति यत्र रमते यस्मिन् पुनर्लीयते भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः । शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥ १९ ॥ मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति । यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥ २० ॥ यः सृष्टिस्थितिसंहृतीर्वितनुते ब्रह्मादिमूर्तित्रिकैर्यस्याधीनतया स्थितानि सदसत्कर्म्माण्यपि प्राणिनाम् । नित्येच्छाकृतिबुद्धिमानथ परो जीवात्परात्मा स्वयं सोऽयं वो विदधातु पूर्णमचिराच्चेतोगतं यद्भवेत् ॥ २१ ॥ शक्यं यन्न विशेषतो निगदितुं प्रेम्णैव यच्चिन्तितं मृद्वङ्गीवदनेन्दुमण्डलमिव स्वान्ते विधत्ते मुदम् । यन्मुग्धानयनान्तचेष्टितमिवाध्यक्षेऽपि नो लक्षितं तत्तेजो विनयादमन्दहृदयानन्दाय वन्दामहे ॥ ॥ २२ ॥ अध्यस्ताव्ययमपूर्वमर्थधिषणैर्ग्राह्यं पुमर्थास्पदं लक्ष्यं लक्षणभेदतः श्रुतिगतं निर्धूतसाध्यार्थकम् । आम्नायान्तविभातविश्वविभवं सर्वाविरुद्धं परं सत्यं ज्ञानमनर्थसार्थविधुरं ब्रह्म प्रपद्ये सदोम् ॥ २३ ॥ विश्वेशो वः स पायात् त्रिगुणसचिवतां योऽवलम्ब्यानुवारं विश्वद्रीचीनसृष्टिस्थितिविलयमजः स्वेच्छया निर्मिमीते । यस्येयत्तामतीत्य प्रभवति महिमा कोऽपि लोकव्यतीतस्त्यक्तो यश्चक्षुराद्यैरपि निपुणतमैर्वीक्षणादिक्रियासु[9] ॥ २४ ॥ शान्तं शुद्धं पुराणं त्रिभुवनभवनं भावि भूतं भवच्च नित्यं बुद्धं प्रभूतं सकलमनश्वरं भव्यमेकं प्रसिद्धम् । पूर्णं विष्वक्प्रकाशं शरणमनुपमं निष्क्रियं निर्विकारं रुद्रं सन्तुष्टमद्धा करणविषयताशून्यमुद्भाति शश्वत् ॥ २५ ॥

---

१ अत्रोपजातिश्छन्दः । 'उपेन्द्रवज्रा जतजास्ततो गौ । स्यादिन्द्रवज्रा यदि तौ जगौ गः । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।' इत्युक्तेः । २ अत्र भुजङ्गप्रयातं छन्दः, 'भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः' इति लक्षणात् । ३ अत्र प्रहर्षिणी छन्दः । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।' इति लक्षणात् । ४ अत्र वसन्ततिलका छन्दः, ' उक्ता वसन्ततिलका तभजा जगौ गः ।' इति तल्लक्षणम् । ५ 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षितमत्र मालिनीछन्दः । ६ जरौ जरौ जगाविदं वदन्ति पञ्चचामरम् । ' इति पञ्चचामरं नाम छन्दः । ७ अत्र शिखरिणी छन्दः, 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति च । तल्लक्षणम् । ८ अत्र शार्दूलविक्रीडितं वृत्तम्, ' सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम् ।' इति हि तल्लक्षणम् । ९ अत्र स्रग्धरा छन्दः, 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति च तल्लक्षणम् ।

## गणेशस्तुतिः ।

आलम्बे जगदालम्बे हेरम्बचरणाम्बुजे । शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः॥ १॥ गजाननाय
महसे प्रत्यूहतिमिरच्छिदे । अपारकरुणापूरतरङ्गितदृशे नमः॥ २॥ वन्दे वन्दारुमन्दारमिन्दुभूषणनन्दनम् ।
अमन्दानन्दसन्दोहबन्धुरं सिन्धुराननम् ॥ ३ ॥ अगजाननपद्मार्कं गजाननमहर्निशम् । अनेकदं तं
भक्तानामेकदन्तमुपास्महे ॥ ४॥ नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते । मदाभोगघनध्वानो नीलकण्ठस्य
ताण्डवे ॥ ५ ॥ चलत्कर्णानिलोद्धूतसिन्दूरारुणिताम्बरः । जयत्यकाले विसृजन् सन्ध्यामिव गजाननः॥ ६॥
एकदन्तद्युतिसितः शम्भोः सूनुः श्रियेऽस्तु वः । विद्याकन्द इवोद्भिन्ननवाङ्कुरमनोहरः ॥ ७ ॥
अविरलविगलन्मदजलकपोलपालीनिलीनमधुपकुलः । उद्भिन्ननवश्मश्रुश्रेणिरिव द्विपमुखो जयति
॥ ८ ॥ गजवदनं मनुजतनुं तुन्दिलमध्यं फणीश्वराभरणम् । भाले लोचनवन्तं विधुमौलिं नौमि
विघ्नेशम् ॥ ९ ॥ दुरितसमूहबलाहकपटलीसंहरणपवमानम् । शिवयोरङ्काभरणं वन्दे देवं गजा-
ननं मूर्ध्ना ॥ १० ॥ एकरद द्वैमातुर निस्त्रिगुण चतुर्भुजापि पञ्चकर । जय षण्मुखनुत[1] सप्तच्छदगन्धि-
मदाष्टतनुतनये[2] ॥ ११ ॥ मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम् । यद्दानतोयतरलै-
स्तिलतुलनाऽऽलम्बि रोलम्बैः ॥ १२ ॥ शिवयोः सुधाहरिद्रादीप्तिमतोः सारभृज्जगत्पित्रोः ।
त्रिभुवनविघ्नध्वंसी करिकल्पः कश्चिदरुणिमा जयति ॥ १३ ॥ युगपत्स्वगण्डचुम्बनलोलौ पितरौ
निरीक्ष्य हेरम्बः । तन्मुखमेलनकुतुकी स्वाननमपनीय परिहसन् पायात् ॥ १४ ॥ हस्त-
पङ्कजनिविष्टमोदकव्याजसंचरदशेषपुमर्थम् । नौमि किञ्चिदवधूनितशुण्डादण्डकुण्डलितमण्डितगण्डम्
॥ १५ ॥ अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् । तं नरं वपुषि कुञ्जरं मुखे मन्महे
किमपि तुन्दिलं महः ॥ १६ ॥ दन्ताग्रनिर्भिन्नहिमाचलोर्वीरन्ध्रोत्थिताहीन्द्रमणिप्रभौघः । नागाननः
स्तम्भधिया कपोलौ घर्षन् पितृभ्यां हसितः पुनातु ॥ १७ ॥ अशेषविघ्नप्रतिषेधदक्षमन्त्राक्षतानामिव
दिङ्मुखेषु । विक्षेपलीला करशीकराणां करोतु वः प्रीतिमिभाननस्य ॥ १८ ॥ रक्ताम्बराय फणिराजविभूषणाय
प्रोद्धूतभस्मकणकीर्णसुमोत्कराय । संगीयमानयशसे मदपानलुब्धैर्भृङ्गैः सुरैरिव नमोऽस्तु गणाधिपाय ॥ १९ ॥
दन्ताञ्चलेन धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् । उल्लाघनोत्फणफणाधरगीयमानक्रीडा-
वदातमिभराजमुखं नमामः ॥ २० ॥ आनन्दमात्रमकरन्दमनन्तगन्धं योगीन्द्रसुस्थिरमिलिन्दमपास्त-
बन्धम् । वेदान्तसूर्यकिरणैकविकासशीलं हेरम्बपादशरदम्बुजमानतोऽस्मि ॥ २१ ॥ गण्डस्थलीगलद-
मन्दमदप्रवाहमाद्यद्द्विरेफमधुरस्वरदत्तकर्णः । हर्षादिवालसनिमीलितनेत्रयुग्मो विघ्नच्छिदे भवतु भूतपतिर्ग-
णेशः ॥ २२ ॥ लक्ष्मीं तनोतु सुतरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
यैद्विश्वविघ्नहनने[3] प्रथितानुबन्धित्वेनानुतत्त्वमुदिताभ्युदयं चकास्ति ॥ २३ ॥ अविरलमदधाराधौ-
तकुम्भः शरण्यः फणिवरवृतगात्रः सिद्धसाध्यादिर्वन्द्यः[4] । त्रिभुवनजनविघ्नध्वान्तविध्वंसदक्षो वितरतु
गजवक्त्रः संततं मङ्गलं वः ॥ २४ ॥ दधानं भृङ्गालीमनिशममले गण्डयुगले ददानं सर्वार्थान्
निजचरणसेवासुकृतिने । दयाऽऽधारं सारं निखिलनिगमानामनुदिनं गजास्यं स्मेरास्यं तमिह कलये

---

१ षण्मुखापेक्षया गणपतेर्ज्यैष्ठत्वमिति तेनास्य स्तुतत्वम् । २ अष्टतनुर्महेश्वरः तस्य तनयः पुत्र इति तत्सम्बुद्धौ यथोक्तम् । ३ 'हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः' इति पाठान्तरं तु समाप्तपुनरात्तत्वग्रस्तमिति परिहेयमेव । ४ आदिपदेन सिद्धेश्वराणां साधकानां च ग्रहणम् ।

चित्तनिलये ॥ २५ ॥ जेतुं यत्त्रिपुरं[1] हरेण हरिणा व्याजाद्बलिं बध्नतो[2] स्रष्टुं वारिभवोद्भवेन[3] भुवनं शेषेण धर्तुं धराम् । पार्वत्या महिषासुरप्रमथने[4] सिद्धाधिपैः सिद्धये ध्यातः[5] पञ्चशरेण विश्वजितये पायात्स नागाननः॥ २६ ॥ वन्दे तं गणनायकं गुणनिधिं गण्यं विभूनां[6] पुरो रम्यं भक्तजनस्य विघ्नपटलं दुर्नीयसम्पद्विधौ । यस्याराधनमन्तरेण जगतां कश्चिन्न सिद्धिं गतो यं चाराध्य चिराय विन्दति परां क्षुद्रोऽपि मालां श्रियाम् ॥ २७ ॥ उच्चैर्ब्रह्माण्डपिण्डद्वितयसहचरं[8] कुम्भयुग्मं दधानः प्रेङ्खन्नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामः[9] । देवः शंभोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्तस्त्रैलोक्याश्चर्यमूर्तिः स जयति जगतामीश्वरः कुञ्जरास्यः ॥ २८ ॥ दोर्घोत[11]दन्तखण्डः सकलसुरगणाडम्बरेषु प्रचण्डः सिन्दूराकीर्णगण्डः प्रकटितविलसच्चारुचान्द्रीयखण्डः । गण्डस्थानन्तघण्डः स्मरहरतनयः कुण्डलीभूतशुण्डो विघ्नानां कालदण्डः स भवतु भवतां भूतये वक्रतुण्डः ॥ २९ ॥ विघ्नेशो वः स पायाद्विहृतिषु जलधीन् यः कराग्रेण[12] पीत्वा तस्मिन्नुद्धृत्य विश्वं विसृजति सकलं दृश्यते व्योम्नि देवैः । क्वापीशः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः[13] क्व च श्रीः क्वाप्यौर्वः[14] क्वापि शैलाः क्वचन मणिगणाः[15] क्वापि नक्रादिचक्रम् ॥ ३० ॥ विघ्नेशः सर्वविघ्नान्परिहरतु स यत्कर्णतालादुदञ्चद्वायुव्याधूतगण्डस्थलयुगलगलद्भूरिसिन्दूरपूरैः। आरुण्याद्वैतभावं गतवति जगति क्वापि नो भाति भानुर्नैवासौ शीतभानुः क्वचिदपि नितरां भासते वा कृशानुः ॥ ३१ ॥ क्रोडं तातस्य[16] गच्छन्विशदबिसधिया[17] शावकं[18] शीतभानो[19]राकर्षन्भालवैश्वानर[20]निशितशिखारोचिषा तप्यमानः । गङ्गाम्भः पातुमिच्छुर्भुजगपतिफणाफूत्कृतैर्दूयमानो मात्रा संबोध्य नीतो दुरितमपनुदेद्बालवेशो गणेशः ॥ ३२ ॥ उच्चैरुत्तालगण्डस्थलबहुलगलद्दानपानप्रमत्तस्फीतालिव्रातगीतिश्रुतिविधतिकलोन्मीलितार्धाक्षिपक्ष्मा । भक्तप्रत्यूहपृथ्वीरुह[21]निवहसमुन्मूलनोच्चैरुदञ्चच्छुण्डादण्डाग्र उग्रार्भक[22] इभवदनो वः स पायादपायात्[23] ॥ ३३ ॥ कल्याणं वो विधत्तां करटमदधुनी[24]लोलकल्लोलमालाखेलल्लोलम्ब[25]कोलाहलमुखरितदिक्चक्रवालान्तरालम्[26] । प्रत्नं[27] वेतण्डरत्नं[28] सततपरिचलत्कर्णतालप्ररोहद्वाता[29]ङ्कुरान्[30]जिहीर्षी[31][32]र्दरविवृतफणाशृङ्ग[33]भूषाभुजङ्गम् ॥ ३४ ॥ यः सिन्धौ फेनराशिर्भुवि कुमुदवनं

---

१ तदाख्यं दैत्यत्रयमित्येके, तदुपमं त्रिभुवनमित्यपरे, तत्कल्पं स्थूलसूक्ष्मकारणाख्यशरीरत्रयमित्यप्यन्ये । २ बन्धुमभिलषतेत्यभिप्रायः । ३ ब्रह्मणः उत्पत्तिस्थानस्य नारायणनाभिकमलस्य वारिभवत्वाभावेऽपि वारिभवान्तरसदृशत्वादिदमुक्तम् । ४ प्रमथनारम्भे इति लक्षणार्थः । ५ एतेनास्य सनातनत्वं सर्वेषामाराध्यत्वं च सूचितम् । ६ निर्धारणार्थेयं षष्ठी । ७ इयमपि निर्धारणार्था षष्ठी । ८ सदृशमिति लक्षणयार्थः । ९ प्रेङ्खन् प्रोद्गच्छन् यो नागारिः गरुडः तस्य पक्षयोः प्रतिभटौ सादृश्येन शत्रुभूतौ अत एव विकटौ यौ श्रोत्रतालौ तालवृक्षायिते श्रोत्रे ताभ्यामभिराम इति भावः । श्रोत्रे एव तालाविति श्रोत्रतालौ । १० शुभ्रत्वेन शेषसदृशः शुण्ड इत्यर्थः । ११ अत्र शता दुरुपपादः, दोर्द्योत्योद्दन्तेति तु युक्तम् । १२ शुण्डाग्रेण । १३ शेषः इत्यर्थः । १४ समुद्रानलः । १५ सामुद्रा रत्नपुञ्जाः । १६ उत्सङ्गं मध्यदेशमिति यावत् । १७ मृणालभ्रान्त्या । १८ बालम् । १९ ललाटस्थस्य चन्द्रमसः । २० चन्द्रसन्निहित एव तृतीयनेत्राग्निरिति यथोक्तम् । २१ 'वृक्ष' इत्यर्थः । २२ उग्रस्य शङ्करस्यार्भकः । २३ अशुभात् । अपगतोऽयः शुभावहो विधिः यस्मात्तस्मात् । २४ करटमदस्य गण्डस्थलमदस्य या धुनी नदी । २५ अत्र लवर्णोऽनुप्रासार्थं रलयोः सावर्ण्यम् । इति रोलम्बानुपादानम् । रोलम्बा भ्रमराः । २६ मध्यभागम् । २७ प्राचीनं सनातनम् । २८ गजेषु रत्नभूतम् । अत्र वेतण्डशब्दो गजार्थोऽप्रसिद्धः केवलं वर्णवैकट्यार्थं निबद्धः । २९ अत्र रुहेरनुदात्तत्वाभावात् शता । ३० अत्राप्युकारस्य दीर्घत्वं चिन्त्यम् । ३१ आजिहीर्षेति च्छेदः । ३२ दरशब्दोऽत्रेषदर्थः । ३३ सादृश्येनाग्रभागार्थकमिदम् ।

व्योम्नि नक्षत्रलक्ष्मीरब्धौ मुक्तासमूहस्तरुषु सुमनसो मानसे हंससङ्घः । श्रीकण्ठे भूतिलेशः शिखरिषु मणयो[1] दिक्षु नीहार[2]पानं पाण्डुः शुण्डाग्रजन्मा जयति गणपतेः शीकराणां विलासः ॥ ३५ ॥ सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमार[4]बर्हित्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोग[5]संकोचभाजि । गण्डोड्डीनालि[6]मालामुखरितककुभस्ताण्डवे शूलपाणेर्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ ३६ ॥

## सरस्वतीस्तुतिः ।

धातुश्चतुर्मुखीकण्ठशृङ्गाट[7]कविहारिणीम् । नित्यं प्रगल्भवाचालामुपतिष्ठे सरस्वतीम् ॥ १ ॥ वीणावादनदम्भेन शास्त्रतत्त्वविकासिका । हंसासनमुपासीना वाग्देवी श्रेयसेऽस्तु नः ॥ २ ॥ यस्याः प्रसादविरहे मूकत्वं सर्वदा स्फुटम् । तामेकां वागधिष्ठात्रीं महादेवीमुपास्महे ॥ ३ ॥ सूक्ष्माय शुचये तस्मै नमो वाक्तत्त्वतन्तवे । विचित्रो यस्य विन्यासो विदधाति जगत्पटम् ॥ ४ ॥ तद्दिव्यमव्ययं धाम सा[8]रस्वतमुपास्महे । यत्प्रसादात्प्रलीयन्ते मोहान्धतमसश्छटाः ॥ ५ ॥ पातु वो निकष[9]ग्रावा मतिहेम्नः[10] सरस्वती । प्राज्ञेतर[11]परिच्छेदं वचसैव करोति या ॥ ६ ॥ शारदा शारदाम्भोजवदना वदनाम्बुजे । सर्वदा[12] सर्वदास्माकं संनिधिं सं[13]निधिं क्रियात्[14] ॥ ७ ॥ जलदुग्धनिर्णयविधौ यस्या वाहो[15]ऽपि विश्रुतो दक्षः । सा सदसत्त्वविबोधकवागीशा स्तान्ममाद्य गतिः ॥ ८ ॥ करबदर[16]सदृशमखिलं भुवनतलं यत्प्रसादतः कवयः । पश्यन्ति सूक्ष्ममे[17]तं यः सा जयति सरस्वती देवी ॥ ९ ॥ शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् । करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थ[18]सार्थवाहम् ॥ १० ॥ आशा[19]सु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् । मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥ ११ ॥ वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव । मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सप्रसादाऽस्तु सरस्वती वः ॥ १२ ॥ ज्योतिस्तमोहरं[20]मलोचनगोचरं[21] तज्जिह्वादुरासदं[22]रसं मधुनः प्रवाहम् । दूरे त्वचः पुलकबन्धि परं प्रपद्ये सारस्वतं[23] किमपि कामदुघं रहस्यम् ॥ १३ ॥ तव करकमलस्थां स्फाटिकीमक्षमालां नखकिरणविभिन्नां[24] दाडिमीबीजबुद्ध्या । प्रतिकलमनु[25]कर्षन् येन कीरो निषिद्धः[26] स भवतु मम भूत्यै[27] वाणि ते मन्द[28]हासः ॥ १४ ॥ तमोगणविनाशिनी सकलकालमुद्द्योतिनी धरातलविहारिणी जडसमाज[29]विद्वेषिणी । कलानिधिसहायिनी लसदलोलसौदामिनी[30] मदन्तरवलम्बिनी भवतु कापि कादम्बिनी[31] ॥ १५ ॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता

---

१ मणिरूप इत्यर्थः 'वेदाः प्रमाणम्' इतिवदुद्देश्यविधेयभावमाश्रित्य वचनवैसादृश्य मदुष्टम् २ अत्र पानमित्येव, अजहल्लिङ्गत्वात । ३ मुरजरवस्य मेघध्वनिसदृशत्वादिदमुक्तम् । ४ मयूरस्य इत्यर्थः ।५ भोगस्य -फणाटोपस्य । ६ अलीनां भ्रमराणाम् । ७चतुष्पथे इत्यर्थः ।८ सरस्वत्या इदं तत् ।९ परीक्षणोपलरूपेत्यर्थः । १० मतिरूपस्य स्वर्णस्य ।११ प्राज्ञः विद्वान्, इतरो मूढः,तयोः परिच्छेदः-विभागः विवेक इति यावत्,तम् । १२ सर्वान् कामान् ददातीति तथाभूता । १३ संश्चासौ निधिस्तम् । १४ आशीर्मात्रमभिप्रेत्येदमुक्तम्।१५ वाह हंस इत्यर्थः। १६ करबदरेण हस्तस्थेन बदरीफलेन ।१७ सूक्ष्ममपि तत्त्वं द्रष्टुं क्षमा इत्यर्थः । १८ कृतार्थजनेषु मुख्यम् । कृतोऽर्थानाम् अभीष्टानां सार्थस्य पुञ्जस्य वाहः प्राप्तिर्येन तम् । यद्वा कृतार्थानां यः सार्थः समूहस्तम् (अपि) स्ववश्यत्वेन वहति स्वेच्छं सञ्चालयतीति तं वा । १९ दिक्षु ।२० तमसो हरस्तम् । २१ लोचनागोचरं परोऽक्षमिति यावत् । दुर्ज्ञेयास्पदम् ।२३ सरस्वतीसम्बन्धि ।२४ मिश्रितामित्यर्थः । २५ प्रतिक्षणम् । २६ शुकः। २७ विभूतये, सम्पद इति यावत । २८ स्मितमित्यर्थः २९ जडसमाजस्य मूढगणस्य विद्वेषिणी। मौढ्यनिवर्त्तनादिति भावः।३०विद्युत् ।३१ मेघमाला तद्रूपेति यावत् ।

या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निश्शेषजाड्यापहा ॥ १६ ॥ हंसासीना हसन्ती मृदुमधुरकलं वादयन्ती स्ववीणां तत्त्वग्रामं समस्तं प्रकटमविकलं सन्नयन्ती विकासम् । मुक्तामालां दधाना गुणिगणमहिता स्तूयमाना सुरेन्द्रैर्वागीशा सुप्रसन्ना निवसतु वदनाम्भोरुहान्तः सदा मे ॥ १७ ॥

## शंकरस्तुतिः ।

वृषाङ्काय[1] नमस्तस्मै यस्य मौलिविलम्बिनी । जटावेष्टनजां शोभां विभावयति जाह्नवी ॥ १ ॥ नमस्तुङ्गशिरश्चन्द्रबिम्बचामरचारवे । त्रैलोक्यनगरारम्भमूलस्तम्भाय शंभवे ॥ २ ॥ वामाङ्गी[2]कृतवामाङ्गि कुण्डलीकृतकुण्डलि[3] । आविरस्तु पुरो वस्तु भूति[4]भूत्यम्बराम्बरम्[5] ॥ ३ ॥ निरुपादानसंभार[6]मभित्तावेव तन्वते । जगच्चित्रं[7] नमस्तस्मै कलाश्लाघ्याय[8] शूलिने ॥ ४ ॥ चन्द्राननार्ध[9]देहाय चन्द्रांशुसितमूर्तये । चन्द्रार्कानलनेत्राय चन्द्रार्ध[10]शिरसे नमः ॥ ५ ॥ दिगम्बरनितम्बिन्याः किमम्बरविभूषणम् । इत्थं वरहरः पायात्परीरम्भपरः परः ॥ ६ ॥ भुजङ्गकुण्डली[11]व्यक्तशशिशुभ्रांशुशीतगुः[12] । जगन्त्यपि सदाऽपायाद[13]व्याच्चेतोहरः शिवः ॥ ७ ॥ पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता । पवर्गरचिता मूर्तिरपवर्गप्रदायिनी ॥ ८ ॥ अङ्के यस्य विभूतिर्मौलिसुधांशुस्फुरद्विभानिचया । सञ्चारिणीव राजति सोऽवतु भगवान् शरण्यो नः ॥ ९ ॥ सत्सेवितभृगु[14]तुङ्गं विद्योतितवेदवेदाङ्गम् । परिनर्तितभयरङ्गं मनसिज[15]भङ्गं समाश्रये लिङ्गम् ॥ १० ॥ स जयति हिमकरलेखा चकास्ति यस्योमयोत्सुकान्निहिता[16] । नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ॥ ११ ॥ पाणिग्रहे पुलकितं वपुरैशं भूति[17]भूषितं जयति । अङ्कुरित इव मनोभूर्यस्मिन्भस्मावशेषो[18]ऽपि ॥ १२ ॥ मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः । प्रातर्जयति सलज्जः कज्जलमलिनाधरः शंभुः ॥ १३ ॥ जयति प्रियापदान्ते गरलग्रैवेयकः[19] स्मराराति: । विषम[20]विशिखे विशन्निव शरणं गलबद्धकरवालः ॥ १४ ॥ सन्ध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् । गौरीमुखार्पितमना विजया[21]हसितः शिवो जयति ॥ १५ ॥ प्रणयकुपितप्रियापदलाक्षासन्ध्यानुबन्ध[22]मधुरेन्दुः । तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति ॥ १६ ॥

---

१ वृषोऽङ्को ध्वजचिह्नं, यस्य तस्मै । २ वामाङ्गे कृता वामाङ्गी पार्वती येन । ३ कुण्डलाकारौ कृतौ कुण्डलिनौ सर्पौ येन । ४ भूतिर्भस्मैव भूतिः सम्पत्तिर्यस्य । ५अम्बरम्--आकाशमेव ( नग्नत्वात् ) अम्बरं वस्त्रं यस्य । ६ निर्गत उपादानसम्भारः साक्षात्कारणसम्पत्तिर्यस्मिन् ( कर्म्मणि ) यस्य वा तत् । ७ जगतश्चित्रं, जगदेव चित्रं च । ८ कलया चन्द्रकलया, कलाभिः–निर्माणचातुरीभिश्च श्लाघ्याय । ९ चन्द्रानना--पार्वती एवार्धदेहे यस्य तस्मै । १० चन्द्रार्धं शिरसि यस्य तस्मै । ११ भुजङ्गाभ्यां कुण्डली । १२ शशिनः--कर्पूरस्य इव शुभ्रा अंशवो यस्य तादृशो यः शीतगुः--चन्द्रः, स व्यक्तो यस्य ललाटे तादृशः । १३ अशुभात् । १४ सद्भिः सेवितस्य यो भृगुः--पर्वतशिखरभागविशेषः, तद्वत्तुङ्गमिति तत् । १५ मनसिजस्य भङ्गो यस्मात्तत् । १६ उमया निहितेत्यन्वयः । १७ भूत्या भस्मना भूषितम् । १८ भस्मैवावशेषो यस्य तादृक् । १९ गरलं ग्रैवेयकं यस्य सः । ग्रीवायां भवं ग्रैवेयकं, कण्ठाभरणम् । २० विषमाः–पञ्च, विशिखाः बाणा यस्य तस्मिन्, तत्समीप इत्यर्थः । २१ विजयया तदभिधयया पार्वतीसख्या हसितः । २२ प्रणयकुपिता या प्रिया तस्या यत् पदं तस्य लाक्षा संध्याऽनुबन्धश्च ( संध्याऽऽरम्भश्च ) तद्वन्मधुर इन्दुर्यस्य सः । यद्वा प्रणयकुपित प्रियाप्रहतपदलाक्षया संध्याऽनुबन्धवन्मधुरः इन्दुर्यस्य ( ललाटे ) तादृक् ।

अहिभूषणोऽप्यभयदः सुकलितहालाहलोऽपि यो नित्यः । दिग्वसनोऽप्यखिलेशः तं शशधरशेखरं वन्दे ॥ १७ ॥ जयति जटा[1]किञ्जल्कं गङ्गामधुमुण्डवलयबीजमयम् । गलगरलपङ्कसंभवमम्भोरुहमाननं शंभोः ॥ १८ ॥ प्रतिबिम्बितगौरी[2]मुखविलोकनोत्कम्पशिथिलकरगलितैः । स्वेदभरपूर्यमाणः शंभोः सलिलाञ्जलिर्जयति ॥ १९ ॥ आदाय चापम[3]चलं कृत्वा[4]हीनं गुणं विष[5]मदृष्टिः । यश्चित्रमच्युत[6]शरो लक्ष्य[7]मभाङ्क्षीन्नमस्तस्मै ॥ २० ॥ उप[8]हरणं विभवानां संहरणं सकलदुरितजालस्य । उद्धरणं संसाराच्चरणं वः श्रेयसेऽस्तु विश्वपतेः ॥ २१ ॥ भिक्षुकोऽपि सकलेप्सितदाता प्रेतभूमिनिलयोऽपि पवित्रः । भूतमित्रमपि योऽभयसत्र[9]स्तं विचित्रचरितं शिवमीडे ॥ ॥ २२ ॥ पाणिग्रहे पर्वतराजपुत्र्याः पादाम्बुजं पाणिसरोरुहाभ्याम् । अश्मानमारोपयतः स्मरारे[10]र्मन्दस्मितं मङ्गलमातनोतु ॥ २३ ॥ पार्श्वस्थपृथ्वीधरराजकन्याप्रकोपविस्फूर्जथुकातरस्य । नमोऽस्तु ते मातरिति प्रणामाः शिवस्य संध्याविषयौ[11] जयन्ति ॥ २४ ॥ क तिष्ठतस्ते पितरौ ममेवेत्यपर्णयोक्ते परिहासपूर्वम् । क वा ममेव श्वशुरौ तवेति तामीरयन्[12]संस्मितमीश्वरोऽव्यात् ॥ २५ ॥ वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि दृष्ट्वा दशाननसमागमन[13]भ्रमेण । भूयोऽपि शैलपरिवृत्तिभयेन गाढ[14]मालिङ्गितो गिरिजया गिरिशः पुनातु ॥ २६ ॥ पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥ २७ ॥ सन्ध्यानतौ नरपुरंध्रितनोः सरोषमुत्सारिते गिरिजया निजपाणिपद्मे । उत्सर्पिकङ्कणफणीन्द्रफणार्पणेन पूर्णोऽञ्जलिर्जयति बालमृगाङ्कमौलेः ॥ २८ ॥ यस्याहुरागमविदः परिपूर्णशक्तेरंशे कियत्यपि निविष्टममुं प्रपञ्चम् । तस्मै तमालरुचिभासुरकन्धराय नारायणी[15]सहचराय नमः शिवाय ॥ २९ ॥ कुसुमशरविलासे भङ्गुरस्याद्रिपुत्रीकरतलवलयस्य क्ष्मागतस्यार्धमेकम् । निजमिव शशिखण्डं याचमानस्य शंभोर्भवतु सह विवादः कान्तया कौतुकाय ॥ ३० ॥ कथयत कथमेषा मेनया विप्रदत्ता शिव शिव गिरिपुत्री वृद्धकापालिकाय । इति वदति पुरन्ध्रीमण्डले सिद्धिलेशव्ययकृतवरवेशः पातु वः श्रीमहेशः ॥ ३१ ॥ रचयति सहसा यच्चित्रमेतत्प्रपञ्चं प्रशमयति च तद्वत्केनचित्कौतुकेन । अविदितमपरैस्तच्चण्डमुण्डादिनानादनुजदलनदक्षं शर्वसर्वस्व-

---

१ जटैव किञ्जल्कः केसरो यत्र तत् । २ पार्वती हि भगवतोऽर्धाङ्गे इति गौरीमुखस्य प्रतिबिम्बनम् तद्दर्शनेनोत्कम्पसात्त्विकभावोदयात् । ३ स्थिरं, पर्वतं च । ४ अहीनामिनं, वासुकिमिति यावत् । हीनं-नष्टं च । ५ विषमाः त्रिसंख्याकत्वात् दृष्टयो, यस्य विषमा लक्ष्याऽननुरूपा दृष्टिर्यस्येति वा । ६ अच्युतः-विष्णुः एव शर इति, न च्युतः-लक्ष्ये पतित इति वा शरो यस्य । ७ त्रिपुरम् । ८ दात् । ९ अभयस्य सत्रं दानं यस्येति, अभयसत्रीति पाठे तु अभयस्य सत्रमस्यास्तीति तथोक्तः । १० पर्वतस्येयं पुत्रीति पर्वतावयवभूताश्मोपर्य्यारोपणं किमिति स्मयनं हेतुः । यद्वा-स्मरारित्वेन योगिराजत्वेन च ख्यातस्य ममैवदं किमिवेति स्मयनम् । ११ सन्ध्यायाः स्त्रीत्वेन तदुपासनं सपत्न्याराधनमिवेति पार्वत्याः प्रकोपस्य विस्फूर्जथुः वज्रनिर्घोषः । अतस्तत्कातरत्वेन नाहं त्वत्सपत्नीं काञ्चिदुपासे इति मातरित्याद्युच्चारणम् । १२ ईरयन्-प्रेरयन्, प्रतिवदन्निति यावत् । १३ पञ्चानां वक्त्राणामेकस्मिन् कुचे प्रतिबिम्बितत्वे पञ्चानां पुनस्तथैव परस्मिन्निति दशानां वक्त्राणां भ्रमः । १४ वस्तुतस्तु भ्रमेणवौत्सुक्येनेति बोध्यम् । १५ पार्वतीत्यर्थः । 'अभीरुगौर्योर्नारायणी मता' इति मेदिनी ।

मव्यात् ॥ ३२ ॥ अरुणनयनं सभ्रूभङ्गं दरस्फुरिताधरं सुतनु शशिनः क्लिष्टां कान्तिं करोतु तवाननम् । कृतमनुनयैः कोपोऽयं ते मनस्विनि वर्धतामिति गदितयाऽऽश्लिष्टो देव्या शिवाय शिवोऽस्तु वः ॥ ३३ ॥ प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मितस्त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् । नमितशिरसो गङ्गालोके तया चरणाहताववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥ ३४ ॥ कस्त्वं शूली[1] मृगय भिषजं नीलकण्ठः[2] प्रियेऽहं केकामेकां कुरु पशुपतिर्[3]नैव दृश्ये विषाणे[4] । स्थाणुर्[5]मुग्धे न वदति तरुर्जीवितेशः शिवाया[6] गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥ ३५ ॥ वन्दे देवं जलधिशरधिं[7] देवतासार्वभौमं व्यासप्रष्ठा[8] भुवनविदिता यस्य बाहाधिवाहाः[9] । भूषा[10]पेटी[11] भुवनम्[12]अधरं[13] पुष्करं[14] पुष्पवाटी[15] शाटी[16]पालाः शतमखमुखाश्[17]चन्दनद्रुमः[18] मनोभूः[19] ॥ ३६ ॥ योगिध्येयं विमलविशदप्रस्फुरद्रम्यकान्तिं शान्तं बुद्धं सुरपरिवृढैरानतैरर्च्यमानम् । कारुण्यार्द्रं हसितसुषमामोदिताशेषविश्वं साक्षात्तत्त्वप्रतिकृतिमुमासंयुतं नौमि शम्भुम् ॥ ३७ ॥ स्थितामिन्दोर्लेखां[20] रतिकलहभग्नं[21] च वलयं द्वयं चैकीकृत्य प्रहसितमुखी शैलतनया । अवोचद्यं पश्येत्यवतु गिरिशः सा च गिरिजा स च क्रीडाचन्द्रो दशनकिरणैः पूरिततनुः ॥ ३८ ॥ नमस्तुभ्यं देवासुरमुकुटमाणिक्यकिरणप्रणालीसंभेद[22]स्नपितचरणाय स्मरजिते । महाकल्पस्वाहाकृतभुवनचक्रो[23]ऽपि नयने निरोद्धुं भूयस्तत्प्रसरमिव कामं हुतवते ॥ ३९ ॥ असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विश्रम्भेष्वपि च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात्कपटवटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ ४० ॥ सहस्रास्यो नागः प्रभुरपि मतः पञ्चवदनः षडास्यो हन्तैकस्तनय इतरो वारणमुखः । सदा भैक्ष्यं शश्वत्प्रभवतु कथं वर्तनम्[24]इति श्वसन्त्यां[25] पार्वत्यामथ जयति शंभुः स्मितमुखः ॥ ४१ ॥ मौनादस्तमितैव चाटुभणितिः स्रस्तैकहस्ताद्गतं दूरेऽप्यञ्जलिबन्धनं प्रणमनं स्तब्धार्धमूर्ध्नः कुतः । इत्थं संघटितैकविग्रहतया व्यग्रो गिरिग्रामणी[26]र्जायां जाततरुषं[27] जयत्यनुनयन्देवस्त्रिलोकीगुरुः ॥

---

१ त्रिशूली शूलरोगी च । २ शितिकण्ठः, मयूरश्च । ३ पशूनां-ज्ञानिनां पतिः शङ्करः, गवादीनां पतिः-पशुराजो वृषभश्च । ४ शृङ्गे । ५ योगात् कल्पक्षयादेरपि अचलत्वात् स्थाणुः शङ्करः, जडत्वात् स्थितिशीलो वृक्षश्च । ६ पार्वत्याः, शृगाल्याश्च ।
७ जलधिर्विष्णोर्विश्रमस्थानमिति तस्य त्रिपुरसंहारावसरे शरत्वे क्रियमाणे जलधेः शरधित्वेन करणमिति यथोक्तम् । वस्तुतस्तु नेदं रुचिरम्, किन्तु जलधेः-मथ्यमानस्य क्षीरनिधेः, शरं तद्वत् प्रकोपात् पातितं विषं तद्दधातीति तमित्यर्थः । पीतस्यापि विषस्य च्छायाविशेषेण तद्धारणम् । ८ व्यासः प्रष्ठः-पुरःसरो येषां ते ९ वाहा-क्रतूनां वोढृत्वेन वाहनभूता वेदाः तेषामधिवाहा अधिवोढारः-तत्त्वज्ञानस्यान्तर्धारणेन धारणकर्त्तार इति यावत् । १० भूषा-भूषणम् । ११ पेटी-सर्पावरोधपात्रम् । अधिकतया सर्पाणां भूषणत्वेन धारणात्तथा कथनम् । १२ भुवनं-स्थानम् । १३ अधरं-पातालम्, तत्रैव दैत्यैः प्रायेणाराध्यमानत्वात् । १४ आकाशम् । १५ पुष्पोपवनम् । आकाशे भूतैः सह प्रायः परिभ्रमणकारित्वात् । १६ शाटी-वस्त्रम् । १७ शतमखो देवेन्द्रो मुखम् अग्रणीर्येषां तादृशाः दिक्पालाः । १८ घर्षणेन लेपनीयत्वात्, चन्दनवृक्षः । १९ मनोभूः-कामः । कामं हि भस्मीकृत्य तद्भस्म चन्दनमिव लिम्पतीति यथोक्तम् । २० रेखाकारां कलाम् । २१ कलहे परस्परमाहनने बन्धनस्य दृष्टचरो भङ्गः । २२ प्रणाल्या परम्परया यः सम्भेदः सम्मिश्रणं तेन । २३ महाकल्पे स्वाहाकृतं भुवनचक्रं येन । २४ जीवनम् । २५ शोचन्त्याम् । २६ गिरीणां ग्रामणीः ईशः, तत्र राजधान्यामिव विराजमानत्वेन तथाभूतः । गिरीश इति भावः । 'गिरीशोऽद्रिपतौ वाचस्पतिशङ्करयोः पुमान्' इति गोपालोक्तेः । २७ प्रणये कुपिताम् । अस्य अनुनयन् इत्यत्र कर्मत्वेनान्वयः ।

॥ ४२ ॥ यस्मिन्बुद्बुदसंकरा इव बहुब्रह्माण्डखण्डाः क्वचिद्भान्ति क्वापि च सीकरा इव विरिञ्चाद्याः स्फुरन्ति भ्रमात्। चिद्रूपा लहरीव विश्वजननी शक्तिः क्वचिद्द्योतते स्वानन्दामृतनिर्भरं शिवमहापाथोनिधिं तं नुमः ॥ ४३ ॥ कल्पान्ते शमितत्रिविक्रममहाकङ्कालबद्धस्फुरच्छेषस्यूतनृसिंहपाणिनखरप्रोत्क्षिप्तकोलामिषः। विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ कर्षन्धीवरतां गतः स तु सतां मोहे महाभैरवः ॥४४॥ भीतिर्नास्ति भुजङ्गपुङ्गवविषात्प्रीतिर्न चन्द्रामृतान्नाशौचं हि कपालदामलुलनाच्छौचं न गङ्गाजलात्। नोद्वेगश्चितिभस्मना न च सुखं गौरीस्तनालिङ्गनादात्मारामतया हिताहितसमः स्वस्थो हरः पातु वः ॥ ४५ ॥ यं वेदाः सततं स्तुवन्ति नितरां ध्यायन्ति यं योगिनो यः सृष्ट्यादिनिदानमुष्णकिरणेन्द्वग्नीक्षणो यः पुमान्। यस्मिन् शैलसुताकृतार्द्धवपुषि प्रज्ञाऽऽत्मके शाश्वते मच्चित्तं रमतां सदा भयहरे श्रीमत्परब्रह्मणि ॥ ४६ ॥ वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः। अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायाऽस्तु वः ॥ ४७ ॥ आनन्दश्लथिताः समाधिषु मुखे गौर्या विलासोल्लसाः संभ्रान्ताः क्षणमुद्धताः क्षणमथ स्मेरा निजे वैकृते[2]। क्रूराः कृष्टशरासने मनसिजे दग्धे घृणाकूणितास्तत्कान्तारुदितेऽश्रुपूरतरलाः शम्भोर्दृशः पान्तु वः ॥ ४८ ॥ स्वर्भानुः सुरवर्त्मनाऽनुसरति ग्रासाभिलाषादसाविन्दोरिन्दुमुखि! ग्रसेत किमुत भ्रान्त्या भवत्या मुखम्। इत्थं नाथगिरा नभोऽर्पितदृशो वक्त्रे भवान्या भृशं मानिन्याः कृतचुम्बनस्त्रिनयनः स्तादिष्टसिद्ध्यै सताम् ॥ ४९ ॥ विष्णोरागमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं कौपीनं परिधाय चर्म करिणः शम्भुः पुरो धावति। दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद्भूतले कृत्तिर्विस्खलिता ह्रिया नतमुखो नग्नो हरः पातु वः ॥ ५० ॥ यत्तत्त्वं श्रुतिभिस्तथोपनिषदां वृन्देन वन्दारुवन्नित्यं गीयत ईशता निरवधिर्यत्रैव सर्वात्मना। पूर्णानन्दतनुं दयैकजलधिं शुद्धं प्रबुद्धं सदा मायेशानमनन्तमव्ययमजं वन्दे परं शङ्करम् ॥ ५१ ॥ भस्मान्धोरगफूत्कृतिस्फुटभवद्भालस्थवैश्वानरज्वालास्विन्नसुधांशुमण्डलगलत्पीयूषधारारसैः। संजीवद्गजचर्मगर्जितभयभ्राम्यद्वृषाकर्षणव्यासक्तः सहसाद्रिजोपहसितो नग्नो हरः पातु वः ॥ ५२ ॥ एकोऽन्ते द्विसमैस्त्रिलोचन इति ख्यातश्चतुर्भिः स्तुतो वेदैः पञ्चमुखः षडाननपिता सप्तर्षिभिर्वन्दितः। अष्टाङ्गो नव तुल्य आमरगणे वासो

---

१ कल्पान्ते प्रलये, शमितः त्यक्तजीवितो यस्त्रिविक्रमः लोकत्रयाक्रमणपरो देवदेवस्तस्य यः महाकङ्कालः त्वङ्मांसशून्यास्थिमात्रशेषं शरीरं तेन तत्र वा बद्धः, अत एव स्फुरन् यः शेषः शेषदेहः तत्र स्यूतो यो नृसिंहपाणिस्तस्य नखैः प्रोत्क्षिप्त उत्कृष्योत्कृष्य पृथक्कृतं कोलामिषं वराहमांसं येन तादृशः। महाप्रलये सर्वेषां नष्टत्वं तस्मिन् श्मशानेऽस्यैवावशेषादिदमुक्तम्। स्पष्टमितरत्। जयतीत्यध्याहार्यम्। २ अन्विष्यते संचिन्त्यत इति यावत्। विकृतत्वे विरूपत्वे इति यावत्। ३ घृणया दयया कूणिताः सङ्कुचिताः। ४ तस्य दग्धस्य कामस्य या कान्ता रतिः। ५ राहुः। ६ आकाशेन। ७ मानिन्या भवान्या इत्यन्वयः। एवं च मानापनयने वञ्चनमिदं रतिकौशलं द्योतयते। ८ बन्धनरज्जुम्। ९ गरुडम्। १० यं गुणं कृत्वा कौपीनं बद्धं स एव सर्पः। ११ करिणश्चर्म यत् कौपीनं कृतम्। १२ यस्या इतराऽधिका वा प्रभुता नान्यत्रेति भावः। १३ द्वाभ्यां—प्रकृतिपुरुषाभ्यां समः सह वर्त्तमानः तत्तुल्येन वर्त्तमानो वा, यद्वा कालकलया चेतनकलया च समः सहितः। यद्वा शेषहिमालयाभ्यां (कान्त्या) समः तुल्यः। १४ 'सूर्यो जलं मही वह्निर्वायुराकाशमेव च। दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः ॥' इति विष्णुपुराणोक्तान्यष्टावङ्गानि शरीराणि यस्य तादृक्। १५ नवभिः सिद्धैः तुल्यः।

दशाशा[1] दधत्स्वर्धैकादशं सोऽवतान्न विजितो यो द्वादशात्मांशुभिः ॥ ५३ ॥ लीलाद्यूतजितां कला-
धरकलां मौलौ दृढं कीलितां स्वीकर्तुं गयमुन्नमय्य[2] भुजयोर्विक्षेपयन्त्यास्तदा । पार्वत्याः कुचकुम्भपार्श्व-
युगले सप्रेमदत्तेक्षणः कालक्षेपणमिन्दुमोचनविधौ देवः स नो रक्षतु ॥ ५४ ॥ भूत्यालेपनभूषितः[3]
प्रविलसन्नेत्राग्निदीपाङ्कुरः कण्ठे पन्नगपुष्पदामसुभगो गङ्गाजलैः पूरितः । ईषत्ताम्रजटाग्रपल्लवयुतो न्यस्तो
जगन्मण्डपे शंभुर्मङ्गलकुम्भतामुपगतो भूयात्सतां श्रेयसे ॥ ५५ ॥ मल्लीमाल्यधिया[4] सुधाकरकलां
कण्ठश्रियं कज्जलभ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया । कैलासे प्रतिबिम्बितात्मस्व-
वपुषो गृह्णन्हसन्त्या मुहुः पार्वत्या प्रतिकर्मकर्मणि चिरं मुग्धो हरः पातु वः ॥ ५६ ॥ दास्येऽहं
परिरम्भणानि कितव द्यूते जितानि त्वया धैर्यं धेहि यतः कृतः शतमहोरात्राणि तत्रावधिः । इत्युक्तः
शिवया निशादिवसकृज्ज्योतिर्मयाक्षिद्वयद्रागुन्मेषनिमेषकोटिघटनाव्यग्रो हरः पातु वः ॥ ५७ ॥ मौलौ
किं नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं किं नीलालकवेणिका मधुकरी किं भ्रूलता वीचिका ।
किं नेत्रे शफरौ किमु स्तनयुगं प्रेङ्खद्रथाङ्गद्वयं[5] साशङ्कामिति[6] वञ्चयन्गिरिसुतां गङ्गाधरः पातु वः ॥५८॥
देव्याः प्राक्परिरम्भणे किल करौ द्वौ द्वौ पुनस्तत्करौ रोद्धुं तन्मुखमुन्मुखं रचयितुं द्वौ चाधरास्वादने ।
द्वौ नेत्रान्तपलालकोपनयने मोक्तुं च नीवीं दृढां द्वावित्थं सफलीकृताखिलकरः[7] पायात्स वः शंकरः
॥ ५९ ॥ न क्रोधः[8] क्रियतां प्रिये स[9] तु भवन्मौलिस्थगङ्गोदरे मुग्धे मानसपूजितं[10] त्यज कृतं युष्म-
न्नियोगद्वयम्[11] । वक्रे[12] श्लेषममुं[13] निराकुरु कदाश्लिष्टोऽसि वक्रो[14] मया वामाङ्गयेति हृतोत्तरः स्मरहरः
स्मेराननः पातु वः ॥ ६० ॥ अङ्गं[15] येन रथीकृतं नयनयोर्युग्मं[16] रथाङ्गीकृतं पात्रं स्वं रथकर्मसार-[17]
थिकृतं श्वासास्तुरङ्गीकृताः[18] । कोदण्डीकृतमात्मवीर्यमचिरान्मौर्वीकृतं[19] भूषणं[20] वामाङ्गं[21] विशिखीकृतं
दिशतु नः क्षेमं स धन्वी पुमान् ॥६१॥ नृत्यारम्भरसत्रसद्गिरिसुतारिक्तार्धसंपूर्तये निर्व्यूढभ्रमिविभ्रमाय[22]
जगतामीशाय तुभ्यं नमः । यच्चूडाभुजगेश्वरप्रभृतिभिस्तादृग्भ्रमन्तीर्दिशः पश्यद्भिर्घनघूर्णमानवदनैः
शान्तोऽपि न श्रद्दधे ॥ ६२ ॥ उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणालीपतत्स्वर्गङ्गाजलदण्डिकावलयितं
निर्माय तत्पञ्जरम् । संभ्राम्यद्भुजदण्डपक्षपटलद्वन्द्वेन हंसायितस्त्रैलोक्यव्ययनाटिकानयनटः स्वामी
जगत्त्रायताम् ॥ ६३ ॥ यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं मेरौ पार्श्वनिवासिवासर-
निशाचित्रे परिभ्राम्यति । तेजस्यस्तडितो भवन्तु शतशो दृष्टा हि तास्ताः कथं ताम-
स्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः ॥ ६४ ॥ तत्कालारभटीविजृम्भण[23]परित्रासादिव
भ्रश्यता वामार्धेन तदेकशेषकरणं बिभ्रद्वपुर्भैरवम् । तुल्यं चाब्धिभुजङ्गभूषणमसौ भोगीन्द्रकङ्कालकै-

---

१ दश दिशः । नग्नत्वेन वासोरूपत्वात् । २ गयं नन्दिनं वृषमिति पाठान्तरम् । ३ भस्माले-
पनेत्यर्थः । ४ मल्ली मल्लिका, तस्या यन्माल्यं तद्धिया । ५ प्रेङ्खत् चपलम् । ६ सपत्नीं कामपि
शिरसि निगूह्य दधात्ययमिति गङ्गामुद्दिश्य जाताशङ्काम् । ७ शङ्करस्य पञ्चमुखत्वे दशकरत्वं
सिद्धमित्यखिलपदं दशपरम् । ८ क्रोधो नेति विवक्षितोऽर्थः । नक्रः अथ इत्यविवक्षितः । अतएवाह
९ स नक्र इत्यर्थः । १० मानसेन पूजितं स्वीकृतं, निष्कारणं मनसैवान्यथा
विचार्य धृतं, कोपमित्यर्थः । अमान् दरिद्रान् अस अर्चय अन्नदानादिना प्रसादय, पूजितं पूजनं
च त्यजेत्यर्थः । ११ आज्ञाद्वयम् । १२ हे कुटिले कुटिलविषय इति च । १३ द्वितीयार्थसङ्घटनम्,
आलिङ्गनं च । १४ वक्रस्त्वमिति शेषः । १५ पृथिवीरूपम् । १६ सूर्यचन्द्ररूपम् । १७ अमात्य-
रूपः, ब्रह्मेति यावत् । १८ ऋचः १९ अचलः सुमेरुप्रभृतिरित्यर्थः । २० वासुकिः शेषो वा ।
२१ हरिहरस्वरूपतया हरिर्वामाङ्गमिति मन्तव्यम् । २२ निर्व्यूढः समाप्तः भ्रमिविभ्रमः नृत्य-
सम्बन्धिभ्रमणविलासो यस्य स तस्मै । २३ तत्काले प्रदोषसमये, या आरभटी नृत्यं तस्या
यद् विजृम्भणम् उल्लासः, वृद्धिरिति यावत् ।

बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः ॥ ६५ ॥ चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो माद्यन्जटापल्लवो दृप्यद्दारुणदन्दशूकमणिमांस्तत्पञ्चशाखालयः । स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रवत्पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा ॥ ६६ ॥ वक्राम्भोरुहि विस्मिताः स्तवकिता वक्षोरुहि स्फारिताः श्रोणीसीमनि गुम्फिताश्चरणयोरक्ष्णोः पुनर्विस्तृताः । पार्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्तु भद्राणि वो विद्वस्यान्तिकपुष्पसायकशरैरीशस्य दृग्भङ्गयः ॥ ६७ ॥ शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादिविसंष्ठुला[3]खिलविधिव्यासङ्गभङ्गाकुलः । आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ ६८ ॥ दिक्कालात्मसमैव यस्य विभुता यस्तेत्र विद्योतते यैत्रामुष्य[6] सुधीभवन्ति किरणा राशेः[8] स योसामभूत् । यस्तैत्पिक्तमुषःसु[10,11,12] योऽस्य[13,14] हविषे[15] यस्तस्य[16] जीवातवे वोढा यद्गुणमेव[17,18] मन्मथरिपोस्ताः पान्तु नो मूर्तयः ॥ ६९ ॥ जीर्णेऽप्युत्कटकालकूटगरले[19] प्लुष्टे तथा मन्मथे नीते भासुरभालनेत्रतनुतां कल्पान्तदावानले । यः शक्त्या समलंकृतोऽपि शशिनं शैलात्मजां स्वर्धुनीं धत्ते कौतुकराजनीतिनिपुणः पायात्स वः शंकरः ॥ ७० ॥ किं गोत्रं किमु जीवनं किमु धनं का जन्मभूः किं वयः किं चारित्र्यममुष्य के सहचराः के वंशजाः प्राक्तनाः । का माता जनकः शिवस्य क इति प्रह्वेण[20] पृथ्वीभृता पृष्टाः सस्मितनम्रमूकवदनाः सप्तर्षयः पान्तु वः ॥ ७१ ॥ तादृक्सप्तसमुद्रमुद्रितमहीभृद्भिरभ्रंकषैः स्रोतोभिः परिवारिता दिशि दिशि द्वीपैः समन्तादयम् । यस्य स्फारफणावलीमणिचये मज्जत्कलङ्काकृतिः शेषः सोऽप्यगमद्यदङ्घ्रदपदं तस्मै नमः शंभवे ॥ ७२ ॥ तारानायकशेखराय जगदाधाराय धाराधरच्छायाधारककन्धराय गिरिजासङ्गैकभङ्गारिणे । नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे नागैः कङ्कणिने नगेन गृहिणे नाथाय नित्यं नतिः ॥ ७३ ॥ केयूरीकृतकङ्कणीकृतजटाजूटावतंसीकृतज्यावल्लीकृतकुण्डलीकृतकटीसूत्रीकृताहीश्वरः । पायाद्वस्तिलकीकृतप्रियतमादर्शीकृताक्षीकृतद्यूतारम्यपणीकृतेन्दुशकलः कात्यायनीकामुकः ॥ ७४ ॥ कान्तां कामपि कामयत्यनुदिनं ध्यानापदेशादयं येनामुं मुनयोऽप्यनादिनिधनं ध्यायन्ति धौतस्पृहाः । इत्यङ्कात्स्वकरे हृते गिरिजया पादे च पद्मासनाद्विश्वं पातु पुरन्ध्रिनद्धवपुषः शंभोः समाधिव्ययः ॥ ७५ ॥ स्नातः स्वर्गतरङ्गिणीजलभरैर्नेत्रोत्पलेनाञ्चितः पार्वत्याः सितभूतिचन्दनचयैरालिप्तगात्रोज्ज्वलः । देवश्चन्द्रकलासितश्रुतिलको गौरीविवाहोत्सवारम्भे शैलकृतार्हणस्त्रिजगतामर्च्यो हरः पातु वः ॥ ७६ ॥ उज्झित्वा दिशमम्बरं वरतरं वासो वसानश्चिरं हित्वा वासरसं पुनः पितृवने कैलासहर्म्याश्रयः । त्यक्त्वा भस्म कृताङ्गरागनिचयः श्रीखण्डसारद्रवैर्देवः पातु हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥ ७७ ॥ क्रीडन्मन्दरकन्दरोदरवलन्मन्दारवृन्दावने क्रोधान्धान्धकदानवादिहनने जृम्भत्त्रिशूलोद्गमः । त्रैलोक्याखिलसङ्कटोत्कटभयोद्रेकान्धकारांशुमान्पायाद्वस्त्रिपुरप्रमाथनपटुर्देवो हि पञ्चाननः ॥ ७८ ॥ गर्जद्भीमभुजङ्गभीषणफणाफूत्कारभीतिप्रदः क्रीडत्प्रेतपिशाचराक्षसगणः प्रत्यक्षतः प्रान्ततः । भालस्थः प्रलयानलोद्भटशिखः संक्रान्तसर्वास्पदैः[21] शार्दूलाजिनभद्र-

---

१ दृप्यन्तः, अत एव दारुणा दन्दशूकाः सर्पास्तैर्मणिमान् । तैरिति 'धान्येन धनवान्' इतिवदभेदे तृतीया । २ दीयमानेत्यर्थः । ३ व्यग्रेत्यर्थः । ४ गगनस्य । ५ सविता । ६ चन्द्रमसि । ७ सवितुः । ८ चन्द्रमाः । ९ अपां जलानाम् । १० वह्निः । ११ जलानाम् । १२ पवित्रं जलमित्यर्थः । १३ यजमानः । १४ अनलस्य । १५ मरुत् । १६ यजमानस्य । १७ पृथ्व्याः । १८ मरुत् । १९ दग्धे । २० प्रणतेन । २१ संक्रान्तानि वशं नीतानि, सर्वेषामास्पदानि प्रतिष्ठाः पूज्यत्वाद्यतिशय इति यावत्, येन तादृक् । आस्पदं प्रतिष्ठायाम् ( ५ । १ । १४६ ) इति साधु ।

यानकभयो भूयाद्भवो भूतये ॥ ७९ ॥ गौरीचुम्बनचञ्चलं परिचलद्भ्रूदण्डप्रभामण्डलं व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम् । प्रौढप्रेमपरम्परापरिचयप्रोत्फुल्लनेत्राञ्चलं शम्भोरस्तु विभूतये हि भवतामुन्मत्तगङ्गं[1] शिरः ॥ ८० ॥ पाणौ कङ्कणमुत्फणः[2] फणिपतिर्नेत्रे लसत्पावकं कण्ठः कुण्ठितकालकूटविषमो वस्त्रं गजेन्द्राजिनम् । गौरीलोचनलोभनाय सुभगो वेशो वरस्यास्ति मे गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥ ८१ ॥ ज्वाला जातु करालतां न दधतां भाले कृशानोरिति स्वर्गङ्गा विहिता कपर्दनिलया प्रागेव येन स्वयम् । क्ष्वेडत्रासहृते सुधाकरकला मूर्ध्नाऽर्चिता येन च प्राज्ञेऽसौ भवभीतिशान्तिविषये भूयात् पिनाकी शिवः ॥ ८२ ॥ आखुर्वाञ्छति भस्मसूत्रहरणं व्यालस्तथा मूषकं व्यालं बर्हिरयं हरिश्च वृषभं गङ्गा तथा चन्द्रकम् । इत्थं दुःखमहर्निशं शृणु विभो सोढव्यमेतत्कथं शंभोरात्मदशानिवेदनपरं त्वां पातु दीनं वचः ॥ ८३ ॥ दिव्यं[3] वारि कथं यतः सुरधुनी मौलौ कथं पावको दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं च चाङ्गे तव । तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यतामित्थं शैलभुवा विहस्य लपितैः[4] शंभुः शिवायास्तु वः ॥ ८४ ॥ तातं[5] तत्तातततातं[6] कथय हरं[7] कुलेऽलंकृते संप्रदाने तच्छ्रुत्वा चन्द्रमौलिर्नतवदर्कजो[8] जातलज्जो बभूव । ब्रह्मावादीत्तदानीं शृणुत हरकुलं वेदकण्ठोग्रकण्ठश्रीकण्ठान्नीलकण्ठः[9] प्रहसितवदनः पातु वश्चन्द्रचूडः ॥ ८५ ॥ या सृष्टिः स्रष्टुराद्यां[10] वहति विधिहुतं[11] या हविर्या च होत्री[12] ये[13] द्वे कालं विधत्तः श्रुतिविषयगुणा[14] या स्थिता व्याप्य विश्वम् । यामाहुः सर्वबीजप्रकृतिरिति[15] यया प्राणिनः प्राणवन्तः[16] प्रत्यक्षाभिः प्रपन्नः[17] तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ ८६ ॥ एकैश्वर्यस्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः पुरस्ताद्यतीनाम् । अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स नस्तामसीं वृत्तिमीशः ॥ ८७ ॥ कैलासाद्रौ प्राग्बुर्दस्ते[18] परिचलति[19] गणेषूल्लसत्कौतुकेषु क्रोडं मातुः कुमारे विशति विषमुचि[20] प्रेक्षमाणे सरोषम् । पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयघनेन[21] मुमया पातु हृष्टः शिवो नः ॥ ॥ ८८ ॥ क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयो[22]ऽपि त्रासार्ता ऋत्विजोऽधश्चपलगण तोष्णीषपट्टाः पतन्ति । दक्षः स्तौत्यस्य[23] पत्नी विलपति कृपणं[24] विद्रुतं[25] चापि देवैः, शंसन्नित्यात्तहासो[26] मखमथनविधौ पातु देव्यै शिवो वः ॥ ८९ ॥ आसीने पूष्णि[27] तूष्णीं, व्यसनिनि[28] शशिनि, व्योम्नि कृष्णे[29] संतृष्णे[30] दैत्येन्द्रे जातनिद्रे[31],

---

१ उन्मत्ता गङ्गा यत्र तादृक् । उन्मत्तगङ्गाशिर इति त्वपपाठः । २ उत्फणमिति पाठे तु उत्फणं यथा स्यात्तथेति भावः । स्थित इति शेषः । ३ शपथविशेषः । ४ उक्त इत्यर्थः । ५ पितरम् । ६ पितामहम्, प्रपितामहम् । ७ हे हर तवेति शेषः । ८ नतं वदनमेव कञ्जं कमलं यस्य सः । ९ 'वेदकण्ठोग्रकण्ठश्रीकण्ठात्' इति समस्तम् । पित्राद्यभावात्स्वयमेव वेदकण्ठादिवाच्यस्तत्तदात्मेति यथोक्तम् । १० जलमयी । ११ अग्निरूपा । १२ यजमानरूपा । १३ सूर्यरूपा चन्द्ररूपा च । १४ शब्दगुणकाकाशरूपा । १५ पृथ्वीरूपा । १६ वायुरूपा । १७ युक्त इत्यर्थः । प्रसन्न इति पाठान्तरम् । १८ परिक्षिप्ते, रावणेनेति शेषः । १९ एवमेतस्य 'परिचलति ( सति )' इति विशेषणम् । २० सर्पे । २१ भयस्य घनं समुदायः, तद्वत् इति यावत् । २२ दक्षिणाग्निर्गार्हपत्याग्निराहवनीयाग्निश्चेति । २३ दक्षस्य । २४ क्रियाविशेषणमिदम् । २५ पलायितं, पलाय्य क्वापि स्थितमित्यर्थः । २६ गृहीतहासः हास्योन्मुख इति यावत् । २७ भास्करे । २८ म्लाने । २९ भगवति । ३० विषज्वालातापवृद्ध्या पिपासाकुले । ३१ बलिनि ।

द्रवति मघवति क्रान्तकान्तौ कृतान्ते[1] । अब्रह्मण्यं ब्रुवाणे[2] कमलपुटकुटीश्रोत्रिये[3] शान्त्युपाये पायाद्वः कालकूटं झटिति कवलयँल्लीलया नीलकण्ठः ॥ ९० ॥ केयं मूर्ध्न्यन्धकारे[4] तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते कान्ताप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव । नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानीमित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥ ९१ ॥ धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः। नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुर्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्या-द्विभोर्वः ॥ ९२ ॥ हर्षादम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या श्वश्र्वा मौलौ पुरारेर्दुहितृ-परिणये साक्षतं चुम्ब्यमाने । तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो दृष्ट्वा तद्वृत्तमाशु स्मितसुभगमुखः पातु वः पञ्चवक्त्रः ॥ ९३ ॥ कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः क्रीडन्कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः । ककालक्रीडनोत्कः कलित-कलकलः कालकालीकलत्रः कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिको नः ॥ ९४ ॥ दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन । आदायास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ९५ ॥ क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं गृह्णन्केशेष्वपास्त-श्चरणनिपतितो नेक्षितः संभ्रमेण । आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रा-पराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ ९६ ॥ कल्याणं वः क्रियासुर्मिलदर्टनियुगस्थाँस्नु-गीर्वाणभोगिश्रेणिव्यत्यस्तकल्पद्रुमनवसुमनोनागहारावलीनि । नालीकाश्लिष्टलक्ष्मीकरतलनलिनोद्भ्रा-न्तमाध्वीकधारातिम्यत्फालेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि ॥ ९७ ॥ कल्पान्ते क्रोधनस्य त्रिपुरविजयिनः क्रीडया संचरिष्णोः कृत्वापि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः । दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिं प्रेक्ष्य चात्मीयमूर्तिग्रासव्यासक्तमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥ ९८ ॥ पर्यङ्क[11]ग्रन्थिबन्धे[12]द्विगुणितभुजगाश्लेषसंवीत[13]जानोरन्तःप्राणावरोधव्युपरत[14]सकलज्ञानरुद्धेन्द्रि-यस्य । आत्मन्यात्मानमेव व्यपगत[15]करणं पश्यतस्तत्त्वदृष्ट्या शंभोर्वः पातु शून्येक्षण[16]घटितलय[17]-ब्रह्मलग्नः समाधिः ॥ ९९ ॥ पादस्याविर्भवन्तीमवनतिमवने[18] रक्षतः स्वैरपातैः संकोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम्[19] । दृष्टिं लक्ष्येषु[20] नोग्रज्वलनकणमुचं[21] बध्नतो दाहभीतेरित्याधारानु-रोधात् त्रिपुरविजयिनः पातु वो दुःखनृत्तम्॥ १०० ॥देहार्धानद्धकान्ताकचकुसुमचयो भालनेत्रानलार्चिः-पीनोष्मामौलिखेलन्मुखरसुरनदीवीररम्यो जगन्ति । स्फीतोत्तंसेन्दुकान्तिर्द्विरददतिदृढाच्छादनव्यक्तशीतः

---

१ यमे। २ न हन्तव्यम् ( जगत् ) इति प्रार्थयमाने । ३ कमलासनत्वात् कमलपुट एव कुटी तस्याः ( वासित्वेन ) श्रोत्रियः वेदविद्, ब्रह्मा, तस्मिन् । ४ अन्धकस्यारे ( शत्रो! ), तिमिरे च । ५ ब्रह्मार्दित्यर्थः । ६ धनुष्कोटिरित्यर्थः । ७ स्थायीति भावः। ८ बाणविशेष इत्यर्थः। त्रिपुरविजयावसरे विष्णुः शरो जातः । ९ पुष्परसः। १० भालः। ११ तदाकार आसनविशेषः । १२ रचन- । १३ आच्छन्न- । १४ निवृत्त-१५ व्यपगतानि-करणानि साधनानि, इन्द्रियाणि वा यस्मिन् कर्मणि तद् यथा भवेत्तथा। १६ अद्वैतपरायां दृष्टौ सर्वस्य दृश्यजातस्यादृश्यत्वे सर्वत्र शून्येक्षणत्वमिति यथोक्तम्। १७ चित्तस्य ततस्ततो व्युपरमो लयः। १८ अवनेः-पृथिव्याः। १९ अतिविस्तारभाजामिति भावः। २० दृष्टिविषयमुपपद्यमानेषु वस्तुषु विषये। २१ इदं दृष्टिमित्यस्य विशेषणम्।

शम्भुर्भूषास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्तुमूर्तिः ॥ १०१ ॥ हेयोपादेयशून्यं मुनिगणमनसामद्वयानन्दहेतुः सेतुः संसारवारांनिधिसुखतरणे श्रीमहेशानसंज्ञम् । प्रालेयं ज्योतिरन्तःपरिणततिमिरव्यूहविच्छेददक्षं किंचिद्वाचामधीशं स्फुरतु मम हृदि त्र्यक्षरं विश्वसाक्षि ॥ १०२ ॥ शुद्धान्ते सीधुपानोन्मदमदनमदोन्मादमत्तालिकालीतालीसंताड्यमानोद्भटमुरजरवाडम्बरोल्लासिताङ्गः । नृत्यन्मग्नो विलज्जश्चलविकटतटैः स्रस्तयैर्लोचनार्धैर्दृष्टः स्त्रीभिः सहासं प्रहसनमुदितः पातु वो वामदेवः ॥ १०३॥ बिभ्रत्पाथः कपर्दे सुरनगरनरीमिन्दुलेखां ललाटे नेत्रान्तः कालवह्निं गरलमपि गले व्याघ्रचर्माङ्गभागे । पञ्चास्यो वै त्रिनेत्रो वृषभगतिरतिर्वामभागार्धवामः संदिश्यात्संपदं वः सह सकलगुणैरद्भुताकार ईशः ॥ १०४ ॥ स धूर्जटिजटाजूटो जायतां विजयाय वः । यस्यैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥ १०५ ॥ चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः । पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटाजटः ॥ १०६ ॥ गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखारत्नैः कोरकिताः सितांशुकलया स्मेरैकपुष्पश्रियः । आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहदा नाल्पं कल्पलताः फलं ददत वोऽभीष्टं जटा धूर्जटेः ॥ १०७ ॥

## गङ्गास्तुतिः ।

पर्वतभदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् । हरिमिव हरिमिव हरिमिव सुरसरिदम्भःपतन्नमत ॥ इयं चिद्रूपापि प्रकटजडरूपा भगवती यदीयाम्भोबिन्दुर्वितरति च शंभोरपि पदम् । पुनाना धुन्वाना निखिलमपि नानाविधमघं जगत्कृत्स्नं पायादनुदिनमपायात्सुरधुनी ॥ १ ॥ चूडाशीतकरस्तनंधयसुधानीरन्ध्रगन्धस्पृशः क्रीडाकङ्कणपन्नगेश्वरफणापीतावशिष्टा मुहुः । अङ्कासीनगिरीन्द्रजास्तनतटीहारावलीलोलनाः संतापं शमयन्तु वो हरजटागङ्गातरङ्गानिलाः ॥ २ ॥ वायुर्वाति यदङ्गसङ्गमवशाच्छ्रीशंभुरूपप्रदो गौरी रुष्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचते । चन्द्रस्त्रस्यति कुप्यते हरिरपि ब्रह्मा परं शङ्कते सा गङ्गा निखिलं कलङ्कनिचयं भङ्गं तरङ्गैर्नयेत् ॥ ३ ॥ शार्ङ्गी ब्रह्मकमण्डलोरधिगतैर्यैः प्रापि तीर्थाङ्घ्रितां यैर्मृत्युंजयतामनायि गरलग्रस्तो जटाजूटगैः । येभ्योऽशिक्षत माधुरीं मृदुजटाजूटे मठे चन्द्रमास्तानीमानि पयांसि गौतमि तव श्रेयांसि यच्छन्तु नः ॥ ४ ॥ यन्नाम्नः प्रथमाक्षरं विजयते भानौ द्वितीयाक्षरं नित्यं नृत्यति सत्कवीन्द्रवदने

---

१ मद्य— । २ जलम् गङ्गासम्बन्धीति बोध्यम् । ३ एकम्—सर्वतः कृष्णताविरह एकपदमेकाकारं यत् पलितं केशेषु शौक्ल्यं त्वचि शौक्ल्यं रेखावेष्टनं च तस्य भ्रान्तिम् । ४ हे जनाः पृथिव्यां पतत् सुरसरितोऽम्भो ममत । पर्वतं हिमालयं भिनत्तीति तत् । पवित्रम् अत एव नरक ( दुःख ) स्य निवर्त्तकत्वेन जैत्रम् । मतं पूजितं गहनं महावेगेन सञ्चारि । हरिमिव-विष्णुमिव पर्वतस्य ( उद्धर्तृतया ) भेद्यसौ पवित्रस्तं नरकस्य तदाख्यस्य दैत्यस्य जैत्रम् । बहवो ये मतङ्गा म्लेच्छास्तान् हन्तीति तम् । तथा हरिमिव इन्द्रमिव-पर्वतानां पक्षच्छेत्तृतया भेद्यसौ पवित्रस्तम् । पविं वज्रं त्रायते-धातृत्वेन रक्षतीति पवित्रः, तम् जैत्रं-जयनशीलम् । नराणां समूहो नरकस्तस्य बहुमतम् । गहनं दुर्लभपदस्थम् । एवं-हरिमिव सिंहमिव गुहावासित्वेन पर्वतभेदोऽस्याऽस्त्याश्रयः इत्यसौ, पवित्रः 'मृगाणां च मृगेन्द्रोऽहम्' इति प्रभोर्विभूतिरूपत्वात्, तम् । नरकस्य-मनुजगणस्य जैत्रम् । बहवो ये मतङ्गा हस्तिनस्तान् हन्तीति तम् । ५ निबिड इत्यर्थः । ६ भागीरथीति नाम्न इत्यर्थः ।

भूत्वान्तवर्णद्वयम् । रामो रावणमाजघान समरे शंभोः शिरःशालिनी सा सर्वाक्षरमालिनी भवतु मे भाग्याय भागीरथी ॥ ५ ॥ मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्ली[1]निभा वह्नौ लाजनिभा[2] दृशोर्मणिनिभा भोगोत्करे[3] भोगिनाम्[4] । नृत्यावर्त[5]विवर्तनेरितपयःसंमूर्च्छितोच्छालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥६॥ एषा धर्मपताकिनी तटतरु[6]च्छायावसन्नाकिनी, शुष्यत्[7]पातकिनी भगीरथतपःसाफल्यसंदायिनी । प्रेमारूढ[8]पिनाकिनी गिरिसुतासाकेकरालोकिनी पापाडम्बरडाकिनी[9] त्रिभुवनानन्दाय मन्दाकिनी ॥ ७ ॥ स्वच्छन्दोच्छलदच्छकं[10]च्छकुहरच्छातै[11]रातेम्बुच्छटामूर्च्छन्मोहैं[12]महर्षिहर्षविहितस्नानाह्निकाह्नाय वैः[13] । भिन्द्यादुद्यदुदार[14]दर्दुरदरीदीर्घादरिद्र[15]द्रुमद्रोहोद्रेकमहोर्मिमेदुरं[16]मदा मन्दाकि[17]नीमन्दे[18]ताम् ॥ ८ ॥ शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्यास्तद्वासोल्लासवेल्लद्वरसफरतुलां यत्र धत्ते कलावान् । उन्मीलद्रोगिभोगावलिसुभगसिताम्भोजसंभाविताम्भा गङ्गानङ्गारिसङ्गा महति तव विधौ मङ्गलान्यातनोतु ॥ ९ ॥ दृष्टाः संकष्टदाहाः श्रवणपथगताः पुण्यपुञ्जावगाहाः स्पृष्टाः संसारपाथोनिधिपतितधरोद्धारधुर्या वराहाः । पीतास्तापोपशान्तिप्रजननपटवस्ते सुधावारिवाहाः कल्याणं कल्पयन्तां कलिकलुषहरा विष्णुपद्याः प्रवाहाः ॥ १० ॥ तावत् पापानि पीडावितरणकृतये भीमतामाश्रयन्ते तावद्वा स्वर्गमार्गः प्रतिहतगमनो दुर्लभश्चैव मोक्षः । तावद्वा सिद्धयोऽप्यप्रतिगतविभवा यावदीशानमौलिस्थाना गङ्गाऽनवाप्ता स्वनयनविषयं धीपदं वा कदाचित् ॥ ११ ॥

## चन्द्रशेखरस्थाया एव चन्द्रकलाया मङ्गलाचरणम् ।

पूर्णनखेन्दुद्विगुणितमञ्जीरा प्रेमशृङ्खला जयति । हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ १ ॥ जयति परिमुम्बितलक्ष्मा भयादनुपसर्पतेव हरिणेन । इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥ २ ॥ श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणीसंदष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम् । या बिम्बप्रतिपूरणाय परितो निष्पीडय संदंशिकायन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥ ३ ॥

## लोचनस्तुतिः ।

जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ । धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ १ ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं स्वान्ते शान्तिप्रणयिनि[19] समुन्मीलदानन्दसान्द्रम् । प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ २ ॥ सानन्दा गणनायके सपुलका गौरी-

---

१ मल्लिकासदृशी । २ भृष्टधान्यसदृशी । ३ फणामण्डले । ४ सर्पाणाम् । ५ नृत्यावर्तो नाम चक्रभ्रमणाकारं नर्त्तनम् । ६ तटतरूणां छाया तत्रावसतां नाकिनी स्वर्गसम्पत्तिमती । यस्य तटतरुच्छाये य आवसन्ति ते किल स्वर्ग पवेति फलसम्पत्तिरूपेति भावः । नाकनीरिति सुवचम् । वसतां नाकनीः स्वर्गं प्रति प्रापिकेत्यर्थः । नाकं नयतीति तथोक्ता । ७ शुष्यन्ति यानि पातकानि तान्यस्यां सन्तीति तथोक्ता । ८ प्रेम्णाऽऽरूढानां शरणमुपेतानां कृते पिनाकिनी शङ्करस्वरूपा । ९ गिरिसुतायाः पार्वत्याः साकेकरं सवैलक्ष्यम् आलोकत इत्येवम्भूता । १० जलपूर्णस्तटविभागविशेषः । ११ छातं क्षीणं तस्मादितरत् महदित्यर्थः । १२ नश्यदज्ञानम् । १३ अह्नाय झटिति । १४ उदारशब्दोऽत्र महत् (स्थूल) द्वाचकः । १५ पत्रशाकादिभिः पूर्णेत्यर्थः । १६ व्याप्त-। १७ अज्ञताम् । १८ कर्त्तरिकयेव । १९ शान्तिप्रार्थयितरि ।

मुखाम्भोरुहे सक्रोधा कुसुमायुधे सकरुणा पादानते वज्रिणि । सस्मेरा गिरिजासखीषु सनया शैलाधिनाथे वहन्भूमीन्द्र प्रदिशन्तु शर्म विपुलं शंभोः कटाक्षच्छटाः ॥ ३ ॥ एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् । अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ ४ ॥ पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव । अर्चिर्निःशेषचूडाशशिगलितसुधाघोरहंकारि कोणं तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ ५ ॥

## कण्ठस्तुतिः ।

पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ १ ॥ पातु वः शितिकण्ठस्य तमालश्यामलो गलः । संसक्तपार्वतीबाहुसुवर्णनिकषोपलः ॥ २ ॥ कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे रोलम्बन्ति, तमालबालमुकुलोत्तंसन्ति मौलिं प्रति । याः कर्णे विकचोत्पलन्ति, कुचयोरंसे च कालागुरुस्थासन्ति, प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ ३ ॥ कस्तूरीयन्ति भाले तदनु नयनयोः कज्जलीयन्ति कर्णप्रान्ते नीलोत्पलीयन्त्युरसि मरकतालंकृतीयन्ति देव्याः । रोमालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये कल्याणं कुर्युरेते त्रिजगति पुरजित्कण्ठभासां विलासाः ॥ ४ ॥

## शिरोमालिकास्तुतिः ।

पित्रोः पादाब्जसेवागतगिरितनयापुत्रपत्त्रा[1]तिभीतक्षुभ्यद्भूषाभुजङ्गश्वसनगुरुमरुद्दीतनेत्राग्नितापात् । स्विद्यन्मौलीन्दुखण्डस्रुतबहुलसुधासेकसंजातजीवा पूर्वाधीतं पठन्ती ह्यवतु विधिशिरोमालिका शूलिनो वः ॥ १ ॥

## गणस्तुतिः ।

संध्याताण्डवडम्बरप्रणयिनो देवस्य चण्डीपतेर्भ्रष्टापीडविशीर्णमुण्डचयनव्यग्रा गणाः पान्तु वः । यैरौत्सुक्यवशीकृतैर्ग्रहगणाद्राहौ गृहीते जवात्सूर्याचन्द्रमसोर्मिथः स्मितवतोर्जातं करास्फालनम् ॥ १ ॥

## नन्दीस्तुतिः ।

कण्ठालंकारघण्टाघणघणरणिता[2]ध्मातरोदःकटाहः कण्ठेकाला[3]धिरोहोचितघनसुभगंभावुकस्निग्धपृष्ठः । साक्षाद्धर्मो वपुष्मान्धवलककुदनिर्धूतकैलासकूटः कूटस्थो वः ककुद्मान्निबिडतरतमःस्तोमतूर्ण्यां[4] वितृण्यात्[5] ॥ १ ॥

## शिवताण्डवस्तुतिः ।

देवा दिक्पतयः प्रयात परतः खं मुञ्चताम्भोमुचः पातालं व्रज मेदिनीं प्रविशत क्षोणीतलं भूधराः । ब्रह्मन्नुन्नय दूरमात्मभवनं नाथस्य नो नृत्यतः शंभोः संकटमेतदित्यवतु वः प्रोत्सारणा नन्दिनः ॥ १ ॥ दोर्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरवध्वानोद्गीतजगद्भ्रमत्पदभरालोलत्फणाग्र्योरगम् । भृङ्गापिङ्गजटाटवीपरिसरोद्गङ्गोर्मिमालाचलच्चन्द्रं चारु महेश्वरस्य भवतां निःश्रेयसे ताण्डवम् ॥ २ ॥ संध्याताण्ड-

---

१ गिरितनयापुत्रस्य स्कन्दस्य यत् पत्त्रं वाहनं मयूरस्तेन । २ कण्ठस्यालङ्कारभूता या घण्टा तस्या यद्घणघणं रणितं शब्दस्तेन ध्मातं पूर्णं रोदसी द्यावापृथिव्यावेव कटाहो यस्य सः । ३ कण्ठेकालस्य–श्रीकण्ठस्य योऽधिरोह आरोहणम् । ४ तमःस्तोम एव तूण्या पुञ्जीभूततृणगुच्छसमूहः, ताम् । ५ विनाशयेत् ।

बडम्बरव्यसनिनो भर्गस्य चण्डभ्रमिव्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिलाः पान्तु वः । येषामुद्धतताण्डवेन झटिति व्यूहेषु भूमीभृतामुड्डीनेषु बिडौजसा[1] पुनरसौ दम्भोलि[2]रालोकितः ॥ ३ ॥ यस्यां मौलिमिलत्सुधांशुकलया संपूर्णबिम्बायितं भालावस्थितलोचनेन सहसैवालातचक्रायितम् । आवर्तायितमाकपर्दममरस्रोतस्वतीधारया पातु त्रीणि जगन्ति खण्डपरशोः[3] सा ताण्डवाङ्गभ्रमिः ॥ ४ ॥ आसीनैः स्वं विमानं कृतपरिवृतिभिः सुन्दरीसङ्गतैस्तैर्देवैः सिद्धैश्च यक्षैरनिमिषनयनैर्दृश्यमानः सतृष्णम्[4] । मध्येमध्ये पयोदैर्मुरज[5]सदृशतां बोधयद्भि[6]: सुमन्दमम्भः सम्पात्य पुष्पैरिव ननु महितस्ताण्डवः श्रेयसे स्तात् ॥ ५ ॥ मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोल[7]जालोद्भूताम्भक्षोद[8]दम्भात्प्रसभमभिनभः[9] क्षिप्तनक्षत्रलक्षम् । ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेशभ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः ॥ ६ ॥ शर्वाणी[10]पाणितालैश्चलवलयझणत्कारिभिः श्लाघ्यमानं स्थाने[11] संभाव्यमानं पुलकितवपुषा शंभुना प्रेक्षकेण । खेलत्पिच्छाली[12] केकाकलकलकलितं क्रौञ्चभिद्[13]बर्हियूना हेरम्बाकाण्डबृंहि[14]तरलितमनस[15]स्ताण्डवं त्वां धिनोतु[16] ॥ ७ ॥ पायाद्धायासखेदक्षुभितफणिफणारत्ननिर्यत्[17]ननिर्यच्छायामायापतङ्गद्युतिमुदितवियद्[18]वाहिनीचक्रवाकम् । अश्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीक[19]नालच्छेदामोदानुधावद्रुधिरमिव खगे धूर्जटेस्ताण्डवं नः ॥ ८ ॥ उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपातस्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसंगमानि । जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसंघट्टिभूरिभ्राम्यन्नक्षत्रचक्रव्यवसितसुमनोवृष्टिपातानि शंभोः ॥ ॥ ९ ॥ देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येष लोकानस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव । वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः शंभोर्नृत्यावतारे वलयमणिफणाफूत्कृतैर्विप्रकीर्णः ॥ १० ॥

## अर्धनारीस्तुतिः ।

नन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥ १ ॥ एकः स्तनस्तुङ्गतरः परस्य वार्तामिव प्रष्टुमगान्मुखाग्रम् ॥ यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातुः वः पर्वतराजपुत्री ॥ १२ ॥ यस्योपवीतगुण एव फणावृतैकवक्षोरुहः कुञ्च[20]पटीयति वामभागे । तस्मै ममास्तु तमसामवसानसीम्ने चन्द्रार्धमौलिशिरसे महसे[21] नमस्या[22] ॥ ३ ॥ स्वेदार्द्रवामकुचमण्डनपत्रभङ्गसंशोषिदक्षिणकराङ्गुलिभस्मरेणुः । स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी वः शंभोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥ ४ ॥ संभोगनतिरिच्यमानविभवो यद्विप्रलम्भो रसस्तद्दिव्यं मिथुनं परस्परपरिस्यूतं नमस्कुर्महे । एकस्याः प्रतिबिम्बसंभृतविपर्यासे मुहुर्दर्पणे सव्याङ्गस्थितिकौतुकं शमयति स्वामी स यत्रापरः ॥ ५ ॥ स्वच्छन्दैकस्तनश्रीरुभयदलमिल-

---

१ इन्द्रेण । २ वज्रम् । ३ शङ्करस्य । ४ अत एवानिमिषनयनैरिति युक्तम् । देवत्वमात्रेण विशेषणन्यासस्य व्यर्थत्वात् । ५ मृदङ्ग (ध्वनि)- ६ ध्वनिनेति स्वतो लभ्यते । ७ महातरङ्ग-८ कण-९ नभसीत्यर्थः । विभक्त्यर्थेऽव्ययीभावः । १० पार्वती । ११ युक्तम् । १२ क्रीडन् मयूरबर्हावलिः । १३ स्कन्द-। १४ बृंहित (हस्तिशब्द)-१५ क्षुब्धचित्तस्य । १६ प्रीणयतु । १७ निर्गच्छत् १८ व्योमसरित् सुसरिदिति यावत् । १९ बाणविशेषः । २० कञ्चुकीवद् भवति । २१ तेजसे । २२ नमस्कारः ।

न्मौलिचन्द्रः फणीन्द्रप्राचीनावीत[1]वाही सुखयतु भगवानर्धनारीश्वरो वः । यस्यार्धे विश्वदाहव्यसन-विसृ[2]मरज्योतिरर्धे कृपोद्यद्वाष्पं चान्योन्यवेगप्रहति सिमसिमाकारि चक्षुस्तृतीयम् ॥ ६ ॥

## पार्वतीस्तुतिः ।

प्रियकण्ठपरिष्वङ्गमीलिताक्षीं नमाम्युमाम् । कालकूटस्य[3] संस्पर्शाजातमूर्च्छागमामिव ॥ १ ॥ पार्वतीमो[4]षधीमेकामपर्णा[5][6] मृगयामहे । शूली[7] हालाहलं पीत्वा यया मृत्युंजयो[8]ऽभवत् ॥ २ ॥ अपर्णेयं सती सेव्या विद्वद्भिरिति मे मतिः । यया वृतः पुराणोऽपि स्थाणुः[9] सूतेऽमृतं फलम् ॥ ३ ॥ मृणालव्यालवलया वेणीबन्धकपर्दिनी । हरानुकारिणी पातु लीलया पार्वती जगत् ॥ ४ ॥ जन्मान्तरीणरमणस्या[11]ङ्गसङ्गसमुत्सुका । सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥ ५ ॥ तपस्वी[12] कां गतोऽवस्थामिति स्मेराननताविव । गिरिजायाः स्तनौ वन्दे भवभूतिसितानन[13]नौ ॥ ६ ॥ चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति । शंकरपर्यन्त-जितो वीरस्तम्भः स्मरस्येव ॥ ७ ॥ उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि । जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ ८ ॥ अङ्कनिलीनगजाननशङ्काकुलबा[14]हुलेयहृतवसनौ । सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ ९ ॥ कण्ठोचितोऽपि हुंकृतिमात्रनिरस्तः पदान्तिके पतितः । यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥ १० ॥ शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री । अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः[15] ॥ ११ ॥ तद्वः प्रमा[16]र्ष्टुविपदः प्रणतार्तिहन्त्र्या न्यस्तं पदं महिषमूर्धनि चण्डिकायाः । वैरी यदीयनखरांशुपरीतशृङ्गः शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत् ॥ १२ ॥ श्रुत्वा षडाननजनुर्मुदितान्तरेण पञ्चाननेन सहसा चतुराननाय । शार्दूलचर्म भुजगाभरणं सभस्म दत्तं निशम्य गिरिजाहसितं पुनातु ॥ १३ ॥ देवीं सुवर्णरुचिरां परिभाव्यमानभूषाविभाऽतिशयतां प्रकृतेर्दधानाम् । कामं द्विषन्तमपि कामवशं नयन्तीं स्मेराननां भगवतीं शिरसा नमामि ॥ १४ ॥ आनन्दमन्थरपुरंद[17]रमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य । पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरराजितमनोरममम्बिकाया[18]ः ॥ १५ ॥ ब्रह्मादयोऽपि यदपाङ्गतरङ्गभङ्ग्या सृष्टि-स्थितिप्रलयकारणतां व्रजन्ति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सततं हरवल्लभायै ॥ १६ ॥ ज्याकृष्टिबद्धखटिकामुखपाणिपृष्ठप्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः । त्वां पातु मञ्जरितपल्लवकर्णपूरलोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १७ ॥ प्रचण्डचण्डमुण्डयोर्महाबलैकखण्डिनी

---

१ यज्ञोपवीतम् । २ प्रसरणशीलम् । ३ प्रियकण्ठान्तर्गतस्य । पार्वतभवां, देवीं च । ५ अद्वितीयाम्, अनुपमामिति यावत् । ६ अपत्राम्, तपश्चर्याऽवसरे पत्रभोजनस्यापि त्यक्तत्वात्तथा-ख्यातां महादेवीं च । ७ त्रिशूलधरः शूलाऽऽख्यरोगशाली च । ८ मृत्युजेता, तदाख्यश्च स्वयं शूली भूत्वाऽपि मृत्युं जितवानिति वैशिष्ट्यदर्शनार्थमिदमुपादानम् । ९ तदाख्यैव देवी, पत्रशून्याऽपि लतैव च । १० शङ्करशुष्को वृक्षादिश्च । ११ पत्युः । १२ शङ्करः । १३ परिष्वङ्गेन भवस्य ( अङ्गलिप्तया ) भूत्या ( भस्मना छन्नत्वेन ) सितमाननं ( चूचुकरूपं मुखम् ) ययोस्तौ । १४ कार्तिकेयः । १५ सम्पत्कारणम् । १६ निवर्तयतु । १७ इन्द्रः । १८ जगदम्बाया पार्वत्या इति यावत् ।

ह्यनेकरुण्डमुण्डयुग्रणे[1] बलैकदायिनी[2] । कचित्त्वशक्तिकारिणी रमाविलासदायिनी मुदेऽस्तु कालिका सदा समस्तपापहारिणी ॥ १८ ॥ पुरारितनुहारिणी[3] दुरितसंघसंहारिणी भजन्मतिविवर्धिनी प्रबलदानवोन्मर्दिनी । तुषारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी कुमारमुखचुम्बिनी हरनितम्बिनी पातु वः॥ १९॥ सत्त्वादिस्थैरगणितगुणैर्हन्त विश्वं प्रसूय व्यक्तं धत्ते प्रहसनकरी या कुमारीति संज्ञाम् । मोहध्वान्तप्रसरविरतिर्विश्वमूर्तिः समन्तादाद्या शक्तिः स्फुरतु मम सा दीपवद्देहगेहे ॥ २० ॥ वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् । तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरीपरीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥ २१ ॥ औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ २२ ॥ आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता धूमोद्गमव्याजतः । पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु वः ॥ २३ ॥ प्रत्यासन्न[4]विवाहमङ्गलविधौ देवार्चनव्यग्रया दृष्ट्वाग्रे परिणेतु[5]रेव लिखितां गङ्गाधरस्याकृतिम् । उन्मादस्मितरोषलज्जितधिया गौर्या कथंचिच्चिराद्वृद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ २४ ॥ रामा[6]द्याचय मेदिनीं[7] धनपते[8]र्बीजं बला[9]ल्लाङ्गलं प्रेतेशा[10]न्महिषं तवास्ति वृषभः फालं[11] त्रिशूलं तव । शक्ताहं तव चान्नदानकरणे स्कन्दो[12]ऽस्ति गोरक्षणे खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ २५ ॥ हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् । नैतत्तेऽप्युचितं गजास्यचरितं नासां मिमीतेऽम्ब मे तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥ २६ ॥ मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमाः किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ । कृत्तिः किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते श्रुत्वा पुत्रवचोऽम्बिका स्मितमुखी लज्जावती पातु वः ॥ २७ ॥ धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः पश्यन्तीव समुत्सुका नतमुखी भूयो ह्रिया ब्रह्मणः । सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने हरे स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः ॥ २८ ॥ आस्ये पूर्णसुधानिधिश्चरणयोः कल्पद्रुमं वैभवं देहे काञ्चनकान्तता त्वचि पुनर्हैयङ्गवीनं स्वयम् । यस्या लोचनयोर्निरूपधि सदोदीतानुकम्पाततिः सा माता जगतां प्रसादपदवी साक्षान्मुदे स्तादुमा ॥ २९ ॥ गोनासाय[13] नियोजितागदरुजाः[14] सर्पाय बद्धौषधिः कण्ठस्थाय विषाय वीर्यमहतः[15] पाणौ मणीन्बिभ्रती । भर्तुर्भूतगणाय गोत्रजरती[16]निर्दिष्टमन्त्राक्षरा रक्षत्वद्रिसुता[17] विवाहसमये प्रीता[18] च भीता[19] च वः ॥ ३० ॥ स्वेदस्यन्दित[20]सान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमादूर्ध्वश्वासपरिस्खलत्स्मरकथं संदष्ट[21]दन्तच्छदम् । सीत्काराञ्चित[22]लोचनं सपुलकं भ्रान्तभ्रु[23] नृत्यत्करं पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः ॥ ३१ ॥ स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेर्भव । रोमाञ्चः[24] कथमेष

---

१ अनेकरुण्डमुण्डशालिनि सङ्गामे । २ बलस्यैकदायिनी । ३ पुरारेस्तन्वर्द्धभागे विराजमाना । ४ समीपवर्तीत्यर्थः । ५ वोढुः पत्युरिति यावत् । ६ परशुरामात् । ७ क्षेत्रभूमिम् । ८ कुबेरात् । ९ बलरामात् ।१० यमात् । ११ लाङ्गलमुखस्थो लोहविशेषः । १२ कार्त्तिकेयः । १३ गोनासो नाम भुजङ्गविशेषः तस्मै । १४ अगद इत्यौषधनाम । १५ अतिभयावहस्य । १६ कुले वृद्धा । १७ अद्रेर्हिमालयस्य सुता पार्वतीत्यर्थः । १८ तपसाऽभिमतवरप्राप्त्या प्रसन्ना । १९ स्त्रीस्वाभाव्यात् सर्पाद्याभरणस्य परिष्वङ्गभयाकुला । २० श्चोतित- । २१ चुम्बित- । २२ मीलित- । २३ भ्रान्तौ भ्रुवौ यत्र कर्म्मणि तत् । २४ रोमहर्षः ।

देवि भगवन्गङ्गाम्भसां सीकरैरित्थं भर्तरि भावगोपनपरा[1] गौरी चिरं पातु वः ॥ ३२ ॥ अभ्याकस्य रजः प्रमृज्य चरणे दत्तो मया यावको[2] निर्मृज्य स्तनकुड्मले च भसितं[3] पत्राङ्कुरो निर्मितः। स्वच्छन्दं विहरेति जल्पितगिरं साकूतमालीजनं दृष्ट्वा केवलमाघ्नती कुटिलया दाक्षायणी पातु वः ॥ ३३ ॥ वक्त्रं शीतकरोऽधरो घनरसैः कामप्रदो विग्रहः श्वासो गन्धवहः सरोरुहसुहृत्पाणिः स्मिताभा शुचिः। वक्षः पीनपयोधराधिकरणं पृथ्वी नितम्बस्थलीत्यष्टौ धूर्जटिमूर्तयः स्मरभयाद्दुर्गाश्रिताः पान्तु वः ॥ ३४ ॥ पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां शंभोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने। ह्रीमत्या शिरसीहितैः सपुलकस्वेदोद्गमोत्कम्पया विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ ३५ ॥ कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्। स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥ ३६ ॥ लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम्। पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥ ३७ ॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि। सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे, पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ३८ ॥ भिक्षुः[14] क्वास्ति बलेर्मखे पशुपतिः[15] किं नास्त्यसौ गोकुले[16] मुग्धे पन्नगभूषणः[17] सखि सदा शेते च तस्योपरि[18]। आर्ये मुञ्च विषादमाशु[19] कमले नाहं प्रकृत्या[20] चला[21] चेत्थं तां[22] कमलां[23] पराजितवती पायादुमा सर्वदा ॥ ३९ ॥ हे गङ्गाधरपत्नि चक्रिवधु[24] किं कुत्रास्त्यसौ[25] नर्तको वृन्दारण्यभुवि, क्व सर्पकुतुकी[26] स्यात्कालियस्य ह्रदे। भिक्षुः कुत्र गतोऽस्ति यज्ञसदने,[27] क्वासौ विषादी,बकीक्रोडे स्यादिति पद्मजाविजयिनो वाग्भङ्गयः पान्तु वः ॥ ४० ॥ वेणीबन्धकपर्दिनी सिततनुः श्रीखण्डपांशूत्करैः केतक्येकदलेन्दुभृद्विलसता व्यालोपवीतिन्यपि। प्राक्पाणिग्रहणाद्विनोदरभसा[29] सख्याः पुरो लीलया कुर्वाणानुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती ॥ ४१ ॥ यस्याङ्घ्रिद्वितयं नमन्ति विबुधाः स त्वेककः सर्ववित्तं मृत्युञ्जयमामनन्ति मुनयः सोऽप्यापि तीव्रव्रतः[30]। इत्याकर्ण्य कथां रहस्यपि यया पार्श्वे विवाहात्पुरा भङ्क्त्वाङ्गानि विजृम्भितं गिरिभुवो मोट्टायितं पातु वः ॥ ४२ ॥ दुर्गा दानवनाशिनी हरजटाश्रेणीव्ययोल्लासि[31]नी वीणाशङ्खकरालतोमरधरा मुण्डस्रजा शोभिता। रक्ताक्षीनतु रक्तबीजमथिनी भक्त्या सदानन्दिनी[32] पायात्सा परमेश्वरी

---

१ स्वकीयभाव-। २ लाक्षारसः। ३ भस्म। ४ जलम्। ५ देहः। ६ सूर्यः, कान्त्या समतया पाणेः सरोरुहेण सुहृत्त्वं च। ७ मन्दहासस्य कान्तिः। ८ अग्निः। ९ स्तन-मेघ-। १० स्थानम्। ११ वाञ्छितः। १२ रक्तोत्पल। १३ श्रेयसे। १४ संन्यासी शङ्करः, याचकश्च। १५ पशूनां ज्ञानिनां पतिः शङ्करः, गोपालकश्च। १६ नन्दव्रजे। १७ पन्नगा भूषणानि यस्य सः शिव इत्यर्थः। पन्नगानां भूषणः अलङ्कारभूतः शेषश्च। १८ पन्नगभूषणस्य शेषस्य। १९ हालाहलभक्षकम् क्लेशं च। २० स्वभावेन। २१ चपला लक्ष्म्याः सम्पद्रूपायाः स्थिरतयाऽदर्शनात् तथाभूता। २२ स्वातिशयेनाभिमानिनीम्। २३ लक्ष्मीम्। २४ सुदर्शनचक्रधरपत्नीति तु प्रतीयते। २५ तव दयितः। २६ सर्पस्पृही। २७ बलेर्यज्ञगृहे। २८ विषभक्षकः, दुःखितश्च। २९ विनोदे रभसोऽतिशयो यस्याः। ३० अखण्डब्रह्मचर्यः। ३१ तीव्रं मनसाऽपि ग्राम्यविषयचिन्तनविरहात् व्रतं यस्य तादृक्। ३२ विवाहात् परं गृहाश्रमे जटावर्धननिवृत्तेः। ३३ सतामानन्दिनी।

प्रतिदिनं कल्याणमुक्तिप्रदा ॥ ४३ ॥ संध्या रागवती, स्वभावकुटिला गङ्गा, द्विजिह्वः फणी, वक्राङ्गैर्मलिनः शशी, कपिमुखो नन्दी च, मूको वृषः । इत्थं दुर्जनसंकटे पतिगृहे वस्तव्यमेतत्कथं गौरीत्थं नृकपालपाणिकमला चिन्तान्विता पातु वः ॥ ४४ ॥ भिक्षार्थी स क यातः, सुतनु ! बलिमखे, ताण्डवं क्वाद्य भद्रे, मन्ये वृन्दावनान्ते, क नु स मृगशिशु-,नैव जाने वराहम् । बाले कच्चिन्न दृष्टो जरठवृषपति-,र्गोप एवास्य वेत्ता, लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥४५॥ दीप्तक्षुद्वेगयोगाद्वदनलहलहल्लम्बजिह्वाप्रलीढब्रह्माण्डक्षौद्रबिन्दुप्रबलतरभवज्जाठराग्निस्फुलिङ्गाम् । कालीं कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालां गुञ्जासंवादिनेत्रामजिननिवसनां नौमि पाशासिहस्ताम् ॥ ४६ ॥ उद्वाहारोपितार्द्रक्षतनिजपदयोः संगतामिन्दुमौलावानम्रे यां सुधांशोर्व्यधित किल कलां तूर्णमेवान्नपूर्णाम् । सक्तानामक्षतानाममृतदृगनलोपाधितः पक्वभावान्नानार्थैरन्नपूर्णा प्रणतजनततेः पूर्णतामातनोतु ॥ ४७ ॥ जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥ ४८ ॥ विद्राणे[1] रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे । वैकुण्ठे कुण्ठितास्त्रे[2] महिषमतिरुषं पौरुषोपघ्ननिघ्नं[3] निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा[4] भवानी ॥ ४९ ॥ वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डले स्वच्छभासिस्वच्छायां[5] साभ्यसूयां[6] त्वमियमिति मुहुः सत्यमाश्वासितापि । वामे मे दक्षिणेऽस्याः श्रवसि[7] कुवलयं[8] नाहमित्यालपन्ती दत्ताश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥ ५० ॥ या वाचः साधुतायास्त्रिभुवनभुवनस्याङ्गने संचरन्ती वामांसासक्तवीणाध्वनिगणाविलसन्मूर्छनानन्दपूर्णा । संतोषोल्लासिमौलिः स्फुरदमलमणिः स्वर्णताटङ्कभूषा[9] विभ्राजत्सुस्मितास्या भवतु भवमुदे[10] भव्यभाग्यम्भवानी[11] ॥ ५१ ॥ ज्योत्स्नासन्दोहरूपा प्रमुदितवदना प्रस्फुटत्कान्तिकान्ता[12] भक्तान्तःस्था पुरस्तान्नयनविषयतामानयन्ती स्वरूपम् । देवीभिः सेव्यमाना परभयहरणप्रेक्षणा प्रेक्षणीया कारुण्याधारभूता मम भवतु मुदे सर्वदा सा भवानी ॥ ५२ ॥ सिंहारूढैकपादा दशभुजविलसच्चापचर्मासिचक्रप्रोद्यत्पाशाङ्कुशालीदरवरविलसत्तर्जनीबाणरम्या । घ्नन्ती शूलेन वक्षस्यसुरमहिहरिग्रस्तहस्तं तु काञ्चीपीतक्षौमार्धचन्द्रा त्रिनयनललिता सा भवान्यस्तु सिद्ध्यै ॥ ५३ ॥ रामार्चिताङ्घ्रिरभिरामाकृतिः[13][14] कृतविरामा सुपर्वविपदां[15] कामार्तिहृत्सफलकामा[16] निदेशरतकामादिनिर्जरवधूः । भामा[17] हरस्य नुतभामा[18] जपासदृशभा माननीयचरिता सा मामवत्वखिलसामादृतस्तुतिरसामान्यमुक्तिसुखदा ॥ ५४ ॥ बालीयुतश्रवणपालीयुगा[20] ललितचूली[21]विराजिबकुला केलीगतानुगमरालीकुला मधुरमौलीभिरादृतकथा । नालीकदृक्[23]कुसुमनालीकपाणि[24]रिह कालीयशासिसहजा[25] तालीदलाभतनुमाली सदा भवतु काली शुभाय मम सा ॥ ५५ ॥

---

१ वृद्धेत्यर्थः । २ पलायिते । ३ पौरुषोपघ्ना बलिनस्तेषां निघ्न आयत्तस्तम् । ४ अतिशयितप्रभावा । ५ आत्मनः कान्तिम् । ६ सेर्ष्या । ७ श्रोत्रे । ८ कैरवम् । ९ कर्णाभरणेत्यर्थः । १० भवस्य शङ्करस्य संसारस्य ( लक्षणया तत्रत्यानां सर्वेषां प्राणिनाम् ) शरण्यत्वेन वा मुदे प्रमोदायेत्यर्थः । ११ भव्यस्य भाग्यं तद्रूपेत्यर्थः । भव्यं मङ्गलम् । भव्यभाग्येति पाठान्तरे तु भव्यं मङ्गलमयं भाग्यं यस्याः सा । १२ प्रस्फुरत्कान्तकान्तिरित्यपि पाठः । १३ परशुराम- । १४ रमणीय- । १५ दानवकृतदेवापदाम् । १६ सफलः कामो यस्याः सा । १७ भामिनी । १८ क्रोध- । १९ रक्तपुष्पविशेष- । २० केशगुच्छ- । २१ कर्णमूल- । २२ सखीभिः । २३ प्रकोपदृष्टि- । २४ कमल- । २५ कृष्ण- ।

## षण्मुखस्य स्तुतिः ।

शरण्यः सर्वदेवानां दनुवंशदवानलः । शक्तिमान् धृतिमाञ् शान्तः कार्त्तिकेयोऽस्तु मे गतिः ॥ ॥ १ ॥ विकसदमरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा वः संयमाधःकृतानि । न तु रुचिर-कलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥ २ ॥ आर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुकेरङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्य दन्ताङ्कुरान् । एकं त्रीणि च सप्त पञ्च षडिति प्रध्वस्तसंख्याक्रमा वाचः क्रौञ्चरिपोः शिशुत्वविकला श्रेयांसि पुष्णन्तु वः ॥ ३ ॥

## हरिस्तुतिः ।

श्यामिम्ना धवलिम्ना च यमुनाजाह्नवीप्रभाम् । तीर्थराजवदत्यग्रां दधती कापि देवता ॥ १ ॥ जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ । कामारिं कामतातं वा कंचिद्देवं भजामहे ॥ २ ॥ अबलार्द्धय[1]-विग्रहश्रीरमर्त्य[2]नेतिरक्षमाल[3]योपेतः । पञ्च[4]क्रमोदितमुखः पायात्परमेश्वरो[5] मुहुरनादिः[6] ॥ ३ ॥ पन्नगधारि[7]कराग्रो गङ्गो[8]पालक्षितोऽङ्गदो[9]ग्रभुजः । शशिखण्ड[10]शेखर उमापरिग्रहो[11] मुहुरनादि[12]रवतु त्वाम् ॥ ४ ॥ गवीशपत्रो[13] नगजार्तिहारी[14] कुमारतातः[15] शशिखण्डमौलिः[16] । लङ्केश[17]संपूजितपादपद्मः पायादनादिः[18] परमेश्वरो[19] नः ॥ ५ ॥ पायात्कुमारजनका[20]ख्य उमाविलासः[21] शङ्खप्रभश्च[22] निधनेश[23]गवीशयानः[24] । गङ्गां[25] च पन्नगधरश्च[26] पिनाक[27]सक्त आद्याक्षरेण सहितो रहितोऽथवा त्वाम् ॥ ६ ॥ स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्तद-वतु वपुरेकं कामकंसद्विषोर्वः । भवति गिरिसुतायाः सार्धमम्भोधिपुत्र्या, सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ ७ ॥ संप्राप्तं मकरध्वजेन[28] मथनं[29] त्वत्तो मदर्थे पुरस्तद्युक्तं बहुमार्गगां[30] मम पुरो निर्लज्ज वोढुस्तव । तामेवा[31]नुनय स्वभावकुटिलां[32] हे कृष्णकण्ठग्रहं[33] मुञ्चेत्याह रुषा यमद्रि-

---

१ पार्वत्युपेत-। पक्षान्तरे पराक्रमपूर्ण--। २ देव-पक्षान्तरे-मर्त्यलोक-। ३ रुद्राक्षमालया, पक्षान्तरे पृथिवीरूपाश्रय-। ४ पञ्चानन-। पक्षान्तरे चक्रेण मोदितत्यर्थः । ५ महेश्वरः । पक्षान्तरे रमेश्वरः । ६ अजन्मा । पक्षान्तरेऽबलादीनां पदानामकारादिरूपाद्याक्षरहीनतया वर्णितश्च । ७ सर्पभूषण-। पक्षान्तरे नग ( गोवर्धनगिरि ) धारि-। ८ भागीरथ्या-। पक्षान्तरे गोपैरिति--। ९ बाहुभूषण-। पक्षान्तरे-गदा-। १० चन्द्रकला-। मयूरपिच्छ-। ११ पार्वतीपरिवारः । मा ( लक्ष्मी ) परिवारश्च । १२ अजन्मा । आदिः-आदिवर्णः, यस्य । ( निर्देशे ) तादृक् । १३ वृषभेश्वरवाहनः । पक्षिराजवाहनश्च, वीनां पक्षिणामीश-। १४ नगजातायाः पार्वत्याः गजस्य च याऽऽर्त्तिः। १५ स्कन्दपिता च कामदेवपिता च। १६ चन्द्रशकलशेखरः, शिखण्डकृतशिरोभूषणश्च। १७ रावणार्चितः को ब्रह्मा, ईशः-शङ्करः, ताभ्यां सम्पूजितः। १८ अजन्मा । नादिवर्णो यस्य । १९ महेश्वरः । रमेश्वरः । २० स्कन्द-। मदन-। २१ पार्वतीविलासी, लक्ष्मीविलासी च । २२ श्वेतत्वेन शङ्खोपमः । सर्वव्यापितया निराकारतया चाकाशतुल्यो वा । २३ यम-। कुबेर-। २४ गोपति-( वृष-) वि-( पक्षि-)राज-( गरुड-) २५ भागीरथीम् । गाम्-धेनुम् । अस्य पदस्य केनान्वय इति चिन्त्यम् । दधाति इति शेष इति चेद्युज्यते । २६ सर्पधारी । गिरिधारी च । २७ पिनाको धनुर्विशेषः नाकः—स्वर्गश्च। २८ कामदेवेन । समुद्रेण च । २९ विनाशः । विलोडनं च । ३० त्रिपथगाम् । वेश्यां, कुब्जामिति यावच्च । ३१ तामेव गङ्गाम् कुब्जां च । ३२ अनुनयेति अनुनयस्वेति वा, तथा-स्वभावकुटिलामिति, भावकुटिलामिति वा पदच्छेदः। ३३ हे कृष्ण-( नील ) कण्ठ, ग्रहम्-आश्लेषमिति, हे कृष्ण ! कण्ठस्य ग्रह आश्लेषस्तमिति च ।

तनया लक्ष्मीश्च पायात्स वः ॥ ८ ॥ तौ तौ शङ्खकपालभूषितकरौ मालास्थिमालाधरौ देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ । द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ पापं वो हरतां सदा हरिहरौ श्रीवत्सगङ्गाधरौ ॥ ९ ॥ लोले ब्रूहि, कपालिकामिनि पिता कस्ते पतिः पाथसां, कः प्रत्येति जलादपत्यजननं प्रत्येति यः प्रस्तरात् । इत्थं पर्वतसिन्धुराजसुतयोराकर्ण्य वाक्चातुरीं संस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तु वः ॥ १० ॥ यस्मादासीत्कुमारः कुवलयदलवल्लीलयोवाह गङ्गां वामा यस्याङ्गसङ्गा पिहितजनचयो यो गवीशध्वजोऽपि । लोकेशायैकनाथो हिमकररुचिभृद्व्विशेषाश्रमोऽसौ वर्णस्याद्यस्य लोपादपहरतु हरिः पातकं वः स्मरारिः ॥ ११ ॥

## त्रिमूर्तिस्तुतिः ।

श्यामश्वेतासितत्वाढ्या प्रणतार्तिनिवारिणी । संसारोत्तारणे दक्षा मुदे देवत्रयी भवेत् ॥ १ ॥ नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने । गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ २ ॥ नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते । अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥ ३ ॥ रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ ४ ॥ श्यामश्वेतारुणाङ्गा जलधरणिधरोत्फुल्लपङ्केरुहस्था मोमांसाविद्युपेता रथचरणपिनाकोग्रहुंकारशस्त्राः । देवा द्वित्र्यष्टनेत्रा जगदवनसमुच्छेदनोत्पत्तिदक्षाः प्रीता वः पान्तु नित्यं हरिहरविधयस्तार्क्ष्यगोहंसपत्राः ॥ ५ ॥

## गणेशकुमारस्तुतिः ।

दत्तस्तन्यरसं कराग्रिमभुवा वक्रान्तरे स्वादराद् दोर्विक्षेपनिविद्धकुम्भविचरन्मत्तद्विरेफोत्करम् । अम्बायाः पिबतोः पयोधरयुगं तिर्यङ् मिथः पश्यतोर्बाल्यस्नेहविजृम्भितं विजयते द्वैमातुरस्कन्दयोः ॥ ॥ १ ॥ पित्रोरुत्सङ्गसंस्थौ विबुधगणनुतौ विघ्न-दैत्यार्त्तिनिघ्नौ स्वे स्वे पार्श्वे च कन्दुं शिखिनमभिरुचि प्रेक्षमाणौ प्रहृष्टौ बिभ्राणौ पाणिपद्मैः कमलमथ गदामङ्कुशादिं च चञ्चत्केशौ स्निग्धौ सुभूषावविरतमवतां कौचनैशौ कुमारौ ॥ २ ॥

## विष्णुस्तुतिः ।

शरणं भवभीतानां भक्तभव्यार्थभावुकः । भाव्यमानः सुरैरन्तर्विष्णुर्भवतु भूतये ॥ १ ॥ आदिमध्यान्तरहितं देशाहीनं पुरातनम् । अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥ २ ॥ जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् । मध्ये पयःपयोधेरपर इवाम्भोनिधिः कृष्णः ॥ ॥ ३ ॥ अतिकरुणं निजशरणं प्रार्थयमानं निरस्तहृन्मानम् । स्मावति बाहोपेक्षायानो यः श्रेयसे स हरिः ॥४॥अतिविपुलं कुचयुगलं रहसि करैरामृशन्मुहुर्लक्ष्म्याः । तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ॥ ५ ॥ जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीजः । दामोदरो निजोदरगह्वरनिर्विष्टजगदण्डः ॥ ६ ॥ श्रीकरपिहितं चक्षुः सुखयतु वः पुण्डरीकनयनस्य । जघनमिवे-

---

१ सुन्दरी । लक्ष्मीश्च । २ चन्द्र- । यादोविशेष- । ३ मा-लक्ष्मीः, उमा पार्वती च । ४ चक्र- । ५ प्रान्तभागहीनम् । सम्भूतिवृद्धिह्रासकारणभूतसमयविशेषहीनं च । ६ लक्ष्मी- । ७ रमणे नग्नतया त्रपावशादिति शेषः ।

क्षितुं[1]मागतं[2]मञ्जनिभं[3] नाभिसुषिरेण[4] ॥ ७ ॥ श्यामं श्रीकुचकुङ्कुमपिञ्जरितमुरो मुरद्विषो जयति । दिनमुखनभे[5] इव कौस्तुभविभाकरो[6] यद्विभूषयति ॥ ८ ॥ प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः । पुरुषायित[7]मभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुर[8]मिव ॥ ९ ॥ केलिचलाङ्गुलिलम्भितं[9]-लक्ष्मीनाभिर्मुरद्विषश्चरणः । स जयति येन कृता श्रीरनुरूपां[10] पद्मनाभस्य ॥ १० ॥ रोमावली मुरारेः श्रीवत्सनिवेशिताग्रभागा वः । उन्नालनाभिनलिनं[11]च्छायेवोत्तापं[12]मपहरतु ॥ ११ ॥ कमलाकुचकनका-चलजलधरमाभीरसुन्दरीमदनम् । अधिगतशेषफणावलिकमलवनभृङ्गमच्युतं वन्दे ॥ १२ ॥ जीया-दम्बुधितनयाधररसमास्वादयन्मुरारिरयम् । अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च ॥ ॥ १३ ॥ श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीक[13]द्युतिमातनोति । नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्य भगवान्मुकुन्दः ॥ १४ ॥ वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुड-ध्वजस्य । श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव[14] ॥ १५ ॥ वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः । तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥ १६ ॥ जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया । दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ १७ ॥ पद्मापयोधरतटीपरिरम्भलग्नकाश्मी-रमुद्रितमुरो मधुसूदनस्य । व्यक्तानुरागमिव खेलं[15]दनङ्ग[16]खेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ ॥ १८ ॥ श्रेयः सदा दिशतु सालसपक्ष्मपाते निद्रायिते अपि दृशौ भृशमुन्नमय्य । संवाह्यमानचरणा-म्बुजजातहर्षो लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥ १९ ॥ उद्घाटय योगकलया[17] हृदयाब्ज[18]कोशं धन्यैश्चि-रादपि यथारुचि गृह्यमाणः । यः प्रस्फुरत्यविरतं परिपूर्णरूपः श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः[19] ॥ २० ॥ सकलभुवनबन्धोः कैरवेन्दोः सरोजैरनुचितमिति मत्वा यः स्वपादारविन्दम् । घटयितु-मिव मायी योजयत्याननेन्दौ वटदल[20]पुटशायी मङ्गलं वः कृषीष्ट ॥ २१ ॥ कचकुचचुबुकाग्रे पाणिषु व्यापृतेषु प्रथमजलधिपुत्रीसंगमेऽनङ्गधाम्नि । ग्रथितनिबिडनीवीबन्धनिर्मोक्षणार्थं चतुरधिककराशः पातु वश्चक्रपाणिः ॥ २२ ॥ विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मभूः । किमधिकरणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥ २३ ॥ लक्ष्मीपाणिद्वयविरचितं मूलमूर्ध्वं श्रुतीनां व्यक्तं वन्दे चरणकमलद्वन्द्वमाद्यस्य पुंसः । यत्रैकस्य व्यधित बलिना पाद्यतोयैर्वितीर्णैरार्द्रस्यैव प्रणतितरलः क्षालनं पद्मयोनिः ॥ २४ ॥ अनादृत-चमूपतिप्रहितहस्तमस्वीकृतप्रणीतमणिपादुकं किमिति विस्मितान्तःपुरम् । अवाहनपरिक्रियं पतगराजमा-रोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः ॥ २५ ॥ दृक्पातः कमलासने[21]ऽस्तु, भवतु ज्ञानं

---

१ (परिहितवसनम्) जघनम् (कर्म्म ईक्षितुमिवेत्यन्वयः । २ प्राप्तम् । ३ कमलस-दृशम् । ४ नाभिरन्ध्रेण । ५ दिनस्य मुखम् आरम्भः, प्रभातकालः एव नभ आकाशम् । तदानीन्तनं ह्याकाशं प्रकृत्या नीलम् भवतीति तयोः सादृश्यम्, यद्वा रूपणमिदम् । ६ कौस्तुभ एव विभाकरः, यद्वा कौस्तुभो विभाकर इवेति । ७ विपरीतं रमणम् । ८ आदर्शम् । ९ स्पृष्ट- । १० सदृशी । ११ कमल-- । १२ सन्तापम् । १३ भ्रमर-- । १४ निकषोपलइव । १५ क्रीडत्- । १६ कन्दर्प-- । १७ योगरूपया विद्यया । पक्षान्तरे तु 'चाभी' इति प्रसिद्धेन यन्त्रोद्घाटकपदार्थेन । १८ हृदयरूपं कमलम् । उद्घाटयस्याभ्य-न्तरभागं च । १९ भगवान् । तदाख्यः कोशविशेषश्च । २० प्रलयदृश्यं दर्शयता भगवता वटपत्रोपरि शयनं कृतमितीति वृत्तम् । २१ विधातरि, कमलरूप आसने च ।

मनाङ्[1]मारु[2]ते श्रीकण्ठो[3]ऽयमितः सुरानिति नतांस्तार्क्ष्येण विज्ञापितः । प्रेयस्याः क तदासनं क च रुतं कण्ठः क चेत्युल्लसल्लक्ष्म्यावासितमानसो विजयते सुप्तप्रबुद्धो हरिः ॥ २६ ॥ निर्मग्नेन मयाम्भसि स्मरभरादालिः समालिङ्गिता केनालीक[4]मिदं तवाद्य कथितं राधे मुधा ताम्यसि । इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वचः शार्ङ्गिणः सव्याजं शिथिलीकृतः कमलया[6] कण्ठग्रहः पातु वः ॥ २७ ॥ नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भोः सुरा रक्षन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः । मा भैषीरिति तस्य नक्रहनने चक्रायुधः श्रीधरो विश्वत्राणपरायणो विजयते नाथः स नारायणः ॥ २८ ॥ यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः । अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥२९ ॥ येनोत्थाप्य समूलमन्दरगिरिश्छत्रीकृतो गोकुले राहुर्येन महाबलो सुररिपुः कार्यादशेषीकृतः । कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया सोऽयं पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ ॥ ३० ॥ मुग्धे मुञ्च विषादमत्र बलभित्कम्पो गुरुस्त्यज्यतां सद्भावं[10] भज पुण्डरीकनयने[11] मान्यानिमान्मानय । इत्थं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छलादन्यत्र प्रतिषेधमात्मनि विधिं शृण्वन् हरिः पातु वः ॥ ३१ ॥ नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णनप्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेदु द्युतिः । सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः सोत्प्रासप्रणयं सरोजवसतिं पश्यन्हरिः पातु वः ॥ ३२ ॥ निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः[12] [13]कोकप्रीतिचकोरपारणपटू ज्योतिष्मती[14] लोचने । याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥ ३३ ॥ भक्तिप्रह्व[15]विलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये । लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे[16] तनुर्वा हरेः ॥ ३४ ॥ चत्वारः प्रथयन्तु विद्रुमलता[17]रक्ताङ्गुलिश्रेणयः श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः । भालेष्वब्जभुवो[18] लिखन्ति युगपद्ये[19] पुण्यवर्णावलीः कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ ३५ ॥ लक्ष्मीलालितपादपङ्कजयुगं भोगीन्द्रभोगासनं क्षीरोदार्णवबिन्दुभिः परिवृतं कारुण्यकल्पैः सदा । नाभ्युद्भूतकुशेशया[20]न्तरखिलस्रष्टारमुद्भाव्य नि—र्व्याजं नन्दितविश्वमाद्यमनवं वन्दे मुकुन्दं प्रभुम् ॥ ३६ ॥ आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरीधीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः । लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथादायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ ३७ ॥ भ्राम्यन्मन्दरकन्दरोदरदरीव्यावृत्तिभिर्वारिधेः कल्लोलैरलमाकुलं कलयतो लक्ष्म्या मुखाम्भोरुहम् । औत्सुक्यात्तरलैः[21] स्मराद्विकसिता भीत्या[22] समाकुञ्चिताः क्रोधेन ज्वलिता

---

१ ईषत्। २ मारुते, लक्ष्म्या रुते च । ३ शङ्करः लक्ष्म्याः कण्ठश्च लक्ष्मीरिति भावः । ४ मृषा । ५ उद्विजसे । ६ लक्ष्म्या । ७ उद्वेगम् शङ्करं च । ८ बलं शत्रुसैन्यं तदाख्यं दैत्यं च भिनत्तीति । ९ अतिशयितः । देवाचार्यश्च । १० शोभनचित्तवृत्तिम् । ११ कमलनयने । भगवति च । १२ कौमोदक्या नित्यं धारणकृत्त्वेन लक्ष्मरूपत्वम् । १३ कोकयोः संयोगः सूर्योदये, चकोरश्च चन्द्रिकापानेन तृप्यतीति यथोक्तम् । १४ सूर्यचन्द्ररूपे इत्यर्थः। १५ नम्रेत्यर्थः । १६ प्रणयिन्यादिपदानां द्विवचनान्तत्वे स्त्रीलिङ्गत्वे च समानं रूपमिति 'नेत्रे' इत्यनेन योजने द्विवचनान्तानि 'प्रणयिनी' इत्यादीनि 'कुरुताम्' इति च, 'तनुः' इत्यनेन योजने तान्येवैकवचनान्तानि । १७ शोणिमातिशयसम्भावनायालीनां विद्रुमलतासदृशरक्तत्वमुक्तम् । एवमेव पुरस्तादपि । १८ अब्जभुवो ब्रह्मणः । १९ युगपदेकस्मिन्नेव समये । २० पद्मान्तः २१ चपलाः । २२ भयेन ।

मुदा मुकुलिताः शौरेर्दृशः पान्तु वः ॥ ३८ ॥ पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे संक्रान्तप्रतिबिम्बसंवलनया बिभ्रद्वपुर्विक्रियाम् । पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः ॥ ३९ ॥ प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणामात्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः । नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ ४० ॥ श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलोललीलाब्जान्निःसरन्ती मधुरमधुझरी नाभिपद्मे मुरारेः । अस्तोकं लोकमात्रा द्विगुणमुखशिशोराननेष्वर्प्यमाणं शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥ ४१ ॥ आश्रित्य नूनममृतद्युतयः पदं ते देहक्षयोपनतदिव्यपदाभिमुख्याः । लावण्यपुण्यनिचयं सुहृदि त्वदास्ये विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः ॥४२॥ नाथ त्वदङ्घ्रिनखधावनतोयलग्नास्तत्कान्तिलेशकणिका जलधिं प्रविष्टाः । ता एव तस्य मथनेन घनीभवन्त्यो नूनं समुद्रनवनीतपदं प्रपन्नाः ॥४३॥ तापत्रयौषधवरस्य तव स्मितस्य निःश्वासमन्दमरुता निबुसीकृतस्य । एते कडङ्करचया इव विप्रकीर्णा जैवातृकस्य किरणा जगति भ्रमन्ति ॥४४॥ मोहं जगत्त्रयभुवामपनेतुमेतदादाय रूपमखिलेश्वरदेहभाजाम् । निःसीमकान्तिरसनीरधिनाऽमुनैव मोहं प्रवर्धयसि मुग्धविलासिनीनाम् ॥४५॥ भानुर्निशासु भवदङ्घ्रिमयूखशोभालोभात् प्रताप्य किरणोत्करमाप्रभातम् । तत्रोद्धृते हुतवहात् क्षणलुप्तरागे तापं भजत्यनुदिनं स हि मन्दतापः ॥४६॥ त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्राभङ्गात्ततत्सुषममित्रकरोपक्लृप्त्या । लब्ध्वाऽपि पर्वणि विधुः क्रमहीयमानः शंसत्यनीत्युपचितां श्रियमाशुनाशाम् ॥४७॥ नामैव ते वरद वाञ्छितदातृभावं व्याख्यास्यतो न वहसे वरदानमुद्राम् । विश्वप्रसिद्धतरविप्रकुलप्रसूतेर्यज्ञोपवीतवहनं हि न खल्वपेक्ष्यम् ॥४८॥ किंचिन्निर्मुच्यमाने गगन इव मुखे शाटयनिद्रापयोदैर्न्यक्कुर्वाणे स्वभासा फणिपतिशिरसां रत्नदीपांशुजालम् । पायास्तां वो मुरारेः शशितपनमये लोचने यद्विभासा लक्ष्म्या हस्तस्थमर्धं विकसति कमलस्यार्धमभ्येति निद्राम् ॥ ४९ ॥ एकस्थं जीवितेशे त्वयि सकलजगत्सारमालोकयामः श्यामे चक्षुस्तवास्मिन्वपुषि निविशते नाल्पपुण्यस्य पुंसः । कस्यान्यत्रामृतेऽस्मिन्नतिरतिविपुला दृष्टिरेवामृतं ते दैत्यैरित्युच्यमानो मुनिभिरपि हरिः स्त्रैणरूपोऽवताद्वः ॥ ५० ॥ यस्योद्यद्बाणबाहुद्रुमगहनवनच्छेदगोष्ठीकुठारं चक्रं निष्क्रान्ततीव्रानलबहलकणाकीर्णधारं विचिन्त्य । जातग्रासावसायो दिवसकृतिलसन्मांसलांशुप्रवाहे मुह्यत्यद्यापि राहुः स दहतु दुरितान्याशु दैत्यान्तको वः ॥ ५१ ॥

## शङ्खस्तुतिः ।

भिन्दन्नरातिहृदयानि हरेः पुनातु निःश्वासवातमुखरीकृतकोटरो वः । संक्रान्तकुक्षिकुहरास्पदसप्तसिन्धुसंवद्धघोरतरघोष इवाशु शङ्खः ॥ १ ॥ पायासु वः कुमुदकुन्दमृणालगौरः शङ्खो हरेः करतलाम्बरपूर्णचन्द्रः । नादेन यस्य सुरशत्रुविलासिनीनां कान्त्यो भवन्ति शिथिला जघनस्थलीषु ॥ २ ॥

---

१ विष्णोः । २ शरीरसमुदायम् । ३ चेष्टाविशेष-इत्यर्थः । ४ नवीनोन्मीलनकपटा । ५ असम्मुखी । ६ प्रवृद्धैः । ७ शेषक्रोडम् । ८ अतिशयितम् । ९ फणामण्डलमेवेति भावः । १० किञ्चित्संकुचिता । ११ अनल्पम् । १२ विधातुः ।

## चक्रस्तुतिः ।

दृष्टस्य यस्य हरिणा रणमूर्ध्नि मूर्तिरुद्भूतदुःसहमहःप्रसरा समन्तात् । तल्लोचनस्थितरविप्रतिबिम्बगर्भेवाभाति चक्रमरिचक्रनुदेऽस्तु तद्वः ॥ १ ॥ उद्वृत्तदैत्यपृतनापतिकण्ठपीठच्छेदोच्छलद्बहलशोणितशोणधारम् । चक्रं क्रियादभिमतानि हरेरुदारदिग्दाहदारुणनभःश्रियमुद्वहद्वः ॥ २ ॥

## गरुडस्तुतिः ।

सौवर्णाङ्कितपर्णमारुतहताहिव्रातकान्ताकुचस्फूर्जन्मौक्तिकभूषणः खगपतिः पूर्णेन्दुबिम्बाननः । पद्माधीश्वरपादपद्मयुगलस्पर्शामलाङ्गानतः पायाद्वो विनतासुतो हरिकृपालोकैकपात्रीकृतः ॥ १ ॥

## शेषस्तुतिः ।

ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि । स्फारे यत्फणचक्रे धरा शरावश्रियं वहति ॥ १ ॥ अविरतमक्रममुद्धृतधरातलं सुस्मितोल्लसद्वदनम् । जगदानन्दविधायिनमुपैमि शरणं प्रभुं शेषम् ॥ २ ॥ अशेषशेषेऽपि न यस्य शेषो योऽशेषमूर्तिश्च सदैकरूपः । विश्वम्भरस्यापि समाश्रयोऽद्धा स दीनबन्धुः प्रमुदेऽस्तु शेषः ॥ ३ ॥

## लक्ष्मीस्तुतिः ।

अशेषभुवनामोदमादधानां शुचिस्मिताम् । करुणामधुराकारां लक्ष्मीं देवीमुपास्महे ॥ १ ॥ जयन्ति जगतां मातुः स्तनकुङ्कुमबिन्दवः । मुकुन्दाश्लेषसंक्रान्तकौस्तुभश्रीविडम्बिनः ॥ २ ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः । यत्र संक्रान्तबिम्बेन हरिणा हरिणायितम्[1] ॥ ३ ॥ देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम् । जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ ४ ॥ तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति । फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ ५ ॥ स्मेराननेन हरिणा सस्पृहमाकारवेदिनाभिमतम् । जयति पुरुषायितायाः[2] कमलायाः[3] किञ्चन ध्यानम्[4] ॥ ६ ॥ [कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः । नुतपदकमलो[5] कमला[6] करधृतकमला करोतु मे कमलम् ]॥ ७ ॥ किञ्जल्कराजिरिव नीलसरोजलग्ना लेखेव काञ्चनमयी निकषोपलस्था । सौदामनी जलदमण्डलगामिनीव पायादुरःस्थलगता कमला मुरारेः ॥ ८ ॥ दन्तैः कोरकिता स्मितैर्विकसिता भ्रूविभ्रमैः पत्रिता दोर्भ्यां पल्लविता नखैः कुसुमिता लीलाभिरुद्वेलिता । उत्तुङ्गस्तनमण्डलेन फलिता भक्ताभिलाषे हिता काचित्कल्पलता सुरासुरनुता पायात्सुधाब्धेः सुता ॥ ९ ॥ उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारिद्युति । लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ १० ॥ आख्याते हसितं पितामह इति त्रस्तं कपालीति च व्यावृत्तं गुरुरित्ययं दहन इत्याविष्कृता भीरुता । पौलोमीपतिरित्यसूयितमथ व्रीडाविनम्रश्रिया पायाद्वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥ ११ ॥ क्रीडाभिन्नहिरण्यशुक्तिकुहरे रक्तात्मनावस्थितान् हारं हारमुदारकुङ्कुमरसान्व्याजभव्यान्नखैः । वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावलीस्तत्कालोचितभावबन्धमधुरं मन्दस्मितं पातु वः ॥ १२ ॥ पद्मायाः स्तनहेमसद्मनि

---

१ मृगायितम् । २ विपरीतरमणपरायाः । ३ कमलायाः लक्ष्म्याः । ४ कैटभध्यानमिति पाठान्तरे तु कैटभमर्दनावस्थाकं ध्यानमित्यर्थः । ५ नुतं स्तुतं पदरूपं कमलं यस्या इति, नुतं पदं कमलमिव यस्या इति वा । ६ कमला लक्ष्मीः ।

मणिश्रेणीसमाकर्षके किंचित्कञ्चुकसंधिसन्निधिगते शौरेः करे तस्करे । सद्यो जागृहि जागृहीति वलयध्वानैर्ध्रुवं गर्जता कामेन प्रतिबोधिताः प्रहरिका रोमाङ्कुराः पान्तु वः ॥ १३ ॥ याद्वज्जानासि जाम्बूनदगिरिशिखरे कान्तिरिन्दोः कलानामित्यौत्सुक्येन पत्यौ स्मितमधुरमुखाम्भोरुहं भूषमाणे । लीलादोलायमानश्रुतिकमलमिलद्भृङ्गसंगीतसाक्षी पायादम्भोधिजायाः कुसुमशरकलानाटयनान्दीनकारः ॥ १४ ॥ उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीणिता शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १५ ॥ लोकेषु लोकोत्तरतानिधाननिदानभूता विभवाधिदेवी । मन्दाररूपा नमतां जनानां न कस्य वन्द्या विबुधस्य लक्ष्मीः ॥ १६ ॥ मनाक् प्रपन्नेऽपि कृपाकटाक्षे यस्याः कृतार्थाः सकलाश्रिराय । सा निर्मलाऽऽसेचनकस्वरूपा पायादपायात् कमलासना माम् ॥ १७ ॥[ पयोधिसम्भूततया समन्ताद् दुग्धस्य बिन्दूनिव गात्रलग्नान् । लावण्यसन्तानमिषेण विष्वग्विभावयन्ती भवताद् विभूत्यै ]। १८ ॥ हिरण्यकान्ताऽपि निजस्मिताभावितानसम्बन्धमुपेत्य शुभ्रा । अवद्यजातं निपुणा निहन्तुं सदा शरण्याऽस्तु महेश्वरी सा ॥१९॥ स्वपादपीठं विनमत्सु सत्सु स्मितच्छलेन श्रियमादधाना । पद्मासना पद्मभवादिवन्द्या मे शरण्या विभवाय पद्मा ॥ २० ॥ राजाधिराजस्य सखाऽपि नग्नोऽनुपेत्य यां भ्राम्यति भिक्षामाणः । उपेतवान् हन्त जनार्दनोऽपि शेतेऽस्तचिन्तं मम सा श्रिये श्रीः ॥ २१ ॥ दरिद्रतोन्मूलनकर्म्मदक्षा प्रत्यक्षसिद्धेश्वरतानिदानम् । सम्पद्विधात्री करुणानिधात्री धात्रीव सा सौख्यपदस्य दात्री ॥२२॥ सहोदरत्वं प्रतिपद्य यस्याः स्फुरत्कलङ्कोऽपि मतो द्विजेशः । समस्तसाद्गुण्यविधानदक्षा सदा शरण्या मम सास्तु लक्ष्मीः ॥ २३ ॥

## समुद्रस्तुतिः ।

आयान्ति यत्र निवसन्ति चिराय चेष्टं निर्यान्ति चैवममिताः सरितो यतोऽमी । देवैर्हृतेषु बहुलेषु मणिष्वपीभ्यो[1] यः पूर्ववत्स जयतादमृतैकभूमिः[2] ॥ १ ॥ वत्से मा गा विषादं[3] श्वसनमुरुजवं[4] संत्यजोर्ध्वप्रवृत्तं कम्पः[5] को वा गुरुस्ते[6] किमिह बलभिदा[7] जृम्भितैर्नात्र[8] याहि । प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना[9] कारयित्वा योऽसौ लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः[10] पयोधिः ॥ २ ॥

## ब्रह्मस्तुतिः ।

तं वन्दे पद्मसद्मानमुपवीतच्छटाच्छलात्[11] । गङ्गास्रोतस्त्रयेणैव यः सदैव निषेव्यते ॥ १ ॥ कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः । घोरितविततालिरुतो नाभिसरोजे विधिर्जयति ॥ ॥ २ ॥ सृजति कमलसंस्थो दृश्यमात्र सदा यो निखिलनिगमतत्त्वज्ञानिनां च प्रधानम् । अपरिहतसमाधिं सत्यसङ्कल्पमेतं परिविमलचरित्रं तं नुवे हंसवाहम् ॥ ३ ॥

---

१ इभ्यः-आढ्यः रत्नाकर इतियावत् । २ अमृतस्य सुधाया जलस्य चाद्वितीयाधाररूप इति भावः । ३ पीडाम् शङ्करं च । ४ श्वसितम् वायुं च प्रबलवेगम् । ५ कं-जलं, लक्षणया तत्स्थानं पाति-रक्षतीति जलाधिपो वरुणः, कम्पश्च कम्पनं च । ६ बृहत् । सुराचार्यश्च । ७ शरीरबलस्य बलाख्यस्य च दैत्यस्य विनाशकेन । ८ भगवदन्तिके । ९ त्रासनिवर्त्तनच्छलेन । १० मुग्धः सुन्दरः । ११ भगवन्नाभ्युद्भवं पद्ममेव सद्म यस्य तम् ।

## दशावतारस्तुतिः ।

वेदानुद्धरते जगन्ति वहते, भूलोकमुद्बिभ्रते, दैत्यं[1] दारयते, बलिं छलयते, क्षत्रक्षयं[2] कुर्वते । पौलस्त्यं[3] जयते, हलं कलयते[4], कारुण्यमातन्वते, म्लेच्छान्मूर्छयते, दशाकृतिकृते, कृष्णाय तुभ्यं नमः[5] ॥ १ ॥ यस्यालीयत शल्कसीम्नि[6] जलधिः, पृष्ठे[7], जगन्मण्डलं, दंष्ट्रायां धरणी, नखे दितिसुताधीशः पदे रोदसी । क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो ध्याने विश्वमसा[8]वधार्मिककुलं कस्मैचिदस्मै नमः ॥ २ ॥ पाठीनः[9] कमठः किटि[10] र्नरहरिः खर्वाकृतिर्भार्गवो रामः कंसनिषूदनो दशबलः[11] कल्की च नारायणः । युष्माकं स विभूतयेऽस्तु भगवान्सेतुर्भवाम्भोनिधावुत्ताराय युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ ३ ॥ वेदा येन समुद्धृता वसुमती पृष्ठे धृताप्युद्धृता दैत्येशो नखरैर्हतः फणिपतेर्लोकं बलिः प्रापितः । क्ष्माऽक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी हिंसा दोषवती धराप्ययवना पायात्स नारायणः ॥ ४ ॥ वेदोद्धारकृते गिरिं धृतवते पृथ्वीतलोद्धारिणे दैत्योरःस्थलदारकाय ददते त्रैलोक्यराज्यं सुरान् । राजन्यान्वयशत्रवे हतवते रक्षोऽर्कजां कर्षते कारुण्यं दधते कृतं भृतवते भूयो नमः शार्ङ्गिणे ॥ ५ ॥

## मत्स्यस्तुतिः ।

मग्ने मेरौ पतति तपने तोयबिन्दाविवेन्दावन्तर्लीने जलधिसलिले व्याकुले देवलोके । मात्स्यं रूपं मुखपुटतटाकृष्टनिर्मुक्तवार्धि श्रीकान्तस्य स्थलजलगतं वेत्यलक्ष्यं पुनातु ॥ १ ॥ वियत्पुच्छातुच्छो[12]च्छलितजलगर्भं निधिरपामपांनाथः पाँथः[13]पृथुँ[14]लवदुःस्थो[15] वियदभूत् । निधिर्भासां[16]मौर्वो[17] दिनर्प[18]तिरभूदौर्वदहनश्चलत्काये यस्मिन्स जयति हरिर्मीनवपुषा ॥ २ ॥ जीयासुः शकुला[19]कृतेर्भगवतः पुच्छच्छटाछोटना[20]दुद्यन्तः[21] शतचान्द्रिताम्बरतलं ते बिन्दवः सैन्धवाः । यैर्व्यावृत्य पताद्भिरौर्वशिखिनस्तेजोजटालं[22] वपुः पाना[23]ध्मानवशादरोचकरुजां[24] चक्रे चिरायास्पदम्[25] ॥ ३ ॥ दिश्याद्वः शकुलाकृतिः[26] स भगवान्नैःश्रेयसीं संपदं यस्य स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलन[27]क्रीडनैः । क्षुभ्यद्वार्धिसमुच्छलज्जलभरैर्मन्दाकिनीसंगतैर्गङ्गासागरसंगमप्रणयिनी जाता विहायःस्थली[28] ॥ ४ ॥ मायामीनतनोस्तनोतु भवतां पुण्यानि पङ्कस्थितिः पुच्छाच्छोटसमु[29]च्छलज्जलगुरुप्रारम्भरिक्तोदधेः । पातालावटमध्यसंकट[30]तया पर्याप्तकष्टस्थितेर्वेदोद्धारपरायणस्य सततं नारायणस्य प्रभोः ॥ ५ ॥ जृम्भाविस्तृतवक्त्रपङ्कजविधेर्हत्वा श्रुतीः[31] सागरे लीनं त्रस्तसमस्तनक्रनिकरं शङ्खं जघानाजिरे[32] । पुच्छोत्क्षिप्तजलोत्करैः प्रतिदिशं संतर्प्य[33] यो वै धरां पायाद्वः सैं[34] मृणालकोमलतनुर्मीनाभिधानो हरिः ॥ ॥ ६ ॥ हंहो मीनतनो हरे किमुदधे किं वेपसे शैत्यतः स्विन्नः किं वडवानलात्पु-

---

१ हिरण्यकशिपुमित्यर्थः । २ क्षत्राणां क्षत्रियाणां क्षयस्तम् । ३ पुलस्त्यस्यापत्यं पुमांस्तं रावणमित्यर्थः । ४ कलयते-गृह्णते । ५ 'कृष्ण प्रणामोऽस्तु ते' इति पाठे तु यमकतादवस्थ्यम् । ६ मीनत्वगेकदेशमिति शेषः । ७ पुराणेषु हि शेषवत् कमठावतारस्यापि भूमण्डलवोढृत्वं श्रुतमिति यथोक्तम् । ८ खड्गे । ९ मत्स्यविशेषः । १० सूकरः । ११ बुद्धदेवः । १२ अत्यन्त- । १३ जल- । १४ पुष्ट- । १५ दीनः । १६ भासां-तेजसां निधिः सूर्य इत्यर्थः । १७ समुद्राग्निः । १८ सूर्यः । १९ मत्स्यशरीरस्य । २० आलोलनात् । २१ ऊर्ध्वं गच्छन्तः । २२ तेजसा पूर्णम् । २३ पानेन यदाध्मानं तद्वशात् तदतिप्राबल्यात् । २४ अग्निमान्द्यावहानां रोगाणाम् । २५ प्रतिष्ठाम् । २६ मत्स्याकारः । २७ दोलन- । २८ आकाशभूमिः । २९ ऊर्ध्वं गच्छत्- । ३० सङ्कीर्णत्वेन । ३१ वेदान् । ३२ संग्रामदेशे । ३३ सन्तृप्तं विधाय । ३४ गोपनपरायणः ।

लक्षितः कस्मात्स्वभावादहम् । इत्थं सागरकन्यकामुखशशिव्यालोकनेनाविकप्रोद्यत्कामजाचिह्ननिहुतिपरः शौरिः शिवायास्तु वः ॥ ७ ॥ पुच्छं चेदहमुन्नयाम्यनवधिस्तुच्छो भवेदम्बुधिः क्रीडां चेत्कलये मनागपि जले पीडा परं यादसाम् । निस्पन्दो भृशमामृशन्निति भवन्ब्रह्माण्डभाण्डक्षयक्षोभाकुञ्चितवेप एष भगवान्प्रीणातु मीनाकृतिः ॥८॥ चन्द्रादित्योरुनेत्रः[1] कमलभवभवस्फारपृष्ठप्रतिष्ठो[2] भास्वत्कालाग्निजिह्वः पृथुलगलगुहादष्टनिःशेषविश्वः । अद्भिः पुच्छोत्थिताभिश्चकितसुरवधूनेत्रसंसूचिताभि[3]र्भित्स्यश्छिन्नाब्धिवेलं गगनतलमलं क्षालयन्वः पुनातु ॥ ९ ॥ यं दृष्ट्वा मीनरूपं स्फुरदनलशिखायुक्तसंरक्तनेत्रं लोलद्विस्तीर्णकर्णक्षुभितजलनिधिं नीलजीमूतवर्णम् । श्वासोच्छ्वासानिलौघैः प्रचलितगगनं पीतवारिं मुरारिं दिङ्मूढोऽभूत्स शङ्खः स भवतु भवतां भूतये मीनरूपः ॥ १० ॥ दिङ्मूढं तं सुरारिं किल शितदशनैः पीड्यमानं रटन्तं हत्वा तीरे पयोधेः करतलकलितं पूरयामास शङ्खम् । नादेनाक्षोभ्य विश्वं प्रमुदितविबुधं त्रस्तदैत्यं स देवैर्दत्तार्घः पद्मयोनेः प्रहसितवदनः पातु वो दत्तवेदः ॥ ११ ॥

## कूर्मस्तुतिः ।

निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् । प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ १ ॥ नमस्कुर्मः कूर्मं नमदमरकोटीर[8]निकरप्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठ[9]वपुषम् । जरीजृम्भ[10]ड्डिम्भ[11]द्युमणि[12]रमणीयांशुलहरीपरीरम्भस्फूर्जद्दलभिदुपलाद्रि[13]प्रतिभटम् ॥ २ ॥ निष्प्रत्यूहमनल्पकल्पचरितत्रैलोक्यरक्षागुरुः क्रीडाकूर्मकलेवरः स भगवान्दिश्यादमन्दां मुदम् । कल्पान्तोदधिमध्यमज्जनवशाद्व्यासर्पतः संलुठत्पृष्ठे यस्य बभूव सैकतकणच्छायं धरित्रीतलम् ॥ ३ ॥ पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनैर्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः । यत्संस्कारकला[14]नुवर्तनवशाद्वेलाछलेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ ४ ॥ दृग्भ्यां यस्य विलोकनाय जगतो द्रागीषदुत्तोलितग्रीवाग्रोपरि विस्फुरद्ग्रहगणे छत्रायितायां भुवि । हा दिग्भूः किमभूदभूतदितरात्किंचेति पर्याकुलो हन्यादेष हठादघानि कमठाधीशः कठोराणि मे ॥ ५ ॥ यो धत्ते[15]शेषनागं तदनु[16]वसुमतीं स्वर्गपातालयुक्तां युक्तां सर्वैः समुद्रैर्हिमगिरिकनकप्रस्थमुख्यैर्नगेन्द्रैः । एतद्ब्रह्माण्डमस्यामृतघटसदृशं भाति वंशे[17] मुरारेः पायाद्वः कूर्मदेहः प्रकटितमहिमा माधवः कामरूपी ॥ ६ ॥

## वराहस्तुतिः ।

हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु नः । हेमाद्रिकलसा यत्र धात्री[18] छत्रश्रियं दधौ ॥ १ ॥ स जयति महावराहो जलनिधिजठरे चिरं निमग्नोऽपि । येनान्त्रैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ २ ॥ पातु नः कपटकोलकेशवो यस्य निश्वसितमारुतोद्धता । उच्छ्रितिप्रपतनैरचीक्लृपत्[19]के-

---

१ चन्द्रश्चादित्यश्चेत्येतावेवोरुणी अतिशयिते ( लोकोत्तरत्वात् ) उत्कृष्टे इति यावत्, नेत्रे यस्य तादृक् । २ कमलाद्भवो जन्म यस्य तस्माद्ब्रह्मणो भवः उत्पत्तिर्यस्य तादृशं यत् ( जगत् ), तस्य स्फारो विस्तारः पृष्ठप्रतिष्ठो यस्य तादृक् । पृष्ठे प्रतितिष्ठतीति पृष्ठप्रतिष्ठः । ३ साश्चर्यमवेक्षिताभिः । ४ व्यग्रः । ५ तिग्मै रदनैः । ६ व्याप्तं चकार, उच्चैर्वादयामासेति यावत् । ७ स्थितम् अत्र भावे क्तः । ८ कोटीराणां किरीटानां निकरः समूहस्तत्रेति । ९ रक्तवर्णशरीरम् । १० अतिशयेनोल्लसत्- । ११ तरुण- । १२ दिनकर- । १३ इन्द्रनीलमणिपर्वत- । १४ सङ्कोचनासङ्कोचनादि- । १५ पृष्ठ इत्यध्याहार्यम् । १६ तदुपरीत्यर्थः । १७ पृष्ठोपरि । १८ पृथ्वी । १९ रचयामास ।

लिकेन्दुक[1]तुलामिलो[2] मुहुः ॥ ३ ॥ न पङ्कैरालेपं कलयति धरित्री[3]व्ययभयान्न मुस्तामादत्तेऽप्युरगनगर-भ्रंशभयतः। न धत्ते ब्रह्माण्डस्फुटनसघृणो घर्घररवं महाक्रोडः पायादिति सकलसंकोचितमुखः ॥ ४ ॥ पातु त्रीणि जगन्ति संततम[4]कूपारात्समभ्युद्धरन्धात्रीं कोलकलेवरः स भगवान्यस्यैकदंष्ट्राङ्कुरे। कूर्मः[5] कन्दति ना[6]लति द्विरसनः प[7]त्रन्ति दिग्दन्तिनो मेरुः को[8]शति, मेदिनी ज[9]लजति व्योमापि रोल[10]म्बति ॥ ५ ॥ पातु श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरःस्थलो देवो नः स जगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः[11]। क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भूर्भाति स्म प्रलयाब्धिपल्वल[12]तलोत्खातैकमुस्ताकृतिः ॥ ६ ॥ दृप्यद्दैत्यनितम्बिनीजनमनःसंतोषसंकोचनः कुर्याद्विश्वमनश्वरं स भगवान्क्रोडावतारो हरिः। यद्दंष्ट्राङ्कुरको[13]टिकोटरकुटीकोणान्तरस्थेयसी पृथ्वी भात्यवदा[14]तकेतकदलालीनेव भृङ्गाङ्गना ॥ ७ ॥ अष्टौ यस्य दिशो दलानि विपुलः कोशः सुवर्णाचलः कान्तं केसरजालमर्ककिरणा भृङ्गा पयोदा[15]वली। नालं शेषमहोरगः प्रविततं वारांनिधेर्लीलया तन्नः पातु समुद्धरन्कुवलयं[16] क्रोडा[17]कृतिः केशवः ॥ ८ ॥ बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया क्रोडाकारधरो हरिः स भगवान्भूयाद्विभूतिप्रदः। यस्योत्क्षिप्तवतः क्षमाकमलिनीमालम्बमानः क्षणं लोलद्बालमृणालनालतुलनां भेजे भुजङ्गेश्वरः ॥ ९ ॥ मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात् ॥ इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो मुहुः क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥ १० ॥ भूयादेव सतां हिताय भगवान्कोलावतारो हरिः सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते नटन्त्या भुवः। तारा हा[18]रति वारिदस्तिलकति[19] स्वर्वाहिनी[20] माल्यति[21] क्रीडादर्पणति[22] क्षमापतिरहर्देवश्च ताटङ्कति[23] ॥ ११ ॥ लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि नष्टे श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्धपीते। पोत्र[24]प्रान्तैकरोमान्तरविवरगतां मार्गतश्चक्रपाणेः क्रोडाकारस्य पृथ्वीमकलितविभवं वैभवं नः पुनातु ॥ १२ ॥ सिन्धुष्वङ्गावगाहः खुरविवरविशत्तुच्छतोयेषु नाप्तः प्राप्ताः पातालपङ्के न लुठितरुचयः पोत्रमात्रोपयोगात्। दंष्ट्राविष्टेषु नाप्तः शिखरिषु च पुनः स्कन्धकण्डूविनोदो येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ १३ ॥ जलौघमग्ना सचराचरा धरा विषाणकोट्याखिलविश्वमूर्तिना। समुद्धृता येन वराहरूपिणा स मे स्वयंभूर्भगवान् प्रसीदतु ॥

## नृसिंहस्तुतिः।

नमस्तस्मै नृसिंहायदैत्यराजान्तकारिणे। अन्तः क्रोधशिखा यस्य समुत्पन्नाः सटामिषात् ॥ १ ॥ सुरासुरशिरोरत्नकान्तिविच्छुरिताङ्घ्रये। नमस्त्रिभुवनेशाय हरये सिंहरूपिणे ॥ २ ॥ शत्रोः

---

१ कन्दुकसादृश्यम्। कन्दुको हि उत्क्षिप्यमाणोऽपक्षिप्यमाणश्च न यथा सुस्थस्तथा निश्वासैः कदाचिदुत्क्षिप्यमाणः कदाचिदपक्षिप्यमाणश्चेति साम्यमिति। २ पृथिवी। ३ यदि जलधेः कर्दमे विनोदयेयं तदा धरित्रीयं मदन्तरेव निलीयेतेति भीत्या। ४ सागरात्। ५ कन्दरूपः प्रतिभाति। ६ नालरूपः प्रतिभाति। ७ पत्ररूपाः प्रतिभान्ति। ८ कोशरूपः प्रतिभाति। ९ कमलरूपा प्रतिभाति। १० भ्रमररूपं प्रतिभाति। ११ मधुर्दैत्यस्तस्य वध्वा यद्वक्त्राब्जं तस्य सङ्कोचनकृतौ चन्द्रोदयतुल्यः। १२ क्षुद्रजलाशय-। १३ अग्रभाग-। १४ उज्ज्वल-। १५ मेघश्रेणी। १६ कोः पृथ्व्या वलयं मण्डलम्, सितं नक्तंविकासि कमलं च। १७ वराहरूपः। १८ हार इव प्रतिभाति। हारो मुक्तावलिः। १९ कस्तूरीतिलकमिव प्रतिभाति। २० गङ्गा। २१ माल्यमिव मणिमालेव भाति। २२ दर्पण इव प्रतिभाति। २३ कुण्डलभूषेव प्रतिभाति। २४ सूकरमुखाग्रभाग-।

प्राणानिलाः पञ्च वयं दश जयोऽत्र कः । इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥ ३ ॥ प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाछटः । श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥ ४ ॥ व्याधूतकेसरसटाविकरालवक्त्रं हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् । आविष्कृतं सपदि येन नृसिंहरूपं नारायणं तमपि विश्वसृजं नमामि ॥ ५ ॥ दैत्यास्थिपञ्जरविदारणलब्धरन्ध्ररक्ताम्बुनिर्जरसरिद्घनजातपङ्काः । बालेन्दुकोटिकुटिलाः शुकचञ्चुभासो रक्षन्तु सिंहवपुषो नखरा हरेर्वः ॥ ६ ॥ दिश्यात्सुखं नरहरिर्भुवनैकवीरो यस्याहवे दितिसुतोद्दलनोद्यतस्य । क्रोधोद्धतं मुखमवेक्षितुमक्षमत्वं जानेऽभवन्निजनखेष्वपि यन्नतास्ते ॥ ७ ॥ वपुर्दलन[1]संभ्रमात्स्वनखरं प्रविष्टे रिपौ[2] क्व यात इति विस्मयात्प्रहितलोचनः सर्वतः । वृथेति करताडनान्निपतितं पुरो दानवं निरीक्ष्य भुवि रेणुवैं[3]जयति जातहासो हरिः ॥ ८ ॥ चटचटिति चर्मणि च्छमिति चोच्छलच्छोणिते धगद्धगिति मेदसि स्फुटरवोऽस्थिनि ष्ठागिति । पुनातु भवतो हरेरमरवैरिवक्षःस्थलक्वणत्करजपञ्जरक्रकचघर्षज[4]न्माऽनलः ॥ ९ ॥ ससत्वरमितस्ततस्तत[5]विहस्तहस्ताटवीनिकृत्तसुरशत्रुहृत्क्षत[6]तजसिक्तवक्षःस्थलः । स्फुरद्रगभस्तिभिः स्थगितसंततसतियुतिः समस्तनिगमस्तुतो नृहरिरस्तु नः स्वस्तये ॥ १० ॥ चञ्चच्चण्डनखाग्रभेदविगलद्दैत्येन्द्रवक्षःक्षरद्रक्ताभ्यक्तसुपाटलोद्भटसटासंभ्रान्तभीमाननः । तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभवद्दिङ्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥ ११ ॥ दंष्ट्रासंकटवक्त्रकन्दरलसज्जिह्वस्य हव्याशनज्वालाभासुरभूरिकेसरसटाभारस्य दैत्यद्रुहः । व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडस्थलास्फालनस्फारप्रस्फुटदस्थिपञ्जररवक्रूरा नखाः पान्तु वः ॥ १२ ॥ सोमार्धायितनिष्पिधानदशनः संध्यायितान्तर्मुखो बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः । अन्तर्नादनिरोधपीवरगलत्वक्कूपनिर्यत्तडित्तारस्फारसटावरुद्धगगनः पायान्नृसिंहः स नः ॥ १३ ॥ विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः शोणनेत्रहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः । विस्फूर्जद्बलगर्जितर्जितककुम्मातङ्गदर्पोदयाः संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विषद्वक्षसः ॥ १४ ॥ दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि स्फारीभूतकरालकेसरसटासंघातघोराकृतेः । सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्तःस्मितं क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ १५ ॥ किं[17] किं सिंहस्ततः किं[18] नरसदृशवपुर्देव चित्रं गृहीतो नैतादृक्क्वापि जीवोऽद्भुतमुपनय मे देव संप्राप्त एषः । चापं चापं न चापीत्यहहहहहहा कर्कशत्वं नखानामित्थं दैत्येन्द्रवक्षः खरनखमुखरैर्जल्पितान्यः स वोऽव्यात् ॥ १६ ॥ भूयः कण्ठावधूतिव्यतिकरतरलो[19]त्तंसनक्षत्रमालाबालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी । अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥ १७ ॥ अन्तःक्रोधोज्जिहानज्वलनभवशिखाकारजिह्वावलीढप्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः । दृप्यत्पारीन्द्र[21]मूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिः कुर्वन्निर्धूमधूमध्वजविचितमिव व्योम रोमच्छटानाम् ॥ १८ ॥ पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदर्चिरर्चि[23]र्ज्वालाजालावलीढं बत

१ शरीरविदारणभीत्याऽऽनीतत्वराविशेषात् । २ हिरण्यकशिपौ । ३ धूलिकणवत् । ४ क्वणन् यः करज ( नख ) पञ्जरमेव क्रकचः करपत्त्रम् ( काष्ठदारणसाधनभूतं शस्त्रम् ) तस्माज्जन्म यस्य तादृक् । ५ विस्तारित-। ६ व्यग्र-। ७ रक्त-। ८ प्रावृत-। ९ सूर्यप्रकाशः । १० वेदादिशास्त्रैर्गीतः । ११ भेदेन-। १२ रुधिरेण रक्त-। १३ सङ्कटः संबाधापरनामाक्रोशविशेषः । १४ क्रोडो भुजान्तरम् । १५ त्वगेव चर्मैव कूपः रक्ताम्बुपूर्णत्वात् । १६ रुधिरीभवत्-। १७ स्वकिङ्करेण समं दैत्यराजस्योक्तिप्रत्युक्तिश्लेयम् । १८ किं नाम भयम् । १९ उच्चस्थ-। २० प्रादुर्भवत्-। २१ पारीन्द्रो मृगेन्द्रः । २२ अग्निशिखाव्याप्तम् । २३ यस्य नृसिंहस्य तनुः तस्या उत् उदर्चिरर्चिः- सुप्रवृद्धप्रकाशः, तस्य-।

भुवि सकलं व्याकुलं किं न भूयात् । न स्याच्चेदाशु तस्याधिकविकटसटाकोटिभिः पाटयमानादिन्दोरानन्दकन्दात्तदुपरि तुहिनासारसंदोहवृष्टिः ॥ १९ ॥ आदित्याः किं दशैते प्रलयभयकृतः स्वीकृताकाशदेशाः किं वोल्कामण्डलानि त्रिभुवनदहनायोद्यतानीति भीतैः । पायासुर्नारसिंहं वपुरमरगणैर्बिभ्रतः शार्ङ्गपाणेर्दृष्टा दत्तासुरोरस्तलदरणगलद्रक्तरक्ता नखा नः ॥ २० ॥

## वामनस्तुतिः ॥

अव्याद्वो वामनो यस्य कौस्तुभप्रतिबिम्बिता । कौतुकालोकिनी जाता जाठरीव जगत्त्रयी ॥ १ ॥ अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे । विधिविष्टरपद्मस्य[1] नालदण्डो मुदेऽस्तु वः ॥ २ ॥ खर्व[2]ग्रन्थिविमुक्तसन्धिविलसद्वक्षःस्फुरत्कौस्तुभं निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसाम[3]ध्वनि । पात्रावाप्तिसमुत्सुकेन बलिना[4] सानन्दमालोकितं पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः[5] ॥ ३ ॥ हस्ते शस्त्रकिणाङ्कितोऽरुणविभाकिर्मीरितोरःस्थलो[6] नाभि[7]प्रेङ्खदलिर्विलोचनयुगप्रोद्भूतशीतातपः । बाह्वार्मिश्रितवह्निरेष तदिति व्याक्षिप्य वाक्यं कवे[8]स्तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥ ४ ॥ स्वस्ति स्वागतमर्थ्यहं वद विभो किं दीयतां मेदिनी का मात्रा[9] मम विक्रमत्रयपदं दत्तं जलं दीयताम् । मा देहीत्युशनाब्रवीद्धरिरयं पात्रं किमस्मात्परं चेत्येवं बलिनार्चितो मखमुखे[10] पायात्स वो वामनः ॥ ५ ॥ स्वामी सन्भुवनत्रयस्य विकृतिं नीतोऽसि किं याञ्चया यद्वा विश्वसृजा त्वयैव न कृतं तद्दीयतां ते कुतः । दानं श्रेष्ठतमाय तुभ्यमतुलं बन्धाय नो मुक्तये विज्ञप्तो बलिना निरुत्तरतया ह्रीतो हरिः पातु वः ॥ ६ ॥ ब्रह्माण्डच्छत्रदण्डः शत[11]धृतिभवनाम्भोरुहो नालदण्डः क्षोणीनौकूपदण्डः क्षर[12]दमरसरित्पट्टिकाकेतुदण्डः । ज्योतिश्चक्राक्ष[13]दण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः श्रेयस्त्रैविक्रमस्ते[14] वितरतु विबुधद्वेषिणां कालदण्डः[15] ॥ ७ ॥ यस्मादाक्रामतो द्यां गारु[16]डमणिशिलाकेतुदण्डायमानादा[17]श्च्योतन्त्याबभासे सुरसरिदमला वैजयन्तीव[18] कान्ता[19] । भूमिष्ठो यस्तथान्यो भुवनगृहमहास्तम्भशोभां दधानः पातामेतौ पयोजोदर[20]ललिततलौ पङ्कजाक्षस्य पादौ ॥ ८ ॥ कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याखिला ब्रह्मसृष्टिः कस्ते नाथो ह्यनाथः क्व च तव जनको नैव तातं स्मरामि । किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्त्रैलोक्यं भावगर्भं बलिमिदमवदद्वामनो नः स पायात् ॥ ९ ॥

## परशुरामस्तुतिः ।

कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सीमदृषत्त्व[21]मापुः । बभूवुरुत्सर्ग[22]जलं समुद्राः स रैणुकेयः श्रियमातनोतु ॥ १ ॥ किं दोर्भ्यां किमु कार्मुको[23]पनिषदा भर्गप्रसादेन[24] किं

---

१ ब्रह्मस्थानभूतकमलस्य । २ अल्प-। ३ सामवेद-। ४ बलिराजेन। ५ वामनीभूतस्य विष्णोः। ६ व्याप्तवक्षःप्रदेशः। ७ नाभौ प्रेङ्खन् चलन् अलिः-भ्रमरो यस्य तादृक्। ८ भार्गवस्य। ९ परिमाणम्। १० यज्ञाग्रभागे। ११ ब्रह्म-। १२ क्षरन्ती याऽमरसरित्-गङ्गा, सैव पट्टिकाऽवजवस्त्रं तस्याः केतुदण्डः-आधारः आधारभूतदण्डायमानः। १३ ज्योतिषां चक्रं मण्डलं (चक्रमिव-रथाङ्गमिव) तस्य-। १४ त्रयो विक्रमाः पादन्यासा यस्य बलिराज्याक्रमणक्षमा इति तस्यायमिति यथोक्तः। १५ इदं समाप्तपुनरात्तताबहम्। १६ नील-। १७ समन्तात्। प्रकाशमाना। अत्र शता चिन्त्यः। १८ पताकावत्। १९ रमणीया। २० कमलमध्य-। २१ मर्यादासूचकप्रस्तररूपत्वम्। क्षत्रकुलं विनाश्य तेषां राज्यानि ब्राह्मणेभ्यो दत्तानि, तदानीन्तनं वृत्तमुपजीव्येदमुक्तम्। २२ दान-। २३ धनुः-। २४ महेश्वरानुग्रहेण।

किं वेदाधिगमेन भास्वति: भृगोर्वंशे च किं जन्मना । किं वानेन ममाद्भुतेन तपसा पीडां कृता-न्तोऽपि चेद्विप्राणां कुरुतेऽन्तरित्यनुशयो रामस्य पुष्णातु वः॥ २ ॥ नाशिष्यः किमभूद्भवः किमभवन्नापुत्रिणी रेणुका नाभूद्विश्वमकार्मुकं किमिति वः प्रीणातु रामत्रपा । विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतेनाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः ॥ ३ ॥ पायाद्वो जमदग्निवंशतिलको वीरव्रतालंकृतो रामो नाम मुनीश्वरो नृपवधे भास्वत्[1]कुठारायुधः । येना-शेषहताहितां[2]ङ्गरुधिरैः संतर्पिताः पूर्वजा[3] भक्त्या चाश्वमखे समुद्रवसना भूर्ह[4]न्तकारीकृता ॥ ४ ॥ द्वारे कल्पतरुर्गृहे सुरगवी[5] चिन्तामणीनङ्गदे पीयूषं सरसीषु विप्रवदने विद्याश्चतस्रो[6]र्दश । एवं कर्तु-मयं तपस्यति भृगोर्वंशावतंसो मुनिः पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ५ ॥ नो सन्ध्यां समुपासते यदि तदा लोकापवादाद्भयं सा चेत्स्वीक्रियते भविष्यति तदा राजन्यबीजे नतिः । इत्थं चिन्तयतश्चिरं भृगुपतेर्निश्वासकोष्णीकृतो नेत्रा[7]न्तःप्रतिबिम्बशोणसलिलः संध्याञ्जलिः पातु वः ॥ ६ ॥

## राघवस्तुतिः ।

वन्दामहे महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥ १ ॥ नुमो रामपदाम्भोजं रेणवो यत्र संततम् । कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥ २ ॥ स्वर्णैणाजिनशयनो योजितनयनो दशास्यदिग्भागे । मुहुरवलोकितचापः कोऽपि दुरापः स नीलिमा शरणम् ॥ ३ ॥ अधिपञ्चवटीकुटीरवर्तिस्फुटितेन्दीवरसुन्दरोरुमूर्तिः । अपि लक्ष्मण-लोचनैकसख्यं भजत ब्रह्मसरोरुहायताक्षम् ॥ ४ ॥ कनकनिकषभासा सीतयालिङ्गिताङ्गो नव[8]-कुवलयदामश्यामवर्णाभिरामः । अभिनव इव विद्युन्मण्डितो मेघखण्डः शमयतु मम तापं सर्वतो रामचन्द्रः ॥ ५ ॥ परिणयविधौ भङ्क्त्वानङ्गद्विषो धनुरग्रतो जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन् । कुसुम[9]धनुषा पाशेनेव प्रसह्य वशीकृतोऽवनतवदनो रामः पायात्त्रपाविनयान्वितः ॥ ६ ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामामनःकामाय प्रथमाननिर्मलगुणग्रा[10]माय रामात्मने । योगारू-ढमुनीन्द्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ७ ॥ यो रामो न जघान वक्षसि रणे तं रावणं सायकैर्हृद्यस्य प्रतिवासरं वसति सा[11] तस्या[12] ह्यहं राघवः । मध्यास्ते भुव-नावली परिवृता द्वीपैः समं सप्तभिः स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचिन्तापरः ॥ ८ ॥ राज्यं येन पटान्तलग्नतृणवत्त्यक्तं गुरोराज्ञया पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः । स्वा-धीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां पायाद्वः स विभीषणाग्र[13]जनिहा रामाभिधानो हरिः ॥ ९ ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं शार्ङ्गाखण्डलचापमम्बुजभवाग्नीन्द्रादिबर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं श्रीरामाम्बुदमाश्रयेऽखिलजगत्संसारतापापहम् ॥ १० ॥ कूर्मो मूलवदालवालवदपांराशिर्लतावद्दिशो मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः । स्वामिन्व्योम-

---

१ प्रकाशमान-। २ शत्रु-। ३ पितरः। ४ साधारणधिया दत्ता। ५ कामधुक् । ६ चतुर्दश। ७ नेत्रयोः क्रोधानुभावभूतशोणि माविर्भावात् । ८ नवत्वेनाम्लानत्वमिष्यते । ९ कन्दर्पेण। १० समुदायरूपाय । ११ जानकी । १२ जानक्याः । १३ रावणहन्ता। विभीषणस्य अग्रे-जनिरुत्पत्तिर्यस्य तं हन्तीति तथोक्तः।

तरुः क्रमे मम क्रियाञ्छ्रुत्वेति गां[1] मारुतेः सीतान्वेषणमादिशन्दिशतु[2] वो रामः सलज्जः श्रियम् ॥ ११ ॥ एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ वैदेहीकुचकुम्भकुङ्कुमरजःसान्द्रारुणाङ्काङ्कितौ । लोकत्राणविधानसाधुसवनप्रारम्भयूपौ भुजौ देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ॥ १२ ॥ बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रह्वता ताते काननसेवनावधि कृपा सुग्रीवसख्यावधि । आज्ञा बारिधिवन्धनावधि यशो लङ्केशनाशावधि श्रीरामस्य पुनातु लोकवशता जानक्यपेक्षावधि ॥ १३ ॥ कल्याणानां निधानं कलिमलमथनं पावनं पावनानां पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य । विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ १४ ॥ कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा । सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गधामा दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥ १५ ॥ योऽद्धा[3] योद्धावधीत्तान्सपदि पलभुजः[4] संपराये[5] परा[6] ये येनायेना[7]श्रितानां स्तुतिरवनमितेशानचापेन चापे[8] । लङ्कालंकारहर्ता ककुभि ककुभि[9] यः कान्तया सीतयासीद्दूनो[10] दूनो[11]ऽथ हृष्टः स विभुरवतु वः स्वैः[12]सभार्यैः[13] सभार्यैः[14] ॥ १६ ॥ ऋक्षाणां भूरिधाम्नां श्रितमधिपतिना प्रस्फुरद्भीमतारं स्फारं नेत्रानलेन प्रसभनियमितोच्चापमीनध्वजेन । रामायत्तं पुरारेः कुमुदशुचि लसन्नीलसुग्रीवमङ्गं प्लावङ्गं वापि सैन्यैर्दशवदनशिरश्छेदहेतुः श्रियेऽस्तु ॥ १७ ॥ यस्तीर्थानामुपास्त्यौ[15] गलितमलभरं मन्यते स्म स्वमेवं नाज्ञासीज्जज्ञिरे यन्मम चरणरजःपादपूतान्यमूनि । पादस्पर्शेन कुर्वञ्झटिति विघटितग्रावभावामहल्यां कौसल्यासूनुरूनं[16] व्यपनयतु स नः श्रेयसा च श्रिया च ॥ १८ ॥

## सीतास्तुतिः ।

उन्मृष्टं कुचसीम्नि पत्रमकरं दृष्ट्वा हठालिङ्गनात्कोपो मास्तु पुनर्लिखाम्यमुमिति स्मेरे[17] रघूणां वरे । कोपेनारुणितोऽश्रुपातदलितः प्रेम्णा च विस्तारितो दत्तो मैथिलकन्यया दिशतु नः क्षेमं कटाक्षाङ्कुरः ॥ १ ॥

## हनुमत्स्तुतिः ।

अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता । अनेकदुःखाहतलोकगोप्ता त्वसौ हनूमांस्तव सौख्यकर्ता ॥ १ ॥ कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा नवातङ्का लङ्का[18] समजनि वनं वृश्चति[19] सति । सदा सीताकान्तप्रणतिमतिविख्यातमहिमा हनूमानव्याद्वः कपिकुलशिरोमण्डनमणिः ॥ २ ॥

## रामकृष्णयोः स्तुतिः ।

त्रातः काकोदरो[20] येन द्रोग्धापि करुणात्मना । पूतनामा[21]रणख्यातः स मेऽस्तु शरणं प्रभुः ॥ १ ॥ मर्दितरावणकंसौ सरयूयमुनाविहारिणौ देवौ । अर्पितविप्रकुमारौ हरिपतिहरिकेतन[22]प्रियौ वन्दे ॥ २ ॥

---

१ वाणीम् । २ निर्दिशन् । ३ साक्षात । ४ मांसभोजिनः राक्षसानिति यावत ।५ सङ्ग्रामे । ६ शत्रवः । ७शोभनेन भाग्येन । ८ च--आपे प्रापे, इति पदच्छेदः । ९ प्रतिदिशम् । १० हीनः । ११ दुःखितः । १२ स्वर्ग- । १३ सभायाम्पूज्यः । १४ सस्त्रीकः । १५ सेवनेन । १६ हीनम् । १७ ईषद्धासशालिनि । १८ ततः पूर्वं तत्रापरस्यातङ्कस्यभावात्ततः प्रभृत्येवातङ्कोदयादिदमुक्तम् । १९ छिन्दति । २० अदरः निर्भयः काकः इन्द्रपुत्रो जयन्तः, काकवदुदरं यस्य स कालियश्च । २१ पूतं पवित्रं नाम यस्य, रणे ख्यातः, पूतनाया मारणेन ख्यात इति च । २२ हरिपतिः-हनुमान्, हरिकेतनः-वानरध्वजः, अर्जुन इति यावत्, इति च प्रियौ ययोस्तौ ।

यः पूतनामारणलब्धकीर्तिः[1] काकोदरो[2] येन विनीतदर्पः[3] । यशोदयालंकृतमूर्तिरव्यात्पतिर्यदूनामथवा रघूणाम् ॥ ३ ॥

## कृष्णस्तुतिः ।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् । वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ १ ॥ देवः पायादपायान्नः स्मेरेन्दीवरलोचनः । संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥ २ ॥ पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः । त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥ ३ ॥ दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः । आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ ४ ॥ भक्तान् रक्षन् खलान्निघ्नन् विरक्तानुद्धरन्भवात् । अभयं च ददद्दीनान् शरणं मे चतुर्भुजः ॥ ५ ॥ हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम् । राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ ६ ॥ देहि मत्कन्दुकं राधे परिधाननिगूहितम् । इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥ ७ ॥ शरणं व्रजजनताया हरणं कंसादिदानवान्वयस्य । भरणं प्रगतकुलस्य प्रैणुवे[5] बल्लवीमनोहरणम्[6] ॥ ८ ॥ अवलोकितमनुमोदितमालिङ्गितमङ्गनाभिरनुरागैः । अधिवृन्दावनकुञ्जं मरकतपुञ्जं नमस्यामः ॥ ९ ॥ मकरीविरचनभङ्ग्या राधाकुचकलशपीडनव्यसनी । ऋजुमपि रेखां लुम्पन्बल्लववेषो हरिर्जयति ॥ १० ॥ कठिनतरदामवेष्टनलेखासंदेहदायिनो यस्य । राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ ११ ॥ खिन्नोऽसि मुञ्च शैलं बिभृमो[7] वयमिति वदत्सु शिथिलभुजः । भरभुग्नविनतबाहुषु गोपेषु[8] हसन्हरिर्जयति ॥ १२ ॥ नीतं नवनवनीतं कियदिति पृष्टो यशोदया कृष्णः । इयदिति गुरुजनसंसदि करधृतराधापयोधरः पातु ॥ १३ ॥ राधामधुसूदनयोरनुदिनमुपचीयमानस्य । प्रणयतरोरिव कुसुमं मिथोऽवलोकस्मितं पायात् ॥ १४ ॥ श्रुतिमपरे स्मृतिमपरे भारतमपरे भजन्तु भवभीताः । अहमिह नन्दं वन्दे यस्यालिन्दे[9] परं ब्रह्म ॥ १५ ॥ तप्तं केन तपोभिः किन्तु फलं प्रापि बल्लवैः[10] परैर्न[11] तथा । लोचनयुगले येषामञ्चलमासीन्निरञ्जनं ब्रह्म ॥ १६ ॥ नूतनजलधररुचये गोपवधूटीदुकूलचौराय । तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १७ ॥ स्तनंधयं तं जननीमुखाब्जं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम् । स्पृशन्तमन्यं स्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम् ॥ १८ ॥ भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः । यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥ १९ ॥ विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीव[12]रसं पिबन्ति किम् । इति स्वपादाम्बुजपानकौतुको स गोपबालः श्रियमातनोतु वः ॥ २० ॥ विलिख्य सत्याकुचकुम्भसीम्नि पत्त्रावलिन्यासमिषेण राधाम् । लीलारविन्देन तया सरोषं पायाद्धृतः कोऽप्यभिहन्यमानः ॥ २१ ॥ कुञ्चिताधरपुटेन पूरयन्वंशिकाप्रचलदङ्गुलिपङ्क्तिः । मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥ २२ ॥ बलिनोऽपि बलान्निहत्य मल्लान् ननु मध्येयदुवीर[13]वृन्दमर्द्धा[14] ॥ विनिगृह्य कचेषु कंसमेव व्रजबालैर्विहरन् मुदेऽस्तु कृष्णः ॥ २३ ॥ अतसी[15]कुसुमोपमेयकान्ति-

---

१पूतनामा-रणलब्धकीर्तिरिति, पूतना-मारणे (येन) लब्धकीर्तिरिति च पदच्छेदः । २ अदरः (निर्भयः) काकः (जयन्तः) इति, कालियनागश्च । ३ कृत इति शेषः । ४ यशोदयाभ्यां,यशसा दयया च, अलङ्कृता मूर्त्तिर्यस्य तादृक्, पक्षान्तरे तदाख्यया नन्दपत्न्या (मात्रा) अलङ्कृतमूर्त्तिः । ५ प्रकर्षेण स्तौमि । ६ गोपी- । ७ धारयामः । ८ 'गोपेषु' इति परेणान्वयः । ९ गृहैकदेशे । 'प्रघाण प्रघणालिन्दाः' इत्यमरः । १० बल्लवैर्गोपैः । ११ अन्यैरित्यर्थः । १२ राजीवशब्दः कमलवाची । १३ यादवानां मध्ये इत्यर्थः । १४ इदं याथार्थ्यद्योतकमव्ययम् । १५ अतसी पुष्पं हि श्याममभवतीति तथोक्तम् ।

र्यमुनातीरकदम्बमूलवर्ती । नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलं वः ॥ २४ ॥ गायन्तीनां गोपसीमन्तिनीनां स्फीताकाङ्क्षामक्षिरोलम्बमालाम् । निश्वाञ्चल्यामात्मवक्त्रारविन्दे कुर्वन्नव्याद्देवकीनन्दनो वः ॥ २५ ॥ पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे संनिधत्ताम ॥ २६ ॥ यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि सकले जगति स्फुरन्तम् । तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २७ ॥ यत्किञ्चिदस्ति विगुणं विरसं विरूपं तद्वस्तु भोः कृतधियः स्वदतां भवद्भ्यः । लोकोत्तराखिलगुणं मधुरालयं यत् तस्मिन् नितान्तरुचिरे रुचिरस्तु नस्तु ॥२८॥ प्रीतिस्तवास्ति मधुपेषु विटेषु चौरेष्वद्यापि हन्त यदि दुर्जन नो जहासि । गोपीविटे च मधुपे नवनीतचौरे तां कापि धामनि बधान धृतावधानः ॥ २९ ॥ हे गोपबालक भवानवलम्ब्य लीलां चिक्षेप नः किमिति हन्त ! तमोऽन्धकूपे । अस्यां महाविपदि सन्ततमर्दितांस्त्वं पश्यन् कदा नु करुणामवलम्बितासे ॥ ३० ॥ लुभ्यन् भवन्मधुरिमानुभवाय कृष्ण न प्राप्नुवंस्तमहमेव न वञ्चितोऽस्मि । शुच्याभमप्यशुचि मे नवनीतबुद्ध्या चेतो हरंस्त्वमपि वञ्चक वञ्चितोऽसि ॥ ३१ ॥ दैत्यं परासुमपि निर्दहदुग्रमेकं बालं स्वभक्तममृतैरिव सिञ्चदन्यत् । आश्वासयत् सुरगणानपरं भयार्तान् नेत्रत्रयं नरहरेर्दिशतात् सुखं नः ॥ ३२ ॥ हे मुक्तिदेवि बहुजन्मभिरप्यलभ्यामर्थ्यापि गोपशिशुकस्य करं गताऽसि । पर्णस्य खण्डमपि हन्त निवेद्य यस्मै क्रीणन्ति मङ्क्षु भवतीं बत भिक्षवोऽपि ॥ ३३ ॥ शत्रुघ्नलक्ष्मणयुतो दलितोग्रधन्वा ( ऽऽ ) गोवर्धनोद्धरणकृत् कृतधर्म्मजश्रीः । सम्पादितार्जुनयशाश्चतुराकृतिर्वः श्रेयः प्रभुर्दिशतु कोऽपि मनुष्यमूर्तिः ॥ ३४ ॥ कान्ते विलासिनि कलावति पद्मनेत्रे नित्यं त्वयि प्रियतमे रमते मनो मे । इत्थं भवन्तमुरुभावनया वदन्तं श्रीकृष्ण मां बुधजना अपि हा हसन्ति ॥ ३५ ॥ मामेकमेव शरणं व्रज मा स्म शोचीरित्यर्जुनं जिगदिषोः परमस्य पुंसः । तत्कालजातकरुणोद्गतगद्गदत्वहृस्वाक्षरा जयति मा शुच इत्यसौ वाक् ॥ ३६ ॥ अव्यक्तमक्षरमुपास्य बभूव कश्चित् स्वं लब्धवर्णमवगत्य कृतार्थमानी । सद्यस्त्रिभङ्गललितस्फुरणादमन्दनन्दोत्थया जडतयैव वयं कृतार्थाः ॥ ३७ ॥ दृङ्मार्गमेष्यति विभुः स्वयमित्यमन्दानन्दाशया न गणिता विपदो दुरन्ताः । पीयूषसागरतरङ्गनिभैरपाङ्गैः श्रीनन्दनन्दन दयोदय नन्दयास्मान् ॥ ३८ ॥ गोपीलोचनयुग्मगोलवसतिर्गोपालगोष्ठीरतिर्गोरक्षाधृतगोपवेषरुचिरो गोवर्धनागोद्धरः । गोलोकाधिपतिः खगोत्तमरथो गोत्रासमुद्धारकृद्गोविन्दोऽवतु गोकुलादृतरसो गोपालगोत्रोद्भवः ॥ ३९ ॥ आनन्दमादधतमायतलोचनानामानीलमावलितकन्धरमात्तवंशम् । आपादमामुकुटमाकलितामृतौघमाकारमाकलयताममुमान्तरं नः ॥ ४० ॥ त्वां पातु नीलनलिनीदलदामकान्तेः कृष्णस्य पाणिसरसीरुहकोशबन्धः । राधाकपोलमकरीलिखतेषु योऽयं कर्णावतंसकमलं विपुलीचकार ॥ ४१ ॥ आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन् पदेऽस्तु मम चित्तमगोचरेऽपि । यत् सद्व्रजस्थितिजुषां[2] सुहृदां कुमारादीनां[3]मधीनमिव गोचरतामुपैति ॥ ४२ ॥ सकलभुवनबन्धोर्वैरमिन्दोः सरोजैरनुचितमिति मत्वा यः स्वपादारविन्दम् । घटयितुमिव मायां योजयत्याननेन्दौ वटदलपुट-

---

१ वस्तुनि । २ सतां-महतां व्रजः-समुदायः, तत्र स्थितिं प्रतिष्ठां जुषन्तीति तेषाम् । तथा-सन् उत्तमो यो व्रजस्तत्र स्थितिजुषामिति । ३ सनत्कुमारादीनां-श्रीदामादीनां गोपबालानां च ।

शायी मङ्गलं नः कृषीष्ट ॥ ४३ ॥ अभिनवनवनीतप्रीतमाताम्रनेत्रं विकचनलिनलक्ष्मी-स्पर्धि सानन्दवक्त्रम् । हृदयभवनमध्ये योगिभिर्ध्यानगम्यं नवगगनतमालश्यामलं कंचिदीडे ॥ ४४ ॥ व्रजजनवनिताभिर्हेमपुष्पप्रभाभिः सह जलद इवासश्चञ्चलाभिः समन्तात् । सपदि निबिडतापोल्लासशान्तौ प्रवीणो मृगमदरमणीयो हन्तु दैन्यं दयालुः ॥ ४५ ॥ अभिनवनवनीतस्निग्धमापीतदुग्धं दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः । दिशतु भुवनकृच्छ्रच्छदितापिच्छगुच्छच्छवि नवशिखिपिच्छालाञ्छितं वाञ्छितं वः ॥ ४६ ॥ कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् । असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासप्रियाहसितो हरिः ॥ ४७ ॥ ललितगमना[2] नार्यो[3] राजन्मनोजनितान्तभा[4]: सुरतिसदृश[5]स्ताः सन्मुख्यो[6] भवानपि तद् ब्रुवे । वनभुवमितो गेहादेको न गच्छतु मां विनेत्यसकृदुदितः पुत्रः पित्रा जयत्यनघो हरिः ॥ ४८ ॥ देवः पायात्पयसि विमले यामुने मज्जतीनां याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि । लज्जालोलैरलसवलितैरुन्मिषत्पञ्चबाणैर्गोपस्त्रीणां नयनकुसुमैरञ्चितः केशवो नः ॥ ४९ ॥ वृन्दारण्ये तपनतनयातीरवानीरकुञ्जे गुञ्जन्मञ्जुभ्रमरपटलीकाकलीकेलिभाजि । आभीराणां मधुरमुरलीनादसंमोहितानां मध्ये क्रीडन्नवतु नियतं नन्दगोपालबालः ॥ ५० ॥ शिरश्छायां कृष्णः क्षणमकृत राधाचरणयोर्भुजावल्लिच्छायामियमपि तदीयप्रतिकृतौ । इति क्रीडाकोपे निभृतमुभयोरप्यनुनयप्रसादौ जीयास्तामपि गुरुसमक्षं स्थितवतोः ॥ ५१ ॥ अवेम्न्यापारा[7]कलनमतुरी[8]स्पर्शमचिरादनुन्मीलत्तन्तुप्रकरघटनायासमसकृत् । विषीदत्पाञ्चाली[9]विपदपनयैकप्रणयिनः पटानां निर्माणं पतंग[10]पतिकेतोरवतु नः ॥ ५२ ॥ कपोले पत्रालीं पुलकि[11]नि विधातुं व्यवसितः स्वयं श्रीराधायाः करकलितवर्तिर्मधुरिपुः । अभूद्वक्त्रेन्दौ यन्निहितनयनः कम्पितभुजस्तदेतत्सामर्थ्यं तदभिनवरूपस्य जयति ॥ ५३ ॥ जयश्रीविन्य[12]स्तैर्महिते[13] इव मन्दारकुसुमैः स्वयं सिन्दूरेण द्विपरणमुद्रा[14] मुद्रिते[15] इव । भुजापीड[16]क्रीडाहतकुवलयापीडकरिणः प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ५४ ॥ सुपर्णस्वर्णाद्रौ रचितमणिशृङ्गो जलधिजामुखाम्भोजे भृङ्गो निगमबिलसत्पञ्जरशुकः । त्रिलोकीकस्तूरीतिलककमनीयो व्रजवधूविहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥ ५५ ॥ क यासि खलु चौरिके प्रमुषितं स्फुटं दृश्यते द्वितीयमिह मामकं वहति कन्दुकं कञ्चुके । त्यजेति नवगोपिकाकुचयुगं प्रमथ्नन्बलाल्लसत्पुलकपञ्जरो जयति गोकुले केशवः ॥ ५६ ॥ मेघैर्मेदुर[17]मम्बरं[18] वनभुवः श्यामास्तमाल[19]द्रुमैर्नक्तं[20] भीरुरयं त्वमेव तदिमं

---

१ दुकूलेत्यर्थः । २ ललितं गमनं यासामिति, ललिते गे-गाने, मनो यस्येति च । ३ गोप्यः, नार्यो ( वरः ) यस्मादिति च । ४ राजन्नसौ मनोजः कामः, तेन नितान्ता-अतिशयिता भा यासां ता इति ( परापेक्षया ) राजन्मनोजनिः ( मदनः ) तान्तभाः-म्लानः यस्मात् ( यत्सौन्दर्यापेक्षया जितकान्तिकत्वात् ) इति च । ५ शोभना या रतिः-कामपत्नी तया सदृशः समाना इति, सुरतौ सदृश इति च । ६ सन्ति शोभनानि मुखानि यासामिति सताम्मुख्य इति च । ७ न वेम्नो वसनवयनदण्डस्य व्यापारो यस्मिन्निति । ८ न तुरीस्पर्शो यत्रेति । तुरी वयनसाधनविशेषः । ९ पाञ्चालीति द्रौपदीनाम । १० पतगानां पक्षिणां पतिः गरुडः केतुः ध्वजो यस्य तस्य । गरुडध्वजस्येति स्पष्टोऽर्थः । ११ रोमाञ्चिते । १२ जयश्रिया विन्यस्तानि समर्पितानि तैः । १३ अर्चितः । १४ कुवलयापीडेन समं यः सङ्ग्रामस्तदामोदेन । १५ अङ्कितः । १६ भुजयोर्य आपीड आघातः । १७ सान्द्रस्निग्धं व्याप्तमिति भावः । १८ आकाशम् । तमस्विनी रात्रिर्जातेत्यर्थ । १९ एतेन देशस्य स्वभावतो भीमत्वं सूचितम् । २० रात्रौ ।

राधे गृहं प्रापय । इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले रहः-केलयः[1] ॥ ५७ ॥ कौन्तेयस्य[2] सहायतां करुणया गत्वा विनीतात्मनो येनोल्लङ्घितसत्पथः कुरुपतिश्चक्रे कृतान्तातिथिः[3] । त्रैलोक्यस्थितिसूत्रधारतिलको देवः स वः संपदे साधूनामसुराधिनाथमथनः स्ताद्देवकीनन्दनः ॥ ५८ ॥ आताम्रे नयने स्फुरत्कुचभरः श्वासो न विश्राम्यति स्वेदाम्भःकणदन्तुरं तव मुखं हेतुस्तु नो लक्ष्यते । धिक्को वेद मनः स्त्रिया इति गिरा रुष्टां प्रियां भीषयंस्तस्यास्तत्क्षणकातरेक्षणपरिस्पृष्टो हरिः पातु वः ॥ ५९ ॥ संसक्तानिव पातुमौपनिषदव्याहारमाध्वीरसानुन्मार्ष्टुं व्रजसुन्दरीकुचतटीपाटीररेणूनिव । उन्मीलन्मुरलीनिनादबहुलामोदोपसीदद्वीजिह्वालीढमलीकबल्लवशिशोः पादाम्बुजं पातु वः ॥ ६० ॥ कृष्णो गोरसचौर्यमम्ब कुरुते किं कृष्ण मातः सुरापानं न प्रकरोमि राम किमिदं नाहं परस्त्रीरतः । किं गोविन्द वदत्यसौ हलधरो मिथ्येति तां व्याहरन्गोपीगोपकदम्बकं विहसयन्मुग्धो मुकुन्दोऽवतु ॥ ६१ ॥ मातस्तर्णक[4]रक्षणाय यमुनाकच्छं न गच्छाम्यहं कस्माद्वत्स पिनष्टि[5] पीवरकुचद्वन्द्वेन गोपीजनः । भ्रूसंज्ञाविनिवारितोऽपि बहुशो जल्पन्यशोदाग्रतो गोपीपाणिसरोजमुद्रितमुखो गोपीपतिः पातु वः ॥ ६२ ॥ कासि त्वं वद चौर्यकारिणि कुतः कस्त्वं पुरो यामिकः[6] किं ब्रूषे मुषितौ सुवर्णकलशौ भूपस्य केन त्वया । कुत्र स्तः प्रकटौ तवाञ्चलतटे कुत्रेति तत्पश्यतामित्युक्ते धृतबल्लवीकुचयुगस्त्वां पातु पीताम्बरः ॥ ६३ ॥ कृष्ण त्वं पठ किं पठामि ननु रे शास्त्रं किमु ज्ञायते तत्त्वं कस्य विभोः स कस्त्रिभुवनाधीशश्च तेनापि किम् । ज्ञानं भक्तिरथो विरक्तिरनया किं मुक्तिरेवास्तु ते दध्यादीनि भजामि मातुरुदितं वाक्यं हरेः पातु वः ॥ ६४ ॥ दूरं यातु भुजङ्गपुङ्गवपतिः पेयं दिनेशात्मजातोयं चास्तु खलप्रसङ्गवशतो मोच्या च निर्दूषणा । इत्थं पातितकन्दुकोद्धृतिकृते प्रोत्कूर्द्य नीपाद्बलान्नृत्यन् दुर्दमभोगिमूर्धसु मुदे वेणुं स मे वादयन् ॥ ६५ ॥ कृष्ण त्वं नवयौवनोऽसि चपलाः प्रायेण गोपाङ्गनाः कंसो भूपतिरब्जनालमृदुलग्रीवाँ वयं गोदुहः[8] । तद्याचेऽञ्जलिना भवन्तमधुना वृन्दावनं मद्विना मा यासीरिति गोपनन्दवचसा नम्रो हरिः पातु वः ॥ ६६ ॥ कस्त्वं ? कृष्णमवेहि मां, किमिह ते ? मन्मन्दिराशङ्कया युक्तं तन्नवनीतभाजनपुटे[9] न्यस्तः किमर्थं करः । कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता बाला वत्सगतिं विवेक्तुमिति संजल्पन्हरिः पातु वः ॥ ६७ ॥ स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी क्षोणीमावृणुते तमालमलिनच्छाया तमःसंहतिः । तन्मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति गोप्या गिरः श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ ६८ ॥ मातः किं यदुनाथ देहि चषकं[10] किं तेन पातुं पयस्तन्नास्त्यद्य कदास्ति तन्निशि निशा का वान्धकारोदये । आमील्याक्षियुगं निशाप्युपगता देहीति मातुः पुनर्वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥ ६९ ॥ अर्धोन्मीलितलोचनस्य पिबतः पर्याप्तमेकं स्तनं सद्यःप्रस्नुतदुग्धदिग्धमपरं हस्तेन संमार्जतः । मात्रा चाङ्गुलिलालितस्य चुबुके स्मेरायमाने मुखे विष्णोः क्षीरकणाम्बुधामधवला दन्तद्युतिः पातु वः ॥ ७० ॥ गच्छाम्यच्युत[11] दर्शनेन भवतः किं तृप्तिरुत्पद्यते किं त्वेवं विजनस्थयो[12]-

---

१ सुरतानि । २ युधिष्ठिरस्य । ३ यमस्य गृहस्थः, मृत इति यावत् । ४ वत्सतर—। ५ पीडयति । ६ रात्रौ नगररक्षार्थं नियुक्तः । ७ कमलनालवज्झटिति निपीडयितुं शक्या इति भावः । ८ गोपाला गोरसविक्रेतारश्चेति भावः । ९ सावरणे निधानपात्रे । १० पानपात्रम् । ११ हे अच्युत-कृष्ण-वस्तुतस्तु-न च्युतः-मनसाऽपि स्खलितः, मद्दर्शनेन अक्षुब्धमन इति यावत् । १२ एकान्ते स्थितयोः ।

हतजनः संभावयत्यन्यथा । इत्यामन्त्रणभङ्गिसूचितवृथाप्रस्थानखेदालसामाश्लिष्यन्पुलकोत्कराञ्चितवपुर्गोपीं हरिः पातु वः ॥ ७१ ॥ रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितुर्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः । कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां सौमित्रे क धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥ ७२ ॥ कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं कृष्णो[6]ऽहं दयिते, बिभेमि सुतरां कृष्णादहं वानरात् । राधेऽहं मधुसूदनो[7] व्रज लतां तामेव तन्वीमलमित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥ ७३ ॥ पीठे पीठनिषण्णबालकगले तिष्ठन्सगोपालको यन्त्रान्तःस्थितदुग्धभाण्डमवमिद्याच्छाद्य घण्टारवम् । वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन्यः पयः पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत् ॥ ७४ ॥ पद्मे[9] त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति किं करोमि महितैःक्रीतोऽस्मि ते विभ्रमैः । इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः॥ ७५॥ दृष्ट्या केशव गोपरागहृतया[11] किंचिन्न दृष्टं[12] मया तेनात्र स्खलितास्मि नाथ पतितां[13] किं[14] नामनालम्बसे एकस्त्वं विषमेषु खिन्नमनसां[15] सर्वाबलानां[16] गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे[17][18] हरिर्वश्चिरम् ॥ ७६ ॥ केयं भाग्यवती तवोरसि मणी ब्रूषेऽग्रवर्णं[19] विना कृत्वाऽस्याः प्रथमं विना क सहजो वर्णो मणेस्तादृशः । स्त्रीरूपं कथमस्य लिङ्गनियमात्पृच्छामि वध्वाकृतिं मुग्धे त्वत्प्रतिबिम्बमित्यपलपन्राधां हरिः पातु वः ॥ ७७ ॥ यां दृष्ट्वा यमुनातरङ्गिणिनिभं व्यूहो गवां गाहते विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते । उत्तंसाय तमालपल्लवमिति च्छन्दन्ति यां गोपिकाः कान्तिः कालियशासनस्य वपुषः सा पावनी पातु वः ॥ ७८ ॥ श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तनव्यामर्दाद्गलितेऽपि चन्दनरजस्यङ्गे वहन्सौरभम् । कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं बिभ्रत्कामपि वेणुनादरसिको जाराग्रणीः पातु वः ॥ ७९ ॥ कण्ठालिङ्गनमङ्गलं घनकुचाभोगोपभोगोत्सवं श्रोणीसंगमसौभगं च सततं मत्प्रेयसीनां पुरः । प्राप्तुं कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः स्वयं गोपीनामहरद् दुकूलनिचयं कृष्णः स पुष्णातु नः ॥ ८० ॥ कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया सत्यं कृष्ण किमेष आह मुसली[20] मिथ्याऽम्ब पश्याननम् । व्यादेहीति विकासिते च वदने दृष्ट्वा समस्तं जगन्माता यस्य जगाम विस्मयपदं पायात्स वः श्रीपतिः ॥ ८१ ॥ अम्ब श्राम्यसि तिष्ठ गौरसमहं मथ्नामि मन्थानकं प्रालम्ब्य स्थितमीश्वरं[21] सरभसं दीनाननो[22] वासुकिः

---

१ दुष्टो जनः । २ सम्भाषणानामुत्तरोत्तरा रचनाऽऽमन्त्रणभङ्गिः। ३ आश्लेषाभावे रहसि युवान्तिकेऽवस्थाने कलङ्कमन्तरा न कश्चिल्लाभ इति वृथात्वम् । ४कृष्ण-स्वापनार्थं हुंमिति प्रतिवचनमनु पुरातनैतिह्यकथनं यशोदाया इदम् । ५ कपिः, कृष्णश्च । ६ कृष्णवर्णः कपिः, नन्दनन्दनश्च ।७ भ्रमरः, कृष्णश्च ।८ शिक्याभ्यन्तरे । ९ हे लक्ष्मि तथा कमलद्वयरूपे । १० सुन्दरैः । ११ गोपे ( त्वयि ) यो रागोऽनुरागस्तेन हतयेति, गवां परागो धूलिस्तेन हतयेति च । १२ विचारितम् । १३ पतिभावम् च्युतामिति च । १४ इदं वाक्यालङ्कारे । १५ विषमेषुः कन्दर्पः, तेन खिन्नं मनो यासां तादृशीनाम् । तथा उच्चनीचस्थलेषु गन्तुमक्षमतया दुःखितचेतसाम् ।१६सर्वा या अबलाः स्त्रियस्तासामिति, सर्वे येऽबला निर्बलास्तेषामिति च । १७ साभिप्रायाविष्करणांशम् । १८ गवां स्थाने । १९ अग्रः-प्रथमः 'र' इत्यात्मा यो वर्णस्तम् विनेति-रमणीति लब्धम् । २०मुसलोऽस्यास्ति प्रहरणमिति यथोक्तः । बलराम इत्यर्थः ।२१ परमेश्वरम् । २२ समुद्रमथने मन्थानको वासुकिः कृत इति तद्ग्रहणमवलोक्य 'स्यादयं पुनस्तथैव मथितुमुद्यतः' इति मुखे म्लानः ।

सासूयं[1] कमलालया सुरगणः सानन्द[2]मुद्यद्भयं[3] राहुः प्रैक्षत यं स वोऽस्तु शिवदो गोपालबालो हरिः ॥ ८२ ॥ कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् । तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गतेरक्षुण्णो[4]ऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ ८३ ॥ कंसं ध्वंसयते मुरं तिरयते हंसं तथा हिंसते बाणं क्षीणयते बकं लघयते पौण्ड्रं तथा लुम्पते । भौमं क्षामयते बलाद्बलभिदोर्दर्पं पराकुर्वते क्लिष्टं शिष्टगणं प्रणम्रमवते कृष्णाय तुभ्यं नमः ॥ ८४ ॥ रासोल्लासभरेण विभ्रमभृता[5]माभीरवामभ्रुवा[6]मभ्यर्णे[7] परिरभ्य निर्भरमुरः प्रेमान्धया राधया । साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुतिव्याजादुद्भटचुम्बितस्मितमनोहारी हरिः पातु वः ॥ ८५ ॥ साकूतस्मितमाकुलाकुलगलद्धम्मिल्ल[8]मुल्लासितभ्रूवल्लीकमलीकदर्शितभुजामूलार्धदृष्टस्तनम् । गोपीनां निभृतं निरीक्ष्य ललितं काचिच्चिरं चिन्तयन्नन्तर्मुग्धमनोहरो हरतु वः क्लेशं नवः[11] केशवः ॥ ८६ ॥ तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीतस्थानकृतावधानललनालक्षैर्न संलक्षिताः । संमुग्धं[12] मधुसूदनस्य मधुरे राधामुखेन्दौ मृदुस्पन्दं[13] पल्लविताश्चिरं[14] ददतु वः क्षेमं कटाक्षोर्मयः ॥ ८७ ॥ वृष्टिव्याकुलगोकुलावनरसादुद्धृत्य[15] गोवर्धनं बिभ्रद्बल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः । कन्दर्पेण तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ ८८ ॥ राधामुग्ध[16]मुखारविन्दमधुपस्त्रैलोक्यमौलिस्थली[17][18]नेपथ्योचितनीलरत्नमवनीभारावतारक्षमः । स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषश्चिरं[20] कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ ८९ ॥ किं विश्राम्यसि कृष्णभोगिभवने[21] भाण्डीरभूमीरुहि[22] भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् । राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो[23] गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ ९० ॥ सान्द्रानन्दपुरंदरादि[24]दिविषद्वृन्दैरमन्दादरा[25]दानम्रैर्मुकुटेन्द्रनीलमणिभिः संदर्शितेन्दीवरम्[26] । स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं श्रीगोविन्दपदारविन्दमशुभस्कन्दाय[27] वन्दामहे ॥ ९१ ॥ प्रातर्नीलनिचोलमच्युतमुरःसंवीतपीतांशुकं[28][29][30] राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले । व्रीडाचञ्चलमञ्चलं नयनयोराधाय राधानने स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥ ९२ ॥ प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे राधापीनपयोधरस्मरणकृत्कुम्भेन संभेदवान् । पत्रे[31] बिभ्यति

---

१ किमयमन्यां कमलामुद्भावयितुं यतत इति । २ पुना रत्नलाभावसरलाभात् । ३ पूर्वं मम शिरश्छिन्नं सम्प्रति पुनरवशिष्टमप्यङ्गं छेत्स्यति किमिति । ४ अनिष्फलः । ५ केशिनम् । ६ गोप--। ७ निकटे । ८ अतिशयित--। ९ केशबन्धम् । १० गुप्तम् । ११ नूतनः अपरिभुक्तयौवनतया गाढयौवन इत्यर्थः । १२ अत्यव्यक्तम् । १३ मृदुः मृदुलः, अल्प इति यावत्, स्पन्दः किञ्चिच्चलनं, यस्मिन् कर्म्मणि तद् यथा तथेति भावः । १४ वृद्धिं गताः । १५ रक्षणानन्दात् । १६ सुन्दर--। १७ कृष्णत्वात् मधुपातृत्वाच्च भ्रमरसाम्यम् । १८ एवम्भूतं वृन्दावनमिति भावः । १९ वेष-। २० तोषस्य-सन्तोषस्य प्रदोषः रजनी प्रारम्भकालः, तद्रूप इति यावत् । दिने रहःप्रसङ्गासम्भवान्मदनोद्रेकाभावाच्च रजन्यारम्भ एव मदन उद्रिच्यमाने स्त्रीणां तोषाय इति । वर्णसाम्याच्च तथोक्तम् । २१ कृष्णश्चासौ भोगी सर्पो भोक्ता ( जारश्च ) इति तस्य भवने । २२ एतन्नामा वृन्दावने वटतरुः । वटकोटरान्तरे भोगिवासः, निबिडतया विलासिजनावासश्चेति यथोक्तम् । २३ पिदधानस्य । २४ इन्द्रादि--। २५ अतिशयितप्रेम्णा । २६ सन्दर्शितमिन्दीवरं यत्रेति नीलसाम्यात् । २७ अशुभविनाशाय । तुमर्थेयं चतुर्थी । तथा च तं प्रसादयितुमिति भावः । २८ वक्षम् । २९ धृत-। ३० वसन । ३१ वाहने, कुवलयापीड इति यावत् ।

मीलति क्षणमपि क्षिप्रं तदालोकनाद्व्यामोहेन जितं जितं जितमभूद्दैयालोलकोलाहलः ॥ ॥ ९३ ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः । इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वामाञ्चलं राधायाः स्तनकोरकोपरि लसन्नेत्रो हरिः पातु वः ॥ ९४ ॥ वामांसस्थलचुम्बिकुण्डलरुचा जातोत्तरीयच्छविं वंशीगीतिभवत्रिभङ्गवपुषं भ्रूलास्यलीलापरम् । किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालकं राधादिप्रमदाशतावृतमहं वन्दे किशोराकृतिम् ॥ ९५ ॥ अन्तर्मोहनमौलिघूर्णनवलन्मन्दारविस्रंसनः स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् । दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतु वोऽश्रेयांसि[3] वंशीरवः ॥ ९६ ॥ मौलौ केकिशिखण्डिनी[4] मधुरिमाधाराधरे वंशिनी पीतांसे वनमालिनी हृदि लसत्कारुण्यकल्लोलिनी । श्रोण्यां पीतदुकूलिनी चरणयोर्व्यत्यस्तविन्यासिनी लीला काचन मोहनी विजयते वृन्दावनावासिनी ॥ ९७ ॥ मालाबर्हमनोज्ञकुन्तलभरां[5] वन्यप्रसूनोक्षितां शैलेयागुरुसक्तचित्रतिलकां शश्वन्मनोहारिणीम् । लीलावेणुरवामृतैकरसिकां लावण्यलक्ष्मीमयीं बालां बालतमालनीलवपुषं वन्दे परां देवताम् ॥ ९८ ॥ अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं किंचित्कुञ्चितकोमलाधरपुटं साचि[6] प्रसारीक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं ध्याये जगन्मोहनम् ॥ ९९ ॥ नीलाम्भोरुहकोशकोमलतनुं स्मेराननं मालिनं सुस्निग्धं दधतं दुकूलयुगलं वाग्वैभवस्यास्पदम्[7] । स्वीयानामुदितामृतेन हृदयं संतर्पयन्तं सतां राधाकेलिकथासु संततरतं श्रीकृष्णचन्द्रं नुमः ॥१००॥ अस्मिन्कुञ्जे विनापि प्रचलितपवनाद्वर्तते कोऽपि नूनं पश्यामः किं न गत्वेत्यनुसरति गणे भीतभीतेऽर्भकाणाम् । तस्मिन्राधासखो वः सुखयतु विलसल्लीलया कैटभारिर्व्यातन्वानो मृगारिप्रबलघुरघुरारावरौद्रान्निदानान् ॥ १०१ ॥ अङ्गुल्या कः कपाटं प्रहरति कुटिले माधवः किं वसन्तो[8] नो चक्री[9] किं कुलालो नहि धरणिधरः[10] किं द्विजिह्वः फणीन्द्रः । नाहं[11] घोराहिमर्दी[12] किमुत खगपतिर्नो[13] हरिः[14] किं कपीन्द्र इत्येवं सत्यभामाप्रतिवचनजितःपातु वश्चक्रपाणिः॥१०२॥ वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवःस्वः सृजन्ती नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि । विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया माया पायादपायादविहितमहिमा कापि पैताम्बरी वः ॥ १०३ ॥ नामोदस्ताखिलामो दमनियमयुजां यः प्रकामोदवाहश्यामो दर्पाढ्यधामोदयमिलितयशोधारया मोदते यः । वामोदन्यासदामोदरतरलदृशां दत्तकामोदयो यः सामोदः श्रीललामो दलयतु दुरितं सोऽत्र दामोदरो वः ॥ १०४ ॥

## बलभद्रस्तुतिः ।

निष्पात्याशु हिमांशुमण्डलमधः पीत्वा तदन्तं सुधां कृत्वैनं चषकं हसन्निति हलापानाय कौतूहलात् । भो देव द्विजराजि मादृशि, सुरास्पर्शोऽपि न श्रेयसे मां मुञ्चेति तदार्थितो हलधरः पायादपा-

---

१ मृत्युं गच्छति सति । २ चञ्चल- । ३ श्रेयसो विरुद्धानि अमङ्गलानीत्यर्थः । ४ चन्द्रकशोभितेति भावः । ५ बर्हाणां मनोज्ञता श्यामत्वात् मसृणत्वात् स्फुरद्रूपत्वाच्च । ६ तिर्यक् । ७ वाग्मिप्रवरत्वात् । वाग्वैभवानास्पदमिति पाठे तु वाचां वैभवं यत्र न प्रभवेत्, वर्णनीयस्य ततोऽप्यतिशयितत्वात् तादृशमित्यर्थः । ८ माया लक्ष्म्या धवः पतिः, वसन्तश्च । ९ सुदर्शनचक्रधरः । घटनिर्माणयन्त्रं चक्रमस्यास्तीति तु कुलालः । १० धरणेर्धरः, वराहावतारेणेति विष्णुः, शेषश्च । ११ नाहं स्वयं फणी, किन्त्वित्यर्थः । १२ कालिय-, भयावहसर्प- इति च । १३ गरुडः । १४ विष्णुः, वानरश्च ।

याज्जगत् ॥ १ ॥ फालाग्रेण समुद्धरन् कुरुपुरं दत्तप्रमादं हरन् स्मारंस्मारमनादरोक्तिमविदां तां तां क्रिरन् सुस्मितम् । संहारोऽसमये कुतोऽयमिति तैर्निर्मुक्तदर्पैः स्तुतः शान्तो दीनदयानिधिः स भगवान् पायात् प्रलम्बान्तकः ॥ २ ॥ प्रेमोन्नामितरेवतीमुखगतामास्वाद्य कादम्बरीमुन्मत्तं क्वचिदुत्पतत्क्वचिदपि भ्राम्यत्क्वचित्प्रस्खलत् । रक्तापाङ्गमधीरलाङ्गलमलिश्यामाम्बराडम्बरं क्लेशं नः कवलीकरोतु सकलं रामाभिरामं महः ॥ ३ ॥ उष्णालु क्वचिदर्कधामनि मनाङ्निद्रालु शीतानिले हालानां गृहयालु चुम्बदसह्कलुञ्जालु जायामुखम् । नित्यं निष्पतयालु तिर्यगवनीशय्याशयालु क्षणं गीतेभ्यः स्पृहयालु धाम धवलं दीने दयालु श्रये ॥ ४ ॥

## रुक्मिणीस्तुतिः ।

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजितत्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः । बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रात्मचक्षुर्दधत्स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥ १ ॥

## राधास्तुतिः ।

राधा पुनातु जगदच्युतदत्तचित्ता मन्थानमाकलयती दधिरिक्तपात्रे । यस्याः स्तनस्तबकचूचुकलोलदृष्टिर्देवोऽपि दोहनधिया वृषभं दुदोह ॥ १ ॥ सुधाधाम्नः कान्तिस्तव वदनपङ्केरुहगुणैर्जितेव म्लानत्वं व्रजति सहसा प्राणदयिते । वदत्येवं कान्ते दिवसविरहातङ्कचकिता तदङ्गे संलग्ना तव दिशतु राधा प्रियशतम् ॥ २ ॥

## नन्दकस्तुतिः ।

सान्द्रां मुदं यच्छतु नन्दको वः सोल्लासलक्ष्मीप्रतिबिम्बगर्भः । कुर्वन्नजस्रं यमुनाप्रवाहसलीलराधास्मरणं मुरारेः ॥ १ ॥

## वेणुस्तुतिः ।

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः । तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥१॥

## बुद्धस्तुतिः ।

षट्[२]चक्रे क्रम[३]भावना[४]परिगतं हृत्पद्ममध्यस्थितं सम्पश्य[५]न्शिव[६]रूपिणं लयवशादात्मानमध्याश्रितैः । युष्माकं मधुसूदनो बुधवपुर्धारी स भूयान्मुदे यस्तिष्ठत्कमलासने[११] क्लैतरुचिर्बुद्धैकलिङ्गाकृतिः[१३] ॥ १ ॥ रेतोरक्तमलान्यमूनि भविनां विण्मूत्रपूर्णोदराण्यालोक्यैव कलेवराणि विगलत्तोयार्द्ररन्ध्राणि यः । मायाजालनियन्त्रितानि घृणया नोन्मीलयत्यक्षिणी निर्व्याजप्रणिधाननिश्चलमतिर्बुद्धयै स बुद्धोऽस्तु वः ॥ २ ॥ ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं पश्यानङ्गशरातुरं जनमिमं त्राताऽपि

---

१ शब्दविशेषः । २ आधार-मणिपूरका-धिष्ठाना-ज्ञा-बिन्दु-लयभेदात् षट् चक्राणि-तदाकाराः शरीरान्तःप्राणावरोधनप्रदेशविशेषा भवन्तीति यथोक्ते । ३ परम्परा- । ४ वासना- । ५ व्याप्तम् । ६ ध्यानमुद्रया । ७ मङ्गल- । ८ दृश्यभावनानिवृत्तेः प्रभावात् । ९ स्वरूपम् । १० प्राप्तः । ११ 'जङ्घाया मध्यभागे तु संश्लेषो यत्र जङ्घया । पद्मासनमिति प्रोक्तं योगासनविवेकिभिः ॥' इत्युक्ते पद्मासने । १२ सुप्रसादं प्राप्तः । १३ बुद्धा एकलिङ्गाकृतिर्येन तादृक् । अपरस्य प्रत्ययस्य तदानीमभावादेकत्वम् । १४ भवः संसारस्तद्वासनेति यावत् येषामस्तीति तेषाम् । १५ निष्कपट- ।

नो रक्षसि । मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमाञ्छश्वन्मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ ३ ॥ निःशेषाऽपि त्रिलोकी विनयपरतया सन्नमन्ती पुरस्ताद् यस्याङ्घ्रिद्वन्द्वसक्ताङ्गुलिविमलनखादर्शसंक्रान्तदेहा । निर्भीतिस्थानलीना भवदभवमहारातिभीत्येव भाति श्रीमान्सर्वज्ञदेवः स भवतु भवतां शर्मणे कर्मभक्तः ॥ ४ ॥ बद्ध्वा पद्मासनं यो नयनयुगमिदं न्यस्य नासाग्रदेशे धृत्वा मूर्तौ च शान्तौ शमरसमिलितौ चन्द्रसूर्यालयवातौ पश्यन्नन्तर्विशुद्धं किमपि च परमं ज्योतिराकारहीनं सौख्याम्भोधौ निमग्नः स दिशतु भवतां ज्ञानबोधं बुधोऽयम् ॥ ५ ॥ कामेनाकृष्य चापं हतपटुपटहं वल्गुभिर्मारवीरैर्भ्रूभङ्गोत्क्षेपजृम्भास्मितललितदृशा दिव्यनारीजनेन । सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन ध्यायन्यो योगपीठादचलित इति वः पातु दृष्टो मुनीन्द्रः ॥ ६ ॥

## कल्किस्तुतिः ।

उद्यतकरकरवालः शकतिमिरध्वंसने महानिपुणः । कल्किहरिर्वः पायादपायतः कलिनिशान्तोत्थः ॥ १ ॥ यवनीनयनाम्बुधोरणीभिर्धरिणीनामपनीय तापवह्निम ॥ सुकृतद्रुमसेकमाचरन्तं धृतकल्कं प्रणमामि निर्विकल्पम् ॥ २ ॥ प्रेङ्खद्वाजितरङ्गमुन्मदगजग्राहप्रगल्भं भटव्यावल्गत्स्फुटपुण्डरीकनिलयं डिण्डी[२]पिण्डावलिम् । म्लेच्छानीकमहार्णवं सुविपुलं सङ्ग्रामकल्पावधौ यश्चौर्वाग्निरिवाभवदवतु स वः कल्कानि[३] कल्की हरिः ॥ ३ ॥

## सूर्यस्तुतिः ।

आदौ रक्तं पुना रक्तं मध्य उज्ज्वलभास्वरम् । दुर्निरीक्ष्यप्रभावन्तं दृश्यं द्रष्टारमाश्रये ॥ १ ॥ खण्डितानेत्रकञ्जालिमञ्जुरञ्जनपण्डिताः । मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भानवः ॥ २ ॥ शुकतुण्डच्छविसवितुश्चण्डरुचः पुण्डरीकवनबन्धोः । मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥ ३ ॥ प्राचीकुङ्कुमतिलकं पूर्वाचलरोहणैकमाणिक्यम् । त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥ ४ ॥ कटुभिरपि कठोरचक्रवाकोत्करविरहज्वरशान्तिशीतवीर्यैः । तिमिरहतमयं महोभिरञ्जयति जगन्नयनौघमुष्णभानुः ॥ ५ ॥ यद्बिम्बमम्बरमणिर्यदपां प्रसक्तिर्नक्तं निषिञ्चति यदग्निशिखासु भासः । ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखाः पूषा पुराणपुरुषः स नमोऽस्तु तस्मै ॥ ६ ॥ यो रक्ततामतितरामतुलो दधानो दिक्प्रौढदारनृहमोहनवासवासः । योषिद्वयीपतिविडम्बनभृत्स शश्वत्पायादपायसमुदायहरो रविर्नः ॥ ७ ॥ ब्रह्माण्डसंपुटकलेवरमध्यवर्ति चैतन्यपिण्डमिव मण्डलमस्ति यस्य । आलोकितोऽपि दुरितानि निहन्ति यस्तं मार्तण्डमादिपुरुषं प्रणमाणि नित्यम् ॥ ८ ॥ निपीतध्वान्ताय प्रसमरकरायोग्रमहसे निकामं कामानां वितरणविनोदव्यसनिने । समस्तप्रत्यूहप्रशमनकृते श्रीदिनकृते नमस्तस्मै यस्मै स्पृहयति समस्ताम्बुजततिः ॥ ९ । सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणाभिल्लीपल्लवशङ्कया विचिनुते सान्द्रद्रुमद्रोणिषु । कान्ताकुङ्कुमकाङ्क्षया करतले मृद्नन्ति लग्नं च यत्तत्तेजः प्रथमोद्भवं भ्रमकरं सौरं चिरं पातु वः ॥ १० ॥ एकस्मिन्नयने भृशं तपति यः काले स दाहक्रमो येनातन्यत

---

१ शरीरे । २ फेन- । ३ विनाशयतु । ४ दुरितानि । ५ 'पार्श्वमेति प्रियो यस्या अन्यासम्भोगपीडितः । सा खण्डिता' इत्युक्तानां नायिकानां यानि नेत्रकञ्जानि नयनकमलानि तेषामालिः पङ्क्तिस्तस्याः । ६ पूर्वस्या दिशः ।

यत्प्रकाशसमयेनैषां पदं दुर्लभम् । सा व्योमावकाशस्य यन्न विदिता लोके गतिः शाश्वती श्रीसूर्यः सुरसेवितोऽपि हि महादेवः स नस्त्रायताम् ॥ ११ ॥ जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं रक्तैः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य । आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ १२ ॥ भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये । कालाकारान्धकारानननपतितजगत्साध्वसध्वंसकल्पाः कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥ १३ ॥ साटोपव्योमहट्टोषितरजनिवणिङ्नायकोन्मुक्ततारा मुक्ताहारापहारात्तरलखगरवप्रोत्थिता कीर्तिशान्त्यै । कर्षन्नम्भोजकुम्भोदरकुहरबहिर्निःसरत्षट्पदालीकालव्यालीं करेणाकलयतु दिनकृत्कल्मषोन्मूलनं वः ॥ १४ ॥ किं छत्रं किं नु रत्नं तिलकमुत तथा कुण्डलं कौस्तुभो वा चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिद्विषिदेहे । ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ १५ ॥ शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः । घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धिसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ १६ ॥ सिन्दूराणीव सीदत्क्षपणकुलवधूमूर्ध्नि ये संचरन्तः प्रेक्ष्यन्ते दिक्षु शैलाः शिखरभुवि लसत्पद्मरागाङ्कुरा यैः । धुन्वन्ते ध्वान्तधाराः सह दुरितचयैर्दूरदृश्याः सुदृश्याः पान्तु त्वां पद्मबन्धोरकरणकिरणाः पूरणाः पद्मबन्धोः ॥ १७ ॥

## सूर्याश्वस्तुतिः ।

निरालम्बमपि प्राप्याक्रामन्तोऽनुदिनं जगत् । अनूरोर्यमनायत्ताः श्रिये सन्तु रवेर्हयाः ॥ १ ॥ अवतु नः सवितुस्तुरगावली समतिलङ्घिततुङ्गपयोधरा । स्फुरितमध्यगतारुणनायका मरकतैकलतेव नभःश्रियः ॥ २ ॥

## चन्द्रस्तुतिः ।

नित्यं कुवलयोल्लासवर्धनैकपरायणः । आदधत्सर्वतः शान्तिमेष भाति द्विजेश्वरः ॥ १ ॥ लालयन्तमरविन्दवनानि क्षालयन्तमभितो भुवनानि । पालयन्तमथ कोककुलानि ज्योतिषां पतिमहं महयामि ॥ २ ॥ रविमावसते सतां क्रियायै सुधया तर्पयते सुरान्पितॄंश्च । तमसां निशि मूर्छतां विहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ ३ ॥ स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भवश्च्योतीपतयालुदीधितिसुधासारस्तुषारद्युतिः । पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे देवः प्राप्त-

१ जम्भस्य तदाख्यस्य दैत्यस्यारातिः शत्रुः इन्द्र इत्यर्थः । २ आपण-। ३ शिरोमणिः। ४ कमलम्। ५ राज्यहर्तृत्वेन बलिद्वेषित्वं भगवतः। ६ गलितनासाचरणहस्तान्। ७ व्रणपीडितैः। ८ अङ्गैः। उपलक्षितानिति शेषः। जटाभिस्तापस इतिवदित्थंभूतलक्षणार्थेयं तृतीया। ९ तिग्मरश्मेः, सवितुरित्यर्थः। १० निबिड-। ११ किरणाः। १२ पाप-। १३ मेघ-स्तन इति च। १४ अरुणो नायको यस्या इति। अरुणो नायको (हार) मध्यमणिर्यस्या इति च। १५ मरकतवर्णेत्यर्थः। सूर्याश्वा हि हरितवर्णतया मरकताकारा इति यथोक्तम्। १६ स्वर्भानुः राहुः, तस्य प्रतिवारं-पुनः पुनर्यत् पारणं भोजनं तेन मिलन् यो दन्तौघः रदनसमुदायः स एव यन्त्रं तस्मादिति। १७ रन्ध्र-। १८ पतनशील-। १९ मदन-।

सहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ ४ ॥ भो भो चन्द्र ! कलानिधानमसि यत्त्वां तत्र पूर्णं सदा द्रष्टुं वाञ्छति लोकतापनपरस्तेजस्विताग‌र्भभृत् । तत्स्थाने द्विजराज! किन्तु भवता हेया न सा शान्तता स्वोल्लासाय कला विलासय यतः सोऽस्तं स्वयं पत्स्यते ॥ ५ ॥

## पृथिवीस्तुतिः।

अयि सर्वसहे देवि ! त्वां नमामि पुनः पुनः । यदिमं दुर्भरं भारं वहन्त्यपि न खिद्यसि ॥ १ ॥ स्वर्गौकोभिरदोनिवासिपुरुषारब्धातिशुद्धाध्वरस्वाहाकारवषट्क्रियोत्थममृतं स्वादीय आदीयते । आम्नाय-प्रवणैरलंकृतिजुषेऽमुष्मै मनुष्यैः शुभैर्दिव्यक्षेत्रसरित्पवित्रवपुषे देव्यै पृथिव्यै नमः ॥ २ ॥ नाना-म्भोनिधयः शिलोचयगणा हिंस्राश्च सिंहादयो बाधन्ते भवतीं सदैव वसुधे मूर्तिः क्षमाया मता । किं ब्रूयामितरद्भवन्ति पतयो येऽमी भवत्यामतः सैन्यौघैर्बत तेऽपि भूरि सततं बाधन्त एवोद्धताः ॥ ३ ॥

इति श्रीसुभाषितसुधारत्नभाण्डागारे प्रथमं देवस्तुति-मयं भाण्डं समाप्तम् ।

---

१ स्वर्गवासिभिः ।



# अथ द्वितीयम्भाण्डम् ।

## कविभारतीस्तुतिः ।

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्म्मितिमादधती भारती कवेर्जयति ॥ १ ॥

## सुभाषितस्तुतिः ।

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती । तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम् ॥ १ ॥ सुभाषितेन गीतेन युवतीनां च लीलया । मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥ २ ॥ सुभाषितमयद्रव्यसंग्रहं न करोति यः । प्रस्तावयज्ञे[1] संप्राप्ते कां[2] प्रदास्यति दक्षिणाम् ॥ ३ ॥ संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे । सुभाषितरसास्वादः संगतिः सुजने जने ॥ ४ ॥ सुभाषितसुधां पीत्वा कस्य तृप्तिर्न जायते । तत्त्वग्रहणसामर्थ्यहीनोऽपि क्षणमुन्मनाः ॥ ५ ॥ सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः । विनापि कामिनीसङ्गं कवयः सुखमेधते ॥ ६ ॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ ७ ॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् । इत्यादिगुणरत्नानां संग्रही नावसीदति[3] ॥ ८ ॥ संगीतं चैव साहित्यं सरस्वत्याः स्तनद्वयम् । एकमापातमधुरमन्यदालोचनामृतम्[4] ॥ ९ ॥ शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी । साहित्यरसमाधुर्यं शंकरो वेत्ति वा न वा[5] ॥ १० ॥ द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां[6] गता । सुभाषितरसस्याग्रे सुधा भीता दिवं गता[7] ॥ ११ ॥ संसदि तदेव भूषणमुपकारकमवसरे धनं मुख्यम् । सूक्तं दधति सुवर्णं[8] कल्याणमनर्घ्यमिह धन्याः ॥ ॥ १२ ॥ कथमिह मनुष्यजन्मा संप्रविशति सदसि विबुधगमितायाम्[9] । येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः ॥ १३ ॥ अकलितशब्दालंकृतिरनुकूला स्खलितपदनिवेशाऽपि । अभिसारिकेव कथयति सूक्तिः[10] सोत्कर्षशृङ्गारा[11] ॥ १४ ॥ आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः । अकलितरसालमुकुलो न कोकिलः कलम्[12] उदञ्चयति[13] ॥ १५ ॥ यस्य वक्त्रकुहरे[14] सुभाषितं नास्ति नाप्यवसरे प्रजल्पति । आगतः सदसि धीमतामसौ लेप्यनिर्मित[15] इवावभासते ॥ १६ ॥ सुभाषितं हारि विशत्यधोगलान्न दुर्जनस्यार्करिपो[16]रिवामृतम् । तदेव धत्ते हृदयेन सज्जनो हरिर्महोर[17]-

---

१ प्रवचनावसररूपेऽभिलषणीयत्वेन यज्ञरूपे । २ किमात्मिकाम्, प्रकरणानुरूपभाषणानभिज्ञत्वे तादृशोत्तररूपदक्षिणादानाक्षमत्वात् । ३ न दुःखितो भवति । ४ आलोचने-विचारे, तत्त्वगवेषणेऽमृतम् । यद्वा--आलोच्यते अनेनेति मनः, तस्य तृप्तिकारितयाऽमृतम् । ५ इदं संशयोन्नयनं तस्यापि अज्ञानतां द्योतयते । युज्यते च अन्यथा गानमात्रासक्त्यसम्भवात् । ६ पाषाणवत्कर्कशतयाऽनादरणीयताम् । ७ प्रतिष्ठितस्य हि अभिनवाभिभवावसरप्राप्तेऽभिभववञ्चनाय स्वयं कुत्रापि निलयनमिति स्वर्गे गमनमेव स्वरूपनिह्नवनम् । ८ शोभनाक्षरं, हिरण्यं च । ९ प्रज्ञपूर्णायाम् । १० सुभाषितम् । ११ सोत्कर्षः शृङ्गारः--तदाख्यो रसः यत्र, शृङ्गारो नेपथ्यं यस्या इति च । १२ मधुरम् । १३ उन्नयति । १४ मुखविवरे । १५ लेपनीयवस्तुरचितसमः । १६ राहोः । १७ कौस्तुभरत्नम् ।

त्नमिवातिनिर्मलम् ॥ १७ ॥ नायं प्रयाति विकृतिं[1] विरसो[2] न यः स्यान्न क्षीयते बहुजनैर्नितरां निपीतः ॥ जाड्यं[3] निहन्ति रुचिमेति करोति तृप्तिं नूनं सुभाषितरसोऽन्यरसातिशायी ॥ १८ ॥ किं हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः । पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं यन्निष्पीडितपार्वणा[4]मृतकरस्पर्धोपमाः सूक्तयः ॥ १९ ॥ खिन्नं[5] चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वान्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति । अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ २० ॥

## विद्यास्तुतिः ।

अपूर्वः कोऽपि कोशो[6]ऽयं सरस्वत्या विराजते । व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १ ॥ विद्यैव विपदम्भोधेस्तितीर्षूणां सुसाधनम् । न तु सम्पत्तदा साऽपि कचिदन्तर्हिता भवेत् ॥ २ ॥ अमृतं भुज्यते विद्ये भवतीमाश्रितैः परम् । अन्ये तु बत दूयन्ते संसरन्त इतस्ततः ॥ ३ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥४॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ ५ ॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता । कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ६ ॥ ज्ञातिभिर्वण्ट्यते नैव चौरेणापि न नीयते । दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ७ ॥ संयोजयति विद्यैव नीचगापि नरं सरित् । समुद्रमिव दुर्धर्षं नृपं भाग्यमतःपरम् ॥ ८ ॥ विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये[11] । आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ९ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना । न गुह्यगोपने शक्तं न च दंशनिवारणे ॥१०॥ सद्विद्या यदि का चिन्ता वराकोदरपूरणे । शुकोऽप्यशनमाप्नोति हरे राम इति ब्रुवन् ॥ ११ ॥ वसुमतीपतिना नु सरस्वती बलवता रिपुणापि न नीयते । समविभागहरैर्न विभज्यते विबुधबोधबुधैरपि सेव्यते ॥ १२ ॥ श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि । संस्कारशौचेन नरं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ १३ ॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि । व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ १४ ॥ मातेव रक्षति पितेव हिते नियुङ्क्ते[13] कान्तेव चापि रमयत्यपनीय खेदम् । लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या ॥ १५ ॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः । विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥ १६ ॥ विद्ये ह्यतरासि किं नु कृपणं संभावनैर्लज्जसे सन्त्यन्ये तव तोषणे हितधियो धन्या वदान्या भुवि । कान्तानां कुचकुम्भकौशलरुचां नो हानिरेतावता षण्ढानां हृदयेऽपि यत्प्रणयतेर्नानङ्गरागोदयः ॥ १७ ॥ विद्या नाम नरस्य कीर्तिरतुला भाग्यश्रये चाश्रयो धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा । सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं तस्मादन्यमुपेक्ष्य सर्वविषयं

---

१ रूपान्तरम् । २ शृङ्गाराद्यन्यतमरसशून्यः, आस्वादशून्यश्च । ३ जडताम्, (अकर्मण्यताम्) मूढतां च । ४ शर्करादिस्वादम् । ५ वस्त्रैः, उपलक्षणेन तत्सदृशैरन्यैश्च वस्तुभिः । ६ पूर्णचन्द्र- । ७ पुत्रशोकाद्युद्विग्नम् । ८ विद्यारूपः । ९ पाठनरूपेण दानेन । १० अनुत्तमं द्रव्यमित्याहुरित्यर्थः । ११ ज्ञानाय । १२ पामरकुक्षि- । १३ नियुक्तं कुरुते । १४ अतिशुभम् ।

विद्याधिकारं कुरु ॥ १८ ॥ विद्या लोचनमद्भुतं परपदं पश्यन्ति यद्वैभवाद् विद्यैका तरणिर्दृढा भवमहाऽम्भोधिं तितीर्षोः कृते। विद्यैवापचयात् परेह विभुता यां लब्धवान् स्यात् कृती किं ब्रूयां यदि साधनं ननु दृढं विद्यैव नान्यत् क्वचित् ॥ १९ ॥

## कवितास्तुतिः।

कविता वनिता कस्य न मोदाय सचेतसः। रस एव सदा यस्या नरीनर्तीव सर्वतः ॥ १ ॥ कान् पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि। किं वा काव्यरसः स्वादुः किंवा स्वादीयसी सुधा ॥ २ ॥ निरवद्यानि[1] पद्यानि यद्यनाढ्यस्य का क्षतिः। भिक्षुकक्षे विनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥ ३ ॥ याता यान्ति च यातारो लोकाः शोकाधिका भुवि। काव्यसंबन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥ ४ ॥ नवोक्तिर्जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः। विकटाक्षरसम्बन्धः कृत्स्नमेकत्र दुष्करम् ॥ ५ ॥ सद्भिर्भाव्ये हिते काव्ये वृथा दुर्जनगर्जनम्। चण्डीशाङ्कीकृते चन्द्रेऽरुंतुदैः[2] किं विधुंतुदैः[3] ॥ ६ ॥ त एव पदविन्यासास्ता एवार्थविभूतयः। तथापि नव्यं भवति काव्यं ग्रथनकौशलात् ॥ ७ ॥ सरसापि कवेर्वाणी हरिनामाङ्किता यदि। सादरं गृह्यते तज्ज्ञैः शुक्तिर्मुक्तान्विता यथा ॥ ८ ॥ काव्यस्याम्रफलस्यापि कोमलस्येतरस्य[4] च। बन्ध[5]च्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ ९ ॥ शब्दशक्त्यैव कुर्वाणा सर्वदानवनिर्वृतिम्[6]। काव्यविद्या[7] श्रुतिगता स्यान्मृत[8]स्यापि जीवनी ॥ १० ॥ श्लिष्टा[9] सभङ्गा[10] सद्वर्ण्या निर्दोषा सद्गुणा मृदुः। नानाभङ्गीविलासा चेत्कृति[11]र्विकृति[12]रन्यथा ॥ ११ ॥ धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च। करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥ १२ ॥ ध्वनि[13] पदग्रह[14]परं मदयति हृदयं न वा न वा श्रवणम्। काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम् ॥ १३ ॥ अविदितगुणापि सुकवेर्भणितिः कर्णेषु किरति[15] मधुधाराम्। अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ १४ ॥ ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम्। पुष्णाति कमलमम्भो लक्ष्म्या तु रविर्नियोजयति ॥ १५ ॥ कृतमन्दपदन्यासा[16] विकच[17]श्रीश्चारु[18]शब्दभङ्गवती। कस्य न कम्पयते कं[19] जरेव जीर्णस्य सत्कवेर्वाणी ॥ १६ ॥ सरसा सालंकारा सुपदन्यासा सुवर्णमयमूर्तिः। आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥ १७ ॥ सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि। कविहृदयं विट[20]हृदयं सरलं तरलं च सत्वरं भवति ॥ १८ ॥ भ्रमरहिता[21] सा कचवत्स्त्रीणां कुचवच्च सरसहिता[22]। लसद[23]क्षरपीयूषाधरवत्कविता महात्मनां जीयात् ॥ १९ ॥ सत्पात्रोपन-

---

१ निर्दोषाणि। २ मर्मपीडकः। ३ राहुः। ४ अकोमलस्य। ५ रचना-। ६ 'सर्वदा' इति 'नवनिर्वृतिम्' इति, 'सर्वदाननवनिर्वृतिम्' इति वा पदच्छेदः। ७ सुधेवेति शेषः। ८ मृतप्रायस्य। ९ श्लेषालंकृता। १० भङ्गैः पदच्छेदविशेषैः (अनेकार्थपरतया) सह वर्त्तमानेति यथोक्ता। ११ कविता। १२ कवितापरिपन्थिनी। १३ कवनमार्गे। १४ सुप्तिङन्तरूपशब्दोपादाने प्रवृत्तम्। १५ वर्षति। १६ कृतो मन्दं विवेकसापेक्षं पदन्यासो सुप्तिङन्तरचना यत्र तादृशी। कृतो मन्दं शनैः शनैः चरणार्पणं यया सेति च। १७ विकसितशोभा, विगतकच (केश) शोभेति च। १८ चारवो ये शब्दास्तेषां भङ्गो विभागोऽस्यामस्तीति तथोक्ता। चारुर्यः शब्दस्तस्य भङ्ग (स्खलन) वतीति च। १९ मस्तकम्। २० जार-। २१ भ्रमरेभ्यो हिता श्रेयःसमर्पिका, भ्रमेण रहितेति च। २२ सरैः स्रग्भिः सह वर्त्तमानेति सरसेभ्यः सहृदयेभ्यो हितेति च। २३ लसत उल्लसत् (वर्धमानं) यदक्षरम् अविनाशि (अव्ययम्) पीयूषम् अमृतं, यस्याः सा।

योचितसत्प्रतिबिम्बाभिनववस्तु[1] । कस्य न जनयति हर्षं सत्काव्यं मधुरवचनं च ॥ २० ॥ सत्सूत्रसंविधानं[2] सदलंकार[3] सुवृत्तम[4]च्छिद्रम्[5] । को धारयति न कण्ठे सत्काव्यं माल्यमर्घं च ॥ २१ ॥ यदसेवनीयमसताम[6]मृतप्रायं सुवर्णविन्यासम्[7] । सुरसार्थमयं[8] काव्यं त्रिविष्टपं वा समं विद्मः ॥ २२ ॥ सत्कविरसनाशूर्पी[9] निस्तुषतर[10]शब्दशालिपाकेन । तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥ २३ ॥ काव्यस्याक्षरमै[11]त्रीभाजो न च कर्कशा[12] न च ग्राम्याः[13] शब्दा अपि पुरुषा अपि साधव एवार्थबोधाय ॥ २४ ॥ अन्तर्गूढा[14]नर्था[15]नव्यञ्जयतः[16] प्रसा[17]दरहितस्य । संदर्भस्य[18] नदस्य च न रसैः[19] प्रीत्यै रसज्ञानाम् ॥ २५ ॥ आन्तरमिवापि बहिरिव व्यञ्जयितुं रसमशेषतः सततम् । असती सत्कविसूक्तिः काचघटीति त्रयं वेद ॥ २६ ॥ न ब्रह्मविद्या न च राज्यलक्ष्मीस्तथा यथेयं कविता कवीनाम् । लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोति ॥ २७ ॥ अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः । वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥ २८ ॥ सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः । न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥ २९ ॥ अर्थो गिरामपि हितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः । नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ॥ ३० ॥ रे रे खलाः शृणुत मद्वचनं समस्ताः स्वर्गे सुधास्ति सुलभा न तु सा भवद्भिः । कुर्मस्तदत्र भवतामुपकारकारि काव्यामृतं पिबत तत्परमादरेण ॥ ३१ ॥ वाणी ममैव सरसा यदि रञ्जयित्री न प्रार्थये रसविदामवधानदानम् । सायंतनीषु मकरन्दवतीषु भृङ्गाः किं मल्लिकासु परमन्त्रणमारभन्ते ॥ ३२ ॥ आख्यातनामरचनाचतुरस्रसंधिसद्भावलंकृतिगुणं सरसं सुवृत्तम् । आसेदुषामपि दिवं कविपुङ्गवानां तिष्ठत्यखण्डमिह काव्यमयं शरीरम् ॥ ३३ ॥ सरसपरिषत्कर्णश्राव्यं कवित्वरसायनं विरसमनसां नेतुं नेहामहे श्रवणाङ्कितम् । मृगमदरसं बिम्बौष्ठीनां कठोरकुचोचितं जघननिकटे क्लिन्नं लिम्पेज्जरन्महिषस्य कः ॥ ३४ ॥ अमृतजलधेः पायं पायं पयांसि पयोधरः किरति करकास्ताराकारा यदि स्फटिकावनौ । तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम्[20] ॥ ३५ ॥ समुल्लासो

---

१ सत् यत् पात्रं तत्र य उपनयः स्थापनं तस्योचितं सत् प्रतिबिम्बं प्रतिफलनं सम्यगवबोध इति यावत् । तदेवाभिनवं लोकेऽन्यत्रासत्त्वान्नूतनं ( लोकोत्तरं ) वस्तु, तद्रूपम् । २ सद्भिः पाणिनीयैः सूत्रैः संविधानं यस्येति, सता सूत्रेण संविधानं यस्येति, सतः सूत्रस्य संविधानं यत्रेति वा । ३ सन्तः विद्यमानाः, अलङ्कारा अनुप्रासोपमादयो यस्मिन्, सन् अलङ्कारः गुम्फनं यस्मिन् यस्येति वा । ४ सुन्दराणि वृत्तानि छन्दांसि यस्मिन्निति, सुघटितं च । ५ निर्दोषम्, निबिडतया गुम्फितं चाव्रणं च । ६ अमृततुल्यम्, अमृतातिशयितं च । ७ सुवर्णानां शोभनानां वर्णानां विन्यासो यत्रेति, सुवर्णस्य विन्यासो घटना यत्रेति च । ८ शोभनशृङ्गारादिबहुलं, सुराणां सार्थेन ( समूहेन ) प्रचुरं च । ९ तुषनिःसारणसाधनपात्रविशेषः । १० निस्तुषतरा तुषसदृशैर्दोषैरेकपदं शून्या ये शब्दास्त एव शालयो धान्यविशेषास्तेषां पाकस्तेन । शालिपक्षे निस्तुषतरपदस्य यथाश्रुत एवार्थः । ११ स्थानाद्यभेदेनाक्षराणां मैत्री- । १२ परुषाः । १३ पामरोचिताः । १४ दुर्बोधतया स्थितान्, अभ्यन्तरे विलीनांश्च । १५ वाच्यादीन्, रत्नादींश्च । १६ व्यञ्जनयाऽबोधयतः, स्वरूपतोऽप्रकटयतश्च । १७ प्रसादो नाम काव्यगुणः तेनेति, निर्मलतया च रहितस्य । १८ काव्यरूपस्य प्रबन्धस्य । १९ शृङ्गाराद्यन्यतमः, जलं च । २० प्रतिभा नाम नवनवोन्मेषशालिनी बुद्धिः एषामस्तीति तादृशां कवीनाम् ।

वाचां सरसमधुनिष्यन्दलहरी—समुन्मेषद्वेषी सकलरसपोषोपजनकः । न केषामाधत्ते मनसि परितोषं नवनवैर्विलासैरुन्मीलद्विकचितमधूलीपरिमलैः ॥ ३६ ॥ यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते । मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ ३७ ॥ परिच्छिन्नस्वादोऽमृतगुडमधुक्षौद्रपयसां कदाचिच्चाभ्यासाद्व्रजति ननु वैरस्यमधिकम् । प्रियाबिम्बोष्ठे वा रुचिरकविवाक्येऽप्यनवधिर्निवानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥ ३८ ॥ सदा मध्ये यासामियममृतनिष्यन्दसरसा सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् । प्रसादं ता एता घनपरिचिताः केन महतां महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ ३९ ॥ प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना । यदात्मानो विद्याः परिणमति यश्चार्थवपुषा स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥ ४० ॥ नैव व्याकरणज्ञमेति पितरं न भ्रातरं तार्किकं दूरात्संकुचितेव गच्छति पुनश्चाण्डालवच्छान्दसम् । मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्तादरा काव्यालंकरणज्ञमेत्य कविताकान्ता वृणीते स्वयम् ॥ ४१ ॥ रम्यार्थोक्तितनूज्ज्वला रसमयप्राणा गुणोल्लासिनी चेतोरञ्जकरीतिवृत्तिकवितापाकं वयो बिभ्रती । भावालंकरणोचितागमवती सर्वत्र निर्दोषता शय्यामञ्चति कामिनीव कविता कस्यापि पुण्यात्मनः ॥ ४२ ॥ निर्ह्रादं क्रकचः क्षतैः किरति किं कर्णामृतं वल्लकी किंवा मुञ्चति मालती परिमलं पाषाणनिष्पेषणैः । इत्थं तारसकर्कशां वियमसौ जल्पैर्विकाल्याकुलैराकूटं कमनीयकान्तिदमितं काव्यं कथं स्पन्दते ॥ ४३ ॥ यन्त्राकृष्टसुवर्णसूत्रमिव यत्पद्यं सुमेरोस्तटादुन्मीलत्कुरुविन्दकन्दल इव स्वच्छः पदार्थोदयः । तत्राप्युल्लसदंशुकान्तविलसत्कान्ताकुचान्तोपमं व्यङ्ग्यं यत्र तदेव काव्यमितरद्वाग्देवतोपप्लवः ॥ ४४ ॥ निन्दन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः । तद्वैदग्ध्यविदां सतामपि मनः किं नेहते वक्रतां धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ ४५ ॥ संसारे कविता यदाऽस्ति सरसा लोकोत्तरार्थोन्नता येषां हन्त वशंवदा मधुरिमागारं सती सर्वदा । धन्यास्ते कृतिनस्त एव सुखिनः साम्राज्यभाजोऽपि ते दिव्यं वाऽप्यपुनर्भवोदितमपि श्रेयो न तेभ्यः परम् ॥ ४६ ॥ सानन्दप्रमदाकटाक्षविशिखैर्येषां न भिन्नं मनो यैः संसारसमुद्रपातविधुरेष्वन्येषु पोतायितम् । यैर्दुर्वारसरस्वतीविलसितं द्वित्रैः पदैर्गुम्फितं तेषामप्युपरि स्फुरन्ति मतयः कस्यापि पुण्यात्मनः ॥ ४७ ॥ वाणि त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां संप्राप्ता कविताल्ता परिणता सैवेयमुज्जृम्भते । त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरःकम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥ ४८ ॥ गुम्फः पङ्कजकुड्मलद्युतिरुरस्तत्केसरोल्लासवानर्थोऽप्यन्तरसौरभप्रतिनिभं व्यङ्ग्यं चमत्कारि यत् । द्वित्रैर्यद्रसिकैश्चिरं सहृदयैर्भृङ्गैरिवास्वाद्यते तत्काव्यं न पुनः प्रमत्तकुकवेर्यत्किंचिदुज्जल्पितम् ॥ ४९ ॥

## असत्कवितानिन्दा ।

किं तेन किल काव्येन मृग्यमानस्य यस्य ताः । उदधेरिव नायान्ति रसामृतपरंपराः ॥ १ ॥ यदा प्रकृत्यैव जनस्य रागिणो भृशं प्रदीप्तो हृदि मन्मथानलः । तदात्र भूयः किमनर्थपण्डितैः

१ उन्मीलन् प्रस्फुटीभवन् विकचितायाः मधूल्या मुरालतायाः परिमलः सौरभम् । २ अमृतरूपेण सम्पद्य । ३ शृङ्गारादिव्यपदेश्यः । ४ प्रसन्नतायाः, प्रसादस्य (तदाख्यस्य गुणस्य) इति यावत् । ५ कर्णरूपचुलुकास्वाद्येन । ६ वर- ७ शोभयते ।

कुकाव्यहव्याहुतयो निवेशिताः ॥ २ ॥ नालङ्कारोऽप्यलङ्कारो न रसो वा नवात्मकः । चेतो हर्तुं सतां यस्याः का नाम कविता भवेत् ॥ ३ ॥

## नाटकस्तुतिः ।

नाटके नटयन्नित्यं रसास्वादः पदे पदे । नरीनर्त्तीव मोदाय सचित्तानां सचक्षुषाम् ॥ १ ॥ प्रत्यङ्कमङ्कुरितसर्वरसावतारनव्योल्लसत्कुसुमराजिविराजिबन्धम् । घर्मेतरांशुरिव वक्रतयातिरम्यं नाटयप्रबन्धमतिमञ्जुलसंविधानम् ॥ २ ॥ देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा । त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते नाटयं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् ॥ ३ ॥

## कविस्तुतिः ।

अलङ्कारभृतो रीतिमन्तः सिद्धा रसोन्नतौ । लक्षणैर्लक्षितात्मानः कृतिनो ननु केचन ॥ १ ॥ जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः । नास्ति येषां यशःकाये¹ जरामरणजं भयम् ॥ २ ॥ प्रस्तावे हेतुयुक्तानि यः पठत्यविशङ्कितः । स कविस्तानि काव्यानि काव्ये तस्य परिश्रमः ॥ ३ ॥ सुकवेः शब्दसौभाग्यं सुकविर्वेत्ति नापरः । कैलादवन्न² जानाति परः कङ्कणचित्रताम् ॥ ४ ॥ सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे । उत्पादका न बहवः कवयः शरभा इव ॥ ५ ॥ कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः । न ह्यकूपारवत्³कूपा वर्धन्ते विधुकान्तिभिः ॥ ६ ॥ क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते । अनुकूलः शुचिर्दक्षः कविर्विद्वान्सुदुर्लभः ॥ ७ ॥ कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि । यत्र हंसवयांसीव भुवनानि चतुर्दश ॥ ८ ॥ अपूर्वो भाति भारत्याः काव्यामृतफले रसः । चर्वणे सर्वसामान्ये स्वादुवित्केवलं कविः ॥ ९ ॥ अमृतोत्प्रेक्षणे रागं कुर्वन्त्युरगवज्जनाः । कविर्गरुडवन्मान्यमिन्द्रवज्रादिवृत्तकृत् ॥ १० ॥ काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि । तावत्सारस्वतं स्थानं कविरासाद्य तिष्ठति ॥ ११ ॥ उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् । जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ १२ ॥ ते धन्यास्ते महात्मानस्तेषां लोके स्थितं यशः । यैर्निबद्धानि काव्यानि ये च काव्येषु कीर्तिताः ॥ १३ ॥ अनन्⁴तपदविन्यासरचना सरसा कवेः । बुधो⁵ यदि समीपस्थो न कुंजन्मा⁶ पुरो यदि ॥ १४ ॥ कविः करोति पद्यानि लालयत्युत्तमो जनः । तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम्⁸ ॥ १५ ॥ सुकविः कवयत्येव रसं विन्दति सत्कृती । तारुण्योद्भावनं तन्व्या भोगायान्यस्य कस्यचित् ॥ १६ ॥ कविः करोति काव्यानि स्वादु जानन्ति पण्डिताः । सुन्दर्या अपि लावण्यं पतिर्जानाति नो पिता ॥ १७ ॥ कविः पिता पोषयति पालको रसिकः⁹ पतिः । कवितायुवतेर्नूनं सोदरास्तु विवे-

---

१ यशःस्वरूपे शरीरे । २ सुवर्णकारवत् । ३ सागरवत् । ४ अनन्तानि यानि सुप्तिङन्तरूपाणि पदानि तेषां विन्यासरचना, अनन्तं व्योम तद्रूपं यत् पदं स्थानं तत्र यो विन्यासस्तद्रचना । ५ कवयितुः, शुक्रस्य च । ६ विद्वान् चन्द्रसुतश्च । ७ पामरः, कोः ( पृथिव्या ) जन्म यस्य तादृशो मङ्गलश्च । ८ सौगन्ध्यम् । ९ मार्मिकः, सहृदय इति यावत् ।

किनः ॥ १८ ॥ तत्त्वं किमपि काव्यानां जानाति विरलो भुवि। मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १९ ॥ कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति। कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरैः ॥ २० ॥ कविवाक्यामृततीर्थस्नानैः पूता भृशं यशोदेहाः। येषां त एव भूपा जीवन्ति मृता वृथैवान्ये ॥ २१ ॥ काव्यप्रपञ्चचञ्चूँ रचयति काव्यं न सारविद्भवति। तरवः फलानि सुवते विन्दति सारं पतङ्गसमुदार्यैः ॥ २२ ॥ विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते। फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥ २३ ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः। कुलजा या सा जाया केवलजाया तु केवलं माया ॥ २४ ॥ अवयः केवलकवयः कीराः स्युः केवलं धीराः। वीराः पण्डितकवयस्तानवमन्ता तु केवलं गवयः ॥ २५ ॥ अहमपि परेऽपि कवयस्तथापि परमन्तरं परिज्ञेयम्। ऐक्यं रलयोरपि यदि तत्किं करभायते कलभः ॥ २६ ॥ दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्। रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ २७ ॥ शीलाविद्यामारुलामोरिकाद्याः काव्यं कर्तुं सन्तु विज्ञाः स्त्रियोऽपि। विद्यां वेत्तुं वादिनो निर्विजेतुं दातुं वक्तुं यः प्रवीणः स वन्द्यः ॥ २८ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः। स सर्व एवादिकवेः प्रतापो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ २९ ॥ जयन्ति ते पञ्चमनादमित्रचित्रोक्तिसंदर्भविभूषणेषु। सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती ॥ ३० ॥ कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु। कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ ३१ ॥ महीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि। भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि येषाम् ॥ ३२ ॥ किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण। किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ ३३ ॥ तर्केषु कर्कशतराः स्युरथापि पुंसां काले भवन्ति मृदवः कवितासु वाचः। दैत्येन्द्रशैलकुलिशं दयिताकपोले नाथस्य कोमलमुदाहरणं नखं नः ॥ ३४ ॥ अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः। निजवनमकरन्दस्पन्दपूर्णालवालः कनककलशसेकं नेहते किं रसालः ॥ ३५ ॥ पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ कवीनां काव्येन स्फुरति बुधमात्रस्य धिषणा। नवक्रीडावेशव्यसनपिशुनो यः कुलवधूकटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥ ३६ ॥ अयं मे वाग्गुम्फो विशदपदवैदग्ध्यमधुरः स्फुरद्बन्धो वन्ध्यो जडहृदि कृतार्थः कविहृदि। कटाक्षो वामाक्ष्या दरदलितनेत्रान्तगलितः किशोरे निःसारः स तु किमपि यूनः स्थगयति ॥ ३७ ॥ भुजतरुवनच्छायां येषां निषेव्य महौजसां जलधिरशना मेदिन्यासीदसावकुतोभया। स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥ ३८ ॥ यदि प्रभुरुदारधीः सुरसकाव्यकौतूहलस्तथैव च सभासदः सदसि

---

१ वैयाकरणाः। अत एवाहुः-'कविताऽऽस्वादसमये शब्दव्युत्पत्तिचिन्तनम्। नीवीविमोक्षवेलायां पट्टसूत्रावधारणम् ॥' इति। २ यशसां प्रसरः प्रकाशः, तत्कारी काव्यरूपः प्रबन्ध इति यावत्। ३ चतुरः। ४ पक्षियूथम्। ५ केवलशब्देन अन्तःपातशून्यहृदयत्वं विवक्षितम्। अत एषामविरूपत्वम्।

तद्गुणग्राहिणः । सुवर्णसदलंकृतिर्भवति तत्र नृत्योद्यता मदीयरसनानटी रसैर्घटीयमानन्दभूः ॥ ३९ ॥ वदन्तु कतिचिद्[3] ठठात्खफछठेतिवर्णच्छटान्वटः पट इतीतरे[4] पटु रटन्तु वाक्पाटवात् । वयं बकुलमञ्जरीगलदलीनमाध्वीझरीधुरीणपदरीतिभिर्भणितिभिः प्रमोदामहे ॥ ४० ॥ अर्थान् केचिदुपासते कृपणवत् केचित्त्वलङ्कुर्वते वेश्यावत् खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् । अर्थालङ्कृतिसद्रसद्रवमुचां[5] वाचां प्रशस्तिस्पृशां कर्त्तारः कवयो भवन्ति कतिचित् पुण्यैरगण्यैरिह ॥ ४१ ॥ मन्दं[6] निक्षिपते[7] पदानि[8] परितः शब्दं[9] समुद्वीक्षते नानार्थाहरणं[10] च काङ्क्षति[11] मुदालङ्कारमाकर्षति[12] । आदत्ते सकलं सुवर्णनिचयं[13] धत्ते रसान्तर्गतं[14] दोषान्वेषणतत्परो[15] विजयते चोरोपमः सत्कविः ॥ ४२ ॥ लोकानां[16] रुचये सुवर्णकलना[17] रीतेस्तथा[18] रक्षणं वृत्तोत्कर्षनिदर्शनाय[19] च सदा सल्लक्षणोपासनम्[20] । नानाऽलङ्कृति-[21]भावना प्रतिपदं शश्वत्प्रसादः[22] पुरो येषां नित्यमिमे गुणाः समुदिताः केषां नु वन्द्या न ते ॥ ४३ ॥ स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः प्राणानां सततं प्रयाणपटहश्रद्धा न विश्राम्यति । त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतैस्तानाराध्य गुरून्विधत्त सुकृतीन्निर्गर्वमुर्वीश्वराः ॥ ४४ ॥ कल्याणं भगवत्कथाकथनतः काव्यं विधातुः कवेस्तस्यैवाङ्गतया कचिद्रचयतः शृङ्गारवीरादिकम् । को दोषो भविता यदत्र कविताशीलैः समाश्रीयते पन्था व्यासवसुन्धराश्रुतिभवग्रन्थादिषु प्रेक्षितः ॥ ४५ ॥ भूतावेशनिवेशिताशय इव श्लोकं करोत्याशु यः श्लाघन्ते कविरद्भुतोऽयमिति तं मिथ्या जना विस्मिताः । द्वित्राण्येव पुरः पदानि रचयन्पश्चात्समालोचयन्दूरं यः कवितां निनीषति कविः कामीव स स्तूयताम् ॥ ४६ ॥ ते भूमीपतयो जयन्ति नतयो येषां द्विषद्भूभृतां ते वन्द्या यतयो विशन्ति मतयो येषां परे ब्रह्मणि । ते श्लाघ्याः कवयो वयोमदभरव्याजृम्भमाणाङ्गनादृक्पाता इव तोषयन्ति हृदयं येषां गिरां संचयाः ॥ ४७ ॥ सत्यं सान्ति गृहे गृहेऽपि कवयो येषां वचश्चातुरी स्वे हर्म्ये कुलकन्यकेव लभते स्वल्पैर्गुणैर्गौरवम् । दुष्प्रापः स तु कोऽपि कोविदमतिर्यद्वाग्रसग्राहिणी पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ॥ ४८ ॥ धन्यास्ते[23] कवयो यदीयरसना रूक्षाध्वसंचारिणी धावन्तीव[24] सरस्वती द्रुतपदन्यासेन निष्क्रामति । अस्माकं रसपिच्छिले[25] पथि गिरां देवी नवीनोदयत्पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते ॥ ४९ ॥ साहित्ये सुकुमारवस्तुनि दृढन्यासग्रहग्रन्थिले तर्के वा मयि

---

१ शोभना ( रसव्यञ्जनानुगुण्येनोपयुक्ता वर्णा ) अक्षराणि यत्रेति, सत्यः निर्दोषाः, अलङ्कृतयो यत्रेति च । पक्षान्तरे कनकस्य सत्योऽलङ्कृतयो यत्रेति । २ शृङ्गारजल-इति च । ३ केचिद्वैयाकरणा इति भावः । ४ अन्ये तार्किकाः । ५ अर्थः प्रतिपाद्यो विषयः, अलङ्कृतिः प्रतिपाद्यप्रतिपादनशैलीविशेषरूपोऽनुप्रासोपमाऽऽदिः, सद्रस( शृङ्गरादि ) द्रवश्च तान् मुञ्चन्तीति तासाम् । पक्षान्तरे सुवर्णादिरूपपदार्थमयकुण्डलादिरूपालङ्कारपारदादिप्रस्तुतिकृतामिति । ६ विवेकापेक्षित्वेन । ७ निदधाति । ८ सुबन्ततिङन्तरूपाणि, पादांश्च । ९ वाक्यावयवम्, ध्वनिं च । १० विविधवाच्याद्यर्थसम्पादनं, सुवर्णादिरूपवस्तुसङ्घटनं च । ११ अभिलषति । १२ अनुप्रासोपमादिम्, कङ्कणादिकं च । १३ माधुर्यादिसङ्घटकत्वेन शोभनाक्षरसमुदायं, कनकपुञ्ज च । १४ शृङ्गारादिरसे, रसायां (पृथिव्याम्) इति च । १५ दुःश्रवत्वादिदोष-रात्रि-इति च १६ जनानाम् । १७ शोभनवर्णतया सुन्दरस्यानुप्रासादिघटकस्य हेम्नश्च घटना । १८ व्यवहारस्य, वैदर्भ्यादिकस्य सङ्घटनाविशेषस्य च । १९ छन्दः-चरित-इति च । २० शोभनानां धर्मनिष्ठत्वादिबोधकानां च लक्षणानां संसेवनम् । २१ अलङ्कृति-अङ्गप्रसाधनादि-अनुप्रासोपमादि-च । २२ प्रसादोगुणविशेषः प्रसन्नता च । २३ उपहासेनेदमुक्तम् । तेनाधन्या इत्यर्थः । २४ अविवेकपुरस्कारेण निरर्गलं प्रसरन्तीव । २५ शृङ्गारादिरसप्रचुरे । पक्षान्तरे जलातिशयेन स्खलनतोचिते देशे ।

संविधातरि समं लीलायते भारती ॥ शय्या वास्तु मृदूत्तरच्छदपटा दर्भाङ्कुरैरास्तृता भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिर्योषिताम् ॥ ९० ॥ येषां कोमलकाव्यकौशलकलालीलावती भारती तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते । यैः[२] कान्ताकुचमण्डले कररुहाः सानन्दमारोपितास्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ ९१ ॥ तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती सा काव्ये मृदुलोक्तिसारसुरभौ स्यादेव मे कोमला । या प्रायः प्रियविप्रयुक्तवनिताहृत्कानने कर्तरी[३] प्रेयोलालितयौवते न मृदुला सा किं प्रसूनावली ॥ ९२ ॥ मातङ्गीमिव माधुरीं ध्वनिविदो नैव स्पृशन्त्युत्तमां व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी । कस्तूरीघनसार[४]सौरभसुहृद्व्युत्पत्तिमाधुर्ययोर्योगः कर्णरसायनं सुकृतिनः कस्यापि संजायते ॥ ९३ ॥ यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् । कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः[५] ॥ ९४ ॥ मौलौ मन्दारदामभ्रमदलिपटलीकाकलीं श्रोणिबिम्बे कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमञ्जीरशिञ्जाम् । उत्सङ्गे कीरगीतिं स्तनभुवि मसृणं वल्लकीपञ्चमं वा यत्काव्ये दत्तकर्णा शिवशिव मनुते भारतीं भारमेव ॥ ९५ ॥ कस्यांचिद्वाचि कैश्चिन्ननु यदि विहितं दूषणं दुर्दुरूढैश्छिन्नं किं नरस्तदा स्यात्प्रथितगुणवतां काव्यकोटीश्वराणाम् । वाहाश्चेद्गन्धवाहाधिकविहितजवाः पञ्चषश्चान्धखञ्जाः का हानिः शेरशाहक्षितिपकुलमणेरश्वकोटीश्वरस्य ॥ ९६ ॥

## कन्दर्पमाहिमा ।

अबलानां[६] दृशैवाशु यो निहन्ति बलीयसः । तस्मै कुसुमबाणाय नमो लोकोत्तरौजसे ॥ १ ॥ भस्मीभूतशरीरोऽपि पुष्पधन्वाऽपि वा भवान् । विश्वं व्याकुलयत्येव स एव परमेश्वरः[७] ॥ २ ॥ अबला अपि वीरेशान् यत्साहाय्यमुपाश्रिताः । पराभवन्ति दृक्कोणपातेनैव स मन्मथः ॥ ३ ॥ शतशो धन्विनः सन्तु धीरम्मन्यों[९] वतस्ततः । वयं त्वेकं स्तुमः कामं तादृशा[१०]मपि यो जयी ॥ ४ ॥ को नाम त्रिषु लोकेषु कामेन न पराजितः । वयं तु विजितं तेन पश्यामो भुवनत्रयम् ॥ ५ ॥ ब्रह्मविष्णुमहेशाना अपि कामेन निर्जिताः । इतरे तत्पराभूता इति किं चरितं[११] महत् ॥ ६ ॥ अनङ्गेनाबलासङ्गा[१२]ज्जितं येन जगत्त्रयम् । लोकोत्तरप्रभावोऽसौ प्रसीदतु मनोभवः ॥ ७ ॥ एकं व[१३]स्तु द्विधाकर्तुं बहवोऽन्येऽपि धन्विनः । तादृशः पुनरेको यो द्वयोरैक्यविधायकः[१४] ॥ ८ ॥ कुमारा वा जरन्तो[१५] वा सन्तु काममुपेक्षिताः । इतरे[१६] किंतु सर्वेऽपि कन्दर्पेण समर्दिताः ॥ ९ ॥ वयं वीरा वयं वीरा इति गर्जन्तु तेऽनिशम् । तां[१७]ञ्जयन्त्यबला[१८] यस्य सङ्गात्तं स्तौमि मन्मथम् ॥ १० ॥ न कठोरं न वा तिग्ममायुधं पुष्पधन्वनः । तथाऽपि जितमेवासीदमुना भुवनत्रयम् ॥ ११ ॥ कर्पूर इव दग्धोऽपि शक्तिमान्यो जनेजने । नमोऽस्त्वनन्तवीर्याय तस्मै कुसुमधन्वने ॥ १२ ॥ स एकस्त्रीणि जयति विश्वानि ( जगन्ति )

---

१ रसिकः, तत्तद्भावाभिज्ञ इति यावत् । पक्षान्तरे अभिमत : । २ राजेन्द्रैः । ३ कर्तनसाधनं ' कैंची ' इति प्रसिद्धं वस्तु । ४ कर्पूर- । ५ महिषः । ६ निर्बलानां स्त्रीणां च । ७ अतिबलिनः । ८ अखिलजेतृत्वात् । ९ व्यर्थमेव पण्डितमानिनः । १० वीरत्वाभिमानशालिनाम् । ११ अत्रार्थापत्तिः । १२अबलानां सङ्गादासङ्गाद्वा । १३लक्ष्यरूपम् । १४स्त्रीपुरुषयोः संयोजकत्वात् । १५ वृद्धाः । कुमारेषु जरत्सु एव वा कामानुदयात् । १६ युवानः । १७ वीरान् । १८ स्त्रियः, निर्बला इति तु प्रतीतिमात्रम् ।

कुसुमायुधः । हरताऽपि तनुं यस्य शम्भुना (हरेण) न बलं हृतम् ॥ १३ ॥ बाणेष्वारोप्य गुणान् विधाय चापं वियोगिनीनयने । स्वयमतनुर्जगदेतज्जयति सुमास्त्रो विचित्रधानुष्कः॥१४॥ जयति मनसिजः सुखैकहेतुर्मिथुनकुलस्य वियोगिनां कठोरः । वपुषि यदिषुपातवारणार्थं वहति वधूंशशिखण्डमण्डनोऽपि ॥ १५ ॥ चेतोभुवश्चापवति प्रसङ्गे का वा कथा मानुषलोकभाजाम् । भर्त्तुः पुरामप्यलिकेक्षणस्य तथाविधं पौरुषमर्धमासीत् ॥ १६ ॥ शिव शिव हि शिवेन पुष्पधन्वा प्रलयनटेन किमित्यकारि भस्म । स हि पुनरुदितश्छलाय लोके स तु माणिमन्त्रमहौषधैरसाध्यः ॥ १७ ॥ शम्भुस्वयम्भुहरयो हरिणेक्षणानां येनाक्रियन्त सततं गृहकर्म्मदासाः । वाचामगोचरचरित्रविचित्रिताय तस्मै नमो भगवते कुसुमायुधाय ॥ १८ ॥ वक्षःस्थलीवदनवामशरीरभागैः पुष्यन्ति यस्य विभुतां पुरुषास्त्रयोऽपि । सोऽयं जगत्त्रितयजित्वरचापधारी मारः परान् प्रहरतीति न विस्मयाय ॥ १९ ॥ स्तोकास्त्रसाधनवता भवता मनोज स्वैरं जगज्जितमनङ्ग तथाऽपि सर्वम् । स्याच्चेद्भवान् बहुशरः प्रतिलब्धगात्रैः कुर्यास्ततो यदथ कर्म्म कियन्न जाने ॥ २० ॥ संत्यज्यै देहमपि यो निशितान् शरांश्चै कृत्वाऽबलैकनिचयं च सहायवर्गम् । यो देवदानवमनुष्यसरीसृपादीन् सर्वान् विजित्य हृदि नः स सुमेषुरीड्यः ॥ २१ ॥ हारो जलार्द्रवसनं नलिनीदलानि प्रालेयसीकरमुचस्तुहिनांशुभासः । यस्येन्धनानि सरसानि च चन्दनानि निर्वाणमेष्यति कथं स मनोभवाग्निः ॥ २२ ॥ कुलगुरुरबलानां केलिदीक्षाप्रदाने परमसुहृदनङ्गो रोहिणीवल्लभस्य । अपि कुसुमपृषत्कैर्देवदेवस्य जेता जयति सुरतलीलानाटिकासूत्रधारः ॥ २३ ॥ हृदयतृणकुटीरे दीप्यमाने स्मराग्नावुचितमनुचितं वा वेत्ति नो पण्डितोऽपि । किमु कुवलयनेत्राः सन्ति नो नाकनार्यस्त्रिदशपतिरहल्यां तापसीं यः सिषेवे ॥ २४ ॥ न गम्यो मन्त्राणां न च भवति भैषज्यविषयो न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः । भ्रमावेशादङ्गे किमपि विदधद्भव्यमसमं स्मरापस्मारोऽयं भ्रमयति दृशौ घूर्णयति च ॥ २५ ॥ ब्रह्मा वा मधुहाऽपि वा पुररिपुर्वाऽपि त्रिलोकीश्वरम्मन्या वाऽप्यपरे भवन्तु कृतिनस्तावत्स्तुतास्सर्वतः । यावत् पुष्पशरस्य लक्ष्यविषयीभूता न हा तत्परं स्वर्ल्लोणामपि किङ्कराः किमु भवेत्तुल्यं बलं तादृशाम् ॥ २६ ॥ कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नमत्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति । दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो कामस्य दुश्चेष्टितम् ॥ २७ ॥ चन्द्रे शीतलयत्यलीकनयनं शम्भोः सुधाशीकरैर्विश्वं ग्व्याकुलयत्सु संयमधनान्कान्तादृगन्तेषु च । लीलायै परमैक्षवं धनुरिषून्बिभ्रत्प्रसूनात्मनः स्वच्छन्दं रतिवल्लभो विजयते त्रैलोक्यवीरः स्मरः ॥ २८ ॥ इक्षुर्धन्व शराः प्रसूनविततिर्भृङ्गावली सिञ्जिनी यस्याज्ञावशवर्तिनः प्रमनसो निर्विष्टराष्ट्रादयः । यद्बाणैर्विहता विरञ्चिमुरजिन्मृत्युंजयेन्द्रादयो व्यासाशेषमखा इव त्रिभुवनं पायादजेयः स्मरः ॥ २९ ॥ प्रांसादीयति वैणवादिगहनं दीपीयति ध्वान्तमः पर्य-

---

१ पुष्पशरः । सुमशब्दोऽपि कुसुमपरः । २ अत्र ह्रस्वत्वं चिन्त्यम् । ३ प्राप्तशरीरसम्बन्धः । ४ रुद्रकृतदाहवशात् । ५ चकारेण सन्त्यज्येत्यनेन सम्बन्धः । ६ साक्षितया व्यापकतया वा । ७ स्तोतव्यः । ८ हिमजलकणवर्षिणः । ९ आर्द्राणि । १० प्रशमम्, तिरोभावमिति यावत् । ११ पुष्पबाणैः । १२ हृदयरूपायां तृणकुट्याम् । १३ कमलनेत्राः । १४ स्वर्गाङ्गनाः । मदनजनितव्यामोहः । १५ नीचजनस्यापि तनुजाम् । १६ ललाटनेत्रं, महादेवमिति यावत् । १७सर्वतः । १८ धनुः- । १९ ज्या- । २० प्रासादमिवाचरति ।

क्लीयति भूतलं[1] दृषदपि श्लक्ष्णोपधानीयति। कस्तूरीयति कर्दमः किमपरं यूनो रसाविष्टयोर्येनालोकितयोः स वन्द्यमहिमा देवो नमस्यः स्मरः ॥ ३० ॥ स्वामाज्ञां बत सर्वतोऽप्रतिहतां सञ्चार्य धन्यो यदि त्रैलोक्ये ननु केवले मनसिजो देवः समुद्गीयते। अन्ये त्वस्य शरप्रतापभयतः सम्पीडिताः प्राणिनः स्वस्वस्त्रीः पुरतो विधाय कृपणाः कुर्वन्ति वीरा अपि ॥ ३१ ॥

## नायिकामहिमा।

अबला इत्यवज्ञेया न कदाऽपि विवेकिभिः। त्रैलोक्यं यद्दृशा दासः स्यात्तान्निर्बलता कुतः ॥ १ ॥ दृशा दग्धं मनसिजं[2] जीवयन्ति दृशैव याः। विरूपाक्षस्य[3] जयिनीस्ताः स्तुवे वामलोचनाः[4] ॥२॥ सुस्मिता मधुरालापा रुचिरावयवा विधिः। विधाय रमणीस्तासां मनोऽपि न व्यधात् कुतः ॥ ३ ॥ न हयैर्न च मातङ्गैर्न रथैर्न च पत्तिभिः। स्त्रीणामपाङ्गदृष्टयैव जीयते[5] जगतां त्रयम् ॥ ४ ॥ सोमः शौचं ददौ तासां गन्धर्वाश्च शुभां गिरम्। अग्निः सर्वाङ्गकान्तित्वं तस्मादिष्टतमाः स्त्रियः ॥ ५ ॥ स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित्। मासि मासि रजो[6] यासां दुष्कृतान्यपहन्ति च ॥ ६ ॥ अमृतस्यैव कुण्डानि रत्नानामिव राशयः। रतेरिव निधानानि निर्मिताः केन योषितः ॥ ७ ॥ प्राणानां च प्रियायाश्च मूढाः सादृश्यकारिणः। प्रिया कण्ठगता रत्यै प्राणा मरणहेतवः[7] ॥ ८ ॥ आकृतिप्रेमसरसा विलासालसगामिनीः। विसारे हन्त संसारे सारं सारङ्गलोचनाः[8] ॥ ९ ॥ हरिणप्रेक्षणा यत्र गृहिणी न विलोक्यते। सेवितं सर्वसम्पद्भिरपि तद्भवनं वनम् ॥ १० ॥ यासामञ्चलवातेन दीपो निर्वाणतां[9] गतः। तासामालिङ्गने पुंसां नरके पतनं कुतः ॥ ११ ॥ नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम्[10]। यस्याः सङ्गेन जीव्येत म्रियेत च वियोगतः ॥ १२ ॥ यासां नाम्नाऽपि कामः स्यात्[11] संगमं दर्शनं विना। तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ॥ १३ ॥ यावद्दृष्टिमृगाक्षीणां नो नरीनर्ति भङ्गुरा[12]। तावज्ज्ञानवतां चित्ते विवेकः कुरुते पदम् ॥ १४ ॥ समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि। दष्टाश्च दशनैः कान्तं दासीकुर्वन्ति[13] योषितः ॥ १५ ॥ ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्। प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ १६ ॥ कार्पासकृतकूर्पासशतैरपि न शाम्यति। शीतं शातोदरी[14]पीनवक्षोजालिङ्गनं विना ॥ १७ ॥ संपन्न रमणी[15] शीलसंपन्नरमणीं विना। इत्यूढवान्नरमणी रमणीं रुक्मिणीं हरिः ॥ १८ ॥ पादसंवाहने वज्री[16] केशसंवाहने फणी। अहो भाग्यं पुरन्ध्रीणां[17] दधिसंमन्थने रविः[18] ॥ १९ ॥ प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत्। निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम्[19] ॥ २० ॥ सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः[21]। स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥ २१ ॥ मनसिजशितशरतापितमनसां मोदाय सुस्मिता वनिता। तपनजतापं शमयितुमेका लेखा विधोर्निपुणा ॥ २२ ॥ ह्लादनतापनशक्ती सहजे स्तः सुभ्रुवां कटाक्षेषु। तत्राद्या प्रबला स्यान्नेदीयस्त्वे[22] परा[23] दवीयस्त्वे ॥ २३ ॥

---

१ मृदुलः–। २ मदनम्। ३ महादेवस्य, विरूपनेत्रस्य च। ४ कुटिलनेत्राः, सुन्दरनेत्राश्च। ५ पराजितं क्रियते। ६ रजस्तावच्छलेन। ७ 'मरणान्तं च जीवितम्' इति वाल्मीकीयोक्तेः। ८ मृगाक्ष्यः। ९ प्रशमं, मोक्षं च। १० सुन्दरीम्। ११ उत्पद्येत। १२ भज्यमाना। १३ वशमानयन्ति। १४ कृशोदरीत्यर्थः। १५ रमणी–रमणीया, न सम्पत्। १६ चरणमलनिर्हतेष्टकाचूर्णविशेषः, इन्द्रश्च। १७ दन्तपत्रिका, शेषश्च। १८ नारीणाम्। १९ मन्थनदण्डः, सूर्यश्च। २० नीलकमलसदृशनेत्राणाम्। २१ परिरम्भः आलिङ्गनम्। २२ अतिसन्निहितत्वे। २३ तापनशक्तिः।

अवलोकनमपि सुखयति कुवलयदलचारुचपलनयनायाः । किं पुनरमृतसमानं सरभसमालिङ्गनं सुतनोः ॥ २४ ॥ व्रीडावेलारुद्धं सागरतोयमिव योषितां हृदयम् । रागेन्दुहृदयमानो भूयो भूयस्तरङ्गयति ॥ २५ ॥ उपनिषदः परिपीता गीताऽपि च हन्त मतिपथं नीता । तदपि न हा विधुवदना मानस-सदनाद्बहिर्याति ॥ २६ ॥ यस्य न सविधे सुमुखी वनदहनस्तुहिनदीधितिस्तस्य । यस्य च सविधे सुमुखी वनदहनस्तुहिनदीधितिस्तस्य ॥ २७ ॥ आदानपानलेपैः काश्चिद्वरलोपतापहारिण्यः । पुरतः स्थितैव सिद्धौषधिवल्ली काऽपि जीवयति ॥ २८ ॥ यत्र पतन्त्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः । तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥ २९ ॥ स्वपरप्रतारकोऽसौ निन्दति योऽलीकपण्डितो युवतीः । यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गेऽपि योषितोऽप्सरसः ॥ ३० ॥ अङ्कुशं कुचयोः क्रूरं विलग्ने वितते चक्षुषि विस्तृतं नितम्बे । अरुणाधरमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम् ॥ ३१ ॥ स्मितमधुरं परिलोकनमचिरं मन्दं च भाषणं किमपि । मन्थरमयनं ( गमनं ) सुतनोः कस्य न हृदयं विदारयति ॥ ३२ ॥ अधरे नववीटिकानुरागो नयने कज्जलमुज्ज्वलं दुकूलम् । इदमाभरणं नितम्बिनीनामितरद्भूषणमङ्गदूषणाय ॥ ३३ ॥ रत्नानि विभूषयन्ति योषा भूष्यन्ते वनिता न रत्नकान्त्या । चेतो वनिता हरन्त्यरत्ना नो रत्नानि विनाऽङ्गनाऽङ्गसङ्गात् ॥ ३४ ॥ तावदेव विदुषां विवेकिनी बुद्धिरस्ति भवबन्धभेदिनी । यावदिन्दुवदना न कामिनी वीक्षिता रहसि हंसगामिनी ॥ ३५ ॥ तरुणिमनि कृतावलोकना ललितविलासविलब्धविग्रहा । स्मरशरविसराचितान्तरा मृगनयना हरति मुनेर्मनः ॥ ३६ ॥ तदवधि केचन वीरा धीरा वा केचन स्मृताः सन्तु । यदवधि कुरङ्गशावकलोल विलोकाविलोकिता न स्युः ॥ ३७ ॥ तावदेव कृतिनां हृदि स्फुरत्येष निर्मलविवेकदीपकः । यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनाञ्चलैः ॥ ३८ ॥ जये धरित्र्याः पुरमेव सारं पुरे गृहं सद्मनि चैकदेशः । तत्रापि शय्या शयने वरा स्त्री रत्नोज्ज्वला राज्यसुखस्य सारः ॥ ३९ ॥ आस्यं सहास्यं नयनं सलास्यं सिन्दूरबिन्दूदयशोभि भालम् । नवा च वेणी हरिणीदृशश्चेदन्यैरगण्यैरपि भूषणैः किम् ॥ ४० ॥ मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु । सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ ४१ ॥ स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः । वचोभिरीर्ष्याकलहेन लीलया समस्त-भावैः खलु बन्धनं स्त्रियः ॥ ४२ ॥ अविश्वसन्धूर्तधुरंधरोऽपि नरः पुरन्ध्रीपुरतोऽन्ध एव । अशेष-शिक्षाकुशलोऽपि काकः प्रतार्यते किं न पिकाङ्गनाभिः ॥ ४३ ॥ उडुराजमुखी मृगराजकटि-

---

१ सातिशयम् । २ ब्रह्मप्रतिपादका वेदशिरोभागाः । ३ अनुमननपूर्वमभ्यस्ताः । ४ विचारिता स्मृता वा । ५ चन्द्रमुखी । ६ चित्तरूपात्स्थानात् । ७ समीपे । ८ चन्द्रः, अपीति शेषः । ९ वनाग्निः, अपीति शेषः । १० तीक्ष्णाः । ११ स्वपरविवेकहारकः । १२ अलीक-अवास्तविक- । १३ पुष्टम् । १४ मध्ये । १५ महेश्वरस्य भाग्यरूपम् । १६ निर्मलम् । १७ युवत्यः । १८ रत्नाभरणशून्या अपि । १९ एकान्ते । २० तारुण्ये । अत्रेमनिचः साधुत्वं चिन्त्यम्, तरुणशब्दस्य दृढादिषु पृथ्वादिषु चागणनात् । अथवाऽनयोरेकतरस्याकृतिगणत्वमभ्युपेत्यैवं-विधाः प्रयोगाः समाधेयाः । २१ विदुषाम् । २२ गृहे । २३ एकान्तवासोचितः प्रदेशः । २४ तादृ-शेऽपि देशे । २५ सा चेद्रत्नोज्ज्वला स्यात्तदेति भावः । २६ सनृत्यम् चञ्चलभ्रूकुटीकमिति भावः । २७ अशेषैरिति वाच्यम् । २८ प्रान्तप्रदेशाः, श्रोणिभागाश्च । २९ स्मरोद्रेकेण । हसन्तमिव विलासं धृतवतीनाम् । ३० रतिकृतमनःक्षोभविशेषेण । ३१ भयेन । ३२ प्रणयकलहेन । ३३ कोकिलाभिः । ३४ चन्द्रमुखी ।

जराजविराजितमन्दगतिः। यदि सा वनिता हृदये निहिता क जपः क तपः क समाधिरतिः ॥ ४४ ॥ तदाखण्डलाशां महीमण्डलाशां तथा भोगिभोगानुरागं त्यजामः। मनःक्षोभदक्षान्कृपातः कटाक्षान्कुरङ्गेक्षणाश्चेत्क्षणं पातयन्ति ॥ ४५ ॥ भ्रूचातुर्याकुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जिताश्चैव हासाः। लीलामन्दं प्रस्थितं च स्थितं च स्त्रीणामेतद्भूषणं चायुधं च॥४६॥ नूनं हि ते कविवरा विपरीतबोधा ये नित्यमाहुरबला इति कामिनीस्ताः। याभिर्विलोलतरतारकदृष्टिपातैः शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ ४७ ॥ मन्दं स्मितं मृदु वचो नयनैकपातं किञ्चिन्निरीक्षणमहो अबलाजनस्य। वीरान् विजेतुमनघानि शितानि धात्रा शस्त्राणि हन्त विरचय्य समर्पितानि ॥ ४८ ॥ नान्दीपदानि रतिनाटकविभ्रमाणामाज्ञाक्षराणि परमाण्यथवा स्मरस्य। दष्टेऽधरे प्रणयिनां विधुताग्रपाणेः सीत्काररुष्करुदितानि जयन्ति नार्याः ॥ ४९ ॥ अलमतिचपलत्वात्स्वप्नमायोपमत्वात्परिणतिविरसत्वात्संगमेनाङ्गनायाः। यदि हृदि शतकृत्वस्तत्त्वमालोचयामस्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ ५० ॥ द्रुतं यस्यालोकाद्विरहिजनशोकापनयनं यदङ्के सानन्दं नयनमरविन्दं विहरति। न यस्यापैति श्रीः कैचनिचयराहोरपि पुनः स मे खेदं रामावदनहितधामा शमयतु ॥ ५१ ॥ श्रुतं दृष्टं स्पृष्टं स्मृतमपि नृणां ह्लादजननं न रत्नं स्त्रीभ्योऽन्यत्क्वचिदपि कृतं लोकपतिना। तदर्थं धर्मार्थौ विभववरसौख्यानि च ततो गृहे लक्ष्म्यो मान्याः सततमबला मानविभवैः ॥ ५२ ॥ गतिर्नागेन्द्राभा वचनरचना चाऽमृतसमा स्मितं ज्योत्स्नारोचिः सुकृतफलवद्दर्शनमपि। परिष्वङ्गस्तापप्रशमनविधौ स्वात्मसुखवत्सदा यासामद्धा कमलनयनास्ता ननु नुवे ॥ ५३ ॥ ललाटे कस्तूरीतिलकमबलाः कज्जलरुचिं दृशोः कर्णद्वन्द्वे विमलमणिताटङ्कयुगलम्। गले मुक्तामालां शुचि वसनमङ्गे च सततं वशीकर्तुं विश्वं दधति खलु बाह्योपकरणम् ॥ ५४ ॥ भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो विदग्धालापानां वयमपि कवीनामनुचराः। यथाप्येतद् ब्रूमो नहि परहितात्पुण्यमधिकं न चास्मिन्संसारे कुवलयदृशोरन्यदमृतम् ॥ ५५ ॥ विमुञ्चति बुधो जनः सुकृतचिन्तनं दूरतो जहाति च मुनिस्तपस्त्यजति धीरतां शंकरः। विधिर्भवति चञ्चलस्त्रिजगतीपतिः क्षुभ्यति क्षणं कुटिलदृष्टयो यदि पतन्ति वामभ्रुवः ॥ ५६ ॥ अमृतममृतं कः सन्देहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्। सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात् ॥ ५७ ॥ वचसि भवति सङ्गत्यागमुद्दिश्य वार्ता श्रुतिमुखरमुखानां केवलं पण्डितानाम्। जघनमरुणरत्नग्रन्थिकाञ्चीकलापं कुवलयनयनानां को विहातुं समर्थः ॥ ५८ ॥ किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापैर्द्वयमिह पुरुषाणां सर्वदा सेवनीयम्। अभिनवमदलीलालालसं सुन्दरीणां स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ५९ ॥ यासां सत्यपि सद्गुणानुसरणे दोषानुरागो भृशं याः प्राणान्प्रतितर्पयन्ति न पुनः सम्पूर्णदृष्टिं प्रिये। अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मकस्तत्त्वत्केलिषु दक्षिणा अपि सदा वामा जयन्त्येव ताः ॥ ६० ॥ स्त्रीमुद्रां कुसुमायुधस्य परमां सर्वार्थसम्पत्करीं ये मूढाः प्रविहाय

---

१ इन्द्रत्वाभिलाषम्। २ निर्बलाः। ३ प्रेमशालिना। ४ केशपाशरूप-। ५ अवतंसद्वन्द्वम्। ६ मधून्येवेति भावः। ७ मधुररसपूर्णम्। ८ युवत्वे यौवनं सेवनीयमिति भावः। ९ वृद्धत्वे तु वनं सेवनीयम्। इन्द्रियौजोनिरासात्। १० शोभनानां सुस्मितभाषणादीनां गुणानाम् अनुसरणे अनुसृत्योपासने। ११ गुणप्रतिकूलानां प्रसादानुग्रहाद्यभावरूपाणां दूषणानाम्, रात्रीणां चानुवर्त्तनं सेवनम्। १२ चुम्बनदानादिरूपे। १३ चतुराः अनुकूलाश्च। १४ प्रतिकूलाः, सुन्दर्यश्च।

यान्ति कुधियो मिथ्याफलान्वेषिणः । ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ६१ ॥ द्रष्टव्येषु किमुत्तमं मृगदृशः प्रेमप्रसन्नं मुखं घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः । किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तद्वपुर्ध्येयं किं नवयौवनं सहृदयैः सर्वत्र तद्विभ्रमः ॥ ६२ ॥ यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः । तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥ ६३ ॥ विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशनास्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः । शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवास्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरे ॥ ६४ ॥ आलोलैरुपगम्यते मधुकरैः केशेषु माल्यग्रहः कान्तिः क्वापि कपोलयोः प्रथयते ताम्बूलमन्तर्गतम् । अङ्गानामनुलेपनं परिमलैरालेपनप्रक्रिया वेषः कोऽपि सरोजसुन्दरदृशः सूते सुखं चक्षुषोः ॥ ६५ ॥ सद्रत्नस्फारहाराऽभयवरदकरा स्रस्तधम्मिल्लभारा मूलाधाराधिकारा निगमनिधिधरा काव्यकोटिप्रचारा । संसारानल्पकारासदनभयहरा चिद्घनैकावतारा तारा शृङ्गारधारा मनसि वसतु ते सर्वदा सर्वसारा ॥ ६६ ॥ संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां तत्त्वज्ञानामृताम्भःपुलकितमनसां यातु कालः कदाचित् । नो चेन्मुग्धाङ्गनानां स्तनजघनभराभोगसंभोगिनीनां स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोभोद्यतानाम् ॥ ६७ ॥ संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवाकलङ्कव्यासङ्गव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः । यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः ॥ ६८ ॥ आश्लेषे सुन्दरीणां स्थितवति सहसा सर्वसन्तृप्तिहेतौ व्यर्थः पीयूषमाप्तुं जलनिधिमथने यत्न इत्याकलय्य । तस्मादेते विरक्ता जगति सुमनसो यत्समस्तास्तदद्धा स्वर्गस्थानामिवैषां न कथमितरथा लाघवं स्यात् प्रतीतम् ॥ ६९ ॥

## नायकस्तुतिः ।

लज्जा कृतापराधेव कुलीनानां मृगीदृशाम् । येषु दृष्टेषु निर्याति त एव युवनायकाः ॥ १ ॥ स्त्रीणां नितम्बाद्वसनं शस्त्रं च द्विषतां करात् । पततो येषु दृष्टेषु त एव कृतिनो नराः ॥ २ ॥ वसनं सुदृशां मानो मानिनां दीनताऽर्थिनाम् । येषु दृष्टेषु लीयेरंस्त एव भुवि भावुकाः ॥ ३ ॥ दाने शौर्ये कवित्वे वा पाण्डित्ये साधुतार्जने । सुयशः प्रथितं येषां जन्मवन्तस्त एव कौ[४] ॥ ४ ॥ यद्यपि लावण्यकलाधरं भृतं मार्दवेन गात्रं स्यात् । तदपि रिपूणां विजये पविवत् कठिना भवन्ति ते केऽपि ॥ ५ ॥ मदनः स्त्रीणां, करुणो दीनानां, दण्डभृत्तथा द्विषताम् । धर्मः साक्षान्महतां विभाति यः कोऽपि धन्योऽसौ ॥ ६ ॥ वयं कृतार्था विभवप्रपूर्णा मन्यन्त एवान्तरिति प्रभूताः । तथा भवन्तोऽपि पुनर्नता ये गीताः परैरेव त एव केचित् ॥ ७ ॥

## नायिकावर्णनम् ।

मनः सूक्ष्मं न तद्वेद्धुं शक्यं, शिक्षापि कीदृशी । अथापि सुदृशो धन्या दृष्टमात्रा हरन्ति याः ॥१ ॥ अभविष्यंस्तपःसिद्धाः स्रष्टारो बहवः परे । नास्रक्ष्यन्त कुरङ्गाक्ष्यो यदि नाम मनोहराः ॥२॥ नान्यः स्यान्मादृशः कश्चिद्विधाता तपसोर्जितः । इत्येव विहिताः कान्ता मुनीनामपि मोहदाः ॥ ३ ॥ दृशः सञ्चारमात्रेण

१ चलत्पाणिः । २ तदाख्यः पर्वतः । ३ जनयति । ४ पृथिव्याम् ।

हरन्ति सुदृशो मनः। यदि स्याज्जातु संश्लेषो जीवितेच्छा पुनः कुतः ॥४॥ वशिनो वयमित्यास्था तावदेव तपस्विनाम्। यावन्न तरुणीनेत्रपद्मयोर्लक्ष्यतां गताः ॥ ५ ॥ अभ्यासः कर्मणां सम्यगुत्पादयति कौशलम्। विधिना तावदभ्यस्तं यावत्सृष्टा मृगेक्षणाः ॥ ६ ॥ न देवकन्यका नापि गन्धर्वकुलसम्भवा। तथाऽप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ ७ ॥ इयं व्याधायते[1] बाला भ्रूरस्याः कार्मुकायते[2]। कटाक्षाश्च शरायन्ते[3] मनो मे हरिणायते[4] ॥ ८ ॥ मनोऽपि शङ्कमानाभिर्बालाभिरुपजीव्यते। अषडक्षीणषाड्गुण्यमन्त्री मकरकेतनः ॥ ९ ॥ अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा। तारकातरला श्यामा सानन्दं न करोति कम् ॥ १० ॥ निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम्। क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥ ११ ॥ प्रेङ्खणप्रेक्षणालापान्कुर्वत्यः सस्मितत्रपम्। न वीणायाः प्रवीणायाः स्वञ्जनं स्मररञ्जनम् ॥१२॥ शृङ्गाररससाशाला भव्याभरणा नितम्बविस्तारा। रतिरिव परिस्फुरन्ती हरति न बाला मनः कस्य ॥ १३ ॥ हेतिरिव होलिकायां विद्युदिव द्योतमानकान्तिचया। शारदपार्वणचन्द्रं विदार्य निष्कासितेव सुतनुः ॥ १४ ॥ नाभिर्वापी त्रिवलिः सोपानं रोमराजिरिन्द्रमणिः। ललिताङ्ग्या उच्चकुचौ मदनशिखरबन्धमन्दिराभासौ ॥ १५ ॥ मनसिजविहरणविपिनं युवजनमनसो वशीकरं शस्त्रम्। अमृतकलासर्वस्वं कुरङ्गशावकविलोलाक्षी ॥ १६ ॥ वक्षोजातौ कोकौ वदनं राकाशरत्सुधासिन्धुः। तनुरेवं स्वर्णलता तन्व्या हसितं स्मरास्त्रसम्भारः ॥ १७ ॥ दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि। इत्यपवादभयादिव मुग्धाक्षी निर्मिता विधिना ॥ १८ ॥ मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्लकमलवती। शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी ॥ १९ ॥ अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी। किसलयपेशलपाणिः[6] कोकिलकलभाषिणी कान्ता ॥ २० ॥ अमृतं तदधरबिम्बे वचनेष्वमृतं विलोकनेऽप्यमृतम्। अमृतभृतौ कुचकुम्भौ सत्यं सा सृष्टिरपरैव[7] ॥ २१ ॥ स्तनकलशस्खलदम्बरसंवरणव्यग्रपाणिकमलायाः। निपतन्ति भाग्यभाजामुपरि कटाक्षाः सरोजाक्ष्याः ॥ २२ ॥ कुङ्कुमपङ्केनाङ्कितदेहा गौरपयोधरकम्पितहारा। नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ २३ ॥ वामाः सुदृशः कथमिव तथाऽपि मूढा वदन्ति हन्त तथा। यद्दर्शनमुपयाताः सकला विकला महान्तोऽपि ॥ २४ ॥ अञ्जनमिषतः स्त्रीणां दृशोर्विषं शश्वदावसति। कथमन्यथा तदीषत्पातेऽपि हता युवानः स्युः ॥ २५ ॥ मन्दमन्दगमना[8] करिणी किं वा विशालनयना[9] हरिणी किम्। पूर्णचन्द्रवदना[10] रजनी किं पश्य गच्छति सखे तरुणी किम् ॥ २६ ॥ उत्तुङ्गस्तनभरतान्ततान्तमध्यं[11] विश्लिष्यद्घनकचवान्तवान्तसूनम्[12]। वक्त्राब्जभ्रमदलिभीतभीतनेत्रं[13] मुग्धाक्षी मम धुरि[14] मन्दमन्दमेति ॥ २७ ॥ उदयदुदयदीक्षणाय पत्युश्चपलदृशास्त्रपया निरुध्यमानम्। मन इव कृपणस्य दानकाले कति न ततान गतागतानि चक्षुः ॥ २८ ॥ अदम्भा[15] हि रम्भा[16] विलक्षा[17] च लक्ष्मीर्धृताचीपुरोपि द्रिया चीरसंच्छादितास्या। अहो[18] जायते मन्दवर्णाप्यपर्णा समाकर्ण्य तस्या गुणस्यैकदेशम् ॥ २९ ॥

---

१ व्याध इवाचरति। २ कार्मुक इवाचरतीति भावः। ३ शरा इवाचरन्ति। ४ हरिण इवाचरति। ५ शोभनशृङ्गाररसपूर्णा, मधुरजला च। ६ कोमलपल्लवसदृशसुन्दरहस्ता। ७लोकतो विभिन्नैव। ८अतिमन्दं गमनं यस्याः सा। ९विशाले नयने यस्याः सा। १०पूर्णचन्द्रवद्वदनं यस्याः सेति तरुणी, पूर्णं चन्द्रवदनं चन्द्रबिम्बं यत्र सेति रजनीपक्षे। ११ उत्तुङ्गस्तनभरेण तान्तं कृशं तान्तमल्पं स्वभावतः कृशमुदरं यत्र कर्मणि तद् यथा स्यात्तथा। १२ सूनं पुष्पम्। १३ अतिभीतलोचनम्। १४ पुरस्तात्। १५ निष्कपटा। १६ तदाख्या। १७ विलक्षणा देवगणिका। १८ पार्वती।

एकान्तसुन्दरविधानजडः क वेधाः सर्वाङ्गकान्तिचतुरं क च रूपमस्याः। मन्ये महेश्वरभयान्मकरध्वजेन प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥ ३० ॥ किं कौमुदीः शशिकलाः सकला विचूर्ण्य संयोज्य चामृतरसेन पुनः प्रयत्नात् । कामस्य घोरहरहुंकृतिदग्धमूर्तेः संजीवनौषधिरियं विहिता विधात्रा ॥ ३१ ॥ वामां मृषैव सुमुखीति वदन्ति बालाः किं तत्र तत्त्वमिति न प्रतिभासते नः । किं त्वीदृशीं स्मृतवतामपि मार्गणानां संवर्धते सपदि चेतसि कोऽपि दाहः ॥ ३२ ॥ नेदं मुखं मृगवियुक्तशशाङ्कबिम्बं नेमौ स्तनावमृतपूरितहेमकुम्भौ । नैवालकावलिरियं मदनास्त्रशाला नैवेदमक्षियुगलं निगडं हि यूनाम् ॥ ३३ ॥ चित्ते निवेश्य परिकल्पितसत्त्वयोगान्रूपोच्चयेन विधिना विहिता कृशाङ्गी । स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ३४ ॥ चन्द्रो जडः कदलिकाण्डमकाण्डशीतमिन्दीवराणि च विमुद्रितविभ्रमाणि । येनाक्रियन्त सुतनोः स कथं विधाता किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते॥ ३५॥ सौन्दर्यसारमपहृत्य यतस्ततोऽपि निर्माति पद्मनयनां द्रुहिणः कथञ्चित् । ज्योत्स्नाकरादिषु यदम्बररोचिरास्ते तत्सम्भवो हि तत एव न चान्यथा स्यात् ॥ ३६॥ निर्मुक्तशैशवदशाशिशिरा नवीनसंप्राप्तयौवनवसन्तमनोरमश्रीः । उन्मीलितस्तननवस्तबका निकाममेणीदृशस्तनुलता तनुते मुदं नः ॥ ३७॥ नीलोत्पलोल्लसितखञ्जनमञ्जुनेत्रा संपूर्णशारदसुधाकरकान्तवक्त्रा । बाला जगत्त्रितयमोहनदिव्यमूर्तिर्मन्ये विभाति जगति स्मरवीरकीर्तिः ॥ ३८ ॥ एताः स्खलद्वलयसंहतिमेखलोत्थझङ्कारनूपुररवाहतराजहंसाः । कुर्वन्ति कस्य न मनो विवशं तरुण्यो वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ ३९ ॥ एषा भविष्यति विनिद्रसरोरुहाक्षी कामस्य कापि दयिता तनुजाऽनुजा वा । यः पश्यति क्षणमिमां कथमन्यथासौ कामस्तमस्तकरुणस्तरुणं हिनस्ति ॥ ४० ॥ मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ४१ ॥ अपाङ्गतरले दृशौ तरलवक्रवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखम् । इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ४२ ॥ दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विषश्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् । शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसो विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ ४३ ॥ काचित्सुभ्रूभङ्गैः कचिदपि च लज्जापरिणतैः कचिद्भीतित्रस्तैः कचिदपि च लीलाविलसितैः । नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः स्फुरल्लीलालास्यप्रकरपरिपूर्णा इव दृशः ॥ ४४ ॥ लतायाः सौवर्ण्या जयति जलदीयोपरि घटा ततोऽधोऽधश्चन्द्रः स्फुरति तदधश्चाम्बुजयुगम् । स्वभूयात्राभेरी विलसति पुनर्विद्रुमदलं ततः कम्बुर्वीणाध्वनिभरगभीरो बत महान् ॥ ४५ ॥ अमुष्या लावण्यं मृदुलमृदुलान्यप्यवयवान्मनोलौल्यं धातुः करकठिनतां मे विमृशति । पदं चित्ते धत्ते मतिरिति पुरा पङ्कजभुवां ध्रुवं कल्याणीयं कलितैःसुकृतैरेव रचिता ॥ ४६ ॥ समीचीना चीनांशुकपरिधृताङ्गी प्रविलसत्कुचापीना हीना जघनघनभागेऽब्जवदना । न दीनाऽदीनान्तःकलितमदना सेयमधुना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ ४७ ॥

---

१ जीवनाभिलाषिणा । २ स्फुरन्ति यानि लीलालास्यानि तेषां प्रकरः समूहस्तेन परिपूर्णाः। ३ विधात्रा । ४ संगृहीतैः पुण्यैः सुशिक्षितै रचनाकौशलैर्वा ।

स्फुरन्नानारत्नारुणितवसना वृत्तमसृणस्तनापीना मत्ता तरलजघना हंसगमना । स्मराधीनाऽऽसीना कविहृदि जिताशेषललना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ ४८ ॥ उदासीनाऽऽलीनामपि वचसि लीनाऽतनुलसत्त्रपाधीना दीनालपनपदवीनायकधृता । कवीनामासीना हृदि कुमुदिनीनाथवदना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ ४९ ॥ निलीना वेश्मान्तः कथमपि सखीनामभिहितैः कृताधीनाहीनाकृतिरपि सतीनामविषया । कवीनामज्ञत्वं ज्ञपयति विपीना तनुतया नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ ५० ॥ कुचाभ्यां भास्वन्ती विजितलकुचाभ्यां युवमनो हरन्ती बिब्बोकैः सरासि विहरन्ती मधुरगीः । तरुण्या लावण्यं किमपि विदधानार्भकविधौ नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ ५१ ॥ अमलमृणालकाण्डकमनीयकपोलरुचेस्तरलसलीलनीलनलिनप्रतिफुल्लदृशः । विकसदशोकशोणकरकान्तिभृतः सुतनोर्मदलुलितानि हन्त ललितानि हरन्ति मनः ॥ ५२ ॥ किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ । खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ तडिद्वा तारा वा कनकलतिका वा किमबला ॥ ५३ ॥ तनुस्पर्शादस्या दरमुकुलिते हन्त नयने उदञ्चद्रोमाञ्चं व्रजति जडतामङ्गमखिलम् । कपोलौ घर्मार्द्रौ ध्रुवमुपरताशेषविषयं मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥ ५४ ॥ मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनैरलसवलितैरङ्गन्यासैर्महोत्सवबन्धुभिः । असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितैस्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥ ५५ ॥ कर्पूरेण स्थलविरचना कुङ्कुमेनालवालं मार्द्वीकानि प्रतिदिनपयः पञ्चबाणः कृपाणः । तत्रोत्पन्ना यदि किल भवेत्काञ्चनी कापि वल्ली सा चेदस्याः किमपि लभते सुभ्रुवः सौकुमार्यम् ॥५६॥ लावण्यामृतदीर्घिका कुलगृहं सौन्दर्यसौभाग्ययोस्त्रैलोक्याकररत्नकन्दलिरियं जीव्यात्सहस्रं समाः । रूपालोकनकौतुकेन बहुना शिल्पश्रमेणादरान्मन्ये यां विधिना विहाय विहितं सृष्टेर्ध्वजारोपणम् ॥ ५७ ॥ यष्टिर्नो काञ्चनी सा नहि सुरभिभृता नाऽपि कस्तूरिका सा नो कान्ता नाब्जिनी सा न जड ( ल ) विरहिता नाप्युमा सा हि भीमा । नो पद्मा सा न पद्मासनमनधिगता नापि गायत्र्यसौ यत्सा नो वेदानिदानं जनयति नितरां मोहमेषेति केयम् ॥ ५८ ॥ अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः । वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥५९॥ वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानां चयः । वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥ ६० ॥ अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतम् । अङ्गानामकठोरता यदि दृषत्प्रायेव सा मालती कान्तिश्चेत्कमलां किमत्र बहुना काषायमालम्बताम् ॥ ६१ ॥ निर्मित्सुः सुदतीमजो विरचिते वक्त्रे शशिभ्रान्तितः कोशीभूतनिजा-

१ अरुणित—रञ्जित—। २ 'बिब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ।' इत्युक्तैर्यौवनालङ्कारैः । ३ रमणीयानि । ४ दर्पणः । ५ ईषत्सङ्कुचिते । ६ द्राक्षाफलानि । ७ तादृशे क्षेत्रे । ८ तिरश्चिकीर्षुः । 'न लोकाव्ययनिष्ठा खलर्थतृनाम्' इति न षष्ठी । एवम्परत्रापि । ९ जेतुमिच्छुः । १० वञ्चकौ । ११दुर्भरा। १२रमणीयम् । १३कोकिलैः । १४मौनित्वव्रतपालनम् । १५पाषाणसदृशी । १६ लक्ष्मीः । १७ कषायरङ्गरञ्जितं वस्त्रम् । १८ निर्मातुमिच्छुः । १९ शोभनरदनाम् । २० ब्रह्मा ।

म्बुजासनमधिष्ठातुं न शक्तो विधिः । मध्यं विस्मृतवान्कुचौ च कठिनौ पीनौ नितम्बौ कचान्वक्रान्निर्मितवान्मतिः स्फुरति हि स्वस्थे नृणां चेतसि ॥ ६२ ॥ सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः । विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ६३ ॥ दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा श्रोत्रे प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि । पुंसामङ्कमपेतशङ्कमधुनाऽप्यारोहति प्राग्यथा बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥ ६४ ॥ आयाति श्रियमञ्जसा नयनयोरम्भोरुहप्रेयसीं संनाहैः स्तनयोरयं कथयते संभोगयोग्यां दशाम् । वैदग्ध्येन सहासिकां वितनुते वाचामियं प्रक्रियां मुग्धायाः पुनरैन्दवीं न सहते मुख्यामभिख्यां मुखम् ॥ ६५ ॥ कान्ते त्वन्नेत्रकान्तं पुरु कमलवनं त्वन्मुखस्योपमेयश्चन्द्रः प्रत्यक्षसिद्धः पिककुलमपि च त्वत्स्वरस्यानुकारि । रम्भाकाण्डस्त्वदूरुच्छाविरपि सुलभः कम्बवश्च त्वदीयकण्ठाकाराः शिखण्डास्तव कचसदृशास्तत्कथं तेऽसमत्वम् ॥ ६६ ॥ अस्पृष्टे राहुभीत्याऽहनि निशि च समे कल्मषच्छाययोने हासश्वासाद्विदूरे समुपचितविभावैभवे हृद्यगन्धे । पाथोदाच्छादहीने धरणितलगतादुर्लभे सर्वलोकाह्लादं चाप्यादधाने सुमुखि तव मुखौपम्यलेशः सुधांशौ ॥ ६७ ॥

## नायिकातारुण्यप्रवेशमहिमा ।

तारुण्यं लभते कान्ता मृदुलाङ्गी यथा यथा । तथा तथा मनोजोऽपि तस्यां साम्राज्यमिच्छति ॥ १ ॥ यथा यथा वयोवृद्धिं स्वीकरोति तथा तथा । नवैव सुषमोदेति दर्शनोन्मादकारिणी ॥ २ ॥ यथा यथा विशत्यस्या हृदये हृदयेश्वरः । तथा तथा बहिर्यातौ मन्ये संकोचतः कुचौ ॥ ३ ॥ अन्तरङ्गमनङ्गस्य श्रृङ्गारकुलदैवतम् । अङ्गीकरोति तन्वङ्गी सा विलासमयं वयः ॥ ४ ॥ अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी । नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः ॥ ५ ॥ अनायासकृशं मध्यमशङ्कतरले दृशौ । अभूषणमनोहारि वपुर्वयसि सुभ्रुवः[११] ॥ ६ ॥ दृश्यं दृशां सहस्रैर्मनसामयुतैर्विभावनीयं च । सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रुवो जयति ॥ ७ ॥ [१२]न्यञ्चति वयसि प्रथमे समुदञ्चति तरुणिमनि सुदृशः । दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम् ॥ ८ ॥ यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः । दहनं विनैव तदवधि यूनां हृदयानि [१३]दह्यन्ते ॥ ९ ॥ अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू । कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १० ॥ मृदुलवलिललितमध्यं [१४]पृथुलकुचं चारु [१५]विपुलभूजघनम् । [१६]पुंनागस्पृहणीयं स्फुरति वनं यौवनं च नारीणाम् ॥ ११ ॥ संभिन्न[१७]योरमुष्या [१८]वयसोः पयसोरिवाङ्गेषु । अनयो[१९]रसद्विभेदं [२०]मानसजन्मा [२१]परं वेद ॥ १२ ॥ स्तनतटमिदमुत्तुङ्गं नि[२२]म्नो मध्यः समुन्नतं जघनम् । विषमे मृगशावाक्ष्या वपुषि नवे क इव न स्खलति ॥ १३ ॥ उदयति तरुणिमत-

---

१ त्रपया सङ्कुचितमात्मनः कमलासनम् । २ नदी । ३ क्रीडारहस्यानाम् । ४ मदोद्रेकेण इति शेषः।५ बन्धः । ६ अवस्थाम् । ७ चातुर्येण । ८ चन्द्रसम्बन्धिनीम् । ९ शोभाम् ।१०कौशलपरम्परा । ११ सुभ्रुवो यन्मध्यभागादेर्दौर्बल्यादि तत्स्वाभाविकमिति भावः । १२ निर्याति सति । १३एतेन यौवनेन सममेव हृदयानि हतानि।१४ पृथवो लकुचाः वडहरेत्याख्यस्य फलानि यत्र, पृथुलौ कुचौ यत्रेति च तत् । १५ विपुला ये भूजा वृक्षास्तैर्घनम्, विपुला भूर्येषां तादृशानि जघनानि यत्रेति च तत्।१६पुन्नागैः केसरैः, पुरुषश्रेष्ठैश्च स्पृहणीयम् । १७मिलितयोः ।१८शैशवयौवनयोः । १९ असन्यो विभेदस्तम् । २० मदनः । २१ केवलम् । २२ गभीरः, क्षीण इति भावः ।

रणौ शैशवशशिनि प्रशान्तिमायाते । कुचचक्रवाकयुगलं तरुणितटिन्यां मिथो मिलति ॥ १४ ॥ अचलं चलदिव चक्षुः प्रकृतमपीदं समुद्यदिव वक्षः । अतदिव तदपि शरीरं संप्रति वामभ्रुवो जयति ॥ १५ ॥ अयमङ्कुरभाव एव तावत्कुचयोः कर्षति लोकलोचनानि । इतरेतरपीडनीमवस्थां गतयोः श्रीनरयोः कथं भवित्री ॥ १६ ॥ परिहरति यथा यथा वयोऽस्याः स्फुरदुरुकन्दलशालिबालभावम् । द्रढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्जयन्मनोभूः ॥ १७ ॥ निशितशरधियाऽर्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले[1] । दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः[3] ॥ १८ ॥ यथा यथास्याः कुचयोः समुन्नतिस्तथा तथा लोचनमेति वक्रताम् । अहो सहन्ते बत नो परोदयं निसर्गतोऽन्तर्मलिना ह्यसाधवः ॥ १९ ॥ समं विलासोऽङ्कुरितः स्तनाभ्यां त्रपा विलासेन सहावतीर्णा । अवर्ततान्यस्त्रपयैव साकं कान्तः प्रकारो वचसां कृशाङ्ग्याः ॥ २० ॥ समं मृगाक्ष्यास्त्रपया कटाक्षनिक्षेपचातुर्यमुपैति वृद्धिम् । मध्येन भागेन च सार्द्धमस्याः भ्रुवोर्ऋजुत्वं कृशिमानमेति ॥ २१ ॥ उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् । बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥ २२ ॥ असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साधु वयः प्रपेदे ॥ २३ ॥ आवृणोति यदि सा मृगीदृशी स्वाञ्चलेन कुचकाञ्चनाचलम् । भूय एव बहिरेति गौरवादुन्नतो न सहते तिरस्क्रियाम् ॥ २४ ॥ अत्युन्नतस्तनमुरो नयने सुदीर्घे वक्रे भ्रुवावतितरां वचनं ततोऽपि । मध्योऽधिकं तनुरनूनगुरुर्नितम्बो मन्दा गतिः किमपि चाद्भुतलोचनायाः ॥ २५ ॥ तन्व्याः स्तनौ गुरुतया पृथुतां दधानौ दृष्ट्वा समं भरभिया सुकृशो नु मध्यः । भारस्य भीत्यपगमादिव हन्त हृष्टः पुष्टिं प्रयात्यनुदिनं च नितम्बभागः ॥ २६ ॥ भ्रूपल्लवो धनुरपाङ्गतरङ्गितानि बाणा गुणाः श्रवणपालिरिति स्मरेण । तस्यामनङ्गजयजङ्गमदेवतायामस्त्राणि निर्जितजगन्ति किमर्पितानि ॥ २७ ॥ दृशोः सीमावादः श्रवणयुगलेन प्रतिकलं स्तनाभ्यां संरुद्धे हृदि मनसिजस्तिष्ठति बलात् । नितम्बः साक्रन्दं क्षिपति रशनादाम परतः प्रवेशस्तन्वङ्ग्या वपुषि तरुणिम्नो विजयते ॥ २८ ॥ अनाघ्रातं पुष्पं किसलयमलूनं[8] कररुहैरनाविद्धं रत्नं मधु नवमनास्वादितरसम् । अखण्डं पुण्यानां फलमिव च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ २९ ॥ भ्रुवौ काचिल्लीलापरिणतिरपूर्वा नयनयोः स्तनाभोगो व्यक्तस्तरुणिमसमारम्भसमये । इदानीं बालायाः किममृतमयः किं विषमयः किमानन्दः साक्षाद्ध्वनितमधुरः पञ्चमरवः[11] ॥ ३० ॥ अनाकूतैरेव प्रियसहचरीणां शिशुतया वचोभिः पाञ्चालीमिथुनमधुना सङ्गमयितुम् । उपादत्ते नो वा विरमति न वा केवलमियं कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥ ३१ ॥ प्रगल्भानामन्तः[12] प्रविशति शृणोति प्रियकथां स्वयं तत्तच्चेष्टाशतमभिनयैर्[13]वञ्चयति[14] च । स्पृहामन्तः कान्ते वहति न समभ्येति निकटं यथैवेयं बाला हरति हि तथा चित्तमधिकम् ॥ ३२ ॥ स्मितव्याजादन्तर्विलसदमितालौकिकविधाविशेषस्योद्रेको मुहुरुदयते चञ्चलदृशः । ततो मन्ये सत्यं निरतिशयलावण्यनिचयाकरश्रीरेवेयं सरसिजभुवा हन्त

---

१ कुटिले । २ अहमहमिकयोल्लासम् । ३ "अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसम्प्रलापाश्च । उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः॥" इत्युक्ता मदनकृता दशावस्थाः । ४ स्वभावतः । ५ अलौकिकसौन्दर्यपूर्णनेत्रायाः । ६ अविच्छिन्नम् । ७ नखैः । ८अनाहतम् । ९ निरवद्यं सुकृतं च । १० लीलानां परिणतिः परिपाकः । ११ पञ्चमस्वर इत्यर्थः । १२ प्रौढतरुणीनाम् । १३ अनुकरणैः ।१४ प्रतारयति च । १५ आयाति ।

रचिता ॥ ३३ ॥ स्मितं किंचिद्वक्त्रं सरलतरलो दृष्टिविभवः परिस्पन्दो वाचामभिनवविलासोक्तिसरसः । गतीनामारम्भः किसलयितलीलापरिकरः स्पृशन्त्यास्तारुण्यं किमिह नहि रम्यं मृगदृशः ॥ ३४ ॥ इमे तारुण्यश्रीनवपरिमलाः प्रौढसुरतप्रतापप्रारम्भाः स्मरविजयदानप्रतिभुवः । चिरं चेतश्चौरा अभिनवविकारैकरुचयो विलासव्यापाराः किमपि विजयन्ते मृगदृशः ॥ ३५ ॥ उरोजौ वर्धेते व्रजति च नितम्बः पृथुलतां विशालं सम्पन्नं नयनयुगलं चापि नितराम् । भ्रुवौ तिग्मे वृत्ते इति कथमिवाङ्गेषु नवता ममेत्युत्पश्यन्ती हसति चकितेवानिशमियम् ॥ ३६ ॥ अपक्रान्ते बाल्ये तरुणिमनि चागन्तुमनसि प्रयाते मुग्धत्वे चतुरिमणि चाश्लेषरसिके । न केनापि स्पृष्टं यदिह वयसा मर्म परमं यदेतत्पञ्चेषोर्जयति वपुरिन्दीवरदृशः ॥ ३७ ॥ तदात्वप्रोन्मीलन्म्रदिमरमणीयाः कठिनतां विचिन्त्य प्रत्यङ्गादिव तरुणभावेन वटितौ । स्तनौ संविभ्राणाः क्षणविनयवैयात्यमसृणस्मरोन्मेषाः केषामुपरि न रसानां युवतयः ॥ ३८ ॥ न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयोः कुचश्रीः कर्कन्धूफलमपि न वन्धूकृतवती । सुधायाः सध्रीची न च वचनवीचीपरिचिता तथापि श्रीरस्या युवजननमस्या विजयते ॥ ३९ ॥ उदञ्चद्वक्षोजद्वयतटभरक्षोभितकटि स्फुरद्दृग्भ्यां मन्दीकृतविलसदिन्दीवरयुगम् । समुद्यद्भ्रूभङ्गं प्रविहितधनुर्भङ्गमनिशं वयस्तत्पद्माक्ष्याः कथमिव मनो न व्यथयतु ॥ ४० ॥ शरीरे लावण्यं सकलमपि पीयूषनिचयं विधात्रा विन्यस्तं हरिणनयनाया ननु मुखे । निरीक्ष्यह्रीलीनो द्विजपतिरयं दर्शयति नो कदाऽप्यह्नि स्वास्यं न निशि पुनरेकत्र रमते ॥ ४१ ॥ न दन्तुरमुरःस्थलं वचसि नाश्रिता चातुरी विकारि न विलोकितं भ्रुवि न वक्रिमोपक्रमः । तथापि हरिणीदृशो वपुषि काऽपि कान्तिच्छटा पटावृतमहामणिद्युतिरिवात्र संलक्ष्यते ॥ ४२ ॥ इदं परमसुन्दरं तनुपुरं कुरङ्गीदृशां निवार्य खलु शैशवं स्वयमनेन नीतं बलात् । तदागमनशङ्कया मकरकेतुना किं कृतं पयोधरधराधरौ त्रिवलिवाहिनीदुस्तरौ ॥ ४३ ॥ स्थिरत्वमचिरद्युतौ तमसि कोऽपि बन्धग्रहो विधौ किमपि सौरभं मधुनि कापि वर्णात्मता । शिरीषनवदामनि स्फुरति कोऽपि शैलोदयो वयोऽभिनववेधसस्तदिह मन्महे कौशलम् ॥ ४४ ॥ क्षणं सरलवीक्षणं क्षणमपाङ्गसंवीक्षणं क्षणं रजसि खेलनं क्षणमतीव भूषादरः । क्षणं द्रुततरा गतिः क्षणमतीव मन्दा गतिः क्षणक्षणविलक्षणं जयति चेष्टितं सुभ्रुवः ॥ ४५ ॥ क्षोभं धत्ते यदतिबहलः स्निग्धलावण्यपूरः प्रत्यङ्गं पत्तटमनुसरन्त्यूर्मयो विभ्रमाणाम् । उन्मग्नं यत्स्फुरति च मनाक्कुम्भयोर्द्वन्द्वमेतत्तन्मन्येऽस्याः स्मरगजयुवा गाहते हृत्तडागम् ॥ ४६ ॥ मन्दं मन्दं श्रवणपुटकोपान्तगन्ता दृगन्तः किंचित्किंचिद्विरमति मनो धूलिकेलीरसेभ्यः । आविर्भावः स्तनमुकुलयोः कापि कान्तिः समन्तादद्य श्वो वा कुसुमधनुषो यौवराज्याभिषेकः ॥ ४७ ॥ संनद्धोऽयं नवतरुणिभा काममास्कन्दुकामो नैनां मुञ्चत्यहह सहसा कौतुकी बालभावः । तद्वैराज्यं व.तरतनुस्वर्णभूमौ प्रवृत्तं प्रायस्तस्मादनुदिनमयं क्षीयते मध्यदेशः ॥ ४८ ॥ वक्षोजातौ कनककलशौ रम्यरोमावलीयं श्लक्ष्णा रज्जुर्लसति सरसो नाभिकूपो गभीरः । एवं सत्त्वे सपदि सकले हन्त तृष्णाप्रशान्त्युपायेऽप्येतत् किमु युवजगद्भ्राम्यतीतः परत्र ॥ ४९ ॥ श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् । धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ५० ॥ सभ्रूभङ्ग

---

१ पल्लवितः ( पुष्टः ) लीलापरिकरः ( परिच्छदः ) यत्र तादृशः । २ प्रतिभुवः प्रतिनिधिभूताः । ३ चातुर्यं । ४ वैयात्यधृष्टत्व- । ५ पुष्टम् । ६ लावण्यस्य पूरत्वोक्त्या जलवत्तरलत्वं व्यज्यते । ७ मन्दमन्दमिति वाच्यम्, प्रकारे गुणवचनस्येति शास्त्रात् । छन्दोभङ्गभिया न तथोक्तम् । ८ मदनस्य । ९ नितम्बबन्धः । १० कृशताम् । ११ चपलानि गमनानि । १२ गुणानां परिवर्तनम् ।

करकिसलयावर्तनैरालपन्ती पश्यन्ती ललितललितं लोचनस्याञ्चलेन । विन्यस्यन्ती चरणकमले लीलया स्वैरपातैर्निःसङ्गीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥ ९१ ॥ दूरीकर्तुं प्रभवति शशी स्वक्षयार्तिं न किञ्चिदेणाक्षी तु स्मररुजमपि द्राग्वरेद्दुश्चिकित्स्याम् । तस्मान्मन्ये [1]सकलममृतं स्थापितं तन्मुखान्तर्धात्रा नूनं कथमितरथा क्षीणता तत्र सक्ता ॥ ९२ ॥ दोलायां जघनस्थलेन चलता लीलेक्षणा लज्जते साशङ्कं तनुकण्टकक्षतभिया क्रीडावने क्रीडति । धत्ते दिक्षु निरीक्षण स्मितमुखी पारावतानां रुतैः सज्जं मौग्ध्यविसर्जनाय सुतनोः शृङ्गारमित्रं वयः ॥ ९३ ॥ वक्षस्यावरणादरः स्तनयुगोद्भेदं विनाप्यङ्गुलीमुद्रासूचितहास्यमास्यमधिकं नो पुत्रिकादौ रसः । तिर्यग्लोचनवीक्षितानि वचसां छेकोक्तिसंक्रान्तयस्तस्याः सीदति शैशवे समभवत्कोऽप्येष नव्यः क्रमः ॥ ९४ ॥ लावण्यामृतनिर्झरेण सुदृशः सिक्ताखिलाङ्गस्थली जातस्तत्र नवीनयौवनकलालीलालतामण्डपः । तस्मिन्वेषविशेषशीतलतरुच्छायासु सुप्तोत्थितः कंदर्पस्त्रिजगज्जयोऽयमपरोऽप्यद्यापि निद्रालसः ॥ ९५ ॥ बाल्ये गेहपतौ निमीलति वयःसन्धिं विधाय स्मरश्चौरश्चारुतरं विवेश निभृतं बालाशरीरालयम् । चाञ्चल्यं चरणे पृथुत्वमुदरे निर्लज्जतां चेतसि क्षामत्वं हृदये दृशोः सरलतां सर्वस्वमस्या हरन् ॥ ९६ ॥ एतस्य रति[3]वल्लभक्षितिपतेः क्रीडासरस्यां शनैः संशोषं नयतीव शैशवजलं [4]तारुण्यतिग्मद्युतिः । अन्तःस्था च यथा यथा विकसति प्रायः कुचोच्चस्थली स्थौल्यं हन्त तथा तथा वितनुते दृक्पीनमीनावली ॥ ९७ ॥ रेखा काचन कज्जलस्य नयनाम्भोजे मिथः कौशलात्[5]तूलीभिः सरलीकृतापि कुटिलीभावं समालम्बते । लक्ष्या वक्षसि पाणिपद्मविषमस्पर्शोदयादुन्नतिर्जानीमो वयमेणशावनयने बाल्यं न पाल्यं तव ॥ ९८ ॥ मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दतां दूरं यात्युदरं च रोमलतिका नेत्रार्जवं धावति । कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणादङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः[6] ॥ ९९ ॥ दृष्टिः शै[7]शवमण्डना प्रतिकलं लावण्यमभ्यस्यते पूर्वाकारमुरस्तथापि कुचयोः शोभां नवामीहते । संप्राप्ता गुरुतां तथाप्युपचिताभोगा नितम्बस्थली तन्व्याः स्वीकृतमन्मथं विजयते तन्नेत्रपेयं वयः ॥ ६० ॥ तत्तस्याः कमनीयकान्ति विजितत्रैलोक्यनारीवपुः शृङ्गारस्य निके[8]तनं समभवत्संसारसारं वयः । यस्मिन्विस्मृतपक्ष्मपालिचलनाः कामालसा दृष्टयो नो यूनां पुनरुत्पतन्ति पतिताः पाशे शकुन्ता इव ॥ ६१ ॥ केलीकौतुकमादराच्छ्रवणयोरालीभिराश्राव्यते बालाभिस्तु पुरः पुरे[9]व रजसि क्रीडार्थमाहूयते । चेतो याति न वा ततस्तदुभयोरेणीदृशः सांप्रतं मध्ये चुम्बकयोरयःशकलवन्निष्पक्षपातं मनः ॥ ६२ ॥ उत्तालालकभञ्जनानि कबरीपाशेषु शिक्षारसो दन्तानां परिकर्म नीविनि[10]र्हन्नं भ्रूलास्ययोग्याग्रहः । तिर्यग्लोचनचेष्टितानि वचसां छेकोक्तिसं[11]क्रान्तयः स्त्रीणां म्लायति शैशवे प्रतिक[12]लं कोऽप्येष केलिक्रम ॥ ६३ ॥ मात्रा[13]नर्तनपण्डितभ्रु वदनं किंचित्प्रगल्भे दृशौ [14]स्तोकोद्भेदनिवेशितस्तनमुरो मध्यं [15]दरिद्राति च । अस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणीदृशः सत्यंकारमिव स्मरैकसुहृदा तद्यौवनेनार्पितम् ॥ ६४ ॥ लावण्यामृतमा[16]हितं वरतनोरङ्गे स्थितं यत्पुरा तत्तारुण्यघनोदयेन बहुधा संवर्धितं पद्मभूः[17] ।

---

१ रतिरस्युक्तम् । २ वक्षसि । ३ कामरूपस्य नृपतेः । ४ यौवनरूपः सूर्यः । ५ शलाकाभिः । ६ नवीने हि राज्ये दस्युजनोपद्रवो जायत इति सम्भाव्येदमुक्तम् । ७ शैशवं मण्डनं यस्यां सा । ८ स्थानभूतम् । ९ यौवनात्प्रागिव । १० नीविबन्धनम् । ११ चातुर्येणार्थान्तरपरत्वापादनानि । १२ कले कले वचने वचन इति यावत् । १३ मात्रया परिमाणेन । १४ स्तोकः अल्पः, य उद्भेदः उल्लासः, तेन निवेशितौ स्तनौ यत्र तादृशम्, किञ्चिदङ्कुरितस्तनशालीत्यर्थः । १५ असदिव प्रतिभाति । १६ स्थापितम् । १७ ब्रह्मा ।

वीक्ष्य स्यन्दनशङ्कितः कुचयुगव्याजान्नितम्बस्थलाचक्रे सेतुयुगं न चेदिह कुतस्तादृग्रसस्थास्नुता ॥ ६५ ॥ विस्तारी स्तनभार एष गमितो न स्वोचितामुन्नतिं रेखोद्भासिकृतं वलित्रयमिदं न स्पष्टनिम्नोन्नतम् । मध्येऽस्या ऋजुरायतार्धकपिशा रोमावली निर्मिता रम्यं यौवनशैशवव्यतिकरोन्मिश्रं वयो वर्तते ॥ ६६ ॥ चाञ्चल्यं चरणौ विहाय नयनप्रान्तं प्रतिष्ठासते वस्तुं वाञ्छति वाचि काचिदमृतस्पर्धाकरी माधुरी । कान्तिः काचन वक्षसो विजयते तन्व्या दुकूलाञ्चलं तन्मन्ये दिवसैः कियद्भिरतनुर्जेता जगन्मण्डलम् ॥ ६७ ॥ आलापान्भ्रूविलासो विरलयति लसद्बाहुविक्षिप्ति यातं नीविग्रन्थिं प्रथिम्ना प्रतनयति मनाङ्मध्यनिम्नो नितम्बः । उत्पुष्यत्पार्श्वमूर्च्छत्कुचशिखरमुरो नूनमन्तः स्मरेण स्पृष्टा कोदण्डकोट्या हरिणशिशुदृशो दृश्यते यौवनश्रीः ॥ ६८ ॥

## नायिकाधम्मिल्लमहिमा ।

अस्या मनोहराकारकबरीभारनिर्जिताः । लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥ १ ॥ भाति विन्यस्तकह्लारः सुकेश्याः केशसंचयः । शोणितार्द्रैः शरैः पूर्णं तूणीरमिव मान्मथम् ॥ २ ॥ स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः । शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥ ३ ॥ चलत्कामिमनोमीनमादातुं चित्तजन्मनः । गलयष्टिरिवाभाति बालवेणी गुणोज्ज्वला ॥ ४ ॥ एणीदृशो विजयते वेणी पृष्ठावलम्बिनी । कशेव पञ्चबाणस्य युवतर्जनहेतवे ॥ ५ ॥ तमस्तोमो भृशं सोममण्डलोपरि राजते । धूमपानेन किं नाम धाम गम्यमतः परम् ॥ ६ ॥ वेणी श्यामा भुजंगीयं नितम्बान्मस्तकं गता । वक्रचन्द्रसुधां लेढुं सान्द्रसिन्दूरजिह्वया ॥ ७ ॥ तस्याः कचभरव्याजात्तनयस्नेहलालितः । आरूढा पार्वतीबुद्ध्या गुहबर्हीव मूर्धनि ॥ ८ ॥ श्यामा मिलिन्दमाला बालाया वदनपद्मकरन्दम् । आस्वादितुमिव मिलिता ललिता वेणीमिषादेषा ॥ ९ ॥ मलिना अपि संयमनात्कुटिला अपि सुमनसां समागमतः । बाला अपि मुक्तानामनुषङ्गान्निर्जरत्वमुपयान्ति ॥ १० ॥ स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायंतनमल्लिकेषु । कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम् ॥ ११ ॥ एणीदृशः पाणिपुटे निरुद्धा वेणी विरेजे शयनोत्थितायाः । सरोजकोशादिव निष्पतन्ती श्रेणी घनीभूय मधुव्रतानाम् ॥ १२ ॥ इयं मुखाम्भोरुहसंनिधाने विलम्बिधम्मिल्ललतिच्छलेन । समागतां सादरमेव बाला द्विरेफमालामुत वा दधाति ॥ १३ ॥ अस्याः सपक्षैकविधोः कचौघः स्थाने मुखस्योपरि वासमाप । पक्षस्थताबद्धगुहचन्द्रकोऽपि कलापिनां येन जितः कलापः ॥ १४ ॥ अस्या यदास्येन पुरस्तिरश्च तिरस्कृतं शीतरुचान्धकारम् । स्फुटं स्फुरद्भङ्गकचच्छलेन तदेव पश्चादिदमस्ति बद्धम् ॥ १५ ॥ अस्याः कचानां शिखिनां च किं नु विधिं कलापौ विमतेरगाताम् । तेनायमेभिः किमपूजि पुष्पैरर्भर्त्सि दत्त्वा स किमर्धचन्द्रम् ॥ १६ ॥ केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रा स्फुटमष्टमीयम् । एतां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥ १७ ॥ आभाति शोभातिशयं प्रपञ्चादेणीदृशोऽस्या रमणीयशोभा । वेणी लसत्कुन्तलधोरणीनां

---

१ अर्धश्यामा । कान्त्यन्तरपातेन सर्वथा श्यामताऽनवस्थानात् । २ कर्तुमिच्छति ३ गमनम् । ४ विन्यस्तानि कह्लाराणि कमलानि यत्र तादृक् । तूणीरपक्षे लिङ्गविपरिणामेनान्वयः, तस्य क्लीबलिङ्गत्वात् । ५ कामदेवस्य । ६ कण्ठरूपो दण्डः । ७ बालाः शिरोरुहा एव वेणी जलपूरः । ८ गुणैः सौन्दर्यादिभिः । माधुर्यादिभिरिति वेणीपक्षे, उज्ज्वला । ९ एतेन यूनां तुरगत्वं सम्भावितम् । १० कार्त्तिकेयस्य मयूर इव । ११ भ्रमरपङ्क्तिः । १२ पुष्पाणां, देवानां च । १३ शिशवः, केशाश्च । १४मौक्तिकानां जीवन्मुक्तानां च।१५जरारहितत्वं देवत्वं च १६ लभन्ते ।१७ धम्मिल्लः केशपाशः । १८ कचानां कलापः समूहः, शिखिनां मयूराणां कलापः बर्हः, इत्येवमर्थभेदेऽपि सरूपत्वेनैकशेष इदं रूपम् । १९ परम्पराणाम् ।

श्रेणीव किं चास हरिन्मणीनाम् ॥ १८ ॥ विधिः किमस्या नितराममान्तमङ्गेषु शृङ्गाररसं सुकेश्याः । स्निग्धोल्लसत्कुन्तलकैतवेन निधाय मूर्ध्नि स्तवकीचकार ॥ १९ ॥ चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि यान्बिभर्ति सा । पैशुनाप्युरस्कृतेन तत्तुलनामिच्छति चामरेण कः ॥ २० ॥ लसन्मौक्तिकश्रेणिगङ्गातरङ्गा स्वयं नन्दिनीभास्वतो नीलवर्णा । ससीमन्तसिन्दूरसारस्वताभा त्रिवेणीयमेणीदृशो मौलिवेणी॥२१॥उत्थितो निशि कलानिधिर्भवेदेतदीयमुखतुल्यतातये । प्रापितो मलिनभावमेतया लज्जया तमसि यात्यदृश्यताम् ॥ २२ ॥ एतां नवाम्बुधरकान्तिमुदीक्ष्य वेणीमेणीदृशो यदि वदन्ति वदन्तु नामा ब्रूमो वयं मुखसुधांशुसुधाभिलाषादभ्यागतां भुजगिनीं मणिमुद्वहन्तीम् ॥ २३ ॥ स्वर्भानुराकलयितुं स समुद्यतोऽभूद्राकां विनाऽऽननसुधांशुमहो यदस्याः । मन्ये तदस्य न च तिष्ठति पूर्णिमायां भावो हि किंतु परिपूर्णकले सुधांशौ ॥ २४ ॥ विकचकचकलापः किंचिदाकुञ्चितोऽयं कुचकलशनिवेशी शोभते श्यामलाक्ष्याः । मधुरसपरितोषात्किंचिदुत्फुल्लकोशे कमल इव विलीनः पेटकैः षट्पदानाम्॥२५॥ न जीमूतच्छेदः स हि गगनचारी न च तमो न तस्येन्दोर्मैत्री न च मधुकरास्ते हि मुखराः । न पिच्छं तत्केकिन्युचितमसितोऽयं न च मणिर्मृदुत्वाद्विज्ञातं घनचिकुरपाशो मृगदृशः ॥ २६ ॥ उन्मीलद्वदनेन्दुकान्तिविसरैर्दूरे समुत्सारितं भग्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् । एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकादप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥ २७ ॥ यं यं त्वं प्रमदे मनागपि दृशोर्लक्ष्यं विधत्सेऽध्वगं छिन्नप्राण इव क्षणात्स सकलो व्यापद्यते हा क्षणात् । तज्जन्यं वृजिनं समुच्चितमिदं मन्ये न केशोच्चयं न ध्वान्तं नहि तस्य सम्भवति संयोगो मुखेन्दौ स्थिते ॥ २८ ॥

## अभ्यङ्गमहिमा ।

सुवर्णकदलीस्तम्भचारूरूः कमलेक्षणा । स्वभावादेव तद्भूयः किं तदऽभ्यङ्गमर्दनम् ॥ १ ॥ अस्याः पीठोपविष्टाया अभ्यङ्गं वितनोत्यसौ । लसच्छ्रोणि चलद्वेणि नटद्गुरुपयोधरम् ॥ २ ॥ आवर्त्य कण्ठं सिचयेन सम्यगाबद्ध्य वक्षोरुहकुम्भयुग्मम् । कासौ करालम्बिततैलपात्रा मन्दं समासीदति सुन्दरीं ताम् ॥ ३ ॥ वक्षोजौ निबिडं निरुद्ध्य सिचयेनाकुञ्च्य मध्यं शनैः कृत्वा चम्पकतैलसेकमबला संपीड्य मन्दं शिरः । पाणिभ्यां चलकङ्कणोद्यतझणत्कारोत्तराभ्यां करोत्यभ्यङ्गं परिपश्यतः सकुतुकं दोरन्तरं प्रेयसः ॥ ४ ॥ जानुभ्यामुपविश्य पार्ष्णिनिहितश्रोणीभरा प्रोन्नमद्दोर्वल्ली नमदुन्नमत्कुचतटी दीव्यन्नखाङ्कावलिः । पाणिभ्यामवधूय कङ्कणझणत्कारावतारोत्तरं बाला नैहति किं निजालकभरं किंवा मदीयं मनः ॥ ५ ॥ अश्रान्तं दृढयन्त्रणेन कुचयोरत्यक्तकाठिन्ययोराबद्धस्फुटमण्डलोन्नतिमितश्चोलं विमुच्योरसः । नीवीविच्छुरितं विधाय तममुं बामस्तनालम्बिनीं वेणीं पाणिनखाञ्चलैः शिथिलयत्याक्रम्य पीठं पदा ॥ ६ ॥

---

१ पशुना चमरेणेत्यर्थः । २ पृष्ठतो नीतेन । ३ असिताक्ष्याः । ४ मञ्जूषा । ५ मेघखण्डम् । ६ घना ये चिकुरास्तेषां पाशः ग्रन्थिः । ७ समूहैः । ८ कान्त्या । ९ पक्षिविशेष- । १० वसनप्रान्तेन । ११ स्तनौ । १२ बाहुमध्यम् । १३ तिरस्कृत्वा । १४ नियमयति । १५निरन्तरम् । १६ परिधानवासोग्रन्थिम् ।

## केशपाशवर्णनम् ।

केशान्[1] सुमनसां[2] सेव्यान् वामा[3] बध्नन्ति निर्दयम् । स्थाने[4] तथाविधानां वा प्रमदानां[5] समीहितम् ॥ १ ॥ बाला[6] बालान्[7] वशीकृत्य निबध्नन्तीति नाद्भुतम् । किंतु तैः सह हा हन्त पथिकानपि दर्शकान् ॥ २ ॥ स्नेहसंवर्धितान्[8]बालान्दृढं बध्नाति सुन्दरी । करुणा हरिणाक्षीणां कुतः कठिनचेतसाम् ॥ ३ ॥ संप्राप्तचिकुरभावः कचनिचयो वा युवा करे लग्नः । स्त्रीभिर्दृढं निबद्धयो नो चेत्पर[9]कलत्रमनुसरति ॥ ४ ॥ यथा यथाऽयं वलते भुजोऽस्या उद[10]ञ्चितः संयमने कचानाम् । तथा तथा वल्गति[11] काममेकः स एव वक्षोरुह[12] उत्पलाक्ष्याः ॥ ५ ॥ आभुग्नाङ्गुलिपल्लवौ कचभरे व्यापारयन्ती करौ बन्धोत्कर्षनिबद्धमानसतया शून्यां दधाना दृशम् । बाहूत्क्षेपसमुन्नते कुचतटे पर्य[13]स्तचोलांशुका ह्रीसंकोचितबाहुमूलसुभगं बध्नाति जूटीं[14] वधूः ॥ ६ ॥ जानुस्थापितदर्पणं परिणमद्ग्रीवं समुद्यद्भुजं न्यञ्चत्कूर्परमुन्नमद्भुजलसत्कक्षान्तरोहत्कुचम् । पाणिभ्यां प्रविभज्य केशनिचयं सीमन्तकर्मोद्यता चेतः कस्य वशीकरोति न बलाद्बाला विलोलेक्षणा ॥ ७ ॥ केशान्वामकरावलम्बितशिखान्भूयो रणत्कङ्कणं व्याधूयाऽथ कनिष्ठिकानखमुखेनाकुञ्चितान्याङ्गुलि । सीमन्तं[15] विरचय्य तस्य करभेणो[16]न्मृज्य पार्श्वद्वयं तान्पश्चाद्युगपत्प्रणीय करयोर्युग्मेन बध्नात्यसौ ॥ ८ ॥

## केशसिन्दूरवर्णनम् ।

न सिन्दूरं न वा केशा वामानां शिरसि स्थिताः । पान्थानां सह रक्तेन वृजिनं[17] हननोद्भवम् ॥ १ ॥ विलोचनशरैस्तिग्मैर्निहंसि प्रमदे जनान् । क्षिप्तमन्यत्र तल्लग्नं न त्विदं नागसम्भवम् ॥ २ ॥ वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां वृन्दैर्वन्दीकृतमिव नवीनार्कभरणम् । तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरीपरीवाहस्रोतस्तरणिरिव सीमन्तसरणिः ॥ ३ ॥ अये बाले दृष्ट्वा मुखममृतभानुभ्रमवशात्कचच्छद्मा राहुर्वसति किमु तृष्णातरलितः । किमेवं कन्दर्पोन्नततरुणि सिन्दूरसरणिच्छलाद्भोक्तुं भूयो बहिरिव रसज्ञां कलयति ॥ ४ ॥

## भालस्तुतिः ।

आस्वादितोन्मुक्तमिवार्द्धबिम्बं तमोमुखाद्धन्त सुधाकरस्य । सीमन्तसीमान्तमुदाररूपमिदं ललाटं ननु पङ्कजाक्ष्याः ॥ १ ॥ केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रस्फुटमष्टमोयम् । एनां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि[18] साधु ॥ २ ॥

## तिलकवर्णनम् ।

बाले ललामलेखेयं भाले भल्लीव राजते । भ्रूलताचापमाकृष्य न विद्मः कं हनिष्यति ॥ १ ॥ कस्तूरीतिलकं बाले भाले मा कुरु मा कुरु । अद्य साम्यं भजामीति जृम्भते[19] शशलाञ्छनः ॥ २ ॥ श्यामलेनाङ्कितं भाले बाले केनापि लक्ष्म[20]णा । मुखं तवान्तरासुप्तभृङ्गफुल्लाम्बुजायते ॥ ३ ॥ नासावंशविनिर्मुक्तमुक्ताफलसमे[21]नाभिना । भाति भालतलस्थेन लेपचन्दनबिन्दुना ॥

---

१ बालान् ब्रह्माणं विष्णुम्महेशं कश्चाश्चेशश्चेति तान् । २ पुष्पाणां, देवानां च । ३ स्त्रियः प्रतिकूलाश्च । ४ युक्तम् । ५ स्त्रीणां प्रमादिनां च । ६ स्त्रियो बालकाश्च । ७ केशान् बालकांश्च । ८ तैलेन प्रेम्णा च वर्धितान् । ९ श्रोणिं स्त्रियं च । १० उन्नतः । ११ उल्लसति । १२ कुचः । १३ संवलितकञ्चुकवस्त्रा । १४ केशग्रन्थिम् । १५ केशप्रसाधनम् । १६ हस्तबहिर्भागेन । १७ पापम् । १८ निष्पादिता । १९ उल्लसति । २० कस्तूरीतिलकरूपेण लक्षणेन । २१ सदृशेन ।

॥ ४ ॥ लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमनाः । कस्तूरीतिलकमिषादयमलिकेऽलिः समुल्लसति ॥ ५ ॥ अस्या ललाटे रचिता सखीभिर्विभाव्यते चन्दनपत्रलेखा । आपाण्डुरक्षामकपोलभित्तावनङ्गबाणव्रणपद्धिकेव ॥ ६ ॥ अस्यास्तनुस्यन्दनसंस्थितो वै स मीनकेतुर्जगतीं विजेतुम् । सकुङ्कुमालेखमिषेण वीरो व्यमोचयच्चारुतरां पताकाम् ॥ ७ ॥ विराजतेऽस्यास्तिलकोऽयमञ्चितो विकुञ्चितभ्रूलतिकाद्वयान्तरे । विजित्य लोकद्वितयं दिवं प्रति स्मरेण बाणो धनुषीव योजितः ॥ ८ ॥ अस्याः सुगन्धिनवकुङ्कुमपङ्कदत्तो मुग्धश्चकास्ति तिलको मदिरेक्षणायाः । आविष्टरागमभिराममुखारविन्दनिष्यन्दलग्नमिव मे हृदयं द्वितीयम् ॥ ९ ॥ लोके कलङ्कमपहातुमयं मृगाङ्को जातो मुखं तव पुनस्तिलकच्छलेन । तत्रापि कल्पयसि तन्वि कलङ्करेखां नार्यः समाश्रितजनं हि कलङ्कयन्ति ॥ १० ॥ अस्याः संयमवान्कचो मधुकरैरभ्यर्थ्यमानो मुहुर्भङ्गीगोपनजाभिशापमचिरादुन्मार्ष्टुकामो निजम् । सीमन्तेन करेण कोमलरुचा सिन्दूरबिन्दुच्छलादात्तक्षायसपिण्डमण्डलमसावादातुमाकाङ्क्षति ॥ ११ ॥ केयूरं न करे पदे न कटकं मौलौ न माला पुनः कस्तूरीतिलकं तथापि तनुते संसारसारश्रियम् । सर्वाधिक्यमलेखि भालफलके यत्सुभ्रुवो वेधसा जानीमः किमु तत्र मन्मथमहीपालेन मुद्रा कृता ॥ १२ ॥

## भ्रुवोः प्रशंसा ।

भ्रूरेखायुगलं भाति तस्याश्चटुलचक्षुषः । पत्रद्वयीव हरिता नासावंशविनिर्गता ॥ १ ॥
असितात्मा समुन्नद्धः समाविष्कृतचापलः । भुजङ्गकुटिलस्तस्या भ्रूविक्षेपः खलायते ॥ २ ॥
स्मरकल्पद्रुमो बाले तव भाले द्विपत्रकः । पत्रयोरनयोश्छाया भ्रुवोर्व्याजादुदेञ्चति ॥ ३ ॥
किंचित्सविभ्रमोदञ्चद्भ्रूलता भाति भामिनी । बालक्रीडाप्रतिद्वन्द्वि तर्जयन्तीव यौवनम् ॥ ४ ॥
कामकार्मुकतया कथयन्ति भ्रूलता मम पुनर्मतमन्यत् । लोचनाम्बुरुहयोरुपरिस्थं भृङ्गशावकततिद्वयमेतत् ॥ ५ ॥ तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या । तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥ ६ ॥ भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः । निजां यदाश्लेषदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यतार्जि ॥ ७ ॥ स्मारं धनुर्यद्विधुनोज्झितास्या आस्येन भूतेन च लक्ष्मलेखा । एतद्भ्रुवौ जन्म तदाप युग्मं लीलाचलत्वोचितबालभावम् ॥ ८ ॥

## लोचनमहिमा ।

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः । यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ १ ॥ निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् । अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥ २ ॥ आसां व्रतमतीवाक्ष्णोर्यत्पुरः परिसर्पणम् । सह यातं मनस्तत्र त्यक्त्वा भूयोनिवर्तनम् ॥ ३ ॥
अर्जुनः कृष्णसंयुक्तः कर्णं यत्रानुधावति । तन्नेत्रं तु कुरुक्षेत्रमिति मुग्धे मृशामहे ॥ ४ ॥
एकमेवाक्षि वामाक्षि रञ्जयाञ्जनलेखया । जायतामैन्दवे बिम्बे खञ्जनाम्बुजसंगमः ॥ ५ ॥ अमुष्य मुंषिता लक्ष्मीश्चक्षुषेति न नूतनम् । न वेद्मि कथयत्यस्याः कर्णे लग्नं किमुत्पलम् ॥ ६ ॥
मृगसंबन्धिनी दृष्टिरसौ यदि न सुभ्रुवः । धावति श्रवणोत्तंसलीलादूर्वाङ्कुरे कुतः ॥ ७ ॥

---

१ ललाटदेशे । २ उल्लसति । ३ चन्दनत्वम् । ४ मदनसम्बन्धि । ५ निरवधिसौन्दर्यसम्पन्नत्वम् । ६ कृशाङ्ग्याः । ७ मध्यमपाण्डवः, श्वेतपक्षश्च । ८ वासुदेवसहितः । कृष्णतारोपेतः, कृष्णतोपलक्षितज्योतिःसहित इति यावत् । ९ राधेयम्, श्रवणं च । १० इन्दोरिदं तत्र । ११ हृता

तस्याः श्रवणमार्गेण चलिते यदि लोचने। कुतः प्रकामधवले धत्तः कृष्णानुरक्तताम् ॥ ८ ॥ श्रूयतां कौतुकं सोऽपि स्मरः शृङ्गारिणां गुरुः। अमुष्याः शिष्यतामेति[1] श्रवणोन्मुखयोर्दृशोः ॥ ९ ॥ नेत्रयोरनयोश्चन्द्रमुख्याः सुन्दरराङ्गयोः। का स्तुतिः क्रियते लोकैः कुरङ्गाक्ष्णोः पराजये ॥ १० ॥ भास्वत्कुण्डलमाणिक्यप्रभाप्रतिहतेरिव[2]। नताङ्गयाः श्रवणोत्सङ्गमारूढा नयनद्वयी ॥ ११ ॥ कमलाभ्यां सुधासिन्धुवदनेक्षणयोस्तुलाम्[3]। कलयन्तु परे किंतु केमे पङ्करुहे क ते ॥ १२ ॥ अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः। जनयन्ति मुहुर्यूनामन्तःसंतापसंततिम् ॥ १३ ॥ यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्। तदोपमीयते तस्या वदनं चारुलोचनम्[4] ॥ १४ ॥ श्रमयति शरीरमधिकं भ्रमयति चेतः करोति संतापम्। मोहं मुहुश्च कुरुते विषविषमं वीक्षणं तस्याः ॥ १५ ॥ अतिपूजिततारेयं[5] दृष्टिः श्रुतिलङ्घनक्षमा[6] सुतनुः। जिनसिद्धान्तस्थितिरिव सवासना[7] कं न मोहयति ॥ १६ ॥ नयनच्छलेन सुतनोर्वदनजिते शशिनि कुलपतौ क्रोधात्। नासानालनिबद्धं स्फुटितमिवेन्दीवरं द्वेधा ॥ १७ ॥ आयामिनोस्तदक्ष्णोरञ्जनरेखाविधिं वितन्वत्याः[8]। पाणिः प्रसाधिकायाः[9] प्रापदपाङ्गं चिरेण विश्रम्य ॥ १८ ॥ लोहितलेखावलयितलोचनयुगलं विभाति ललनायाः। स्मरदाशेन मुखसरसि झषयुगमरुणगुणजालबद्धमिव ॥ १९ ॥ प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः। तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥ २० ॥ मुखारविन्दोपरिभागसंस्थं नेत्रद्वयं खञ्जनमामनन्ति। प्रफुल्लवक्त्राम्बुजपार्श्ववर्ति दलद्वयं भृङ्गयुतं मतं मे ॥ २१ ॥ इन्दीवरं लोचनयोस्तुलायै निर्माय यत्नेन विधिः कदाचित्। अतुल्यतां वीक्ष्य ततो रजांसि निक्षिप्य चिक्षेप स पङ्कमध्ये ॥ २२ ॥ इषुत्रयेणैव जगत्त्रयस्य विनिर्जयात्पुष्पमयाशुगेन। शेषा द्विबाणी सफलीकृतेयं प्रियादृगम्भोजपदेऽभिषिच्य ॥ २३ ॥ सेयं मृदुः कौसुमचापयष्टिः स्मरस्य मुष्टिग्रहणार्हमध्या। तनोति नः श्रीमदपाङ्गमुक्तां मोहाय या दृष्टिशरौघवृष्टिम् ॥ २४ ॥ आघूर्णितं पक्ष्मलमक्षिपद्मं प्रान्तद्युतिश्वैत्यजितामृतांशु। अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम् ॥ २५ ॥ कर्णोत्पलेनापि मुखं सनाथं लभेत नेत्रद्युतिनिर्जितेन। यद्येतदीयेन तदा कृतार्था स्वचक्षुषी किं कुरुते कुरङ्गी ॥ २६ ॥ त्वचः समुत्तार्य दलानि रीत्या मोचात्वचं:[10] पञ्चषपाटनानाम्[11]। सारैर्गृहीतैर्विधिरुत्पलौघाद्[12]दस्यामभूदीक्षणरूपशिल्पी ॥ २७ ॥ चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण किमेष कृष्टः। सारः सुधोद्गारमयः प्रयत्नैर्विधातुमेतन्नयने विधातुः ॥ २८ ॥ ऋणीकृता किं हरिणीभिरासीदस्याः सकाशान्नयनद्वयश्रीः। भूयोगुणेयं सकलाबलाद्यत्ताभ्योऽनयाऽलभ्यत बिभ्यतीभ्यः ॥ २९ ॥ दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम्। न चेत्कृतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या ॥ ३० ॥

---

१ अनेन यत्र तदीयदृक्पातस्तत्र तत्र मदन उपतिष्ठत इति सूचितम्। २ तिरस्कारात्। ३ तोलनं, सादृश्यसम्भावनं च। ४ चारुणी सुन्दरे लोचने यत्र तादृशम्। ५ अतिपूजिता अतिक्रमनीया तारा कनीनिका यत्र सा भोजनत्यागरूपव्रतानुष्ठानेन सम्मानिता तारा तदुपलक्षिता रात्रिर्यत्रेति सिद्धान्तपक्षे। ६ श्रुत्योः कर्णयोः, श्रुतीनाम् ऋचां च लङ्घने क्षमा। ७ वासनया कामवासनया जिनाराधनकामनया च सह वर्तमाना। ८ रचयन्त्याः। ९ अलङ्कुर्वाणायाः। १० मोचा शाल्मली, कदली वा तस्यास्त्वचः। ११ पञ्च वा षड् वा पाटनानि उत्पाटनानि तेषाम्। १२ कमलवनात्।

केदारभाजा शिशिरप्रवेशात्पुण्याय मन्ये मृतमुत्पलिन्या । जाता यतस्तत्कुसुमेक्षणेयं यतश्च तत्कोरकदैक्चकोरः ॥ ३१ ॥ नतभ्रुवो[2] लोचनखञ्जरीटौ विहारमानङ्गमिहारमेते । कथं न सानन्दहृदो युवानस्तारुण्यमन्तर्निधिमुन्नयन्तु ॥ ३२ ॥ स्वदृशोर्जनयन्ति सान्त्वनां खुरकण्डूयनकैतवान्मृगाः । जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभयाँ भयात् ॥ ३३ ॥ नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे । अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् । ॥ ३४ ॥ श्रुतिर्लङ्घनमीहमानयोर्मलिनाभ्यन्तरयोरधीरयोः । स्मृतितापकरत्वमेतयोरुचितं लोचनयोर्मृगीदृशः ॥ ३५ ॥ लोचने हरिणगर्वमोचने मा विदूषय नताङ्गि कज्जलैः । सायकः सपदि जीवहारकः किं पुनर्हि गरलेन लेपितः ॥ ३६ ॥ जडाशयाभ्यन्तरगूढपङ्क—समुद्भवं तामरसं प्रसिद्धम् । विलोचनं भूय इदं सुवर्णलतोत्तमाङ्गस्य मुखे प्रभूतम् ॥ ३७ ॥ कामिनीनयनकज्जलपङ्कादुत्थितो मदनमत्तवराहः । कामिमानसवनान्तरचारी मूलमुत्खनति मानलतायाः॥ ३८॥ उत्तरङ्गय कुरङ्गलोचने लोचने हरिणगर्वमोचने । अस्तु सुन्दरि कलिन्दनन्दिनीवीचिडम्बरगभीरमम्बरम् । ॥ ३९ ॥ रामाविलोलनयने किमु मीनबालौ नीलोत्पले किमथवा किमु खञ्जरीटौ[10] । किंवा जगत्त्रयजयाय कृतिर्न जाने कन्दर्पभूपरचिता नवकार्मणस्य ॥ ४० ॥ मुखविधुपरिवृत्तोत्तानताटङ्कपाशावधिचकितचकोरीकान्तिचौरं तदक्षि । त्रिभुवनयुवचेतोबन्धसंकेतहेतोः सहचरमिव कर्तुं पाशमाशङ्क्य याति ॥ ४१ ॥ सुधा—हाला—हालाहलमयमिदं तेऽक्षियुगलं विधिर्ब्रूमोऽनर्थागममगणयन्नेव विदधे । न चेत्कस्मादेतत्स्वपथपतितानां सुखयति प्रिये यूनामाघूर्णयति हृदयानि व्यथयति ॥ ४२ ॥

## अपाङ्गवर्णनम् ।

यान्ती गुरुजनैः सार्धं स्मयमानमुखाम्बुजा । तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पत्राकरोज्जगत् ॥ १ ॥ क्वचित्कृष्णार्जुनगुणौ[11] कचित्कर्णान्तगामिनी[12] । अपाङ्गश्रीस्तवाभाति सुभ्रूर्भारतगीरिव[14]॥ २ ॥ विशालाक्षीकटाक्षस्य साक्षी त्र्यक्षो[15] महेश्वरः । नाद्यापि प्रकृतिं[16] याति येन विद्धो दिगम्बरः ॥ ३ ॥ यासां कटाक्षविशिखैः स्मरचौरेण ताडिताः । हृतचैतन्यसर्वस्वा मोह्यन्ते मुग्धकामुकाः ॥ ४ ॥ रे रे घरट्ट मा रोदीः कं कं न भ्रामयन्त्यमूः । कटाक्षवीक्षणादेव कराकृष्टस्य का कथा ॥ ५ ॥ प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् । निपतन्ति नेत्रविशिखा यावन्नेन्दीवराक्षीणाम् ॥ ६ ॥ हत्वा लोचनविशिखैर्गत्वा कतिचित्पदानि[18] पद्माक्षी । जीवति युवा न वा किं भूयो भूयो विलोकयति ॥ ७ ॥ अस्याः कररुहखण्डितकाण्डपटप्रकटनिर्गता दृष्टिः । पटविगलितनिष्कलुषा स्वदते पीयूषधारेव ॥ ८ ॥ वसन्तनीलोत्पलषट्पदानां गीतामृतं[19] श्रोतुमिवोत्तरङ्गौ । नतभ्रुवौ लोचनकृष्णसारौ[20] कर्णान्तिकं संतत-

---

१ उत्पलिनीमुकुलसदृशदृष्टिः । २ वक्रभ्रुवः । ३ कामदेवसम्बन्धिनम् । ४ जायमानतन्द्रीकयोः । ५ विशालनेत्रकान्त्या । ६ अञ्जनशलाकाम् । ७ रुचिगर्वहीनम् । ८ श्रवणोल्लङ्घनम् । वेदमार्गातिक्रमणं च । ९ स्मृत्या स्मरणेन, धर्मशास्त्रेण च । १० पक्षिविशेषौ । ११ नेत्रयोर्हि श्वैत्यं कार्ष्ण्यं चेति यथोक्तम् । भारते तु प्रायः कृष्णस्य चार्जुनस्य च प्रशंसनमेव सर्वत्रेति । १२ कर्णपर्यन्तविस्तृता राधेयमरणपर्यवसायिनी च । १३ शोभा । १४ महाभारतसम्बन्धिनी गाथा । १५ त्रिनयनः । १६ स्वस्थताम् । १७ अन्नादिपेषणयन्त्रविशेषो घरट्टः । १८ यावदिति शेषः । १९ गीतममृतमिवेत्युपमितसमास एवात्र, नतु गीतमेवामृतमिति, गीतरूपामृतस्य श्रवणक्रियाकर्मत्वासम्भवात् । २० नेत्ररूपौ मृगौ । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।' इत्यमरः । २१ कर्णसमीपम्, तदवधि आयतत्वादिति तत्त्वम् ।

माश्रयेते ॥९॥ नयनाञ्चलचञ्चरीकपूरो वलतेऽयं यत एव पक्ष्मलाक्ष्याः। तत एव भवन्ति नीलपक्षप्रकाराणां ननु वृष्टयो नवीनाः ॥ १० ॥ तावदेव कृतिनामपि[1] स्फुरत्येष निर्मलविवेकदीपकः। यावदेणशिशुलोलचक्षुषां ताड्यते बत न चञ्चलाञ्चलैः ॥ ११ ॥ यत्र यत्र वलते शनैः शनैः सुभ्रुवो नयनकोणविभ्रमः। तत्र तत्र शतपत्रधोरणी[2] तोरणीभवति पुष्पधन्वनः ॥ १२ ॥ यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं[3] वहन्त्याः। दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥ १३ ॥ भवनभुवि सृजन्तस्तारहारावतारान्दिशि दिशि विकिरन्तः केतकानां कुटुम्बम्। वियति च रचयन्तश्चन्द्रिकां दुग्धमुग्धां प्रतिनयननिपाताः सुभ्रुवो विभ्रमन्ति ॥ १४ ॥ प्रणालीदीर्घस्य प्रतिपदमपाङ्गस्य सुहृदः कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः[4]। सुवानाः सर्वस्वं कुसुमधनुषोऽस्मान्प्रति सखे नवं नेत्राद्वैतं कुवलयदृशः संनिदधति ॥ १५ ॥ दिनान्ते स्नातीनां कनककलशाकारकुचयोरुपर्यस्यन्तीनां[5] कमलकलिकाकोमलकरौ। समुद्यत्कालिन्दीतरलतरकल्लोलकुटिलः[6] कटाक्षः कान्तानां कमिह कमितारं न कुरुते ॥ १६ ॥ शिलासम्यग्धौतोज्ज्वलधवलधारापरिसरानिमानन्तःश्यामानिव विषमबाणस्य विशिखान्। दृढप्रज्ञावर्माण्यपि हृदयमर्माणि रुजतः कटाक्षानेतस्या मुनिरपि न सोढुं प्रभवति ॥ १७ ॥ पिपासुरिव चञ्चलं विकटकर्णकूपाज्जलं ततः प्रतिचलन्मुहुः श्रवणपाशभीतोऽभितः। तनोति तरलाकृतिस्तरललोचने संततं गतागतकुतूहलं मुहुरपाङ्गरङ्कुस्तव[9] ॥ १८ ॥ प्रतिक्षणविलक्षणा धवलकृष्णशोणच्छविः सुधा–गर–सुरामयी तव दृशोः कटाक्षच्छटा। मृषेति यदि मन्यसे कथय तर्हि यूनः कथं प्रमोदयति तापयत्यतितनोति मूढाशयान् ॥ १९ ॥ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव। भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते यावल्लीलावतीनां हृदि न धृतिमुषो दृष्टिबाणाः पतन्ति ॥ २० ॥

## अश्रुवर्णनम्।

अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः। अप्राप्य मानभङ्गं विगलति लावण्यवारिपूर इव ॥ १ ॥

## नासिकाशोभावर्णनम्।

पुराणबाणत्यागाय नूतनास्त्रकुतूहलात्। तन्नासा भाति कामेन तूणीवाधोमुखीकृता ॥ १ ॥ दन्तालिदाडिमीबीजभक्षणोत्कण्ठचेतसः। मन्ये मारशुकस्येयं नासा चञ्चूर्विराजते ॥ २ ॥ नासाऽदसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य। श्वासानिलामोदभरानुमेयां दधद्विबाणीं कुसुमायुधस्य ॥ ॥ ३ ॥ केचित्तिलस्य कुसुमं शुकचञ्चुमन्ये नासां वदन्ति कथयाम्यहमन्यदेव। संरक्षितो निजशरासनसंनिधाने कामेन केतकदलैकमयो निषङ्गः[10] ॥ ४ ॥

## नासिकाभरणशोभाप्रशंसा।

नासामौक्तिकमबले किमधरबिम्बेन विद्रुमं[11] कुरुषे। दृष्ट्वा गुञ्जाबीजं शिव शिव भूयस्तदेव हसितेन ॥ १ ॥ मुक्ता[12] अपि यदास्वादं विहातुं हन्त न क्षमाः। अन्यथा लम्बमानस्य मेतदीयं

---

१ विदुषां, पुण्यात्मनां वा। २ कमलपरम्परा। ३ कमलवृन्तसदृशम्। ४ प्रतिनिधिभूताः। ५ क्षिपन्तीनाम्। ६ दीर्घतरङ्ग–। ७ कार्मुकम्। ८ बाणान्। ९ मृगः। १० बाणकोशः। ११ प्रवालम्। १२ मुक्तिम्प्राप्ता मौक्तिकानि च।

कथम्भवेत् ॥ २ ॥ सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन । अनङ्गसंजीवनदृष्टशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ ३ ॥ आकाशात्पतितं पुनर्जलनिधौ मध्ये चिरं संस्थितं पश्चाद्दुःसहदेहरन्ध्रजनितक्लेशान्वितं मौक्तिकम् । बाले बालकुरङ्गलोचनयुगे घोरं तपः संचरन्नासाभूषणतामुपैति सखि ते बिम्बाधरापेक्षया ॥ ४ ॥ अस्याः कामनिवासरम्यभवनं वक्त्रं विलोक्यादरान्निश्चित्येव सुधाकरं प्रियतमं भूमीगतं शोभनम् । नासामौक्तिककैतवेन रुचिरा तारापि सा रोहिणी मन्ये तद्विरहासहिष्णुहृदया तत्संनिधिं सेवते ॥ ५ ॥

## कर्णकमनीयतादर्शनम् ।

सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया । सूचितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा ॥ १ ॥ कमनीयतानिवासः कर्णस्तस्या विचित्रमणिभूषः । सविधप्रसूतरत्नं शङ्खनिधिं दूरतरमकरोत् ॥ २ ॥ तालीदलं काञ्चनकर्णपाशौ प्रसारयन्ती सुतनुः कराभ्याम् । रराज कर्णान्तनिषण्णदृष्टिः शाणे दधानेव कटाक्षबाणान् ॥ ३ ॥ वियोगबाष्पाञ्चितनेत्रपद्मच्छद्मान्वितोत्सर्गपयःप्रसूनौ । कर्णौ किमस्या रतितत्पतिभ्यां निवेद्यपूर्वौ विधिशिल्पमीदृक् ॥ ४ ॥ इहाविशद्येन पथातिवक्रः शङ्खौघनिष्पन्दरसप्रवाहः । सोऽस्याः श्रवःपत्रयुगे प्रणालीरेखेव धावत्यभिकर्णकूपम् ॥ ५ ॥ अस्या यदष्टादश संविभज्य विद्याः श्रुती दध्रतुरर्धमर्धम् । कर्णान्तरुत्कीर्णगभीररेखः किं तस्य संख्यैव न वा नवाङ्कः ॥ ६ ॥ मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण । एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासततीं रतीशः ॥ ७ ॥ आत्मैव तातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोऽपि । तत्रापयोः कर्णलते भ्रुवोर्ज्ये वंशत्वगंशौ चिपिटे किमस्याः ॥ ८ ॥

## ताटङ्कप्रशंसा ।

मुक्तातांटङ्कयुगं प्रतिमुक्तं कर्णपार्श्वयोरस्याः । मुखकमलमिव निषेवितुमागतममृतांशुबिम्बयुगम् ॥ १ ॥ ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचिं विधत्ते । मुखश्रिया चन्द्रमिवाभिभूय बन्दीकृतं तारकचक्रवालम् ॥ २ ॥ शशी हर्तुं लोभान्मुखकमलशोभां श्रुतितलं सिषेवे सातङ्कस्तव तरुणि ताटङ्ककपटात् । तदन्तःपीयूषं निखिलमथ निक्षेप्तुमधरे मनोजन्मा मुष्णन्मुहुरहह तुच्छं तमकरोत् ॥ ३ ॥

## कपोलवर्णनम् ।

कपोलपालीं तव तन्वि मन्ये लावण्यधन्ये दिशमुत्तराख्याम् । विभाति यस्यां ललितालकायां मनोहरा वैश्रवणस्य लक्ष्मीः ॥ १ ॥ स्वर्णच्छवीनामसितेक्षणानां कर्णान्ततो गण्डलतातलानि । भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥ २ ॥ आबध्नन्परिवेषमण्डलमलं वक्त्रेन्दुबिम्बाद्बहिः कुर्वत्पङ्कजजृम्भमाणकलिकाकर्णावतंसक्रियाम् । तन्वङ्ग्याः परिनृत्यतीव हसतीवोत्सर्पतीवोल्बणं लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले ॥ ३ ॥

---

१ मृगः । २ अत्र 'कृदिकारादक्तिनः' इति ङीष् । ३ छलेन । ४ कुत्सितस्य रङ्गस्य स्पर्शभीतया । मृगलाञ्छनत्रस्तया च । ५ रतिः कामपत्नी, तत्पतिः कामः ताभ्याम् । ६ दृढेन । ७ आत्मा वै जायते पुत्रः । इति स्मरणात् । ८ कर्णाभरणद्वन्द्वम् । ९ केशशोभाशालिन्याम् । रुचिरायां अलकाभिधायां पुर्यां च । १० समस्तं पदमिदं व्यस्तं च । कुबेरस्य कर्णस्य च । ११ सम्पत्तिः, शोभा ।

## अधररमणीयतानिदर्शनम् ।

तवैष विद्रुमच्छायो मरुमार्ग इवाधरः । करोति कस्य नो मुग्धे पिपासाकुलितं मनः ॥ १ ॥ अल्पेनापि सुरक्तेन साधनेन प्रयोजनम् । ओष्ठद्वयसहायेन कान्तास्येन जगज्जितम् ॥ २ ॥ सर्वस्यैव हि रत्नस्य व्रणेऽर्घः परिहीयते । दयिताधररत्नं तु व्रणितं[1] यात्यनर्घताम्[2] ॥ ३ ॥ अधरोऽयमधीराक्ष्या बन्धुजीव[3]प्रभाहरः । अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ॥ ४ ॥ मुखारविन्ददत्तश्रीः सुतनोररुणोऽधरः । कुरुते हारमाणिक्यप्रदीपान्पाण्डुरत्विषः ॥ ५ ॥ संततोदयसंध्येव वदनेन्दोरनिन्दितम् । तदोष्ठमुद्रालावण्यसमुद्रस्येव विद्रुमः ॥ ६ ॥ अधरोऽसौ कुरङ्गाक्ष्याः शोभते नासिकातले । सुवर्णनलिकामध्यान्माणिक्यमिव विच्युतम् ॥ ७ ॥ अधरं[4] खलु बिम्बनामकं फलमाभ्यामिति भव्यमन्वयम् । लभतेऽधरबिम्ब इत्यदः पदमस्या रदनच्छेदे[5] वदत् ॥ ८ ॥ अपि मृगाक्षि तवाधरपल्लवे दयितदन्तपदं न भवत्यदः । भुवनमोहनमन्त्रपदाङ्कितं किमुत यन्त्रमिदं स्मरयन्त्रिणः ॥ ९ ॥ अभिलषन्ति तवाधरमाधुरीं तदिह किं हरिणाक्षि मुधा[6] बुधाः । सुरसुधामधरीकुरुते यतस्त्वदधरोऽधरतामगमत्ततः॥ १० ॥ पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ ११ ॥ बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहाना । रागश्रिया शैशवयौवनीयां स्वमाह संध्यामधरोष्ठलेखा ॥ १२ ॥ अस्या मुखेन्दावधरः सुधाभूर्बिम्बस्य युक्तः प्रतिबिम्ब एषः । तस्याथवा श्रीर्द्रुमभाजि देशे संभाव्यमानास्य तु विद्रुमेऽसौ ॥ १३ ॥ जानेऽतिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम् । द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥ १४ ॥ प्रियामुखीभूय सुखी सुधांशुर्वसत्यसौ राहुभयव्ययेन । इमां दधाराधरबिम्बलीलां तस्यैव बालं करचक्रवालम् ॥ १५ ॥ अधरममृतं कः संदेहो मधून्यपि नान्यथा[9] मधुरमधिकं द्राक्षायाश्च प्रसन्नरसं फलम् । सकृदपि पुनर्मध्यस्थः[10] सन्रसान्तरविज्जनो[11] वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ १६ ॥ त्वं पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को माधुर्यं तव विश्वतोऽपि विदितं माध्वीक माध्वीकता । एतत्किं तु मनागरुन्तुदमिव ब्रूमो न चेत्कुप्यसि यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः ॥ १ ॥

## दशनकमनीयतावर्णनम् ।

द्विधा विधाय शीतांशुं कपोलौ कृतवान्विधिः । तन्व्यास्तद्रसनिष्यन्दबिन्दवो रदनावलिः ॥ १ ॥ चन्द्राधिकैतन्मुखचन्द्रिकाणां दरायतं[12] तत्किरणाद्भुतानाम् । पुरःपरिस्रस्तपृषद्द्वितीयं रदावलिद्वन्द्वति बिन्दुवृन्दम् ॥ २ ॥ राजौ द्विजानामिह राजदन्ताः संबिभ्रति श्रोत्रियविभ्रमं यत् । उद्वेगरागादिमृजावदाताश्चत्वार एते तदवैमि मुक्ताः ॥ ३ ॥ यावद्यावत्कुवलयदृशा मृज्यते दन्तपालिस्तावत्तावद्द्विगुणमधरच्छायया शोणशोचिः[13] । काचित्त्वस्याः परिमलकलाहूतमात्रालिकान्त्या वक्त्राश्वासे प्रसरति मुहुः श्यामिकाप्याविरासीत् ॥ ४ ॥

## चिबुकवर्णनम् ।

विलोकितास्या मुखमुन्नमय्य किं वेधसेयं सुषमासमाप्तौ । धृत्युद्भवा यच्चिबुके चकास्ति निम्ने मनागङ्गुलियन्त्रणेव ॥ १ ॥

---

१ दष्टं क्षतमिति यावत् । २ अमूल्यताम् । ३ पुष्पविशेषाभा बान्धवजीवनशोभा– इति च । ४ न्यूनम् ओष्ठरूपं च । ५ओष्ठे । ६व्यर्थम् । ७उत्पद्यमाना । ८ मिष्टम् । ९ किंतु मधून्येवेति भावः । १० उदासीनः, तटस्थः । ११ रसानां तारतम्यज्ञः। १२ ईषद्दीर्घम् । १३रक्तकान्तिः ।

## वदनवर्णनम्।

जितेन्दुपद्मलावण्यं कः कान्तावदनं जयेत्। मुक्त्वा तदेव सुरतश्रमजिह्मितलोचनम् ॥ १ ॥ चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम्। तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥ २ ॥ विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम्। आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥ ३ ॥ मुखं वहति बन्धूकबन्धुरेणाधरेण सा। पूर्णेन्दुमिव सौन्दर्यादङ्कलालितकौस्तुभम् ॥ ४ ॥ विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम्। धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ ५ ॥ शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम्। करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥ ६ ॥ राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ ७ ॥ आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम्। भ्रमद्भ्रमरसंकीर्णं स्मरामि सरसीरुहम् ॥ ८ ॥ इयं सुनयना दासीकृततामरसश्रिया। आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ ९ ॥ लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्। लोकलोचनरोलम्बकदम्बैः कैर्न पीयते ॥ १० ॥ ननुनीलाञ्चलसंवृतमाननमाभाति हरिणनयनायाः। प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥ ११ ॥ अम्बुजमम्बुनि मग्नं त्रासादाकाशमाश्रितश्चन्द्रः। संप्रति कः परिपन्थी यं प्रति कोपारुणं वदनम् ॥ १२ ॥ आसायं सलिलभरे सवितारमुपास्य सादरं तपसा। अधुनाब्जेन मनाक्तव मानिनि तुलना मुखस्याप्ता ॥ १३ ॥ सुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे। वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र संदेहः ॥ १४ ॥ पुंसां दर्शय सुन्दरि मुखेन्दुमीषत्रपामपाकृत्य। जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु ॥ १५ ॥ शारदराकाचन्द्रो मुखमनुकर्त्तुं क्षमेत चेत् प्रमदे। पुनरपि दर्पः कथमिव न परत्रास्यांशतोऽप्याभा ॥ १६ ॥ सुमुखि मुखं ते शशिना तुलितं न च तेन तद्वरं मन्ये। रत्नस्य गुञ्जया स्यान्नास्य तया तोलनं दृष्टम् ॥ १७ ॥ वदनमिवैकं कमलं कमलमिवेदं सुचारु वा वदनम्। मुदमाधातुं मधुपां क्षममिति सम्भाव्यते कविभिः ॥ १८ ॥ सुमनोनिपीयमानो याति सुधांशुः शनैः शनैर्ह्रासम्। सुमुखि मुखं ते भूयो मधुरिमसम्भारसम्भृतं सततम् ॥ १९ ॥ वलितभ्रु मुकुलिताक्षं वीटीरसरञ्जिताधरं तन्व्याः। सीत्काराञ्चितमधुरं वदनं रुचिरं सुधासदनम् ॥ २० ॥ कस्ते शशाङ्क मोहः सुधाकरोऽहं न कोऽपि मद्भिन्नः। किं ननु पश्यसि निजभाजयि वनितायाः मुखं मूढ ॥ २१ ॥ अपि सुभगं तव वदनं पश्यति सुभगे यदा यदा चन्द्रः। ग्लायति हन्त विधत्ते सपदि मुखं स्वं पयोदान्तः ॥२२॥ सुमुखि मुखं ते रुचिरं स्वमिव न केनापि तुल्यमन्येन। इति यत् पश्यन् हसति प्रवर्धमानोऽपि हन्त शशी ॥ २३ ॥ अमृतनिधानं रुचिरं सन्तापनिवर्त्तने सदा निरतम्। चन्द्रमुखं तव सुन्दरि सुस्मितभासा विकासते परितः ॥ २४ ॥ विलसत्स्पृहणीयरुचिर्मित्रप्रेम्णा विमुक्तचन्द्रमनाः। जीवनँदिव्यविभूतिः पद्मिनि मानसंमुपेतासि ॥ २५ ॥ भाति विलास्युपरिष्टाद्रुचिमादधदिष्टमस्य लोकस्य। वदनमिदं रमणीयं सुभगं तमंसो भयान्मुक्तम् ॥ २६ ॥ न दिवा सुधानिधानं विकसति नक्तं न हन्त वा कमलम्। एकं पुनस्त्वदीयं सुभगे वदनं दिवानिशं विकसत् ॥ २७ ॥ विकसत्कमलं समुदितमिन्दुं पीयूषसागरं वापि। सुमुखि! यदैव विलोके तदा तदैव प्रमोदेऽहम् ॥ २८ ॥ कस्यामोदं कमलं वदनमिदं ते प्रिये न संतनु-

---

१ पूर्णचन्द्रम्। २ पौर्णमास्याम्। ३ विकसितम्। ४ सूर्यम्। ५ चन्द्रमसा। 'अब्जो जैवातृकः सोमः' इत्यमरः। ६ अभ्रमध्ये। ७ जलं प्राणनं च। ८ जनुः, सम्पत्तिश्च। ९ मानससरः चित्तं च। १० राहोरन्धकारस्य च। ११ कस्य कमामोदमलमिदं वदनं कमलमिदं कस्यामोदमिति च।

यात् । अवलम्ब्य मित्रं[1]मेकं विकसति न यदन्यथा जातु ॥ २९ ॥ विचरसि यतो यतस्त्वं मधुपा[2] अनुयान्ति तत्र हन्त त्वाम् । केनापि रहसि दृष्टं हन्त तवेदं प्रिये वदनम् ॥ ३० ॥ मुग्धे स्मा[3]यं स्मायं हन्त किमेतान्निहंसि दैवहतान् । हननं सुकृतं सुकृती सुकृतिनि नहि कोऽपि निर्वक्ति ॥ ३१ ॥ स्मितसदृशानि सुमानि[4] त्वन्मुखसुधया सुषिच्यमाणानि । प्राणप्रिये मनोभव, आदाय जगन्ति संहरति ॥ ३२ ॥ त्वरितं पिधेहि वदनं बहिरथवा मैव मोददे ! यासीः । प्रस्फुरदमृतनिधानं पातुं समयः सदै[5]वास्ते ॥ ३३ ॥ स्मयते यथा यथेदं सुमुखि मुखं ते तथा तथा हन्त । सहृदय-हृदये मदनो निदधाति शरान् बलान्निशितान् ॥ ३४ ॥ सुमुखि [6]मनोजो मदनः सुधानि-धिर्वापि विश्रुतः परितः । इति तव वदनसुधानिधिरर्हति मदनात्मना भवितुम् ॥ ३५ ॥ वदनं सुषमाऽऽभरणं पृथुले चपले च तेऽबले नयने । इति संगतं सुमुख्या न पुनर्मदमन्थरं गमनम् ॥ ३६ ॥ अयि दयिते तव वदनं सुधानिधानं द्वितीयमभ्युदितम् । तदसहृदयँमवलोक्य त्रस्येदिति निश्चितं स्थाने ॥ ३७ ॥ सुभगे तव मुखमिन्दुर्मानसजातं बत प्रफुल्लयति । क्रीडनमेतत्त्स्यैतस्य पुनः सङ्गतो मृत्युः ॥ ३८ ॥ वदनसुधानिधिरेष प्रमदे न पुनस्त्वया तथा विदितः। तदिति सुधानिधिमपरं वीक्ष्य कृतार्था मुधा मनसि ॥ ३९ ॥ अयि दयिते तव वदनं पायं पायं मनोभवो गर्जन् । स्मितमवलम्ब्य तमिस्रास्वपि हतकान् हन्त नो हन्ति ॥ ४० ॥ अयि सुन्दरि तव वदनं नित्यं पूर्णं सुधानिधिर्भित्त्वा । हन्त पतत्युपरिष्टान्मध्येऽम्बुधि नित्यमेवासौ ॥ ४१ ॥ तव वदनेन तिरस्कृतमम्बुरुहं तपति पाथसो मध्ये । अभ्रान्तर्विधुमण्डलमिदमपि धावति विलीनं सत् ॥ ४२ ॥ वदनसुधानिधिरयि सखि सुस्मितकलया सुधारसाप्लुतया । कस्य निषिच्यानङ्गं साङ्गं कर्तुं समुल्लसति ॥ ४३ ॥ मध्येऽम्बु तपति कमलं निपतति मध्येऽब्धि चन्द्रमा नित्यम् । सुभगे तव मुखमेकं जयति विकाशं दधन्नितराम् ॥ ४४ ॥ अलकतमःपरिपीतं सुस्मितसुषमापुरस्कृतं मधुरम् । को न सुधानिधिसहजं सुमुखि मुखं हन्त सम्मनुताम् ॥ ४५ ॥ मानससम्भवदयितं मित्रमुपेत्य प्रहृष्यदास्यरुचि । सरसिजविकाससहजं सुमुखि तवेदं मुखं भुवने ॥ ४६ ॥ न हसति वर्धते न च मलिनं च न दृश्यते मनाक् कापि । वदनमिदं तव सुभगे स्फुरति न कस्य प्रमोदाय ॥ ४७ ॥ उपरि स्थितः सुधानिधिरत्र पुनस्ते स्थितं मुखं सुभगे । उभयोरनयोर्भूयः स्पृहणीयं दर्शनं कस्य ॥ ४८ ॥ मृगमदतिलकितनिटिलं केशच्छटयापि सर्वदाऽधरितम् । नित्यं विकसनशीलं विकसत्येवाननं सुभगे ॥ ४९ ॥ सुभगे तव मुखमेकं पश्यन् सुकृती कृतार्थतां मनुते । भ्रमति स एव सुततः कचिदपि विन्दन्न चान्यदा शर्म्म ॥ ५० ॥ विकसतु कमलं राजतु सुधानिधिर्वा मुदा किमेतन । मम तु परं तव वदनं रुचये रुचिरं सुवर्णायाः ॥ ५१ ॥ अबले सलिले तपस्यता ते मुखभावो गमितो न पङ्कजेन । कथं[11]मादिमवर्णतान्त्यजस्य[12] द्विजराजेन[13] कृतोरुनिग्रहस्य[14] ॥ ५२ ॥

---

१ प्रणयिनं सूर्यं च । २ भ्रमरा मत्ताश्च । ३ वारं वारं हसित्वा । ४ पुष्पाणि । ५ चन्द्र-पानलुब्धस्येति शेषः । ६ मनोजः कामः प्रसिद्धः । चन्द्रस्तु 'चन्द्रमा मनसो जात' इति श्रुतेः । ७ राहुमरसिकं च । ८ वियोगावसरे । ९ कल्याणम् । १० मुख्यत्वं मुखौपम्यं च । ११ आदौ मवर्णो 'मु' इत्यात्मा मकारो यस्य तस्य भावस्तत्ता । पङ्कजं हि पकारादि, तस्य तत्ता कथमिवेति । आदौ भव आदिमो यो वर्णो ब्राह्मणवर्णो यस्य तस्य भावस्तत्तेति च । १२ अन्त्यो जकारो यस्य ( पङ्कजस्य ) तस्य चण्डालस्य शूद्रस्य वा । १३ चन्द्रमसा । उत्तमेन विप्रेण च । १४ कृत उरुर्निग्रहो यस्य सः, तस्य ।

सुषमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात्। अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम्॥ ९३॥ यः ससर्ज कमलं रमागृहं विश्वलोचनमहोत्सवं विधिः। एष तादृगसृजन्मृगीदृशो मीनकेतननिकेतनं मुखम्॥ ९४॥ साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः॥ ९५॥ कलङ्कहीनः क्षयदोषशून्यः सदा निवृत्तस्तमसो भयाच्च। बताभविष्यद् द्विजनायकोऽपि तदापि मन्ये न तवाननाभम्॥ ९६॥ कान्तामुखास्वादपराङ्मुखा यत् पान्थाः शशाङ्कस्य करैर्विमृष्टाः। सुदुःसहं तापमिमे प्रयान्ति मन्ये ततो नैव सुधेतरत्र॥ ९७॥ पिबन्ति कान्तावदनं मुदा ये त एव धन्या अनुमातुमिष्टाः। अन्ये तु केचित्पथिका भ्रमन्ति केचिद्दिवस्त्रा जटिलाश्च केचित्॥ ९८॥ सुधाकरश्चन्द्र इति प्रवृद्धा वदन्तु कामं यमराजदष्टाः। धन्यास्तु कान्तावदनं यतोऽस्य पानात्प्रमोदो ननु तस्य जातु॥ ९९॥ मुखेन तन्व्या ननु तोल्यमानं सुधांशुबिम्बं विधिना कदाचित्। आकाशमापन्नमदस्तदैव स्थिरं तथैवेदमिहेति चित्रम्॥ ६०॥ तस्या मुखस्यातिमनोहरस्य कर्तुं न शक्तः सदृशं प्रियायाः। अद्यापि शीतद्युतिरात्मबिम्बं निर्माय निर्माय पुनर्भिनत्ति॥ ६१॥ अनेन रम्भोरु तवाननेन पीयूषभानोस्तुलया धृतस्य। ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः॥ ६२॥ अस्या मुखस्यास्तु न पूर्णिमास्य पूर्णस्य जित्वा महिमा हिमांशुम्। भ्रूलक्ष्मखण्डं दधदर्धमिन्दुर्भालस्तृतीयः खलु यस्य भागः॥ ६३॥ व्यधत्त धाता मुखपद्ममस्याः सम्राजमम्भोजकुलेऽखिलेऽपि। सरोजराजौ सृजतोऽदसीयां नेत्राभिधेयावत एव सेवाम्॥ ६४॥ दिवारजन्यो रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम्। अस्या यदास्ये न तदा तयोः श्रीरेकश्रियेदं तु कदा न कान्तम्॥ ६५॥ अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च तातान्मुकुराच्च मित्रात्। अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूषणं याचितकं कदाचित्॥ ६६॥ अस्या मुखेनैव विजित्य नित्यस्पर्धी मिलत्कुङ्कुमरोषभासा। प्रसह्य चन्द्रः खलु नह्यमानः स्यादेव तिष्ठन्परिवेषपाशः॥ ६७॥ विधौर्विधिर्बिम्बशतानि लोपं लोपं कुहूरात्रिषु मासि मासि। अभङ्गुरश्रीकमिमं किमस्या मुखेन्दुमस्थापयदेकशेषम्॥ ६८॥ कपोलपत्रान्मकरात्सकेतुर्भ्रूभ्यां जिगीषुर्धनुषा जगन्ति। इहावलम्ब्यास्ति रतिं मनोभू रज्यद्वयस्यो मधुनावरेण॥ ६९॥ धिक्तस्य मन्दमनसः कुकवेः कवित्वं यः स्त्रीमुखं च शशिनं च समं करोति। भ्रूभङ्गविभ्रमकटाक्षनिरीक्षितानि कोपप्रसादहसितानि कुतः शशाङ्के॥ ७०॥ चन्द्रं कलङ्करहितं शफरद्वयं च निस्तोयमन्धतसमं च सुगन्धि तन्व्याः। वक्त्रच्छलेन भुवि सृष्टवतो विधातुर्वर्ण्येत केन करकौशलमद्भुतं तत्॥ ७१॥ अस्यामपूर्व इव कोपकलङ्करिक्तश्चन्द्रोऽपरः किमुत तन्मकरध्वजेन। रोमावलीगुणमिलत्कुचमन्दरेण निर्मथ्य नाभिजलधिं ध्रुवमुद्धृतः स्यात्॥ ७२॥ लोके कलङ्कमपहातुमयं शशाङ्को जातो यतस्तव मुखं तरलायताक्षि। तत्रापि कल्पयसि तन्वि कलङ्कलेखां नार्यः समाश्रितजनं हि कलङ्कयन्ति॥ ७३॥ यन्मञ्जुसिञ्जितमितो रसनामणीनां यच्छ्वाससौरभबलादलयो वदन्ति। यद्गीतयः स्खलदलंकृतयश्च लीला दोलाविलासतरलस्तदयं मुखेन्दुः॥ ७४॥ प्रविश झटिति गेहं मा बहिस्तिष्ठ कान्ते ग्रहणसमयवेला वर्तते शीतरश्मेः। तव मुखमकलङ्कं वीक्ष्य नूनं स राहुर्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय॥ ७५॥ यदमरशतैः सिंधोरन्तः कथंचिदुपा-

---

१ उत्कृष्टशोभा—। २ लक्ष्म्या आवासगृहम्। ३ स्वशोभाम्। ४ चन्द्रस्य। ५ पूर्णशोभं निश्चलशोभं वा। ६ अमलम्। ७ पूर्णचन्द्रत्यागे मलिनत्वं हेतुरिति तथोक्तम्।

र्जितं सकलमपि तद्धात्रा कान्तामुखे विनिवेशितम् । सुरसुमनसः श्वासामोदे शशी च कपोलयोरमृतः मधरे तिर्यग्भूते विषं च विलोचने ॥ ७६ ॥ असावन्तश्चञ्चद्विकचनवलीलाब्जयुगलस्तलस्फूर्जत्कम्बुर्विलसदलिसंघात उपरि । विना दोषासङ्गं सततपरिपूर्णाखिलकलः कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ते ॥ ७७ ॥ मुखं ते दृष्ट्वेदं ललिततममिन्दुर्मृगपदप्रहारं हस्ताभ्यामुरसि तनुते मे मतिरिति । न चेद्वक्षः श्यामं वहति किमसौ स्मेरवदने मनस्वी को नाम प्रतुदति न दूनो निजतनुम् ॥ ७८ ॥ नताङ्गि त्वद्वक्त्रश्रियमसहमानः कृशतनुर्जटारण्ये स्थित्वा गलदमलगङ्गे गुहगुरोः[1] । त्रियामाप्राणेशः[2] शृणु निजकलङ्कं शमयितुं समुद्यत्सङ्कल्पः परिचरति मन्ये तप इति ॥ ७९ ॥ सुधाब्धिश्चन्द्रः[3] स्याद्यदि कथमयं तत्स्वयमपि प्रयाति क्षीणत्वं कथममृततां वा व्रजति नो । ततो मन्ये कान्तावदनमिदमेकं ननु परं यदीयं सम्पद्य स्मितमपि कृतार्थाः सहृदयाः ॥ ८० ॥ अयं ज्योत्स्नाजानिस्तव[4] वदनदूनोऽम्बरगुहां प्रविष्टस्तत्रापि प्रद्युतमिदमेनं दृढतमः । इति त्रासोद्रेकक्रमगलितसत्त्वः क्षयगदी विधिर्दग्धो दीनं व्यथयति निदानं हि मृदुता ॥ ८१ ॥ जगन्नेत्रानन्दं वदनमतुलं पक्ष्मलदृशः[5] कथंकारं पङ्केरुहमनुविधातुं प्रभवति । अयं चेदाकाङ्क्षी सह मदन[6]कोदण्डलतया वराको राकेन्दुः कुवलययुगं किं न वहति ॥ ८२ ॥ अनाकाशे चन्द्रः सरसिजदलद्वन्द्वसहितो गृहीतः पश्चार्धे कुटिलकुटिलैः सोऽपि तिमिरैः । सुधां मुञ्चत्युच्चैरशनिमथ संमोहजननीं किमुत्पातालीयं वदत जगतः कर्तुरुदिता ॥ ८३ ॥ सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां किरञ्ज्योत्स्नामच्छां नवलबलिपाकप्रणयिनीम् । उपप्राकाराग्रं[8] प्रहिणु नयने तर्कय मनागनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥ ८४ ॥ विना सायं कोऽयं समुदयति सौरभ्यसुभगः किरञ्ज्योत्स्नाधाराममधिधरणि तारापरिवृढः । धनुर्धत्ते स्मारं तिरयति विहारं न तमसां निरातङ्कः पङ्केरुहयुगलमङ्के नटयति ॥ ८५ ॥ अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः कलङ्केनास्पृष्टो न खलु परिभूतो दिनकृता[10] । कुहूभिर्नो[11] लुप्तो न च युवतिवक्त्रेण विजितः कलानाथः[12] कोऽयं कनकलतिकायामुदयते ॥ ८६ ॥ स्मितज्योत्स्ना गङ्गा तपनतनया[13] श्यामलरुचिः सरस्वत्योष्ठाभारुणकिरणसौन्दर्यजयिनी । इमास्तिस्रस्तीर्थाधिपे[14] इव मुखे सुभ्रु मिलितास्तवेदं सेवन्को न लभत इहानन्दलहरीम् ॥ ८७ ॥ कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलं मैत्रं मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः । इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदत्यद्भुतं यत्पद्मेन जिगीषुणापि न जितं मुग्धे त्वदीयं मुखम् ॥ ८८ ॥ आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि व्यक्तं जन्मसमानमेव मिलितामंशुच्छटां वर्षति । आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः संकोचादथ दुःस्थितस्य न विधेस्तच्छीलमुन्मीलितम् ॥ ८९ ॥ तानि प्राञ्चि दिनानि यत्र रजनी सेहे तमिस्रापदं सा सृष्टिर्विरराम यत्र भवति ज्योत्स्नामयो नातपः । अद्यान्यः समयस्तथाहि तिथयोऽप्यस्या मुखस्योदये हस्ताहस्तिकया हरन्ति परितो राकावराकीयशः ॥ ९० ॥ अज्ञातेन्दुपराभवं परिलसद्व्यालोलनेत्राञ्जनं भ्रान्तभ्रूलतमैणनाभितिलकं श्रीख-

---

१ शङ्करस्य । २ चन्द्रमाः । ३ 'स्वयमसिद्धः कथं परान् साधयेत्' इति न्यायमाश्रित्येदं वचनम् । ४ ज्योत्स्ना कौमुदी जाया यस्य तादृशः चन्द्रमाः । ५ शोभनपक्ष्म यद्वा पक्ष्मलत्वशालि-सान्द्रत्वं हि रमणीयतातिशयं द्योतयति । ६ कामधनुषः । ७ वज्रम् । ८ प्राकाराग्रसमीपदेशे । ९ ईषत् । १० सूर्येण । ११ अमावास्याभिः । 'स्यान्नष्टेन्दुकला कुहूः ।' इत्यमरः । १२ चन्द्रमाः । १३ यमुना । १४ प्रयागे ।

ण्डपत्रालकम् । बन्धूकाधरसुन्दरं सुरमुनिव्यामोहि वाक्यामृतं त्रैलोक्याद्भुतपङ्कजं वरतनोरास्यं न कस्य प्रियम् ॥ ९१ ॥ चातुर्यस्यैकचिह्नं फलममलगिरां मूलमुत्तापशान्तेः पद्मायाः सप्रसादं स्थलमपि च रुचां कोशभूतं फलानाम् । शृङ्गारस्यातिमान्यं शरदमृतकरस्पर्धि सौभाग्यसिन्धोरास्यं तस्याः सहास्यं मनसि न मृदुले कस्य लास्यं[1] तनोति ॥ ९२ ॥

## मन्दहासवर्णनम् ।

अद्वितीयं निजं लोके विलोक्य वहतो मुदम् । प्रमदावदनस्यायं दर्पोद्रेको न तु स्मितम् ॥ १ ॥ सुधासिन्धोर्मुखस्येयं फेनलेखा बहिर्गता । प्रवदन्त्ययथाप्रज्ञास्तत्र स्मितपरम्पराम् । ॥ २ ॥ मां जितं ननु सम्भाव्य स्मयते सुभगामुखम् । इति सम्भावयन्नन्तश्चन्द्रोऽभ्रेषु प्रधावति ॥ ३ ॥ तावदेव मनोजस्य शरैस्तिग्मै रुजार्जिता । न यावन्निपतेयुस्ते कान्ते स्मितसुधांशवः ॥ ४ ॥ कामबाणप्रहारेण मूर्च्छितानि पदे पदे । जीवन्ति युवचेतांसि युवतीनां स्मितामृतैः ॥ ५ ॥ स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् । असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ ६ ॥ धवलीकरोति हरितो मलिनीकुरुते मनः सपत्नीनाम् । अस्या हास्यविकासो मम तु मनो रक्तमाचरति ॥ ७ ॥ यदि प्रसादीकुरुते सुधांशोरेषा सहस्रांशमपि स्मितस्य । तत्कौमुदीनां कुरुते तमेव निर्मित्य[2] देवः सफलं स्वजन्म ८ ॥ मधुरः कुसुमविकासो विशदः पीयूषदीधितेरुदयः । वरवर्णिनीस्मितं तु क्षमं न निर्वक्तुमीदृगिति ॥ ९ ॥

## कण्ठवर्णनम् ।

अदृष्टपूर्वः कण्ठोऽयं कान्ताया भुवनत्रये । यस्माद्वीणानिनादस्य समुद्भूतिर्विभाव्यते ॥ १ ॥ मनोजेन निजः कम्बुर्विजित्य भुवनत्रयम् । मन्ये कण्ठे नितम्बिन्याः समर्पित इति प्रिये ॥ २ ॥ अहं लोकैर्नितम्बिन्याः कण्ठेन सदृशो मतः । इति स्वं कृतिनं मत्वा प्रणदञ्शङ्ख उच्यते ॥ ३ ॥ कण्ठस्य विदधे कान्तिं मुक्ताभरणता यथा । नास्याः स्वभावरम्यस्य मुक्ताभरणता तथा ॥ ४ ॥ असावुद्वेललावण्यरत्नाकरसमुद्भवः । जगद्विजयमङ्गल्यशङ्खः कुसुमधन्वनः ॥ ५ ॥ श्रोत्रपीयूषगण्डूषैः काकलीकलगीतिभिः । कण्ठः कुण्ठितचातुर्यो विपञ्चीपञ्चमध्वनेः ॥ ६ ॥ अयं त्रयाणां ग्रामाणां निधानं मधुरध्वनिः । रेखात्रयमितीवास्याः सूत्रितं कण्ठकन्दले ॥ ७ ॥ कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ ८ ॥ कविस्वगानप्रियवादसत्यान्यस्या विधाता न्यधिताधिकण्ठम् । रेखात्रयन्यासमिषादमीषां वासाय सोऽयं विबभाज सीमाः ॥ ९ ॥ मुक्तोत्करः संकटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः । जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद्गुणवत्त्वमाप ॥ १० ॥

## वाक्प्रशंसा ।

अमृतद्रवमाधुरीधुरीणां गिरमाकर्ण्य[3] कुरङ्गलोचनायाः । मुहुरभ्यसनं कषायकण्ठी कलकण्ठी कुरुते कुहूरुतेन ॥ १ ॥ स्वरेण तस्याममृतस्रुतेव[4] प्रजल्पितायामभिजातवाचि । अप्यन्यपुष्टा प्रतिकूलशब्दा

---

१ नृत्यम् । आमोदमिति भावः । २ निक्षिप्य । ३ । श्रुत्वा । ४ अमृतस्यन्दं कुर्वतेव ।

श्रोतुर्वितन्त्रीरिव ताडयमाना ॥ २ ॥ शिरीषकोशादपि[1] कोमलाया वेधा विधायाङ्गमशेषमस्याः । प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदुत्वमुद्राम् ॥ ३ ॥ प्रसूनबाणाद्वयवादिनी सा कापि द्विजेनोपनिषत्पिकेन[2] । अस्याः किमास्यद्विजराजतो वा नाधीयते भैक्षभुजा तरुभ्यः ॥ ४ ॥ पद्माङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णोः श्रयणात्सपत्नीम् । आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥ ५ ॥ कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम् । तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम् ॥ ६ ॥ सरस्वती दीव्यति विश्वधात्रा समं सरोजे वदने त्वदीये । तत्काकलीदिव्यरसा गभीराः श्रमानुरोधादिव निस्सरन्ति ॥ ७ ॥

## भुजलताप्रशंसा ।

दयिताबाहुपाशस्य कुतोऽयमपरो विधिः । जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥ १ ॥ शब्दवद्भिरलङ्कारैरुपेतमतिकोमलम् । सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम् ॥ २ ॥ सरले एव दोर्लेखे[3] यदि चञ्चलचक्षुषः । अमुंग्धाभ्यो[4] मृणालीभ्यः कथमाजह्नतुः श्रियम् ॥३ ॥ बाहू तस्याः कुचाभोगनिरुद्धान्योन्यदर्शनौ । मन्त्रितं कथमेताभ्यां मृणालीकीर्तिलुण्ठनम् ॥ ४ ॥ बाहू प्रियाया जयतां मृणालं द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् । उच्चैस्तु तच्चित्रममुष्य भग्नस्यालोक्यते निर्व्यथनं यदन्तः ॥ ५ ॥ अजीयतावर्तशुभंयुनाभ्यां दोर्भ्यां[5] मृणालं किमु कोमलाभ्याम् । निःसूत्रमास्ते घनमङ्कमृत्सु मूर्तासु नाकीर्तिषु तन्निमग्नम् ॥ ६ ॥

## हस्तवर्णनम् ।

कुसुमायुधकोदण्डे[6] हस्तौ बिस्तीर्णचक्षुषः । अशोकपल्लवास्त्राणां प्रतिहस्तत्वमागतौ ॥ १॥ नायं धार्यमधीराक्षि मुखेन्दोः संमुखं त्वया । इतीव लीलापद्मेन करेऽस्याः कान्तिरर्पिता ॥ २ ॥ स्पृष्टस्त्वयैष दयिते स्मरपूजाव्यापृतेन हस्तेन । उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥ ३ ॥ अस्याः करस्पर्शनगर्धनर्द्धिर्बालत्वमाप्तस्खलु पल्लवो यः । भूयोऽपि नामाधरसाम्यगर्वं कुर्वन्कथं वास्तु न स प्रवालः ॥ ४ ॥ अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः । इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तयास्याम् ॥ ५ ॥ मुग्धे प्रतारयसि किं कुसुमानि हर्तुमेतान्यशोकविटपस्य कुतूहलेन । अस्यैव तन्वि नवपल्लवडम्बरेषु त्वं हारयिष्यसि ननु स्वयमेव पाणी ॥ ६ ॥

## वलयवर्णनम् ।

गौराङ्ग्या भुजलावण्यमीलितं हेमकङ्कणम् । कण्ठाश्लेषे वयस्याभिः काठिन्यादन्वमीयत ॥ १ ॥ प्रकोष्ठबन्धे बिम्बोष्ठ्यास्तस्याः काञ्चनकङ्कणम् । नालं वलयितं हस्ते हेमाब्जस्येव राजते ॥ २ ॥ सौवर्णकङ्कणश्रेण्या भाति तद्बाहुकन्दली । तूणचम्पकमौर्व्येव पुष्पचापेन वेष्टिता ॥ ३ ॥ सहेमकटकं धत्ते सा करं पद्मतस्करम् । पद्मिनीवल्लभस्येव मूले वेष्टितमंशुना ॥ ४ ॥ हस्ते चकास्ति बालायास्तस्याः कङ्कणमालिका । मनःकुरङ्गबन्धाय पाशालीव मनोभुवः ॥ ५ ॥ कृशाङ्ग्याः कुचभारेण

---

१ कुड्मलात् । २ कोकिलेन । ३ भुजौ । ४ अरमणीयाभ्यः । ५ भुजाभ्याम् । ६ कामधनुषि । ७ इच्छा- । ८ सखीभिः । ९ कमलशोभाऽपहारिणम् ।

दूरमुत्सारितौ भुजौ । वहतः कलहायेव वाचालां वलयावलिम् ॥ ६ ॥ न्यस्तानि दन्तवलयानि करे कदाचित्तानीन्दुखण्डघटितानि ममैष तर्कः । अस्या विसर्गमृदुपाणिसरोजमेषामामोचने झटिति यन्मुकुलीबभूव ॥ ७ ॥ इदं ते केनोक्तं कथय कमलातङ्कवदने यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् । इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ ८ ॥

## पाणिरेखावर्णनम् ।

ध्वजाकारा रथाभासा गजाभा पविभास्वरा । पाणिरेखेति कन्दर्पसर्वस्वं निश्चितं स्थितम् ॥ १ ॥ आयूरेखां चकारास्याः करे द्राघीयसीं विधिः । शौण्डीर्यवर्गनिर्वाहप्रत्याशां च मनोभुवः ॥ २ ॥

## अङ्गुलीवर्णनम् ।

सुदीर्घा रागशालिन्यो वङ्कपर्वमनोहराः । तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥१॥ रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषादसौ हैङ्गुलपञ्चतूणे । हैमैकपुङ्खास्ति विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य ॥ २ ॥

## अङ्गुलीयकप्रशंसनम् ।

राज्यान्तःकामदेवस्य प्राणिनो निवसन्ति ये । तैर्वन्द्या राजमुद्रेयं न तु बालाऽङ्गुलीयकम् ॥ १ ॥ अङ्गुलीषु कुरङ्गाक्ष्याः शोभते मुद्रिकावलिः । प्रोतेव बाणैः पुष्पेषोः सूक्ष्मलक्ष्यपरम्परा ॥ २ ॥

## कुचवर्णनम् ।

कामिन्याः कुचयोः कान्तिः पीनत्वेन पुरस्कृता । सुवर्णाचलशृङ्गाभां विनिर्जेतुं समुद्यता ॥ १ ॥ मृद्वङ्गि कठिनौ तन्वि पीनौ सुमुखि दुर्मुखौ । अत एव बहिर्यातौ हृदयात्ते पयोधरौ ॥ २ ॥ तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् । हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥ ३ ॥ यन्न माति तदङ्गेषु लावण्यमतिसंभृतम् । पिण्डीकृतमुरोदेशे तत्पयोधरतां गतम् ॥ ४ ॥ स्वयंभूः शंभुरम्भोजलोचने त्वत्पयोधरः । नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥ ५ ॥ अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् । श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥ ६ ॥ प्रायश्चित्तं न गृह्णीतस्तन्वङ्ग्याः पतितौ स्तनौ । अत एव तयोः स्पर्शे लोकोऽयं शिथिलादरः ॥ ७ ॥ पयोधरघनीभावस्तावदम्बरमध्यगः । आश्लेषोपगमस्तत्र यावन्नैव प्रवर्तते ॥ ८ ॥ भाति निर्विवरे तस्याश्चित्रं कुचयुगान्तरे । क्रीडाकुण्डलितोचण्डकोदण्डः कुसुमायुधः ॥ ९ ॥ कुचद्वये चकोराक्षी चिबुकप्रान्तचुम्बिनि । नर्मोक्तिषु न शक्नोति स्थातुं लज्जानतानना ॥ १० ॥ शङ्के तच्चित्तमक्लेशसाध्यं कुसुमधन्वनः । काठिन्यं बहिरेवास्याः स्तनाभ्यां येन धारितम् ॥ ११ ॥सा स्तनाञ्जलिबन्धेन मन्मथं प्रथमागतम् । करोतीवोन्मुखं बाला बान्धवं यौवनश्रियः ॥ १२ ॥ अस्त्यप्रतिसमाधेयं स्तनद्वन्द्वस्य दूषणम् । स्फुटतां कञ्चुकानां यन्नायात्यावरणीयताम् ॥ १३ ॥ कुम्भौ सदम्भौ करिणां कलशौ मन्दकौशलौ । वराकौ च चक्रवाकौ तदीयकुचयोः

---

१ कन्दर्पेण । २ वज्राकारा । ३ अतिदीर्घाम् । ४ विभागविशेषः । ५ पञ्चानां शराणां पुञ्जः । ६ सूत्राधाराय रमणीयत्वादिगुणयुक्ताय च । ७ स्वयमाविर्भवनशीलः । शम्भुर्हि लिङ्गरूप इति सम्भावनेयम् । ८ मूढम्, घनत्वात् वैशिष्ट्येन प्रतीत्यविषयभूतं च । ९ कर्ण-वेद- । १० दुष्कृतक्षालनं, प्रायः, प्रायेण, चित्तं मन इतिच । ११ पापिनौ भ्रष्टौ च । १२ कुचयोः पुष्टत्वम्, मेघसङ्घर्षश्च । १३ वस्त्र- । आकाश- । १४ परस्परसंश्लेष- । नक्षत्र-विशेष- । १५भयङ्करधनुः । १७ परिहासवचनेषु ।

पुरः ॥ १४ ॥ मुखेन्दुचन्द्रिकापूरप्लाव्यमानौ पुनः पुनः । शीतभीताविवान्योन्यं तस्याः पीडयतः स्तनौ ॥ १५ ॥ तत्कुचौ चरतः किंचिन्नूनं मनसिजव्रतम् । नित्योन्मुखौ यदासाते मौलिरत्नस्य भास्वतः ॥ १६ ॥ सा धारयत्यधीराक्षी दुर्वहं स्तनमण्डलम् । गर्वपर्वतमारूढश्चित्रं कुसुमकार्मुकः ॥ १७ ॥ तस्यास्तुङ्गस्तनच्छाया चकास्ति त्रिवलीतटे । लीना तिमिरलेखेव वदनेन्दोरगोचरे ॥ १८ ॥ स्वकीयं हृदयं भित्त्वा निर्गतौ यौ पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥ १९ ॥ अल्पं निर्मितमाकाशमनालोच्यैव वेधसा । इदमेवंविधं भावि भवत्याः स्तनमण्डलम् ॥ २० ॥ उच्छ्वसन्मण्डलप्रान्तरेखमाबद्धकुड्मलम् । अपर्याप्तमुरोवृद्धेः शंसत्यस्याः स्तनद्वयम् ॥ २१ ॥ मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् । इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥ २२ ॥ पटविघटितमपि कुचतटमकपटमनसः कुरङ्गनयनायाः । मणिभवमयूखपटलीपटलीनतया न सम्यगालोचि ॥ २३ ॥ प्रतिपक्षो यदि वक्षोरुहपरिणाहः कुरङ्गनयनायाः । आकाशवासतपसः श्रीफल विफलस्तवायासः ॥ २४ ॥ चञ्चत्काञ्चनशैलावस्या वक्षोरुहौ तन्व्याः । नो चेत्तावधिरूढा कथमनिमिषतां भजेत मे दृष्टिः ॥ २५ ॥ करतलयुगपरिणद्धे कुचकलशे कुङ्कुमारुणे तस्याः । सिन्दूरिते करिपतेः कुम्भे नक्षत्रमालेव ॥ २६ ॥ काठिन्यमङ्गैरखिलैर्निरस्तं कुचौ युवत्याः शरणं जगाम । अधः पतिष्याव इतीव भीत्या न शक्नुतस्तावपि हातुमेतत् ॥ २७ ॥ दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती । वक्षोजताप्त्यै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥ २८ ॥ अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धम् । मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥ २९॥ किं नर्मदायों मम सेयमस्यां दृश्याभितो बाहुलतामृणाली । कुचौ किमुत्तस्थतुरन्तरीपे स्मरोष्मशुष्यत्तरवाल्यवारः ॥ ३० ॥ तालं प्रभु स्यादनुकर्तुमेतावुत्थानसुस्थौ पतितं न तावत् । परं च नाश्रित्य तरुं महान्तं कुचौ कृशाङ्गयाः स्वत एव तुङ्गौ ॥ ३१ ॥ एतत्कुचस्पर्धितया घटस्य खातस्य शास्त्रेषु निदर्शनत्वम् । तस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामाजनि कुम्भकारः ॥ ३२ ॥ निशाङ्कसंकोचितपङ्कजोऽयमस्यामुदीतो मुखमिन्दुबिम्बः । चित्रं तथापि स्तनकोकयुग्मं न स्तोकमप्यञ्चति विप्रयोगम् ॥३३॥ आभ्यां कुचाभ्यामिभकुम्भयोः श्रीरादीयतेऽसावनयोः क्व ताभ्याम् । भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत् ॥३४॥ करीराग्रजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत्कुचौ चेत् । सर्वं तदा श्रीफलमुन्मदिष्णु जातं वटीमप्यधुना न लब्धुम् ॥ ३५ ॥ मध्यं तनूकृत्य यदीदमीयं वेधा न दध्यात्कमनीयमंशम् । केन स्तनौ संप्रति यौवनेऽस्याः सृजेदनन्यप्रतिमाङ्गयष्टेः ॥ ३६ ॥ तवोपकण्ठेस्थिततारहारस्फुरत्प्रभाशैवलिनीजलेषु । लीनो मनोजद्विप एव तस्य व्यक्तौ नु गण्डौ किमुरोजपिण्डौ ॥ ३७॥ सतां समालोकयतां विवेकान्हवींषि हुत्वा स्मरबाणवह्नौ । धत्ते स्तनः श्यामशिरोमिषेण तनूदरि त्र्यायुषभस्मबिन्दुम् ॥ ३८ ॥ नयननीरज किं भवता कृतं मुखशशी यदयं रिपुराश्रितः । इति वचो वितरीतुमिवोन्मुखं वरतनोः

---

१ हस्ति-। २ सिंहः। ३ कुचविस्तारः। ४ कण्ठः प्रमाणमस्येति कण्ठावधीति भावः। ५ क्रीडासुखविधायिन्याः, तदाख्याया नद्याश्च । ६ इन्द्रः। अतिधनाढ्यो वा । ७ लक्ष्म्याः शोभायाः सम्पत्तेर्वा फलम्, बिल्वफलं च। ८ लेशं कपर्दिकां च। ९ समीप-।

स्तनचक्रयुगं बभौ ॥ ३९ ॥ बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण । अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्याः ॥ ४० ॥ कनकक्रमुकायितं पुरस्तादथ पङ्केरुहकोरकायमाणम् । क्रमशः कलशायमानमास्ते सुदृशो वक्षसि कस्य भागधेयम् ॥ ४१ ॥ अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् । स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥ ४२ ॥ कलशे निजहेतुदण्डजः किमु चक्रभ्रमिकारिता गुणः । स तदुच्चकुचौ भवन्प्रभाझरचक्रभ्रमिमातनोति यत् ॥ ४३ ॥ जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते किल कनकाचलेन सार्धम् ॥ ४४ ॥ शुकीचञ्चूत्खातच्छवि फलयुगं यौवनतरोरयःशङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम् । समुद्रं भोगामृतकलशयुग्मं सुकृतिनः कुचद्वन्द्वं तन्व्या नवनखपदाङ्कं विजयते ॥ ४५ ॥ कुचावस्याः कामद्विपकलभकुम्भाविति परे वदन्त्यन्ये वक्षःसरसि कमले काञ्चनघटौ । ममायं सिद्धान्तः स्फुरति मदनेन त्रिजगती विनिर्जित्य न्युब्जीकृतमिव निजं दुन्दुभियुगम् ॥ ४६ ॥ जम्बीरं वा कमलमुकुलं हेमगुच्छं यथेच्छं मङ्गल्यं वा कलयतु जनो भूपतेर्मन्मथस्य । एतद्द्वन्द्वं कलयति मतिर्मामकीना नवीना केनाप्यस्या हृदि विनिहितं मन्मथानन्दकन्दम् ॥ ४७ ॥ पीनोन्नतत्वे न परत्र दृष्टे अस्मादृशे इत्यभिमानयोगः । कान्ताकुचौ नो भवतोः सुयुक्तौ सुदुर्लभौ दन्तिघटौ न यस्मात् ॥ ४८ ॥ पुष्पेषोरभिषेकहेमकलशौ हारप्रभावाहिनीचक्राह्वौ मदनोन्मदद्विपपतेः कुम्भौ रतेः कन्दुकौ । कन्दौ बाहुमृणालिकायुगलयोर्लीलालतासत्फले नव्यौ रत्नसमुद्गकौ वहति सा लावण्यपूर्णौ स्तनौ ॥ ४९ ॥ यूनां मोहमहाफलप्रसविनीं नाभ्यालवालोत्थितां सेक्तुं रोमलतां मुखामृतनिधेर्लावण्यनामामृतम् । नेष्यन्सारणिकां विभज्य कृतवान्कूटद्वयं पार्श्वयोः पञ्चेषुस्तदिदं पयोधरयुगं लोकाः समाचक्षते ॥ ५० ॥ उद्भिन्नं किमिदं मनोभवनृपक्रीडारविन्दद्वयं सूते तत्कथमेकतः किल लसद्रोमावलीनालतः । चक्रद्वन्द्वमिदं क्षमं तदपि न स्थातुं मुखेन्दोः पुरो लावण्याम्बुनिमग्नयौवनगजस्यावैमि कुम्भद्वयम् ॥ ५१ ॥ उद्भेदं प्रतिपद्य पक्वबदरीभावं समेत्य क्रमात्पुंनागाकृतिमाप्य पूगपदवीमारुह्य बिल्वश्रियम् । लब्ध्वा तालफलोपमां च ललितामासाद्य भूयोऽधुना चञ्चत्काञ्चनकुम्भजृम्भणमिमावस्याः स्तनौ बिभ्रतौ ॥ ५२ ॥ रत्याप्तप्रियलाञ्छने[1] कठिनतावासे[2] रसालिङ्गिते[3] प्रह्लादैकरसे[4] क्रमादुपचिते[5] भूभृद्गुरुत्वापहे[6] । कोकस्पर्धिनि[7] भोगभाजि[8] जनितानङ्गे[9] खलीनोन्मुखे[10] भाति श्रीरमणावतारदशकं[11] बाले भवत्याः स्तने ॥ ५३ ॥ मध्योऽयं[12] बलिसद्म[13] दृष्टिरधिकं पृथ्वी[14] सुपर्वालयो[15] बाहुस्तत्कमलेक्षणा त्रिजगतीमेकैव संरक्षति । इत्येवं स्तनयोर्मिषेण कनकक्षोणीभृता संधृतौ यस्यामात्मकिशोरकौ पविभयव्यग्रेण जम्भद्विषः ॥ ५४ ॥

---

१ हस्तिशिशुगण्डस्थलशोभायाः । २ सुवर्णाकारपूगीफल- । ३ कुड्मल- । ४ कामस्य । ५ चक्राङ्गाकारौ कोकनामानौ पक्षिविशेषौ । ६ सुरतकालिकनखक्षतादिचिह्नशालिनि, रतेराप्तः पतिः कामः तस्य ध्वजचिह्नरूपे मत्स्यावतारे च । ७ पीनत्वेन दुःस्पर्शत्वेन कूर्मावतारे च । ८ रसेन रसया ( भुवा ) चालिङ्गिते ( वाराहे ) । ९ आह्लादैकभाजने, प्रह्लादस्याराध्ये नृसिंहे च । १० शनैः शनैः पुष्टिमुन्नतिं वा प्राप्ते, प्रवृद्धे ( वामनावतारे ) च । ११ गिरिवत्पीनत्वदुर्भरत्वाभ्याम्, राज्ञां च दर्पं हन्तुं प्रवृत्तत्वेन । १२ साम्येन चक्रवाकस्पर्धाग्राहिणि सीतावियोगे मन्मथोद्दीपकं कोकं प्रति शापो दत्त इति तादृशि रामे च । १३ मण्डलाकारेण स्थिते, शेषरूपे बलभद्रे च । १४ कामोद्दीपके प्रद्युम्नपुत्रोत्पादके कृष्णे च, यद्वा जनितशरीरधारणविरुद्धचेष्टत्वेन बुद्धे इति । १५ इन्द्रियसंतर्पणपरोत्कण्ठाविषये कल्किनि च खेषु लीना आसक्तास्तेषामुन्मुख उत्कण्ठाविषयस्तत्रेति, खलीनं तुरङ्गस्य वल्गा तदुन्मुखे च । १६ लक्ष्मीपति- । १७ उदरम् । १८ पातालम् । १९ पृथ्वी, भूमिश्च । २० शोभनानां पर्वणामाश्रयः स्वर्गश्च ।

## कञ्चुकीवर्णनम् ।

उपरि पीनपयोधरपातिता पटकुटीव मनोभवभूपतेः । विजयिनस्त्रिपुरारिजिगीषया तव विराजति भामिनि कञ्चुकी ॥ १ ॥

## मुक्तावलिवर्णनम् ।

घटीयैन्त्रायते हारो नाभिकूपे मृगीदृशः । संसेक्तुमिव लावण्यपयसा यौवनद्रुमम् ॥ १ ॥ हारः कुरङ्गशावाक्ष्या राजति स्थूलमौक्तिकः । नाभिलावण्यपानीयघटीयन्त्रगुणोपमः ॥ २ ॥ मैतङ्गकुम्भसंसर्गजातपातकशङ्कया । स्नातीव मुक्ताहारोऽस्याः स्फुरत्कौन्तिजले गले ॥ ३ ॥ प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः । मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ ४ ॥ हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले । मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥ ५ ॥ मणिहारलता विभाति तन्व्याः स्तनसिंहासनसीम्नि तस्थिवांसम् । अभिषेक्तुमनङ्गदेवराजं गलशङ्खाद्गलितेव दुग्धधारा ॥ ६ ॥ श्रीवाङ्कुतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम् । आलिङ्ग्यतामप्यवलम्बमाना सुरूपताभागखिलोर्ध्वकाया ॥ ७ ॥ स्तनातटे चन्दनपङ्किलेऽस्या जातस्य यावद्युवमानसानाम् । हारावली रत्नमयूखधाराकाराः स्फुरन्ति स्खलनस्य रेखाः ॥ ८ ॥ निबिडानुषक्तकुचकोकदम्पती मुखतारकापरिवृढेन शासितुम् । अवतारितेव निजतारकावली हरिणीदृशः स्फुरति हारवल्लरी ॥ ९ ॥ एकावलीकलितमौक्तिककैतवेन तन्व्याः समुन्नतपयोधरयुग्मसेवाम् । चक्रुर्मनांसि यमिनामतिनिर्मलानि कन्दर्पमुक्तशरपातकृतान्तराणि ॥ १० ॥ सारङ्गाक्ष्याः कुचकलशयोरन्तराकाशदेशः प्राप्तच्छेदः क्वचिदपि चलन्प्रस्खलन्निष्पपात । नाभीकूपः समजनि नतस्तस्य देहच्युतासौ नक्षत्राणां ततिरिव समालम्बते हारशोभाम् ॥ ११ ॥ मुक्तावली स्मरविदाहविपाण्डुमूले नद्धा चकास्ति जितकम्बुनि कण्ठकाण्डे । निश्चिन्वती मृगदृशो वदनं मृगाङ्कं नक्षत्रपङ्क्तिरिव संपतिता नभस्तः ॥ १२ ॥

## उदरवर्णनम् ।

युक्तं मध्ये कृषा तन्वी कार्मुकीकरणाय यत् । अत्रैव कुसुमास्त्रेण पीड्यते श्लिष्टमुष्टिना ॥ १ ॥ स्तनौ भारार्पणव्यग्रौ काञ्ची कलकलोन्मुखी । कस्यां दिशि न मध्यस्य तस्याः कार्श्यं सहेतुकम् ॥ २ ॥ मध्यं तव सरोजाक्षि पयोधरभरार्दितम् । अस्ति नास्तीति सन्देहः कस्य चित्ते न भासते ॥ ३ ॥ स्मरमानसिकसमस्यास्यास्तनिमा निरवधिर्मध्यः । श्रीरेव पूरयति यां न गिरां देवी न चापि गुरुरस्याः ॥ ४ ॥ अस्यास्तनिमा मध्ये प्रथिमा कुचयोर्दृशोश्च चाञ्चल्यम् । ऊर्वोः क्रमेण वृत्तोन्नाहश्च तुल्यतां दधति ॥ ५ ॥ अस्मिन्प्रकृतिमनोज्ञे लग्ना प्रायेण मान्मथी दृष्टिः । सुन्दरि यतो भवत्याः प्रतिक्षणं क्षीयते मध्यः ॥ ६ ॥ वयःप्रकर्षादुपचीयमानैस्तनद्वयस्योद्वहनश्रमेण । अत्यन्तकार्श्यं वनजायताक्ष्या मध्यो जगामेति ममैष तर्कः ॥ ७ ॥ बद्धा ह्रियेयं त्रिवलीगुणेन गृह्णाति रोमावलिनेत्रवल्लीम् । इतीव चिन्ताकुलभङ्गुरो-

---

१ घटीयन्त्रं हि मालारूपेण दृश्यते । २ हस्ति—चाण्डाल- । ३ गङ्गाव्यवहारो व्यज्यते । ४ प्रवर्धमान- । ५ कमलायतनेत्रायाः ।

ऽयं मध्यो मृगाक्ष्याः कृशतामुपैति ॥ ८ ॥ काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मीर्लब्धा स्थितिः स्तनतटेषु च रत्नहारैः। नो भूषिता वयमितीव नितम्बिनीनां कार्श्यं निरर्गलमधार्यत मध्यभागैः ॥ ९ ॥ स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते तदनुपलभमानास्तर्कयन्तोऽपि लोकाः। कुचगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥ १० ॥ तुङ्गाभोगे स्तनगिरियुगे प्रौढबिम्बे नितम्बे सीमादेशं हरति नृपतौ यौवने जृम्भमाणे। मध्यो भीरुः क्वचिदपि ययौ पद्मपत्रेक्षणायाः शून्यं मध्यस्थलमिति ततः किंवदन्तीं वदन्ति ॥ ११ ॥ देहं हेमद्युतिपरिहृताम्भोजवृष्टिं च दृष्टिं राशीभूतभ्रमरपटलीचारुवेषं च केशम्। दृष्ट्वा सद्यो विपुलहृदयानन्दमूढेन धात्रा सारङ्गाक्ष्याः किमु रचयितुं विस्मृतो मध्यदेशः ॥ १२ ॥ आक्रान्ते शैशवेऽस्मिन्नभिनववयसा शासनान्मीनकेतोर्बालाया नेत्रयुग्मं श्रुतियुगमविशद्भ्रूयुगेनापि सार्धम्। वक्षोजद्वन्द्वमुच्चैर्बहिरिह निरगाच्छ्रोणिबिम्बेन साकं मध्यः संगृह्य बद्धस्त्रिवलिभिरभितः कार्श्यमङ्गीकरोति ॥ १३ ॥

## नाभिवर्णनम्।

मन्ये समाप्तलावण्यसारे सर्गे मृगीदृशः। अपूरयित्वेव गतो नाभिरन्ध्रं चतुर्मुखः ॥ १ ॥ कुचकुम्भौ समालम्ब्य तरन्ती कान्तिनिम्नगाम्। श्रमादितस्ततो दृष्ट्वा दृष्टिर्नाभौ निमज्जति ॥ २ ॥ स्तनौ तुङ्गौ समारूढे चापन्यस्तभरे स्मरे। कोदण्डाटनिमुद्रेव जाता नाभी नतभ्रुवः ॥ ३ ॥ उरोजवच्चक्रमनोज्ञरूपा केशावलीव भ्रमराजिता वा। सङ्गीतवत्सत्पुटभेदहृद्या विद्येत नाभीसरसी मृगाक्ष्याः ॥ ४ ॥

## त्रिवलिवर्णनम्।

स्तनभाराय मध्येन त्रिवलिव्याजतः कृता। तस्याः शङ्कितभङ्गेन भ्रूभङ्गानामिवावलिः ॥ १ ॥ एकमेव बलिं बद्ध्वा जगाम हरिरुन्नतिम्। तन्व्यास्त्रिवलिबन्धेऽपि सैव मध्यस्य नम्रता ॥ २ ॥ तदीयत्रिवलीमार्गसोपानारोहणश्रमः। अनङ्गत्वादनङ्गस्य जातो रत्येकगोचरः ॥ ३ ॥ परिहृत्य दुरारोहं तस्याः स्तनतटं कृता। कन्दर्परथसञ्चारमार्गालीव वलित्रयी ॥ ४ ॥ दरिद्रमुदरं दृष्ट्वा चक्रे लावण्यपूर्णयोः। पन्थानं स्तनयोस्तस्यास्त्रिवलीविषमं विधिः ॥ ५ ॥ राजति त्रिवली तस्याः स्तनभारोन्नतिक्रमात्। उपर्युपरि जातेव हारमुद्रापरम्परा ॥ ६ ॥ ॥ मध्यत्रिवलीत्रिपथे पीवरकुचचत्वरे च चपलदृशाम्। छलयति मदनपिशाचः पुरुषं हि मनागपि स्खलितम् ॥ ७ ॥ मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला। आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥ ८ ॥ अनन्यसाधारणकान्तिकान्ततनोरमुष्याः किमु मध्यदेशः। जगत्त्रयीजन्मभृतां निषण्णा चिन्तावलीयं त्रिवलीमिषेण ॥ ९ ॥ मध्यात्समानीय सुसारभागं वक्षोजमुत्पादयिता विधाता। अतिप्रयत्नात्त्रिवलीमिषेण सोपानवर्त्मत्रितयं

---

१ कन्दर्पस्य। २ उन्नतपरिणाहे। ३ इत्यनेन यौवनस्य सिंहवदुत्थानं सम्भाव्यते। ४ मध्यभागस्य मृगत्वं व्यज्यते। सङ्कुचते चैवं भीरुरिति विशेषणम्। ५ अनवधिलावण्यसारसम्भृते। ६ महान्तो हि गुरवोऽपि नमन्ति, क्षुद्रास्तु लघवोऽपि उन्नता भवन्तीति वस्तु व्यज्यते तेन हरेरपेक्षयाऽत्र तन्व्या व्यतिरेको ध्वन्यते। ७ अपुष्टत्वादिति शेषः। ८ आरोहणमार्गत्रयम्।

चकार ॥ १० ॥ मत्वा चापं शशिमुखि निजं मुष्टिना पुष्पधन्वा तन्वीमेनां तव तनुलतां मध्यदेशे बभार । यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारास्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसंधिरेखाः ॥ ११ ॥

## रोमराजिवर्णनम् ।

नाभिरन्ध्रं प्रविष्टाऽस्याः श्यामला रोमवल्लरी । त्रस्ता तिमिरलेखेव मेखलामणिकान्तितः ॥ १ ॥ भाति रोमावली तस्याः पयोधरभरोन्नतौ । जाता रत्नशलाकेव श्रोणिवैदूर्यभूमितः ॥ २ ॥ नाभिसङ्गेन गौराङ्ग्याः शोभते रोममञ्जरी । कन्दर्पहेमकटकाल्लाक्षाधारेव निर्गता ॥३॥ नाभीवलयसंबद्धा रोमाली भाति सुभ्रुवः । सहिता निगडेनेव शृङ्खला स्मरदन्तिनः ॥ ४ ॥ रोमावली विलासिन्याः प्रविष्टा नाभिमण्डलम् । कियद्गाम्भीर्यमत्रेति तात्पर्यमिव बिभ्रती ॥ ५ ॥ लिखन्त्याः कामसाम्राज्यशासनं यौवनश्रियः । गलितेव मषीधारा रोमाली नाभिगोलकात् ॥ ६ ॥ जाने रात्रिषु तन्मध्ये ददाति शनकैः पदम् । गम्भीरनाभिकुहरप्रवेशाशङ्कया स्मरः ॥ ७ ॥ कुचदुर्गराजधान्योर्मध्येमार्गं मृगीदृशो मदनः । किमकृत नाभीवापीमपि रोमालीतमालवनरेखाम् ॥ ८ ॥ वयसी[1] शिशुतातदुत्तरे[2] सुदृशि स्वाभिविधिं विधित्सुनी । विधिनापि न रोमरेखया कृतसीम्नि प्रविभज्य रज्यतः ॥ ९ ॥ तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः । नीवीमतिक्रम्य सितेतरस्य[3] तन्मेखलामध्यमणेरिवार्चिः ॥ १० ॥ गौरीव पत्या सुभगा कदाचित्कर्त्रीयमप्यर्धतनूसमस्याम् । इतीव मध्ये निदधे विधाता रोमावलीमेचकसूत्रमस्याः ॥११॥ रोमावलीरज्जुमुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् । मद्दृष्टितृष्णा विरमेद्यदि स्यान्नैषां वतैषा सिचयेन गुप्तिः ॥१२॥ उन्मूलितालानविलोमनाभिरिछन्नस्खलच्छृङ्खलरोमदामा । मत्तस्य सेयं मदनद्विपस्य प्रस्वापवत् प्रोच्चकुचास्तु वास्तु ॥ १३ ॥ रोमावलिभ्रूकुसुमैः स्वमौर्वीचापेषुभिर्मध्यललाटमूर्ध्नि । व्यस्तैरपि स्थास्नुभिरेतदीयैर्जैत्रः स चित्रं रतिजानिवीरः ॥ १४ ॥ गम्भीरनाभिह्रदसंनिवेशे रराज तन्वी नवरोमराजिः । मुखेन्दुभीतस्तनचक्रवाकद्वन्द्वोज्झिता शैवलमञ्जरीव ॥ १५ ॥ स्वर्णावदातद्युतिकायकाण्डे संपूर्णपीयूषमयूखमुख्यः । एणीदृशः पृष्ठविलम्बिवेणीबिम्बः पुरो राजति रोमराजी ॥ १६ ॥ पयोधरस्तावदयं समुन्नतो रसस्य वृष्टिः सविधे भविष्यति । अतः समुद्गच्छति नाभिरन्ध्रतो विसारि रोमालिपिपीलिकावलिः ॥ १७ ॥ गभीरनाभीह्रदपार्श्ववर्तिनी विराजते लोमलता मृगीदृशः । मुखारविन्दस्य रसाभिलाषिणी द्विरेफपङ्क्तिश्चलितेव नीरवा ॥ १८ ॥ समुदितकुचकुम्भमङ्गनाया हृदयमनङ्गमतङ्गजोऽधिशेते । तदखिलपदबन्धनाय रोमावलिरिह शृङ्खलिका विलोक्यते यत् ॥ १९ ॥ दत्तं मया पदमिदं नवयौवनाय त्वं सत्वरं क्वचन शैशव साधयेति । कामस्य हस्तलिखिताक्षरमालिकेव रोमावली विजयते जलजेक्षणायाः ॥ २० ॥ नाभीबिलान्तरविनिर्गतपन्नगीयं संप्रस्थिता नयनखञ्जनभक्षणाय । नासामुदीक्ष्य गरुडभ्रममुद्वहन्ती गुप्तेव पीनकुचपर्वतयोरधस्तात् ॥ २१ ॥ अतिबहुतरलज्जाशृङ्खलाबद्धपादो मदननृपतिवाहो यौवनोन्मत्तहस्ती ॥ प्रकटितकुचकुम्भो लोमराजीकरेण पिबति सरसि नाभीमण्डलाख्ये पयांसि ॥ २२ ॥

---

१ छिद्र- २ बाल्ययौवनरूपे अवस्थे । ३ कृष्णस्य । ४ कृष्ण- । ५ वस्त्रेण । ६ मृगी- । ७ मेघः, कुचश्च । जातावेकवचनमुभयत्र समानम् । ८ सार्पणी- ।

रचयति युवनेत्रक्षेत्रपीयूषवृष्टिं नवजलधररेखा रोमराजिच्छलेन । यदुदयति कलापिप्रक्रियेयं तदुच्चैः स्तनघनसमयोऽस्यामाविरस्तीति विद्मः ॥ २३ ॥ अमुष्मिंल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिमिषात् ॥ २४ ॥ इयं सृष्टा चञ्चत्कनकलतिका पङ्कजभुवा निषक्ता लावण्यामृतरसभरेणानुदिवसम् । अकस्माद्रोमालीमधुपपटलीह स्फुरति यत्ततः शङ्के पुष्पोद्गमसमयमायातमधुना ॥२५॥ हरक्रोधज्वालावलिभिरवलीढेन वपुषा गभीरेऽस्या नाभीसरसि कृतझम्पो मनसिजः। समुत्तस्थौ तस्मादियमधवला धूमलतिका वदन्ती मां मुग्धा कमलमुखि रोमावलिरिति ॥ ॥ २६ ॥ निर्णेतव्यो मनसिजकलातन्त्रसिद्धान्तसारो जेतव्या च त्रिदशसुदृशामङ्गलावण्यलक्ष्मीः । रोमश्रेणीलिखनसुभगं पत्रमादर्शयन्ती पत्रालम्बं जगति कुरुते सुभ्रुवो यौवनश्रीः ॥ २७ ॥ उत्तुङ्गस्तनपर्वतादवतरद्गङ्गेव हारावली रोमाली नवनीलनीरदरुचिः सेयं कलिन्दात्मजा । जातं तीर्थमिदं सुपुण्यजनकं यत्रानयोः संगमश्चन्द्रो मज्जति लाञ्छनापहृतये नूनं नखाङ्कच्छलात् ॥ २८ ॥ उत्तुङ्गस्तनभार एष तरले नेत्रे चले भ्रूलते रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् । सौभाग्याक्षरपङ्क्तिरेव लिखिता पुष्पायुधेन स्वयं मध्यस्थापि करोति तापमधिकं रोमावली केन सा ॥ २९ ॥ यूनां धैर्यतृणाङ्कुरं कवलयन्व्रीडाऽम्बुपूरं पिबञ्शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति । नाभेः काचन तस्य निःसृतवती कस्तूरिकामालिका रोमश्रेणिमहोत्सवं वितनुते कल्याणि जानीमहे ॥ ३० ॥ सौन्दर्यस्य मनोभवेन गणनारेखा किमेषा कृता लावण्यस्य विलोकितुं त्रिजगतामेषा किमुद्ग्रीविका । आनन्दद्रुमकन्दली नयनयोः किंवा समुज्जृम्भते सुन्दर्याः किमु वा स्वभावसुभगा रोमालिरुन्मीलति ॥ ३१ ॥

## पृष्ठभागवर्णनम्।

अस्याः खलु ग्रन्थिनिबद्धकेशमल्लीकदम्बप्रतिबिम्बवेशात् । स्मरप्रशस्ती रजताक्षरेयं पृष्ठस्थली हाटकपट्टिकायाम् ॥ १ ॥

## नितम्बशोभाप्रशंसा।

तन्नितम्बस्य निन्दन्ति वृद्धिं परिजनाङ्गनाः । काञ्चीनवनवग्रन्थिग्रथनेन कदर्थिताः ॥ १ ॥ नितम्बबिम्बं बिम्बोष्ठी चन्द्रकान्तशिलाघनम् । धत्ते कंदर्पदोःस्तम्भप्रशस्तिफलकोपमम् ॥ २ ॥ विस्तारिणा मुहुस्तस्याः श्रोणीबिम्बेन पीडिता । त्रुटिता त्रुटितास्मीति फूत्करोतीव मेखला ॥ ३ ॥ अपर्याप्तभुजायामः सखेदोऽस्याः सखीजनः । श्रोण्यां कथंचित्कुरुते रशनादामबन्धनम् ॥ ४ ॥ नितम्बगौरवेणासौ गौराङ्गी खिद्यते दृढम् । हारयत्यपरिस्पन्दा कन्दुकं क्रीडितेषु यत् ॥ ५ ॥ स कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः । शान्तात्मनापि विहितं विश्वसृजा गौरवं यत्र ॥ ६ ॥ पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया । विधिरेककचक्रचारिणं किमु

---

१ मयूर- । २ महादेवेन दाहं नीतः । ३ ब्रह्मणा । ४ निश्चेतुमर्हः । ५ देवाङ्गनानाम् । ६ रचनेति युक्तं पठितुम् । लेखनेत्यस्यैव साधुत्वात् । ७ कालिन्दी । ८ नखाघातच्छलात् । ९ कन्दर्पेण । १० भुज- । ११ विधात्रा ।

निर्मित्सति मान्मथं रथम् ॥ ७ ॥ चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन । जगज्जिगीषत्यमुना नितम्बद्वयेन किं दुर्लभदर्शनेन ॥ ८ ॥ रोमावलीदण्डनितम्बचक्रे गुणं च लावण्यजलं च बाला । तारुण्यमूर्तेः कुचकुम्भकर्तुर्बिभर्ति शङ्के सहकारिचक्रम् ॥ ९ ॥

## मेखलावर्णनम् ।

बद्धा मणिमयकाञ्ची तस्याः परिणाहशालिनि नितम्बे । पङ्क्तिरिव सारसानां सुरसरितः[1] पुलिनमण्डलाभोगे ॥ १ ॥ स्रस्तां नितम्बादवरोपयन्ती पुनःपुनः केसरपुष्पकाञ्चीम् । न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव कार्मुकस्य ॥ २ ॥

## जघनवर्णनम् ।

तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघनं घनम् । दृष्टं सखीभिर्याभिस्ताः पुम्भावं मनसा ययुः ॥ १ ॥ अनङ्गरङ्गपीठोऽस्याः शृङ्गारस्वर्णविष्टरः । लावण्यसारसंघातः सा घना जघनस्थली ॥ २ ॥ तदीयजघनाभोगगरिमा विस्मयास्पदम् । दूरपाती पृषत्कोऽभूद्येनानङ्गस्य साङ्गना ॥ ३ ॥ वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशां ललितललितैरङ्गन्यासैः[2] पुरा रभसादिव । तदनु सहसा खिन्नेनेव प्रजापतिना भृशं पृथुलपृथुला स्थू॰ स्थूला कृता जघनस्थली ॥ ४ ॥

## गुह्याङ्गवर्णनम् ।

अङ्गेन केनापि विजेतुमस्या गवेष्यते किं चलपत्रपत्रम् । न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो भयेन ॥ १ ॥ गौरमुग्धवनितावराङ्गके रेजुरुत्थिततनूरुहाङ्कुराः । तर्पणाय मदनस्य वेधसा स्वर्णशुक्तिनिहितास्तिला इव ॥ २ ॥

## ऊरुवर्णनम् ।

लम्भिताः कदलीस्तम्भास्तदूरुभ्यां पराभवम् । अत्यन्तमृदुभिर्लब्धो जडैः क्व जयडिण्डिमः ॥ १ ॥ मन्ये तदूरू संभाव्य हस्तसर्वस्वहारिणौ । वहन्त्यस्पृश्यताहेतोर्मातङ्गत्वं मतङ्गजाः ॥ २ ॥ ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति । सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥ ३ ॥ तरुमूरुयुगेण सुन्दरी किमु रम्भां[3] परिणाहिना परम् । तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ४ ॥ रम्भाऽपि किं चिह्नयति प्रकाण्डं न चात्मनः स्वेन न चैतदूरू[4] । स्वस्यैव येनोपरि सा ददाना पत्राणि जागर्त्यनयोर्भ्रमेण ॥ ५ ॥ विधाय मूर्धानमधश्चरं चेन्मुञ्चेत्तपोभिः स्वमसारभावम् । जाड्यं च नाश्चेत्कदली बलीयस्तदा यदि स्यादिदमूरुचारुः ॥ ६ ॥ ऊरुप्रकाण्डद्वितयेन तस्याः करः पराजीयत वारणीयः[5] । युक्तं ह्रिया कुण्डलनच्छलेन गोपायति स्वं मुखपुष्करं सः ॥ ७ ॥ अस्यां मुनीनामपि मोहमूहे भृगुर्महान्यत्कुचशैलशीली । नानारदाह्लादि मुखं श्रितोरुव्यासो महाभारतसर्गयोग्यः ॥ ८ ॥ पश्यन्हतो मन्मथबाणपातैः शक्तो विधातुं न निमील्य चक्षुः । ऊरू विधात्रा हि कथं कृतौ तौ विन्यासवत्याः सुमतेर्वितर्कः ॥ ९ ॥ नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः । लब्ध्वापि लोके परिणाहि

---

१ गङ्गायाः । २ लुलितललितैरिति, लुलितलुलितैरिति च पाठान्तरम् । ३ कदलीस्तम्भम् । ४ अस्या ऊरू तद्वच्चारुरिति । ५ शुण्डादण्डाः ।

रूपं जातास्तदूर्वो[1]रुपमानबाह्याः ॥ १० ॥ कदली कदलै[2] करभः करभैः[3] करिराजकरः करिराजकरैः भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः[4] ॥ ११ ॥

## जङ्घावर्णनम् ।

जङ्घे तदीये संतापं[5] यज्जनस्यानुरागिणः । जनयाञ्चक्रतुस्तीव्रं तत्र हेतुर्विलोमता[6] ॥ १ ॥ प्रसूते[7] प्रसूते तस्या मुग्धानामिति का कथा । तरुणानामपि[8] प्रज्ञां प्रबध्नीत[10] इमे यतः ॥ २ ॥ हेममञ्जीरमालाभ्यां भाति जङ्घालताद्वयम् । लावण्यशाखिनः स्थानं कुङ्कुमेनेव वेष्टितम् ॥ ३ ॥ वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये । शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥ ४ ॥ क्रमोद्गता पीवरताधिजङ्घं वृक्षाधिरूढं विदुषी किमस्याः । अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥ ५ ॥

## पादप्रशंसनम् ।

अमूल्यस्य मम स्वर्ण[11]तुला[12]कोटिद्वय कियत् । इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ १ ॥ स्तनभारोऽत्र वक्त्रेन्दुचन्द्रिकावरणं मम । इति तत्पादयोर्लग्ना वेद्मि प्राङ्गणपद्मिनी ॥ २ ॥ अत्यपूर्वस्य रागस्य पूर्वपक्षाय पल्लवाः । पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥ ३ ॥ जाग्रतः[13] कमलालक्ष्मीं[14] यज्जग्राह तदद्भुतम् । पादद्वन्द्वस्य मत्तेभ[15]गतिस्तेये तु का स्तुतिः ॥ ४ ॥ दृश्यन्ते मानसोत्तंसा राजहंसाः कचिद्यदि । गतौ चरणयोस्तस्याः प्रक्ष्यते याव[16]दन्तरम्[17] ॥ ५ ॥ नितम्बपीड्यमानेन पादयुग्मेन सुभ्रुवः । कृता भ्रुकुटिभङ्गीव नीलनूपुरमालया ॥ ६ ॥ चरणकमलं तदीयं लाक्षाबालातपेन संवलितम् । अध्यास्त भृङ्गमालावलिभिर्मणिखचितनूपुरव्याजात् ॥ ७ ॥ अननुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम् । परिसरणमरुणचरणे रणरणक[18]मकारणं कुरुते ॥८॥ दशकैरवबान्धवान्दधानौ जड[19]संसर्गविमुक्तिसावधानौ । चरणौ नलिनेन तोलयन्तः कथमस्याः कवयो न यान्ति लज्जाम् ॥ ९ ॥ अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ । आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥ १० ॥ अस्याः पदौ चारुतया महान्तावपेक्ष्य सौक्ष्म्याल्लवभावभाजः । जाता प्रवालस्य महीरुहाणां जानीमहे पल्लव[20]शब्दलब्धिः ॥ ११ ॥ जगद्वधूमूर्धसु रूपदर्पाद्यदेतयाधायि पदारविन्दम् । तत्सान्द्रसिन्दूरपरागरागैर्द्वयं प्रवालप्रबलारुणं तत् ॥ १२ ॥ यानेन तन्व्या जितदन्ति[21]नाथौ पदाब्जराजौ परिशुद्धिपार्ष्णी । जाने न शुश्रूषयितुं स्वमिच्छू नतेन मूर्ध्ना कतरस्य राज्ञः ॥ १३ ॥ प्रियासखीभूतवतो मुदेदं व्यधाद्विधिः साधुदशत्वमिन्दोः । एतत्पदच्छद्मसरागपद्मसौभाग्यभाग्यं कथमन्यथा स्यात् ॥ १४ ॥

---

१ जडेत्यर्थः । २ ह्रस्वः । ३ कर्कशः । ४ मृगनयनायाः । ५ कामनिमित्तकम् । ६ रोमशून्यत्वं प्रतिकूलत्वं च । ७ जङ्घे । 'जङ्घा तु प्रसृता' इत्यमरोक्तेः । ८ सुन्दराणां, मूढानां च । ९ प्रबलानाम् । १० न तु हरत एव, किन्तु बलात् हृत्वा बन्धनं नयत इति भावः । ११ सुवर्ण- । १२ दशपल- । पादधार्याङ्गदविशेष- । १३ प्रबुध्यतः, विकसतश्च । १४ शोभां, सम्पत्तिं च । १५ क्षरन्मद- । प्रमूढ- । १६ याथार्थ्येन । १७ भेदः । १८ क्षोभम् । १९ जल-मूढ- । २० चरणलव- । २१ गजराजौ ।

## गुल्फवर्णनम् ।

अरुन्धतीकामपुरन्ध्रिलक्ष्मीजम्भद्विषद्दारनवाम्बिकानाम् । चतुर्दशीयं तदिहोचितैव गुल्फद्वयाप्ता यदनिष्टसिद्धिः ॥ १ ॥

## चरणाङ्गुलिवर्णनम् ।

एष्यन्ति यावद्गणनादिगन्तान्नृपाः स्मरार्ताः शरणे प्रवेष्टुम् । इमे पदाब्जे विधिनापि सृष्टास्तावत्य एवाङ्गुलयोऽत्र रेखाः ॥ १ ॥

## पादनखवर्णनम् ।

तस्याः पादनखश्रेणिः शोभते किल सुभ्रुवः । रत्नावलीव लावण्यरत्नाकरसमुद्धता ॥ १ ॥ तत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥ २ ॥ तद्वक्त्रं नेत्रपद्मं प्रकटितमसकृत्स्पर्धितं यन्मयैतज्जातं तस्मात्कृशत्वं ग्रहणमपि ततो जायमानः कलङ्कः । तत्सर्वं क्षम्यतां मे पुनरपि न करोम्येवमुक्त्वा तु तस्या गाढं लग्नः शशाङ्कश्चरणनखमणिच्छद्मना पादयुग्मम् ॥ ३ ॥

## संचारशोभावर्णनम् ।

सलीलमियमायाति कामिनी गजगामिनी । उन्नतं हि नखज्योतिः पुष्पैर्भुवमिवार्चती ॥ १ ॥ मारयन्त्या जनं सर्वं निरागसमिवाज्ञया । मातङ्गानां गतिर्यादृक्तादृगासीदसंशयम् ॥ २ ॥ सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु । व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि ॥ ३ ॥ गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा । इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥ ४ ॥

## जृम्भावर्णनम् ।

चक्रीकृतभुजलतिकं वक्रीकृतवक्त्रमुन्नमद्ग्रीवम् । लो हरति कस्य हृदयं हरिणदृशो जृम्भणारम्भः ॥ १ ॥ आस्येन्दोः परिवेषवद्रतिपतेश्चाम्पेयकोदण्डवद्धम्मिल्लाम्बुमुचः क्षणद्युतिवदासज्जौ क्षिपन्ती भुजौ । विश्लिष्यद्वलि लक्ष्यनाभि विगलन्नीव्युन्नमन्मध्यमं किंचित्किंचिदुदञ्चदञ्चलमहो कुम्भस्तनी जृम्भते ॥ २ ॥

## शयनवर्णनम् ।

सार्थकानर्थकपदं ब्रुवती मन्मथाक्षरम् । निद्रार्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥ १ ॥ उत्तानामुपधाय बाहुलतिकामेकामपाङ्गश्रितामन्यामप्यलसां निधाय विपुलाभोगे नितम्बस्थले । नीवीं किंचिदवश्लथां विदधती निश्वासलोलालका तल्पोत्पीडनतिर्यगुन्नतकुचं निद्राति शातोदरी ॥ २ ॥ आमीलन्नवनीलनीरजतुलामालम्बते लोचनं शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि

---

१ रति- । २ इन्द्राणी- । ३ दिशो हि दशेति तथोक्तिः । ४ वारंवारम् । ५ हस्तिनां, चण्डालानां च । ६ कन्दर्पस्य । ७ चम्पकपुष्प- । ८ मल्लिकारूपजलवर्षिणः । ९ विद्युत् । १० कृशोदरी ।

स्वीकृतम् । आलापादधरः स्फुरत्कलयति प्रेङ्खत्प्रवालोपमामानन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥ ३० ॥

## सौन्दर्यप्रशंसा ।

सुन्दरी सा भवत्येवं विवेकः केन जायते । प्रभामात्रं हि तरलं दृश्यते नात्र संशयः ॥ १ ॥ अवयवेषु परस्परबिम्बितेष्वतुलकान्तिषु राजति तत्तनोः । अयमयं प्रविभाग इति स्फुटं जगति निश्चिनुते चतुरोऽपि कः ॥ २ ॥

## समस्ताङ्गसौन्दर्यमहिमा ।

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः । पादाभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ १ ॥ गुरुणा[1] स्तनभारेण मुखचन्द्रेण[2] भास्वता[3] । शनैश्चराभ्यां[4] पादाभ्यां रेजे ग्रहमयीव सा ॥ २ ॥ सा दृष्टा येन वा दृष्टा मुषिताः सममेव ते । हृदयं हृतमेकेषामन्येषां चक्षुषोः फलम् ॥ ३ ॥ फलायते[5] कुचद्वन्द्वमियं हेमलतायते[6] । अङ्गानि कुसुमायन्ते[7] मनो मे भ्रमरायते[8] ॥ ४ ॥ विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी । तव दत्तां सदा मोदं लसत्तरलहारिणी ॥ ५ ॥ वक्रे गुरुत्वं[9] यदि ते छन्दःशास्त्रविदो विदुः । कठिने कुचयुग्मेऽस्या वदतां किं नु हीयते ॥ ६ ॥ दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥ ७ ॥ अकृशं नितम्बभागे क्षामं मध्ये समुन्नतं कुचयोः । अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ८ ॥ अव्याजं[10] सुन्दरीं तां विज्ञानेनाद्भुतेन योजयता । उपकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ ९ ॥ आलोक्य चिकुर[11]निकरं सततं सुमनोधिवासयोग्यं ते । कामो निजं निषङ्गं परिवृत्य परामर्शं साशङ्कः ॥ १० ॥ आलपति पिकवधूरिव पश्यति हरिणीव चलति हंसीव । स्फुरति तडिल्लतिकेव स्वदते तुहिनांशुलेखेव ॥ ११ ॥ वेणीबन्धर्म[12]हीनं कृष्णं नेत्रान्तमचलरूपं तम् । कुचमस्याः स्वीकुर्वन्पुरुषो लीलां वहत्यहो शंभोः ॥ १२ ॥ अङ्गं भूषणनिकरो भूषयतीत्येष लौकिको वादः । अङ्गानि भूषणानां कामपि सुषमा[13]मजीजनंस्तस्याः ॥ १३ ॥ सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ । हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ॥ १४ ॥ मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवैः[14] पाणिः । चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥ १५ ॥ कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः । अधरः किसलयलीलामाननमस्याः कलानिधिविलासम् ॥ १६ ॥ तरुणिमनि[15] कलयति[16] कलामनु मदन[17]धनुर्भ्रुवोःपठत्यग्रे । अधिवसति सकलललना[18]मौलिमियं चकितहरिणचलनयना ॥ १७ ॥ नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् । रूपमिदं मदिराक्ष्या मदयति हृदयं

---

१ दुर्भरेण । सुराणामसुराणां चेत्यध्याहृत्य विवक्षणात् बृहस्पतिना भृगुणा चेत्यर्थद्वयं लभ्यते । २ मुखरूपेण मुखापरनाम्ना चन्द्रमसा । ३ प्रकाशशालिना, सूर्येण च । ४ मन्दसञ्चारिभ्यां, सूर्यपुत्राभ्यां च । अत्र द्विवचनमविवक्षितम् । ५ फलमिवाचरति । ६ सुवर्णवल्लीवाचरति । ७ कुसुमानीवाचरन्ति । ८ भ्रमर इवाचरति लुब्धत्वात् । एतेन सौरभसम्भारशालितापि सूचिता । ९ गुरुमात्रा हि 'ऽ' इत्येवं लिख्यते छन्दोज्ञैरिति तथोक्ता । १० नेपथ्यसाहाय्यरूपकपटनिरपेक्षं रमणीया । ११ केशपुञ्जम् । १२ भुजगम्, अत्यन्तं च । १३ परमां शोभाम् । १४ कोमलः । १५ तारुण्ये । १६ स्वीकुर्वति,पठति च । एतेनास्य शिष्यत्वं तेन च तुच्छत्वं ध्वन्यते । १७ गुरुत्वमेतयोर्ध्वनितं तेन च महनीयत्वम् । १८ अत्र 'उपान्वध्याङ्वसः' इति द्वितीया ।

दुनोत्यपि च ॥ १८ ॥ संन्यस्तभूषापि नवैव नित्यं विनापि हारं हसतीव कान्त्या । मदं विनापि स्खलतीव भावैर्वाचं विना व्याहरतीव दृष्टा ॥ १९ ॥ भ्रूयुग्ममुच्चैर्धनुरुज्झितज्यं बाणाः कटाक्षाः कुटिला नितान्तम् । तथापि यूनां हृदयं भिनत्ति कोऽयं[1] विलासो वनिताजनस्य ॥ २० ॥ अलीकरूपो यदि मध्यभागः पयोधराकारभृतश्च केशाः । उत्सङ्गशोभाऽपि सरोरुहाक्ष्याः करस्य शोभां कलयेन्न कस्मात् ॥ २१ ॥ सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन । सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ २२ ॥ प्रत्यङ्गमस्यामभिकेन[2] रक्षां कर्तुं मघोनेव[3] निजास्त्रमस्ति । वज्रं च भूषामणिमूर्तिधारि नियोजितं तद्द्युतिकार्मुकं च ॥ २३ ॥ भ्रूश्चित्ररेखा[4] च तिलोत्तमास्या[5] नासा च रम्भा[6] च यदूरुसृष्टिः । दृष्टा ततः पूरयतीयमेकानेकाप्सरःप्रेक्षणकौतुकानि ॥ २४ ॥ कर्णाक्षिदन्तच्छदबाहुपाणिपदादिनः स्वाखिलतुल्यजेतुः ॥ उद्वेगभागद्वयताभिमानादिहैव वेधा व्यधित द्वितीयम् ॥ २५ ॥ यशः पदाङ्गुष्ठनखौ मुखं च बिभर्ति पूर्णेन्दुचतुष्टयं या । कलाचतुःषष्टिरुपैति वासं तस्यां कथं सुभ्रुवि नाम नास्याम् ॥ २६ ॥ यतो यतोऽङ्गादपयाति कञ्चुकं ततस्ततः स्वर्णमरीचिवीचयः । यतो यतोऽस्या निपतन्ति दृष्टयस्ततस्ततः श्यामसरोजवृष्टयः ॥ २७ ॥ कात्स्न्येन निर्वर्णयितुं च रूपमिच्छन्ति तत्पूर्वसमागतानाम् । न तु प्रियेष्वायतलोचनानां समग्रपातीनि विलोचनानि ॥ ॥ २८ ॥ तदा तदङ्गस्य बिभर्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः । दरस्फुरत्काञ्चनकेतकीदलात्सुवर्णमभ्यस्यति सौरभं यदि ॥ २९ ॥ अधरे मधुरा सरस्वतीयं[7] ननु कर्णे मणिकर्णिकाप्रवाहः[8] । शिरसि प्रतिभाति चारुवेणी[9] कथमेणीनयना[10] न तीर्थराजः[11] ॥ ३० ॥ बन्धूकबन्धुरधरः सितकेतकाभं चक्षुर्मधूककलिकामधुरः कपोलः । दन्तावली विजितदाडिमबीजराजिरास्यं पुनर्विकचपङ्कजदत्तदास्यम् ॥ ३१ ॥ वेणी विडम्बयति मत्तमधुव्रतालीमङ्गीकरोति गुणमैन्दव[12]मास्यमस्याः । बाहू मृणाललतिकाश्रियमाश्रयेते पुङ्खानुपुङ्खयति कामशरान्कटाक्षः ॥ ३२ ॥ येनोत्पलानि च शशी च मृणालिकाश्च रम्भा लताश्च कमलानि च निर्मितानि ॥ नूनं स एव मृगशाव[13]दृशोऽपि वेधाः सृष्टिक्रमो यदयमेकतया चकास्ति ॥ ३३ ॥ सा रामणीयकनिधेरधिदेवता वा सौन्दर्यसारसमुदायनिकेतनं वा । तस्याः सखे नियतमिन्दुसुधामृणालज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ ३४ ॥ राजीव[14] जीवसि मुधा न सुधाकर त्वमस्याः समः पदनखस्य कुतो मुखस्य । अग्रे दृशोर्मृगदृशः कतमः कुरङ्गस्तत्खञ्जन त्वमपि किं जनरञ्जनाय ॥ ३५ ॥ ऊरुद्वयं मृगदृशः कदले[15]श्च काण्डौ मध्यं च वेदिरतुलं स्तनयुग्ममस्याः । लावण्यवारिपरिपूरितशातकुम्भकुम्भौ मनोजनृपतेरभिषेचनाय ॥ ३६ ॥ सा दुग्धमुग्धमधुरच्छविरङ्गयष्टिस्ते लोचने तरुणकेतकपत्रदीर्घे । कम्बोर्विडम्बनकरश्च स एव कण्ठः सैवेयमिन्दुवदना मदनायुधं वा ॥ ३७ ॥ तन्वी शरत्त्रिपथगा[16] पुलिने कपोलौ लोले दृशौ रुचिरचञ्चल-

---

१ अनिर्वचनीयः । २ कामुकेन । ३ इन्द्रेण । ४ चित्रा लोकोत्तरा रेखा यस्याः सा, तदाख्या देवगणिका च । ५ तिलवदुत्तमा, तदाख्या स्वर्गणिका च । ६ कदली, तन्नाम्नी सुराङ्गना च । ७ वाणी तदाख्या नदी च । ८ रत्नप्रभाविशेष- । एतदाख्यतीरोपलक्ष्यामरसरित्- । ९ सुन्दरकेशपाशः, रमणीया सरित्सम्मेलसङ्घटना च । १० मृगाक्षी । ११ प्रयागः । तत्र हि सरस्वत्यादीनां सङ्गमः । १२ चन्द्रसम्बन्धिनम् । १३ शिशु- । १४ हे कमल । १५ अत्र ह्रस्वत्वं चिन्त्यम् । १६ शरत्कालिकगङ्गा ।

खञ्जरीटौ । तद्बन्धनाय सुचिरार्पितसुभ्रुचापचाण्डालपाशयुगलाविव शून्यकर्णौ ॥ ३८ ॥ व्याकोशकोकनदशोककरः करोऽयं खेलच्चकोरमदचौरमिदं च चक्षुः । उद्भिन्नविद्रुमरहस्यहरोऽधरोऽयं तत्स्यादरण्यमपि वश्यमवश्यमस्याः ॥ ३९ ॥ विनैवाम्भोवाहं बहलरुचिदीप्ताम्बरतलात्तडिल्लेखा हेमद्युतिविततिरम्या विलसति । विनैव स्वर्गङ्गां नभसि रभसव्यग्रशफरीपरीवर्तैः सार्धं स्फुरति विकचेन्दीवरवनम् ॥ ४० ॥ मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने किमुत्पलकदम्बकै-र्यदि तरङ्गभङ्गी भ्रुवौ । किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः किमम्बुरुहडम्बरैर्यदि तनू-रियं किं श्रिया ॥ ४१ ॥ इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः सुधाधाराधारश्चिरपरिणतं बिम्बमधरः । इमे नेत्रे रात्रिंदिवमधिकशोभे कुवलये तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥ ४२ ॥ तमःस्तोमः पूर्वं तदनु सकलः शीतकिरणस्ततः कोकद्वन्द्वं तदनु च न किंचित्पुनरभूत् । अध-स्तस्यावर्तस्तदनु कदलीकाण्डयुगलं ततोऽवाञ्चौ पद्मौ शिव शिव विधेः शिल्परचना ॥ ४३ ॥ वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुलामखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति । कुचौ किंचिन्मी-लत्कमलतुलनां कन्दलयतस्तमःशोभां चित्रां चिकुरनिकुरम्बं हि कुरुते ॥ ४४ ॥ पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचिं कराभ्यामादत्ते नवकिसलयानामरुणताम् । प्रवालस्य च्छायां दशनवसनाग्रेण पिबति स्मितज्योत्स्नापूरैरुपहसति कान्तिं हिमरुचः ॥ ४५ ॥ करे वेणीमेणीसदृशनयना स्नानविरतौ दधाना हर्म्याग्रे हरनयनतेजोहुतमपि । इयं मुग्धा दुग्धाम्बुधिबहलकल्लोलसदृशा दृशा वारंवारं मनसिजतरुं पल्लवयति ॥ ४६ ॥ दायादत्वं मनसिजधनुर्भ्रूविलासस्य धत्ते योगक्षेमौ वहति नयनद्वन्द्वमिन्दीवराणाम् । तद्गात्राणां पुनरिह जगज्जैत्रलावण्यभाजामाभात्यग्रे मलवदखिलं म्लानवर्णं सुवर्णम् ॥ ४७ ॥ नीला-ब्जानां नयनयुगलद्राविमा दत्तपत्रः कुम्भावैभौ कुचपरिकरः पूर्वपक्षीचकार । भ्रूविश्रान्तिर्मदनधनुषो विभ्रमानन्ववादीद्वक्त्रज्योत्स्ना शशधररुचं दूषयामास तस्याः ॥ ४८ ॥ तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः । श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ ४९ ॥ वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली । अग्रे शैलौ सुकृतिसुगमौ चन्दन-च्छन्नदेशौ तत्रत्यानां सुलभममृतं संनिधानात्सुधांशोः ॥ ५० ॥ तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु । धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किंवा बहु ब्रूमहे यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ ५१ ॥ सौरभ्यं मृगलाञ्छने यदि भवेदिन्दीवरे वक्रता माधुर्यं यदि विद्रुमे तरलता कन्दर्पचापे यदि । रम्भायां यदि विप्रतीपगमनं प्राप्तोपमानं तदा तद्वक्त्रं तदुदीक्षणं तदधरस्तद्भ्रूस्तदूरुद्वयम् ॥ ५२ ॥ वेणीवेल्लन-मङ्गणं किमु वलन्नेणीदृशो मध्यमं संव्यानं किमिदं विवृत्तिविषमाद्वासः स्तनात्स्रंसते । नृत्यन्तीव

---

१ उत्फुल्लरक्तकमल--। २ समुदायैः। ३ एतेन नेत्रयोः कुवलयस्वरूपत्वेऽपि कमलरूपत्व-मनपायीति सूचितम्। ४ चक्रवाकौ। ५ न्यूनतां नयति। ६ चन्द्रमसः। ७ सुन्दरी। 'शीतकाले भवेदुष्णा योष्णकाले च शीतला। सर्वावयवशोभाढ्या सा श्यामेति निगद्यते॥' इत्युक्ता वा। ८ नाभ्युद्देशेनेदं वचनम्। ९ उदरकृशिमातिशयं सम्भाव्येदं वचनम्। १०आरोहण-परम्पराम्। ११ प्राप्ता। १२ रोमावल्यामयमारोपः। १३ कुचयोरयमध्यवसायः। १४ भाग्यशालि-लभ्यौ। सुगमौ च। १५ चन्दनलिप्तौ सचन्दनवृक्षौ च। १६ इदम्मुखमुद्दिश्योक्तम्। १७ चन्द्रे। १८ नीलकमले। १९ प्रवाले। २० कदल्याम्।

किमन्तिके वलितयोः स्निग्धा दृशोः कान्तयः साकूतस्मितगर्भितं किमु मुखं वक्तुं सखीं वाञ्छति ॥ ९३ ॥ जिघ्रत्याननमिन्दुकान्तिरधरं विम्बप्रभा चुम्बति स्प्रष्टुं वाञ्छति चारुपद्ममुकुलच्छायाविशेषः स्तनौ । लक्ष्मीः कोकनदस्य खेलति करावालम्ब्य किं चादरादेतस्याः सुदृशः करोति पदयोः सेवां प्रवालद्युतिः ॥ ९४ ॥ बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं श्रोणीतीर्थशिला च नेत्रशफरी धम्मिल्लशैवालकम् । कान्तायाः स्तनचक्रवाकयुगलं कन्दर्पबाणानलैर्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥ ९५ ॥ कर्णारुन्तुद[1]मेव कोकिलरुतं तस्याः श्रुते भाषिते चन्द्रे लोकरुचिस्तदाननरुचेः प्रागेव संदर्शनात् । चक्षुर्मीलनमेव तन्नयनयोरग्रे मृगीणां वरं हैमी वल्ल्यपि तावदेव ललिता यावन्न सा लक्ष्यते ॥ ९६ ॥ चक्षुर्मेचक[2]मम्बुजं विजयते वक्त्रस्य मित्रं शशी भ्रूसूत्रस्य सना[3]भि मन्मथधनुर्लावण्यपण्यं वपुः । लेखा कापि रदच्छदे च सुतनोर्गात्रे च तत्कामिनीमेनां वर्णयिता स्मरो यदि भवेद्वैदग्ध्य[4]मभ्यस्यति ॥ ९७ ॥ स्निग्धस्मेरविलोलमुग्धमधुरा यन्नेत्रयोर्विभ्रमा यद्व्यामृष्टविलासपत्रलतिका घर्मोद्गमाद्गण्डयोः । यच्च प्रौढकदम्बकुड्मलसखी काप्यङ्गके विक्रिया तत्तस्यां किमपि स्फुटं र[5]तिपतेः कोदण्डविस्फूर्जितम् ॥ ९८ ॥ स्निग्धेन्द्रोपलसुन्दरः कचभरो वक्त्रं सगोत्रं विधोर्वक्षोजौ मणिकुम्भडम्बरमुषौ मध्योऽस्ति वा नास्ति वा । श्रोणीमण्डलमूरुदुर्वहमहो शोणाब्जतुल्ये पदे मन्ये मञ्जुगिरो मरालमहिला[6]ध्येयो गतेर्विभ्रमः ॥ ९९ ॥ एतस्याः स्तनपद्मकोरकयुगं यस्याननेन्दोः सितज्योत्स्नाभिर्न भजत्यदो मृगदृशः शङ्के विकासं पुनः । तस्मिंल्लोचनपङ्कजं विकसितं भ्रूभृङ्गसंसेवितं स्वान्ते संशयमातनोति सुतरामेतन्ममैवासकृत् ॥ ६० ॥ पानायाधरतोऽमृतं वसतयेऽप्यस्याः स्तनक्ष्माधरोऽधस्तात्सज्जघनान्तकन्दरधरः सख्याय चक्षुर्मृगः । जप्यो मन्त्रवरो मनोहरकथाध्यानाय वक्त्राम्बुजं चेत्थं देहतपःस्थले सति कथं सन्तो वनान्तं गताः ॥ ६१ ॥ कर्णोत्सङ्गविसर्पिणी नयनयोः कान्तिर्वतंसोत्पलं लाक्षासम्भ्रमनिर्व्यपेक्षमधरं लावण्यमेवाञ्चति । हारोऽस्याः स्मितचन्द्रिकैव कुचयोरङ्गप्रभा कञ्चुकी तन्व्याः केवलमङ्गभारमधुना मन्ये परं भूषणम् ॥ ६२ ॥ नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं हासश्रीपरिकर्मिते स्तनतटे हारोऽन्यहारः कथम् । पिण्डालक्तकपातनं चरणयोः पीडाफलं ताम्रयो[7]र्वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥ ६३ ॥ अस्याश्चेदलकावली कृतमलिश्रेणीभिरेणीदृशः सौन्दर्यं यदि चक्षुषोस्तरलयोः किं मन्मथस्यायुधैः । का प्रीतिः कनकारविन्दमुकुले पीनौ स्तनौ चेदतो मन्ये काचिदियं मनोभवकृता माया जगन्मोहिनी ॥ ६४ ॥ ऊर्ध्वं नीरदवृन्दमैन्दवमिदं [10]विम्बं त्वधो निर्मितं व्योम्नः पल्वलचित्रितस्य निहितौ शैलौ[11]वुपर्युन्नतौ । किं चाधः पुलिनोच्चयस्य कदलीकाण्डौ[12]ववारोपितौ तन्मन्ये चतुरस्य पुष्पधनुषः[13] सर्गोऽयमन्यादृशः[14] ॥ ६५ ॥ भृङ्गालीमुदरे क्षिपन्ति शतशः पद्मानि शस्त्रीमिव प्रत्यागच्छति लङ्घनार्थमसकृद्व्योमाङ्गणं चन्द्रमाः । वक्त्रेणापहृते कुरङ्गसुदृशस्त्रैलोक्यरूपोच्चये प्रत्यावर्तनवाञ्छयेव कति न क्लेशं समातन्वते ॥ ६६ ॥ वक्त्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः श्रोणीमण्डलमङ्गनाकुल[15]गुरोर्देवस्य सिंहासनम् । कृत्वा चारुदृशश्चतुष्टयमिदं

---

१ मर्म्मपीडकम् । २ नीलम् । ३ सदृशम् । ४ चातुर्य्यम् । ५ कामदेवस्य । ६ हंसी-- । ७ ताम्रवर्णयोः । ८ धम्मिल्लरूपम् । ९ मुखरूपम् । १० मण्डलम् । ११ कुचरूपौ । १२ जङ्घारूपौ । १३ कन्दर्परूपस्य प्रजापतेः । १४ लोकेऽन्यत्रादृष्टचरः । १५ कामस्य ।

तुष्टाव मन्ये विधिर्हर्षाद्द्वन्द्वगद्यपद्यरचनागर्भैश्चतुर्भिर्मुखैः ॥ ६७ ॥ मध्यं विष्णुपदं[1] कुचौ शिवपदे[2] वक्त्रं विधातुः पदं[3] धम्मिल्लः सुमनःपदं[4] प्रविलसत्काञ्ची नितम्बस्थली । वाणी चेन्मधुराधरोऽरुणधरः श्रीरङ्गभूमिर्वपुस्तस्याः किं कथयामि पुण्यचरितं मान्या सदा निर्जरैः ॥ ६८ ॥ यत्तीर्थाम्बु मुखाम्बुजास्रवरसो नेत्रे नवेन्दीवरे दन्तश्रेणिरखण्डिताक्षतचयो दूर्वा च रोमावली । उत्तुङ्गं च कुचद्वयं फलयुगं पत्रं कराम्भोरुहं तन्मन्ये मदनार्चनाहितमतिः स्वाङ्गोपहारैरियम् ॥ ६९ ॥ दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव । मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथाऽस्या वपुः ॥ ७० ॥ नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि[5] पाणिद्वयं वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः । कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्धिनी स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा ॥ ७१ ॥ दृष्टिः कापि सुरा सुधा स्मितमिदं वक्त्रं कलानां निधिर्वक्षः कुम्भि झषौ[6] दृशा विजयते धन्वन्तरिः सत्कृपा । कान्तिः श्रीस्त्रिवलीतरङ्गलहरी नाभी गतावर्ततामेतस्यामचिरेण भाविकलने लावण्यवारांनिधौ ॥ ७२ ॥ किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः । उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥ ७३ ॥ जानीमो वदनं सरोरुहदृशो निर्माय पश्यन्मुहुर्वृष्यन्कामकठोरपावकशिखासंतापितः पद्मभूः । रम्भामूरुतटीं स्तनं रसघटीं पीयूषवीचीं वचो बाहू बालबिसं करं किसलयं नाभीं सरो निर्ममे ॥ ७४ ॥ जानीमो वयमासनस्य कमले तस्या मुखेन्दोस्त्विषा संकोचं समुपागते स भगवान्दुःस्थः सरोजासनः । भुग्नं भ्रूलतिकायुगं विहितवान्वक्रे दृशौ सृष्टवान्मध्यं विस्मृतवान्कचांश्च कुटिलान्वामभ्रुवः सृष्टवान् ॥ ७५ ॥ मुक्ता विद्रुमम॑न्तरा[7] मधुरसः पुष्पं परं धूर्वहं प्रालेयद्युतिमण्डले[8] खलु तयोरेकासिका नार्णवे । तचोदञ्चति शङ्खमूर्ध्नि न पुनः पूर्वाचलाभ्यन्तरे तानीमानि विकल्पयन्ति त इमे येषां न सा दृक्पथे ॥ ७६ ॥ इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा । कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं सुन्दर्याः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥ ७७ ॥ सा कान्ता यदि का सुवर्णलतिका पादौ यदाऽस्याः पुनः किं पद्मं कुचमण्डलं यदि पुनः कल्पद्रुमीयं फलम् । पाणी चेत् किमु तर्हि विद्रुमदलं वाणी यदा का सुधा तस्याश्चेन्ननु सङ्गमः किमु पुनः स्वर्गेऽधिकं स्यात् सुखम् ॥ ७८ ॥

## नायकयोरन्योऽन्यालोकनवर्णनम् ।

स्मरतोरभिलाषकल्पितान्बहुशः स्वप्नभुवः समागमान् । अपि दृष्टिपथं प्रपन्नयोर्निविशश्वास चिरं मनस्तयोः ॥ १ ॥ आघ्रातं कमलं प्रियेण सुदृशा स्मित्वाऽपनीतं मुखं दत्तं विभ्रमकन्दुके नखपदं सीत्कृत्य गूढौ स्तनौ । दत्ता चम्पकमालिकोरसि भुजानिर्भिन्नरोमाञ्चया मीलल्लोचनया स्थितं प्रणयिनोर्दूरेऽपि पूर्णो रसः ॥ २ ॥

---

१ आकाशम्, अतिसूक्ष्मत्वेनादृश्यमानत्वात् । २ शिवलिङ्गाकारत्वात्, आनन्दप्रतिष्ठारूपत्वाच्च । ३ कमलम् । ४ गगननीलत्वात्, पुष्पशालित्वाच्च । ५ परिपन्थि । ६ मीनविशेषौ । ७ अभ्यन्तरे । ८ हिमकर- ।

## नायिकानायकयोरानुरूप्यप्रशंसा ।

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी रूपे देवोऽप्ययमनुपमो दत्तपादः स्मरस्य । जातं दैवात्सदृशमनयोः सङ्गतं यत्तदेतच्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ १ ॥ ज्योत्स्नाचन्द्राविव रतिमनोजाविवोमामहेशौ यद्वद्भैमीनिषधपतिवत् कीर्तिसत्कर्म्मकृद्वत् । स्थाने योगो बत मतिमता वेधसा निर्मितो वां सम्पन्नः स्यात्स च चिरमयं दर्शकानां सुतृप्त्यै ॥ २ ॥

## नायकालोकनम् ।

न जाने संमुखायाते प्रियाणि वदति प्रिये । सर्वाण्यङ्गानि किं यान्ति नेत्रतामुत कर्णताम् ॥ १ ॥ यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव । निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ २ ॥ ॥ कृच्छ्रेण कापि गुरुणैव जने निरोधमुलङ्घ्य नायकसमीपभुवं प्रतस्थे । हा हन्त शीघ्रगमनप्रतिरोधहेतुस्तस्याः पुनः स्तनभरोऽपि गुरुर्बभूव ॥ ३ ॥ नान्तः प्रवेशमरुणद्विमुखी न चासीदाचष्ट दोषपरुषाणि । न चाक्षराणि । सा केवलं सरलपक्ष्मभिरक्षिपातैः कान्तं विलोकितवती जननिर्विशेषम् ॥ ४ ॥ काचिन्निवारितबहिर्गमना जनन्या द्रष्टुं प्रियं भवनजालकमाससाद । तस्या विलोचनमदृश्यत दाशदत्तयन्त्रोपरुद्धशफरोपमितं क्षणेन ॥ ५ ॥ किंचित्कुञ्चितहारयष्टि सरलभ्रूवल्लि साचिस्मितं प्रान्तभ्रान्तविलोचनद्युति भुजापर्यस्तकर्णोत्पलम् । अङ्गुल्या स्फुरदङ्गुलीयकरुचा कर्णस्य कण्डूयनं कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥ ६ ॥

## नायिकालोकनवर्णनम् ।

प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा ॥ १ ॥ क्षीरसागरकल्लोललोललोचनयाऽनया । असारोऽपि हि संसारः सारवानिव लक्ष्यते ॥ २ ॥ सेयं सीधुमयी वा सुधामयी वा हलाहलमयी वा । दृग्भ्यां निपीतमात्रा मदयति मोदयति मूर्च्छयति ॥ ३ ॥ गच्छति न तृप्तिमेतत्सुललितमस्याः समापिबद्रूपम् । नयनयुगं मम नूनं सम्प्रति समुपैति सफलतां चैवम् ॥ ४ ॥ जानीमहेऽस्याः खलु सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः । तत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताऽक्षिपद्मे ॥ ५ ॥ सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः । मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥ ६ ॥ तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम् । नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥ ७ ॥ इदमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा । पृथुनितम्बभरालसगामिनी प्रियतमा मम जीवितहारिणी ॥ ८ ॥ इयं सुस्तनी मस्तकन्यस्तकुम्भा कुसुम्भारुणं चारु बासो वसाना । समस्तस्य लोकस्य चेतःप्रवृत्तिं गृहीत्वा घटे न्यस्य यातीव भाति ॥ ९ ॥ कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः । लीलाशिरोंऽशुकनिवेशविशेषकॢप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ १० ॥ अर्धस्मितेन विनिमन्त्र्य दशार्धबाणमर्धं विधूय वसनाञ्चलमर्धमार्गे । अर्धेन नेत्रविशिखेन निवृत्य सार्धमर्धा-

---

१ कमललोचनायाः । २ रतिस्थायिभावात्मा, लोकोत्तरो वा । ३ अनवच्छिन्नः । ४ कन्दर्पम् ।

धर्मेव तरुणी तरुणं चकार ॥ ११ ॥ आधाय कोमलकराम्बुजकेलिनालीमालीसमाजमधिकृत्य समालपन्ती । मन्दस्मितेन मयि साचिविलोकितेन चेतश्चकोरनयना चुलुकीचकार ॥ १२ ॥ मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्तिमती विभाति येयम् । मम हृदयमनङ्गवह्नितप्तं भृशमिव चन्दनशीतलं करोति ॥ १३ ॥ पुरः स्थित्वा किंचिद्वलितमुखमालोकय सखे सखेदाः स्थास्यन्ति ध्रुवमिदमदृष्ट्वा तव दृशः । इतश्चञ्चत्काञ्चीरणितमुखरात्सौधशिखरादराकायां कोऽयं कवलयति चान्द्रेण महसा ॥ १४ ॥ अये केयं लीलाधवलगृहवातायनतले तुलाकोटिकाणैः कुसुमविशिखं जागरयति । अहो नेत्रद्वन्द्वं विकसति विलङ्घ्य श्रुतिमहो कथं न त्रैलोक्यं जयति मदनः स्मेरवदनः ॥ १५ ॥ तडिल्लेखा नेयं विलसति परं सौधशिखरे वसन्त्याः कस्याश्चित्कनकरुचिरा गात्रलतिका । अपीदं नोन्मज्जत्कुवलयवनं मीनतरलं परं तस्या एव स्फुरति नयनालोकललितम्॥१६॥ सखे सायं स्नात्वा कनकरुचिकौसुम्भवसनं वसानायास्तिर्यग्वलितचिकुरस्यन्दिसलिलम् । दिशन्त्या दृष्टेति स्मैरविपुलकोर्दण्डलतिकामकस्मादस्माकं मृगशिशुदृशो दर्शनमभूत्॥१७॥अमृतममृतं चन्द्रश्चन्द्रस्तथाऽम्बुजमम्बुजं रतिरपि रतिः कामः कामो मधूनि मधून्यपि । इति न भजते वस्तु प्रायः परस्परसङ्करं तदियमबला धत्ते कुतः सकलात्मिकाम् ॥१८॥ अमृतममृतं चन्द्रं चन्द्रं रतिं च रतिं तथा प्रथितमतयः कामं ब्रूयुर्मधूनि मधून्यपि । यदि न सुभगास्पर्शामोदं विना प्रमुदे ततः सकलमकलं तेषां व्यूहं ब्रवीमि पुनः प्रिये ॥ १९ ॥ केयं श्यामोपलविरचितोल्लेखहेमैकरेखालग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः । हारिद्राम्बुद्रवसहचरं कान्तिपूरं वहद्भिः कामक्रीडाभवनवलभीदीपिकेवाविरस्ति ॥ २० ॥ लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरश्चार्पितः । एषाऽपि स्वगुणानुरूपरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ॥२१॥ अन्यत्तन्मधुरं स्मितं नयनयोः सञ्चारणं चेतरत् सञ्चारः पदयोः स मन्दमितरस्तस्याश्च भाषाऽपरा । किं ब्रूयां प्रिय तादृशी क्षितितले नान्येति लोकान्तरेऽप्यन्या नास्ति न वा भविष्यति न वा काचिद्गताभूत् क्वचित् ॥२२॥ नेयं विद्युद्भुवमधिगता काञ्चनी नापि वल्ली मन्दं मन्दं प्रचलति यतो नापि वा पन्नगस्य । चूडारत्नस्फुरदुरुशिखा सा न धत्ते पयोजं का वा तर्हि प्रकृतिसुभगा तत्सखे न प्रतीमः ॥ २३ ॥ वक्रोपान्तं नयनयुगलं सर्वतो निक्षिपन्ती श्रोणीभाराच्छिथिलशिथिलन्यस्तपादारविन्दा । आरादालीकरकिसलये दत्तहस्तावलम्बा चञ्चत्कान्तिर्विकसितमहीचक्रमायाति काऽपि ॥ २४ ॥ इयं भुजगिनीश्रिता लसदनेकपुष्पान्विता द्विरेफततिसेविता प्रमदखञ्जनालंकृता । फलद्वयभरानता विलसिता नवैः पल्लवैः पुरः स्फुरति काञ्चनी गमनशालिनी वल्लरी ॥ २५ ॥ पातालाद्भुवनावलोकनपरा किं नागकन्योत्थिता मिथ्या तत्खलु दृष्टमेव हि मया तस्मिन्कुतोऽस्तीदृशी । मूर्ता स्यादिह कौमुदी न घटते तस्या दिवा दर्शनं केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥ २६ ॥ नेयं नागविलासिनी न दिविषत्कान्ताऽपि काचिद्यतो नास्या लीननिमेषता न च शशिश्रीर्यन्न सत्कल्मषा । नो वा हेममयी यतोऽपरिसरत्सौरभ्यभाराऽपि

---

१ पादाङ्गद-। २ दधानायाः। ३ कामदेव-। ४ धनुः-। ५ अत्र वीप्सायां कथञ्चिद् द्विरुक्तिः, समासाभावश्च समाधेयौ । ६ क्वापीति पाठोऽपि। ७ स्वभाव-। ८ अतिमन्द-। ९ समीपे। १० सखी-। ११ भ्रमर-। १२ कान्ताशरीरमुद्दिश्यैदमुक्तम्।

नो तन्मन्ये विधिना व्यधायि सुहृदां मोदाय काचित् कला ॥ २७ ॥ अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशां याताया विगलत्पयोधरभराद्द्रष्टव्यतां कामपि । अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥ २८ ॥ श्रोणीभारभरालसा दर[2]गलन्माल्यापवृत्तिच्छलाल्लीलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः । नीलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती[3] मनो दूरान्दोलनलोलकङ्कणझणत्कारोत्तरं सर्पति ॥ २९ ॥ लग्नं पादतले नखेषु विलुठत्संसक्तमूर्वोर्युगे विश्रान्तं जघनस्थले निपतितं नाभीसरोमण्डले । शून्यं मध्यमवेक्ष्य रोमलतिकामालम्बमानं क्रमादारूढं स्तनयोः प्लुतं नयनयोर्लीनं मनः कैशिके ॥ ३० ॥ अस्या धाम[4]सरोवरे भुजबिसे वक्त्रारविन्दे भ्रमन्नेत्रभ्रूभ्रमरे सुयौवनजले कस्तूरिकापङ्किले । वक्षोजप्रतिकुम्भिकुम्भदलनक्रोधादुपेत्य द्रुतं मग्नश्चित्तमतङ्गजः कथमसावुत्थाय निर्यास्यति ॥ ३१ ॥ स्वैरं सस्मितमीक्षते क्षणमलं व्याजृम्भते वेपते रोमाञ्चं तनुते मुहुः स्तनतटे व्यालम्बते नाम्बरम् । आलिङ्गत्येपरां तनोति चिकुरं प्रत्युत्तरं याचते केयं कामकलाविलासवसतिर्लोलेक्षणा भाविनी ॥ ३२ ॥ खेलत्खञ्जन[6]नेत्रया परिलसत्स्वर्णारविन्दास्यया पीनोत्तुङ्गनिरन्तरस्तनभरव्यालोलसन्मध्यया । स्फीतस्फीतनितम्बया क्षणमपि व्यालोकितश्चानया किं न स्याद्दृशिनां वरः स्मरहरः स्मारैः शरैर्जर्जरः ॥ ३३ ॥ सायं चन्द्रकलाभ्रतोदयगिरिस्पर्धां दधानः स्तनस्पर्शोत्तुङ्गतरो नखाङ्करुचिरः शोणाम्बराभ्यन्तरे । अस्याः कं न विलोकनोत्कमकरोत्तीक्ष्णः कटाक्षः क्षणं भृङ्गाकृष्टगरिष्ठकेतकदलभ्रान्तिं वहन्नप्ययम् ॥ ३४ ॥ अत्युच्चस्तनशैलदुर्गममुरो नाभिर्गभीरान्तरा भीमं देहवनं स्फुरद्भुजलतं रोमालिजालाकुलम् । व्याधः पञ्चशरः किरत्यतितरां तीक्ष्णान्कटाक्षाशुगांस्तन्मे ब्रूहि मनःकुरङ्ग शरणं कं सांप्रतं यास्यसि ॥ ३५ ॥ आस्यश्रीजितजर्जरेन्दुमलिनं कृत्वा करे कन्दुकं क्रीडाकौतुकमिश्रभावमनया ताम्रं वहन्त्याननम् । भृङ्गाग्रग्रहकृष्णकेतकदलस्पर्धावतीनां दृशां दीर्घापाङ्गतरङ्गितैकसुहृदामेषोऽस्मि पात्रीकृतः ॥ ३६ ॥ स्कन्धे विन्यस्य सख्या भुजमपरकरस्यार्धचन्द्रेण मध्यं बिभ्राणा धूयमानस्तनतटवसना गन्धवाहेन मन्दम् । पन्थानं दृग्विलासैरिव नलिनदलैः कोमलैरास्तृणन्ती सौधाग्रे कस्य साक्षात्परिणमति तपःसिद्धिरेषा सुवेषा ॥ ३७ ॥ भाषा पीयूषभूषा हृदयमकरुणं कायकान्तिश्च काचित् सम्पत्तिश्चारुतायाः सकलजनमनोहारिणी चैव दृष्टिः । आस्यं शीतांशुरद्धा निर्भृतविषभराऽपाङ्गसम्पातशैली पादौ रक्तौ नखानां जयति कुटिलतां तत् किलेयं विचित्रा ॥ ३८ ॥

## विश्लेषदशावचनम् ।

मृदुतां हृदयं यूनोर्विश्लेषे दधते यथा । न तथा सति संश्लेषे नेदृशो मधुरोऽपरः ॥ १ ॥ यदपि सुवर्णं कठिनं ज्वलनमुपेत्य द्रवं तदप्येति । एवं यूनो हृदयाकान्ताविरहे गतं धैर्यम् ॥ २ ॥ समानकुलशीलयोः सुवयसोः परायत्तयोः परस्परविलोकनाकुलितचेतसोः प्रेयसोः । तनुत्वमनुविन्दतोर्बहुविधां व्यथां विन्दतोरशक्यविनिवेदना विरहवेदना वर्धते ॥ ३ ॥

---

१ 'वा पुंसि पद्मं नलिनम्' इत्यमरः । २ ईषत्- । ३ धयन्ती पिबन्ती, हरन्तीति यावत् । ४ कान्ति— । ५ सखीम् । ६ पक्षिविशेष- । ७ समस्त, इङ्गितादिज्ञानकलासम्पन्न-इति च । ८ निभृतो विषभरो यस्यां सा । ९ रक्तवर्णौ, अनुरागिणौ च । १० अर्द्धचन्द्राकारत्वात् । ११ विरुद्धधर्मत्वादपूर्वात्वम् ।

## विश्लिष्टदशाबोधनम् ।

प्रियाविरहितस्यास्य हृदि चिन्ता समागता । इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥ १ ॥ चन्द्रमाश्चन्द्रमास्तावत्सुरभिः सुरभिस्तथा । संयोगो वरवर्णिन्या वैपरीत्यमतः परम् ॥ २ ॥ अत्राशितं शयितमत्र निपीतमत्र तोयं तया सह मया विधिवञ्चितेन । इत्यादि हन्त परिचिन्तयता वनान्ते हा तस्य लोचनपयोभिरभूत्पयोधिः ॥ ३ ॥ मन्दं मरुद्वहति गर्जति वारिवाहो विद्युल्लता चलति नृत्यति नीलकण्ठः । एतावति व्यतिकरे तरुणस्य तस्य मूर्च्छैव केवलमभूदवलम्बनाय ॥ ४ ॥ गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा । भ्रमति भुवने कामस्याज्ञा विकारि च यौवनं ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ ५ ॥ धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः । दाहप्रेम्णा सरसबिसिनीपत्रमात्रान्तरायस्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ ६ ॥ रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः । दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥ ७ ॥ प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं बिभ्रत्काञ्चनमेकमेव वलयं श्वासापरक्ताधरः । चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ८ ॥ चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते माल्यं सूचिकुलायते मलयजालेपैः[2] स्फुलिङ्गायते । रात्रिः कल्पशतायते विधिवशात्प्राणोऽपि भारायते हा हान्त प्रमदावियोगसमयः संहारकालायते ॥ ९ ॥ माकन्दाक्षिप मा मरन्दनिकरं मूको भव त्वं शुक स्फारं कोकिल कोमलं कलरवं भ्रातः क्षणं संहर । सौगन्ध्यं वह गन्धवाह न मनाक्सर्वैः क्षणं क्षम्यतां जानीध्वं तरुणस्य तस्य यदयं कालः करालो महान् ॥ १० ॥ कान्ताऽऽश्लेषपराङ्मुखं यदि दहेद् दोषाकरः[3] कञ्चन स्थाने तर्हि यतः स हन्त विधिना हन्तुं व्यधायीदृशान् । कष्टं यत्पुनरेष चन्दनभुवो[4] लब्धप्रभावोऽभितः स्वर्णद्याद्यवगाहको[5] मरुदयं दग्धं प्रचण्डो ज्वलन् ॥ ११ ॥

## विश्लिष्टादशाबोधनम् ।

अबला नितराम्मुग्धा बाला हन्त ह्रिया जिता । हन्यते द्विजराजाद्यैरशरण्यं ततो जगत् ॥ १ ॥ हृदये दह्यमानेऽपि मृगाक्ष्या मन्मथाग्निना । स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत् ॥ २ ॥ जीवेन तुलितं प्रेम सखि मूढेन वेधसा । लघुर्जीवो ययौ कण्ठं गुरु प्रेम हृदि स्थितम् ॥ ३ ॥ कपोलफलका वस्याः कष्टं भूत्वा तथाविधौ । अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥ ४ ॥ वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः । राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥ ५ ॥ अस्तमितविषयसङ्गा मकुलितनयनोत्पला मुहुः श्वसिता । ध्यायति किमप्यलक्ष्यं बाला योगाभियुक्तेव ॥ ६ ॥ लिखति न गणयति रेखा निर्झरबाष्पाम्बुधौतगण्डतटा । अवधिदिवसावसानं मा भूदिति शङ्किता बाला ॥ ७ ॥ अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । अलमलमालि मृणालैरिति वदति दिवानिशं

---

१ भुक्तमित्यर्थः । २ चन्दनस्य लेपः । दोषाणामाकरः । ३ दोषाया रात्रेः कर इति चन्द्रमाश्च । ४ मलयगिरेः, आह्लादोत्पत्तिस्थानभूतात् यस्मात् कस्माच्चिच्च । ५ गङ्गागोदावर्यादिषु स्नाता । ६ उत्तमब्राह्मणादिभिः, चन्द्रादिभिश्च ।

बाला ॥ ८ ॥ पातयति हृदयदेशे प्रियजनगर्भे पुनः पुनर्मुग्धा । वर्णितमदनातङ्का बाष्पवतीं भावमन्थरां दृष्टिम् ॥ ९ ॥ श्लिष्यति पश्यति चुम्बति पुनः पुनः पुलकमुकुलितैरङ्गैः । प्रियसङ्गाय स्फुरितां वियोगिनी वामबाहुलताम् ॥ १० ॥ कमले निधाय कमलं कलयन्ती कमलवासिनं कमले । कमलयुगादुद्भूतं कमलं कमलेन वारयति ॥ ११ ॥ नयनोत्पलचलधारां दृष्ट्वा वारांनिधिभ्रान्त्या । वडवानल इव भगवान्वसति तनौ कृशतनोस्तापः ॥ १२ ॥ यावत् प्रियतमसङ्गः प्रमदा प्रमदा निरुच्यतां तावत् । असति पुनर्बत तस्मिन्नबला ह्यबलेति किं चित्रम् ॥ १३ ॥ लीनानसूंस्सरोरुहदष्टैरन्वेष्टुमेष कुसुमेषुः । भ्रमति द्रागवपुरन्तः संतापं दीपमादाय ॥ १४ ॥ कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि । परिवर्तते स्म नलिनी लहरीभिर्लोलिताप्यघूर्णत सा ॥ १५ ॥ शशभृन्नवपल्लवे शशाङ्के मकरन्दस्रुतिवारिणी सरोजे । अपि चास्य मरुद्गणान्प्रसूते तिलकुसुमं स्फुटचम्पकौवदाग्नि ॥ १६ ॥ अधिदेहलि हन्त हेमवल्ली शरदिन्दुः सरसीरुहे शयानः । उपखञ्जनचञ्चु मौक्तिकाली फलितं कस्य सुजन्मनस्तपोभिः ॥ १७ ॥ विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् । तनूत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ १८ ॥ अपि मरणमुपैति सा मृगाङ्के विलसति कैव कथा रसान्तरस्य । अपि कथमधुना दधातु शान्तिं विषमशरज्वरतीव्रदेहदाहः ॥ १९ ॥ निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम् । मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः ॥ २० ॥ सा तोरणान्तिकमुपेत्य दिशोऽवलोक्य निःश्वस्य दीर्घमुपधाय करं कपोले । मत्वा च तं पुरत एव ससंभ्रमत्वाज्ज्ञात्वा स मोहलिखितेव न किं किमासीत् ॥ २१ ॥ अस्यास्तनौ विरहताण्डवरङ्गभूमौ स्वेदोदबिन्दुकुसुमाञ्जलिमाविकीर्य । नान्दीं पपाठ पृथुवेपथुवेपमानकाञ्चीलताकलरवैः स्मरसूत्रधारः ॥ २२ ॥ मदनदहनशुष्यत्कान्तकान्ताकुचान्तर्घनमलयजपङ्के गाढबद्धाखिलाङ्घ्रिः । उपरि विततपक्षो लक्ष्यतेऽलिर्निमग्नः शर इव कुसुमेषोरेष पुङ्खावशेषः ॥ २३ ॥ नवकिसलयतल्पं कल्पितं तापशान्त्यै करसरसिजसङ्गात्केवलं म्लापयन्त्याः । कुसुमशरकृशानुप्रापिताङ्गारतायाः शिव शिव परितापं को वदेत्कोमलाङ्ग्याः ॥२४॥ दरललितहरिद्राग्रन्थिगौरे शरीरे स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः । बलति सति हि यस्मिन्सार्धमावर्त्य हेम्ना रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥ २५ ॥ किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः । ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ २६ ॥ परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २७ ॥ स्थगयति नयनास्रं छद्मना धूमधूम्रं प्रथयति च नितान्तं कार्श्यमङ्गप्रकृत्या । अहह विरहबाधां छादयत्यम्बुजाक्षी तदपि वदति साक्षी पाण्डुरो गण्डदेशः ॥ २८ ॥ परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् । इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ २९ ॥ प्रयातेऽस्तं भानौ श्रितशकुननीडेषु

---

१ प्रियतमसङ्गे । २ प्राणान् । ३ मदनः । ४ बर्बुरकण्डकाग्रभागः । ५ द्वारप्रदेशसमीपम् । ६ कामानल— । ७ इदं कष्टावेदकमव्ययम् । ८ ईषत्— ९ अङ्गानां क्षीणत्वेनाल्पत्वमित्येवात्र कष्टम् । १० शरदिजो घर्म इवेत्यन्वयः । शरत्कालिकसूर्यसन्तापवदित्यर्थः । ११ क्षीणस्य । १२ अत्र गुणाभावश्चिन्त्यः । १३ स्वाभाविकवर्णानपायाद्धरिद्वर्णमिति भावः ।

तरुषु स्फुरत्संध्यारागे शशिनि शनकैरुल्लसति च । प्रियं[1]प्रत्याख्यानद्विगुणविरहोत्कण्ठितदशा तदारब्धं तन्व्या मरणमपि यत्रोत्सवपदम् ॥ ३० ॥ लता[2]मूले लीनो हरिणपरिहीनो हिमकरः[3] स्खलन्मुक्ताकारा गलति जलधारा कुवलयात्[4] । धुनीते बन्धूकं[5] तिलकुसुम[6]जन्मा हि पवनो गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥ ३१ ॥ मराल[7]श्रेणीभिर्नियतमुपनीतं सफलतां गतिस्पर्धावैरं मृदुकलरवैरम्बुजदृशः । यदेताञ्शृण्वत्याः प्रियविरहवत्याः कृशतनोरगादस्याः स्तम्भादहह गतिसंभावनमपि ॥ ३२ ॥ अगारे[8]ऽस्मिन्कान्ते गिरिश[9]मनिशानाथशकलं[10] भुजंगा[11]नुत्तुङ्गान्सकलमपि वातायन[12]पथे । निकुञ्जेषु[13] श्येनान्[14]धिगृह[15]शिरो राहुवलयं[16] लिखन्त्या नीयन्ते शिव शिव तया हन्त दिवसाः ॥ ३३ ॥ स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् । समस्तापः कामं मनसिजनिदाघप्रसरयोर्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ३४ ॥ कपोले पाण्डुत्वं किमपि जलधारां नयनयोस्तनौ कार्श्यं दैन्यं वचसि हृदि दावानलशिखाम् । अवज्ञां प्राणेषु प्रकृतिषु विपर्यासमधुना किमन्यद्वैराग्यं सकलविषयेष्वाकलयते ॥ ३५ ॥ निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कला[17]शेषा मूर्तिः शशिन इव नेत्रोत्सवकरी । अवस्थामापन्ना मदनदहनोदाहविधुरामियं नः कल्याणी रमयति मनः कम्पयति च ॥ ३६ ॥ घनोऽयं चेदञ्चेदुपरि विकिरंश्चन्दनरसानुदारान्नैहारी सरिदुरसि हारीभवति वा । समन्तात्प्राणाली चिरमुपवनाली मिलति वा तदप्यस्यास्तापः प्रियविरहजः किं विरमति ॥ ३७ ॥ इतो विद्युद्वल्लीविलसितमितः केतकरजः स्फुरद्गन्धं प्रोद्यज्जलदनिनदस्फूर्जितमितः । इतः केकिक्रीडा[18]कलकलभरः पक्ष्मलदृशां कथं यास्यन्त्येते विरहदिवसाः संभ्रमरसाः ॥ ३८ ॥ न नीतमुपनासिकं परिमलव्ययाशङ्कया न हन्त विनिवेशितं विरहवह्निकुण्डे हृदि । दृशोर्बहिरिति श्रुतौ न निहितं प्रियप्रेषितं करे कमलमर्पितं मृगदृशा दृशा पीयते ॥ ३९ ॥ वीणामङ्के कथमपि सखीप्रार्थनाभिर्विधाय स्वैरं रत्यां सरसिजदृशा गातुमारब्धमेव । तन्त्रीबुद्ध्या किमपि विरहक्षीणदीनाङ्गवल्लीमेनामेव स्पृशति बहुशो मूर्छना चित्रमेतत् ॥ ४० ॥ अन्तस्तारं तरलतरलाः स्तोकमुत्पीडभाजपक्ष्माग्रेषु ग्रथितपृषतः कीर्णधाराः क्रमेण । चित्तातङ्कं निजगरिमतः सम्यगासूत्रयन्तो निर्यान्त्यस्याः कुवलयदृशो बाष्पवारां प्रवाहाः ॥४१॥ मुक्त्वानङ्गः कुसुमविशिखान्पञ्च कुण्ठीकृताग्रान्मन्ये मुग्धां प्रहरति हठात्पत्रिणा वारुणेन । वारां पूरः कथमपरथा स्फारनेत्रप्रणालीवक्त्रोद्वान्तस्त्रिवलिविपिने सारणीसाम्यमेति ॥४२॥ स्विन्नौ गण्डौ स्फुरितमधरं स्पन्दितं चूचुकाग्रं सन्नौ बाहू मसृणमुकुले लोचने भ्रूश्चलैव । अङ्गादङ्गादजनि पुलकश्रेणिरूरू सकम्पौ किं च श्वासास्तरलितदुकूलाञ्चलाश्चञ्चलाक्ष्याः ॥ ४३ ॥ पीनोत्तुङ्गस्तनकलशयोस्तारहारं न धत्ते हस्तेनापि स्पृशति सहसा नैव कर्पूरवीटीम् । मञ्चं नापि श्रयति शयितुं हंसतूलास्तराढ्यं तादृक्तन्वी गुरुजनभयाद्गोप्तुकामा स्वतापम् ॥ ४४ ॥ गण्डे पाण्डौ कलयति पुनश्चान्दनान्पत्रभङ्गान्निद्रालाभे स्वयमरुणदृक्पृच्छति त्वां निदानम् । प्रत्यासन्ने मधुरलपिते गृह्यके

---

१ प्रियस्य त्वं सपत्न्याम् अनुरक्तोऽसि इति, यामद्यानुसृतवांस्तामेवानुनयस्व, सैव तव प्रिया, इतिरूप- । २ शरीररूपाया लताया मूलं पादस्थलं तत्र शोकमुद्रामुद्दिश्येदमुक्तम् । ३ मुखरूपः । ४ नेत्ररूपात् । ५ जीवरूपं बन्धुजीवपुष्पम् । ६ नासारूप- । ७ हंस- । ८ गृहे । ९ महादेवम् । १० चन्द्रखण्डशून्यम् । चन्द्रखण्डस्यापि विरहोद्दीपकत्वात् । ११ एषां पवनभोजित्वात् । १२ गवाक्षरन्ध्रे । १३ लतागहनप्रदेशेषु । १४ कोकिलादिपक्षिभक्षकान् । कोकिलादयो हि शृङ्गारोद्दीपकाः । १५ गृहोर्ध्वतनभागे । १६ राहुमण्डलम् येनाकाशस्थो राहुर्ग्रस्येत । १७ अतिक्षीणशरीरत्वात् । १८ मयूरक्रीडा- ।

कीरशावे कण्ठे धत्ते कमलनयना चारुवैदूर्यहारम् ॥ ४५ ॥ चन्द्रो वह्निर्मलयपवनो भोगिफूत्कारपातस्तिग्माग्रान्तर्निपतनमहो मालतिः पुष्पशय्या । कस्तूर्यादेर्मधुरसुरभेश्चन्दनस्य प्रलेपो ज्वाला तन्व्या इति बत कथं जीवनं भो विभाव्यम् ॥४६ ॥ सन्ध्यां कोपं तत उपगतां हन्त रात्रिं कृपाणीं चन्द्रं चक्रं विरहविधुरा तारकापङ्क्तिमुग्राम् । तूणीरान्तर्गतशरततीं प्रज्वलत्पुङ्खभागां संनद्धास्त्रं कलयति पुनर्मन्मथं राक्षसेन्द्रम् ॥ ४७ ॥ लीलावल्लीभवनकुहरे पत्ररन्ध्राच्चकोरीचक्षुःस्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपैति । लीलारामात्पिकमुखरितात्का कथा सा बिभेति स्वालापेभ्यश्चकितनयना यत्कुहूकोमलेभ्यः ॥ ४८ ॥ व्यजनगरुतः श्वासश्रेणीमिमामुपचिन्वते मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः । कुसुमशयनं कामास्त्राणां करोतु सहायतां द्विगुणगरिमा कामोन्मादः कथं नु विरंस्यति ॥ ४९ ॥ विषयविधुरा दृष्टिः श्वासानिलग्लपितोऽधरस्तनुरपि भृशं म्लाना लूनेव पल्लवमञ्जरी । अपि च लवलीपाकोद्भेदाभिरामवदावदः स्फुरति कुचयोर्मूले गण्डे च कश्चन पाण्डिमा ॥ ५० ॥ कथमपि कृतप्रत्यावृत्तौ प्रिये स्खलितोत्तरे विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम् । असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं प्रचलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥५१॥ तन्वङ्ग्या गुरुसंनिधौ नयनजं यद्वारि संस्तम्भितं तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः । मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता श्वासायाससमागतालिसरणिव्याजेन धूमावली ॥ ५२ ॥ मुग्धा स्वप्नसमागते प्रियतमे तत्पाणिसंस्पर्शनं रोमाञ्चाञ्चितया शरीरलतया संभाव्य कोपात्किल । मा मा वल्लभ संस्पृशेति सहसा शून्यं वदन्ती मुहुः सख्या नो हहसिता सचिन्तमसकृत्संशोचिता प्रत्युत ॥ ५३ ॥ शीघ्रं भूमिगृहे गृहाण वसतिं प्राणैः किमु क्रीडसि प्राप्तां पश्यसि किं न दैवहतिकां ज्योत्स्नां गवाक्षोदरे । इत्थं मन्मथतीव्रसंज्वरजुषो गेहेषु वामभ्रुवामुद्गच्छन्ति कुरङ्गलाञ्छनभयादीनाः सखीनां गिरः ॥ ५४ ॥ शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते ताम्यन्त्यन्तिकतालवृन्तनलिनीपत्राण्यदेहोष्मणा । न्यस्तं च स्तनमण्डले मलयजं शीर्णान्तरं दृश्यते क्वाथादाशु भवन्ति फेनिलमुखा भूषामृणालाङ्कुराः ॥ ५५ ॥ आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं लक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः । अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते ॥ ५६ ॥ अङ्गासङ्गि मृणालकाण्डमयते भृङ्गावलीनां रुचं नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलाद्वाहते । क्षिप्ता सा हिमवालुकापि कुचयोर्धत्ते क्षणं दीपतां तत्तायःपतिताम्बुवत्करतले धाराम्बु सलीयते ॥ ५७ ॥ केशैः कोमलमालिकामपि चिरं या बिभ्रती खिद्यते या गात्रेषु घनं विलेपनमपि न्यस्तं न वोढुं क्षमा । दीपस्यापि शिखां न चापि भवने स्वप्नेऽपि या वीक्षितुं तापं सा विरहानलस्य महतः सोढुं कथं शक्ष्यते ॥ ५८ ॥ उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते स्फोटः स्यादिति नाङ्गकं मलयजक्षोदाम्भसा सिच्यते । स्यादस्यातिभरात्पराभव इति त्रासान्न वा पल्लवारोपो वक्षसि तत्कथं वरतनोराधिः समाधीयताम् ॥ ५९ ॥ निःश्वासानलविद्धदन्तवसना नेत्राम्बुसिक्तस्तनी हस्तन्यस्तकपोलदीनवदना हारैकभूषावती । बिभ्राणांसपदेन तुङ्गजघना विस्रंसिनीं वेणिकामास्ते स्थण्डिल एव पाण्डुमधुरक्षामालसै-

१ शाम्यति चेति सम्पद्यत इति अध्याहार्यम् । २ श्वश्रूप्रभृतिसमीपे । ३ कामाग्निः । ४ स्थानम् । ५ कामसन्तापभृतः । ६ चूर्णकुन्तल- ७ कर्पूरचूर्णम् । ८ अत्यन्तम् । ९ कमलिनी ।

रङ्कैः ॥ ६० ॥ क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा । शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ६१ ॥ कर्पूराम्बुनिषेकभाजि सरसैरम्भोजिनीनां दलैरास्तीर्णेऽपि विवर्तमानवपुषः स्रस्तस्रजि स्रस्तरे । मन्दोन्मेषदृशः किमन्यदभवत्सा काप्यवस्था तदा यस्याश्चन्दनचन्द्रचम्पकदलश्रेण्यादि बह्वीयते ॥ ६२ ॥ आलीचालितपद्मिनीदलचलत्सर्वाङ्गमङ्गीकृतस्वाङ्गालिङ्गनमर्मरीकृतनवाम्भोजालिशय्या चिरात् । चैतन्यं कथमप्युपेत्य शनकैरुन्मील्य नेत्राञ्चलं बाला केवलमेव मुग्धहृदया शून्यं जगत्पश्यति ॥ ६३ ॥ न क्रीडासु कुतूहलं वितनुते नालंकृतौ सादरा नाहारेऽपि च सस्पृहा न गणयत्यालापलोलां सखीम् । बाला केवलमङ्कैरनुकलक्षामैर्विविक्तस्थले ध्यायन्ती किल किंचिदन्तरधुना निस्पन्दमास्ते सदा ॥ ६४ ॥ सोन्मेषो न सखीजनः परिजनः प्रागल्भ्यभूमिर्न वा वात्सल्यादविभावितस्फुटवयोऽवस्थाविशेषो गुरुः । आयाता नवमल्लिकापरिमलक्रूराः शरद्वासराः कस्याख्यातु नितम्बिनी पितृगृहावस्थानदुःस्थं जनुः ॥ ६५ ॥ दुःखं दीर्घतरं वहत्यपि सखीवर्गाय नो भाषते शैवालैः शयनं सृजत्यपि पुनः शेते न वा लज्जया । कण्ठे गद्गदवाचमञ्चति दृशा धत्ते न बाष्पोदकं संतापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥ ६६ ॥ कण्ठे मौक्तिकमालिकाः स्तनतटे कार्पूरमच्छं रजः सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणालीलताः । तन्वी नक्तमियं चकास्ति तनुनी चीनांशुके बिभ्रती शीतांशोरधिदेवतेव गलिता व्योमाग्रमारोहतः ॥ ६७ ॥

## विरहिणः स्वात्मनिर्देशः ।

दिव्यचक्षुरहं जातः सरागेणापि चक्षुषा । इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥ १ ॥ यदि प्रियावियोगेऽपि रुद्यते दीनदीनकम् । तदिदं दग्धमरणमुपयोगं कयास्यति ॥ २ ॥ नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः । तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥ ३ ॥ यदि स्मरामि तन्वङ्गीं जीविताशा कुतो मम । अथ विस्मृत्य जीवामि जीवितव्यसनेन किम् ॥ ४ ॥ न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति सा । एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥ ५ ॥ तद्वियोगसमुत्थेन तच्चिन्ताविपुलार्चिषा । रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ६ ॥ मुखं तस्याः स्मितस्मेरं किंचिदञ्चलसंवृतम् । मदालोकनलोलाक्षं स्मृत्वा मन्ये सुधां मुधा ॥ ७ ॥ विशालाक्ष्याः कटाक्षेण विकृष्टं रश्मिनेव मे । हृदयं किं करिष्यामि न पुनर्विनिवर्तते ॥ ८ ॥ सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु । विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ ९ ॥ दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम । मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥ १० ॥ अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले । दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः ॥ ११ ॥ भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् । तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम ॥ १२ ॥ मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे । कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ १३ ॥ अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् ।

---

१अतिकृश-। २ सखी-। ३ कृशैरङ्गैः । ४ पित्रादिजनः । ५ कामः । ६ मनः पुनः । ७ प्रतारिताः । ८ अत्र परिवृत्तिः ।

स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥ १४ ॥ या जयश्रीर्मनोजस्य यया जगदलंकृतम् । यां विना विफलाः प्राणा दयिता मे कुतोऽद्य सा ॥ १५ ॥ स्पर्शः स्तनतटस्पर्शो वीक्षणं वक्रवीक्षणम् । तस्याः केलिकथालापसमयः समयः सखे ॥ १६ ॥ कुतः प्रेमलवोऽप्यस्ति खले मे हृदये खलु । सुंदरीं तामनालोक्य यदहं प्राणिमि प्रियं ॥ १७ ॥ लावण्य तदसौ कान्तिस्तद्रूपं स वचःक्रमः । तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥ १८ ॥ प्राणाः प्रियतमा हन्त दूरे तदपि मे स्थितिः । आलेख्यनिहितस्येव न किं वा रज्जुभोगिवत् ॥ १९ ॥ मुग्धा वदन्ति वितथं प्राणवियोगे न जीवनं सुवचम् । कथमन्यथा प्रियास्वप्रेसङ्गिनोऽप्यस्य गद्यते सर्वम् ॥ २० ॥ नूनमयं मे पापः कान्ताविरहो रसायनीभूतः । वर्षसहस्राभ्यधिकान्नयामि कथमन्यथा दिवसान् ॥ २१ ॥ संगमविरहवितर्के वरमिह विरहो न संगमस्तस्याः । सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ २२ ॥ अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे । यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ २३ ॥ दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च । अविरलविलोलजलदैः कालः समुपागतश्चायम् ॥ २४ ॥ स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा । कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम् ॥ २५ ॥ आनन्दमैमन्दमिमं कुवलयदललोचने ददासि त्वम् । विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ २६ ॥ तस्यां सुतनुसरस्यां चेतो नयनं च निष्पतितम् । चेतो गुरु तु निमग्नं लघु नयनं सर्वतो भ्रमति ॥ २७ ॥ निष्कासयन्त्यनेके सागरसरिदम्बुपूरपरिपतितम् । हृदयहृदविनिमग्नामिन्दुमुखीं मा बहिः कुरुताम् ॥ २८ ॥ किमकारि मन्दमतिना रतिपतिना नीतितन्त्रनिपुणेन । स्यूताऽसि हरिणनयने हन्त हृदि स्नेहतन्तुना न तनौ ॥ २९ ॥ दर्शनपथमुपयाता यदवधि मदिरायतेक्षणा सहसा । तदवधि हृदयेनाहं मदनेषुभयादिवोन्मुक्तः ॥ ३० ॥ अपसरति न चक्षुषो मृगाक्षी रजनिरियं च न याति नैति निद्रा । प्रहरति मदनोऽपि दुःखितानां बत बहुशोऽभिमुखीभवत्यपायाः ॥ ३१ ॥ पुनरपि मलनं यदा कदाचित्प्रियतमया कृपया भवेद्विधातुः । हरिरिव करवै हृदि प्रतिष्ठामिह रमणीं तनवै तनोरभिन्नाम् ॥ ३२ ॥ स्खलदंशुकमव्यवस्थतारं स्मितकान्तिस्नपिताधरप्रवालम् । असमाप्तनकारमात्तशोभं हरिणाङ्कं हरिणीदृशः स्मरामः ॥ ३३ ॥ अधूतपरिपतन्निचोलबन्धं मुषितनकारमवक्रदृष्टिपातम् । प्रकटहसितमुन्नतास्यबिम्बं पुरसुदृशः स्मरचेष्टितं स्मरामि ॥ ३४ ॥ नयनेन निरीक्षिता नताङ्गी हृदये हन्त पतत्रिणः पतन्ति । विषमा विषमायुधव्यथाऽसौ परिभूयेत परः परापराधैः ॥ ३५ ॥ यत्राकृतिस्तत्र गुणा वसन्ति नैतद्धि सम्यक्कविभिः प्रणीतम् । येनातिचार्वङ्ग्यपि मे

---

१ यदि कश्चित्स्पर्शः पदार्थ उपादेयस्तदा तस्याः स्तनतटसम्बन्ध्येव । एवं वीक्षणाद्यपि सम्भावनीयम् । २ मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तो रमणीयताविशेषः ।३ कमनीयता । इयं च यौवननिमित्तैव ।४ सुवर्णसदृशम् । ५ उक्तिपरम्परा । ६ प्रमोदावहत्वादिति शेषः । ७ प्रियतमा भार्या अतिप्रियाश्च । ८ मूढाः । ९ प्रियायाः शोभनप्रसङ्गहीनस्य, प्रियाणां प्राणानामस्वप्रसङ्गे च । १० सत्यत्वं स्थितत्वं वा । ११ वारं वारम् । १२ कामदेवः । १३ बहुलमेघयुक्तःप्रावृडाख्य इति यावत् । १४काल इव कालः । प्रियाविरहे हि तस्य दुःसहत्वात् । १५बहुलम् । १६ सुसूक्ष्मे सरसि । शोभनशरीररूपे जलाशये च । १७ मलनं धारणम्, संसर्ग इति यावत् । मिलनमिति त्वपाणिनीयम् ।

हृदिस्था दुनोति गात्रं विरहे प्रियासौ ॥ ३६ ॥ पञ्चसायकमहेन्द्रजालिना पाणिपद्मसमुदञ्चिता स्वयम् । मोहनाय मनसः प्रगल्भते पिञ्छिकेव मम चञ्चलेक्षणा ॥ ३७ ॥ दूरमस्तु दरघूर्णिततारं शारदेन्दुमुखवीक्षणमक्ष्णोः । एतदेव मम पुण्यमगण्यं यत्कृशोदरि दृशोरतिथिस्त्वम् ॥ ३८ ॥ ग्रसति कोऽपि विमोहविधुन्तुदो हृदयचन्द्रमसं मम दारुणः । तदपि हन्त तदन्तरशायिनी लगति चिह्नमृगीव मृगेक्षणा ॥ ३९ ॥ असुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम् । अभिमुखीष्विव वाञ्छितसिद्धिषु व्रजति निर्वृतिमेकपदे मनः ॥ ४० ॥ तत्ते महाविरहवह्निशिखावलीभिरापाण्डुरस्तनतटे हृदये प्रियायाः । मन्मार्गवीक्षणनिवेशितदीनदृष्टेर्नूनं छमच्छमिति बाष्पकणाः पतन्ति ॥ ४१ ॥ कान्तामुखं सुरतकेलिविमर्दखेदसंजातघर्मकणविच्छुरितं रतान्ते । आपाण्डुरं विलसदर्धनिमीलिताक्षं संस्मृत्य हे हृदय किं शतधा न यासि ॥ ४२ ॥ अद्यापि तत्प्रचलकुण्डलमृष्टगण्डं वक्त्रं स्मरामि विपरीतरताभियोगे । आन्दोलनश्रमजलस्फुटसान्द्रबिन्दुमुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥ ४३ ॥ निद्रार्धमीलितदृशो मदमन्थराणि नाप्यर्थवन्ति न च नाम निरर्थकानि । अद्यापि मे मृगदृशो मधुराणि तस्यास्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥ ४४ ॥ अद्यापि तां कनकचम्पकदामगौरीं फुल्लारविन्दनयनां तनुरोमराजिम् । सुप्तोत्थितां मदनविह्वललालसाङ्गीं विद्यां प्रमादगलितामिव चिन्तयामि ॥ ४५ ॥ अद्यापि सा मनसि संप्रति वर्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य कोपात्कर्णे कृतं कनकपत्रमनालपन्त्या ॥ ४६ ॥ आसन्नमार्गमतिलङ्घ्य नतेन मूर्ध्ना पश्चात्प्रसङ्गवलितेन मुखेन यान्त्या । आरोपिताः कतिपये मयि पङ्कजाक्ष्या साकूतहासमनतिप्रकटाः कटाक्षाः ॥ ४७ ॥ राजल्ललाटफलका कमनीयकूजत्काञ्चीगुणप्रणयिनी धृतकेशपक्षा । हा किं करोमि मम सा हृदयं प्रविष्टा नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥ ४८ ॥ यत्र क्षिपामि दृशमन्यदिदृक्षयाहं तत्राग्रतः स्फुरति केवलमेतदेव । तद्वक्त्रबिम्बमरुणाधरलोभनीयं ते लोचने तदलसालसमीक्षितं च ॥ ४९ ॥ मन्दस्मितेन मधुराधरपल्लवेन कुम्भोन्नमत्कुचभरेण कृशोदरेण । विद्युन्निभाङ्गलतया च विचिन्त्यमाना चेतो धुनोति च धिनोति[3] च चञ्चलाक्षी ॥ ५० ॥ तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य[4] चेतः कथंकथमपि व्यपवर्तते मे । लज्जां विजित्य विनयं विनिवार्य धैर्यमुन्मथ्य मन्थरविवेकमकाण्ड[5] एव ॥ ५१ ॥ यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् । तत्संनिधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते[6] ॥ ५२ ॥ पश्यामि तामित इतः पुरतश्च पश्चादन्तर्बहिः परित एव विवर्तमानाम् । उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीमासक्ततिर्यगपवर्तितदृष्टि वक्त्रम् ॥ ५३ ॥ लीलास्मितेन शुचिना मृदुनोदितेन व्यालोकितेन लघुना गुरुणा गतेन । व्याजृम्भितेन जघनेन च दर्शितेन सा हन्ति तेन गलितं मम जीवितेन ॥ ५४ ॥ यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥ ५५ ॥ तां हेमचम्पकरुचिं मृगशा[7]वकाक्षीं पार्श्वे स्थितां च पुरतः परिवर्तमानाम् । पश्चात्तथा दशदिशासु परिस्फुरन्तीं पश्यामि तन्मयमहो भुवनं किमेतत् ॥ ५६ ॥ अद्यापि तिष्ठति दृशोरिदमुत्तरीयं धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ता । वाचं निशम्य

---

१ पूर्णमनोहरत्वादिकलाशालि । २ अनुकूलासु । ३ प्रीणयति । अत्र विरोधाभासः स्पष्टः । ४ ध्यात्वा । ५ असमये । ६ दुःखमनुभवदिव । ७ शिशु- ।

नयनं नयनं ममेति किंचित्तदा यदकरोत्स्मितमायताक्षी ॥ ५७ ॥ राका[1]सुधाकरमुखी तरलायताक्षी सस्मेरयौवनतरङ्गितविभ्रमास्या । तत्किं करोमि कथमत्र तनोमि मैत्रीं[2] तत्स्वीकृतिव्यतिकरे[3] क इहाभ्युपायः ॥ ५८ ॥ यान्त्याः सरः सलिलकेलिकुतूहलाय व्याजादुपेत्य मयि वर्त्मनि वर्तमाने । अन्तःस्थितद्युतिचमत्कृतिदृक्तरङ्गैरङ्गीकृतं किमपि वा[4]मदृशः स्मरामि ॥ ५९ ॥ मन्दादरः कुसुमपत्रिषु पेलवेषु नूनं बिभर्ति मदनः पवनास्त्रमद्य । हारप्रकाण्डसरलाः कथमन्यथाऽमी श्वासाः प्रनर्तितदुकूलदशाः सरन्ति ॥ ६० ॥ पीतो यतः प्रभृति कामपिपासितेन तस्या मयाऽधररसः प्रचुरः प्रियायाः । तृष्णा ततः प्रभृति मे द्विगुणत्वमेति लावण्यमस्ति बहु तत्र किमप्यपूर्वम् ॥ ६१ ॥ अलसविलसितानामुल्लसद्भ्रूलतानां मसृणमुकुलितानां प्रान्तविस्तारितानाम् । प्रतिनयननिपाते किंचिदाकुञ्चितानां विविधमहमभूवं पात्रमालोकितानाम् ॥ ६२ ॥ अलसवलितमुग्धस्निग्धनिस्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः । हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितं च ॥ ६३ ॥ क्रमसरलितकण्ठप्रक्रमोल्लासितोरस्तरलितवलिलेखासूत्रसर्वस्वमस्याः । स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः करकलितसखीकं मां दिदृक्षोः स्मरामि ॥ ६४ ॥ व्रीडायोगान्नतवदनया संनिधाने गुरूणां बद्धोत्कम्पस्तनकलशया मन्युमन्तर्निगृह्य । तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥ ६५ ॥ वारं वारं तिरयति दृशोरुद्गमं बाष्पपूरस्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम् । सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ ६६ ॥ हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि । सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा विष्वङ्[5]मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ६७ ॥ ऊरू रम्भा दृगपि कमलं शेवलं केशपाशो वक्त्रं चन्द्रो लपित[6]ममृतं मध्यदेशो मृणालम् । नाभिः कूपो वलिरपि सरित्पल्लवः किं च पाणिर्यस्याः सा चेदुरसि न कथं हन्त तापस्य शान्तिः ॥ ६८ ॥ प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य । हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥ ६९ ॥ कुन्दं दन्तैर्मधु निगदितैः[9] षट्पदं[7] दृग्विलासैरेभिर्हासैरमृतलहरीं कुन्तलैरम्बुवाहम् । इन्दोर्बिम्बं वदनशशिना पङ्कजं च स्तनाभ्यां त्वं जित्वा तान्वससि हृदये तेन मां विद्विषन्ति[8] ॥ ७० ॥ स्वप्ने दृष्टा किमपि पिशुनाशङ्कया नैव पृष्टा स्पृष्टा नीवी न खलु भयतः किङ्किणीनिक्वणानाम् । आश्लेषाय स्पृहयति मयि द्राग्व्यरंसीदसीमा निद्रामुद्रा शिव शिव दृशोरीदृशो दुर्विपाकः ॥ ७१ ॥ दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते वहति विकलः कायो मोहं न मुञ्चति चेतनाम् । ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ७२ ॥ जगति जयिनस्ते ते भावा नवेन्दुकलादयः प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये । मम तु यदियं याता लोके विलोचनचन्द्रिका नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ७३ ॥ मयि सकपटं किंचित्क्वापि प्रणीतविलोचने किमपि नयनं प्राप्ते तिर्यग्विजृम्भिततारकम् । स्थितमुपगतामालीं

---

१ पूर्णिमा । २ अनुकूलत्वम् । ३ सम्बन्धम् । ४ सुन्दर-कुटिल- । ५ सर्वतः । ६ भाषणम् । ७ भ्रमरम् । ८ कुन्दादीनां सर्वेषाम्मदनोद्दीपकत्वात् । एवं चात्र व्यतिरेकोऽलङ्कारोऽपि ध्वनितः । ९ शब्दानाम् ।

दृष्ट्वा सलज्जमवाञ्छितं कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥ ७४ ॥ हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् । न च सुवदना- मालेख्येऽपि प्रियामसमाप्य तां मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ ७५ ॥ कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः । मनसि- जरुजं सा वा दिव्या ममालमपोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥ ७६ ॥ इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः । अनतिलुलितज्या- घाताङ्कं मुहुर्मणिबन्धनात्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ७७ ॥ कदा कान्तागारे परिमल- मिलत्पुष्पशयने शयानः श्यामायाः कुचयुगमहं वक्षसि वहन् । अये स्निग्धे मुग्धे चपलनयने चन्द्र- वदने प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ७८ ॥ तया गाढं मुक्तो भुवि धनुषि संधाय निशितैः कटाक्षेषुर्नान्यैः सह पठनयोग्यः शरगणैः । पतन्गात्रे गात्रे परममृतमास्नोदिव तदा दवीयानद्यायं दलयति पुनर्न व्रणयति ॥ ७९ ॥ तदा मुग्धं वक्त्रं किसलयसखैः सोऽध- रमणिर्विशाले ते नेत्रे स्तनभरनता सा तनुलता । सलीलं तद्यातं जननयनसंजीवनसुधा प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो ॥ ८० ॥ कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा तदाऽऽनन्दः सान्द्रः स्फुरति निहताशेषविषयः । सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः परीरम्भारम्भः क इव भवि- ताऽम्भोरुहदृशः ॥ ८१ ॥ पुरस्तादृच्छन्ती सह सहचरीभिः प्रियतमा ममालापं श्रुत्वा सचकितपरा- वृत्तवदना । किमग्रे व्यासङ्गादहमहह यामीति विनयप्रणालीमालीनां यदकृत तदन्तर्व्यथयति ॥ ८२ ॥ समुत्कीर्णे तन्व्या निशितनयनान्तेर्न मृदिते स्तनद्वन्द्वस्पन्दैः स्मितलवसुधाभिः प्लुतिमिति । मदन्तः- केदारे मदनकृषिकारेण जनिता चिरादाशावल्ली किमिति न फलं हन्त लभते ॥ ८३ ॥ विलीयेन्दुः साक्षादमृतरसवापी यदि भवेत्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् । ततः स्नानक्रीडाजनित- जडभावैरवयवैः कदाचिन्मुञ्चेयं मदनशिखिपीडाव्यतिकरम् ॥ ८४ ॥ परागैः कार्पूरैस्तुहिनसलिलैश्चा- न्दनरसैः सुधाभिर्ज्योत्स्नाभिः स्नपितमिव यः प्रागकृत माम् । स एवासौ मारः शिव शिव वियोगे मृग- दृशः करालं काकोलं किरति मयि कालानलमपि ॥ ८५ ॥ न दूतीसंचारो न सरसपरोक्षोक्तिक- लना न सांमुख्ये हासः क्वचिदपि न वाचां व्यतिकरः । अहो चित्रं चेतः क्षणपरिचितालोकनवशा- न्मुहुर्धावंधावं व्रजति सुदृशं नो विरमति ॥ ८६ ॥ शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति । तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं प्रसक्ते निर्वाणे हृदय परितापं वहसि किम् ॥ ८७ ॥ दृगन्तव्यापारप्रबलनिगडेन स्फुरदुरस्तटीकारागारे तव समुचितं बन्धनमिदम् । अरे चेतस्त्यक्त्वा यदिह जनमाजन्मसुहृदं क्षणप्राप्तामेतामधरमधुलोभेन भजसे ॥ ८८ ॥ विपत्सिन्धुं बन्धुं विगलितजलं नेत्रयुगलं सशोकं भूलोकं भुवनवलयं खेदनिलयम् । अनङ्गं नीरङ्गं विघटितधनं कोशभवनं विधातुं किं धातस्तव हृदि न लज्जा प्रभवति ॥ ८९ ॥

---

१ चिन्ताऽतिशयेन कृशिमातिशयनिबोधनपरमिदं पद्यम् । २ कान्तासम्भोगगृहे रमणीये गृहे च । ३ तीक्ष्णः । ४ सदृश इति लक्ष्योऽर्थः । ५ विषयान्तरवासनातो निवर्तकत्वं सम्भावयितु- मिदमुक्तम् । ६ आलिङ्गन- । ७ सखीनाम् । ८ तीक्ष्णेन कटाक्षेण । एवं चास्य शरवन्मर्माविन्त्व सूचितम् । ९ पूर्णे । १० क्षेत्रे । ११ प्रफुल्ल- । १२ कामाग्नि- । १३ धावित्वा धावित्वा । १४ कृशम् । १५ मृगाक्ष्या । १६ मोक्षे सर्वः संतापो निवर्तते इति स्थितिः, किंतु प्रकृतेऽन्यथेति प्रसक्तनिर्वा- णस्य निर्वाणपदश्लेषमूलमिदं दुःखावेदनम् । १७ कटाक्ष- । १८ अनुयायित्वात् ।

न वक्षोजाश्लेषप्रभृतिकुतुकानामवगमो न पीयूषस्वादस्मितवलितवाचामनुभवः। न चासीन्मे तादृग्दृढपरिचयः पङ्कजदृशः कुतो हेतोस्तन्वी क्षणमपि न निर्याति मनसः ॥ ९० ॥ आः पात्री स्यामकृतकघनप्रेमविस्फारितानां सव्रीडानां सकलकरणानन्दनाडिंधमानाम्। तेषां तेषां हृदयनिहिताकूतनिष्यन्दिनेत्रव्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणाम् ॥ ९१ ॥ तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं सुवर्णकदलीदलोद्दलितगर्भगौरं पुनः। कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठितप्रथीयकुचमण्डलं परिरभेय वीक्षेय वा ॥ ९२ ॥ जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः। नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ९३ ॥ याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि। लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ९४ ॥ श्वासा एव मृगीदृशो न गणिताः के नाम झञ्झानिलास्तीर्णा बाष्पपरम्परैव सरितां वृन्देषु कः संभ्रमः। सोढा कातरदृष्टिरेव कियती वज्राभिघातव्यथा प्रेमैवायमुपेक्षितो यदि तदा प्राणेषु कोऽनुग्रहः ॥ ९५ ॥ सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्। साऽऽक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥ ९६ ॥ प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि। यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ९७ ॥ धन्या सा गृहदेहली स्पृशति या तत्पादपद्मप्रभां जाता सा सरसी रसाद्विशति सा यस्यां विहारेच्छया। वन्द्यः कोऽपि स एव यः खलु तया नेत्रेण संभाव्यते धिग्धिग्वेधसमेषु मां यदनयन्नैकं कथंचित्कथम् ॥ ९८ ॥ किं मे सद्गुरुसेवनैः प्रतिदिनं किं व्योमकेशार्चनैः किं स्यादध्ययनेन वा सुरपुरप्राप्त्याथवा किं फलम्। एतस्याः कुचकुम्भनिर्भरपरीरम्भप्रभावोद्भवस्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि ॥ ९९ ॥ तन्वी सा यदि गायति श्रुतिकटुर्वीणाध्वनिजार्यते यद्याविष्कुरुते स्मितानि मलिनैवालक्ष्यते चन्द्रिका। आस्ते म्लानमिवोत्पलं नवमपि स्याच्चेत्पुरो नेत्रयोस्तस्याः श्रीरवलोक्यते यदि तडिद्वल्ली विवर्णैव सा ॥ १०० ॥ तानि स्पर्शसुखानि ते च तरलस्निग्धा दृशोर्विभ्रमास्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा। सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि मन्मानसं तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्धते ॥ १०१ ॥ तस्मिन्पञ्चशरे स्मरे भगवता भर्गेण भस्मीकृते जानाम्यक्षयसायकं कमलभूः कामान्तरं निर्ममे। यस्यामीभिरितस्ततश्च विशिखैरापुङ्खमग्नात्मभिर्जातं मे विदलत्कदम्बमुकुलस्पष्टोपमानं वपुः ॥ १०२ ॥ ज्यौत्स्नं श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकैर्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम्। चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ १०३ ॥ किं तिष्ठामि किमु व्रजामि किमहं जागर्मि निद्रामि किं

---

१ निर्दयेन अविवेकिना वा। २ मूढाः। ३ स्वभाव-। ४ इन्द्रिय-। ५ महादेवपूजनैः। ६ स्वर्ग-। ७ अरणिसङ्घर्ष इव वेणुसङ्घर्ष इव वाऽग्निरुत्पद्यत इति सम्भाव्येदमुक्तम्। ८ चन्द्रिकाया अपि तस्स्मितपुरस्तादल्पोत्कृष्टत्वात्। एवं परस्तादपि। ९ शोभा। १० वक्रता। ११ ब्रह्मा।

किं जानामि किमु भ्रमामि किमु वा सुख्यामि दुःख्यामि वा । किं नास्म्यस्मि किमित्यनल्पकलिते न क्वापि पक्षे स्थितः प्राप्यानिर्वचनीयमेव कमपि क्रूरं विकारं सखे ॥ १०४ ॥ आसीनः शयितः स्थितः प्रचलितः स्वप्नायितो जागृतः पश्यन्मीलितलोचनो व्यवहरन्मौनं प्रपन्नोऽथवा । तां प्रेमाकुलवीक्षितां स्मितमुखीं सव्रीडमन्दागमां श्लिष्यन्तीं प्रणयार्द्रमुग्धलपितां पश्यामि नक्तंदिवम्[१] ॥ १०५ ॥ नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ १०६ ॥ सा मे यद्यपि सुन्दरी भगवतो मामेव चेतोभुवो न स्वप्ने न च जागरे नयनयोः पन्थानमासादिता । तामाकर्ण्य तथापि तादृशदशावैधुर्यमासेदुषीमानन्दाद्भुतशोककौतुकभयव्रीडाकुलं मे मनः ॥ १०७ ॥ सा संचारचमत्कृतिर्नयनयोः स भ्रूलताविभ्रमस्तद्बिम्बाधरपाटलस्मितयुतस्यास्यस्य सा वैखरी । सेयं चङ्क्रम[२]चातुरी चरणयोः सोऽप्यङ्गहारक्रमो दिष्ट्या तन्मम नेत्रपात्रमखिलं जायेत जीवामि च ॥ १०८ ॥ लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युतेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ १०९ ॥ सा विद्याधरकन्यका किमु भुवं पुण्यैः प्रपन्ना नृणां लावण्यामृतसागराद्विमथिता लक्ष्मीः किमन्योत्थिता । आ ज्ञातं घनसारचन्दनसुधाज्योत्स्नामृणालादिभिः प्रारब्धा हृदयं मम श्रमयितुं पौष्पेषवी शाम्बरी ॥ १०० ॥ हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते । चक्राह्वोऽहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे संजाताः सहसा ममैव भुवनस्याप्यन्धकारा दिशः ॥ १११ ॥ नेत्रे खञ्जनगञ्जने नवसुधाधारानुकारा गिरः पाणिः पद्मसहोदरः कचरुचिः शैवालजालोपमा । वक्त्रं कार्तिकपौर्णिमापतिसमं हारिद्रहृद्यं वपुस्त्वं यस्मै वलसे विलासिनि हृदा तेनैव तप्तं तपः ॥ ११२ ॥ आस्तां दूरतया तदीयवदनाम्भोजामृतस्वादनं नोदेत्येव मनोरथोऽपि हृदये तत्संगमाशां प्रति । उत्कण्ठाशिथिलीकृताङ्गलतिकं वीक्षेत मामेकदा सखेहं यदि सा सरोजवदना धन्या वयं तावता ॥ ११३ ॥ निद्रे लोचनमुद्रणं विरचय स्वप्न त्वमप्याचर प्राणाभिन्नतमां चिरात्प्रियतमां मच्चेतसो गोचरम् । भ्रातर्बोध दृढानुरोध न तथा कुर्या यथा प्रेयसी प्रौढाश्लेषविघट्टनेन भवतः क्रीडन्ति दुष्कीर्तयः ॥ ११४ ॥लज्जैवोद्घटिता किमत्र कुलिशोद्विग्ना कपाटावली मर्यादैव विलङ्घिता सखि पुनः केयं कलिन्दात्मजा । आक्षिप्ता खलु दृष्टिरेव किमियं व्यालावली वा पुनः प्राणा एव समर्पिताः सखि पुनस्तस्मै किमेषा तनुः ॥ ११५ ॥ सव्याजं तिलकालकान्विरलयंल्लोलाङ्गुलिः संस्पृशन्वारंवारमुदञ्चयन्कुचयुगप्रोदञ्चिनीलाञ्चलम् । यद्भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितं तद्गर्वादवधीरितोऽस्मि न पुनः कान्ते कृतार्थीकृतः ॥ ११६ ॥ चित्रं सा मम जीवितं क्वचिदितो याता बताहं पुनर्जीवामीत्यभिमानभारविधुरो नाद्यापि जातोऽकृती । धिग्भस्मन्यपि पावकत्वमितिवद्व्यर्थं तथामानिनं जीवत्त्वं क नु जीवनस्य विलये हा हन्त कुत्रासि मे ॥ ११७ ॥ हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् । किं कुर्मः कुशले सदैव विधुरो धाता न

---

१ अहर्निशम् । २ भ्रमण- । ३ वज्र-सर्पपङ्क्ति । ४ तिरस्कृतः । ५ कृष्णा रात्रिः ६ अनुकूलताविधाने श्रेयसि वा । ७ प्रतिकूलः ।

चेत्तत्कथं तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥ ११८ ॥ सौवर्णी ननु वल्लरी कुह गता सा यत्र राकापतिर्नित्यं सन्निहितः पुरा सलिलजद्वन्द्वं गृहीत्वाऽभवत् । यस्या दर्शनमात्रतश्च सुमनोवर्यैरपि प्रार्थिता भव्योद्रेकपरम्परामनुभवन् धन्यो जनैः कीर्तितः ॥ ११९ ॥ सा सौन्दर्यनिधिर्विलासभवनं मीनध्वजस्यापि वा कान्तीनामधिदेवताऽधिकरणं माधुर्यसारस्य वा । तामुद्वीक्ष्य सखे तदादि गतवान्सर्वेन्द्रियाणामहं सार्धं तद्गतमानसेन गलितोत्साहः किलानीशताम् ॥ १२० ॥ सम्फुल्लामलनीलकंजविलसल्लावण्यलीलालसाश्चञ्चत्खञ्जनमञ्जुलच्छविमुषः कन्दर्पदर्पोद्धुराः । पीयूषस्नपिता इवाच्छमधुरस्निग्धास्त्रपासंभृता भूयोभावयुताः कदा नु मयि ते[4] दृग्विभ्रमा भाविनः ॥ १२१ ॥ तस्याः किं मुखपङ्कजं स्मितरुचा चन्द्रद्युतेर्निन्दकं किं वा नेत्रयुगं कटाक्षचतुरं किं भ्रूलताविभ्रमम् । किं वा स्निग्धमवेक्षितं मयि पुनर्यान्त्या सखीनां पुरः किं किं संप्रति चिन्तयामि हृदये कामेन लक्ष्यीकृते ॥ १२२ ॥ शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं हारः क्षारपयोभवः प्रियसुहृत्पङ्केरुहं भास्वतः । इत्येषां किमिवास्तु वस्तु मदनज्वालाविघाताय यद्वाह्याकारपरिभ्रमेण तु वयं तत्त्वेत्यजो वञ्चिताः ॥ १२३ ॥ जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभूत्प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नासपत्नं महः । तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकैर्दृष्टा काप्यबला बलात्कृतवती सा मन्मथं मन्मथम् ॥ १२४ ॥ चण्डांशो विरमाशु मा मयि किराङ्गारान् करैर्दुःखिते नाहं ते व्यदधां मनागपि कदाऽप्यागः पुनः कुत्र कथम् । त्वं चेदद्य कुहापि शीतकरणं सङ्गोप्य रात्रौ कुतो भीष्मोत्तापचयप्रवर्षणपरस्त्वं किंकृते प्रोद्यतः ॥ १२५ ॥ सूर्यो नैव यतो न सम्प्रति दिवा नेन्दुश्च यद्भूतले नो दावो यदयं नागोऽन्तरशनिश्चायं न मेघो न यत् । हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया धावद्धोरविभावरीविषधरीभोगस्य भीमो[15] रसः ॥ १२६ ॥ पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे । वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना यन्मां नोवाचा किंचित्स्थितमपि पुरतो मानसं तद्दुनोति ॥ १२७ ॥ चक्षुःप्रीत्या निषण्णे मनसि परिचयाच्चिन्त्यमानेऽभ्युपाये याते रागे विवृद्धिं प्रविसरति गिरा विस्तरे दूतिकायाः । आस्तां दूरे स तावत्सरभसदयिताालिङ्गनानन्दलाभस्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥ १२८ ॥

## कन्दर्पं प्रति प्रलापाः ।

माधवाल्लब्धजन्माऽहं नास्ति रुद्रस्य साध्वसम् । इति किं धृतदर्पस्त्वं व्यापादयसि मां बत ॥१॥ रे रे यद्यपि दग्धा ते तनुर्हन्त पुरारिणा । तथाऽपि परमर्मान्तकारिता न व्यलीयत ॥ २ ॥ दग्धारमपि जित्वाऽहं पुरारातिं पिनाकिनम् । कृतार्थोऽस्मि रतिं प्राप्त इति दृप्तो निहंसि माम् ॥ ३ ॥ मल्लक्ष्यत्राणकृते कश्चिन्न क्षमो भुवनत्रये । इति तावन्मदो यन्न प्रियाश्लेषे स दृश्यते॥४॥ काममेकाकिनो

---

१ मदनस्य । २ तद्वीक्षणसमयमारभ्य । ३ अपहर्तारः । ४ आऽनुभूताः । ५ चन्द्रमस इव विषस्यापि समुद्रोद्भूतत्वादिदं वचनम् । ६ मलये हि चन्दनद्रुमा आत्मसौरभलुब्धैर्विषधरैर्वेष्टिता इति तथोक्तम् । ७ लवणाकरादुत्पन्नत्वात् । ८ तिग्मांशुत्वेनास्य खिद्रत्वात् । ९ सारभूत- । १० प्रभाते । ११ अपराधम् । १२ कुत्रचित् । १३ वनाग्निः । १४ प्राणवायुभक्षणेच्छया । १५ भीमाकृतिरिति पाठान्तरम् । १६ सकपटम् । १७ चित्रे । १८ लज्जितम् । १९ पीडयति २० श्रीकृष्णात् । २१ पार्वतीवश्यतां प्रति नेतृत्वेन कामस्य जेतृता । २२ मित्रसङ्गाभावे प्रियाया विरहे च ।

हन्याः प्रियाश्लेषविवर्जितान्। यदि ते विक्रमः -कश्चिन्न किं हंसि तदन्यथा ॥ ५ ॥ अस्माकमात्मभूर्भूत्वा हन्तास्मानेव हंसि यत्। रे रे कन्दर्प तन्नित्यमनङ्गत्वं सदाऽस्तु ते ॥ ६ ॥ स्वयमप्राप्तदुःखो यः स दुनोति न विस्मयः। त्वं स्मर प्राप्तदाहोऽपि दहसीति किमुच्यते ॥ ७ ॥ भवनेत्रभवो वह्निरद्यापि त्वयि मन्मथ। ज्वलतीवान्यथा किं ते विशिखास्तत्कणा इव ॥ ८ ॥ अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ। त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः ॥ ९ ॥ वृथैव संकल्पशतैरजस्रमनङ्ग नीतोऽसि मयाऽतिवृद्धिम्। आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥ १० ॥ क रुजा हृदयप्रमाथिनी क च ते विश्वसनीयमायुधम्। मृदुतीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥ ११ ॥ अनुममार न मार कथं नु सा रतिरतिप्रथिताऽपि पतिव्रता। अयमनाथवधूवधपातकी दयितयाऽपि तयाऽसि किमुज्झितः ॥ १२ ॥ भुवनमोहनजेन किमेनसा तव परेत बभूव पिशाचता। यदधुना विरहाधिमलीमसामभिभवन्भ्रमसि स्मर मद्विधाम् ॥ १३ ॥ स्मर नृशंसतमस्त्वमतो विधिः सुमनसः कृतवान्भवदायुधम्। यदि दृढं धनुरायसमाशुगं तव सुजेत्त्रिजगत्प्रलयं व्रजेत् ॥ १४ ॥ विधिरनंशमभेद्यमवेक्ष्य ते जनमनः खलु लक्ष्यमकल्पयत्। अपि स वज्रमदास्यत चेत्तदा त्वदिषुभिर्व्यदलिष्यदसावपि ॥ १५ ॥ अपि विधिः कुसुमानि तवाशुगान्स्मर विधाय स निर्वृतिमाप्तवान्। अदित पञ्च हि ते स नियम्य तांस्तदपि तैर्बत जर्जरितं जगत् ॥ १६ ॥ सह तया स्मर भस्म झटित्यभूः पशुपतिं प्रति यामिषुमग्रहीः। ध्रुवमभूदधुना वितनोः शरस्तव कटुस्वर एव स पञ्चमः ॥ १७ ॥ त्वमुचितं नयनार्चिषि शंभुना भुवनशान्तिकहोमहविः कृतः। तव वयस्यमपास्य मधुं मधुं हतवता हरिणा बत किं कृतम् ॥ १८ ॥ बाणाग्निमस्तकरुणो विकिरन्ममाङ्गे प्रायो न वेत्सि विषमास्त्रवर स्वपीडाम्। संताप एष भवता किमु नान्वभावि चण्डीपतेरलिकलोचनगोचरेण ॥ १९ ॥ तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्द्वयमिदमयथार्थं दृश्यते मद्विधेषु। विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ २० ॥ हृदि बिसलताहारो नायं भुजंगमनायकः कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः। मलयजरजो नेदं भस्म प्रियारहिते मयि प्रहर न हरभ्रान्त्याऽनङ्ग क्रुधा किमु धावसि ॥ २१ ॥ पाणौ मा कुरु चूतसायकममुं मा चापमारोपय क्रीडानिर्जितविश्व मूर्च्छितजनाघातेन किं पौरुषम्। तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षानलश्रेणीजर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥ २२ ॥ रे रे निर्दय दुर्निवार मदन प्रोत्फुल्लपङ्केरुहं बाणं संवृणु संवृणु त्यज धनुः किं पौरुषं मां प्रति। कान्तासङ्गवियोगदुःखदहनज्वालावलीढं वपुः शूराणां मृतमारणे न हि परो धर्मः प्रयुक्तो बुधैः ॥ २३ ॥ आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते निर्दग्धं विरहाग्निना वपुरिदं तैरेव सार्धं मम। तत्कन्दर्प निरायुधोऽसि भवता जेतुं न शक्तः परो दुःखी स्यामहमेक

---

१ प्रियाऽऽश्रयसत्त्वे। २ पुत्रः मनसिजश्च। ३ विदेहत्वम्, मनसिजत्वेन शरीररहितत्वं च। ४ कुसुमानां दाहकत्वेन दुष्प्रयत्वात्। ५ अवयविनो हि भेदो दृष्टचरः, न तु निरवयवस्य। अथ निरवयवस्यापि यद् भेदनं क्रियते इति लोकोत्तरप्रभावोऽस्तीति सम्भाव्येदमुक्तम्। ६ कोकिलध्वनिः। ७ वसन्तं तदाख्यं दैत्यं च। ८ पञ्चबाणत्वात् स्मरस्य विषमास्त्रत्वम्। ९ ललाट-।

एव सकलो लोकः सुखं जीवतात् ॥ २४ ॥ बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् । दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥ २५ ॥ तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन्मनो निर्भरम् । शंभोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानलज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना ॥ २६ ॥ बाणान्संहर मुञ्च कार्मुकलतां लक्ष्यं तव त्र्यम्बकः के नामात्र वयं शिरीषकलिकाकल्पं यदीयं मनः । तत्कारुण्यपरिग्रहात्कुरु दयामस्मिन्विधेये जने स्वामिन्मन्मथ तादृशं पुनरपि स्वप्नाद्भुतं दर्शय ॥ २७ ॥

## चन्द्रं प्रति प्रलापाः ।

द्विजराज इति भ्रान्त्या पादस्पर्शं तव व्यधाम् । हतोऽस्मि बत चण्डाल प्रसङ्गादिव सर्वथा ॥ १ ॥ चण्डीशचूडाभरण चन्द्र लोकतमोऽपह । विरहिप्राणहरण कदर्थय न मा वृथा ॥ २ ॥ तारापते कुमुदिनीमनुकूलकान्तां पादेन पीडयसि कम्पयसि द्विजातीन् । विद्वेषमाचरसि किं च वियोगिलोके नक्तंचरस्य भवतः करुणा कुतः स्यात् ॥ ३ ॥ किं रे विधो मृगदृशां मुखमद्वितीयं कंदर्प दृप्यसि दृगम्बुजमन्यदेव । झङ्कारमावहसि भङ्गतनुर्न तादृक्कर्माणि धिङ् न पुनरीदृशमीक्षणीयम् ॥ ४ ॥ अभिलषसि यदिन्दो वक्त्रलक्ष्मीं मृगाक्ष्याः पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम् । सुविमलमथ बिम्बं पारिजातस्य गन्धैः सुरभय वद नो चेत्त्वं क तस्या मुखं क ॥ ५ ॥ सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभौ सोदरौ सौहार्दं कुमुदाकरेषु किरणाः पीयूषधाराकिरः । स्पर्धा ते वदनाम्बुजैर्मृगदृशां तत्स्थाणुचूडामणे हंहो चन्द्र कथं न सिञ्चसि मयि ज्वालामुचो रोचिषः ॥ ६ ॥ यत्त्वं हन्त कलङ्कितो मलिनतापात्रं प्रदोषे तथा रक्तः क्ष्वेडसहोदरः शिवशिरोधार्योऽपि वक्रो विधो । तद्दोषाकरतोचितैव भवतो युक्तं च मार्दङ्गवधोद्योगित्वं बत किंतु हा द्विजपतित्वं केवलं दुःसहम् ॥ ७ ॥

## वायुं प्रति वचनम् ।

उन्मीलन्मुकुलकरालकुन्दकोशप्रश्च्योतद्घनमकरन्दगन्धबन्धो । तामीषत्प्रचलविलोचनां नताङ्गीमालिङ्गन्पवन मम स्पृशाङ्गमङ्गम् ॥ १ ॥ व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः । आलिङ्गसि प्रसभमङ्गमशेषमस्या धन्यस्त्वमेव मलयाचलगन्धवाह ॥ २ ॥

## जलधरं प्रति प्रलापाः ।

भो मेघ गम्भीरतरं नद त्वं तव प्रसादात्स्मरपीडितं मे । संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम् ॥ १ ॥ भ्रमय जलदानम्भोगर्भान्प्रमोहय चातकान्कलय शिखिनः केकोत्कण्ठान्कठोरय केतकान् । विरहिणि जने मूर्छां लब्ध्वा विनोदयति व्यथामकरुण पुनः

---

१ अनाथः विरही च । २ मृत्युम् । ३ वश्य- । ४ सदृशम् । ५ किरण-चरण- । ६ विहगान्, विप्रांश्च । ७ राक्षसस्य । रात्रावुदयिनश्च । ८ कलङ्कं लक्षणया कालिमानम् । ९ कान्तीः । १० प्रकृष्टे दोषे तद्वति वा । रात्र्यारम्भे च । ११ अनुरक्तः शोणश्च । १२ विष- । १३ दोषाणामाकरत्वम्, दोषाया रात्रेः करत्वं च । १४ इदं विरहिपरम् । १५ ब्राह्मणमुख्यत्वम् । चन्द्रत्वं च ।

संज्ञाव्याधिं विधाय किमीहसे ॥ २ ॥ मलयमरुतां व्राता याता विकासितमल्लिकाः परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि । घन घटयितुं निःस्नेहं तं य एव निवर्तने प्रभवति गवां किं नश्छिन्नं स एव धनंजयः ॥ ३ ॥

## अशोकं प्रति वचनम् ।

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायान्ति शिलीमुखाः[1] स्मरधनुर्मुक्तास्तथा मामपि । कान्तापादतलाहतिस्तव[2] मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥ १ ॥ रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः । उत्कण्ठावटमानषट्पदघटासंघट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ २ ॥

## तमालं प्रति वचनम् ।

धन्यस्त्वमसि तमाल स्पृष्टस्तन्व्या लतावदनया यत् । अद्य स्थावरजन्मा जातस्त्वं जङ्गमादधिकः॥१॥

## बिसावलीं प्रति वचनम् ।

परिच्युतस्तत्कुचकुम्भमध्यात्किं शोषमायासि मृणालहार । न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः किमु स्यात् ॥ १ ॥

## भ्रमरं प्रति वचनम् ।

वदनमिदं न सरोजं नयने नेन्दीवरे एते । इह सविधे मुग्धदृशो मधुकर न मुधा[3] परिभ्राम्य ॥ १ ॥ भ्रातर्द्विरेफ भवता भ्रमता समन्तात्प्राणाधिका प्रियतमा मम वीक्षिता किम् । ब्रूषे किमोमिति सखे कथयाशु तन्मे किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयम् ॥ २ ॥ चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः । करौ व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधरं वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ ३ ॥ उन्मीलन्नयनान्तकान्तिलहरीनिष्पीतयोः केवलादामोदादवधारणीयवपुषोः कान्तासखेन क्षणम् । यत्कर्णोत्पलयोः स्थितेन भवता किंचित्समुद्गुञ्जितं भ्रातस्तिष्ठति कुत्र तत्कथय मे कान्तं प्रियाया मुखम् ॥ ४ ॥

## मरालं प्रति वचनम् ।

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता । विभावितैकदेशेन देयं यदभियुज्यते ॥ १ ॥

## चकोरं प्रति वचनम् ।

चुलुकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् । अधिकरणमुष्णमनयोः किमिह चकोरावधारयसि ॥ १ ॥

## कृष्णसारं प्रति वचनम् ।

स्नेहं स्वीकुरु कृष्णसार कथय क्वागान्मम प्रेयसी नो जानासि यदावयोःसमजनि व्यापारतो मित्रता । स्फीते यत्किल मण्डले हिमरुचेर्जातं त्वया लाञ्छनं भव्ये भास्करमण्डले तदधुना दत्तः कलङ्को मया॥१॥

---

१ भ्रमरा बाणाश्च । २ पादाघातादशोको विकसति इति दर्पणकाराः । पादस्पर्शे रतौ सुखायै वचेति तथोक्तिः । ३ व्यर्थम् ।

## सारङ्गं प्रति वचनम् ।

रे सारङ्गा वनवसतयस्तत्त्वमाख्यात यूयं कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः । आ जानीमो गमनसमये हन्त कान्तारसीमन्येकाकिन्याः कुवलयदृशो लुण्ठिता यौवनश्रीः ॥ १ ॥

## मयूरं प्रति वचनम् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्घनरुचिरकलापो निःसपत्नोऽद्य जातः । रतिविगलितबन्धे केशपाशे सुकेश्याः सति कुसुमसनाथे किं हरेदेष बर्हः ॥ १ ॥

## हारं प्रति वचनम् ।

सूचीमुखेन सकृदेव कृतव्रणस्त्वं मुक्ताकलाप लुठसि स्तनयोः प्रियायाः । बाणैः स्मरस्य शतशो विनिकृत्तमर्मा स्वप्नेऽपि तां कथमहं न विलोकयामि ॥ १ ॥

## कोकिलं प्रति वचनम् ।

रे कोकिल प्रकृतितो मलिनः स्वदेहसंपोषक[१] प्रणयिताविमुखः कृतघ्नः । तत्ते कुहूमुपगमय्य मम प्रियाऽऽस्यबिम्बानुकारिविधुनिह्नवनं न चित्रम् ॥ १ ॥ क्रुद्धोऽसि किं मयि यतो नयने सुरक्ते[२] गात्रं च ते मलिनताऽऽयतनं[३] नितान्तम् । नो चेत् कथं कुटिल कोलिल गर्जसि त्वं किं वा रसालमपि दूषयसि प्रपद्य ॥ २ ॥

## विरहिण्याः प्रलापाः ।

तरुणीनां कृते प्रेयान् यदि स्याद्भुवनत्रये । तदा प्रेयःपरिष्वङ्गः केवलः सखि नेतरः ॥ १ ॥ प्रियाश्लेषं विना हन्त भारायन्तेऽसवोऽपि यत् । तत्कथं विरहे तस्य विन्देयं स्वस्थतां सखि ॥ २ ॥ हारो नारोपितः कण्ठे मया विश्लेषभीरुणा । इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः ॥ ३ ॥ बिभेमि सखि संवीक्ष्य भ्रमरीभूतकीटकम् । यद्ध्यानादागते पुंस्त्वे तेन सार्धं रतिः कथम् ॥ ४ ॥ यदीयत्नलमालोक्य गतः प्रेयान्वियुज्यते । आलोकय कथं सख्यस्तस्य चन्द्रमसो मुखम् ॥ ५ ॥ विरमत विरमत सख्यो नलिनीदल-तालवृन्तपवनेन । हृदयगतोऽयं वह्निर्झटिति कदाचिज्ज्वलत्येव ॥ ६ ॥ याः पश्यन्ति प्रियं स्वप्ने धन्यास्ताः सखि योषितः । अस्माकं तु गते कान्ते गता निद्रापि वैरिणी ॥ ७ ॥ अनलस्तम्भनविद्यां सुभग भवान्नियतमेव जानाति । मन्मथशराग्नितप्ते यदि मे कथमन्यथा वससि ॥ ८ ॥ अबलावनपर एको भुवनत्रितयेऽपि चेत्तदा भर्ता । कथमन्यथा सुधा-करचन्दनमुख्याप्रियत्वं स्यात् ॥ ९ ॥ मदकलकृतान्तकासरखुरपुटनिर्धूतधूलिसंकाशम्[४] । केतकरजो निवार्यं सखि यदि कार्यं मम प्राणैः ॥ १० ॥ आलि बालिशतया[५] बलिरस्मै दीयतां बलिभुजे[६] न कदापि । केवलं हि कलकण्ठशिशूनामेष[७] एव कुशलेषु[८] निदानम्[९] ॥ ११ ॥ गरलद्रुमकन्दमिन्दुबिम्बं

---

१ काकः कोकिलं परिपुष्णाति कोकिलश्च जातपरिपोषः काकं विहाय स्वकुलं भजत इति तथोक्तिः । २ शोणवर्णे नेत्रे स्वतोऽथापि क्रोधेनोत्प्रेक्षिते । ३ कृष्णत्वात् । ४ सदृशम् । ५ मूढतया । ६ काकाय । ७ कोकिलापत्यानाम् । ८ पोषणकर्मसु । ९ काको हि तान् परि-पोष्य समर्थयते इति तथोक्तिः । 'निदानं त्वादिकारणम्' इत्यमरः ।

करुणावारिजवारणो वसन्तः । रजनी स्मरभूपतेः कृपाणी करणीयं किमतः परं विधातः ॥ १२ ॥ हन्तालि संतापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि । उत्ताप एषोऽन्तरदाहहेतुर्नतभ्रुवो न व्यजनापनोद्यः ॥ १३ ॥ वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिनम् । उभयमेतदुपैत्वथवा क्षयं प्रियजनेन न यत्र समागमः ॥ १४ ॥ अहमिह स्थितवत्यपि तावकी त्वमपि तत्र वसन्नपि मामकः । न तनुसंगम एव सुसंगमो हृदयसंगम एव सुसङ्गमः ॥ १५ ॥ बकुलमालिकयापि मया न सा तनुरभूषि तदन्तरभीरुणा । तदधुना विधिना कृतमावयोर्गिरिदरीनगरीशतमन्तरम् ॥ १६ ॥ दहनजा न पृथुर्दवथुर्व्यथा विरहजैव यथा यदि नेदृशम् । दहनमाशु विशन्ति कथं स्त्रियः प्रियमपासुमुपासितमुद्धुराः ॥ १७ ॥ कति न सन्ति जना जगतीतले तदपि तद्विरहाकुलितं मनः । कति न सन्ति निशाकरतारकाः कमलिनी मलिनी रविणा विना ॥ १८ ॥ अरतिरियमुपैति नापि निद्रा गणयति तस्य गुणान्मनो न दोषान् । विगलति रजनी न संगमाशा व्रजति तनुस्तनुतां न चानुरागः ॥ १९ ॥ प्रियसखि न तथा पटीरपङ्को न च नलिनीदलमारुतोऽपि शीतः । शमयति मम देहदाहमन्तः सपदि तथा स यथा सरोजनेत्रः ॥ २० ॥ एतानि निःसहतनोरसमञ्जसानि शून्यं मनः पिशुनयन्ति गतागतानि । एते च तीरतरवः प्रथयन्ति तापमालम्बितोज्झिततरुग्लपितैः प्रवालैः ॥ २१ ॥ अन्तर्गता मदनवह्निशिखावली या सा बाधते किमिह चन्दनचर्चितेन । यः कुम्भकारपवनोपरि पङ्कलेपस्तापाय केवलमसौ न च तापशान्त्यै ॥ २२ ॥ बत सखि कियदेतत्पश्य वैरं स्मरस्य प्रियविरहकृशेऽस्मिन्रागिलोके तथाहि । उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ २३ ॥ कलयति मम चेतस्तल्पमङ्गारकल्पं ज्वलयति मम गात्रं चन्दनं चन्द्रकश्च । तिरयति मम नेत्रे मोहजन्माऽन्धकारो विकृतबहुविकारं मन्मथो मां दुनोति ॥ २४ ॥ रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते । हृदयमदये तस्मिन्नेवं पुनर्वलते बलात्कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ २५ ॥ ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी दहतु मदनः किं वा मृत्योः परेण विधास्यति । मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥ २६ ॥ इदानीं तीव्राभिर्दहन इव भाभिः परिवृतो ममाश्चर्यं सूर्यः किमु सखि रजन्यामुदयते । अयं मुग्धे चन्द्रः किमिति मयि तापं प्रकटयत्यनाथानां बाले किमिव विपरीतं न भवति ॥ २७ ॥ पिकाली वाचाली भवति बहुधाऽलीकवचने मृणाली व्यालीव व्यथयतितरामङ्गमनिशम् । विषज्वालाजालं सखि किरति पीयूषकिरणो जगत्प्राणैः प्राणानपहरति केयं परिणतिः ॥ २८ ॥ मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव । हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ २९ ॥ आदौ हालाहलहुतभुजा दत्तहस्तावलम्बो बाल्ये शंभोर्निटिलमहसौ बद्धमैत्रीनिरूढः । प्रौढो राहोरपि मुखविषेणान्तरङ्गीकृतो यः सोऽयं चन्द्रस्तपति किरणैर्मामिति प्राप्तमेतत् ॥ ३० ॥ भस्मीभूतः कुसुमविशिखः शंभुनेत्राग्निनाऽभू-

---

१ किंतु भव्यः प्रशंसनीयः तरुणो वा यो जनस्तदपनोद्य इति पदैक्यम् । २ हृदयभूतस्य प्रियस्य इति हृदि अयते स्फुरति तस्येति वा हृदोऽयः शुभावहरूप इति तस्येति वा सङ्गमः । ३ मोलसरी इति विख्यातपुष्पमालया । ४ परितापः । ५ चन्दनलेपः । ६ समर्पितम् । ७ सदृशम् । ८ पूर्णः । ९ किरणैः । १० पतिविरहेऽशरण्यानाम् । ११ कोकिलपङ्क्तिः । १२ वायुः । १३ सखी प्रतीयमुक्तिः । १४ भालाग्निज्वालया ।

ज्वालादायी तदनु मनसि प्राप्तजन्मा बभूव । भूयस्तस्मिन्विरहदहनैर्दाहितोऽसौ मयैवं कुत्रोत्पन्नो व्यथयति पुनर्मामहो तन्न वेद्मि ॥ ३१ ॥ पञ्चत्वं तनुरेतु भूतनिवहाः[1] स्वांशैर्मिलन्तु ध्रुवं धातारं[2] प्रणिपत्य हन्त शिरसा तत्रापि याचे वरम् । तद्वापीषु[3] पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गणव्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥ ३२ ॥ यास्यामीति समुद्यतस्य गदितं विश्रब्धमाकर्णितं गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि । तच्छून्ये पुनरागतास्मि भवने प्राणास्त एते दृढाः सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं[4] रोदिमि ॥ ३३ ॥ यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां जने बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले । प्राणेशस्य महीक्षणार्पितदृशः कृच्छ्रादपि क्रामतः किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः ॥ ३४ ॥ दाक्षिण्यं मलयानिलस्य विदितं शैत्यं सुधादीधितेर्[5] वाचामेव न गोचरे मलयजस्यापि स्फुटं सौष्ठवम् । विश्लेषे तव के न मे परिचिताः प्राणेश तत्तत्कथाविष्कारे पुनरप्रमाणयति मामव्याहतेयं तनुः ॥ ३५ ॥ दुर्वाराः स्मरमार्गणाः[6] प्रियतमो दूरे मनोऽत्युत्सुकं गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् । स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ॥ ३६ ॥ शैवत्तत्त्वविबोधवत्कुसुमवत्पीयूषवन्मित्रवद्धान्यासन्भजति प्रिये मृगदृशोऽथ प्रस्थिते तत्क्षणात् । गेहं तन्मुकुरं तदेव वलयं तच्चन्दनं सा निशा कारावत्करवालवत्क्रकचवत्काकोलवत्कालवत् ॥ ३७ ॥ रोलम्बो[7] मधुपः[8] पिकः परभृतो रन्ध्रानुसारी[9] मरुद्धंसाः केवलपक्षपात[10]निरताश्चन्द्रोऽपि दोषाकरः[11] । चेतो नैति शुकस्त्विहैकपठिताख्यायी पयोदो जडैः[12] कं वाऽहं प्रहिणोमि हन्त कठिनस्वान्ताय[13] कान्ताय मे ॥ ३८ ॥ आयाता मधुयामिनी[14] यदि पुनर्नायात एव प्रभुः प्राणा यान्तु विभावसौ[15] यदि पुनर्जन्मग्रहं प्रार्थये । व्याधः कोकिलबन्धने हिमकरध्वंसे च राहुग्रहः कंदर्पे हरनेत्रदीधितिरहं प्राणेश्वरे मन्मथः ॥ ३९ ॥ रात्रिर्मे दिवसायते हिमरुचिश्चण्डांशुलक्षायते[16] तारापङ्क्तिरपि प्रदीपवडवावह्निस्फुलिङ्गायते[17] । धीरो दक्षिणमारुतोऽपि दहनज्वालावलीढायते हा हा चन्दनबिन्दुरुद्गतशिखाङ्गारायते साम्प्रतम् । ॥ ४० ॥ गुञ्जन्ति प्रतिकुञ्जमम्बुजपलद्रोणीषु भृङ्गाङ्गनाः फुल्लत्पुष्परसालवीथिशिखरे कूजन्ति माद्यत्पिकाः । कामः काममयं करोति विशिखैर्हन्तुं मुहुर्दुर्दिनं का सा तन्मलयानिलस्य सखि मे भीतिस्त्वयोद्भाव्यते ॥ ४१ ॥ रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलैर्मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि[18] । माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥ ४२ ॥ वार्यन्तां मन्दमन्दं मधुकरनिकर[19]प्रौढझङ्कारधाराः क्षिप्यन्तां यत्र कुत्र प्रतिदिशमधुना भूरिभाराश्च हाराः । दह्यन्तां सर्व एते कमलदलयुताः किं च हा पुष्पभारास्तारा नाराचधारा विकिरति हृदये मन्मथोऽयं हताशः ॥ ४३ ॥ श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्ताद्दृष्ट्वा

---

१ पृथिव्यादयो देहारम्भकाः । २ ब्रह्माणम् । ३ अत्र तत्पदं कान्तपरम् । एवं परत्रापि । ४ छलात् । ५ चन्द्रस्य । ६ बाणाः । ७ भ्रमरः । ८ मद्यपः, मकरन्दग्राही च । ९ सति छिद्रे एव प्रवेशसम्भवात् । १० उद्गमनक्षमत्वात् । पक्षशब्दश्चात्र पातशब्दसाचिव्येन स्वस्वाश्रयसमर्थनपरः । ११ दोषाया रात्रेः करः । दोषाणामाकरश्च । १२ मूढोऽकर्मण्यो जलमयो वा । १३ निर्दयाय । १४ वसन्तरात्रिः । १५ अग्नौ । १६ अनन्तसूर्य इव प्रतिभासते । १७ कण- । १८ पवनः । १९ समूह- ।

यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि । तस्मिन्नागत्य कण्ठग्रहणसरभसस्थायिनि प्राणनाथे भग्ना मानस्य चिन्ता भवति मम पुनर्वज्रमय्या कदा नु ॥ ४४ ॥

## कामं प्रति वचनम् ।

हृदयमाश्रयसे बत मामकं ज्वलयसीत्थमनङ्ग तदेव किम् । स्वयमपि क्षणदग्धनिजेन्धनः क भवितासि हताश हुताशवत् ॥ १ ॥ जटा नेयं वेणीकृतकचकलापो न गरलं गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् । इयं भूतिर्नाङ्गे[1] प्रियविरहजन्मा धवलिमा पुरारातिभ्रान्त्या कुसुमशर किं मां व्यथयसि ॥ २ ॥ पञ्चत्वं यान्तु बाणाः समयपरिणतस्ते विदीर्णोऽस्तु चापः क्रूरः क्रूराहिवक्त्रं विशतु तव रथो मा भव त्वं शरीरी । किं ते शापेन माद्यग्युवतिबधमहापातकिन्मीनकेतो शप्यः पाथोजयोनिः[2] स खलु रचितवान्पापिनो दीर्घमायुः ॥ ३ ॥

## चन्द्रमसं प्रति वचनम् ।

संतापय चिरं चन्द्र न तत्र प्रतिषिध्यसे । निवारय करस्पर्शमहं[3] कान्तैकजीविता[4] ॥ १ ॥ मुग्धस्य ते वद विधुंतुद किं वदामि यत्त्यक्तवानसि मुखे पतितं शशाङ्कम् । अस्यार्द्रबिम्बगलितेन सुधारसेन संधानमेति तव किं न जरत्कबन्धः ॥ २ ॥ प्रियविरहमहोष्मा मर्मरामङ्गलेखामपि हतक हिमांशो मां स्पृश क्रीडयाऽपि । इह हि तव लुठन्तः प्लोषपीडां[6] भजन्ते दरजरठमृणालीकाण्डमुग्धा मयूखाः ॥ ३ ॥

## रोहिणीं प्रति वचनम् ।

भो रोहिणि त्वमसि रात्रिचरस्य[7] भार्या एनं निवारय पतिं सखि दुर्निवारम् । जालान्तरेण मम सद्मनि[8] संनिविष्टः श्रोणीतटं स्पृशति किं कुलधर्म एषः ॥ १ ॥

## सख्या विरहिणीं प्रति वचनम् ।

वियोगवह्निकुण्डेऽस्मिन्हृदये ते वियोगिनि । प्रियसङ्गसुखायैव मुक्ताहारस्तपस्यति ॥ १ ॥ पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः । आवेदयति नितान्तं क्षेत्रजरोगं सखि हृदन्तः ॥ २ ॥ सखि पतिविरहहुतांशः[10] किमिति प्रशमं न याति नयनोदैः[11] । शृणु कारणं नितम्बिनि मुञ्चसि नयनोदकं तु सस्नेहम् ॥ ३ ॥ सहसा हृदये निधाय चेतो नयनादिन्द्रियमुद्रणां विधाय । अयि कण्टकिताङ्गयष्टि[12] सत्यं कथय ध्यायसि किं रहो निषण्णा ॥ ४ ॥ सहचरि शपथाः शतं मदीया वद दिरलग्लपितां निजामवस्थाम् । सहचरि परिपृच्छ भानुकन्यानवदलिनीनलिनीनिकुञ्जशय्याः[13] ॥ ५ ॥ नलिनीदलतालवीजनं सखि तन्व्या विनिवारितं मया । तनुवल्लिविभूतिशङ्कया विनिवार्यः श्वसितानिलः कथम् ॥ ६ ॥ अयं विपाको वद कस्य यूनः कल्याणि कल्याणपरम्पराणाम् । यदक्षिकोणस्रवदच्छधारा हारावतारो गुणमन्तरेण ॥ ७ ॥ वासस्तदेव वपुषो वलयं तदेव हस्तस्य सैव जघनस्य च रत्नकाञ्ची । वाचालभृङ्गसुभगे सुरभौ समस्तमद्याधिकं भवति ते सखि किं निदानम् ॥ ८ ॥ उत्पादयत्यलमिदं

---

१ भस्म । २ कमलजातः ब्रह्मेत्यर्थः । ३ हस्त-किरण- । ४ साध्व्या हि स्पर्शनं स्वाहितायैवेति तथोक्तिः । ५ राहो । ६ दाह- । ७ राक्षसस्य चन्द्रमसश्च नक्तंचारित्वाविशेषात् । ८ गृहे । ९ निरशनः मुक्तावलिश्च । १० अग्निः । ११ अश्रुभिः । १२ रोमाञ्चित- । १३ अन्त्यपूर्वोत्तरार्द्धयोः प्रश्नोत्तरे । १४ परिणामः फलमिति यावत् ।

मनसो विषादं सीदत्सरोरुहनिभं वदनं त्वदीयम् । ज्ञात्वा निदानमहमत्र समानदुःखा प्राणैरपि प्रियतमे भवितुं समीहे ॥ ९ ॥ अनुदिनमधिकं ते कम्पते कायवल्ली शिव शिव नयनान्तं नाश्रुधारा जहाति । कथय कथय कोऽयं यत्कृते कोमलाङ्गि त्यजति न परिणद्धं पाण्डिमानं कपोलः ॥ १० ॥ विलुलितमतिपूरैर्बाष्पमानन्दशोकप्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा । स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ ११ ॥ अधिकरतलतल्पं कल्पितस्वापलीलापरिमिलननिमीलत्पाण्डिमा गण्डपाली । सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ १२ ॥ अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः । हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥ १३ ॥ भगिनि मदनः श्रीमानेष त्वया यदि लिख्यते किमपि सुमुखि व्यग्रासीति व्रजामि निजालयम् । यदपि मकरोऽधस्तात्पौष्पं करे च शरासनं तदपि परितो दृष्टिर्देया जने सखि नागरे ॥ १४ ॥ गोपायन्ती विरहजनितं दुःखमग्रे गुरूणां किं त्वं मुग्धे नयनगलितं बाष्पपूरं रुणत्सि । नक्तं नक्तं नयनसलिलैरेष आर्द्रीकृतस्ते शय्योपान्तः कथयति दशामातपे शोष्यमाणः ॥ १५ ॥ शोणौ कोणौ सखि नयनयोरुद्यतौ गोपनाय शङ्कामेव स्फुटयतितरां स्वेदबिन्दुप्रचारः । अन्तः प्रेमाङ्कुरपरिकरारम्भकं कन्दमस्याः किंचित्किंचित्कथयति पुनः कापि दिव्या मुखश्रीः ॥ १६ ॥ मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्तात्कर्णात्स्वर्णाभरणमपि वा नीतवान्नैव तावत् । आहो स्वप्ने बकुलकुसुमं भूषणं संदधानः कोऽयं चौरो हृदयमहरत्तन्वि तत्र प्रतीमः ॥ १७ ॥ सायं दामग्रथनसमये लग्नया कर्णमूले सख्या मन्दस्मितसुभगया सादरं सूच्यमानः । धन्यः कोऽयं कमलनयने यत्कथायां पुरस्तादङ्गुल्यग्रं निजमपि मुहुः सूचिविद्धं न वेत्सि ॥ १८ ॥ मुखं पाण्डुच्छायं नयनयुगलं बाष्पतरलं तनुः क्षामक्षामा गतमविशदं धैर्यविगमः । ह्रियं मुक्त्वा मूढे कथयसि न मे सारवचनान्यवस्था येनेयं तव सखि मुहूर्तेन पतिता ॥ १९ ॥ पक्ष्माग्रग्रथिताश्रुबिन्दुनिकरैर्मुक्ताफलस्पर्धिभिः कुर्वत्या हरहासहारि हृदये हारावलीभूषणम् । बाले बालमृणालनालवलयालङ्कारकान्ते करे विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते ॥ २० ॥ आसन्नामवलम्ब्य केसरलतामेकेन पुष्पोज्ज्वलां सव्यं निःसहया नितम्बफलके कृत्वा कराम्भोरुहम् । आमीलन्नयनान्तवान्तसलिलं श्लाघ्यस्य निन्द्यस्य वा कस्येदं दृढसौहृदे प्रतिदिनं दीनं त्वया स्मर्यते ॥ २१ ॥ उज्जृम्भाननमुल्लसत्कुचतटं लोलभ्रमद्भ्रूलतं स्वेदाम्भःस्नपिताङ्गयष्टिविगलद्व्रीडं सरोमाञ्चया । धन्यः कोऽपि युवा स यस्य वदने व्यापारिताः सांप्रतं मुग्धे दुग्धमहाब्धिफेनपटलप्रख्याः कटाक्षच्छटाः ॥ २२ ॥ मुग्धे दोर्लतिकां निधाय न कृतो द्वारोपरोधस्त्वया लग्ना नो रुदती गतासि रभसात्तस्योत्तरीयांशुके । कालेऽस्मिन्कुसुमाकरे द्विगुणितप्रेमोत्सवे रागिणीं गच्छन्नग्रत एव मूढहृदये मुक्तस्त्वया वल्लभः ॥ २३ ॥ लावण्यं सहजं क्व तन्नु गतं पाण्डुत्वमेतत्कुतो हन्तैषा तनुवल्लरी प्रतिदिनं भूयः कृशत्वं गता । उच्छूने नयने जलं प्रवहतो नर्मस्मितं नाधुना ततं निःश्वसितं विरक्तिरशनादप्यालि किं भूयसी ॥ २४ ॥

---

१ करतलरूपशय्योपरि । २ सङ्घर्ष- । मिलनमिति पाठस्त्वसाधुरेव । ३ झटित्येव । ४ अवस्थाम् । ५ माला- । ६ अतिकृशा । ७ शङ्कराट्टहासवत्सितत्वेन रमणीयं ( सदृशम् ) । हासो हि श्वेतः कविसमयसिद्धः । ८ सन्निहिताम् । ९ समूहवमानाः । १० वसन्ते । ११ अनुरागिणाम् । १२ अत्यन्तम् ।

आहारे विरतिः समग्रविषयग्रामे निवृत्तिः परा नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः। मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते तद् ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि ॥२५॥ क्षामं गात्रमतीव पाण्डु वदनं क्लिष्टा कपोलस्थली कोऽसौ चेतसि वर्तते तव युवा लोकैकमान्याकृतिः। त्यक्त्वा किंचिदपत्रपां कथय मे खिन्नाऽसि किं त्वं वृथा घोरः पञ्चशरो यदि त्वमबला वक्ष्यामि नातः परम् ॥ २६ ॥ यत्तालीदलपाकपाण्डु वदनं यद्दुर्दिनं नेत्रयोर्यत्प्रेङ्खोलितकेलिपङ्कजवनाः श्वासाः प्रसर्पन्ति च। गौरी क्रुध्यतु वर्तते यदि न ते तत्कोऽपि चित्ते युवा धिग्धिक्त्वां खलु पांसुखेलनसखीलोकेऽपि यन्निह्नवः ॥ २७॥ विश्रान्तो दिवसस्तटीमयमटत्यस्ताचलस्यांशुमान्संप्रत्यङ्कुरितान्धकारपटलैर्लम्बालका द्यौरभूत्। एह्यन्तर्विश वेश्मनः शशिमुखि द्वारस्थलीतोरणस्तम्भालम्बितबाहुवल्लि रुदिती किं त्वं पथः पश्यसि ॥ २८ ॥ चिन्ताभिः स्तिमितं मनः करतले लीना कपोलस्थली प्रत्यूषक्षणदेशपाण्डु वदनं श्वासैः कखिन्नोऽधरः। अम्भःशीकरपद्मिनीकिसलयैर्नापैति तापः शमं कस्ते प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम् ॥ २९ ॥ जानीमस्तव तन्वि चेतसि चिरं शंभुः समुज्जृम्भते तापो नेत्रतनूनपादिव तनौ तीव्रः समुन्मीलति। अक्ष्णोरस्रमिषेण गच्छति बहिर्गङ्गातरङ्गावलिः पाण्डिम्नः कपटेन चन्द्रकलिकाकान्तिः समुन्मीलति ॥ ३० ॥ न प्रीतिः पवने रतिर्न रसने प्रेमा न पङ्केरुहे न स्नेहः कुसुमे सुखं न शयने यत्नो न वा जीवने। चन्द्रे नैव चमत्कृतिर्मृगमदे मोदो न मौनव्रते तेने तेन कियांस्तपस्तरुणिमा यस्मै तवेयं दशा ॥ ३१ ॥ श्वासास्ते सखि सूचयन्त्यविरताः संपातबाधां परं विघ्नस्तत्र न कारणं वयमिति स्वान्तेऽतिचिन्ताभरः। किं वा घर्मनिपीडिता तव तनूवल्ली निकामं प्रिये पुष्पादप्यतिकोमला मलिनतां याता मृणाली यथा ॥ ३२ ॥

## नायिकायाः सङ्कल्पकल्पना।

अद्विसंवीक्षणं चक्षुरद्विसंमीलनं मनः। अद्विसंस्पर्शनः पाणिरद्य मे किं करिष्यति ॥ १ ॥ तुष्यन्तु मे छिद्रमवाप्य शत्रवः करोतु मे शास्तिभरं गृहेश्वरः। मणिस्तु वक्षोरुहमध्यभूषणं ममास्तु सौन्दर्यनिकेतनं प्रियः ॥ २ ॥ कालो मधुः कुपित एष च पुष्पधन्वा धीरा वहन्ति रतिखेदहराः समीराः। केलीवनीयमपि वञ्जुलकुञ्जमञ्जुर्दूरे पतिः कथय किं करणीयमद्य ॥ ३ ॥ कान्तः कृतान्तचरितः कुटिला तदम्बा वज्रोपमानि वचनानि च दुर्जनानाम्। प्रत्यङ्गमन्तरतनोः प्रहरन्ति बाणाः प्राणाः पुनः सखि बहिर्न खलु प्रयान्ति ॥ ४ ॥ अकस्मादेकस्मिन्पथि सखि मयाऽमुं वनतटं व्रजन्त्या दृष्टो यो विमलपरिपूर्णेन्दुवदनः। स दृग्भङ्ग्या किं वाऽकुरुत न हि जाने तत इदं मनो मे व्यालोलं कचन गृहकृत्ये न वलते ॥ ५ ॥ गते प्रेमाबन्धे प्रणयबहुमाने विगलिते निवृत्ते सद्भावे प्रणयिनि जने गच्छति पुरः। तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ६ ॥ स्वामी कुप्यति कुप्यतां परिजना निन्दन्तु मामन्यथा किं तावत्प्रथतामयं तु जगति प्रौढो ममोपद्रवः। आशास्यं पुनरेतदेव यदिदं चक्षुश्चिरं वर्धतां येनेदं परिचीयतेऽम्बुजदृशः

---

१ अन्यतो लज्जाम्। २ मृत्युर्भावीति न वक्तुं शक्यम्, अमङ्गलत्वादिति भावः। ३ जलपूरपूर्णत्वादिदमुत्प्रेक्षितम्। ४ निश्चलं जडीभूतमिति यावत्। ५ प्रभातकालिकचन्द्र-। ६ भोज्याद्यास्वादे। ७ चन्द्रमसि कर्पूरे वा। ८ आह्लादः। ९ कस्तूर्याम्। १० कामवेगमसहमानाया दूत्याः सख्या वा पुरस्तात्स्वदशावेदनमिदम्। अतो युवा निषेव्य एव। ११ कमपि युवानमानयेति व्यङ्ग्यम्। १२ प्रवर्तते।

सौन्दर्यसारं वपुः ॥ ७ ॥ निःस्नेहः पतिरुज्झिता करुणया श्वश्रूरजस्रं वृथा वाग्बाणैर्हृदयं भिनत्ति कलहोत्तालाः पुनर्यातरः । नित्यं निन्दति नैव नन्दति कदाप्येषा ननान्दाऽपि तत् कं यायां शरणं भवेयमभया सम्प्राप्य यं कामदम् ॥ ८ ॥ किं स्वप्नः किमु जागरः किमथवा रात्रिः किमासीद्दिनं मोहावस्थितया मया न किमपि ज्ञातं किमेतत्सखि । यन्नामश्रवणादनन्तरमिदं वृत्तं तमेव प्रियं चेतो दुर्लभमप्यपास्तसकलव्यापारमाकाङ्क्षति ॥ ९ ॥

## दूतीमहिमा ।

अपूजितैवास्तु गिरीन्द्रकन्या किं पक्षापातेन मनोभवस्य । यद्यस्ति दूती सरसोक्तिदक्षा दासः पतिः पादतले वधूनाम् ॥ १ ॥

## दूतीप्रेषणम् ।

न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि । निपुणं तथैनमवगम्य वदेस्त्वरितं तेन समं च मेलय ॥ १ ॥ अयि दूति सखी त्वमेव मे मदनो हन्ति शितैः शिलीमुखैः । दयितं तमुपानयाशु तत् सुशक्तो जीवितनिर्गमोऽन्यथा ॥ २ ॥ ननु संदिशेति सुदृशोदितया त्रपया न किंचन किलाभिदधे । निजमैक्षि मन्दमनिशं निशितैः कृशितं शरीरमशरीरशरैः ॥ ३ ॥ कामः कुप्यति चन्द्रमा अपि बलान् मां दग्धुमभ्युद्यतो वाता वाऽपि समागता यमदिशः प्राणान्निहन्तुं तथा । रक्ताक्षास्त्वरयन्ति तान् परभृताः स्वैः कूजनैर्दूति तत् प्रेयांसं तमुपानयाऽऽश्वित-रथा त्राणं न मे कुत्रचित् ॥ ४ ॥ दिशि दिशि परिहासगूढगर्भाः पिशुनगिरो गुरुगञ्जनं च तादृक् । सहचरि हृदये निवेदनीयं भवदनुरोधवशादयं विपाकः ॥ ५ ॥ कामं दहन्तु मरुतो मलयाचलस्य चन्द्रोऽपि पातयतु वा नितरां स्फुलिङ्गान् । दूरे प्रियो विमलवंशमणिः पतिर्मे तत्साम्प्रतं त्वरितमानय तं कथञ्चित् ॥ ६ ॥ वृथा गाथाश्लोकैरलमलमलीकां मम रुजं कदाचिद्धूर्तोऽसौ कविवचनमित्याकलयति । इदं पार्श्वे तस्य प्रहिणु परिलग्नाञ्जनचयस्रवद्बाष्पोत्पीडस्थगितलिपि ताटङ्कयुगलम् ॥ ७ ॥ वाच्यं तस्मै सहचरि भवद्दूरविश्लेषवह्नौ स्नेहैरिद्धे मम वपुरिदं कामहोता जुहोति । प्राणानस्मै तदहमुचितां दक्षिणां दातुमीहे तत्रादेशो भवतु भवतां यत्त्वमेषामधीशः ॥ ८ ॥ जीवामीति वियोगिनी यदि लिखेदत्रैव वृत्ताः कथा अद्य श्वोऽथ मरिष्यतीति मरणे कालात्ययः किं कृतः । आगन्तव्यमिहेति संप्रति सखे संभावना निष्फला सद्यः संप्रति याहि नास्ति लिखितं तद्ब्रूहि यत्ते क्षमम् ॥ ९ ॥ उल्लङ्घ्यापि सखीवचः समुचितामुल्लङ्घ्य लज्जामलं भित्त्वा भीतिभरं निरस्य च निजं सौभाग्यगर्वं मनाक् । आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया त्वं निःशेषविलासिवर्गगणनाचूडामणिः संभृतः ॥ १० ॥ दूति त्वं तरुणी युवा स चपलः श्यामास्तमोभिर्दिशः संदेशः स रहस्य एव विपिने संकेतकावासकः । भूयो भूय इमे वसन्तमरुतश्चेतो नयन्त्यन्यथा गच्छ क्षेमसमागमाय निपुणे रक्षन्तु ते देवताः ॥ ११ ॥ सन्देशं मे गृहीत्वा कुवलयनयनं कान्तमभ्येऽषि दूति ! वासन्त्योऽमी त्रियामा मलयजपवनान्दोल्यमानाश्च वल्ल्यः । उच्चैर्गुञ्जन्ति भृङ्गाः सुममधुरमधुस्वादनेन प्रमत्तास्त्वं कान्ता च प्रगल्भा तदिति न युवयोर्जातुचित्स्यात्प्रसक्तिः ॥ १२ ॥

---

१ पतिभ्रातृपत्न्यः । २ पतिभगिनी । ३ प्रेम- ।

## नायकं प्रति दूतीवचनम्।

क्षणो दिनं दिनं मासो मासः संवत्सरं तथा। अयि कान्त भवत्सङ्गमन्तराऽस्याः प्रतीयते ॥ १ ॥ परस्मिन्नपि गोष्ठीषु कान्त त्वन्नाम्नि विश्रुते। सहसा सज्जकर्णाऽसौ जायते मृगलोचना ॥ २ ॥ सुभग त्वत्कथारम्भे कर्णकण्डूतिलालसा। उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साऽङ्गना ॥ ३ ॥ त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा। यथा ह्युदयभाजीन्दौ ग्लानिः कुमुदसंहतेः ॥ ४ ॥ सा सुन्दर तव विरहे सुतनुरियन्मात्रलोचना सपदि। एतावतीमवस्थां याता दिवसैरियन्मात्रैः ॥ ५ ॥ विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम्। दारुणव्यवसायस्य पुरस्ते भणितेन किम् ॥ ६ ॥ तव विरहे विधुवदना मदनाधिक का न सीदन्ति। सीदसि विरहे यस्याः साधु तपस्याफलं तस्याः ॥ ७ ॥ अनयनपथे प्रिये न व्यथा यथा दृश्य एव दुःप्रापे। म्लानैव केवलं निशि तपनशिला वासरे ज्वलति ॥ ८ ॥ प्राणेश तव विरहिणी हिमकरकिरणेषु हर्म्यमिलितेषु। संतापनिःसहाङ्गी मुञ्चति निचयं चकोराणाम् ॥ ९ ॥ श्वासान् मुञ्चति दीर्घान् पश्यति शून्याः समन्ततश्चाशाः। जपति च तवैव नामाक्षरमन्त्रं नैव भाषते चान्यत् ॥ १० ॥ भवता मदनो विजितस्तेन च निहताऽबलाबलात् सुमुख। अथ यदि शरणं भुवनत्रये भवान् केवलो दयितः ॥ ११ ॥ सा सर्वथैव रक्ता रागं गुञ्जेव न तु मुखे वहति। वचनपटोस्तव रागः केवलमास्ये शुकस्येव ॥ १२ ॥ न सवर्णो न च रूपं न संस्क्रिया नैव सा प्रकृतिः। बाला त्वद्विरहापदि जातापभ्रंशभावेव ॥ १३ ॥ सा विरहदहनदूना मृत्वा मृत्वापि जीवति वराकी। सारीव कितव भवताऽनुकूलिता पातिताक्षेण ॥ १४ ॥ गायति गीते शंसति वंशे वादयति सा विपञ्चीषु। पाठयति पञ्जरशुकं तव संदेशाक्षरं रामा ॥ १५ ॥ तव विरहमसहमाना सा तु प्राणान्विमुक्तवती। किंतु तथाविधमङ्गं न सुलभमिति ते न मुञ्चन्ति ॥ १६ ॥ अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः। सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥ १७ ॥ त्वद्विरहे विस्तारितरजनौ जनितेन्दुचन्दनद्वेषे। बिसिनीव माघमासे विना हुताशेन सा दग्धा ॥ १८ ॥ या दक्षिणा त्वमस्यामदक्षिणो दक्षिणस्तदितरस्याम्। जलधिरिव मध्यसंस्थो न वेलयोः सदृशमाचरसि ॥ १९ ॥ अनुरागवर्तिना तव विरहेणोग्रेण सा गृहीताङ्गी। त्रिपुररिपुणेव गौरी वरतनुरर्धावशिष्टैव ॥ २० ॥ अगणितगुणेन सुन्दर कृत्वा चारित्रमप्युदासीनम्। भवताऽनन्यगतिः सा विहितावर्तेन तरणिरिव ॥ २१ ॥ कितव प्रपञ्चिता सा भवता मन्दाक्षमन्दसंचारा। बहुदायैरपि संप्रति पाशकसारीव नायाति ॥ २२ ॥ रुष्टे का परपुष्टे मन्दे का हन्त मारुते चर्चा। त्वयि गतवति हृदयेशे जीवनदाताऽपि जीवनं हरति ॥ २३ ॥ कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम्। पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥ २४ ॥ त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्। आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥ २५ ॥

---

१ समूहस्य। २ मदनादपि अधिकसौन्दर्यशालिन्। ३ येभ्य ते हिमकरकिरणान्निपिबेयुरिति भावः। ४ प्रेमा रक्तिमा च। ५ वियोगाग्निना संतापिता। ६ धूर्त। ७ वीणासु। ८ वज्र-। ९ अनुकूला अनुरक्तेति यावत्। १० नौकेव। ११ धूर्त। १२ कोकिले। १३ जल-। प्राण-। मेघ ईश्वरश्चेति भावः।

उद्धूयेत नतभ्रूः पक्ष्मनिपातोद्भवैः पवनैः । इति निर्निमेषमस्या विरहवयस्या विलोकते वदनम् ॥ २६ ॥ तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम् । हन्त नितान्तमिदानीमाः किं हतजल्पितैरथवा ॥ २७ ॥ तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः । हृदयमरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥ २८ ॥ स्मरशरशतविधुराया भणामि सख्याः कृते किमपि । क्षणमिह विश्राम्य सखे निर्दयहृदयस्य किं वदाम्यथवा ॥ २९ ॥ व्यजनं व्यंजनं[1] जलं जंलं[2] घनसारो[3] घनसार[4] इत्यपि । अवरोधगृहेषु सुभ्रुवां कुररीणामिव कातरो ध्वनिः ॥ ३० ॥ तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः । घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥ ३१ ॥ मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति । त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥ ३२ ॥ उपताप्यमानमलघूर्णिमभिः[5] श्वसितैः सितेतरसरोजदृशः । द्रवतां न नेतुमधरं क्षमते नवनागवल्लिदलरागरसः ॥ ३३ ॥ दधति स्फुटं रतिपतेरिषवः शिततां[6] यदुत्पलपलाशदृशः[7] । हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥ ३४ ॥ कुसुमादपि स्मितदृशः[8] सुतरां सुकुमारमङ्गमिति नापरथा[9] । अनिशं निजैरकरुणः करुणं कुसुमेषुरुत्तपति यद्विशिखैः ॥ ३५ ॥ विषतां निषेवितमपक्रियया[10] समुपैति सर्वमिति सत्यमदः[11] । अमृतस्रुतोऽपि[12] विरहाद्भवतो यदमू दहन्ति हिमरश्मिरुचः ॥ ३६ ॥ उदितं प्रियां प्रति सहार्दमिति श्रदधीयत प्रियतमेन वचः । विदितेङ्गिते हि पुर एव जने समुदीरिताः खलु लगन्ति गिरः ॥ ३७ ॥ त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता । पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव[13] कामः ॥ ३८ ॥ क्षणमपि विरहः पुरा न सेहे नयननिमीलनखिन्नया[14] यया ते । श्वसिति कथमसौ रसालशाखां[15] चिरविरहेण विलोक्य पुष्पिताग्राम् ॥ ३९ ॥ सखि दयितमिहानयेति सा मां प्रहितवती[16] कुसुमेषुणाऽभितप्ता । हृदयमहृदया[17] न नाम पूर्वं भवदुपकण्ठमुपागतं[18] विवेद ॥ ४० ॥ चिरमपि कलितान्यपारयन्त्या परिगदितुं परिशुष्यता मुखेन । गतघृण[19] गमितानि तत्सखीनां नयनयुगैः सममार्द्रतां मनांसि ॥ ४१ ॥ अचकमत सपल्लवां धरित्रीं मृदुसुरभिं विरहय्य पुष्पशय्याम् । भृशमरतिमवाप्य[20] तत्र चास्यास्तव सुखशीतमुपैतुमङ्कमिच्छा ॥ ४२ ॥ हारावशेषा ननु कण्ठनाला त्वन्नामशेषा रसना[21] तदीया । लावण्यशेषा तनुगात्रयष्टिस्त्वद्ध्यानशेषं परमं तदायुः ॥ ४३ ॥ तस्या महाविरहवह्निशिखाकलापतप्ते[22] स्थितोऽसि हृदये सततं[23] प्रियायाः । प्रालेयसीकरसमे[24] हृदि सा कृपालो बाला क्षणं वसति नैव खलु त्वदीये ॥ ४४ ॥ अङ्गानि मे दहतु कान्तवियोगवह्निः संरक्ष्यतां प्रियतमो हृदि वर्तते यः । इत्याशया शशिमुखी गलदश्रुबिन्दुधाराभिरुष्णमभिषिञ्चति हृत्प्रदेशम् ॥ ४५ ॥ मृणालीव क्षमा तदपि तव साहाय्यविधुरा

---

१ विरुद्धसञ्चारि । २ जडम् अनुपयोगित्वात् । ३ कर्पूरम् । ४ विद्युत् । ५ प्रवृद्धोष्मभिः । ६ तीक्ष्णताम् । ७ कमलपत्रनेत्रायाः । ८ प्रसन्नदर्शनायाः । ९ अन्यथा । १० दुष्प्रयोगेण । ११ इत्यदः सर्वं वचनं सत्यम् । १२ अमृतवाहिन्यः । १३ दीर्घद्वेषादिव । 'अथानुशयो दीर्घद्वेषानुतापयोः ।' इत्यमरः । द्वेषदैर्घ्यं पुनस्त्वयि तज्जेतरि तस्या अनुरागेण भवनमेव । १४ नयनयोर्निमीलनमात्रमपि किमदर्शनमिति पुरा खेदमनुभूतवत्या । १५ अतिसुरभिताम्र- । १६ प्रेषितवती । १७ अविवेकनी । १८ कण्ठसमीपम् । १९ निर्दय । २० खेदम् । २१ जिह्वा । २२ पुञ्ज । २३ निरन्तरम् । २४ हिमकण- ।

मुहुः स्मारैर्बाणैर्गरलनिभृतैस्ताडिततरा । व्रजत्येषा मूर्च्छामथ यदि न तामेत्य सहसा विदध्यास्तद्रक्षां कथमिव भवित्री स्मर मनाक् ॥ ४६ ॥ राकासुधाकरकरैर्नलिनीदलैश्च नीहारहारघनसारभरैः किमेतैः । किं वा भयेन हरिचन्दनपङ्कसेकैर्न त्वां विना मृगदृशः परितापशान्तिः ॥ ४७ ॥ त्वामञ्जनीयति कलासु विलोकयन्ती त्वां शृण्वती कुवलयीयति कर्णपूरम् । त्वां पूर्णिमाविधुमुखी हृदि भावयन्ती वक्षोनिलीननवनीलमणीकरोति ॥ ४८ ॥ अविरलपरिवाहैरश्रुणः सारणीनां स्मरदहनशिखोष्णश्वासपूरैश्च तस्याः । सुभग बत कृशाङ्ग्याः स्पर्धयान्योन्यमेभिः क्रियत इव पुरोभूः पङ्किला पांसुला च ॥ ४९ ॥ स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः सुभग तव कथायां प्रस्तुतायां सखीभिः । भवति विततपृष्ठोदस्तपीनस्तनाग्रा ततवलयितबाहुर्जृम्भितैः साङ्गभङ्गैः ॥ ५० ॥ विपुलपुलकपालि स्फीतसीत्कारमन्तर्जनितजडिम काकुव्याकुलं व्याहरन्ती । तव कितव विधायामन्दकंदर्पचिन्तारसजलनिधिमग्ना ध्यानलग्ना मृगाक्षी ॥ ५१ ॥ अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि ध्यानमुद्रा कण्ठे जीवः करकिसलये दीर्घशायी कपोलः । अंसे वेणी कुचपरिसरे चन्दनं वाचि मौनं तस्याः सर्वं स्थितमपि न तु त्वां विना क्वापि चेतः ॥ ५२ ॥ किं पृष्टेन द्रुततरमितो गम्यतां सा प्रिया ते दृष्टा मार्गे दिवसमखिलं सास्रमेका मयैव । पान्थे पान्थे त्वमिति रभसोद्ग्रीवमालोकयन्ती दृष्टे दृष्टे न भवति भवानित्युदश्रुर्वलन्ती ॥ ५३ ॥ चित्रोत्कीर्णादपि विषधराद् यद्भयार्त्ता पुराऽसीत् किंनु ब्रूयां त्वदभिसरणे साहसं नाथ तस्याः । मेघच्छन्ने रजनितमसा संहृताशेषदृष्टौ नीला भूयेयमिति भुजगं हस्तसात्स्ताद् व्यधात्सा ॥ ५४ ॥ यावद्यावद्भवति कलया पूर्णकामः शशाङ्कस्तावत्तावद्द्युतिमयवपुः क्षीयते सा मृगाक्षी । मन्ये धाता घटयति विधुं सारमादाय तस्यास्तस्माद्यावन्न भवति सखे पूर्णिमा तावदेहि ॥५५ ॥ हस्ताम्भोजे वदनमलकानायतान्बाहुमूले द्वारि स्वैरं नयनमधरे तर्जनीं संनिधाय । दीर्घोच्छ्वासं विरतविषयास्वादमुत्कण्ठितोष्णं मुग्धाक्षी त्वां हृदि विदधती बाष्पमाविष्करोति ॥ ५६ ॥ आद्यः कोपस्तदनु मदनस्त्वद्वियोगस्तृतीयः शान्त्यै दूतीवचनमपरः पञ्चमः शीतभानुः । इत्थं बाला निरवधि परं त्वां फलं प्रार्थयन्ती हा हा पञ्चज्वलनमधुना सेवते योगिनीव ॥ ५७ ॥ आलेख्यस्थं कमलनयन त्वां कथञ्चिद्विधाय यावन्नेत्रे सफलजनुषी सेहते संविधातुम् । तावत्ताभ्यां वहति विमलो हन्त पूरः सुदीर्घः पातुर्द्रष्टुर्व्यवहृतिरियं भाग्यचक्रानुसर्त्री ॥ ५८ ॥ प्रादुर्भूते नवजलधरे त्वत्पथं द्रष्टुकामाः प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति । अन्यत्किं वा तव मुखविधुं द्रष्टुमुड्डीय गन्तुं वक्षः पक्षं सृजति बिसिनीपल्लवस्य च्छलेन ॥ ५९ ॥ अभ्रध्वानैर्मुखरितदिशः श्रेणयस्तोयदानां धारासारैर्धरणिवलयं सर्वतः प्लावयन्ति । तेन स्नेहं वहति विपुलं मत्सखी युक्तमेतत्त्वं निःस्नेहो यदसि तदिदं नाथ मे विस्मयाय ॥ ६० ॥ गलत्येका मूर्च्छा भवति पुनरन्या यदनयोः किमप्यासीन्मध्ये सुभग सकलायामपि निशि । लिखन्त्यास्तत्तस्याः कुसुमशरलेखं तव कृते समाप्तिं स्वस्तीति प्रथमपदभागोऽपि न गतः ॥ ६१ ॥ गृहीतं ताम्बूलं परिजनवचोभिः कथमपि स्मरत्यन्तःशून्या सुभग तव मूर्तिं प्रतिदिनम् । तथैवास्ते हस्तः कलितफणिवल्लीकिसलयस्तथैवासीत्तस्याः क्रमुकफलफालीपरिचितम् ॥ ६२ ॥ प्रभो याचे भिक्षां बत नतशिरास्त्वामहमिदं

---

१ पीडा- । २ उत्क्षिप्त- । ३ रोमाञ्च- । ४ समीपे । ५ त्वदुपागमभ्रान्त्या झटित्युत्थापितग्रीवम् । ६ प्रवृद्धाश्रुवेगा । ७ चलन्ती । ८ लावण्यमात्रावशिष्टशरीरत्वात् । ९ चूर्णकुन्तलान् । १० पञ्चाग्नितपश्चर्याम् ।

न चेदस्ति प्रीतिः कुरु तदपि कारुण्यमधुना । जपन्ती त्वां प्राणांस्त्यजति बत सा मुग्धहृदया तदभ्येत्येदानीं वितर नयने तत्र सुकृतिन् ॥ ६३ ॥ विमुञ्चन्त्या प्राणांश्चिरविरहदुःखासहनया तया सन्दिष्टं ते सुकृतिवरमौलेश्चरणयोः । अपत्यं बालैका मम विधिहतायाः सलिलदा भवित्रीयं तस्मात् कथमपि विवर्ध्योऽत्रभवता ॥ ६४ ॥ न हारं नाहारं कलयति विहारं विषमिव स्मरन्ती सा रामा सुभग भवतश्चागमे[1]दिनम् । पैरं[2] क्षीणा दीना परमसुखहीना सुवदना कुहूपक्षग्लौ[3]वच्चपलनयनाऽङ्गीकृतगतिः[4] ॥ ६५ ॥ क्षणं मूर्च्छा[5]मेति भ्रमति परितोऽथ क्षणमपि क्षणं प्रैति स्तम्भं निरवधिभवद्ध्याननिरता । क्षणं स्वप्ने बाला तव सुभग योगं च लभते क्षणं तेजः शंभोर्नयनजं[6]मथ ध्यायति यमम्[7] ॥ ६६ ॥ कुसुमशयनेऽप्यङ्गं ताम्यत्यनङ्गविवर्तनं वदनपवनैः श्यामच्छायो बभूव सखीजनः । हृदयनिहितः शीतो लेपश्छमीति[8] रवं करोत्यहह[9] कठिनाऽवस्था तस्यास्त्वयैवमुपेक्ष्यते ॥ ६७ ॥ विरहविषमः कामः कामं तनुं कुरुते तनुं दिवसगणनादक्षश्चायं व्यपेतघृणोपमः । त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे किसलयमृदुर्जीवत्येवं कथं प्रमदाजनः ॥ ६८ ॥ मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते दहनपतिता दृष्टा मूर्तिर्मया न हि वैधवी[10] । इति तु विदितं नारीरूपः स लोकदृशां सुधा तव शठतया[11] शिल्पोत्कर्षो[12] विधेर्विघटिष्यते ॥ ६९ ॥ मुहुर्व्यजनवीजनैः सरसचन्दनासेचनैः सरोजदलवेष्टनैरपि न चेष्टते सुन्दरी । तथापि तव नामनि प्रियसखीभिरावेदिते निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥ ७० ॥ गेहादङ्गणमङ्गणादपि बहिर्बाह्याच्च पृथ्वीतलं तामार्ति यदि वेत्ति सैव सुमुखी किं चान्यदाचक्ष्महे । पर्यङ्केऽपि तवाङ्गसङ्गसुभगैः स्वेदाम्भसां निर्झरैर्धारामण्डपतामनीयत तया तस्मिन्नुदत्या मुहुः ॥ ७१ ॥ दृष्टे चन्द्रमसि प्रनष्टतमसि व्योमाङ्गणस्थेयसि स्फूर्जन्निर्मलतेजसि त्वयि गते दूरं निजप्रेयसि । श्वासं कैरव[13]कोरकीयति मुखं तस्याः सरोजीयति[14] क्षीरोदीयति[15] मन्मथो मृगदृशो दृक्चन्द्रकान्तीयति[16] ॥ ॥ ७२ ॥ आवासो विपिनायते प्रियसखीमालापि जालायतेतापो निःश्वसितेन दावदहनज्वालाकरालायते । सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं कन्दर्पोऽपि यमायते विरचयञ्शार्दूलविक्रीडितम ॥ ७३ ॥ निःश्वासा अपि मन्दतां बत गताः को हन्त वाचां क्रमस्ते ते दर्शनविभ्रमा अपि हताः सञ्चारशैली क्व सा । श्रोण्योर्वा स्तनयोः पृथुत्वमगमत् कुत्रोदरं तत् पुनस्त्वत्पादैकगतेर्दशेयमधुना देवः प्रमाणं पुनः ॥ ७४ ॥ अच्छिन्नं नयनाम्बु[17] बन्धुषु कृतं तापः सखीष्वा[18]हितो दैन्यं न्यस्तमशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता । अद्य श्वः किल निर्वृतिं व्रजति सा श्वासैः परं खिद्यते[19] विश्रब्धो[20] भव विप्रयोगजनितं दुःखं विभक्तं

---

१ आगमन-। २ अत्यन्तम् । ३ कृष्णपक्षीयचन्द्रवत् । 'स्यान्नष्टेन्दुकला कुहूः' इत्यमरोक्त्या कुहूरमावास्याविशेषस्तत्प्रधानः पक्षः कृष्णपक्षः, तस्य ग्लौः चन्द्रः तद्वत् । ४ शनैः शनैः कार्श्यासादनरूपां गतिमङ्गीकृत्य स्थितेत्यर्थः । ५ निश्चेष्टत्वम् । ६ मदनदाहकत्वादेतद्ध्यानम् । ७ एतद्ध्यानं स्वप्राणजिहासया । ८ इदं तप्तोपरि पात्यमानजलध्वनेरनुकरणम् । ९ इदं कष्टावेदने । १० विधु- ( चन्द्र ) सम्बन्धिनी । ११ मूर्खतया । १२ निर्म्माणातिशयः । १३ उद्गमातिशयसाधर्म्येण ।१४ म्लानत्वसाधर्म्येण । १५ दुस्तरत्वेन प्रवृद्धत्वेन वा । १६ निपतज्जलत्वेनेति बोध्यम् । १७ बन्धुजनो हि बन्धुजनपीडाऽतिशये रोदित्येवेति, मरण आसन्ने च अश्रुपातादयो हि लीयन्ते इति च तथोक्तिः । १८ स्थापितः, बन्धुवियोगजशोकातिशयात् । एतेन सम्प्रति तस्याः श्वासोऽपि मन्दतां गतः । अन्तिमायामवस्थायां ह्येतत्सम्भवति । एवं परत्रापि । १९ श्वासस्य सर्वथाऽनिर्गमात् । २० निश्चिन्तः सुखी वा ।

तया ॥ ७५ ॥ त्वच्चिन्तापरिकल्पितं सुभग सा संभाव्य रोमाञ्चिता शून्यालिङ्गनसंचलद्भुजयुगेनात्मानमालिङ्गति । किं चान्यद्विरहव्यथाप्रशमनीं संप्राप्य मूर्च्छां चिरात्प्रत्युज्जीवति कर्णमूलपठितैस्त्वन्नाममन्त्राक्षरैः ॥ ७६ ॥ नीरागा मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे त्रस्ता कोकिलकूजितादपि गिरं नोन्मुद्रयत्यात्मनः । चित्रं दुःसहदाहदायिनि धृतद्वेषाऽपि पुष्पायुधे सा बाला सुभगं प्रति प्रतिपदं प्रेमाऽधिकं पुष्यति ॥ ७७ ॥ उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय । इत्थं वञ्जुल[१]दक्षिणानिल[२]कुहू[३]कण्ठेषु साङ्केतिकव्याहाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥ ७८ ॥ वर्षन्ति स्तनयित्नवो न सरले धारा गृहे वर्तते गर्जन्ति प्रतिकूलवादिनि न ते द्वारि स्थिता दन्तिनः । इत्येवं गमितो घनव्यतिकरः सा राजपुत्री पुनर्वातो वाति कदम्बपुष्पसुरभौ केन प्रतारिष्यते ॥ ७९ ॥ संप्राप्तेऽवधिवासरे क्षणमनु त्वद्वर्त्मवातायनं वारंवारमुपेत्य निष्क्रपतया निश्चित्य किंचिच्चिरम् । संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभिः शिशोर्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः ॥ ८० ॥ नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वरस्तेनाहं विहिताञ्जलिः सुभग सम्पृच्छामि सत्यं वद । ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते स्यादत्रैव परत्र तत्किमुचितज्वालावलीदुःसहम् ॥ ८१ ॥ श्वासान्मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते दीर्घं रोदिति निक्षिपत्यविरतं क्षामां भुजावल्लरीम् । किं च प्राणसमान काङ्क्षितवती स्वप्नेऽपि ते संगमं निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥ ८२ ॥ कोदण्डो विशिखो मनो निवसतिः कामस्य तस्या अपि भ्रूवल्ली नयनाञ्चलं मनसि ते वासः समुन्मीलति । इत्थं साम्यविधौ तयोः प्रभवति स्वामिंस्तथा स्निह्यतां तन्वाना तनुतां क्रमादतनुतां नैषा यथा गच्छति ॥ ८३ ॥ शोकोत्पत्तिरशोकतः[५] सुमनसो[६] यद्दौमनस्योदयो वैरस्यं च रसालतो[७] विकलता तावत्कलानां निधेः[८] । किं चान्यन्नलदो[९] भवत्यनलदो[१०] निर्णीतमुन्नीयते वामः केवलमेक एव न भवान्नस्या[११]मशेषं जगत् ॥ ८४ ॥ नैष्ठुर्यं कल[१२]कण्ठकोमलगिरां पूर्णस्य शीतद्युतेस्तिग्मत्वं बत दक्षिणस्य मरुतो दाक्षिण्यहानिश्च ताम् । स्मर्तव्याकृतिमेव कर्तुमबलां संनाहमातन्वते तद्विघ्नैः[१३] क्रियते तृणादिचलनोद्भूतैस्त्वदाप्तिभ्रमैः ॥ ८५ ॥ विद्वन्नास्ति निवेदनं तव पुरो यद्भावि तत् नान्यथा दोषस्तेन तवापि कः परुषता युक्तैव ते चेतसि । किं त्वेषा प्रकृतेरतीव सरला त्वन्न्यस्तचित्ताऽबलाऽधीरा मुग्धमतिः प्रयाति सलिलं देयं त्वयेत्यर्थ्यते ॥ ८६ ॥ या चन्द्रस्य कलङ्किनोजनयति स्मेराननेन त्रपां वाचा मन्दिरकीरसुन्दरगिरो या सर्वदा निन्दति । निःश्वासेन तिरस्करोति कमलामोदान्वितान्याऽनिलान्सा तैरेव रहस्त्वया विरहिता कांचिद्दशां नीयते ॥ ८७ ॥ चन्द्रं चन्दनकर्दमेन लिखितं संमार्ष्टि

---

१ वञ्जुल उन्मीलन्ति चेन्नखैर्लुनीहि । २ दक्षिणानिलो वहति चेत् क्षौमाञ्चलेनावृणु । ३ कुहूकण्ठाः कूजन्ति चेद्वलयक्वाणैस्त्रासयेत्यर्थः । साक्षात्कथनाभावस्त्वत्र तावताऽपि वेदनातिशयसम्भावनात् । ४ चन्दनम् । ५ वृक्षविशेषात् । ६ पुष्पात् । ७ आम्रात् । ८ चन्द्रमसः । ९ सौगन्ध्यसम्भवभूमिरुशीरादिः । 'नलदं स्यात्पुष्परसोशीरमांसीषु न द्वयोः ।' इति मेदिनी ।१० अग्निदाता । कामसन्तापवर्धकत्वात् ।११ त्वदेकतानचित्तत्वात् ।१२ कोकिल-। १३ एतेन तव सम्प्रत्यपि दर्शने सा जीवेदेवेति द्योतितम् ।

दष्टाधरा कामः पुष्पशरः किलेति सुमनोवर्गं[1] लुनीते[2] च यत् । वन्द्यं निन्दति यच्च मन्मथमसौ भङ्क्त्वाऽग्रहस्ताङ्गुलीस्तत्कामं सुभग त्वया वरतनुर्वातूलतां[3] लम्भिता[4] ॥ ८८ ॥ तापोऽम्भः-प्रसृतिंपचः प्रचयवान्बाष्पः प्रणालोचितः श्वासाः कम्पितदीपवर्तिकलिकाः पाण्डिम्नि मग्नं वपुः । किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने हस्तच्छन्ननिरुद्धचन्द्रमहसस्[5]तस्याः स्थिति[6]र्वर्तते ॥ ८९ ॥ बिभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं शल्यं यद्विदधाति सा विधुरिता[7] साधो तदाकर्ण्यताम्[8] । शेते शुष्यति ताम्यति[9] प्रलपति प्रम्लायति प्रेङ्खति[10] भ्राम्यत्युल्लुठति[11] प्रणश्यति[12] गलत्युन्[13]मूर्च्छति त्रुटयति[14] ॥ ९० ॥ कार्श्यं चेत्प्रतिपत्कलाहिमरुचः स्थूलैव चेत्पाण्डिमा लीना एव मृणालिका यदि पुनर्बाष्पः कियानम्बुधिः । संतापो यदि शीतलो हुतवहस्तस्याः कियद्वर्ण्यतां किं तु त्वत्स्मृतिमात्रमेव शरणं लावण्यशेषं वपुः ॥ ९१ ॥ सौधाद्[15]उद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं[16] द्वारात्त्रस्यति चित्रकेलिसदसो वेशं[17] विषं मन्यते । आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले संकल्पोपनमत्त्वदाकृतिरसायत्तेन चित्तेन सा ॥ ९२ ॥ सा न स्नाति न चानुलिम्पति न वा केशेषु धत्ते स्रजं[18] न क्रीडासु मनो दधाति न सखीरालोकते चाटुषु[19] । किं तु न्यस्य मुखाम्बुजं करतले बाष्पायमाणेक्षणं निःश्वासग्लपिताधरं च शयने जागर्ति ते चिन्तया ॥ ९३ ॥ सा रोमाञ्चति सीत्करोति विलपत्युत्कम्पते ताम्यति ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्छत्यपि । एतावत्यतनुज्वरे[20] वरतनुर्जीवेन्न किं ते रसात्स्वर्वैद्यप्रतिमे[21] प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः ॥ ९४ ॥ कन्दर्पज्वरसंज्वराकुलतनोराश्चर्यमस्याश्चिरं चेतश्चन्दनचन्द्रमःकमलिनीचिन्तासु संताम्यति । किं तु क्षान्तिवशेन शीतलतनुं त्वामेवमेकं प्रियं ध्यायन्ती रहसि स्थिता कथमसौ क्षीणा क्षणं प्राणिति[22] ॥ ९५ ॥ अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि संचारिणि प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति । इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यासक्ताऽपि विना त्वया वरतनुर्नैषा निशां नेष्यति[23] ॥ ९६ ॥ आलम्ब्याङ्गणवापिकापरिसरे चूतद्रुमे मञ्जरीं सर्पत्सान्द्रपरागलम्पटरणद्भृङ्गाङ्गनाशोभिनीम् । मन्ये त्वां तनुमुत्तरीयशकलेना[24]च्छाद्य बाला स्फुरत्कण्ठध्वाननिरोधकम्पितकुचश्वासोद्गमा रोदिति ॥ ९७ ॥ चित्राय त्वयि चिन्तिते स्मृतिभुवा[25] सज्जीकृतं स्वं धनुर्वर्तिं धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः । प्रारब्धे तव चित्रकर्मणि पुनस्तद्बाणभिन्ना सती भित्तिं द्रागवलम्ब्य जीवितपते सा तत्र चित्रायते ॥ ९८ ॥ आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासितप्रोत्सर्पद्विरहानलेन च ततः संतापितानां दशाम् । संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो भल्लीनामिव[26] पानकर्म[27] कुरुते कामं कुरङ्गेक्षणा ॥ ९९ ॥ ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः कर्पूरं कदली मृणालवलयान्यम्भोजिनी-

---

१ पुष्पराशिम् । २ खण्डयति । ३ वात्यारूपताम् । ४ प्रापिता । ५ कान्ति- । चन्द्रकरस्पर्शस्य दुःसहत्वात् । ६ दशा । ७ वियोगार्दिता । ८ श्रूयताम् । ९ विषीदति । १० त्वदागमनभ्रमाच्चलति । ११ पार्श्वपरिवर्तनं करोति । १२ कृशिमातिशयेन । १३ स्रवतीत्यभिप्रायः । १४ खण्डितेव भवति । १५ सौधस्यापि श्वेतिम्ना तादृशचित्रादिना च मदनोद्दीपकत्वात् । १६ चन्द्रसम्बन्धिनीम् । १७ प्रवेशम् । १८ मालाम् । १९ प्रियोक्तिषु । २० कामसन्तापे प्रवृद्धसन्तापे च । २१ अश्विनीकुमारवत् पीयूषपाणे । २२ एतस्यामवस्थायां प्राणनासम्भवेऽपि प्राणनमित्याश्चर्यम् । २३ किंतु प्राणांस्त्यक्ष्यत्येव । २४ खण्डेन । २५ कामदेवेन । २६ बाणविशेषाणाम् । २७ लोके हि तीक्ष्णाग्रतायै शस्त्रं पङ्केन लिप्त्वाऽग्नौ प्रताप्य जले यन्न्यस्यते तत्पानकर्म ।

पल्लवाः । अन्तर्मानसमीस्त्वया प्रभवता तस्याः स्फुलिङ्गोत्करव्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ १०० ॥ पाणिर्नीरवकङ्कणः स्तनतटी निष्कम्पमानांशुका दृष्टिर्निश्चलतारका समभवन्निस्ताण्डवं कुण्डलम् । कश्चित्रार्पितया समं कृशतनोर्भेदो भवेन्नो यदि त्वन्नामस्मरणेन कोऽपि पुलकारम्भः समुज्जृम्भते ॥ १०१ ॥ दत्तोऽस्याः प्रणयस्त्वयैव भवता चेयं चिरं लालिता दैवादद्य किल त्वमेव कृतवानस्या नवं विप्रियम् । मन्युर्दुःसह एष यात्युपशमं नो सान्त्ववादैः स्फुटं हे निस्त्रिंश वियुक्तकण्ठकरुणं तावत्सखी रोदितु ॥ १०२ ॥ चूडारत्नमपां निधिर्यदि भवेच्चेत्कुन्तलं गण्डकी कावेरी यदि कङ्कणं यदि पुनर्ग्रैवेयकं गौतमी । मुक्ता स्रक्सुरनिम्नगा यदि यदि स्यान्मेखला नर्मदा कौशेयं यदि कौशिकी कृशतनोस्तापस्तदाप्येति वा ॥ १०३ ॥ पीयूषाकरमालतीमलयभूमुख्या मताः शीतला हन्तामी अपि तीव्रदाहकतया जाता ममाशान्तये । तन्मन्ये सुभग त्वमेव शरणं वैद्यस्त्वैवं करस्पर्शो भेषजमित्यनुग्रहदृशा तां साम्प्रतं जीवय ॥ १०४ ॥

## संदेशप्रेषणप्रशंसा ।

सुरक्तौ चेद्वियुज्येतां कदाचन विधेर्वशात् । तयोरन्योऽन्यसन्देशस्तदैकमवलम्बनम् ॥ १ ॥ वियोगे प्रेमिणोराशा मूलं वृत्तं प्रसूनवत् । अतस्तदवनोपायोः मिथः सन्देशबोधनम् ॥ २ ॥

## कान्तायाः सन्देशप्रेषणम् ।

यथा कुमुदिनी[5] चन्द्रं[1] चक्रवाकी[6] विभाकरम्[7] । ततःप्रभृति कान्त त्वां चिन्तयामि तथाऽनिशम् ॥१॥ अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता । नादृष्टेन च दृष्टेन भवता विद्यते सुखम्[1] ॥ २ ॥ आलीभिः सह भाषितं किमपि तद्वर्त्मापि संवीक्षितं पञ्चेषुः[4] कुसुमैरपूजि कथमप्याधाय चित्ते मनाक् । तेनापि प्रिय चेत्तथा मयि कृपा कार्पण्यमालम्बसे प्राणेश प्रबलं तदत्र निखिलं तत्प्रातिकूल्यं विधेः ॥३॥ नित्यं ब्रह्म यथा स्मरन्ति मुनयो हंसा यथा मानसं सानन्दाः स्फुटशल्लकीवनयुतां ध्यायन्ति रेवां गजाः । युष्मद्दर्शनलालसाः प्रतिदिनं युष्मान्स्मरामो वयं धन्यः कोऽपि स वासरोऽत्र भविता यत्रावयोः संगमः[3] ॥ ४ ॥ इन्दुं कैरविणीव कोकपटलीवाम्भोजिनीबान्धवं मेघं चातकमण्डलीव मधुपश्रेणीव पुष्पाकरम्[8] । माकन्दं[9] पिकसुन्दरीव[10] तरुणी प्राणेश्वरं प्रोषितं[11] चेतोवृत्तिरियं मम प्रियसखे त्वां द्रष्टुमुत्कण्ठते ॥ ५ ॥ नाथ त्वद्विरहे सुधानिधिरपि क्ष्वेडालयो भाव्यते शीतो दक्षिणमारुतोऽपि बत हा ज्वालाऽवलीढायते । चेतोहार्य्यपि सौरभं सुमनसां दुर्हृत्प्रसङ्गोपमं किं भूयो निगदेयमेतदसवोऽप्येतेऽद्य भाराय मे ॥ ६ ॥

## कान्तस्य संदेशः ।

स्मर्तव्योऽहं त्वया कान्ते न स्मरिष्याम्यहं तव । स्मरणं चेतसो धर्मस्तच्चेतो भवता हृतम् ॥ १ ॥ त्वया मम समेतस्य कल्पा अपि समासमाः । भवता विप्रयुक्तायाः कल्पकल्पः क्षणोऽपि मे ॥ २ ॥ त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे । दिनावसाने[12] छायेव पुरो मूलं वनस्पतेः[13] ॥ ३ ॥ यतः प्रभृति[14] ते कान्तं मुखमालोकितं मया । कामः कामं ममाङ्गानि व्यथ-

---

१ इदं खेदातिशये । २ रोमाञ्च- । ३ तथा च यथाऽर्द्धनारीश्वरवत् चन्द्रज्योत्स्नावदेव वाऽऽवयोरप्रतिहतः सङ्गः साम्प्रतम् । ४ कन्दर्पः । ५ कुमुदिनीव । ६ चक्रवाकसमूहः । ७ सूर्यम् । ८ वसन्तम् । ९ सहकारम् । १० कोकिला । ११ देशान्तरं प्रति गतम् । १२ सायंसन्ध्यायाम् । १३ वृक्षस्य । १४ यं क्षणमारभ्य ।

यत्यभितः शरैः ॥ ४ ॥ किमकारि मन्दमतिना रतिपतिना कामतन्त्रनिपुणेन । स्यूतासि हरिणनयने हन्त हृदि स्नेहतन्तुना न तनौ ॥ ५ ॥ तपति तनुगात्रि[1] मदनस्त्वामनिशं मां पुनर्दहत्येव । ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ ६ ॥ कृष्णा[2] ते कचसंहतिरम्बुजनयने तवाधरः शोणः[3] । त्वं सुरतरङ्गिणी[4] कथमभितस्तापी[5] न ते वियोगः स्यात् ॥ ७ ॥ दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे । हंस इव दर्शिताशो[6] मानसजन्मा[7] त्वया नीतः ॥ ८ ॥ स्निग्धमालप सुरूक्षमेव वा त्वत्कथैव सखि मे रसायनम् । शीतलं सलिलमुष्णमेव वा पावकं हि शमयेदसंशयम् ॥ ९ ॥ स्वप्नेऽपि देवि रमसे न मया विना त्वं स्वापे त्वया विरहितो मृतवद्भवामि । दूरीकृताऽसि विधिदुर्ललितैस्तथापि जीवत्यवेहि मन इत्यसवो दुरन्ताः[8] ॥ १० ॥ वलत्कुचानि वलनासहमध्यमानि कण्ठोदयत्कलरुतानि गलत्कचानि । आस्वादिताधरदलान्यलसेक्षणानि तान्येव तन्वि सुरतानि तव स्मरामि ॥ ११ ॥ अद्यापि सुन्दरि तवाननचन्द्रबिम्बं बन्दीकृताम्बुजयुगं परिचुम्ब्य चेतः । त्वत्सङ्गमोद्भवसुखं तनुते तथापि वैरं करोति करुणाविकलो[9] विवेकः ॥ १२ ॥ त्वदीयमुखपङ्कजं यदि विधोरलं वार्तया तवाधरसुधा यदा भवति किं सुधा नो मुधा[11] । त्वदङ्गपरिरम्भणं[12] भण कृतं सुधागाहनैस्त्वदीयदृगनुग्रहस्तदपि धिग्धिगैन्द्रं पदम् ॥ १३ ॥ भवतु विदितं व्यर्थालापैरलं[13] प्रिय गम्यतां तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः । तव यदि तथाभूतं प्रेम प्रपन्नमिमां दशां प्रकृतितरले का नः पीडा गते हतजीविते ॥ १४ ॥ यदिन्दोर्लक्ष्मीस्ते वदनकमले वासमकरोत्तमःस्तोमस्थेमा तव तरुणि धम्मिल्लम्[14] भजत् । अनुप्राप्ता हारावलिमपि च तारावलिरुचिः शरण्यायाः कस्ते मम शरणदाने परिभवः ॥ १५ ॥ भवत्या विश्लेषे गुरुहृदयखेदेन तनुतां तनुर्नित्यं धत्ते सदृशमिति मत्तेभगमने । इदं तावच्चित्रं कमलमुखि सर्वैरवयवैः सुरूपा त्वं लोके नियतमसुरूपा[15] भवसि नः ॥ १६ ॥ सुमध्ये वाग्भङ्गैर्वचनविधिमङ्गीकुरु न वा स्मितज्योत्स्नाकान्तं कुरु वदनमेतन्मयि न वा । त्रिलोकीमूर्धन्या यदि विविधपुण्याधिकतया मया दृष्टाऽसि त्वं तदिह सफलं मेऽजनि जनुः[16] ॥ १७ ॥ यदि प्राणा एव प्रणयपरिणाहः[17] कथमयं विभिन्ना तेभ्यश्चेत्कथमियमभेदव्यवसितिः । न भिन्ना नाभिन्ना यदि भवसि किं नाम तदसि त्वमेकाऽसि त्वं मे कुवलयदलश्रेणिनयने ॥ १८ ॥ यदेकः कासारं[18] रचयति तथा कूपमथवा तदाकाङ्क्षां देवो वितरतितरां श्रीपतिरपि । मया तु त्वद्धेतोः कमलमुखि सान्द्राश्रुसलिलैः कृताः पारावारास्[19]तदपि गणना ते न हृदये ॥ १९ ॥ इतो विद्युत्पुञ्जस्फुरितमसकृद्द्रावयतु मामितः केकाऽनेका[20] हरतु हृदयं निर्दयमिदम् । इतः कामो वामः[21] प्रहरतु मुहुः पुङ्खितशरो[22] गताऽसि त्वं दूरं चपलनयने प्राप्स्यसि कुतः ॥ २० ॥ हिमांशुश्चण्डांशुर्नवजलधरो दावदहनः सरिद्वीचीवातः कुपितफणिनिश्वासपवनः । नवा मल्ली भल्ली कुवलयवनं कुन्तगहनं मम त्वद्विश्लेषात्सुमुखि विपरीतं

---

१ कृशाङ्गि। २ असिता तदाख्या सरिच्च। ३ रक्तः तदाख्यो नदश्च। ४ सुरतस्य रङ्गिणी गङ्गा च। ५ तापकारी यमुना च। 'तापी तु यमुना यमी।' इति त्रिकाण्डशेषः। ६ दर्शिता आशा अभिलाषः दिशा च यस्येति। ७ सरोविशेषोत्पन्नः, मदनश्च। ८ प्रारब्धदुष्परिणामैः। ९ दुःखदत्वात्। १० निर्दयः। ११ वृथा। १२ आलिङ्गनम्। १३ किमपि साध्यं न इत्यर्थो विवक्षितः। अत एवैतद्योगे न चतुर्थी। १४ केशपाशम्। १५ असुन्दरी प्राणरूपा च। १६ जन्म। १७ प्रेमबन्धनम्। १८ तडागम्। १९ समुद्राः। २० मयूरवाणी। २१ कुटिलः, प्रतिकूल इति भावः। २२ संहितवाणः।

जगदिदम् ॥ २१ ॥ दैवात्पश्येर्जगति विचरन्निच्छया मत्प्रियां चेदाश्वास्यादौ तदनु कथये-र्मामकीनामवस्थाम् । आशातन्तुर्न च कथयताऽत्यन्तमुच्छेदनीयः प्राणत्राणं कथमपि करोत्याय-ताक्ष्याः स एकः ॥ २२ ॥ वक्षोजाग्रौ कनककलशौ रम्यरोमावलीयं श्लक्ष्णा रज्जु-र्लसति सरसो नाभिकूपो गभीरः । प्रौढा तृष्णा मम नयनयोर्नीरजाक्षि प्रशाम्येदेषामेषा सिचयरचिता नैव गुप्तिर्यदा स्यात् ॥ २३ ॥ आस्तां तावद्वचनरचनाभाजनत्वं विदूरे दूरे चास्तां तव तनुपरीरम्भ[1]संभावनाऽपि । भूयो भूयः प्रणतिभिरहं किंतु याचे विधेया स्मारं स्मारं[2] स्वजन-गणने कापि लेखा ममापि ॥ २४ ॥ श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु[3] केशान् । उत्पश्यामि प्रतनुषु[4] नदीवीचिषु[5] भ्रूविलासान्हन्तैकस्मिन्क-चिदपि न ते चण्डि सादृश्यमस्ति ॥ २५ ॥ त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् । अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते[6] मे क्रूरस्तस्मि-न्नपि न सहते संगमं नौ कृतान्तः[7] ॥ २६ ॥ मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोर्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु । पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां मुक्तास्थूला-स्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ २७ ॥ भित्त्वा सद्यः किसलयपुटान्[8]देवदारुद्रुमाणां ये तत्क्षीर-स्रुतिसुरभयो दक्षिणेन प्रवृत्ताः । आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः[9] पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ २८ ॥ संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा[11] सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् । इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे गाढोष्माभिः कृतमशरणं[12] त्वद्वियोगव्यथाभिः ॥ २९ ॥ कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं को जानीते निभृतम्[13]उभयोरावयोः स्नेहसारम् । जानात्येकः शशधरमुखि प्रेमतत्त्वं मनो मे त्वामेवैतच्चिरमनुगतं तत्प्रिये किं करोमि ॥ ३० ॥ त्वद्रूपामृतपानदुर्ललितया दृष्ट्या क विश्रम्यतां त्वद्वाक्यश्रवणाभियोगपरयोः श्रव्यं कुतः श्रोत्रयोः एभिस्त्वत्परिरम्भनिर्भररसैरङ्गैः कथं स्थीयतां कष्टं त्वद्विरहेण संप्रति वयं कष्टामवस्थां गताः ॥ ३१ ॥ यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं मेघैरन्तरितः[14] प्रिये तव मुखच्छाया-नुकारी शशी । येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गताः[15]स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ३२ ॥ गूढालिङ्गनगण्डचुम्बनकुचस्पर्शादि लीलायितं सर्वं विस्मृतमेव विस्तृ-तवतो बाले खलेभ्यो भयात् । संलापस्त्वधुना सुदुर्घटतमस्तत्रापि नातिव्यथा यत्त्वद्दर्शनमप्यभूद-सुलभं तेनैव दूये[16] भृशम् ॥ ३३ ॥ धन्यस्तन्वि स एष पाण्डिम[17]भरश्चुम्बन्कपोलस्थलं धन्यं तन्वि तदेव कार्श्यमिह यत्प्रत्यङ्गमालिङ्गति । धन्योऽयं विरहानलस्तव मनो यस्यानुवृत्तेः पदं दूरे हन्त तया तु पतकितया मादृग्जनः सीदति[18] ॥ ३४ ॥ न स्नानं न च भोजनं न पठनं नान्यत्र सौख्यं धृतिर्नान्यस्त्रीजनसेवनं न च कथानिद्राविलासोद्यमः । किंतु त्वां परिचिन्त-यामि सततं ध्यानेन चेतःस्थितां स्वप्नालोकनकामकेलिविधिना जीवामि कान्ते तव ॥ ३५ ॥ रात्रिः कालयुगोपमा[19] प्रियतमे गन्धानिलः[20] किं विषं सोमः सूर्य इवाभवन्मलयजो[21]लेपः स्फुलि-

---

१ आश्लेष- । २ स्मृत्वा स्मृत्वा । ३ मयूरपुच्छावयवेषु । ४ सूक्ष्मासु । ५ तरङ्गेषु । ६ अश्रुभिः । ७ दुर्दैवम् । ८ नवपत्र- । ९ हिम- । १० अपनेतुमशक्यत्वात् । ११ रात्रिः । १२ आश्र-यहीनम् । १३ गुप्तम् । १४ व्यवहितः । १५ वर्षासु मानससरोवरं प्रत्येव गच्छन्तीति कविसमयः । १६ सन्तप्तो भवामि । १७ पाण्डुवर्णत्व- । १८ विषीदति । १९ रात्रौ मदनतापप्रवृद्धेः । २० सुर-भितः पवनः । २१ चन्दन- ।

ङ्गोपमः । तिक्तः सुस्वरगीतवाद्यपरभृत्पारावतादिध्वनिर्वज्रस्याहतिरेव कर्णयुगले विच्छेदतो मे तव ॥ ३६ ॥ चन्द्रो द्वादश भास्करा समभवन्रात्रिर्युगानां शतं मिष्टं तिक्तरसं विलेपनमहो दीप्तानलो मे तव । विच्छेदान्मलयानिलः प्रियतमे किं कालकूटः श्रुतौ गीताऽपि ध्वनिरेव वज्रसदृशोऽरण्यं विचित्रं गृहम् ॥ ३७ ॥ कान्ते ! हन्त ! सुकोमला बत मता प्राग्व्यर्थमेव भ्रमात् किंतु त्वं भुवि निष्ठुरा निरुपमा पश्यस्यपीमं न माम् । तस्माद्वक्षसि ते पयोधरमिषाद्धात्रा निखार्पितौ शैलेन्द्राविति साम्प्रतं न हि चिरं सौख्यं परक्लेशितुः ॥ ३८ ॥ एते त्वद्वदनानुकारिरुचयो राकासुधांश्वादयो नीत्वा ते स्मरणं दहन्ति बत मामन्तः स्फुरन्त्यास्तव । त्वं स्वामिन्यसि तज्जहीहि जहि वा नेदं पुनः साम्प्रतं यत्स्वस्पर्धिभिरेव मर्दयसि मामेतैर्जघन्यैः प्रिये ॥ ३९ ॥ स्थानान्निर्गत्य दूरं व्रजति मयि चिरं मुक्तकण्ठं रुदित्वा पश्चादुन्मृज्य नेत्रे प्रणतिमुपगता वेपमानाऽङ्गयष्टिः । कान्ते यन्मामवोचः प्रलयघनघटाटोपबद्धान्धकारे काले कापालिकोऽपि प्रवसति न गृहात्तन्मनो मे दुनोति ॥ ४० ॥ त्वदास्यश्रीश्चन्द्रे वरतनु तदारभ्य वसति व्यधात्तल्लक्ष्माभा तव कचकुले तत्प्रभृति सा । तथा दृष्टिर्लग्ना त्वयि मम तदारभ्य तरुणि स्मरेषूणां ज्वाला मयि तव कटाक्षाननुगता ॥ ४१ ॥

## कान्ताया दूतीं प्रति प्रश्नाः ।

तव दूति वचः श्रुत्वा किमुक्तं शठचेतसा । अलं वा चर्चया तस्य प्रियमन्यन्निवेदय ॥ १ ॥ जानामि हृदयं तस्य निर्दयं दूति निर्भरम् । अथापि तत्पदद्वन्द्वान्न विरज्यति मे मनः ॥ २ ॥ अबलाशरणं जगत्त्रये परमेको दयितोऽग्निसाक्षिकः । अथ सोऽपि यदा न सम्मुखो बत किं दूति सुखं ततोऽन्यतः ॥ ३ ॥ अलमलमघृणस्य तस्य नाम्ना पुनरपि सैव कथा गतः स कालः । कथय कथय वा तथापि दूति प्रतिवचनं द्विषतोऽपि माननीयम् ॥ ४ ॥ कथय निपुणे कस्मिन्दृष्टः कथं नु कियच्चिरं किमिव लिखितं किं तेनोक्तं कदा स इहैष्यति । इति बहुविधप्रेमालापप्रपञ्चितविस्तराः प्रियतमकथाः स्वल्पेऽप्यर्थे प्रयान्ति न नष्टताम् ॥ ५ ॥ नेत्राभ्यां यत् कमलवदनं काममापीय सुभ्रूस्तत्सम्भाषाऽमृतमपि चिरं मानसान्तर्निधाय । आयातासीत्यतनुसुकृते दूति धन्या त्वमस्मात्तत्सन्देशैः सुमुखि सहसा जीवयैतां निषिच्य ॥ ६ ॥

## दूत्युपहासाः ।

बहुनात्र किमुक्तेन दूति मत्कार्यसिद्धये । स्वमांसान्यपि दत्तानि वक्तव्येषु तु का कथा ॥ १ ॥ पार्श्वाभ्यां सप्रहाराभ्यामधरे व्रणखण्डिते । दूति संग्रामयोग्यासि न योग्या दूतकर्मणि ॥ २ ॥ किं त्वं निगूहसे दूति स्तनौ वक्त्रं च पाणिना । खण्डिता एव शोभन्ते शूराधरपयोधराः ॥ ३ ॥ त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम् । किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥ ४ ॥ दूति त्वया कृतमहो निखिलं मदुक्तं न त्वादृशी परहितप्रवणाऽस्ति

---

१ कोकिल- । २ चन्दनादेरालेपः । ३ भयावहं विषम् । ४ वर्षाकाले । ५ भिक्षुसंन्यासिनां वर्षासु भ्रमणनिषेधात् । ६ निर्दयस्य । ७ उत्तरवचनम् । ८ शूरश्चाधरः-ओष्ठः च पयोधरौ कुचौ च । ९ दूत्यालिङ्गनं कृतवानिति कान्तस्य पापीयस्त्वेन निर्देशः । न हि कुलीना जात्या निकृष्टं पतिं कदाऽपि वक्तुं प्रभवतीति बोध्यम् । १० किं तु तमेव भुक्त्वाऽऽयातवत्यसीति प्रत्याय्यम् ।

लोके । श्रान्ताऽसि हन्त मृदुलाङ्गि गता मदर्थं सिध्यन्ति कुत्र सुकृतानि विना श्रमेण ॥ ५ ॥ रजन्यामन्यस्यां सुरतपरिवृत्तावनुचितं मदीयं यद्वासः कथमपि हृतं तेन सुहृदा । त्वया प्रत्यानीतं निजवसनदानात्पुनरिदं कुतस्त्वादृग्दूती स्खलितशमनोपायनिपुणा ॥ ६ ॥ निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥ ७ ॥ दूतीदं नयनोत्पलद्वयमहो तान्तं नितान्तं तव स्वेदाम्भःकणिका ललाटफलके मुक्ताश्रियं बिभ्रति । निःश्वासाः प्रचुरीभवन्ति नितरां हा हन्त चन्द्रातपे यातायातवशाद्वृथा मम कृते श्रान्ताऽसि कान्ताकृते ॥ ८ ॥ श्वासः किं त्वरितागता पुलकिता कस्मात्प्रसादः कृतः स्रस्ता वेण्यपि पादयोर्निपतनान्नीवी गमादागमात् । स्वेदार्द्रं मुखमातपेन गमितं क्षामा किमत्युक्तिभिर्दूति म्लानसरोरुहाकृतिधरस्यौष्ठस्य किं वक्ष्यसि ॥ ९ ॥ दूति श्वासविशेष एष किमहो चण्डि त्वराधावनाद्विभ्रष्टाऽलकवल्लरी कथमहो त्वन्नाथपादार्पणात् । निर्मृष्टाधररागपल्लवरुचिस्त्वत्कार्यसंजल्पनाद्वासस्तस्य किमङ्गसंगतमहो विश्वासहेतोस्तव ॥ १० ॥ स्विन्नं केन मुखं दिवाकरकरैस्ते रागिणी लोचने रोषात्तद्वचनोत्थिताद्विलुलिता नीलालका वायुना । भ्रष्टं कुङ्कुममुत्तरीयकषणात्क्लान्ताऽसि गत्यागतैर्युक्तं तत्सकलं किमत्र वद हे दूति क्षतस्याधरे ॥ ११ ॥ बिम्बोष्ठस्तव खण्डितश्चबलता दृग्भङ्गिगा चायता निःश्वासो बहुलो मुखं श्रमजलच्छन्नं च हन्त स्फुटम् । वासोऽप्येतदहो पटच्चरसमं छिन्नं समन्तादिति क्वापि त्वं स्खलिता क्वचित् किमथवा विद्धाऽसितैः कण्टकैः ॥ १२ ॥ सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं यातोऽस्ताचलमौलिमम्बरमणिर्विश्रब्धमन्दा गतिः । आश्चर्यं तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोमि तेनासितुम् ॥ १३ ॥

## कान्तदशाबोधनम् ।

न शान्तिं लभते नक्तं न दिवा वा कुतश्चन । त्वदेकस्मरणं तस्य साम्प्रतं जीवनौषधम् ॥ १ ॥ हा कान्ते स परिष्वङ्गो भूयोऽपि बत दीयताम् । इत्येव विलपन् रात्रिं कान्तस्तेऽपनयत्यहो ॥ २ ॥ पदशब्दलीनहृदयो रूपालंकारभावनानिपुणः । कविरिव सचिन्तमुद्रस्तरुणि तवार्थे परं स युवा ॥३॥ परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः । इति तव विषमा दशाऽस्य देहं परिभवति प्रसभं वियोगतस्ते ॥ ४ ॥ विकिरति मुहुः श्वासानाशाः पुरो मुहुरीक्षते प्रविशति मुहुः कुञ्जात्कुञ्जं मुहुर्बहु ताम्यति । रचयति मुहुः शय्यां पर्याकुलं मुहुरीक्षते मदनकदनैः क्लान्तः कान्ते प्रियस्तव वर्तते ॥ ५ ॥ सा मां द्रक्ष्यति वक्ष्यति स्मरकथां प्रत्यङ्गमालिङ्गनैः प्रीतिं यास्यति रंस्यते सखि समागत्येति चिन्ताकुलः । मार्गं पश्यति वेपते पुलकय-

---

१ पुण्यानि दुर्लभानि युवसम्भोगसुखानि च। २ एतानि सर्वाणि लिङ्गानि वापीस्नानतो वाच्यानि, व्यङ्ग्यानि पुनः कान्तसम्भोगजन्यत्वेन । ३ अत्यन्तम् । ४ अत्राधमपदप्रयोग एव वाप्यां स्नातुमगत्वा तमुपभोक्तुमिति प्रत्याययतीति स्पष्टमस्माकं काव्यप्रकाशकाव्यप्रदीपयोः सुषमाशिखयोर्व्याख्ययोः । ५ क्लान्तम् । ६ आयताः प्रतीयन्ते । ७ स्थातुम् । ८ चरणध्वनि- । सुप्तिङन्तात्मकशब्द- । ९ लावण्यनेपथ्य- । व्युत्पन्नप्रयोगानुकूलानुप्रासोपमाऽऽदि- । १० चिन्ताप्रत्यायकलक्षण- । अलङ्कारविशेषसङ्घटन- । ११ प्रीतिम् । १२ निहन्ति । १३ अवस्था । १४ दिशम् । १५ पीडा । १६ कम्पते । १७ रोमाञ्चयति ।

त्यानन्दति स्विद्यति प्रत्युद्गच्छति मूर्च्छति स्थिरतमःपुञ्जे निकुञ्जप्रियः ॥ ६ ॥ पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धयस्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्नायकः । ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमंत्रावलीं भूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति ॥ ७ ॥

## प्रदोषवर्णनम् ।

प्रदोषसमयः[1] कस्य कृते न स्याद्भयावहः । यस्मिन् प्राते व्रजत्यस्तं तेजसां निधिरप्यहो ॥ १ ॥ मन्त्रसंस्कारसंपन्नास्तन्वदौर्दन्वतीरपः[4] । एतत्रयीमयं ज्योतिरादित्याख्यं निमज्जति ॥ २ ॥ तापनैरिव तेजोभिर्दग्धनिर्वाणमेचकाः । दिशो जाताः प्रतीची तु समुदाचरति क्रमात् ॥ ३ ॥ पुराणरश्मिजालेषु स्रस्तेष्वस्तावलम्बनम् । बिम्बमम्बुरुहां[6] नेतुरम्बरादवलम्बते ॥ ४ ॥ विलोक्य संगमे रागं पश्चिमाया विवस्वतः । कृतं कृष्णं मुखं प्राच्या न हि नार्यो विनेर्ष्यया ॥ ५ ॥ करिष्यति कलानाथः[10] कुतुकी[11] करमम्बरे[12] [13] । इति निर्वापयामास रविदीपं निशाङ्गना ॥ ६ ॥ निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ७ ॥ पादा यस्य सहस्रं सोऽपि न तिष्ठति समागते यस्मिन् । हन्त प्रदोषसमयो दोषाकरसम्पदे सोऽद्धा ॥ ८ ॥ अस्तं गतवति सवितरि भर्तरि मधुपं निवेश्य कोशान्ते । कमलिन्योऽपि रमन्ते किमत्र चित्रं मृगाक्षीणाम् ॥ ९ ॥ कृतोपकारं प्रियबन्धुमर्कं मा द्राक्ष्म हीनांशुमधः पतन्तम् । इतीव मत्वा नलिनीवधूभिर्निमीलितान्यम्बुरुहेक्षणानि ॥ १० ॥ सांध्यरागरुधिरारुणमौरान्निष्पपात रविमण्डलमब्धौ । क्रूरकालकरवालविलूनं वासरस्य सहसैव शिरो नु ॥ ११ ॥ नो रविर्न च तमो न तमीशो न द्युतिर्ग्रहगणो न च संध्या । यादृशी प्रथमतः किल सृष्टेस्तादृगेव भुवनं श्रियमूहे ॥ १२ ॥ भानुबिम्बमिदमस्तगामि च प्रोद्यतं कुमुदबन्धुमण्डलम् । दृश्यते रतिपतेः प्रवासिनां क्रोधरक्तमिव लोचनद्वयम् ॥ १३ ॥ स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम् । आविभातचरणाय गृह्णते वारि वारिरुहबद्धषट्पदम् ॥ १४ ॥ पश्य पश्चिमदिगन्तलम्बिना निर्मितं कथमिदं विवस्वता । दीर्घया प्रतिमया सरोम्भसां तापनीयमिव सेतुबन्धनम् ॥ १५ ॥ उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः । दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ १६ ॥ एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः । हीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥ १७ ॥ पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव जातमेकतः । खं हृतातपजलं विवस्वता भाति किंचिदिव शेषवत्सरः ॥ १८ ॥ आविशद्भिरुटजाङ्गणं मृगैर्मूलसेकसरसैश्च वृक्षकैः । आश्रमाः प्रविशदग्र्यधेनवो बिभ्रति श्रियमुदीरिताग्नयः ॥ १९ ॥ बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम्[22] । षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातुमन्तरम् ॥ २० ॥ दूरलग्नपरिमेयरश्मिना वारुणी[23] दिगरुणेन भानुना । भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥ २१ ॥ सांध्यमस्तमितशेषमातपं रक्तलेखमपरा बिभर्ति दिक् । संपरायवसुधा[24] सशोणितं मण्डलाग्रमिव तिर्यगुत्थितम् ॥ २२ ॥ कोऽत्र भूमिवलये जनान्मुधा

---

१ कन्दर्पस्य । २ गाढालिङ्गन । ३ प्रारब्धवैपरीत्यावसरः, दिनावसानसमयश्च । ४ समुद्रसम्बन्धिनीः । ५ कृष्णाः । ६ कमलानाम् । ७ नायकस्य सूर्यस्येति भावः । ८ अनुरागं शोणिमानञ्च । ९ म्लानं तिमिरावृतं च । १० चन्द्रः कलानिपुणश्च ।११ कौतुकी कामुकश्च ।१२ किरणप्रसारम् । हस्तक्षेपं च । १३ आकाशे वस्त्रे च । १४ चरणाः किरणाश्च । १५ दोषाणामाकरभूता या सम्पत्तस्यै चन्द्रोदयाय च । १६ योग्यः। १७ भ्रमरं मदिरामत्तं च । १८ कुड्मलाभ्यन्तरे । प्रधानगृहान्तश्च ।१९ समीपम् ।२० सुवर्णसम्बन्धि ।२१ रजत- ।२२ कमलम् ।२३ पश्चिमा ।२४ सङ्ग्राम- ।

तापयन्सुचिरमेति संपदम् । वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः ॥ २३ ॥ मध्यमोपलनिभे लसदंशावेकतश्च्युतिमुपेयुषि भानौ । द्यौरुवाह परिवृत्तिविलोलां हारयष्टिमिव वासरलक्ष्मीम् ॥ २४ ॥ अंशुपाणिभिरतीव पिपासुः पद्मजं मधु भृशं रसयित्वा । क्षीबतामिव गतः क्षितिमेष्यँल्लोहितं वपुरुवाह पतङ्गः ॥ २५ ॥ मुक्तमूललघुरुज्झितपूर्वः पश्चिमे नभसि संभृतसान्द्रः । सामि मज्जति रवौ न विरेजे खिन्नजिह्म इव रश्मिसमूहः ॥ २६ ॥ कान्तदूत्य इव कुङ्कुमताम्राः सायमण्डनमभित्वरयन्त्यः । सादरं ददृशिरे वनिताभिः सौधजालपतिता रविभासः ॥ २७ ॥ अग्रसानुषु नितान्तपिशङ्गै[1]र्भूरुहान्मृदुकरैरवलम्ब्य । अस्तशैलगहनं नु विवस्वानाविवेश जलधिं नु महीं नु ॥ २८ ॥ आकुलश्चलपतत्रिकुलानामारवै[2]रनुदितौषसराग[3]: । आययावहरिदश्व[4]विपाण्डुस्तुल्यतां दिनमुखेन दिनान्तः ॥ २९ ॥ आस्थितः स्थगितवारिद[5]पङ्क्त्या संध्यया गगनपश्चिमभागः । सोर्मिविद्रुम[6]वितानविभासा रञ्जितस्य जलधेः श्रियमूहे ॥ ३० ॥ प्राञ्जलावपि जने नतमूर्ध्नि प्रेम तत्प्रवणचेतसि हित्वा । संध्ययाऽनुविदधे विरमन्त्या चापलेन सुजनेतरमैत्री[7] ॥ ३१ ॥ अभितापसंपदमथोष्णरुचिर्निजतेजसामसहमान इव । पयसि प्रविविक्षु[8]रपराम्बुनिधे[9]रधिरोढुमस्तगिरिमभ्यपतत् ॥ ३२ ॥ गतया पुरः प्रतिगवाक्षमुखं दधती रतेन भृशमुत्सुकताम् । मुहुरन्तराल[10]भुवमस्तगिरेः सवितुश्च योषिदमिमीत दृशा ॥ ३३ ॥ विरलातपच्छविरनुष्णवपुः परितो विपाण्डु दधदभ्रशिरः । अभवद्गतः परिणति[11]शिथिलः परिमन्दसूर्यनयनो दिवसः ॥ ३४ ॥ अपराह्णशीतलतरेण शनैरनिलेन लोलितलताङ्गुलये । निलयाय शाखिन इवाह्वयते ददुराकुलाः खगकुलानि गिरः ॥ ३५ ॥ उपसंध्य[12]मास्त तनु सानुमतः[13] शिखरेषु तत्क्षणमशीतरुचः[14] । करजालमस्तसमयेऽपि सतामुचितं खलूच्चतरमेत्य पदम्[15] ॥ ३६ ॥ नवकुङ्कुमारुणपयोधरया[16] स्वकरा[17]वसक्तरुचिराम्बरया[18] । अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुषारकरः[19] ॥ ३७ ॥ गतवत्यराजत जपा[20]कुसुमस्तबकद्युतौ दिनकरेऽवनतिम् । बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥ ३८ ॥ द्रुतशातकुम्भ[21]निभमंशुमतो वपुरर्धमग्नवपुषः पयसि । रुरुचे विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥ ३९ ॥ अनुराग[22]वन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम्[23] । निरकासयद्रविमपेतवसुं[24] वियदालयादपरदिग्गणिका[25] ॥ ४० ॥ अभितिग्मरश्मि[26] चिरमा विरमादवधानखिन्नमनिमेषतया । विगलन्मधुव्रतकुलाश्रुजलं न्यमिमीलदब्जनयनं नलिनी ॥ ४१ ॥ अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः । अवसन्नतापमतमिस्रमभादपदोषतैव विगुणस्य गुणः ॥४२॥ रुचिधाम्नि भर्तरि भृशं विमला परलोकमभ्युपगते विविक्षुः । ज्वलनं त्विषः[27] कथमिवेतरथा[28] सुलभोऽन्यजन्मनि स एव पतिः ॥ ४३ ॥ महद्भिरोघैस्तमसामभिद्रुतो भयेऽप्यसम्मूढमतिर्भ्रमन्क्षितौ । प्रदीप[29]वेषेण गृहे गृहे स्थितो विखण्डय देहं बहुधेव भास्करः ॥ ४४ ॥ अयमसौ गगनाङ्गणदीपकस्तरलकालभुजंगशिखामणिः । क्षणविडम्बितवाडवविग्रहः पतति वारिनिधौ विधुरो रविः ॥ ४५ ॥ अविभूय सतामवस्थितिं जडजेषु[30] प्रतिपाद्य च श्रियम् । जगतीपरि-

---

१ अतिपीतवर्णैः। २ शब्दैः। ३ प्रभातकालिक- । ४ सूर्येतर- । ५ मेघ । ६ प्रवाल- । ७ दुर्जन- । ८ प्राप्तुमिच्छुः। ९ पश्चिमसमुद्रस्य । १० मध्य- । ११ परिणामम् । १२ सन्ध्यायाम् । १३ पर्वतस्य । १४ सूर्यस्य । १५ प्रतिष्ठाम् । १६ अभ्रयाकुचया च- । १७ किरण- । हस्त- । १८ गगनया वस्त्रया च । १९ सूर्यः । २० शोणे । २१ सुवर्ण-- । २२ प्रेम-- । शोणिम । २३ किंतु शांतिप्रदम् । २४ क्षीणप्रकाशकम् निर्धनं च ।२५ अत्र गणिकया रूपणात्समासोक्तिर्निरस्तेतिसाहित्याचार्याः। २६ सूर्याभिमुखम् २७ कान्तेः। २८ प्रकारान्तरेण । २९ प्रदीपच्छलेन । ३० कमलेषु मूढमतिषु च ।

तापक्तत्कथं जलधौ नावपतेदसौ रविः ॥ ४६ ॥ परिपतति पयोनिधौ पतङ्गः सरसिरुहामुदरेषु मत्तभृङ्गः । उपवनतरुकोटरे विहंगस्तरुणिजनेषु शनैः शनैरनङ्गः ॥ ४७ ॥ शुचिरिति[1] परितः प्रसिद्धिभाजि प्रकटिततेजसि दुर्जये कृशानौ[2] । निजवसुनिकुरम्बमस्तवेलाव्यतिकरवान्निदधे[3] सरोजबन्धुः[4] ॥ ४८ ॥ जगदिव बहुलातपाभितप्तं जनयितुमद्य जलाभिषेकशीतम् । परिधुतरविशातकुम्भकुम्भा प्रचलति पश्चिमवारिधिं[5] दिनश्रीः ॥ ४९ ॥ पतति रविरपूर्ववारिराशौ हृदि पथिकस्य यथात्म[6]भूर्हुताशः[7] । प्रसरति चरमां[8] तमःप्ररोहः प्रतिपदमद्य यथा मनोविमोहः ॥५०॥ अस्तावलम्बिरविबिम्बतयोदयाद्रिचूडोन्मिषत्[9]सकल[10]चन्द्रतया च सायम् । संध्याप्रवृत्तहरहस्तगृहीतकांस्यतालद्वयेव समलक्ष्यत नाकलक्ष्मीः[11] ॥ ५१ ॥ दोषाकरं द्विजपतिप्रतिमं सयत्नं निर्लज्जवत्स्वपदमात्मवशं विधातुम् । आलोक्य धामनिधिरेष शुचेव दूनो लोकान्तरे क्षपयितुं समयं प्रयाति ॥ ५२ ॥ यातोऽस्मि पद्मनयने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया । प्रत्यायना[12]मयमितीव सरोरुहिण्याः सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ ५३ ॥ कृत्वा प्रबुद्ध[13]कमलामखिलां त्रिलोकीमम्भोनिधेर्विशति गर्भ[14]मसाविदानीम् । अन्तःप्रसुप्तहरिनाभिसरोजबोधकौतूहलीव भगवानरविन्दबन्धुः ॥ ५४ ॥ पूर्वां क्षणक्रमनिरस्तसमस्तरागां हित्वा निजान्तिकमुपेत्य रवौ सरागे[15] । आलोकतः पुनरमुष्य धृतप्रसादा जाता चिरेण चरमा[16] परमानुरक्ता[17] ॥ ५५ ॥ स्पृष्टोल्लसत्किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम् । श्लिष्टाष्टदिग्दलकलाप[18]मुषावतारबद्धान्धकारमधुपावलि संचुकोच ॥ ५६ ॥ पृथु गगनकबन्धस्कन्धचक्रं किमेतत्किमु रुधिरकपालं कालकापालिकस्य । कलल[19]भरितमन्तः किं नु तार्क्ष्याण्ड[20]खण्डं प्रजनयति वितर्कं सांध्यमर्कस्य बिम्बम् ॥ ५७ ॥ अयमपि खरयोषित्कर्णकाषायमीषद्विसृमर[21]तिमिरोर्णाजर्जरोपान्तमर्चिः । मदकलकलविङ्कीकाकुनान्दीकरेभ्यः क्षितिरुहशिखरेभ्यो भानुमान्[22]उच्चिनोति ॥ ५८ ॥ गतवति दिननाथे पश्चिमक्ष्माधरान्तं[23] शिशिरकर[24]मयूखैर्निर्भरं दह्यमाना । परिहृतमिलितालिः पान्थकान्तेव दीना सपदि कमलिनीयं हास्य[25]हीना बभूव ॥ ५९ ॥ उदयगिरितटस्थः पद्मिनी[26]र्बोधयित्वा मृदुतरकिरणाग्रैस्ताः स्वयं चोपभुज्य । मलिनमधुप[27]सङ्गात्तासु संजातकोपः कृतरुधिरविरोचिर्भानुरस्तं प्रयातः ॥ ६० ॥ अयमपि पुरुहूत[28]प्रेयसीमूर्ध्नि पूर्णः कलश इव सुधांशुः साधुरुल्लालसीति[29] । मदनविजययात्राकालविज्ञापनाय स्फुरति जलधिमध्ये ताम्रपात्रीव भानुः ॥ ६१ ॥ रवेरस्तं तेजः प्रमदयति खद्योत[30]पटली मराली[31]लाली मूका कलकलपरोलूकपटली[32] । इदं कष्टं दृष्ट्वा चिरमसहमाना कमलिनी भ्रमद्भृङ्गव्याजात्कवलयति हालाहलमिव ॥ ॥ ६२ ॥ सैरन्ध्री[33]करकृष्टकङ्कणसरद्वीरध्वनिः संचरद्दूतीसूत्रितसंधिविग्रहविधिः सोल्लासलीलाधरः ।

---

१ विमलः । शुचिरिति वह्नेरपि नाम । २ अग्नौ । ३ स्वकरपुञ्जम्, स्वधनसञ्चयं च । ४ सूर्यः । ५ पश्चिमसमुद्रे । ६ कामरूपः । अन्तरुत्पन्नश्च । ७ अग्निः । ८ अंतिमाम् । ९ उद्यत्- । १० पूर्ण- । कलाभृत्- । ११ आकाशशोभा । १२ आश्वासनात्मिकाम् । १३ कमलविकासशालिनीम् । अभ्युदितलक्ष्मीं च । १४ मध्यम् । उदरं च । १५ अनुरक्ते शोणिमशालिनि । १६ पश्चिमा दिक् अन्या च । १७ रक्ता आसक्ता च । १८ समूह- । १९ शुक्रशोणितसन्निपातपूर्णम् । भरितमितीतच्प्रत्ययान्तम् । २० पक्षिराज- । २१ प्रसृत- । २२ सूर्यः । २३ अस्ताचल- । २४ चन्द्रकिरणैः । २५ विकास- । प्रसन्नता-च । २६ कमलिनीः । नायिकाविशेषांश्च । २७ कृष्णवर्णभ्रमर- । दुराचारिमधुप- । २८ इन्द्रप्रियामस्तके पूर्वदिशायां च- । २९ अतिशयेनोल्लसति । ३० ज्योतिरिङ्गणपुञ्जः । ३१ हंसराजिः । ३२ समूहः । ३३ परगृहगता शिल्पनिपुणा च ।

वारस्त्री[1]जनसज्जमानशयनः संनद्धपुष्पायुधः[2] श्रीखण्डद्रवधौतसौधशिखरो रम्यः क्षणो वर्तते ॥ ६३ ॥
विश्लेषाकुलचक्रवाकमिथुनैरुत्पक्षमाक्रन्दितं[3] कारुण्यादिव मीलितासु नलिनीस्वस्तं च मित्रे[4] गते ।
शोकेनेव दिगङ्गनाभिरभितः श्यामायमानैर्मुखैर्निःश्वासानिलधूमवर्तय इवोद्गीर्णास्तमोराजयः ॥ ६४ ॥
निर्याद्वासरजीवपिण्डकरुणां बिभ्रत्कवोष्णैः करैर्माञ्जिष्ठं रविबिम्बमम्बरतलादस्ताचलं चुम्बति ।
किं च स्तोकतमःकलापकलनाश्यामायमानं मनाग्धूमश्यामपुराणचित्ररचनारूपं जगज्जायते ॥ ६५ ॥
सन्ध्याताण्डवचण्डदण्डपरशुप्रारब्धभीमभ्रमीवेगस्रस्तकपर्द[5]वासुकिफणामाणिक्यशङ्कावहम् । मग्नं पाथसि[6]
पश्चिमस्य जलधेर्मार्तण्ड[7]बिम्बं ततो ध्वान्तैर्भूतगणैरगाहि भुवनं मन्ये तदन्वेषिभिः ॥ ६६ ॥
पाश्चात्याम्बुधि[8]दृष्टपूर्ववडवासंदर्शनोत्कण्ठया धावद्रथ्यतुरङ्ग[9]निष्ठुरखुरक्षुण्णेऽस्तशैलस्थले । तस्मादुच्च-
लितेन धातु[10]रजसा लिप्तानुरक्ताङ्गको मन्दांशुः[11] प्रियदर्शनः खलु सहस्रांशुर्दरीदृश्यते[12] ॥ ६७ ॥
तद्रोदोऽन्तरसंततान्धतमसं निर्भिद्य तिग्मांशुभिः संछेत्तुं बलिसद्म[13]गं कृतमतिर्भानुर्जगाहेऽम्बुधिम् ।
अन्यस्संप्रति संनिपत्य वृणुते लोके तमोमण्डलं किं चैतस्य नयत्यहो पारिभवं पाथोजिनीं[14] वल्ल-
भाम् ॥ ६८ ॥ द्राग्[15]ऐन्द्री[16]मनुचुम्ब्य[17] सस्मितमुखीमामोदिनीं पद्मिनीं कृत्वासौ परिरम्भसम्भ्र-
मपरिश्रान्तां च वारस्त्रियम्[18] । संरक्तो हिमभानु[19]रद्य चरमां श्लिष्यत्यहो रागिणीं काश्मीरो[20]पलस-
त्पयोधरभरां कान्तां दिशं वारुणीम्[21] ॥ ६९ ॥ ध्माता भालतलानलैः कवलिता कण्ठोत्थहा-
लाहलैरालीढाथ जटाटवीवलयितैराशी[22]विषाणां गणैः । कीर्णा भस्मभिराहताऽस्थिपटलैर्विद्धा जटा-
ग्रैरपि स्वीयामुज्झति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥ ७० ॥ आवासोत्सुकपक्षिणः
कलरुतं क्रामन्ति वृक्षालयान्कान्ताभाविवियोगभीरुरधिकं क्रन्दत्ययं कातरः । चक्राह्वो मधुपाः सरोज-
गहनं[23] धावन्त्युलूको मुदं धत्ते चारुणतां गतो रविरसावस्ताचलं चुम्बति ॥ ७१ ॥
अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य प्रातः प्राप्तुं रथो मे पुनरपि मनसि
न्यस्तचिन्तातिभारः । संध्याकृष्टावशिष्टस्वकरपरिकरैः स्पष्टहेमारपङ्क्ति व्याकृष्यावस्थितोऽस्तक्षितिभृति
नयतीवैष दिक्चक्रमर्कः ॥ ७२ ॥ प्राचीमालम्बमाने घनतिमिरचये बान्धवे बन्धकीनां संप्राप्ते
च प्रतीचीं शशिकषनिकरे वैरिणि स्वैरिणीनाम् । अर्धश्यामोपलार्धस्फटिकमिव दिशामन्तरालं
विधत्ते कालिन्दीजह्नु[24]कन्यामिलदमलजलस्यन्दसंदोहमैत्रीम् ॥ ७३ ॥ संध्याविध्वस्तशोणं तनुदहन-
चिताङ्गारमन्दार्कबिम्बं तारानारास्थिकीर्णं विशदवरकरङ्कायमाणोज्ज्वलेन्दु । हृष्यन्नक्तंचरौघं घन-
तिमिरमहाधूमधूम्रानुकारं जातं लीलाश्मशानं जगदखिलमहो कालकापालिकस्य ॥ ७४ ॥ गाढं
प्रौढाङ्गनाभिः सुरतरतमनःसंमदोत्सारिताक्षं मुग्धाभिः[25] स्रस्तनेत्रं रतिसंगर[26]भयं चिन्तयन्तीभिरेवम् ।
पान्थानाम्[27]अङ्गनाभिः ससलिलनयनं शून्यचित्ताभिरुच्चैः कष्टं दृष्टोऽस्तशैलं भृशमभजदयं मण्डलश्चण्डरश्मेः ॥
॥ ७५ ॥ व्योम्नस्तापिच्छ[28]गुच्छावलिभिरिव तमोवल्लरीभिर्वियन्ते पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती[29]

---

१ वेश्या-। २ प्रवृद्धवेगकामः। ३ विलापम्। ४ सूर्ये, सुहृदि च। ५ शङ्करजटाजूट-। ६ जले।
७ सूर्य-। ८ पश्चिमदिग्वर्तिसमुद्र-। ९ रथवोढृ-। १० गैरिकादिधूलिकणेन। ११ मन्दी-
तप्रकाशः। १२ आभीक्ष्ण्येन दृश्यते। १३ पातालस्थम्। १४ कमलिनीम्। १५ झटिति।
१६ इन्द्राणीं पूर्वां दिशं च। १७ चुम्बित्वा स्पृष्ट्वा च। १८ वेश्याम्। १९ चन्द्रः। २० केसर-
चर्चितकुचां केसरसदृशशोभाविशेषशाल्यभ्रमण्डलयुक्तां च। २१ पश्चिमांदिशम्। २२ सर्पाणाम्।
२३ कमलवन (पुञ्ज) म्। २४ गङ्गा-। २५ सुन्दरीभिः। २६ रमणरूपसङ्ग्राम-। २७ प्रवासिनाम्।
२८ कर्णाभरण-। २९ पृथिवी।

नूतने मज्जतीव । वात्यासंवेगविष्वग्वितततवलयितस्फीतधूम्याप्रकाशं प्रारम्भेऽपि त्रियामा[1] तरुणयति निजं नीलिमानं वनेषु ॥ ७६ ॥ उदयाद्रेरुड्डीनो दिनं भ्रमित्वा पतङ्गोऽयम् । अद्य प्रदोषसमये वडवाज्वलने जुहोति देहं स्वम् ॥ ७७ ॥ यो वासवस्य ककुभा कमनीयरङ्गः प्रोड्डायितः सकललोकमुदे पतङ्गः । दैवादहो त्रुटितरश्मिमधः पतन्तं पारेवियत्तमपरा परिलुण्ठतीव ॥ ७८ ॥ लोभपरयेव परया पतङ्गमुल्लुण्ठितं विलोक्य सखे । चन्द्रमिषात् पुनरन्यं पूर्वा प्रोड्डाययत्येषा ॥ ७९ ॥ जम्भारेः प्रियया कयाऽपि ककुभा पूर्वाचलप्रान्ततः श्रीमान् प्रौढपतङ्गको वियति यः प्रातः समुड्डायितः । आः सोऽयं च्युतरश्मिबन्धुलुलितः पारेनभो न्यक् पतन् सम्प्रत्युत्क्षपितोऽस्तपर्वतदरीदीर्घद्रुशाखान्तरे ॥ ८१ ॥

## हंसप्रशंसा ।

अयं वहति धातारं यद्वा देवीं सरस्वतीम् । पक्षद्वयमपि स्थाने राजहंसस्य निर्म्मलम् ॥ १ ॥ रतिकेलिकलः कश्चिदेष मन्मथमन्थरः । पश्य सुभ्रूः समाश्वस्तां कादम्बश्चुम्बति प्रियाम् ॥ २ ॥

## कोकदशावर्णनम् ।

अपि तेजोनिधिर्हन्त पतितो यदि जायते । सुरतं किमिवास्माकमिति कोकैर्वियुज्यते ॥ १ ॥ सवितैव समाराध्यः कर्म्मसाक्षी प्रबोधकः । न त्वन्तर्मलिनश्चन्द्र इति कोकास्तपस्विनः ॥ २ ॥ दुष्टतामरस[3]केसरत्यजोः क्रन्दतोर्विपरिवृत्तकण्ठयोः । निघ्नयोः सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥ ३ ॥ आतपे धृतिमता सह वध्वा यामिनी[4]विरहिणा विहगेन[5] । सेहिरे न किरणा हिमरश्मे[6]र्दुःखिते मनसि सर्वमसह्यम् ॥ ४ ॥ गम्यतामुपगते नयनानां लोहितायति सहस्रमरीचौ[7] । आससाद विरहय्य धरित्रीं चक्रवाकहृदयान्यभितापः ॥ ५ ॥ इच्छता सह वधूभिरभेदं यामिनीविरहिणां विहगानाम् । आपुरेव मिथुनानि वियोगं लङ्घ्यते न खलु कालनियोगः ॥ ६ ॥ यच्छति प्रतिमुखं दयितायै वाचमन्तिकगतेऽपि शकुन्तौ[8] । नीयते स्म नतिमुज्झितहर्षं पङ्कजं मुखमिवाम्बुरुहिन्या ॥ ७ ॥ आयाति याति पुनरेव जलं प्रयाति पद्माङ्कुरं च विचिनोति धुनोति पक्षम् । उन्मत्तवद्भ्रमति कूजति मुक्तकण्ठः कान्तावियोगविधुरो निशि चक्रवाकः ॥ ८ ॥ वापीतोयं तटरुहवनं पद्मिनीपत्रशय्या चन्द्रालोको[9] विकच[10]कुसुमामोद[11]हृद्यः समीरः । यत्रैतेऽपि प्रियविरहिणो दाहिनश्चक्रनाम्नस्तत्रोपायः क इव भवतु प्राणसंधारणो यः ॥ ९ ॥ एकेनाक्ष्णा प्रविततरुषा वीक्षते लम्बमानं भानोर्बिम्बं जलविलुलितेनापरेण स्वकान्तम् । अहरुच्छेदे[12] दयितविरहाशङ्किनी चक्रवाकी द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा[13] ॥ १० ॥ चक्राह्वो विरही हतो[14]ऽपि हृदये बाणेन न त्यक्तवान्प्राणान्प्राणसमासमागमसुखध्यानैकतानश्चिरम् । स्वां छायामवलोक्य वारिणि गलद्वक्त्रामवेक्ष्य प्रियां भ्रान्तस्तद्व्रण[15]वेदनापरिगतः कष्टं मृतः सांप्रतम् ॥ ११ ॥ मित्रे[16] क्वापि गते सरोरुहवने बद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिताश्लिष्टं पुरः सारसम्[17] । चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता वक्त्रे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ १२ ॥ तीरात्तीरमुपैति रौति[18] करुणं चिन्तां

---

१ रात्रिः । २ हंसः । ३ कमल- । ४ नक्तम् । ५ पक्षिणा, चक्रवाकेन । ६ चन्द्रमसः । ७ सूर्ये । ८ पक्षिणि । ९ चन्द्रदर्शनम् । १० विकसित- । ११ सौरभ- । १२ सायम् । १३ प्रौढा । १४ पीडितः । १५ प्रियामर्म्माघात- । १६ सूर्ये सुहृदि च । १७ हंसम् । १८ कूजति ।

समालम्बते किंचिद्ध्यायति निश्चलेन मनसा योगीव युक्तेक्षणः । स्वां छायामवलोक्य कूजति पुनः कान्तेति मुग्धः खगो धन्यास्ते भुवि ये निवृत्तमनसो धिग्दुःखितान्कामिनः ॥ १३ ॥ भङ्क्त्वा भोक्तुं न भुङ्क्ते कुटिलबिसलताकोटिमिन्दोर्वितर्कात्ताराकारास्तृषार्तः पिबति न पयसां विप्रुषः पत्रसंस्थाः । छायामम्भोरुहाणामलिकुलशबलां वेत्ति संध्यामसंध्यां कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ १४ ॥

## सायंसन्ध्याकीर्त्तनम् ।

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथाऽपि न समागमः ॥ १ ॥ परां रागकाले प्राप्य जाते कमलिनीपतौ । शोकादिव तमोग्रस्ता पूर्वैषा प्रतिभासते ॥ २ ॥ उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः । तस्यैव पातेन विचूर्णितास्य संध्यारजोराजिरिवोज्जिहीते ॥ ॥ ३ ॥ विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् । चिरमुज्झताऽपि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः ॥ ४ ॥ अथ सान्द्रसांध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः । पृथगुत्पपात विरहार्तिदलद्धृदयाद्धृतासृगनुलिप्तमिव ॥ ५ ॥ निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया । दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमदः ॥ ६ ॥ दिवसोऽनु मित्रमगमद्विलयं किमिहास्यते बत मयाऽबलया । रुचिभर्तुरस्य विरहाधिगमादिति संध्याऽपि सपदि व्यगमि ॥ ७ ॥ उड्डायितः पूर्वदिशा क्रमेण प्रकाशरङ्गः पृथुलः पतङ्गः । पारे वियद्विच्युतरश्मिरर्वाक् पतन्निदानीं क्षपितोऽस्तशैले ॥ ८ ॥ मुग्धस्य केलिविजितस्मरचापयष्टेरातन्वती रुचिमतीव सुधाकरस्य । रागोद्धुरा स्फुटमुदञ्चिततारकश्रीः संध्याऽऽविरस्ति ननु कापि पतिंवरेव ॥ ९ ॥

## निशाऽऽख्यानम् ।

जगत्तापकरे लीने शयानास्वब्जिनीषु च । निशा कुवलयामोदं विधातुमियमुद्यता ॥ १ ॥ व्योमपात्रमपि चैकपाणिना विस्फुटोडुकुसुमानि बिभ्रती । अन्यपाणिकलितेन्दुदर्पणा कामिनीव रजनीयमागता ॥ २ ॥ नृपतिपुरुषशङ्कितप्रचारं परगृहदूषणनिश्चितैकवीरम् । घनतिमिरनिरुद्धसर्वभावा रजनिरियं जननीव संवृणोति ॥ ३ ॥ निबिडतमतमस्तोमस्तिमिततमिस्राविमिश्रवेलायाम् । अम्बरवाटीकुसुमाकारास्तारा विभान्ति सस्फाराः ॥ ४ ॥ अस्तोदयाचलविलम्बिरवीन्दुबिम्बव्याजात्क्षणं श्रवणयोर्निहितारविन्दा । ताराच्छलेन कुसुमानि समुत्क्षिपन्ती संध्येयमागतवती प्रमदेव काचित् ॥ ५ ॥ रात्रिर्भवित्री बहुदुःखदात्री दीर्घा ननु प्रोषितभर्तृकाणाम् । इतीव निश्चित्य मनस्यशेषाऽप्येषा त्रियामा विहिता विधात्रा ॥ ६ ॥ शशाङ्के संनद्धे भरत इव संध्यायवनिका तिरोभूत्वा पुष्पाञ्जलिमिव विकीर्योडुनिकरम् । कलं गायन्तीभिः कुमुदवनभृङ्गीभिरधुना नभोरङ्गं प्राप्ता विहरति निशालासिकवधूः ॥ ७ ॥ उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते

---

१ बिन्दून् । २ मिश्रिताम् । ३ आकाशरूप- । ४ प्रकाशते । ५ जनसमूहेन । ६ सायंसन्ध्या । ७ स्वरूपभूताम् । ब्रह्मणः शरीरविशेषस्यैव सन्ध्यात्वादिति पुराणेषु स्पष्टम् । ८ ब्रह्मणः । ९ पक्षिणोः । १० प्रकटिता भवति । ११ कर्णयोः । १२ कलां प्रदर्शयितुम् । १३ नाट्याचार्ये । १४ तारापुञ्जम् । १५ मधुरं यथा तथा । १६ आकाशरूपं नर्त्तनदेशम् । १७ रात्रिरूपा नटी ।

विश्वमेतत् । पर्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये चित्राङ्गीयं रमयति तमःस्तोमनीला धरित्री ॥ ८ ॥ ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् । द्वीपाद्वीपं भ्रमति दधती चन्द्रमुद्राकपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ९ ॥

## अन्धकाराख्यानम् ।

आह्निकोत्तापदग्धानां त्रयाणां जगतां बत । तपनार्चिषि शान्ते तद्भस्मेदं तिमिरं तु न ॥ १ ॥ लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ २ ॥ सर्वं कुवलयं सूर्यो दग्धवान् स्वकरेण यत् । तेनेदं सर्वतश्छन्नं तिमिरं नान्यदीक्ष्यते ॥ ३ ॥ अविज्ञातविशेषस्य सर्वतेजोऽपहारिणः । स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ॥ ४ ॥ आपूरितमिदं श्यामतमसंतमसैरलम् । ब्रह्माण्डमण्डलं भाति सकज्जलकरण्डवत् ॥ ५ ॥ तनुलग्ना इव ककुभः क्ष्मावलयं चरणचारपात्रमिव । वियदपि चालिर्कंदघ्नं मुष्टिग्राह्यं तमः कुरुते ॥ ६ ॥ अम्बरविपिनमिदानीं तिमिरवराहोऽवगाहते जलधेः । रोमसु यदस्य लग्नास्तारकजलबिन्दवो भान्ति ॥७॥ घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः । ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥ ८ ॥ औष्ण्यातपभयादपलीनं वासरच्छविविरामपटीयः । संनिपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥ ९ ॥ एकतामिव गतस्य विवेकः कस्यचिन्न महतोऽप्युपलेभे । भास्वता निदधिरे भुवनानामात्मनीव पतितेन विशेषाः ॥ १० ॥ रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु । पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ ११ ॥ योगिनामपि हतो बत योगः कल्मषेण हततेजसि येन । क्वापि भास्वति गते त्रपयेव सर्वतो नवति तस्य विलासः ॥ १२॥ रात्रिरागमलिनानि विकासं पङ्कजानि रहयन्ति विहाय । स्पष्टतारकमियाय नभःश्रीर्वस्तुमिच्छति निरापदि सर्वः ॥ १३ ॥ नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः । लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्तते निशि ॥ १४ ॥ शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् । सर्वमेव तमसा समीकृतं धिङ् महत्वमसतां हतान्तरम् ॥ १५॥ पिदधति तिमिरे समस्तलोकं प्रलयमहाब्धिनिभे भृतोच्चनीचे । व्यरुचदुडुगणो वलक्षरोचिर्बहुविधफेनसमूहतुल्यरूपः ॥ १६ ॥ पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ । अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ १७ ॥ व्यसरन्नु भूधरगुहान्तरतः पटलं बहिर्बहलपङ्करुचि । दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहाः ॥ १८ ॥ किमलम्बताम्बरविलग्नमधः किमवर्धतोर्ध्वमवनीतलतः । विससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥ १९ ॥ स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशामन्धयति । दधिरे

---

१ सम्पात- लेप- संलेप-(वा) । २ विषयग्रहणक्षमत्वनिरासात् । ३ दिशः । ४ ललाटपर्यन्तम् । ५ कस्तूरीचूर्णैः । ६ प्रभातकालिक- । ७ पातकिना । अस्तमितेन च । ८ समाधिनिष्ठानाम् अवियोगिनां च । ९ समाधिः संयोगश्च । १० तादृशस्यापराधकल्मषस्य । पापादेस्तिमिरादिसाम्यं कविसमयसिद्धम् । ११ येन भेदो निरस्तस्तादृशम् । १२ आच्छादयति सति । १३ तारागणः । १४ 'वलक्षो धवलोऽर्जुनः ।' इत्यमरः । १५ सूर्यरूपे सिंहे । १६ पृथिवी ।

रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥ २० ॥ अवधार्य कार्यगुरुतामभवन्न भयाय सान्द्रतम-[1]सन्तमसम् । सुतनोः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥ २१ ॥ ददृशेऽपि भास्कररुचाऽह्नि न यः स [2]तमीं तमोभिरभिगम्य तताम् । [3]द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥ २२ ॥ अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपशिखाः । समयेन तेन चिरसुप्तमनोभवबोधनं सममबोधिषत ॥ २३ ॥ विवस्वताऽनायिषतेव मिश्राः स्वर्[4]गोसहस्रेण समं जनानाम् । [5]गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥ २४ ॥ चरमगिरिनिकुञ्जमु[6]ष्णभानौ भगवति गच्छति विप्रयोगखिन्ना । मुकुलितनयनाम्बुजा धरित्री वपुषि बभार [7]तमांसि शैवलानि ॥ २५ ॥ [8]काश्मीरगौरवपुषामभि[9]सारिकाणामाबद्धरेखमभितो मणिमञ्जरीभिः । एतत्तमालदलनीलतमं तमिस्रं तत्प्रेमहेम[10]निकषोपलतां तनोति ॥ २६ ॥ उद्दामदिग्[11]द्विरदचञ्चलकर्णपूरगण्डस्थलोच्चलदलिस्तबकाकृतीनि । मीलन्नभांसि मृग[12]नाभिस[13]नाभिभांसि दिक्कन्दरेषु विलसन्तितमां तमांसि ॥ २७ ॥ सिन्धोः सुधांशु[14]शकलं परिगृह्य संध्याक्षेमंकरी निपतिताम्बरभूरुहाग्रे । चञ्चूपुटेन चपलेन तया विकीर्णास्तारामिषेण पतिता इव पक्षखण्डाः ॥ २८ ॥ व्यसनिन इव विद्या क्षीयते पङ्कजश्रीर्गुणिन इव विदेशे दैन्यमायान्ति भृङ्गाः । कुनृपतिरिव लोकं पीडयत्यन्धकारो धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥ २९ ॥ इदं न[15]भसि भीषणभ्रमदुकूलकोलाहलैर्निशाचरविलासिनी-[16]निर्वहद्दत्तनेत्रोत्सवम् । परिस्फुरति निर्भरप्रचुरपङ्कमग्नोल्लसद्वराहकुल[17]मांसलं प्रबलबन्धमन्धं तमः ॥ ३० ॥ पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति । उपेतः पीनत्वं तदनु भुवनस्येक्षणपथं तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥ ३१ ॥ अमुष्मिन्नुद्यानद्रुमकु[18]हरनीरन्ध्रभरिते तमःखण्डे पिण्डीकृतबहलकालायसघने । य[19]तोमद्यास्माकं कथमपि पुरोन्यस्तचरणं निमेषेऽप्युन्मेषे न हि न हि विशेषो नयनयोः ॥ ३२ ॥ [20]काकोलं कलक[21]ण्ठिका कु[22]वलयं [23]कादम्बिनी कर्दमः [24]कंसारिः [25]कबरी कृपाणलतिका कस्तूरिका कज्जलम् । कालिन्दी कषप[26]ट्टिका करि[27]घटा [28]कामारिकण्ठस्थली यस्यैते कर[29]दा भवन्ति सखि तद्वन्दे विनिद्रं तमः ॥ ३३ ॥ किं भूमौ परितः स्फुरन्ति करिणः कस्तूरिकाया रसैः सिक्ताः किं निखिला दिशः किमखिलं व्याप्तं मषीभिर्नभः । किं व्याप्तं भुवनं समस्तमपि च श्रीकण्ठकण्ठत्विषा कालिन्दीजलकान्तिभाजि निबिडे जातेऽन्धकारेऽधुना ॥ ३४ ॥ सद्यः सान्द्रमषीविलुप्तककुभः स्निग्धेन्द्रनीलद्रवव्यामीलन्नभसो निरन्तरमिलन्नीलीरसश्च्योतिनः । एते कोकिलकायकालिमहृतो लुम्पन्ति वृत्तिं दृशोरुन्निद्राञ्जनपुञ्जमे[30]चकरुचो भीमास्तमःप्रक्रमाः ॥ ३५ ॥ चिन्वच्चोरचिकीर्षितानि घटयद्वे[31]तालगोष्ठीसुखं तन्वानं शवसाधनोद्धतरसं निर्व्याजवीरात्मनाम् । कुर्वत्कामकृ[32]शानुतप्तमनसां गुप्ताङ्गनासङ्गमं दृप्यत्कोकिलकालकण्ठमलिनं ध्वान्तं समुज्जृम्भते ॥ ३६ ॥

---

१ गाढान्धकारम् । २ रात्रिम् । ३ प्रकाशम् । ४ किरण- । ५ इन्द्रियाणि किरणाश्च । ६ चण्डांशौ । ७ तमोरूपाणि । तापशान्त्यै शैवालधारणं प्रसिद्धम् । ८ केशर- । ९ प्रियसङ्केतपदं प्रति स्वयं गमनकारिणीनाम् । १० स्वर्णकषणशिलायाः कृष्णो वर्णः प्रसिद्ध एव । ११ हस्ति- । १२ कस्तूरी- । १३ सदृश- । १४ खण्डम् । १५ आकाशे । १६ समूह- । १७ पुष्ट- । १८ छिद्र- । १९ 'इण् गतौ' शता सञ्चरताम् । २० गरलविशेषम् । २१ कोकिला । २२ कुमुदम् । २३ जलधरमाला । २४ कृष्णः । २५ केशबन्धः । २६ निकषोपलः । २७ हस्तियूथम् । २८ महादेवस्य ( नीलकण्ठतया ) कण्ठदेशः । २९ ऋणदातारः । काकोलादेः कृष्णत्वमादाय तमसः समृद्धिमत्त्वमिति भावः । ३० श्याम- । ३१ भूताविष्टः शवः । ३२ कामाग्नि- ।

नाकाशं न दिशो न भूधरकुलं नाम्भोधयो न क्षितिर्न द्यौर्नाम्बुधरा न तीव्रकिरणो नेन्दुर्न तारागणः । एतैः षट्पदे[2]काय कान्तिपटली[3]पाण्डित्यवैतण्डिकैः कल्लोलैस्तमसाम[4]सांप्रतमयं विश्वव्ययः कल्प्यते ॥ ३७ ॥ एतद्व्योमवनीवराहवलयं विश्वैकवीरस्मरस्कन्धावारमदान्धसिन्धुरकुलं श्यामावधूकैशिकम् । चक्षुष्याञ्जनवस्तु घूर्क[6]सदसां विश्लिष्टचक्राह्वयस्तोमान्तर्गतधूमकेतनमहाधूम्या तमस्तार्यते ॥ ३८ ॥ सर्वे ध्वान्तमिदं वदन्तु बहुधा सिद्धान्त एवं तु नः स्वाधारेषु करेषु पुष्करमणेः स्रस्तेषु नूनं शनैः । अस्तालम्बतयाऽम्बरेण पतता ग्रस्ते समस्ते जगत्युन्मीलत्करकन्दलैरपि विधोस्तत्तावदुत्तार्यते ॥ ३९ ॥ विश्वं चाक्षुषमस्तमस्ति हि तमः कैवल्यमौपाधिकप्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम् । गृह्यन्ते भयहेतवः पटुभिरप्यक्षान्तरैर्भाति च ध्वान्तेनाऽतिघनेन वस्तु वचसा ज्ञातः स्वरेणामुकः ॥ ४० ॥ व्योम्नि प्राङ्गणसीम्नि सान्ध्यकिरणं विस्तार्य चेलाञ्चलं ध्वान्तैः कार्मणपांसुभिश्च जगतां द्रोङ् मोहयित्वा दृशौ । ताराशौक्तिकमौक्तिकानि विहगश्रेणीरवच्छद्मना जिजिंकृत्य च मायिकः स्मरनटो वक्त्राद्बहिर्वर्षति ॥ ४१ ॥ उत्खातच्छिन्नसंध्यारुणकमलवनो व्योमकासारमध्यं मन्ये मत्तो निशीथाह्वयवनमहिषो मङ्क्ष्वविक्षन्निमङ्क्षुः । तत्कालोद्भिद्यमानः सह तनुपृथुभिस्तारकाबुद्बुदौघैस्तस्मादेवोज्जिहीते कलुषितभुवनं भीषणो ध्वान्तपङ्कः ॥ ४२ ॥ चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलानुज्ज्वलानि प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः[11] । किं चामी शल्ययन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रासंघट्टोत्पिष्टसंध्याकणनिकरपरिस्पर्धिनो भान्ति दीपाः ॥ ४३ ॥

## अभिसरणवर्णनम् ।

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः । क्षौमवत्यो[12] न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः[13] ॥ १ ॥ मल्लिकाचितधम्मिल्ला[14]श्चारुचन्दनचर्चिताः । अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥ २ ॥ मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनि[15]मेव वा । गणयन्ति न शीतोष्णं[16] रमणा[17]भिमुखाः स्त्रियः ॥ ३ ॥ गर्ज वा वर्ष वा मेघ मुञ्च वा शतशोऽशनिम् । न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥ ४ ॥ अधियामिनि[18] गजगामिनि कामिनि सौदामिनी[19]व यं व्रजसि । जलदेनेव न जाने कति कति सुकृतानि तेन विहितानि ॥ ५ ॥ जलधर निर्लज्जस्त्वं यन्मां दयितस्य वेश्म[20] गच्छन्तीम् । स्तनितेन[21] भीषयित्वा धाराहस्तैः परामृशसि ॥ ६ ॥ यद्वदहल्याहेतोर्मृषा वदसि शक्र[22] गौतमोऽस्मीति । तद्वन्ममापि दुःखं निरवेक्ष्य निवार्यतां जलदः ॥ ७ ॥ प्राणेशमभिसरन्ती पथि स्खलन्ती सुपिच्छिले मुग्धा । अवलम्बनाय वारां[23] धारासु करं प्रसारयति ॥ ८ ॥ यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः[24] । अयि विद्युत्प्रमदानां त्वमपि च दुःखं न जानासि ॥ ९ ॥ चन्द्रोदये चन्दनमङ्गकेषु विहस्य विन्यस्य

---

१ सूर्यः । २ भ्रमर- । ३ समूह- । ४ अनुचितम् । ५ समूहः । ६ उलूकगोष्ठीनाम् । ७ वियोगिचक्रवाकसमूह— । ८ धूमध्वज- ( अग्नि- ) । ९ अम्बरमणेः सूर्यस्येत्यर्थः । १० झटिति । ११ अग्निः । १२ श्वेताम्बरधराः । १३ 'अभिसारयते कान्तं या मन्मथवशंवदा । स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥' इति साहित्यदर्पणकाराद्युक्ता नायिका इत्यर्थः । १४ केशपाश- । १५ वज्रम्, विद्युतमित्यर्थः । १६ शीतं चोष्णं चेत्यनयोः समाहारस्तत् । १७ क्रीडोत्सुकाः कान्तोत्सुका वा । १८ यामिन्यामित्यर्थः । रात्राविति भावः । १९ विद्युदिव । २० स्थानम् । २१ गर्जितशब्देन । २२ इन्द्र । २३ जलानाम् । २४ पुंल्लिङ्गत्वसाम्यादिदमुक्तम् ।

विनिर्गतायाः । मनो निहन्तुं मदनोऽपि बाणान्करेण कौन्दान्बिभरांबभूव ॥ १० ॥ रमसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान् । रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः ॥ ११ ॥ स्फुरदुरसिजभारभङ्गुराङ्गी किसलयकोमलकान्तिना पदेन । अथ कथय कथं सहेत गन्तुं यदि न निशासु मनोरथो रथः स्यात् ॥ १२ ॥ संचरन्ति मृगनाभिचार्चिता मेचकाम्बरकृतावगुण्ठनाः । प्राणनाथमभिसर्तुमुद्यताः सुभ्रुवस्तिमिरदेवता इव ॥ १३ ॥ क्व प्रस्थितासि करभोरु घने निशीथे प्राणाधिपो वसति यत्र जनः प्रियो मे । एकाकिनी वद कथं न बिभेषि बाले नन्वस्ति पुङ्खितशरो मदनः सहायः ॥ १४ ॥ मन्दं निधेहि चरणौ परिधेहि नीलं वासः पिधेहि वलयावलिमञ्चलेन । मा जल्प साहसिनि शारदचन्द्रकान्तदन्तांशवस्तव तमांसि समापयन्ति ॥ १५ ॥ मूढे निरन्तरपयोधरया मयैव कान्तः सहाभिरमते यदि किं तवात्र । मां गर्जितैरिति मुहुर्विनिवारयन्ती मार्गं रुणद्धि कुपितेव निशा-सपत्नी ॥ १६ ॥ उरसि निहितस्तारो हारः कृता जघने घने कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ । प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥ १७ ॥ वातोद्धूतमुखी प्रनष्टतिलका तोयार्द्रलीनांशुका मेघानां निनदेन भीतहृदया गत्वा प्रियस्यालयम् । द्वारं नेच्छति लज्जया प्रलपितुं देहीति वर्षाहता पादौ नूपुरकर्दमप्रतिहतौ संशब्दयन्ती स्थिता ॥ १८ ॥ न जल्प दशनत्विषा भवति ते तमिस्रक्षतिस्तरञ्जय दृगञ्चलं भवतु तेन गाढं तमः । अपीह सखि सार्ध्वसं पथि जहीहि निम्नोन्नते स्मरं समदसिन्धुरं समधिरुह्य निर्गच्छसि ॥ १९ ॥ मुक्तं मौक्तिकदाम हेमवलयश्रेणी समुत्सारिता वासो नीलमुरीकृतं नियमितो मञ्जीरकोलाहलः । गच्छन्त्यास्तव साहसं न सहते तन्वङ्गि संगोपनं धम्मिल्लच्युतमल्लिकापरिमलप्रौढो निशीथानिलः ॥ २० ॥ जाताः प्रासादपालीकनकवलभिकान्यस्तमाणिक्यदीपच्छायाविच्छर्दतुच्छीकृतविरलतमा ये निशीथान्धकाराः । तेऽमी स्फारीक्रियन्ते प्रतिविशिखमतः कान्तसंकेतधावद्वामभ्रूमुक्तनेत्रोत्पलतरलतरत्तारकामेचकिम्ना ॥ २१ ॥ उत्तंसः केकिपिच्छैर्मरकतवलयैः श्यामले दोःप्रकाण्डे हारः सान्द्रेन्द्रनीलैर्मृगमदरचितो वक्रपत्रप्रपञ्चः । नीलाब्जैः शेखरश्रीरसितवसनता चेत्यभीकाभिसारे संप्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेषलीला ॥ २२ ॥ मलयजरसविलिप्ततनवो नवहारलताविभूषिताः सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः । शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥ २३॥

## ताराप्रशंसा।

उद्गता मथनक्षोभात्फेनराजिः पयोदधेः । तारकावलिरित्यज्ञैरियं सखि ! निवेद्यते ॥ १ ॥ घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम् । छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि॥

---

१ कुन्दपुष्परूपान् । २ वेगात् । ३ मेघः । ४ सूर्यः। सूर्यवत् प्रकाशनिमित्तभूत इति भावः । ५ कुच- । ६ कस्तूरी- । ७ नीलवस्त्र- । ८ निबिडे । ९ पुङ्खवद् बाणशाली । १० वस्त्रेण । ११ निबिडकुच( मेघ ) या । १२ दन्तप्रकाशेन । १३ भयम् । १४ त्यज । १५ हस्तिनम् । १६ अर्द्धरात्र- । १७ नीलिम्ना । १८ मयूर- १९ इन्द्रनीलमणि- । २० अत्राभेदे तृतीया । तेन सान्द्रेन्द्रनीलरत्नाभिन्नहार इति भावः । २१ निर्भयाभिसरणे । २२ चन्दन- । २३ क्षीरसागरस्य । २४ कीटविशेषः । २५ दिशां दारूणां च ।

॥ २ ॥ उद्धर्तुं किल शैलकेलिरभसस्त्रस्तानि पाथोनिधेरन्तर्भूषणमौक्तिकानि दिविजस्त्रीभिः समुत्कण्ठया । गाढं तत्र निमज्जितेन रविणा बद्ध्वा दृढं रश्मिभिः प्रोत्क्षिप्तानि निपत्य तानि गगने तारापदेशं दधुः ॥ ३ ॥ आकाशश्रमखिन्नभास्करहयप्रोद्वान्तफेनच्छटाविच्छिन्नस्तबका इवाम्बरतलश्रीहारमुक्ता इव । सन्ध्यानृत्यनटोन्नतोज्ज्वलजटाजूटज्वलज्जाह्नवी धाराप्रोच्छलदच्छबिन्दव इव स्फूर्जन्ति तारा अमी ॥ ४ ॥

## निशाकररमणीयता।

दुष्टानां सखि ! चण्डांशुदुःसहोद्दीप्तदीप्तिभिः । सुधांशुर्जगतां दाहं निराकर्तुमुपस्थितः ॥ ॥ १ ॥ सुधयेव हरत्येष संतापं गृहिणां सदा । तदेव द्विजराजेति प्रथितास्याभिधाऽभितः ॥ २ ॥ ततः कुमुदनाथेन कामिनीगण्डपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ ३ ॥ कुमुदेष्वधिकं भान्ति पतिताश्चन्द्ररश्मयः । अतिप्रकृष्टशीलेषु कुलेष्विव समृद्धयः ॥ ४ ॥ पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥ ५ ॥ नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति । अधुना विनिरुद्धाशं प्रविशीर्णमिदं तमः ॥ ६ ॥ नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः । पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥ ७ ॥ ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च । राजन्ति व्योमकासारे राजहंसः सुधाकरः ॥ ८ ॥ आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम् । लङ्घयत्यम्बराभोगं हनूमानिव सागरम् ॥ ९ ॥ इदमाभाति गगने भिन्दानं संततं तमः । अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥ १० ॥ उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम् । परिपाण्डुना मुखेन प्रियमित्र हृदयस्थितं रमणी ॥ ११ ॥ अथ पथिकवधूदहनः शनकैरुदभून्निशाकरालोकः । कुमुदप्रबोधदूतो व्यसनगुरुश्चक्रवाकीणाम् ॥ १२ ॥ त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः । अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥ १३ ॥ हंसो यथा राजति पञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः । वीरो यथा दर्पितकुञ्जरस्थश्चन्द्रोऽपि बभ्राम तथाम्बरस्थः ॥ १४ ॥ आकाशवापीसितपुण्डरीकं शाणोपलं मन्मथसायकानाम् । पश्योदितं शारदमम्बुजाक्षि संध्याङ्गनाकन्दुकमिन्दुबिम्बम् ॥ १५ ॥ वीथीषु वीथीषु विलासिनीनां मुखानि संवीक्ष्य शुचिस्मितानि । जालेषु जालेषु करं प्रसार्य लावण्यभिक्षामटतीव चन्द्रः ॥ १६ ॥ नभोलताकुञ्जमुपागतायाः प्रमोदपर्याकुलतारकायाः । निशाङ्गनायाः स्फुरता करेण शशी तमःकञ्चुकमुन्मुमोच ॥ १७ ॥ मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः । विराजति व्योमसरःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम् ॥ १८ ॥ अथ मन्मथवाहिनीपरागः किमपि ज्योतिरुदस्फुरत्पुरस्तात् । तिमिरस्य जरा चकोरकूरं कुलटाकेलिवनीदवानलार्चिः ॥ १९ ॥ नवकुङ्कुमचर्चिका रजन्या गगनाशोकतरोः प्रवालपङ्क्तिः । मणिकुन्तलता स्मरस्य मन्ये शशिनः

---

१ स्वर्गवासि-। २ तारानामच्छलम्। ३ चन्द्रमसा। ४ अत्र कामिनीपदं विरहिणीनायिकापरम्। ५ पूर्वा दिक् इन्द्रसम्बन्धिनी च। ६ दिक्षु व्याप्तम्। ७ खण्डितम्। ८ राजहंसपदेन समस्तत्वं तु न युक्तम् अभवन्मतयोगत्वापत्तेरिति साहित्यदर्पणकाराः। ९ वर्धयन्। १० खण्डयन्तम्। ११ समन्ततो व्याप्तम्। १२ इन्दुसम्बन्धि। १३ प्रकाशः। १४ शङ्कर-। १५ कुङ्कुमवदशोण-। १६ पुण्डरीकस्य श्वेतकमलवाचित्वेऽपि सितेति विशेषणमतिशयबोधनार्थम्। १७ हरिचन्दनलेपनम्। १८ ओदनम्।

प्राथमिकी मयूखलेखा ॥ २० ॥ उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् । यथा समस्तं तिमिरांशुकं तथा पुरोऽपि रागाद्गलितं न लक्षितम् ॥ २१ ॥ करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य । विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः । ॥ २२ ॥ अन्धकारगरलं यतो जगन्मोहकारि भृशमत्ति नित्यशः । उज्ज्वलं जठरमोषधीपतेरञ्जनाभमभवत्ततः प्रिये ॥ २३ ॥ मानिनीजनविलोचनपातानुष्णबाष्पकलुषान्प्रतिगृह्णन् । मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः ॥ २४ ॥ शङ्करार्धतनुबद्धपार्वती कुङ्कुमाक्तकुचकोरकाकृतिः । सूच्यते कमलिनीभिरुन्नमत्पद्मकोशकरलीलया शशी ॥ २५ ॥ इन्दुरिन्दुरिति किं दुराशया बिन्दुरेष पयसो विलोक्यते । नन्विदं विजयते मृगीदृशः श्यामकोमलकपोलमाननम् ॥२६॥ रुद्धनिर्गमनमादिनक्षयात्पूर्वदृष्टतनुचन्द्रिकास्मितम् । एतदुद्गिरति रात्रिचोदिता दिग्रहस्यमिव चन्द्रमण्डलम् ॥ २७ ॥ पश्य पक्कफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोऽम्भसा । विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ २८ ॥ अङ्गुलीभिरिव केशसंचयं संनियम्य तिमिरं मरीचिभिः । कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ २९ ॥ रक्तभावमपहाय चन्द्रमा जात एव परिशुद्धमण्डलः । विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥ ३० ॥ उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः । नूनमात्मसदृशी प्रकल्पिता वेधसैव गुणदोषयोर्गतिः ॥ ३१ ॥ चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः । मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥ ३२ ॥ उन्नतावनतभागवत्तया चन्द्रिका सतिमिरा गिरेरियम् । भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तदन्तिनः ॥ ३३ ॥ एतदुच्छ्वसितपीतमैन्दवं सोढुमक्षममिव प्रभारसम् । मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥ ३४ ॥ आननानि हरिणीनयनानामद्भुतानि च समीक्ष्य जगत्याम् । लज्जयेव वनमण्डललीनो मन्दमन्दमहहेन्दुरुदेति ॥ ३५ ॥ व्योमैशे शशधरेण विमुक्तः केतकीकुसुमकेसरपाण्डुः । चूर्णमुष्टिरिव लम्बितकान्तिर्वासवस्य दिशमंशुसमूहः ॥३६॥ उज्झती शुचमिवाशु तमिस्रामन्तिकं व्रजति तारकराजे । दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री ॥ ३७ ॥ नीलनीरजनिभे हिमगौरं शैलरुद्धवपुषः सितरश्मेः । खे रराज निपतत्करजालं वारिधेः पयसि गाङ्गमिवाम्भः ॥ ३८ ॥ द्यां निरुन्धदतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् । क्षिप्यमाणमसितेतरभासा शंभुनेव करिचर्म चकाशे ॥ ३९ ॥ अन्तिकान्तिकगतेन्दुविसृष्टे जिह्मतां जहति दीधितिजाले । निःसृतस्तिमिरभारनिरोधादुच्छ्वसन्निव रराज दिगन्तः ॥ ४० ॥ लेखया विमलविद्रुमभासा संततं तिमिरमिन्दुरुदासे । दंष्ट्रया कनकटङ्कपिशङ्ग्या मण्डलं भुव इवादिवराहः ॥ ४१ ॥ दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः । हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥ ४२ ॥ उद्गतेन्दुमविभिन्नतमिस्रां पश्यति स्म रजनीमवितृप्तः । व्यंशुकस्फुटमुखीमतिजिह्मां व्रीडया नववधूमिव लोकः ॥ ४३ ॥ न प्रसादमुचितं गमिता द्यौर्नोद्धृतं तिमिरमद्रिवनेभ्यः ।

---

१ चन्द्रमसः । २ चन्द्रः । ३ रात्रिमुखम् । ४ रागित्वम् । ५ मयूरान् । ६ विभागैः । ७ भस्मैव ८ पृथिव्याम् । ९ व्याप्तः । १० चन्द्रमसि । ११ वेष्टितवती, कृतवतीति यावत् ।१२चन्द्रस्य । १३ जलम् । १४ आकाशम् । १५ श्वेत । १६ अतिसमीप- । १७ कुटिलताम् । १८ उत्क्षिप्तवान् उद्धृतवांश्च । १९ पीतया । २० आवरणरहित- ।

दिङ्मुखेषु न च धाम विकीर्णं भूरितैव रजनी हिमभासा ॥ ४४ ॥ श्लिष्यतः प्रियवधूरुपकण्ठं[1] तारकास्ततकरस्य हिमांशोः । उद्वमन्नभिरराज समन्तादङ्गराग इव लोहितरागः ॥ ४५ ॥ प्रेरितः शशधरेण करौघः संहतान्यपि नुनोद तमांसि । क्षीरसिन्धुरिव मन्दरभिन्नः काननान्यविरलोच्चतरूणि ॥ ४६ ॥ शारतां[2] गमितया शशिपादै[3]श्छायया विटपिनां प्रतिपेदे । न्यस्तशुक्लबलिचित्रतलाभिस्तुल्यता वसतिवेश्ममहीभिः ॥ ४७ ॥ गन्धमुद्धतरजःकणवाही विक्षिपन्विकसतां कुमुदानाम् । आदुधाव परिलीनविहङ्गा यामिनी[4]मरुदपां नवराजीः ॥ ४८ ॥ संविधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघः । यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥ ४९ ॥ ओजसाऽपि खलु नूनमनूनं नासहायमपयाति जयश्रीः । यद्विभुः शशिमयूखसखः सन्नाददे विजयि चापमनङ्गः ॥ ५० ॥ कलितमम्बरमाकलयन्करैर्मृदितपङ्कजकोशपयोधरः । विकसदुत्पलनेत्रविलोकितः सखि निशां सरसीकुरुते विधुः ॥ ५१ ॥ वसुधान्तनिःसृतमिवाहिपतेः[5] पटलं फणामणिसहस्ररुचाम् । स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥ ५२ ॥ विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः । मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥ ५३ ॥ कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् । क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति ॥ ५४ ॥ नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव । ददृशे ललाटतटहारि हरेर्हरितो[6][7] मुखे तुहिनरश्मिदलम् ॥ ५५ ॥ प्रथमं कलाऽभवदथार्धमथो हिमदीधिति[8]र्महदभूदुदितः । दधति ध्रुवं क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥ ५६ ॥ उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा । प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ५७ ॥ अथ लक्ष्मणा[9]नुगतकान्तवपुर्जलधिं विलङ्घ्य शशिदाशरथिः[10] । परिवारितः परितऋक्षगणैस्तिमिरौघराक्षसकुलं[11] बिभिदे ॥ ५८ ॥ उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः । घनवीथि[12]वीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥ ५९ ॥ रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् । अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥ ६० ॥ दिवसं[13] भृशोष्णरुचि[14]पादहतां रुदतीमिवानवरतालिरुतैः । मुहुरामृशन्मृगधरो[15]ऽग्रकरैरुदशिश्वसत्कुमुदिनीवनिताम् ॥ ६१ ॥ प्रतिकामिनीति ददृशुश्चकिताः स्मरजन्म[16]घर्मपयसोपचिताम् । सुदृशोऽभिभर्तृशशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥ ६२ ॥ अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः[17] स्म करैः । परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ६३ ॥ अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः । विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥ ६४ ॥ तपनस्य तीव्रमहसा दिवसं परितप्तमेतदखिलं भुवनम् । सुधयेव शान्तिमचिरान्नयते तदिवौषधीश इति लब्धपदः ॥ ६५ ॥ उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि । रजनीकरः किमिव चित्रमहो यदुरागिणां गणमनङ्गलघुम् ॥ ६६ ॥ भवनोदरेषु परिमन्दतया शयितोऽलसः स्फटिक-

---

१ कण्ठस्य समीपे । २ मलिनतां श्यामतां वा ।-३ किरणैः। ४ रात्रि-। ५ शेषस्य । ६ इन्द्रस्य, इन्द्रसम्बन्धिन्या इति यावत् । ७ दिशः प्राच्यादय इति, यावत् । ८ चन्द्रस्य । ९ सौमित्रि-मृगचिह्न- । १० शश्येव दाशरथी रामः इति शशी दाशरथिरिवेति वा । ११ तिमिरौघ एव राक्षसकुलमिति, तिमिरौघो राक्षसकुलमिवेति वा । १२ मेघावलिरूपं मार्गम् । १३ दिनसमाप्तिं यावत् । १४ सूर्यचरण-। सूर्यकिरण-। १५ चन्द्रः। १६ कामसंजात-। १७ चन्द्रः ।

यष्टिरुचः। अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ६७ ॥ अविभावितेषु विषयः प्रथमं मदनोऽपि नूनमभवत्तमसा। उदिते दिशः प्रकटयत्यमुना यदेवमधाम्नि धनुराचकृषे ॥ ६८ ॥ युगपद्विकासमुदयाद्गमिते शशिनः शिलीमुख[2]गणोऽलभत। द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥ ६९ ॥ ककुभां[3] मुखानि सहसोज्ज्वलयन्दधदाकुलत्वमधिकं रतये। आदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयन[4]प्रभवः ॥ ७० ॥ ख्याता वयं समधुपा मधु[6]कोशवत्यश्चन्द्रः प्रसारितकरो[7] द्विजराज[8] एषः। अस्मत्समागमकृतोऽस्य पुन[9]र्द्वितीयो मा भूत्कलङ्क इति संकुचिता नलिन्यः ॥ ७१ ॥ उद्गर्भहूणतरुणीरमणोपमर्दभुग्नोन्नतस्तननिवेशनिभं हिमांशोः। बिम्बं कठोरबिसकाण्डकेदार[10]मेतद्दम्भौपदं[11] प्रथममग्रकरैर्व्यनक्ति ॥ ७२ ॥ ताराक्षतान्प्रविकिरन्कलकण्ठ[12]नादान्मन्त्राक्षराणि निगदन्कुसुमेषुरेषः। लाभाय वासरमणे[13]र्मुषितस्य सायं संचारयत्यमृतदीधितिकांस्यपात्रम् ॥ ७३ ॥ एतद्विभाति चरमाचलचूडचुम्बि डिण्डीर[14]पिण्डरुचि शीतमरीचिबिम्बम्। उज्ज्वालितस्य रजनीं मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन ॥ ७४ ॥ भूयस्तराणि यदमूनि तमस्विनीषु[15] ज्यौत्स्नीषु[16] च प्रविरलानि ततः प्रतीमः। सन्ध्यानलेन भृशमम्बरमूषिका[17]यामावर्तितैरुडुभिरेव कृतोऽयमिन्दुः ॥ ७५ ॥ उज्जृम्भते कुमुदिनीसुकृतं मृगाङ्को विष्व[18]ग्विकीर्णपरिपाटलरश्मिदण्डः। उत्सूतविद्रुमकुलो जलधेस्तरङ्गादुत्क्षिप्यमाण इव कश्चन राजकम्बुः[19] ॥ ७६ ॥ गगनविपिनसिंहः कामभूपातपत्रं[20] निखिलदिगबलानां कन्दुकं क्रीडनाय। मणिरिव रतिभर्तुः कार्मणः[21] पार्वणो[22]ऽयं जयति कुमुदबन्धुर्बन्धुर[23]श्चन्द्रबिम्बः ॥ ७७ ॥ अयमुदयति चन्द्रो वारिधेरम्बुगर्भादमृतकणकरालैरंशुभिर्दीप्यमानः। भुजग[24]शयनवक्षोहर्म्यदेशे लसन्त्या[25] वदनमिव यदृच्छोत्तानितं विश्वमातुः[26] ॥ ७८ ॥ अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्वः परिणतविमले[27]म्नि व्योम्नि कर्पूरगौरः। ऋजुरजतशलाकास्पर्धिभिर्यस्य पादै[28]र्जगदमलमृणालीपञ्जरस्थं विभाति ॥ ७९ ॥ उदयति कमलमन्द्रैः कण्ठतालैरलीनां कुमुदमुकुलकेषु व्यञ्जयन्नङ्गहारान्। मदमुखर[29]चकोरीतोयकर्मान्तिकोऽयं तुहिनरुचिरधामा दक्षिणं लोकचक्षुः ॥ ८० ॥ मृगाङ्कोऽयं धत्ते गगनजलतः फेनतुलनां सितच्छत्राकारां मदननृपतेर्विश्वजयिनः। त्रियामा[30]रामायां मलयजविशेषप्रतिकृतिं[31] जगद्धात्रीदेव्या मणिमुकुटलक्ष्मीं च विमलाम् ॥ ८१ ॥ कपाले मार्जारः पय इति कराँल्लेढि शशिनस्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति। रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ८२ ॥ अयं नेत्रादत्रेरजनि रजनीवल्लभ[32] इति भ्रमः कोऽयं प्रज्ञापरिचयपराधीनमनसाम्। सुधानामाधारः स खलु रतिबिम्बाधरसुधारसासेकस्निग्धादजनि नयनात्पुष्पधनुषः[33] ॥ ८३ ॥ जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो

---

१ चन्द्रे। २ भ्रमर-। बाण-। ३ दिशाम्। तद्रूपाणां सुन्दरीणां च ४रुद्रेतर-। अत्रिमुनिनेत्र-। ५ भ्रमरयुक्ताः। मद्यपयुक्ताश्च। ६ रसविशेष--। मद्य--। ७ किरण--। हस्त--। हस्तपक्षे याचकत्वप्रतीतिः। ८ चन्द्रः ब्राह्मणश्च। ९ मालिन्यरूपस्य याचकत्वरूपस्य वा लाञ्छनस्य सिद्धत्वात्। १० कपिलवर्णम्। ११ कदली-। १२ कोकिलध्वनीन्। १३ दिनकरस्य वासररूपस्य रत्नस्य च। १४ समुद्रफेन-। 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः। १५ ध्वान्तच्छन्नासु रात्रिषु। १६ प्रकाशबहुलासु रात्रिषु। १७ मूस इति ख्याते द्रव्यविशेषस्य द्रवीभावापादनाय आधारभूते पात्रे। १८ सर्वतः। १९ कम्बूनां राजेति राजा द्विजराज एव कम्बुरिति वा। २० छत्ररूपः। २१ उच्चाटनादिसाधनभूतः। २२ पूर्णः। २३ उन्नतानतः। २४ शेषरूपे प्रासाददेशे। २५ शोभमानायाः। २६ लक्ष्म्याः। २७ निर्मलतापूर्णे। २८ किरणैः। २९ वाचाल- ३० रात्रि-। ३१ सादृश्यम्। ३२ प्रियः। ३३ कामस्य।

वियोगिव्यापत्तेरिव कलितवैराग्यविशदः। परिप्रेङ्खत्तारापरिकरकपालाङ्कितत्तले शशी भस्मापाण्डुः पितृ[1]वन इव व्योम्नि चरति ॥ ८४ ॥ तथा पौरस्त्या[2]यां दिशि कुमुदकेदार[3]कलिकाकबाटघ्नीमिन्दुः किरणलहरीमुल्लसयति । समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ ८५ ॥ सुधारश्मिः सद्यस्तिमिरनिकरान्तं विरचयन्नलिन्दे[4]भ्यः स्यन्दं शशिमणिसमुत्थं च वितरन् । उदेत्यादौ रक्ताम्बुजसमरुचिः कैरववने प्रमोदं तन्वानो मधुपवनितागीतिमधुरम् ॥ ८६ ॥ त्रिनयनजटावल्लीपुष्पं निशावदनस्मितं ग्रहकिसलयं संध्यानारीनितम्बनखक्षतिः । तिमिरभिदुरं व्योम्नः शृङ्गं मनोभवकार्मुकं प्रतिपदि नवस्येन्दोर्बिम्बं सुखोदयमस्तु नः ॥ ८७ ॥ प्रथममरुणच्छायस्तावत्ततः कनकप्रभस्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः । उदयति ततो ध्वान्तध्वंसक्षमः क्षण[5]दामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ ८८ ॥ मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलोच्छलत्तरलतारकागणविकीर्णमुक्तागणः । पुरंद[6]रहरिद्दरीकुहरगर्भसुप्तोत्थितस्तुषारक[7]रकेसरी गगनकाननं गाहते ॥ ८९ ॥ प्रसारणपरैः करैः प्रकटितानुरागोदये सुधाकिरणकामुके त्वरितमम्बरालम्बिनि । तदा विगलितोल्लसत्तिमिरजालनीलांशुका पुरंदरदिगङ्गना पुलकितेव तारागणैः ॥ ९० ॥ क[8]लानिधिरयं रवेः समुपलभ्य रूपं स्वयं दिनान्तसमयेऽस्पृशत्सपदि प[9]द्मिनीं रागवान् । ध[10]वान्यकरसंगमान्मुकुलितेति पूर्वाकृतिं समीक्ष्य जहसुः प्रियो[11] ध्रुवमभूदतः पाण्डुरः ॥ ९१ ॥ दर्पोद्रेकः कुसुमधनुषो जीवितं कैरवाणां जीवंजीवप्रणयगरिमा भाग्यराशिर्निशायाः । शृङ्गारश्रीललितहसितं पानपात्रं सुराणां पौरस्त्या[12]द्रेर्जयति शिखरं किं तमः स्थातुमीष्टे ॥ ९२ ॥ तैः सर्वङ्गीभवदभिसृतानेत्रसिद्धाञ्जनैर्वा नीरन्ध्रैर्वा त्रिभुवनदशामन्धपट्टैस्तमोभिः । व्याप्तं पृथ्वीवलयमखिलं क्षालयन्नुच्छलद्भिर्ज्योत्स्नाजालैरयमुदयते शर्वरीसार्व[13]भौमः ॥ ९३ ॥ पश्योदेति वियोगिनीदिनमणिः शृङ्गाररक्षामणिस्तारामौक्तिकहारनायकमणिश्चण्डीशचूडामणिः । प्रौढानङ्गभुजङ्गमस्तक[14]मणिः कंदर्पसीम[15]न्तिनीकाञ्चीमध्यमणिश्चकोरपरिष[16]च्चिन्तामणिश्चन्द्रमाः ॥ ९४ ॥ ओंका[17]रो मदनद्विजस्य गगनक्रोडैकदंष्ट्राङ्कुरस्तारामौक्तिकशुक्तिरन्धतम[18]सस्तम्बेरमस्याङ्कुशः । शृङ्गारार्गलकुञ्चिका विरहिणीमर्मच्छिदा कर्तरी संध्यावार[19]वधूनखक्षतिरियं चान्द्री कला राजते ॥ ९५ ॥ स्वैरं कैरवकोरकान्विदलयन्यूनां मनो दोल[20]यन्नम्भोजानि निमीलयन्मृगदृशां मानं समुन्मूलयन् । ज्योत्स्नां कन्द[21]लयन्दिशो धवलयन्नम्भोधिमुद्वेलयन् कोका[22]नाकु[23]लयंस्तमः कबलयन्निन्दुः समुज्जृम्भते ॥ ९६ ॥ एष स्वर्गस[24]रङ्गिणीजलमिलद्दिग्दन्तिदन्तद्युतिर्भ्रश्यद्राजतकुम्भविभ्रमधरः शीतांशुरभ्युद्यतः । हंसीयत्यमलाम्बुजीयति लसड्डि[25]ण्डीरपिण्डीयति स्फा[26]रस्फाटिककुण्डलीयति दिशामानन्दकन्दीयसि ॥ ९७ ॥ अद्यापि स्तनशैलदुर्गविषमे सीमन्ति[27]नीनां हृदि स्थातुं वाञ्छति मा[28]नं एष धिगिति क्रोधादिवालोहितः । उद्यद्दूरतरप्रसारितकरः कर्षत्यसो तत्क्ष-

---

१ श्मशाने। २ पुरोवर्तिन्यां पूर्वस्यां च। ३ क्षेत्र-। ४ भ्रमरेभ्यः। ५ रात्र्यारम्भे। ६ पूर्वदिग्रूपगुहारन्ध्रः-। ७ चन्द्र-। ८ चतुरः-। चन्द्रश्च। ९ कमलिनीं नायिकाविशेषं च। १० जार-। ११ कुमुदिन्यः। १२ उदयगिरेः। १३ चन्द्रः। १४ वियोगिनां हरत्वात् दर्शने रमणीयत्वाच्चेदं साम्यम्। १५ स्त्री—। १६ अत्र परिषच्छब्दः समूहार्थकः। १७ सर्वस्वभूतः। १८ गाढान्धकाररूपहस्तिनः। १९ सन्ध्यारूपवेश्या-। २० कम्पयन्। २१ पोषयन्। २२ चक्रवाकान्। २३ वियोगहेतुत्वात्। २४ गङ्गा। २५ समुद्रफेन-। २६ विशद-। २७ स्त्रीणाम्। २८ ईर्ष्याकृतः।

णात्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं[1] शशी ॥ ९८ ॥ कैलासायित[2]मद्रिभिर्विटपिभिः श्वेतातपत्रायितं मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः। मुक्ताहारलतायितं व्रततिभिः[3] शङ्खायितं श्रीफलैः श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये ॥ ९९ ॥ पीयूषाश्रयणं जगत्त्रयदशा[4]मालानलेखा[5] लवो विश्वोन्माथहुताशनस्य ककुभा[6]मुद्घाटिनी कुञ्चिका[7]। वीरेषु[8] प्रथमा[9] च पुष्पधनुषो रेखा मृगाक्षीमुखश्रीणां च प्रतिराजबीजमधिकानन्दी नवश्चन्द्रमाः ॥ १०० ॥ दिग्बालाकरकन्दुकः स्मरवधूसीमन्त[10]मुक्तामणिः कामक्षोणिपतेर्विहारवलभीनिर्व्यूहपारावतः। हृद्व्योम्नि विकीर्णतारकमणिः श्यामा[11]वणिक्सुभ्रुवः स्फारः स्फाटिकसंपुटः कुमुदिनीकान्तोऽयमुन्मीलति ॥ १०१ ॥ यातस्यास्तमनन्तरं दिनकृतो वेषेण रागान्वितैः[12] स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन्। शीतस्पर्शमुपेत्य संप्रति तया रुद्धे मुखाम्भोरुहे हासेनेव कुमुद्वतीवनितया वैलक्ष्य[13]पाण्डूकृतः ॥ १०२ ॥ एतत्कोक[14]कुटुम्बिनीजनमनःशल्यं चकोराङ्गनाचञ्चूकोटिकपाटयोर्विघटितयोरुद्घाटिनी कुञ्चिका। दग्धस्यापि नवाङ्कुरः स्मरतरोरार्द्रागसां प्रेयसीमानोद्दामगजाङ्कुशो विजयते मुग्धं सुधांशोर्वपुः ॥ १०३ ॥ क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रवत्पाथः[15]सीकरिणो विकासिकुमुदक्रोडे रजःपिञ्जराः। उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्रमं कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥ १०४ ॥ ध्वान्तौघे शितिकण्ठकण्ठ[16]महसि प्राप्ते प्रतीचीमुखं प्राचीमञ्चति किं च दुग्धलहरीमुग्धे विधोर्धामनि। एतत्कोकचकोरशोकरभसम्लानप्रसन्नोल्लसद्दृक्पातोर्मिकदम्ब[17]चुम्बितमिव त्रैलोक्यमाभासते ॥ १०५ ॥ शीतांशुस्फटिकालवालवलयप्रागुल्लसत्कौमुदीवल्लीनूतनपल्लवाञ्चितमिव प्राप्य क्षणं ताम्रताम्। चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्नुतक्षीरस्यन्दनिरन्तराप्लुतमिव श्वेतं वियद्भासते ॥ १०६ ॥ यः श्रीखण्डतमालपत्त्रति दिशः प्राच्याः स्मरक्ष्मापतेः पाण्डुच्छत्त्र[18]ति दन्त[19]पत्त्रति विलयल्लक्ष्मीकुरङ्गीदृशः। केलिश्वेतसहस्र[20]पत्त्रति रते किं च क्षपायोषितः क्रीडाराजतसीधु[21]पात्त्रति शशी सोऽयं जगन्नेत्त्रति ॥ १०७ ॥ ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छदच्छायासाम्यभृतो मृणाललतिकालावण्यभाजोऽत्र ये। ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रियस्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः ॥ १०८ ॥ सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः। उद्गच्छत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करैर्मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥ १०९ ॥ कोकानाकुलयंश्चकोरतरुणीवैकल्यमुन्मूलयन्नम्भोजानि निमीलयन्कुमुदिनीरुन्मीलयन्सर्वतः। पान्थानाकुलतां नयन्कुलवधूचेतः समुल्लासयन्नस्तं याति दिवा[22]पतिः समुदयं यात्येष दोषा[23]पतिः ॥ ११० ॥ स्वर्वामामृतपानचारुचषकं[24] किं कामदेवाङ्गनाक्रीडाकन्दुक एष किं सुरनदीडिण्डीर[25]पिण्डः किमु। किं छत्त्रं स्मरभूपतेः किमु यशःपुञ्जं पुरस्तादिदं चेतःसंशयाकारकं समुदितं शीतद्युते[26]र्मण्डलम् ॥

---

१ भ्रमरराजिकृपाणयोः समानवर्णत्वात्। २ कैलासचन्द्रयोः सितत्वात्। ३ लताभिः। ४ दृग्रूपाणां हस्तिनीनामिति भावः। ५ बन्धनशृङ्खलाभूतः। ६ दिशाम्। ७ स्वरूपप्रकटयितृत्वात्। ८ सैनिकेषु। ९ प्रथमा रेखेत्यमुख्यतया गण्यः। १० केशपाश- ११ तमिस्रारूपवणिगङ्गनायाः। १२ अनुरागशाली शोणिमशाली च १३ हास्यविशेषे श्वेततां नीत-। १४ चक्रवाकी। १५ जल। १६ नीलकण्ठ (शङ्कर)। १७ समूह-। १८ श्वेतच्छत्त्रमिव चरति। १९ हस्तिदन्तदलमिवाचरति। २० श्वेतकमलमिवाचरति। २१ मद्यपानपात्त्रमिवाचरति। २२ सूर्यः। २३ चन्द्रः, दोषाया रात्रेः पतिः। २४ पात्रविशेषः। २५ गङ्गाफेन-। २६ चन्द्रस्य।

॥ १११ ॥ पद्मिन्या दयितेऽनुधावति रुषा स्वं पद्मिनीद्रोहिणं भ्रान्त्वा भीतमना दिगन्तमखिलं चन्द्रो जगाहेऽम्बुधिम् । गाढे तत्र च तत्र विह्वलममुं कर्षन्ति ताराः पतिं सोऽयं तच्छ्रमवारिकुङ्कुमरसैः सिक्तोऽरुणो दृश्यते ॥ ११२ ॥ भानावभ्युदिते तथा मयि गते किं स्यान्मम प्रेयसी हा हेत्यस्तमितः शशी रसवशादिन्दीवरिण्याः स्मरन् । सोऽयं संप्रति नीलिमाङ्कितततनुस्तस्माद्दरीदृश्यते ये वै यत्किल संस्मरन्ति चरमे तद्रूपमेष्यन्ति ते ॥ ११३ ॥ आदायामृतपूर्णमर्कचषकं शोणारविन्दप्रभे पाणाविन्द्रवधूर्विलोक्य च पुनस्तस्मिन्नभःश्यामिकाम् । चिक्षेपोपरि कोपतः परिजनेऽसंशोध्य दत्ता सुधेत्येनं तं शशिनं प्रशंसति जनस्तत्पाणिमुक्तार्जुनम् ॥ ११४ ॥ आनीलां करपल्लवैरपनयन्नच्छां तमःकञ्चुकीमाशां संप्रति वासवीमनुसरन्नक्षीणरागः शशी । अस्याश्च स्तनसङ्गिनीमिव वहन्नङ्केन कस्तूरिकामालिङ्गत्ययमादरेण रजनीमर्धोन्मिलत्तारकाम् ॥ ११५ ॥ यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां नेत्राणामपमृत्युहारिणि पुरः सूर्योढ एवातिथौ । अम्भोजानि पराञ्चि तन्निजमघं दृष्ट्वैव तेभ्यस्ततो गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ ११६ ॥ यं प्राक्प्रत्यगवागुदञ्चि ककुभां नामानि संबिभ्रतं ज्योत्स्नाजालझलज्झलाभिरभितो लुम्पन्तमन्धं तमः । प्राचीनादचलादितस्त्रिजगतामालोकबीजाद्बहिर्निर्यान्तं हरिणाङ्कमङ्कुरमिव द्रष्टुं जनो जीवति ॥ ११७ ॥ स श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिंभरिः । संस्कर्ता निजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशां गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रोदगात् ॥ ११८ ॥ प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्यं निर्जैर्निर्यासैरुडुभिर्निजेन वपुषा दत्तार्घलाजाञ्जलि । अन्तःप्रौढकलङ्कतुच्छमभितः सान्द्रं परिस्तीर्यते बिम्बादङ्कुरभङ्गनैशिकतमःसंदोहमिन्दोर्महः ॥ ११९ ॥ सायं नायमुदेति वासरमणिश्चन्द्रो नु चण्डद्युतिर्दावाग्निः कथमम्बरे किमशनिः स्वच्छान्तरिक्षे कुतः । हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया धावद्घोरविभावरीविषधरीभोगस्य भीमो मणिः ॥ १२० ॥ रक्तोऽयं क्षणदाप्रियः समुदितो व्योम प्रपद्याभितो विश्वं वीक्ष्य च पद्मिनीमुखरसं लुब्धः प्रपातुं चिरम् । निद्राणां बहुधा करैः परिमृशन् स्वायत्ततामक्षमो नेतुं पाण्डुरतां दधत् कुमुदिनीमाराधयन् सक्षणः ॥ १२१ ॥ तत उदियगिरेरिवैक एव स्फुरितगुणद्युतिसुन्दरः कलावान् । इह जगति महोत्सवस्य हेतुर्नयनवतामुदियाय बालचन्द्रः ॥ १२२ ॥ साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिके । उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ १२३ ॥ पुण्यश्लोकमणेर्जगत्त्रयपरिक्लेशप्रशान्तेः कृते सद्यत्नस्य पयोददामसुषमासम्भारिणः श्रीपतेः । श्लोकौ मोदयतेऽसकौ कुवलयं या श्यामताऽस्मिन् पुनः सोन्नेतुं स्वतदीयतापरिचयं न त्वन्यथात्वं स्थिता ॥ १२४ ॥ प्राणायामोपदेष्टा सरसिरुहमुनेर्यौवनोन्मादलीलागोष्ठीनां पीठमर्दस्त्रिभुवनवनितानेत्रयोः प्रातराशः । कामायुष्टोमयज्वा शमितकुमुदिनीमौनमुद्रानुरागः शृङ्गाराद्वैतवादी प्रभवति भगवानेष पीयूषभानुः ॥ १२५ ॥ कल्लोलक्षिप्रपङ्क्तित्रिपुरहरशिरःस्वःस्रवन्तीमृणालं कर्पूरक्षोदजालं कुसुमशरवधूसीधुभृङ्गारनालम् । एतद्दुग्धाब्धिबन्धोर्गगनकमलिनीपत्रपानीयबिन्दोरन्तस्तोषं न केषां किसलयति जगन्मण्डनं

---

१ पूर्वदिक् । २ कनीनिकां तारां च । ३ इन्द्रस्य । ४ यशः । ५कुमुदगणम् ।जातावेकवचनम् । पृथिवीमण्डलं च ६ यस्य श्लोकः स स्वयं श्यामः इति तदीयत्वमादाय श्यामतेति परकीयताभ्रमनिराकरणार्थेति भावः । ७ परकीयत्वमुन्नेतुमिति भावः । ८ नायकसहायविशेषः । ९ सुधाकारः चन्द्र इति यावत् । १० गङ्गा- । ११ मद्यपानपात्रविशेष- । 'झरी' इति प्रसिद्धमेतस्य नाम ।

खण्डमिन्दोः ॥ १२६ ॥ संरम्भोद्रिक्तनक्तंसमयदशमुखोचण्डदोर्दण्डहेलैकैलासः सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खः। लोलाक्षीगण्डपालीलवणिमजलधेरुद्गतः फेनपिण्डः पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः ॥ १२७ ॥ कैतन्मार्तण्डबिम्बं सरसि सरसिजश्रेणिहास्यं क यातं कैते याता रथाङ्गाः सपदि गतह्रियः क प्रविष्टा मरालाः। संध्यारागारुणाङ्गः कुपित इव पतिः प्रोद्यतोऽयं हिमांशुर्मन्ये हर्षादिवेयं हसति कुमुदिनी जाग्रतीवालिनादैः ॥ १२८ ॥ प्राचीभागे सरागे धरणिविरहिणीक्रान्तवक्रे समुद्रे निद्रालौ नीरजालौ विकसति कुमुदे निर्विकारे चकोरे। आकाशे सावकाशे तमसि शममिते नागलोके सशोके कंदर्पे मन्ददर्पे वितरति किरणाञ्शर्वरीसार्वभौमः ॥ १२९ ॥ अकलङ्कचन्द्रकलया कलिता सा भाति वारुणी तरुणी। भालस्थलीव शंभोः संध्याध्यानोपविष्टस्य ॥ १३० ॥ नेदं व्योम यतो न तत्र सुशकं गन्तुं जनैस्तत् किल स्थानं पुण्यकृतामतश्च न विधुर्दोषाकरोऽसौ यतः। किं त्वम्भोऽन्धुरयं च तस्य सलिलोद्धाराय सिद्धाङ्गनाक्षिप्तो रश्मिभिरुज्ज्वलैरनुगतः कुम्भो महान् राजतः ॥ ॥ १३१ ॥ दलविततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः। मदचपलचकोरचञ्चुकोटीकवलनतुच्छमिवान्तरान्तराभूत् ॥ १३२ ॥ आलोक्य चन्द्रमसमभ्युदितं समन्तादुद्वेल्लदूर्मिविचलत्कलशाम्बुराशेः। विष्वग्विसारिपरमाणुपरम्परैव ज्योत्स्नात्मना जगदिदं धवलीकरोति ॥ १३३ ॥ सितकिरणकपोलीमालिमालोकयन्ती तिमिरविरहतापव्याकुलां व्योमलक्ष्मीम्। रजनिरमलताराशीकरैः सिक्तमर्थाः परिमलयति गात्रं चन्द्रिकाचन्दनेन ॥ १३४ ॥ अपि पिबत चकोराः कृत्स्नमुन्नाम्य कण्ठं क्रमकवलनचञ्चच्चञ्चवश्चन्द्रिकाम्भः। विरहविधुरितानां जीवितत्राणहेतोर्भवति हरिणलक्ष्मा येन तेजोदरिद्रः ॥ १३५ ॥ सह कुमुदकदम्बैः काममुल्लासयन्तः सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः। सह सरसिजखण्डैः स्वान्तमामीलयन्तः प्रतिदिशममृतांशोरंशवः संचरन्ति ॥ १३६ ॥ भास्वत्कर्कशशाणचक्रकषणैराकाशकालायसाद्यच्चूर्णं निबिडं निपत्य तम इत्याख्यां जगत्यामगात्। यच्चेन्दोश्चलसिद्धपारदमहाबिन्दोः समायोगतो जातं रूप्यरजोमयं वयमिदं ज्योत्स्नां समाचक्ष्महे ॥ १३७ ॥ एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि। कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदैरक्षालि स्फटिकोपलैः किमघटि द्यावापृथिव्योर्वपुः ॥ १३८ ॥ उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्तिकासंवर्तं व्रतवृत्तयः कतिपये पीयूषभानोः कराः। अप्युत्सैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जते विश्वेनैव तमोमयो निधिरपामह्नाय फेनायते ॥ १३९ ॥ किं नु ध्वान्तपयोधिरेष कतकक्षोदैरिवेन्दोः करैरत्यच्छोऽयमधश्च पङ्कपटलं छायापदेशादभूत्। किं वा तत्करकर्तरीभिरभितो निस्तक्षणादुज्ज्वलं व्योमैवेदमितस्ततश्च पतितास्छायाच्छलेन त्वचः ॥ १४० ॥ पौलोमीकुचकुम्भकुङ्कुमरज स्वाजन्यजन्मोद्धताः शीतांशोर्द्युतयः पुरंदरपुरीसीमामुपस्कुर्वते। एताभिर्लिहतीभिरन्धतमसान्युद्ग्रसतीभिर्दिशः क्षोणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ १४१ ॥ नैवायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि द्यामद्यापि तमस्तु कैरवकुलश्रीचाटुकाराः कराः। मश्नन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते जीवग्राहमिव क्वचित्क्वचिदपि च्छायासु गृह्णन्ति च ॥ १४२ ॥ यन्त्रद्रा-

---

१ भाव-( क्रीडा ) विशेष-। २ हंसाः। ३ भ्रमरगुञ्जारैः। ४ चन्द्रकान्तिः। ५ सर्वतः। ६ चन्द्र-। ७ स्वच्छामिति भावः। ८ व्योमलक्ष्म्याः। ९ सर्वम्। १० पीडिताम्। ११ चन्द्रः। १२ निस्तेजः। १३ समूहै। १४ कुमुदम्लानि-। १५ दर्पणे। १६ समुद्रः। १७ झटिति। १८ पङ्कादिमालिन्यनिराकरिष्णुभिश्चूर्णैः। १९ इन्द्राणी। २० इन्द्र-। २१ क्रोशयुग-। २२ जीवं गृहीत्वेव।

वितकेतकोदरदलस्रोतःश्रियं बिभ्रती येयं मौक्तिकदाम[1]गुम्फनविधौ योग्यच्छविः प्रागभूत् । उत्सेच्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः पातव्या च शशिन्यमुग्धविभवे सा चन्द्रिका वर्तते ॥ १४३ ॥ मुग्धा दुग्धधिया गवां विदधते कुम्भानधो बल्लवाः कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि । कर्कन्धू[2]फलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥ १४४ ॥ इन्दोरस्य त्रियामा[3]युवतिकुचतटीचन्दनस्थासकस्य[4] व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य । कंदर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशा[5]नासामुक्ताफलस्य स्थगयति जगतीं[6] कोऽपि भासां[7] विलासः ॥ १४५ ॥ लक्ष्मीक्रीडातडागो रतिधवलगृहं दर्पणो दिग्वधूनां पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्यातपत्रम् । पिण्डीभूतं हरस्य स्मितममरसरित्पुण्डरीकं[8] मृगाङ्को ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोकुलस्य[9] ॥ १४६ ॥ दोषागमनमाशङ्क्य रविरेष तिरोहितः । कथमिन्दुः समायाति कुतः शङ्का कलङ्किनः ॥ १४७ ॥ यक्ष्म विरहिणं कंचित्त्रासयामास तेजसा । यक्ष्म एव विलोमेन संलग्नोऽभूद्विधौ क्षयः ॥ १४८ ॥ शिवभालानलोत्थेन धूमयोगेन कालिमा । विधौ शुक्लतरे किंवाऽस्तीति मन्मानसाशयः ॥ १४९ ॥ इन्दोरेककलाया रुद्रेणोद्धृत्य मूर्धनि धृतायाः ॥ स्थानमिव तुच्छमेतत्कलङ्करूपेण परिणमति ॥ १५० ॥ अस्तं गतवति सवितरि[10] पायसपिण्डं सुधाकरं प्राची । व्यरचयदम्बरकुशभुवि चरति कलङ्कस्तदन्तरे काकः ॥ १५१ ॥ कृष्णवर्णहृदयं सितदीप्तिं[11] दुर्धियः किल कलङ्किनमाहुः । कृष्णवर्णसमुदीरणमात्रादेव यद्गलति दृश्यकलङ्कः ॥ १५२ ॥ आयताग्रसितरश्मिनिबद्धं लाञ्छनच्छविमषीरसदिग्धम्[12] । चन्द्रकैतवमरुत्पटचक्रं क्रीडयोत्सृजति किं स्मरबालः ॥ १५३ ॥ शम्बरारि[13]रिसृतं विषगर्भं चन्द्रबिम्बकपटात्प्रयुनक्ति । यद्बहिः सितमथासितमन्तः प्रोषितान्दहति दर्शनमात्रात् ॥ १५४ ॥ अयं पुरः पार्वण[14]शर्वरीशः किं दर्पणोऽयं रजनीरमण्याः । यतस्तदीयं प्रतिबिम्बमस्मिन्संलक्ष्यते लाञ्छनकैतवेन ॥ १५५ ॥ प्रदोषमातङ्गमनङ्गदेवस्तुङ्गं समारुह्य समागतोऽयम् । सिन्दूरिते तस्य सुधांशुकुम्भे किमङ्कुशो लक्ष्मभिषेण दत्तः ॥ १५६ ॥ मम प्रियां कैरविणीं करेण संतापयामास दिनाधिनाथः । इतीव दुःखैर्विकलः कलावान्पपौ विषं लक्ष्ममिषेण सद्यः ॥ १५७ ॥ कदाधिनाथानयनाय सायं कुमुद्वतीप्रेषित एष भृङ्गः । किमिन्दुनालिङ्ग्य सरागमङ्के कृतः कलङ्कभ्रममातनेति ॥ १५८ ॥ नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः । नायं शशी कुण्डलितः फणीन्द्रो[15] नासौ कलङ्कः शयितो मुरारिः ॥ १५९ ॥ मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन । बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के ध्रुवमातनोति ॥ १६० ॥ अत्रान्तरे च कुलटाकुलवर्त्मपातसंजातपातक इव स्फुटलाञ्छनश्रीः । वृन्दावनान्तरमदीपयदंशुजालैर्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥ १६१ ॥ अच्छप्रकाशवति चन्द्रमसि प्रियेऽस्मिन्नाह्लादकारिणि सुधावति पूर्णबिम्बे । धाताविचिन्त्य मनसाऽखिलदृष्टिपातं हर्तुं चकार किमु कज्जलबिन्दुयोगम् ॥ १६२ ॥ दष्टे जगद्वपुषि कालभुजंगमेन तत्रान्धकारमिषमाविरभूद्विषं यत् । संजातलक्ष्मणि तदिन्दुमणौ निपात्य ज्योत्स्नामये पयसि तत्क्षिपति स्म धाता ॥ १६३ ॥ दिग्यन्त्रतस्तिमिरचूर्णविशेषपूर्णादुद्भूत्वरोडुमयरञ्जकविस्फुलिङ्गात् । कालेन पूर्वगिरिदुर्गजुषा प्रयुक्तो वृत्तोपलो

---

१ माला । २ बदरी- । ३ रात्रिरूप- । ४ लेपस्य । 'चर्चा तु चार्चिक्यं स्थासकः' इत्यमरः । ५ पूर्वादिक् । ६ पृथिवीम् । ७ तेजसाम् । अत्र स्त्रीत्वारोपो व्यङ्ग्यः । ८ गङ्गाश्वेतकमलम् । ९ तारारूपगोसमूहस्य- । १० सूर्ये । ११ चन्द्रम् । १२ लिप्तम् । १३ कामः । १४ पूर्णश्चन्द्रः । १५ शेषः ।

विधुमिषात्पथिकान्हिनस्ति ॥ १६४ ॥ मन्थानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणः स्फुरतीन्दुमध्ये। छायामृगः शशक इत्यतिपामरोक्तिस्तेषां कथंचिदपि तत्र हि न प्रसक्तिः ॥ १६५ ॥ अवातः प्रागल्भ्यं परिणतरुचः प्राणदयिते कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि। अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ १६६ ॥ समयशबरो व्योमारण्ये सुधाशनमक्षिकासुविहितसुधाबिम्बक्षौद्रस्फुरत्पटले प्रति। कलयति कलङ्काख्यं धूमं निपीड्य पुनश्च तत्किरति मधुरज्योत्स्नाक्षौद्रं महीतलभाजने ॥ १६८ ॥ रुचिभिरमितष्टङ्कोत्कीर्णैरिव त्रसरेणुभिर्यदुडुभिरपि च्छेदैः स्थूलैरिव भ्रियते नभः। प्रकृतिमलिनो भास्वद्बिम्बोन्मृजाकृतकर्मणस्तदयमपि हि त्वष्टुः कुन्दे भविष्यति चन्द्रमाः ॥ १६७ ॥ तरुणतमालकोमलमलीमसमेतदयं कलयति चन्द्रमाः किल कलङ्कमिति ब्रुवते। तदनृतमेव निर्दयविधुंतुददन्तपदव्रणविवरोपदर्शितमिदं हि विभाति नभः ॥ १६९ ॥ अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे। इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥ १७० ॥ रङ्कुर्वङ्कगते त्रिविष्टपवनीखेलत्कुरङ्गीगणैः साकं क्रीडनकौतुकेन रभसादुत्प्लुत्य याते दिवम्। तच्छायानुगतात्ममूर्तिरधुना धर्तुं तमेनं शशी मन्दं व्यायतरश्मिजालकलितः खाग्रं समारोहति ॥ १७१ ॥ काश्मीरेण दिहानमम्बरतलं वामभ्रुवामाननद्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःसिराः। प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदूर्वाङ्कुरक्षीबोत्सङ्गकुरङ्गमैन्दवमिदं बिम्बं समुज्जृम्भते ॥ १७२ ॥

## प्रवासात्प्रत्यावर्त्तने कान्तादशा।

आगच्छन्सूचितो येन येनानीतो गृहं प्रति। प्रथमं सखि कः पूज्यः किं काकः किं क्रमेलकः ॥ १ ॥ श्रुत्वाऽऽयान्तं बहिः कान्तमसमाप्तविभूषया। भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥ २ ॥ सज्जितसकलशरीरा क्षणे क्षणे मनसि किमपि गणयन्ती। उत्सवमिव तं दिवसं मनुते मुग्धा प्रियागमने ॥ ३ ॥ अभ्युन्नतस्तनयुगा तरलायताक्षी द्वारिस्थिता तदुपयानमहोत्सवाय। सा पूर्णकुम्भनवनीरजतोरणस्रक्संभारमङ्गलमयत्नकृतं विधत्ते ॥ ४ ॥ आयातो दयितस्तवेति सहसा न श्रद्दधे भाषितं सद्यः संमुखतां गतेऽपि सुमुखी भ्रान्तिं निजां मन्यते। कण्ठाश्लेषभुजेऽपि शून्यहृदया स्वप्नान्तरं शङ्कते पत्यावृत्तिमियं प्रियस्य कियता प्रत्येतु शातोदरी ॥ ५ ॥ द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्। आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने वाचस्तच्च निवारितं प्रसरणं संकोचिते दोर्लते[12] ॥ ६ ॥

---

१ चन्द्र-।२सूक्ष्मकणविशेषैः।३विश्वकर्मणः।४राहु-।५ अतिशयेन प्रत्यक्षीक्रियते।६ गाढान्धकारम्। ७मृगे।८ स्वर्गरूप-।९ ऊर्ध्वं कूर्दित्वा।१० इन्द्रनगर-(स्वर्ग)।११कमल।१२ अत्रास्वादयतेः प्राप्त्यर्थकतया तदुत्तरणिजन्तरोपगमनेन प्रापणार्थलाभः स्वयमेव विपरीतसुरतप्रदानमस्य व्यङ्ग्यम्। एतदेव सुरतं स्पृष्टकं नाम। तथाहि "सम्मुखागतायां प्रयोज्यायामन्यापदेशेन गच्छतो गात्रेण गात्रस्य स्पर्शनं स्पृष्टकम्" इति कामसूत्रम्। एवं-शिरोंऽशुकं पुरत आनीतमित्यनेन गूढमागच्छेति द्योतितम्। तथा चञ्चलयोर्लोचनयोरधःक्षेपणोक्त्या सूर्येऽस्तमिते स्यादावयोः सङ्गम इति समयस्य सङ्केतनं व्यज्यते एवं वाचः प्रसरणं निवारितमित्यनेन तूष्णीं त्वया तदाऽपि आगन्तव्यमिति ध्वनितम्। एवमेव दोर्लतयोः सङ्कोचनोक्त्याऽऽगमनोपायनभूतालिङ्गनाविष्करणाभिप्राय आवेदित इति विस्तरस्तु अस्माकं काव्यप्रकाशप्रदीपव्याख्ययोरिति दिक्।

## कान्तोपस्थितौ सखीं प्रति हर्षावेदनम् ।

नित्यं मनोरथस्यापि सखि दुर्गम एव यः । सांप्रतं[1] साम्प्रतं[2] दिष्टं[3] प्रत्यक्षेऽसौ विभाति ते ॥ १ ॥ धैर्यमाधाय लज्जां च विहाय सखि ! सत्वरम् । सम्भावय सरोजाक्षं कान्तं स्वयमुपस्थितम् ॥ २ ॥ आयातं सखि दयितं चिरात् प्रवासात् क्षामाङ्गि[4] तव विरहानलेन तप्तम् । सद्योऽमुं निजमृदुलाङ्गसङ्गदानात् सन्तृप्तिं नय भव सम्मुखी किमेवम्[5] ॥ ३ ॥ अपाङ्गसंसर्गि तरङ्गितं दृशोर्भ्रुवोर[6]रालान्तविकासि वेल्लनम् । विसारि रोमाञ्चितकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः ॥ ४ ॥ कलय वलयं धम्मिल्लेऽस्मिन्निवेशय मल्लिकां रचय सिचयं मुक्ताहारं विभूषय सत्वरम् । मृगमदमषीपत्रालेपं कुरुष्व कपोलयोः सहचरि समायातः प्रातः स ते हृदयप्रियः ॥ ५ ॥

## कान्तागमन आह्लादावेदनम् ।

अश्रुभिः पाद्यमाकल्प्य प्रणीय हृदयासनम् । उपेते दयिते कान्ता परिष्वङ्गमुपानयत् ॥ १ ॥ आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां गेहिन्या परितोषबाष्पकलिलामासज्य दृष्टिं मुखे । दत्त्वा पीलुशमीकरीरकवलं चेलाञ्चलेनादरादुन्मृष्टं करभस्य[7] केसरसटाभाराग्रलग्नं रजः ॥ २ ॥ बाला वन्दनमालिकाकिसलयग्रन्थीनधः कुर्वतः श्रुत्वा वल्लभवाहनस्य रटितं दासेर[8]कस्याङ्गणे । आक्रन्दा[9]त्सुहृदो वनाद्गुरुजनं नासाग्रसं[10]ज्ञादसून्कान्तं स्त्रीवधपातकात्स्मरमसत्कीर्तेः परावर्तयत् ॥ ३ ॥ किंचित्कम्पितपाणिकंकणरवैः पृष्टं ननु स्वागतं व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले । द्वारस्थस्तनयुग्ममङ्गलघटे दत्तः प्रवेशो हृदि स्वामिन्कि भवतोऽतिथेः समुचितं सख्यानयानुष्ठितम् ॥ ४ ॥ दीर्घा वंदनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः । दत्तः स्वेदं[11]मुंचा पयोधरभरेणार्घ्यो न कुम्भाम्भसा स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ५ ॥

## कान्तायाः कुशलाशंसनम् ।

कृशासीत्यालीना मलिनवसनासीत्यवनता चिराद्दृष्टासीति स्तनकलशकम्पं प्ररुदिता । परिष्वक्ता यावत्प्रणयपदवीं का[12]मपि गता ततः सारङ्गाक्ष्या[13] हृदयसदने लीनमभवत् ॥ १ ॥ कृशा केनासि त्वं प्रकृतिरियमङ्गस्य ननु मे मलाधूम्रा कस्माद्गुरुजनगृहे पाचकतया । स्मरस्यस्मान्कच्चिन्नहि नहि नहीत्येवमवदच्छिरःकम्पं बाला मम हृदि निपत्य प्ररुदिता ॥२॥ अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात्कुतो मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति । तन्व्या सर्वमिदं स्वभावजमिति व्याहृत्य पक्ष्मान्तरव्यापी बाष्पभरस्तया चलितया निःश्वस्य मुक्तोऽन्यतः[14] ॥ ३ ॥

---

१ इदानीम् । २ युक्तम् । ३ भद्रम् । ४ दुर्बलाङ्गम् । ५ एवम् पूर्ववत् । असज्जितेव दुःखितेव वा । ६ कुटिल-( तीक्ष्ण- ) । ७ उष्ट्रशिशोः । ८ उष्ट्रस्य । ९ रोदनात् । १० वियोगे श्वासस्य नासाऽग्रभागे सञ्चारितां प्राप्तत्वात्तन्मात्रदत्तदृष्टित्वात् । ११ हृदयस्यातिसंतप्तत्वात् । १२ अनिर्वचनीयाम् । १३ मृगाक्ष्याः । १४ रोदनस्यामङ्गलव्यञ्जकत्वं मा भूदितीवान्यत्र निक्षेपः ।

## प्रणयमाने विनयः।

दयिते कठिनं चेत इत्युरोजौ तवेदृशौ ॥ अथ लज्जयसे किं नु शिरीषमृदुलां तनुम् ॥ १ ॥ अपराधो मया कान्ते कृतो यदि त्वया मतः। निपात्य गिरिशृङ्गोच्चौ कुचौ किं न निपीड्यते ॥ २ ॥ अनिर्द्योपभोगस्य रूपस्य मृदुनः कथम्। कठिनं खलु ते चेतः शरीरस्येव बन्धनम् ॥ ३ ॥ किं त्वां भणामि विच्छेददारुणायासकारिणि। कामं कुरु वरारोहे देहि मे परिरम्भणम् ॥ ४ ॥ मयि ते पादपतिते किंकरत्वमुपागते। प्रिये कामातुरः कोपं कान्ते कोऽन्योऽपनेष्यति ॥ ५ ॥ दाक्षिण्यं नाम बिम्बोष्ठि नायकानां कुलव्रतम्। तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ ६ ॥ मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये। वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो मनोऽश्मवत् ॥ ७ ॥ सोढुमलमस्मि नाहं सुन्दरि मन्दागमाद्विलम्बं ते। पञ्चशरास्त्रहतं मां संजीवय चारुगात्रि परिरम्भैः ॥ ८ ॥ सकृदिव समर्प्य बाले मम हस्ते मदनधर्मतप्तस्य। अपहरसे कुचकुम्भं तृषितकरादमृतकुम्भमिव ॥ ९ ॥ अपराधी नूनमहं प्रसीद रम्भोरु विरम संरम्भात्। सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥ १० ॥ त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते। स्वपिहि मया सह सुरतव्यतिकरखिन्नैव मा मैवम् ॥ ११ ॥ सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम्। विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥ १२ ॥ क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते नित्यम्। विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥ १३ ॥ अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा। अयमीहितकुसुमानां संपादयिता तवास्ति दासजनः ॥ १४ ॥ मधुधारेव न मुञ्चसि मानिनि रूक्षाऽपि माधुरीं सहजाम्। कृतमुखभङ्गाऽपि रसं ददासि मम निम्नगा यथाम्भोधेः ॥ १५ ॥ विहाय पूर्वामधुना बतायं निशापतिः श्लिष्यति पश्चिमाशाम्। अहं तु कान्ते त्वदधीनजीवस्तथाऽपि किं तेऽरुणिता दृगेषा ॥ १६ ॥ यदि प्रिये वेत्सि तव प्रभुं मामनन्यसाधारणदासमङ्घ्र्योः। तदद्य वक्षो मम पात्रमस्तु स्वयंग्रहाश्लेषमहोत्सवानाम् ॥ १७ ॥ उत्तरङ्गय कुरङ्गलोचने लोचने कमलगर्वमोचने। अस्तु सुन्दरि कलिन्दनन्दिनीवीचिडम्बरगभीरमम्बरम् ॥ १८ ॥ शशिमुखि तव भाति भङ्गुरभ्रूर्युवजनमोहकरालकालसर्पः। यदुदितभयभञ्जनाय यूनां त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ १९ ॥ त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः। कमपराधलवं मयि पश्यसि त्यजसि मानिनि दासजनं यतः ॥ २० ॥ विसृज सुन्दरि संगमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे। परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥ २१ ॥ मोहान्मया सुतनु पूर्वमुपेक्षितस्ते यो बाष्पबिन्दुरधरं परिबाधमानः। तं तावदाकुटिलपक्ष्मविलग्नमद्य कान्ते प्रमृज्य विगतानुशयो भवामि ॥ २२ ॥ मुग्धे विधेहि मयि निर्दयदन्तदंशं दोर्वल्लिबन्धनिबिडस्तनपीडनानि। चण्डि त्वमेव मुदमञ्चय पञ्चबाणचण्डालकाण्डदलनादसवः प्रयान्ति ॥ २३ ॥ मा मा ससाध्वसमुपेहि विलोलनेत्रे दासे जने किमिति संभ्रमकातराऽसि। किं युज्यते बत मया चिरकाङ्क्षितस्य मध्ये वराङ्गि परिरम्भसुखस्य भङ्गः ॥ २४ ॥ किं शीकरैः क्लमविमर्दिभिरार्द्रवातं संचालयामि नलिनी-

---

१ कामशस्त्र-। २ क्रोधात्। ३ दण्डदानविचारम्। ४ क्रोधम्। ५ वियोगक्लेशम्। ६ मृदुलानि सुन्दराणि वा। ७ वृथा। ८ नदी। ९ यमुना-। १० भयम्। ११ वासन्तीलता। 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' इत्यमरः। १२ निरस्तानुतापः। १३ बाण-। १४ प्राणाः।

दलतालवृन्तम् । अङ्के निधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु[1] यथासुखं ते ॥ २५ ॥ आताम्रतामपनयामि विलक्षे[2] एष लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना । कोपोपराग-जनितां तु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥ २६ ॥ इन्दीवरेण[3] नयनं मुखमम्बुजेन कुन्देन[4] दन्तमधरं नवपल्लवेन । अङ्गानि चम्पकदलैः स विधाय वेधाः[5] कान्ते कथं घटितवानुपलेन[6] चेतः ॥ २७ ॥ किं मुक्तमासनमलं मयि संभ्रमेण नोत्थातुमित्थमुचितं मम तन्तुमध्ये । दृष्टिप्रसादविधिमात्रहृतो जनोऽयमत्यादरेण किमिति क्रियते विलक्षः[7] ॥ २८ ॥ भुग्नालकं स्मितपराजितचन्द्रलेखं दृग्लीलया कुवलयश्रियमाददानम् । एतन्मुखं दिविषदामपि[8] दुर्निरीक्ष्यं तन्वङ्गि मामिव मुधा किमधः करोषि ॥ २९ ॥ लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना तव मुखे तरलायताक्षि । क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥ ३० ॥ किं ते निसर्गरुचिरौ चरणौ कराभ्यां संवाहयामि नयने च तवाञ्जनेन । किं रञ्जयामि किमु ते स्तनयोर्विचित्रां पत्रावलीं विरचयाम्यचिरेण तन्वि ॥ ३१ ॥ सुतनु जहिहि[9] मौनं मुञ्च वाचो जडत्वं प्रणयिनि मयि कोपं किंकरे किं करोषि । अथ यदि तव चित्ते सापराधोऽस्मि बाले निजभुजयुगवल्लीबन्धनं[10] मां विधेहि ॥ ३२ ॥ किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि । कलयसि कलितोऽहं वल्लभे देहि वाचं भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ ३३ ॥ यदिदमगणयित्वा दुर्वहं श्रोणिभारं मदभिसरणलोभात्प्रस्थितं पद्मताम्रम् । अयमहमभिवाञ्छाम्यप्रमृज्यैव पांसु सुमुखि पदतलं ते चूडितुं चुम्बितुं च ॥ ३४ ॥ वितरय कुचयोस्त्वद्दर्शनोपक्रमाणां मदनशररुजानां शान्तये मामकीनाम् । सकृदपि परिरम्भं[11] सुभ्रु दोर्मूलकूलंकषघनपरीणाहख्यातयोरेतयोस्ते ॥ ३५ ॥ चरणकमलदासस्त्वेष संकल्पसङ्गे सुमुखि यदभिधत्से त्वं बलात्कारधूर्तम् । प्रसभविधूततर्षः पीडयाम्यात्मनेव द्विरद इव सरोजं पाणिमापाटलं ते ॥ ३६ ॥ विकिर धवलदीर्घापांगसंसर्पि चक्षुः परिजनपथवर्तिन्यत्र किं संभ्रमेण । स्मितमधुरमुदारं देवि मामालपोच्चैः प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम् ॥ ३७ ॥ परिलुठति ललाटे भङ्गुरा भ्रूलता किं मदनजयपताकाविभ्रमं बिभ्रतीयम् । स्फुरति च किमकाण्डे[12] चण्डि बिम्बाधरोऽयं मृदुपवनविधूतोन्निद्रबन्धूकबन्धुः ॥ ३८ ॥ मुहुर्मुहुरवेक्षणं सरसमञ्जसा संस्तवः समुच्चलतरङ्गिणि प्रचुरनर्ममर्मस्पृहा । मुहुर्निबिडनम्रता परिजनव्यपेक्षापि नो कुतः सुमुखि शिक्षिता कथय कोपरीतिस्त्वया ॥ ३९ ॥ तरङ्गय दृशोऽङ्गने पततु चित्रमिन्दीवरं स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् । क्षणं वपुरपावृणु स्पृशतु काञ्चनं कृष्णतामुदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः ॥ ४० ॥ पुरोदिगनुरागिणी तदपि नानुरागोदयः कृशोदरि निशा कृशा तदपि ते न मानः कृशः । प्रसन्नमिदमम्बरं तदपि न प्रसन्नं मनो ननाद चरणायुधस्तदपि मौनमालम्बसे ॥ ४१ ॥ उदञ्चय दृगञ्चलं चलतु चञ्चरीकोच्चयः[13] प्रपञ्चय वचः सुधा श्रवणपालिमालिङ्गतु । भ्रुवं नटय नागरि त्यजतु मन्मथः कार्मुकं मुखं च कुरु संमुखं व्रजतु लाघवं चन्द्रमाः ॥ ४२ ॥ कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः

---

१ 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । २ विस्मितः । ३ नीलकमलेन । ४ माध्यापुष्पेण । ५ ब्रह्मा । ६ पाषाणेन । ७ विस्मितः । ८ देवतानाम् । ९ परित्यज । १० बल्ली एव बन्धनं यस्येति तम् । बन्धने मां निधेहि इति पाठेऽपि स एव भावः । ११ आलिङ्गनम् । १२ अनवसरे । १३ भ्रमरगणः ।

प्रणमितम्। न दृष्टेः शैथिल्यं मिलत इति चेतो दहति मे निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥ ४३ ॥ इदं दूर्वाकाण्डद्युतिमुषि कपोले कतिपयैः श्रमाम्भोभिः कीर्णं सहजबकुलामोदसुभगम्। समाकांक्षे ताम्राधरमनुमनुष्व प्रियतमे मनोज्ञं ते पातुं मुखकमलमाघ्रातुमथवा ॥ ४४ ॥ गतप्राया रात्रिः शशिमुखि शशी शीर्यत इव प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव। प्रणामान्तो मानस्तदपि न जहासि ध्रुवमहो कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥४५॥ प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः। निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥४६॥ प्रसीदेति ब्रूयामिदमसति कोपे न घटते करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः। न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ ४७ ॥ कृतेऽप्याज्ञाभङ्गे कथमिव मया ते प्रणतयो धृताः स्मित्वा हस्ते विसृजसि रुषं सुभ्रु बहुशः। प्रकोपः कोऽप्यन्यः पुनरयमसीमाऽद्य गुणितो वृथा यत्र स्निग्धाः प्रियसहचरीणामपि गिरः ॥ ४८ ॥ कपोले पत्राली करतलनिरोधेन मृदिता निपीतो निःश्वासैरयममृतहृद्योऽधररसः। मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥ ४९ ॥ सुतनु हृदयात्प्रत्यादेशं व्यलीकमपैतु ते किमपि मनसः संमोहो मे तदा बलवानभूत्। प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ ५० ॥ परिहर कृतातङ्के शङ्कां त्वया सततं घनस्तनजघनया क्रान्ते स्वान्ते परानवकाशिनि। विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं स्तनभरपरीरम्भारम्भे विधेहि विधेयताम् ॥ ५१ ॥ व्यथयति वृथा मौनं तन्वि प्रपञ्चय पञ्चमं तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः। सुमुखि विमुखीभावं तावद्विमुञ्च न वञ्चय स्वयमतिशयस्निग्धो मुग्धे प्रियोऽहमुपस्थितः ॥५२॥ कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम्। किमिदमथवा सत्यं मुग्धे त्वया हि विनिश्चितं यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥ ५३ ॥ पादासक्ते सुचिरमिह ते वामता कैव कान्ते सन्मार्गस्थे प्रणयिनि जने कोपने कोऽपराधः। इत्थं तस्याः परिजनकथाकोपवेगोपशान्तौ बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रयातम् ॥ ५४ ॥ कोऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां पीयूषद्रवदीर्घिकापरिमलैरामोदिनी मेदिनी। आस्तां वा स्पृहयालु लोचनमिदं व्यावर्तयन्ती मुहुर्यस्मै कुप्यसि तस्य सुन्दरि तपोवृन्दानि वन्दामहे ॥ ५५ ॥ सूर्येऽस्ताचलमौलिमालिनि गृहे दीपावलीशालिनि प्राणस्वामिनि मानिनि प्रतिपदं सत्कारमातन्वति। यन्मानं न जहासि कोपकलनादालोहितस्तत्क्षणादिन्दुः सुन्दरि पूर्वपर्वतशिरःसीमानमारोहति ॥ ५६ ॥ सन्त्येवात्र गृहे गृहे युवतयस्ताः पृच्छ गत्वाऽधुना प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते। आत्मद्रोहिणि दुर्जनप्रलपितं कर्णे वृथा मा कृथाश्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवर्त्या यतः ॥ ५७ ॥ क्षीणांशुः शशलाञ्छनः सखि पुनः क्षीणो न मानस्तव स्मेरं पद्मवनं मनागपि न ते स्मेरं मुखाम्भोरुहम्। पीतं श्रोत्रयुगेन षट्पदरुतं पीतं न ते जल्पितं रक्ता शक-

---

१ समयरूपो मृगो गतो गत एव,न पुनरावर्त्तत इति भावः। २ कोपः, तदाख्यः परपुरुष इति तु प्रतीतिमात्रम्। ३ अहमित्यर्थः। 'अस्मदो द्वयोश्च १।२।५९' इति बहुवचनम्। ४ निराकरणक्लेशम्। ५ भुजग-। ६मनोभुवः। ७ अनुकूलताम्। ८ प्रतारय। ९ परनिन्दक-। १०स्थीयताम्। ११ चरणसेवानुरते। १२ प्रतिकूलता। १३ देहि। १४ वापी। १५ प्रशंसामः। १६ अस्तप्रायः। १७ हसितं, प्रफुल्लमिति यावत्। १८ किञ्चिन्मात्रमपि। १९ भाषणम्।

दिगङ्गना रविकरैर्नाद्यापि रक्ताऽसि किम् ॥ ५८ ॥ किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया निद्राच्छेदविवर्तनेष्वभिमुखी नाद्यापि संभाविता । अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो दोषं पश्यसि कं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ५९ ॥ चक्षुर्जाड्यमपैतु मानिनि मुखं संदर्शय श्रोत्रयोः पीयूषस्रुतिसौख्यमस्तु मधुरां वाचं प्रिये व्याहर । तापः शाम्यतु मे प्रसादशिशिरां दृष्टिं शनैः पातय त्यक्त्वा दीर्घमभूतपूर्वमचिराद्रोषं सखीदोषजम् ॥ ६० ॥ कल्याणाङ्गरुचानुरक्तमनसा त्वं येन संप्रार्थ्यसे यस्यार्थे सुमुखि त्वया पुनरसुत्यागेऽपि संनह्यते । सोऽयं सुन्दरि पञ्चबाणविशिखव्यालीढदोरन्तरस्वैरोत्पीडितपीवरस्तनतटस्त्वद्दोर्लतापञ्जरे ॥ ६१ ॥ स्निग्धं यद्यपि वीक्षितं नयनयोस्ताम्रा तथापि द्युतिर्माधुर्यापि सती स्खलत्यनुपदं ते गद्गदा वागियम् । निःश्वासा नियता अपि स्तनभरोत्कम्पेन संलक्षिताः कोपस्ते प्रकटं प्रयत्नविधृतोऽप्येष स्फुटं लक्ष्यते ॥ ६२ ॥ भ्रूभङ्गैः क्रियते ललाटशशिनः कस्मात्कलङ्को मुधा वाताकम्पितबन्धुपुष्पसमतां नीतोऽधरः किं स्फुरन् । मध्यश्चाधिककम्पितस्तनभरेणायं पुनः खिद्यते कोपं मुञ्च तवैव चित्तहरणायैतन्मया क्रीडितम् ॥ ६३ ॥ शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ । इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मामङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ ६४ ॥ भ्रूभङ्गं न करोषि रोदिषि मुहुर्मुग्धेक्षणे केवलं नातिप्रस्फुरिताधराऽनवरतं निःश्वासमेवोज्झसि । वाचं नापि ददासि तिष्ठसि परं प्रध्यातनम्रानना कोपस्ते स्तिमितोऽतिपीडयति मां गूढप्रहारोपमः ॥६५॥ सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः। रागं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना सद्यस्त्वद्विरहे भवन्ति सुभगे सर्वा ममान्धा दिशः ॥ ६६ ॥ व्यावृत्तं खलु सर्वतो विषयतस्त्वय्येव लीनं मनो नित्यं च त्वदधीनमेव नियतं मज्जीवितं मानिनि । मत्त्वैवं मयि नूनमन्यविषया शङ्का त्वया त्यज्यतां किं वान्यत्र निशाकरोऽभिरमते मुक्त्वा क्षणं कौमुदीम् ॥ ६७ ॥ धृष्टः किं पुरतोऽवरुध्य विहसन्गृह्णामि कण्ठे प्रियां किं वा चाटुशतप्रचण्डरचनाप्रीतां करिष्यामि ताम् । किं तिष्ठामि कृताञ्जलिर्निपतितस्तस्याः पुरः पादयोः सत्यं सत्यमहो न वेद्म्यनुनयस्तस्याः कथं स्यादिति ॥ ६८ ॥ यद्गम्यं गुरुगौरवस्य सुहृदो यस्मिँल्लभन्तेऽन्तरं यद्दाक्षिण्यवशात्प्रसह्य सहते नर्मोपचारानपि । यल्लज्जा निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्ययस्तत्किं प्रेम स उच्यते परिचयस्तत्रापि कोपेन किम् ॥ ६९ ॥ मुग्धे मानिनि कोपरीतिरियती युक्ता न तथ्यं विदं कान्ते किं त्वदुपेक्षिता मम तनुः शोभेत नेहाद्भुतम् । अन्यायो भवति च्छलस्य करणे दक्षे जनेऽन्यादृशे कोहेति प्रतिरुद्धवागकरवं वाक्स्तम्भनं चुम्बनैः ॥ ७० ॥ मानं मानिनि मुञ्च देवि दयिते मिथ्या वचः श्रूयते किं कोपो निजसेवके यदि वचः सत्यं त्वया गृह्यते । दोर्भ्यां बन्धनमाशु दन्तदलनं पीनस्तनास्फालनं दोषश्चेन्मम ते कटाक्षविशिखैः शस्त्रैः प्रहारं कुरु ॥ ७१ ॥ सुभ्रु त्वं नवनीतकल्पहृदया केनापि दुर्मन्त्रिणा मिथ्यैव प्रियकारिणा मधुमुखेनास्मासु चण्डीकृता । किं त्वेतद्विमृश क्षणं प्रणयिनामेणाक्षि कस्ते हितः किं धात्रीतनया वयं किमु सखी किं वा किमस्मत्सुहृत् ॥ ७२ ॥

---

१ पूर्वदिग्रूपा नायिका । २ निष्क्रियत्वम् । ३ सखीनां मृषावचनेषु सत्यतायाः प्रत्ययत उत्पन्नत्वात् । ४ उद्यतात्मनाऽवस्थीयते । ५ भुजमध्य- । ६ कदली । ७ भोजनम् । ८ अनुरक्ते । ९ अत्रेयतीतिपदमतिपरिणामार्थपरम् । १० इदं प्राकृतवचनानुकरणम् । ११ पीनस्तनाभ्याम् आस्फालनं पीडनम् । १२ सद्यः समुद्धृतघृतसदृश- ।

## सख्या अभ्यर्थनम् ।

मुग्धे मानं न ते कर्तुं युक्तं प्राणाधिके प्रिये । धत्से मत्सी[1] कियत्कालं जीवितं जीवनं[2] विना ॥ १ ॥ कुपिताऽसि यदा तन्वि निधाय करजक्षतम् । बधान भुजपाशाभ्यां कण्ठमस्य[3] दृढं तदा ॥ २ ॥ स्मेरराजीव[4]नयने नयने किं निमीलिते । पश्य निर्जितकंदर्पं[5] कन्दर्पवशगं[6] प्रियम् ॥ ३ ॥ रमणे[7] चरणप्रान्ते प्रणतिप्रवणेऽधुना । वदामि सखि ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥ ४ ॥ यदि कुप्यसि नास्ति रतिः कोपेन विनाऽथवा कुतः कामः । कुप्य च कोपय च त्वं प्रसीद च त्वं प्रसादय च कान्तम् ॥ ५ ॥ अरुणे च तरुणि नयने तव मलिनं च प्रियस्य मुखम् । मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः[9] ॥ ६ ॥ अञ्चति रजनिरुदञ्चति तिमिरमिदं चञ्चति मनोभूः । उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥ ७ ॥ वियदलिमलिनाम्बुगर्भमेघं[8] मधुकरकोकिलकूजितैर्दिशां श्रीः । धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥ ८ ॥ जहीहि कोपं दयितोऽनुगम्यतां पुरोऽनुशेते[10] तव चञ्चलं मनः । इति प्रियं कांचिदुपैतुमिच्छतीं पुरानुनिन्ये निपुणः सखीजनः ॥ ९ ॥ सभयचकितं विन्यस्यन्तीं दृशं तिमिरे पथि प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् । कथमपि रहःप्राप्तामङ्गैरनङ्ग[11]तरङ्गिभिः सुमुखि सुभगः स त्वां पश्यन्नुपैतु कृतार्थताम् ॥ १० ॥ चपलहृदये किं स्वातन्त्र्यात्स्वयं गृहमागतश्चरणपतितः प्रेम्णार्द्रार्द्रः[12] प्रियः समुपेक्षितः । तदिदमधुना यावज्जीवं निरस्तसुखोदया रुदितशरणा दुर्जातीनां[13] सहस्व रुषां फलम् ॥ ११ ॥ लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो निराहाराः सख्यः सततरुदितोच्छूननयनाः । परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेयं विसृज कठिने मानमधुना ॥ १२ ॥ असद्वृत्तो[14] नायं न च खलु गुणैरेष[15] रहितः प्रियो मुक्ताहारस्तव[16] चरणमूले निपतितः । गृहाणैनं मुग्धे व्रजतु तव कण्ठप्रणयितामुपायो नास्त्यन्यस्तव हृदयदाहोपशमने ॥ १३ ॥ अनालोच्य प्रेम्णः परिणतिमनादृत्य[17] सुहृदस्त्वयाऽकाण्डे[18] मानः किमिति सरले संप्रति कृतः । समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः स्वहस्तेनाङ्गारास्तदलमधुनाऽरण्यरुदितैः ॥ १४ ॥ अयेऽस्तमयते शशी न हि कृशीभवत्याग्रहो[19] विनश्यति तमो हठं किमणुमप्यपास्ते[20] मनः । सखि प्रकटितोऽरुणो न करुणोदयस्ते मनाक्[21]प्रयाति खलु यामिनी[22] न विमनीकृथा नायकम् ॥ १५ ॥ आयातः कुमुदेश्वरो[23] विजयते सर्वेश्वरो[24] मारुतो भृङ्गः स्फूर्जति भैरवो[25] न निकटं प्राणेश्वरो मुञ्चति । एते सिद्धरसाः प्रसूनविशिखो[26] वैद्योऽनवद्योत्सवो मानव्याधिरयं कृशोदरि कथं त्वच्चेतसि स्थास्यति ॥ १६ ॥ मानं मानिनि मुञ्च मानसभुवः[27] साम्राज्यमुज्जृम्भतां हा हा गच्छति यामिनी न समयो यातः पुनः प्राप्यते । अल्पतरागसि कल्पिताधिकमये कान्ते पदान्तानते कोऽयं कोकिलवासिकेलिसमये[28]

---

१ शफरी । मत्स्यीति पाठान्तरम् । २ जलम् । ३ स्वप्रियस्य । ४ विकसितकमल- । ५ एतेन नायकस्य सौन्दर्यातिशयो ध्वनितः । ६ कन्दर्पेण वैरशोधनार्थमिव त्वद्वैमुख्ये निहत्य वशीकृतोऽयमिति सम्भावितम् । ७ प्रिये । ८ इदं गर्भितत्वदोषावहम् । ९ कामाग्निः । १० पश्चात्तापं कुरुते । ११ कामोन्मादिभिः । १२ प्रेम्णाऽत्यार्द्रः १३ पापकर्म्मफलरूपाणाम् । १४दुश्चरितः। १५ सौन्दर्यादिभिः।१६ मुक्तावलिस्वरूपः निरशनव्रती च ।१७ फलम् ।१८ अकाण्डे इति पदच्छेदः । अनुचिते समये इत्यर्थः । १९ क्षीयते । २०.त्यजति । २१ किञ्चित् । २२ रात्रिः । २३ चन्द्रः २४ मारुतस्य जगत्प्राणत्वात् सर्वेश्वरत्वम् । २५ भृङ्गो भैरव इति कालिमसादृश्यमूलं रूपणामिदम् । २६ कामदेवः । २७ कामस्य । २८ वसन्ते ।

कोपस्त्वयाऽऽलम्बितः ॥ १७ ॥ त्वां चित्तेन चिरं वहन्नयमतिश्रान्तो भृशं तापितः कन्दर्पेण च पातुमिच्छति सुधासंवादि बिम्बाधरम् । अस्याङ्कं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मीलवक्रीते दासजनेऽपि सेवितपदाम्भोजे कुतः संभ्रमः ॥ १८ ॥ मुग्धे किं नखरैः क्षिपस्यविरतं नेत्राम्बु मानोन्नते पश्यैनं चरणाग्रनम्रशिरसं स्वं कान्तमात्ताञ्जलिम् । अप्यङ्के तव चेतसि प्रणयिनि प्राप्तेऽतिनिर्विण्णतामन्यासक्तमनस्युपेक्षितगता फूत्कृत्य रोदिष्यति ॥ १९ ॥ स्निग्धे यत्परुषाऽसि यत्प्रणमति स्तब्धाऽसि यद्रागिणि द्वेषस्थाऽसि यदुन्मुखे विमुखतां याताऽसि तस्मिन्प्रिये । तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चा विषं शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ २० ॥ मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि । सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥ २१ ॥ अङ्गुल्यग्रनखेन बाष्पसलिलं निक्षिप्य निक्षिप्य किं तूष्णीं रोदिषि कोपने बहुतरं फूत्कृत्य रोदिष्यसि । यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥ २२ ॥ नो तल्पं भजसे न जल्पसि सुधाधारानुकारा गिरो दृक्पातं कुरुषे न वा परिजने कोपप्रकाशच्छलात् । इत्थं केतकगर्भगौरि दयिते कोपस्य संगोपनं तत्स्यादेव न चेत्पुनः सहचरी कुर्वीत साचिस्मितम् ॥ २३ ॥

## खण्डिताया नायिकाया नानाऽन्तस्तापव्यञ्जनानि ।

हन्त पुरा यो निकृतः स पुनः सुभगः कथं समायायात् । कुमुदिन्यो ननु सुलभा दुर्लभ एकः सुधासिन्धुः ॥ १ ॥ जीवितनाथेन तदा बहुशोऽनुनयो व्यधायि हा हन्त । रोषविमूढा सशपथमथाप्यहं तं निराकार्षम् ॥ २ ॥ उपचारानुनयास्ते कितवस्योपेक्षिताः सखीवचसा । अधुना निष्ठुरमपि यदि स वदति कैलिकैतवाद्यामि ॥ ३ ॥ प्रयाहि तत्रैव ययाऽनुरज्यसे किमत्र निस्त्रिंश तव प्रयोजनम् । न कञ्चुकग्रन्थिमपाकरोषि मे कथं हृदि ग्रन्थिमपाकरिष्यसि ॥ ४ ॥ अकरोः किमु नेत्रशोणिमानं किमकार्षीः करपल्लवावरोधम् । कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदष्टाः ॥ ५ ॥ स्फुरसि बाहुलते किमनर्थकं त्वमपि लोचनभावमहो गता । तमहमागतमप्यपराधिनं न परिरब्धुमलं न च वीक्षितुम् ॥ ६ ॥ मानोन्नतेत्यसहनेत्यतिपण्डितेति मय्येव धिक्कृतिरनेकमुखी सखीनाम् । दाक्षिण्यमात्रमसृणेन विचेष्टितेन धूर्तस्य तस्य हि गुणानुपवर्णयन्ति ॥ ७ ॥ नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् । प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ ८ ॥ अद्यारभ्य यदि प्रिये पुनरहं मानस्य चान्यस्य वा गृह्णीयां शठदुर्नयेन मनसा नामापि संक्षोभतः । तत्तेनैव विना शशाङ्ककिरणस्पष्टाट्टहासा निशा एको वा दिवसः पयोदमलिनो भूयान्मम प्रावृषि ॥ ९ ॥ कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव सः । इति सरभसध्वस्तप्रेम्णि व्यपेतघृणे स्पृहां पुनरपि हतव्रीडं चेतः करोति करोमि किम् ॥ १० ॥ मानव्याधिनिपीडिताऽहमधुना शक्नोमि तस्यान्तिकं नो गन्तुं

---

१ पीडाः । २ एतेन नायिकायाः पतिप्रेमातिशयः सखीं प्रत्युत्तरदानेऽतिदाक्षिण्यं च ध्वनितं । ३ शय्याम् । ४ धूर्तस्य । ५ कलह- । ६ नष्टभाग्याः ।

न सखीजनोऽपि चतुरो यो मां बलान्नेष्यति। मानी सोऽपि जनो न लाघवभयादभ्येति मोऽतः स्वयं कालो याति चलं च जीवितमिदं क्षुण्णं मनश्चिन्तया ॥ ११ ॥ निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मूल्यते निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिनं रुद्यते। अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥ १२ ॥ नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः। पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः ॥ १३ ॥ तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोस्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया। पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः सख्यः किं करवाणि यान्ति शतशो यत्कञ्चुके संधयः ॥ १४ ॥ यत्पङ्केरुहलक्ष्म पाणिकमलं भाग्यालये यद्गुरुर्यस्तं वा मम यल्ललाटफलके भाग्याक्षरं वेधसा। तत्सर्वं सखि यो यथार्थमकरोत्तस्मिन्प्रकोपः कृतो धिङ् मां धिङ् मम जीवितं धिगतनुं धिक्चेष्टितं धिग्वयः ॥ १५ ॥ भर्तुर्यस्य कृते गुरुर्लघुरभूद्द्वेष्टी कनिष्ठीकृता धैर्यं कोशधनं गतं सहचरी नीतिः कृता दूरतः। निर्मुक्ता तृणवत्त्रपा परिचिता स्रोतस्विनीबिन्दुवत्स क्रोधादवधीरितो हतधिया प्रेयान्बलीयान्विधिः ॥ १६ ॥ केकाभिः कलयन्तु केकिनिवहाः संभूय कर्णज्वरं विद्युद्भिः सह भीषयन्तु परितः पाथोधराणां घटाः। पञ्चेषुर्बधिरीकरोतु ककुभः सर्वाः शराणां रवैर्नाहं दग्धदुरन्तजीवनकृते कस्यापि वश्या सखि ॥ १७ ॥ एषा दोषा यथाऽर्था प्रियतम भवतो हन्त जाता वियोगे स्त्रीहत्यापातकीति प्रथितिमुपगते लाञ्छनीति त्रिलोक्याम्। नैवं भूयोऽपराधं बत दयित कदाऽप्याचरिष्यामि सत्यं त्वत्त्यक्तां मां सुतिग्मैर्मनसिजशमनः सायकैर्हन्तुमुत्कः ॥ १८ ॥

## दयितानुनयः।

मयि मलयसमीरो वर्षतीव स्फुलिङ्गानहह हिमकरो मामग्निना सिञ्चतीव। किमिति मकरकेतोः किं नु वक्ष्ये कठोरं कथमपि तदहं ते नाथ नोपेक्षणीया ॥ १ ॥ घनघनमपि दृष्टं व्योम वातो मरुत्वाञ्छिखिकुलकलवाचां श्रोत्रमासीन्निवासः। असुसम न मृताऽहं त्वद्वियोगेऽपि जाते तव घनपरिरम्भप्रार्थनाशावशेन ॥ २ ॥ त्वं तावद्बहुवल्लभो नवयुवा कान्तः सुखी निर्घृणो नो जानासि परव्यथां शठमते नैवासि दुःखी यतः। किं त्वन्याः परिपृच्छ मन्मथशरैः पीडामसह्यामिमां त्राता नो भव येन सज्जनजनैः कापालिको नोच्यसे ॥ ३ ॥ मुक्तो मानपरिग्रहः सह सखीसार्थेन तन्मन्त्रिणा शक्ता त्वच्चरणप्रसादरहिता नाहं क्षणं प्राणितुम्। पश्य त्वं कृशकं शरीरकमिदं यां यामवस्थां गतं सैषाऽहं तव पादयोर्निपतिता नाथ प्रसीदाधुना ॥ ४ ॥

## कान्तापराधशंसनम्।

सार्धं मनोरथशतैस्तव धूर्त कान्ता सैव स्थिता मनसि कृत्रिमभावरम्या। अस्माकमस्ति न कथंचिदिहावकाशस्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ १ ॥ यदा त्वं चन्द्रोऽभूः शिशिरकरसंपर्करुचिरस्तदाऽहं जाता द्राक्शशधरमणीनां प्रतिकृतिः। इदानीमर्कस्त्वं खररुचिसमुत्सारितरसः किरन्ती

---

१ गौरवक्षय-। २ मा मामित्यर्थः। मा भत इति च्छेदः। ३ अहर्निशम् सर्वदेति यावत्। ४ सम्भाव्य। ५ कन्दर्पम्। अत्र मदनमिति वाच्यम्। अतनुं प्रति धिक्कृतेरवक्तव्यत्वाभिव्यञ्जनात्। ६ तिरस्कृतः। इदमसाध्व्या वचनम्। ७ दक्षिणपवनः। ८ निबिडतया मेघच्छन्नम्। ९ बह्व्यो वल्लभा यस्येति सः। १० निर्दयः। ११ भिक्षुः।

कोपाग्नीनहमपि रविग्रावघटिता ॥ २ ॥ तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलं दधानः । मदधिवसति माऽऽगाः कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ३ ॥ तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव प्रियापादालक्तच्छुरितमरुणद्योति हृदयम् । ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ ४ ॥ कृतकक्रुतकैर्मायाशाठ्यैस्त्वयाऽप्यतिवर्तितं निभृतनिभृतैः कार्यालापैर्मयाप्युपलक्षितम् । भवतु विदितं नेष्टा तेऽहं वृथा परिखिद्यते अहमसहना त्वं निःस्नेहः समेन समं गतम् ॥ ५ ॥ कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः । तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ ६ ॥ बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि । तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो मुद्यते नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ ७ ॥ किं किं वक्त्रमुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा क ते वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त वाग्बन्धनैः । खिन्नाऽहं तव रात्रिजागरवशात्तामेव याहि प्रियां निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥ ८ ॥ सामोदं वचनं प्रयच्छसि न मे नो वाञ्छितं यच्छसि प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु । कण्ठाश्लेषपरिग्रहे शिथिलिता यन्नादराच्चुम्बसे तत्ते धूर्त हृदि स्थिता प्रियतमा काचिन्ममेवापरा ॥ ९ ॥ अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां किं लब्धं चटुल त्वयेह नयता सौभाग्यमेतां दशाम् । पश्यैतद्दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणं वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम् ॥ १० ॥ रोहन्तौ प्रथमं ममोरसि तव प्राप्तौ विवृद्धिं स्तनौ संलापास्तव वाक्यभङ्गमलिना मौग्ध्यं परं त्याजिताः । धात्रीकण्ठमपास्य बाहुलतिके कण्ठे तवासञ्जिते निर्दाक्षिण्य करोमि किं नु विशिखाप्येषा न पन्थास्तव ॥ ११ ॥ सत्यं तद्यदवोचथा मम महाननुरागस्त्वदीयादिति त्वं प्राप्तोऽसि विभात एव सदनं मां द्रष्टुकामो यतः । रागं किं च विभर्षि नाथ हृदये काश्मीरपत्रोदितं नेत्रे जागरजं ललाटफलके लाक्षारसापादितम् ॥ १२ ॥

## कान्ताऽपराधमार्जनविधिः ।

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् । मेखलाभिरसकृच्च बन्धनं वञ्चयन्प्रणयिनीवाप सः ॥ १ ॥ अधिरजनि जगाम धाम तस्याः प्रियतमयेति रुषा स्रजावनद्धः । पदमपि चलितुं युवा न सेहे किमिव न शक्तिहरं ससाध्वसानाम् ॥ २ ॥ सालक्तकेन नवपल्लवकोमलेन पादेन नूपुरवता मदनालसेन । यस्ताड्यते दयितया प्रणयापराधात्सोऽङ्गीकृतो भगवता मकरध्वजेन ॥ ३ ॥ सालक्तकं शतदलाधिककान्तिरम्यं रत्नौघधामनिकरारुणनूपुरं च । क्षिप्तं भृशं कुपितया तरलोत्पलाक्ष्या सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे ॥ ४ ॥ कोपात्किंचिदुपानतोऽपि रभसादाकृष्य केशोत्पलं नीत्वा मोहनमन्दिरं दयितया हारेण बद्ध्वा दृढम् । भूयो यास्यसि तद्गृहानिति मुहुः कण्ठार्धरुद्धाक्षरं जल्पन्त्याः श्रवणोत्पलेन सुकृती कश्चिद्रहस्ताड्यते ॥ ५ ॥ सा बाढं भवतेक्षितेति निबिडं संयम्य बाह्वोः स्रजा भूयो द्रक्ष्यसि तां शठेति नितरां संभर्त्स्य संतर्ज्य च । आलीनां पुर एव निह्नुतिपरः कोपाद्रसन्नूपुरं मानिन्याश्चरणप्रहार-

---

१ सत्यम् । २ नाशम् । ३ क्रोध-- । ४ मालासमूहे । ५ रात्रौ । ६ स्थानम् । ७ सखीनाम् ।

विधिना प्रेयानशोकीकृतः॥ ६॥ कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः। भूयोऽप्येवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन्॥ ७॥ पादे मूर्धनि ताम्रतामुपगते कर्णोत्पले चूर्णिते छिन्ने हारलतागुणे करतले संपातजातव्रणे। अप्राप्तप्रियताडनव्यतिकरा हन्तुं पुनः कोपिता वाञ्छन्ती मुहुरेणशावनयना पर्याकुला रोदिति॥ ८॥

## मानिन्या मानापनयः।

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिर्नैशस्यार्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा। मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम्॥ १॥ भवति विततश्वासोन्नाहप्रणुन्नपयोधरं हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम्। तदनु वदनं मूर्च्छाच्छेदात्प्रसादि विराजते परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम्॥ २॥ कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्। अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्॥ ३॥ परिम्लाने माने मुखशशिनि तस्याः करधृते मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे। तया पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः॥ ४॥ कृष्णस्निग्धकनीनिके विकसतः कर्णान्तदीर्घे दृशावुत्कम्पो हृदयस्य वेपितकुचाभोगः शनैः शाम्यति। धत्ते शीतरुचो विधुंतुदमुखान्मुक्तस्य लक्ष्मीमिदं मुग्धाङ्ग्या विगलद्विमोहतिमिरं वक्त्रं प्रसीदत्क्रमात्॥ ५॥

## अन्योऽन्यं प्रमोदोदयः।

पदप्रणतमालोक्य कान्तमेकान्तकातरम्। मुञ्चन्ती बाष्पसंतानं सुमुखी तेन चुम्बिता॥ १॥ इह स्फुटं तिष्ठति नाथ कण्टकः शनैः शनैः कर्षनखाग्रलीलया। इति च्छलात्काचिदलग्नकण्टकं पदं तदुत्सङ्गतले न्यवेशयत्॥ २॥ निपपात संभ्रमभृतः श्रवणादसितभ्रुवः प्रणदितालिकुलम्। दयितावलोकविकसन्नयनप्रसरप्रणुन्नमिव वारिरुहम्॥ ३॥ कररुद्धनीवि दयितोपगतौ गलितं त्वराविरहितासनया। क्षणदृष्टहाटकशिलासदृशस्फुरदूरुभित्ति वसनं ववसे॥ ४॥ पिदधानमन्वगुपगम्य दृशौ ब्रुवते जनाय वद कोऽयमिति। अभिधातुमध्यवससौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत्॥ ५॥ उपनेतुमुन्नतिमतेव दिवं कुचयोर्युगेन तरसा कलिताम्। रभसोत्थितामुपगतः सहसा परिरभ्य कश्चन वधूमरुधत्॥ ६॥ अनुदेहमागतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता। मुकुरेण वेपथुभृतोऽतिभरात्कथमप्यपाति न वधूकरतः॥ ७॥ अवनम्य वक्षसि निमग्नकुचद्वितयेन गाढमुपगूढवता। दयितेन तत्क्षणचलद्रशनाकलकिङ्किणीरवमुदासि वधूः॥ ८॥ उदितोरुसादमतिवेपथुमत्सुदृशोऽभिभर्तृ विधुरं त्रपया। वपुरादरातिशयशंसि पुनः प्रतिपत्तिमूढमपि बाढमभूत्॥ ९॥ परिमन्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ। स्खलिताभिरत्यनुपदं प्रमदाः प्रणयातिभूमिमगमन्गतिभिः॥ १०॥ मधुरोन्नतभ्रु ललितं च दृशोः सकरप्रयोगचतुरं च वचः। प्रकृतिस्थमेव निपुणागमितं स्फुटनृत्यलीलमभवत्सुतनोः॥ ११॥ लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य। अध्यासितुं तव चिरं जघनस्थलस्य

---

१ अशोकतरुर्यथा विकसितपुष्पः क्रियते तथा शोकं निराकृत्य विकसितमुखकमलः कृत इति भावः २ मृगशिशु। ३ सङ्कोचयति। ४ राहु-। ५ सुवर्ण-। ६ दर्पणेन।

पर्याप्तमेव करभोरु मनोरुयुग्मम् ॥ १२ ॥ सुतनु जैहिहि मौनं पश्य पादानतं मां न खलु तव कदाचित्कोप एवंविधोऽभूत् । इति निगदति नाथे तिर्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥ १३ ॥ वचोवीचीदानं स्फुरदधरपानं विविनयं कृशीभूते माने मयि मृगयमाणे मृगदृशः । बभूव भ्रूभङ्गः सनयनतरङ्गः सपदि यः प्रभुत्वं व्यातेने जगदुपरि तेनेह मदनः ॥ १४ ॥ तदेवाजिह्माक्षं मुखमविशदास्ता गिर इमाः स एवाङ्गश्लेषो मयि सरसमाश्लिष्यति तनुम् । तदुक्तं प्रत्युक्तं यदपटु शिरः कम्पनपरं प्रिया मानेनेयं पुनरपि कृता मे नववधूः ॥ १५ ॥ दृष्ट्वैकासनमास्थिते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः । ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ १६ ॥ आगत्य प्रणिपातसान्त्वितसखीदत्तान्तरे सागसि स्वैरं कुर्वति तल्पपार्श्वनिभृते धूर्तेऽङ्गसंवाहनम् । ज्ञात्वा स्पर्शवशात्प्रियं किल सखीभ्रान्त्या स्वमङ्कं शनैः खिन्नाऽसीत्यभिधाय मीलितदृशा सानन्दमारोपितः ॥ १७ ॥ दृष्टे लोचनवन्मनाङ् मुकुलितं पार्श्वस्थितं वक्रवन्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शं समातन्वति । नीवीबन्धवदागतं शिथिलतां संभाषमाणे क्षणान्मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥ १८ ॥ एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतोरन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् । दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषोर्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥ १९ ॥ कृत्वा विग्रहमश्रुपातकलुषं शय्यासनादुत्थिता क्रोधाच्चापि विहाय गर्भभवनद्वारं रुषा प्रस्थिता । कृत्वा चन्द्रमसं प्रभाविरहितं प्रत्यूषवाताहता हा रात्रिस्त्वरिता गतेति पतिता कान्ता प्रियस्योरसि ॥ २० ॥ सत्यं दुर्लभ एष वल्लभतरो रागो ममास्मिन्पुनः कोपोऽस्यातिगुरुर्न चातिनिपुणाः सख्योऽपि संबोधने । संचिन्त्येति मृगीदृशा प्रियतमे दृष्टे श्लथां मेखलां बध्नन्त्या न गतं स्थितं न च चलद्वासोऽथवा संवृतम् ॥ २१ ॥ वाचो वाग्मिनि किं तवाद्य परुषाः सुभ्रु भ्रुवो विभ्रमोऽप्युत्क्रान्तः कृत एष लोलनयने किं लोहिते लोचने । नास्त्यागो मयि किं मुधैव कुपितेत्युक्ते पुनः प्रेयसा मानिन्या जलबिन्दुदन्तुरपुटा दृष्टिः सखीष्वाहितः ॥ २२ ॥ सा यावन्ति पदान्यलीकवचनैरालीजनैः पाठिता तावन्त्येव कृतागसो द्रुततरं संलप्य पत्युः पुरः । प्रारेभे पुरतो यथा मनसिजस्येच्छा तथा वर्तितुं प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः ॥ २३ ॥ पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयाऽऽलम्बितं किं मां नालपतीत्ययं खलु शठः कोपस्तयाऽप्याश्रितः । इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया ॥ २४ ॥ चक्षुर्लुप्तमषीकणं कवलितस्ताम्बूलरागोऽधरे विश्रान्ता कबरी कपोलफलके लुप्तेव गात्रद्युतिः । जाने संप्रति मानिनि प्रणयिना कैरप्युपायक्रमैर्भग्नो मानमहातरुस्तरुणि ते चेतःस्थलीवर्धितः ॥ २५ ॥ तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषनिद्राङ्कितं किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते । इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया संश्लिष्टा रभसेन तत्सुखवशात्तन्व्याऽपि तद्विस्मृतम् ॥ २६ ॥ नापेतोऽनुनयेन यः प्रियसुहृद्वाक्यैर्न यः संहृतो यो दीर्घं दिवसं विषह्य हृदये यत्नात्कथंचिद्धृतः । अन्योन्यस्य हृते मुखे विहितयोस्तिर्यक्कथंचिद्दृशोः संभेदे सपदि स्मितव्यतिकरे मानो विहस्योज्झितः ॥ २७ ॥

---

१ मुञ्च । २ सापराधे । ३ अपराधः । ४ मिथ्या- । ५ पराङ्गनास्तनयुगविलेपनचिह्नम् । ६ वक्षःस्थल- । ७ सम्मिश्रणे ।

एकस्मिञ्शयने सरोरुहदृशोर्विज्ञाय निद्रां तयोरेकां पल्लवितावगुण्ठनवतीमुत्कन्धरो दृष्टवान्। अन्यस्याः सविधं समेत्य निभृतव्यालोलहस्ताङ्गुलिव्यापारैर्वसनाञ्चलं चपलयन्स्वापच्युतिं क्लृप्तवान् ॥ २८ ॥ लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः। मुग्धा कुड्मलिताननेन दधती वातं स्थिता तस्य सा भ्रान्त्या धूर्ततया च वेपथुमती तेनानिशं चुम्बिता ॥ २९ ॥ जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चितं वक्त्रं स्वेदकणाञ्चितं न सहसा यावच्छठेनाधुना। दृष्टेनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे तत्केनापि निरूप्यमाणनिपुणो मानः समाधीयताम् ॥ ३० ॥ शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्। विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ ३१ ॥ कान्ते घोरकृतान्तवक्त्रकुहरात्त्वं पुण्यपुञ्जेन मे मुक्ता कान्त तदर्जनश्रमभरं प्रत्यङ्गमालिङ्ग्य माम्। इत्याकर्ण्य निमीलितार्धनयनं स्मेरं शनैरानतं सोल्लासं वदनाम्बुजं मृगदृशः स्वैरं चुचुम्बे प्रियः ॥ ३२ ॥

## प्रणयवचनानि।

कृष्णार्जुनानुरक्ताऽपि दृष्टिः कर्णावलम्बिनी। याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥ १ ॥ स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे। बलं तु जातं मुग्धाक्षि चक्षुषोर्मम पश्यतः ॥ २ ॥ अपूर्वं चौर्यमभ्यस्तं त्वया चञ्चललोचने। दिवैव जाग्रतां पुंसां चेतो हरसि दूरतः ॥ ३ ॥ मुग्धे धानुष्कता केयमपूर्वा त्वयि दृश्यते। यया विध्यसि चेतांसि गुणैरेव न सायकैः ॥ ४ ॥ कुतः कुवलयं कर्णे करोषि कलभाषिणि। किमपाङ्गमपर्याप्तमस्मिन्कर्मणि मन्यसे ॥ ५ ॥ दृष्टिं देहि पुनर्बाले कमलायतलोचने। श्रूयते हि पुरा लोके विषस्य विषमौषधम् ॥ ६ ॥ विभ्रमैर्विश्वहृद्यैस्त्वं विद्ययाऽप्यनवद्यया। केनापि हेतुना मन्ये प्राप्ता विद्याधरी क्षितिम् ॥ ७ ॥ त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते। मालतीशशभृल्लेखाकदलीनां कठोरता ॥ ८ ॥ बिम्बोष्ठे किल रागस्ते तन्वि पूर्वमदृश्यत। अधुना हृदयेप्येऽषे मृगशाबाक्षि दृश्यते ॥ ९ ॥ पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ। वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ १० ॥ अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम्। यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव ॥ ११ ॥ कमले कमलोत्पत्तिः श्रूयते न च दृश्यते। बाले तव मुखाम्भोजे दृष्टमिन्दीवरद्वयम् ॥ १२ ॥ आकर्णय सरोजाक्षि वचनीयमिदं भुवि। शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते ॥ १३ ॥ नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः। सदृशे वनवृद्धानां कमलानां

---

१ प्रणये कनिष्ठज्येष्ठयोर्नायिकयोः। २ कृष्ण, वासुदेवः, श्यामवर्णश्च। अर्जुनः- गाण्डीवी श्वेतकान्तिश्च। तयोरनुरक्ता, ताभ्याम्मिश्रिता च। ३ राधेयपक्षपातिनी। कर्णान्तमायतत्वात् कर्णयोरवलम्बिनी च। ४ धनुर्धारित्वम्। ५ आपाङ्गभागस्य कर्णान्तं प्रसरे तेनैव कुवलयशोभासम्पत्तौ किं कृत्रिमकुवलयधारणेन, तत्सम्पादनप्रयासात्। विशालनेत्राया नेत्रे कर्णान्तमायते कविभिर्वर्ण्यते। ६ एषः रागः अनुराग इत्यभिप्रेतोऽर्थः शोणिमेति तु वचोभङ्गिः। ७ यमुनाप्रवाहसदृशः। ८ अनङ्गेन कामदेवेनेत्यर्थः। ९ अयं हि साङ्गेनैव लब्धुं शक्यः। १० नेत्ररूपे नीलकमले। ११ शशाङ्क इव तव मुखमिति तु सुतरां पामराणां कल्पना, किन्तु तव मुखमिव शशाङ्क इत्यपि तथाभूतैव शशाङ्कस्यान्तर्मलिनत्वादस्य च निर्मलत्वादिति शशाङ्कपदेन द्योतितम्। अत्र व्यतिरेकोऽलङ्कारः। प्रसिद्धचन्द्ररूपोपमानापेक्षया मुखरूपोपमेयस्योपमानत्वेन कल्पनात्।

त्वदीक्षणे[1] ॥ १४ ॥ यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि दृश्यते । मृणालसूत्रमपि ते न संमाति स्तनान्तरे ॥ १५ ॥ अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः । अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥ १६ ॥ निर्णेतुं शक्य[2]मस्तीति मध्यं तव नितम्बिनि । अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥ १७ ॥ राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् । त[3]पनीयशिलाशोभी कटिश्च हरते मनः ॥ १८ ॥ आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् । कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ १९ ॥ आवर्तस्त[4]न्वि नाभिस्ते नेत्रे नीलसरोरुहे । तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका ॥ २० ॥ साहजिकरूपवत्या भवति भवत्या विभूषणं भारः । सर्वाङ्गसौरभिण्या दमनकवल्ल्याः किमालि कुसुमेन ॥ २१ ॥ इन्दुः किं क कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् । ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥ २२ ॥ आरुह्य शैलशिखरं त्वद्वदनापहृतकान्तिसर्वस्वः । फूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥ २३ ॥ कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते । काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ २४ ॥ आक्षिपसि क[5]र्णमक्ष्णा ब[6]लिरपि बद्धस्त्वया त्रिधा मध्ये । इति जितसकलवदान्ये तनुदाने लज्जसे सुतनु ॥ २५ ॥ नयननिपातेऽङ्कुरितः पल्लवितो वचसि पुष्पितो हसिते । फलतु कृशाङ्गि तवाङ्गस्पर्शेन मनोर[7]थोऽस्माकम् ॥ २६ ॥ उचितं गोपनमनयोः कुचयोः कनकाद्रिकान्तितस्करयोः । अ[8]वधीरितविधुमण्डलमुखमण्डलगोपनं किमिति ॥ २७ ॥ दलै[9]रमलै[10]ः कोमलोत्पलप[11]लाशशङ्काकुलोऽयमलिपो[12]तः । तव लोचनयोरनयोः परिसर[13]मनुवेल[14]मनुसरति ॥ २८ ॥ तव कुवलयाक्षि वक्षसि कुण्डलिता कापि काञ्चनी कान्तिः । कु[15]सुमेषोर्विजि[16]गीषोर्भवति च भवतीह भूयसी कण्डुः ॥ २९ ॥ वदनेन निर्जितं तव निलीयते चन्द्रबिम्बमम्बु[17]धरे । अरविन्दमपि च सुन्दरि निलीयते पा[18]थसां पूरे ॥ ३० ॥ सत्यं तपः सुगत्यै यत्तत्त्वाम्बुषु रविप्र[19]तीक्ष सत् । अनुभवति सुगतिमब्जं त्वत्पदजन्मनि समस्तकमनीयम् ॥ ३१ ॥ कम्बुकण्ठि चरणः श[20]नैश्चरो रा[21]हुरेव तव केशकलापः । न च्युतं तदपि यौवनमेतत्सा पयोधर[22]गुरोरनुकम्पा[23] ॥ ३२ ॥ कमलाक्षि विलम्ब्यतां क्षणं कमनीये कचभारबन्धने । दृढलग्नमिदं दृशोर्युगं शनकैरद्य समुद्धराम्यहम् ॥ ३३ ॥ तवाननं सुन्दरि फुल्लपङ्कजं स्फुटं जपापुष्पमसौ तवाधरः । विनिद्रपद्मं तव लोचनद्वयं तवाङ्गमन्यत्किल पुष्पसंचयः ॥ ३४ ॥ प्रिये सदा पूर्णतरं मनोहरं ते निष्कलङ्कं मुखचन्द्रमण्डलम् । विलोक्य सव्रीडतया निशापतिर्गतः प्रतप्तो जलधेर्जलान्तरम् ॥ ३५ ॥ त्वद्वर्तुलस्थूलसुवर्णकान्ति रम्यस्तनश्रीफलयुग्ममेतत् । दृष्ट्वा वने

---

१ तवेक्षणे कमलानां मृगाणां सरोजानां च समे । मृगा लुब्धैः व्याधैः कर्तृभिः शिलीमुखैः कमलानि पुनर्मधुपाने सतृष्णैः शिलीमुखैः भ्रमरैः । आकुलितानि । मृगा वने अरण्ये वृद्धाः कमलानि जले वृद्धानीति भावः । मृगपक्षे कमलपदं लक्षणया तन्नेत्रपरम् । २ अनुमातुं शक्यं न तु दृशा साक्षात्कर्तुम् । अत्यल्पत्वादिति भावः । ३ सुवर्ण- । ४ एवेति पाठान्तरमयुक्तम् । नियमविधिवचनस्य दुष्टत्वादिति स्पष्टमलङ्कारशास्त्रे । ५ श्रवणेन्द्रियं राधेयं च । ६ प्रह्लादपौत्रः वबयोरभेदात्त्रिवलिश्च । ७ एतेन मनोरथस्य तरुत्वं व्यञ्जितम् । ८ अवधीरितं तिरस्कृतं विधोर्मण्डलं येन तादृशं यन्मुखमण्डलं तद्गोपनं तदाच्छादनम् । ९ विकसत्- । १० स्वच्छ- ( चारु- ) । ११ पत्र- । १२ भ्रमरजातीयो बालः । १३ समीपम् । १४ वारं वारम् । १५ कामस्य । १६ जेतुमनसः । १७ मेघे । १८ जलानाम् । १९ सूर्यप्रत्यक्षम् । २० मन्दसञ्चरणशीलः, सूर्यपुत्रश्च । २१ श्यामिमसाम्यमपेक्ष्येदम् । २२ मेघाधिराजस्य कुचभारस्य च । २३ दया ।

श्रीफलमाकुलं किं लज्जाभिरालम्बितमेव वृक्षे ॥ ३६ ॥ जघान बाणैर्दशभिर्दशास्यशिरांसि सीताहरणे स रामः । त्वदङ्गसङ्गाय सदाऽनुरक्ते प्रयातु मे मस्तकमेकमेव ॥ ३७ ॥ अयि मन्मथचूत-मञ्जरि श्रवणायतचारुलोचने । अपहृत्य मनः क यासि तत्किमराजकमत्र राजते ॥ ३८ ॥ भवत्कृते खञ्जनमञ्जुलाक्षि शिरो मदीयं यदि याति यातु । नीतानि नाशं जनकात्मजार्थं दशाननेनापि दशाननानि ॥ ३९ ॥ ताम्बूलरागोऽधरलोलुपो यद्यदञ्जनं लोचनचुम्बनोत्सुकम् । हरश्च कण्ठग्रह-लालसो यत्स्वार्थः स तेषां न तु भूषणं ते ॥ ४० ॥ यत्पद्ममादित्सु तवाननीयां[१] कुरङ्गलक्ष्मा च मृगाक्षि लक्ष्मीम् । एकार्थलिप्साकृत एव मन्ये शशाङ्कपङ्केरुहयोर्विरोधः ॥ ४१ ॥ सदा प्रदोषो मम याति जाग्रतः सदा च मे निःश्वसतो गता निशा । त्वया समेतस्य विशाललोचने ममाद्य शोकान्तकरः प्रदोषकः ॥ ४२ ॥ शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः । सुमुखि येन तवाधरपाटलं[२] दशति बिम्बफलं शुकशावकः ॥ ४३ ॥ अनधिगतमनोरथस्य पूर्वं शतगुणिते गता मम त्रियामा । यदि तु तव समागमे तथैव प्रसरति सुभ्रु ततः कृती भवेयम् ॥ ४४ ॥ दलितकुचनखाङ्कमङ्कपालिं रचय ममाङ्कमु-पेत्य पीवरोरु । अनुहर हरिणाक्षि शंकराङ्कस्थितहिमशैलसुताविलासलक्ष्मीम् ॥ ४५ ॥ कुमुद-कमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः काः । अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥ ४६ ॥ नारब्धं कुचपरिरम्भणेषु वाम्यं वैमुख्यं किमपि न चुम्बने कदाचित् । किं नीवीगतमबले रुणत्सि पाणिं विक्रीते करिणि किमङ्कुशे विवादः ॥ ४७ ॥ दासे कृतागसि भवेदुचितः प्रभूणां पादप्रहार इति मानिनि नास्मि[३] दूये । उद्यत्कठोरपुलकाङ्कित-कण्टकाग्रैर्यद्भिद्यते तव पदं ननु सा व्यथा मे ॥ ४८ ॥ बाले तवाधरसुधारसपानकाले चेतो मदीयमभिवाञ्छति शेषभावम्[४] । आलिङ्गने तव विरोचनपौत्रभावमाखण्डलत्वमखिलाङ्गनिरीक्षणे ते[५][६] ॥ ४९ ॥ एको हि खञ्जनवरो नलिनीदलस्थो धृष्टः करोति चतुरङ्गबलाधिपत्यम् । किं वा करिष्यति भवद्वदनारविन्दे जानामि नो नयनखञ्जनयुग्ममेतत् ॥ ५० ॥ पादास्त[७] एव शशिनः सुखयन्ति गात्रं बाणास्त एव मदनस्य ममानुकूलाः । संरम्भरूक्षमिव सुन्दरि यद्यदासीत्त्व-त्संगमेन मम तत्तदिवानुनीतम् ॥ ५१ ॥ पद्मातपत्ररसिके सरसीरुहस्य किं बीजमर्पयितुमिच्छसि वापिकायाम् । कालः कलिर्जगदिदं न कृतज्ञमज्ञे स्थित्वा हरिष्यति सुखस्य तवैव लक्ष्मीम् ॥ ५२ ॥ त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्राभङ्गात्ततत्सुषमैमित्रैकरोपतृष्ण्या । लब्ध्वापि पर्वणि विधुः क्रमहीयमानः शंसत्यनीत्युपचितां श्रियमाशुनाशाम् ॥ ५३ ॥ कोपस्त्वया हृदि कृतो यदि पङ्कजाक्षि सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत् । आश्लेषमर्पय मदर्पितपूर्वमुच्चैर्दन्तक्षतं मम समर्पय चुम्बनं च ॥ ५४ ॥ म्लानस्य जीवकुसुमस्य विकासनानि संतर्पणानि सकलेन्द्रिय-मोहनानि । एतानि ते सुवचनानि सरोरुहाक्षि कर्णामृतानि मनसश्च रसायनानि ॥ ५५ ॥ मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ धत्तो मुखे तु तव दृक्तिलकाञ्जनाभाम् ।

---

१ मुखसम्बन्धिनीम् । २ एतेन साक्षात्तदधरदंशनं तपसाऽपि सुदुर्लभमिति द्योति-तम् । ३ अस्मि अहम् । इदमव्ययम् । ४ सहस्रमुखत्वम् । ५ विरोचनदैत्यस्य पौत्रो बाणासुरः, स च सहस्रभुज इति सहस्रभुजत्वमिति वक्तव्यम् । ६ सहस्राक्षत्वम्, आखण्डल इन्द्रः तस्यापि सहस्राक्षत्वादिति भावः । ७ किरणाः । ८ परमसुन्दर- । ९ प्रियहस्त- । सूर्यरश्मि- ।

दोषावितः क्वचन मेलनतो गुणत्वं वक्तुर्गुणौ हि वचसि भ्रमविप्रलम्भौ ॥ ९६ ॥ मृदुलकनककान्ति श्वाससौरभ्यरम्यं वदनकमलमेतन्नेत्रमत्तद्विरेफम् । तव किमु सुसमीक्ष्य व्रीडया पद्मवृन्दं सरसि सलिलपूर्णे मर्तुकामं विवेश ॥ ९७ ॥ उन्मेषं यो मम न सहते जातिवैरी निशायामिन्दोरिन्दीवरदलदृशां तस्य सौन्दर्यदर्पः । नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षाल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥ ९८ ॥ यः प्रागासीदभिनववयोविभ्रमावाप्तजन्मा चित्तोन्माथी विगतविषयोपप्लवानन्दसान्द्रः । वृत्तीरन्तस्तिरयति तवाश्लेषजन्मा स कोऽपि प्रौढप्रेमा नव इव पुनर्मान्मथो मे विकारः ॥ ९९ ॥ गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् । एकाग्रा यद्दधति भगवत्युष्णभानौ च भक्तिं तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि ॥ १० ॥ पुराऽभूदस्माकं प्रथममविभिन्ना तनुरियं ततोऽनु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः । इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥ ११ ॥ दृशौ तव मदालसे वदनमिन्दुमत्यान्वितं गतिर्जनमनोरमा विधुतरम्भमूरुद्वयम् । रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवावहो विबुधयौवतं वहसि तन्वि पृथ्वीगता ॥ १२ ॥ दिनकरकरामृष्टं बिभ्रद्द्युतिं परिपाटलां दशनकिरणैरुत्सर्पद्भिः स्फुटीकृतकेसरम् । अयि मुखमिदं मुग्धे सत्यं समं कमलेन ते मधु मधुकरः किं त्वेतस्मिन्पिबन्न विभाव्यते॥ १३ ॥ हस्तस्वेदस्नपित इव यश्चन्दनक्षोदवृन्दैरालितोऽलंकृतपरिसरः फुल्लकह्लारहारैः । आराधीत्थं तव नवकुरङ्गाक्षि वक्षोजशंभुः साक्षात्कारं तदपि न दिशत्येष किं वा करोमि॥ १४ ॥ विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः । तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥ १५ ॥ स्मितज्योत्स्नाभिस्ते धवलयति विश्वं शशिमुखि दृशस्ते पीयूषद्रवमिव विमुञ्चन्ति परितः । वपुस्ते लावण्यं किरति मधुरं दिक्षु तदिदं कुतस्ते पारुष्यं सुतनु हृदयेनाद्य गुणितम् ॥ १६ ॥ स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे विलेभे कः प्राणान्रणमखमुखे यं मृगयसे । सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ १७ ॥ बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छविर्गण्डश्चण्डि चकास्ति नीलनलिनश्रीमोचनं लोचनम् । नासाऽभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति प्रिये प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ १८ ॥ केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने ह्यन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः । मुक्तानां सततं निवासरुचिरं वक्षोजकुम्भद्वयं चेत्थं तन्वि वपुः प्रशान्तमपि ते रागं करोत्येव नः ॥ १९ ॥ भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां श्यामात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम् । मोहं तावदयं च तन्वि तनुतां बिम्बाधरो

---

१ विकासम् । २ जन्मतः शत्रुः । ३ अनयेति शेषः । ४ चन्द्रस्य । ५वक्त्रलक्ष्म्येति परेणान्वितम् । ६ कमलशोभा कमलसम्पत्तिश्च । इदं च चरणयोः सौन्दर्येण कमलसादृश्यं भङ्ग्या सिद्धान्तितम् ।७ इत्थमाराधि-सेवनं कृतम् ।८ सङ्ग्रामरूपे यज्ञे शरीरे त्यक्ते स्वर्ग्याभिरङ्गनाभी रमत इति तथोक्तिः । ९ अस्मिन् पद्ये नायिकाया अनेकाऽनुगतः प्रेमाऽवगम्यत इति रसाभास इति प्रकाशकाराः । । १० रक्तपुष्पविशेषसदृश- । ११ दन्तयोः कुन्दपुष्पसदृशीति भावः । १२ कामदेवः।१३ यतिनः, जितेन्द्रियस्य । सन्न्यासिनश्च ।१४ वेदस्य श्रवणेन्द्रियस्य च ।१५ ब्राह्मणानां पक्षिणां च ।१६ जीवन्मुक्तानां मौक्तिकानां च ।१७ कलुषितान्तःकरणः।१८ मारण उद्यमम्। मदनप्रभाववृद्धिं च ।

रागवान्सद्वृत्तः स्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति ॥ ७० ॥ हुंकारैर्ददता मया प्रतिवचो यन्मौनमासेवितं यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपैस्तापिता । ध्यातं यत्सुबहून्यनन्यमनसा नक्तंदिनानि प्रिये तस्यैतत्तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥ ७१ ॥ काश्मीरद्रवगौरि हन्त किमयं भूयोऽङ्गरागे ग्रहः को वा नीलसरोरुहाक्षि नितरां नेत्राञ्जने संभ्रमः । रक्ताशोकदलोपमेयचरणे किं लाक्षया दत्तया नो रागान्तरमीहते निजरुचा विभ्राजमानो मणिः ॥ ७२ ॥ ये ये खञ्जनमेकमेव कमले पश्यन्ति दैवात्कचित्ते सर्वे कवयो भवन्ति सुतरां प्रख्यातभूमीभुजः । त्वद्वक्त्राम्बुजनेत्रखञ्जनयुगं पश्यन्ति ये ये जनास्ते ते मन्मथबाणजालविकला मुग्धे किमत्यद्भुतम् ॥ ७३ ॥ धत्ते बर्हभरे शिखी तव न किं धम्मिल्लभारश्रियं सारङ्गो भजते न किं तव दृशोः सौभाग्यमालोकने । मत्तेभश्च शिरःपदे वहति ते वक्षोजलक्ष्मीं न किं तन्मन्ये तरुणि त्वया विवृणुते साम्यं वनश्रीरियम् ॥ ७४ ॥ किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् । वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥ ७५ ॥ लावण्यामृतवर्षिणी प्रतिदिशं कृष्णागरुश्यामले वर्षाणामिव ते पयोधरभरे तन्वङ्गि दूरोन्नते । नासावंशमनोज्ञकेतकतनुभ्रूपत्रगर्भोल्लसत्पुष्पश्रीस्तिलकः सहेलमलकैर्भृङ्गैरिवापीयते ॥ ७६ ॥ अन्तःकूजदुदारकण्ठमसकृन्मुञ्चेति लोलेक्षणं प्रायः स्मेरकपोलमूलममृतप्रस्यन्दि बिम्बाधरम् । आधूताङ्गुलिपल्लवाग्रमलमित्यानर्तितभ्रूलतं पीतं येन मुखं त्वदीयमबले सोऽयं हि धन्यो युवा ॥ ७७ ॥ तन्वि त्वद्वदनस्य विभ्रमलवं लावण्यवारांनिधेरिन्दुः सुन्दरि दुग्धसिन्धुलहरीबिन्दुः कथं विदन्तु । उत्कल्लोलविलोचने क्षणमयं शीतांशुरालम्बतामुन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम् ॥ ७८ ॥ वेणीं ते प्रसमीक्ष्य चित्रकुसुमैरुद्भासितां बर्हिणो लज्जन्ते निजबर्हवृन्दमधिकं भारं विदित्वा प्रिये । निर्याताः शनकैरिति स्वनिलयाद्दूरे निलीय स्थिताः पश्यैतानपि लज्जयेव मधुपान्वल्लीर्विहायोद्गतान् ॥ ७९ ॥

## मधुपानप्रशंसनम् ।

दृश्यते पानगोष्ठीषु कान्तावक्त्रगतं मधु । स्मरं सहायमासाद्य ग्रस्तो राहुरिवेन्दुना ॥ १ ॥ सागसि प्रियतमे कृतकोपा याऽङ्घ्रियुग्मपतितेऽपि न तुष्टा । सैव मद्यपरिलुप्तविवेका तं तथैव परितोषयति स्म ॥ २ ॥ मूर्तिमन्तमिव रागरसौघं ते परस्परसमर्पितवक्त्राः । आननासवमिषेण तदानीमक्षिपन्त हृदयेषु युवानः ॥ ३ ॥ सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि । आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि ॥ ४ ॥ सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन । ते मुहूर्तमथ मूर्तमपीप्यन्प्रेम मानमवधूय वधूः स्वाः ॥ ५ ॥ क्रान्तकान्तवदनप्रतिबिम्बे मग्नबालसहकारसुगन्धौ । स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥ ६ ॥ कापिशायनसुगन्धि विघूर्णन्नुन्मदोऽधिशयितुं समशेत । फुल्लदृष्टि वदनं प्रमदानामब्जचारु चषकं च षडङ्घ्रिः ॥ ७ ॥ बिम्बितं भृतपरिस्रुति जानन्भाजने जलजमित्यबलायाः ।

---

१ अनुरक्तः शोणश्च । २ अतिवर्तुलः सच्चरितश्च । ३ पीडिताः । ४ मयूरः । ५ मृगः । ६ कन्दर्पस्य । ७ दृष्टिमात्रेण । ८ अपराधिनि । ९ चरणयोःप्रणामे विहितवति । १० अनुरागस्य पुञ्जं रक्तिमपुञ्जं च । ११ भ्रमरझङ्काररमणीयानि । १२ उपरराम । १३ मदिरायाम् । १४ कापिशं मद्यविशेषस्तस्यायन-(निवास-)भूतमित्यत एव सुगन्धि । १५ सन्दिदिहे । १६ मद्यपानपात्रम् । १७ भ्रमरः

घ्रातुमाक्षि पतति भ्रमरः स्म भ्रान्तिभाजि भवति क्व विवेकः ॥ ८ ॥ दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम् । यत्सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम्[1] ॥ ९ ॥ स्वादनेन सुतनोरधिचारादोष्ठतः समचरिष्ट रसोऽत्र । अन्यमन्यदिव यन्मधु यूनः स्वादमिष्टमतनिष्ट तदेव ॥ १० ॥ बिभ्रतौ मधुरतामतिमात्रं रागिभिर्युगपदेव पपाते । आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः[2] ॥ ११ ॥ पीतवत्यभिमते मधुतुल्यस्वादमोष्ठरुचकं विदद्ंक्ष्णौ[3] । लभ्यते स्म परिरक्ततयाऽऽस्मा यौवकेन[4] वियताऽपि युवत्याः ॥ १२ ॥ कस्यचित्समदनं मदनीयप्रेयसीवदनपानपरस्य । स्वादितः सकृदिवासव एव प्रत्युत क्षणविदंशपदेऽभूत्[5] ॥ १३ ॥ पीतशीधुमधुरैर्मिथुनानामाननैः परिहृतं चषकान्तः । व्रीडया रुदिवालिविरावैर्नीलनीरजमगच्छदधस्तात् ॥ १४ ॥ प्रातिभं[6] त्रिसरकेण[7] गतानां वक्रवाक्यरचनारमणीयः । गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥ १५ ॥ हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः । चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥ १६ ॥ अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् । क्षालितं नु शमितं नु वधूनां द्रावितं नु हृदयं मधुवारैः ॥ १७ ॥ सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे । विभ्रमं मधुमतः प्रमदानां धातुलीनमुपसर्ग इवार्थम्[8] ॥ १८ ॥ सावशेषपदमुक्तमुपेक्षास्रस्तमाल्यवसनाभरणेषु । गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥ १९ ॥ मद्यमन्दविगलत्त्रपमीषच्चक्षुरुन्मिषितपक्ष्म दधत्या । वीक्ष्यते स्म शनकैर्नववध्वा कामिनो मुखमधोमुखयैव ॥ २० ॥ या कथंचन सखीवचनेन प्रागभिप्रियतमं प्रजगल्भे । व्रीडजाड्यमभजन्मधुपा[9] सा स्वां मदात्प्रकृतिमेति हि सर्वः ॥ २१ ॥ छादितः कथमपि त्रपयान्तर्यः प्रियं प्रति चिराय रमण्याः । वारुणी[11]मदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः ॥ २२ ॥ आगतानगणितप्रतियातान्वल्लभानभिसिसारयिषूणाम्[12] । प्रापि चेतसि स विप्रतिसारे सुभ्रुवामवसरः सरकेण[13] ॥ २३ ॥ मा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचित्ता । योषिदित्यभिललाष न हालां दुस्त्यजः खलु सुखादपि मानः ॥ २४ ॥ ह्रीविमोहमहरद्दयितानामन्तिकं रतिसुखाय निनाय । सप्रसादमिव सेवितमासीत्सद्य एव फलदं मधु तासाम् ॥ २५ ॥ दत्तमात्तवदनं दयितेन व्याप्तमातिशयिकेन रसेन । सस्वदे मुखसुरं प्रमदाभ्यो नाम रूढमपि च व्युदपादि ॥ २६ ॥ लब्धसौरभगुणो मदिराणामङ्गनास्यचषकस्य च गन्धः । मोदितालिरितरेतरयोगादन्यतामभवतातिशयं नु ॥ २७ ॥ मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता दृशि रागम् । लेभिरे सपदि भावयताऽन्तर्योषितः प्रणयिनेव मदेन ॥ २८ ॥ पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः । प्रेयसामधररागरसेन स्वं किलाधरमुपालि रञ्जुः ॥ २९ ॥ अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन । उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा तु ममाद ॥ ३० ॥ अन्ययान्यवनितागतचित्तं

---

१ पीतवर्णम्, कृतपानं च । २ नीलकमल- । ३ विशेषेण दंष्टुमुत्सुके । ४ शोणरसविशेषेण । ५ मद्यविशेष- । ६ उन्नतत्वम् । ७ मद्यविशेषेण । त्रिवारं मद्यपानेनेति वा । ८ मधुमदो वनितानामङ्गे शरीरे प्रकृतिरूपे शब्दे च चिरं सर्वदा स्वभावात् धातूनामनेकार्थत्वाद्वा सन्तमेव, तथाऽप्रकृतत्वात् अप्रस्तुतत्वात् अप्रकाशितं विभ्रमं विलासविशेषम्, धातुलीनं धातौ गूढम् अर्थम् उपसर्ग इवेति भावः । ९ प्रियतमसमक्षम् । १० मदिरापानकर्त्री । ११ मदिरा- । १२ अभिसर्तुकामानाम् । १३ मधुपानेन ।

चित्तनाथमभिशङ्कितवत्या । पीतभूरिसुरयाऽपि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥ ३१ ॥ कोपवत्यनुनयानगृहीत्वा प्रागथो मधुमदाहितमोहा । कोपितं विरहखेदितचित्ता कान्तयेव कलयन्त्यनुनिन्ये ॥ ३२ ॥ कुर्वता मुकुलिताक्षियुगानामङ्गसादमवसादितवाचाम् । ईर्ष्ययेव हरता ह्रियमासां तद्गुणः स्वयमकारि मदेन ॥ ३३ ॥ गण्डभित्तिषु पुरा सदृशीषु व्याञ्जि नाञ्चितदशां प्रतिमेन्दुः । पानपाटलितकान्तिषु पश्चाल्लोध्रचूर्णतिलकाकृतिरासीत् ॥ ३४ ॥ उद्धतैरिव परस्परसङ्गादीरितान्युभयतः कुचकुम्भैः । योषितामतिमदेन जुघूर्णुर्विभ्रमातिशयपूंषि वपूंषि ॥ ३५ ॥ चारुता वपुरभूषयदासां तामनूनतनवयौवनयोगः । तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसंगमभूषः ॥ ३६ ॥ क्षीबतामुपगतास्वनुवेलं तासु रोषपरितोषवतीषु । अग्रहीन्नु सशरं धनुरुज्झामास नूज्झितनिषङ्गमनङ्गः ॥ ३७ ॥ शङ्कयाऽन्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव । न क्षमं भवति तत्त्वविचारे मत्सरेण हतसंवृतिचेतः ॥ ३८ ॥ आननैर्विचकसे हृषिताभिर्वल्भमानमभि तनूभिरभावि । आर्द्रतां हृदयमाप च रोषो लोलति स्म वचनेषु वधूनाम् ॥ ३९ ॥ रूपमप्रतिविधानमनोज्ञं प्रेम कार्यमनपेक्ष्य विकासि । चाटु चाकृतकसंभ्रममासां कार्मणत्वमगमत्रमगेषु ॥ ४० ॥ लीलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि लावणिकेन । मानवञ्चनविदा वदनेन क्रीतमेव हृदयं दयितस्य ॥ ४१ ॥ शीधुपानविधुरासु निगृह्णन्मानमाशु शिथिलीकृतलज्जः । संगतासु दयितैरुपलेभे कामिनीषु मदनो नु मदो नु ॥ ४२ ॥ पातुमाहितरतीन्यभिलेषुस्तर्षयन्त्यपुनरुक्तरसानि । सस्मितानि वदनानि वधूनां सोत्पलानि च मधूनि युवानः ॥ ४३ ॥ कान्तसंगमपराजितमन्यौ वारुणीरसनशान्तविवादे । मानिनीजन उपाहितसंधौ संदधे धनुषि नेषुमनङ्गः ॥ ४४ ॥ कुप्यताशु भवताऽऽनतचित्ताः कोपितांश्च वरिवस्यत यूनः । इत्यनेक उपदेश इव स्म स्वाद्यते युवतिभिर्मधुवारः ॥ ४५ ॥ भर्तृभिः प्रणयसंभ्रमदत्तां वारुणीमतिरसां रसयित्वा । ह्रीविमोहविरहादुपलेभे पाटवं नु हृदयं नु वधूभिः ॥ ४६ ॥ स्वादितः स्वयमथैधितमानं लम्भितः प्रियतमैः सह पीतः । आसवः प्रतिपदं प्रमदानां नैकरूपरसतामिव भेजे ॥ ४७ ॥ भ्रूविलाससुभगाननुकर्तुं विभ्रमानिव वधूनयनानाम् । आददे मृदुविलोलपलाशैरुत्पलैश्चषकवीचिषु कम्पः ॥ ४८ ॥ ओष्ठपल्लवविदंशरुचीनां हृद्यतामुपययौ रमणीनाम् । फुल्ललोचनविनीलसरोजैरङ्गनास्यचषकैर्मधुवारः ॥ ४९ ॥ प्राप्यते गुणवताऽपि गुणानां व्यक्तमाश्रयवशेन विशेषः । तत्तथा हि दयिताननदत्तं व्यानशे मधु रसातिशयेन ॥ ५० ॥ वीक्ष्य रत्नचषकेष्वतिरिक्तां कान्तदन्तपदमण्डनलक्ष्मीम् । जज्ञिरे बहुमताः प्रमदानामोष्ठयावकनुदो मधुवाराः ॥ ५१ ॥ लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा । वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने ॥ ५२ ॥ तुल्यरूपमसितोत्पलमक्ष्णोः कर्णगं निरुपकारि विदित्वा । योषितः सुहृदिव प्रविभेजे लम्भितेक्षणरुचिर्मदरागः ॥ ५३ ॥ क्षीणयावकरसोऽप्यतिपानैः कान्तदन्तपदसंभृतशोभः । आययावतितरामिव वध्वाः सान्द्रतामधरपल्लवरागः ॥५४॥ रागकान्तनयनेषु नितान्तं विद्रुमारुणकपोलतलेषु । सर्वगाऽपि ददृशे वनितानां दर्पणेष्विव मुखेषु मदश्रीः ॥ ५५ ॥ बद्धकोपविकृतीरपि रामाश्चारुताभिमततामुपनिन्ये । वश्यतां मधुमदो दयितानामात्मवर्गहितमिच्छति सर्वः ॥ ५६ ॥

---

१ लज्जाम् । २ उद्घाटितः। ३ मद्ये पीते प्रमाद उद्रिक्ते न माननिर्वाहो विधातुं सुशक इति तथोक्तिः। ४ मद्यपूर्णपात्रविशेष-। ५ रमणीयताम् । ६ कान्तानाम् । ७ मद्यम् ।

वाससां शिथिलतामुपनाभि[1] ह्रीनिरासमपदे[2] कुपितानि । योषितां विदधती गुणपक्षे निर्ममार्ज मदिरा वचनीयम् ॥ ५७ ॥ भर्तृभूपसखि निक्षिपतीनामात्मनो मधुमदोद्यमितानाम् । व्रीडया विफलया वनितानां न स्थितं न विगतं हृदयेषु ॥ ५८ ॥ रुन्धती नयनवाक्यविकासं सादितोभयकरा परिरम्भे । व्रीडितस्य ललितं युवतीनां क्षीबता बहुगुणैरनुजह्रे ॥ ५९ ॥ योषिदुद्धतमनोभवरागा मानवत्यपि ययौ दयिताङ्कम् । कारयत्यनिभृता गुणदोषे वारुणी खलु रहस्यविभेदम् ॥ ६० ॥ आहिते नु मधुना मधुरत्वे चेष्टितस्य गमिते नु विकासम् । आबभौ नव इवोद्धतरागः कामिनीष्ववसरः कुसुमेषोः ॥ ६१ ॥ मा गमन्मदविमूढधियो नः प्रोज्झ्य रन्तुमिति शङ्कितनाथाः । योषितो न मदिरां भृशमीषुः प्रेम पश्यति भयान्यपदेऽपि ॥ ६२ ॥ चित्तनिर्वृतिविधायि विविक्तं मन्मथो मधुमदः शशिभासः । संगमश्च दयितैः स्म नयन्ति प्रेम कामपि भुवं प्रमदानाम् ॥ ६३ ॥ धाष्टर्यलङ्घितयथोचितभूमौ निर्दयं विलुलितालकमाल्ये । मानिनीरतिविधौ कुसुमेषुर्मत्तमत्त इव विभ्रममाप ॥ ६४ ॥ शीधुपानविधुरेषु वधूनां निघ्नतामुपगतेषु वपुःषु । ईहितं रतिरसाहितभावं वीतलक्ष्यमपि कामिषु रेजे ॥ ६५ ॥ पीतस्तुषारकिरणो मधुनेव सार्धमन्तः प्रविश्य चषकप्रतिबिम्बवर्ती । मानान्धकारमपि मानवतीजनस्य नूनं बिभेद यदसौ प्रससाद सद्यः ॥ ६६ ॥ पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे ततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम् । इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥ ६७ ॥

## कैतवकेलिकलाकलना ।

स्मितेनोपायनं दूरादागतस्य कृतं मम । स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया ॥ १ ॥ आश्लेषचुम्बनरतोत्सवकौतुकानि क्रीडादुरोदरपणः प्रतिभूरनङ्गः । भोगः स यद्यपि जये च पराजये च यूनोर्मनस्तदपि वाञ्छति जेतुमेव ॥ २ ॥ रतिक्रीडाद्यूते कथमपि समासाद्य समयं मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे । कृतभ्रूभङ्गाऽसौ प्रकटितविलक्षार्धरुदितस्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम् ॥ ३ ॥ गाढालिङ्गनपूर्वमेकमनया द्यूते जिते चुम्बनं तत्किंचित्परिरभ्य दत्तममुना प्रत्यर्पितं चानया । नैतत्तादृगिदं न तादृशमिति प्रत्यर्पणप्रक्रमैर्यूनोश्चुम्बनमेकमेव बहुधा रात्रिर्गता तन्वतोः ॥ ४ ॥ अद्य द्यूतजिताऽधरग्रहविधावीशोऽसि तत्खण्डनादाधिक्ये वद को भवानिति मृषा[11] कोपाञ्चितभ्रूलता । सद्यः स्विन्नकराग्रकुन्तलपरायत्तीकृतास्यस्य मे मुग्धाक्षी प्रतिकृत्य तत्कृतवती द्यूतेऽपि यन्नार्जितम् ॥ ५ ॥ आश्लेषे प्रथमं क्रमेण विजिते हृद्ये[12]ऽधरस्यार्पणे नर्मद्यूतविधौ पणं प्रियतमे कान्तां पुनः पृच्छति । अन्तर्हासनिरोधसंभृतरसोद्भेदस्फुरद्गण्डया स्वैरं सारिविसारणाय[13] विहितः स्वेदाम्बुगर्भः करः ॥ ६ ॥

## आलिङ्गननिरूपणम् ।

दीपितस्मरमुरस्युपपीडं वल्लभे घनमभिष्वजमाने । वक्रतां न ययतुः कुचकुम्भौ सुभ्रुवः कठिनतातिशयेन ॥ १ ॥ संप्रवेष्टुमिव योषित ईषुः श्लिष्यतां हृदयमिष्टतमानाम् । आत्मनः सततमेव

---

१ नाभिभागसमीपे । २ लज्जानिवृत्तिम् । ३ अनवसरे । ४ कामवेग- । ५ स्थापिते । ६ मद्य- । ७ स्तनावुपपीड्य । ८ प्रतिनिधिः ( जमिनदार ) इति भाषायाम् । ९ अधरपाने । १० अधरदंशनात् । ११ अलीकम् । १२ रमणीये । १३ चालनाय ।

तदन्तर्वर्तिनो न खलु नूनमजानन् ॥ २ ॥ स्नेहनिर्भरमधत्त वधूनामार्द्रतां वपुरसंशयमन्तः ।
यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु ववृषे यदनेन ॥ ३ ॥ न स्म माति वपुषः प्रमदानामन्तरिष्ट-
तमसंगमजन्मा । यद्बहुर्बहिरवाप्य विकासं व्यानशे तनुरुहाण्यपि हर्षः ॥ ४ ॥ यत्प्रियव्यतिकरा-
द्वनितानामङ्गजेन पुलकेन बभूवे । प्रापि तेन भृशमुच्छ्वसिताभिर्नीविभिः सपदि बन्धनमोक्षः ॥ ५ ॥
ह्री[1]तया गलितनीवि निरस्यन्नन्तरीयमवलम्बितकाञ्चि । मण्डलीकृतपृथुस्तनभारं सस्वजे दयितया
हृदयेशः[2] ॥ ६ ॥ उत्तरीयविनया[3]त्त्रपमाणा[4] रुन्धती किल तदीक्षणमार्गम् । आवरिष्ट विकटेन[5]
विबोढु[6]र्वक्षसैव कुचमण्डलमन्या ॥ ७ ॥ अंशुकं[7] हृतवता तनु[8]बाहुस्वस्तिकापिहितमुग्धकुचाग्रा ।
भिन्नशङ्खवलयं परिणेत्रा[9] पर्यरम्भि रभसादचिरोढा[10] ॥ ८ ॥ संजहार सहसा परिरब्धप्रेयसीषु
विरहय्य विरोधम् । संहितं रतिपतिः स्मितभिन्नक्रोधमाशु तरुणेषु महेषुम् ॥ ९ ॥ स्रंसमानमुपयन्त[11]रि
वध्वाः श्लिष्टवत्युपसपत्नि रसेन । आत्मनैव रुरुधे कृतिनेव स्वेदसङ्गि वसनं जघनेन ॥ १० ॥ पीडिते
पुर उरःप्रतिपेषं भर्तरि स्तनयुगेन युवत्याः । स्पष्टमेव दलतः प्रतिनार्यास्तन्मयत्वमभवद्धृदयस्य ॥ ११ ॥
आदृता नखपदैः परिरम्भाश्चुम्बितानि घनै[12]र्दन्तनिपातैः । सौकुमार्यगुणसंभृतकीर्तिर्वाम एव
सुरतेष्वपि कामः ॥ १२ ॥ लोलदृष्टि वदनं दयितायाश्चुम्बति प्रियतमे रभसेन । व्रीडया
सह विनीवि[13] नितम्बादंशुकं शिथिलतामुपपेदे ॥ १३ ॥ ह्रीभरादवनतं परिरम्भे रागवानव-
टुजेष्ववकृष्य । अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥ १४ ॥ केनचिन्मधुरमुल्बण[14]रागं
बाष्प तप्तमधिकं विरहेषु । ओष्ठपल्लवमपास्य मुहूर्तं सुभ्रुवः सरसमक्षि चुचुम्बे ॥ १५ ॥ पल्लवोप-
मिति साम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे । पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ १६ ॥
आवृतान्यपि निरन्तरमुच्चैर्योषितामुरसिजद्वितयेन । रागिणामित इतो विमृशद्भिः पाणिभिर्जगृहिरे
हृदयानि ॥ १७ ॥ कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिः करजाग्रैः[15] । अक्रियन्त
कठिनेषु कथंचित्कामिनीकुचतटेषु पदानि ॥ १८ ॥ सोष्मणः स्तनशिलाशिखराग्रादात्तघर्मसलिलै-
स्तरुणानाम् । उच्छ्वसत्कमलचारुषु हस्तैर्निम्ननाभिसरसीषु निपेते ॥ १९ ॥ आभ्रशद्भिरभितो
बलिवीचीलोलमानविततान्गुलिहस्तैः । सुभ्रुवामनुभवात्प्रतिपेदे मुष्टिमेयमिति मध्यमभीष्टैः ॥ २० ॥
प्राप्य नाभिनदमज्जनमाशु प्रस्थितं निवसनग्रहणाय । औपनीविक[16]मरुन्ध किल स्त्री वल्लभस्य
करमात्मकराभ्याम् ॥ २१ ॥ कामिनः कृतरतोत्सवकालक्षेपमाकुलवधूकरसङ्गि । मेखलागुण-
विलग्नमसूयां दीर्घसूत्रमकरोत्परिधानम् ॥ २२ ॥ अम्बरं विनयतः प्रियपाणेर्योषितश्च करयोः
कलहस्य । वारणामिव विधातुमभीक्ष्णं कक्ष्यया च वलयैश्च शिशिञ्जे[17] ॥ २३ ॥ ग्रन्थिमुद्ग्रथ
यितु हृदयेशे वाससः स्पृशति मानधनायाः । भ्रूयुगेण सपदि प्रतिपदे रोमभिश्च सममेव विभेदः
॥ २४ ॥ आशु लङ्घितवतीष्टकराग्रे नीविमर्धमुकुलीकृतदृष्ट्या । रक्तवैणिकहताधरतन्त्रीमण्डल-
क्वणितचारु चुकूजे ॥ २५ ॥ आयताङ्गुलिरभूदतिरिक्तः सुभ्रुवां क्रमि[18]कशालिनि मध्ये ।
श्रोणिषु प्रियकरः पृथुलासु स्पर्शमाप सकलेन तलेन ॥ २६ ॥ ऊरुमूलचपलेक्षणमन्यैर्वतंसकुसुमैः[19]

---

१ लज्जितया । २ प्रियतमः । ३ आवरणवस्त्रस्य दूरीभावात् । ४ लज्जां प्रकटयन्ती ।
५ पृथुलेन । ६ पत्युः । ७वस्त्रम् । ८ कृश- । ९पत्या । १० नवोढा । ११ पत्यौ । १२निर्दय- । १३ग्रन्थि-
हीनम् । १४ प्रवृद्ध- । १५ नखैः । १६ अधोवसनग्रन्थिसमीपम् । १७ शब्दः कृतः ।
१८ कृशत्व- । १९ कर्णोपरि भूषणरूपेण धृतैः पुष्पैः ।

प्रियमेताः । चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥ २७ ॥ चक्रुरेव ललनोरुषु राजीः स्पर्शलोभवशलोलकराणाम् । कामिनामनिभृतान्यपि रम्भास्तम्भकोमलतलेषु नखानि ॥ २८ ॥

## रमणमहिमा ।

यावद् द्वैतं बहिर्दृष्टिर्यावच्चेन्द्रियलोलता । यावन्नास्तिमिता चित्तवृत्तिस्तावन्न सौरतम् ॥ १ ॥ सुरते च समाधौ च मायाँ यत्र न लीयते । ध्यानेनापि हि किं तेन किं तेन सुरतेन वा ॥ २ ॥ यत्र न वदनविकारः सद्भावसमर्पणं न गात्राणाम् । तस्मिन्नुद्धतभावे पशुकर्मणि पशव एव रज्यन्ते ॥ ३ ॥ प्रतिक्षणसमुल्लसन्नवकलाकलापान्वितक्षपाकरविलोकने यदि तवास्ति कौतूहलम् । विलोकय तदा सखे सुरतसंगरालोकनप्रहृष्टदयितामुखं निविडकञ्चुकोत्तारणे ॥ ४ ॥ नरैर्विफलजन्मभिर्गिरिदरी न किं सेव्यते न चेच्छ्रवणगोचरीभवति जातुचिज्जन्मनि । कपोतरवमाधुरीविरचनानुकारादरीरतासहकृशोदरीवचनकाकुरीतिध्वनिः ॥ ५ ॥ संदष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता । सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥ ६ ॥ किं चैतैर्गुरुसेवनैः किमपरव्योमार्चनैः किं फलं किं स्यादध्ययनेन मे सुरपदप्राप्त्याऽथ किं वा फलम् । एतस्याः कुचकुम्भसंभ्रमपरीरम्भप्रवाहोद्गमस्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि ॥ ७ ॥ प्राङ् मा मेति ततो नयोदयगुणं मानाभिलाषं ततः सव्रीडं तदनु श्लथोद्यममथ प्रभ्रष्टधैर्यः पुनः । प्रेमार्द्रस्पृहणीयनिर्भरतरं क्रीडाप्रगल्भं ततो निःसङ्गाङ्गविमर्शनाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ ८ ॥ शङ्काशृङ्खलितेन यत्र नयनप्रान्तेन न प्रेक्ष्यते केयूरध्वनिभूरिभीतिचकितं नो यत्र वाऽऽश्लिष्यते । नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते नो वा यत्र विधीयते च भणितं तत्किं रतं कामिनोः ॥ ९ ॥ आकाशे नटनं सरोरुहयुगे मञ्जीरमञ्जुध्वनिः शीतांशौ कलकूजितं किसलये पीयूषपानोत्सवः । स्वर्गक्षोणिधरे नखात्परिभवो ध्वान्ते कराकर्षणं रम्भायां रसनारवस्तरुणयोः पुण्यानि मन्यामहे ॥ १० ॥

## नवोढां प्रति सख्या भाषणानि ।

मुग्धे नैव भयं धेयं प्रमोदावसरो ह्ययम् । त्वराऽपि न परिष्वङ्गदाने कार्या शुचिस्मिते ॥ १ ॥ मानः कामं पुरस्कार्यः परिष्वङ्गस्तु पृष्ठतः । न त्रासो न च संरम्भः सुन्दरीणां रतौ हितौ ॥ २ ॥ रक्षामालिकया बाले बद्धया किं प्रयोजनम् । अवश्यभाविनावेतौ कुचग्रहकचग्रहौ ॥ ३ ॥ बाला तन्वी मृदुतनुरियं त्यज्यतामत्र शङ्का दृष्टा क्वापि भ्रमरभरतो मञ्जरी भज्यमाना । तस्मादेषा रहसि भवता निर्दयं पीडनीया मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम् ॥ ४ ॥ नीरन्ध्रं परिरभ्यते प्रियतमो भूयस्तरां चुम्ब्यते तद्गाढं क्रियते यदस्य रुचिरं चाटूत्करैः स्तूयते । सख्या मुग्धवधूरसौ रतविधौ यत्नेन सा शिक्षिता निर्भ्रान्तं गुरुणा पुनः शतगुणं पञ्चेषुणा कारिता ॥ ५ ॥ नार्यस्तन्वि हठाद्धरन्ति रमणं

---

१ मिथ्याऽध्यवसायः । कृत्रिमभावानुभावनं वा । २ शब्दः । ३ कामिनी च कामी चेति तयोः । ४ गाढम् । ५ निपुणेति शेषः ।

तिष्ठन्ति नो वारितास्तत्किं ताम्यसि किं च रोदिषि मुधा तासां प्रियं मा कृथाः। कान्तः केलिरुचिर्युवा सहृदयस्तादृक्पतिः कातरे किं नो बर्बरकर्कशैः प्रियशतैराक्रम्य विक्रीयते ॥ ६ ॥

## नवोढासुरतम्।

शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्। दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥ १ ॥ यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन। मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥ २ ॥ आभाति बालिकेयं पाणिस्पर्शेन पुलकितावयवा। अभिनववसन्तसङ्गादाविर्मुकुलेव बालचूतलता ॥ ३ ॥ खिद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक्। अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ ४ ॥ भुजपञ्जरे गृहीता नवपरिणीता वरेण रहसि वधूः। तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम् ॥ ५ ॥ असंमुखालोकनमाभिमुख्यं निषेध एवानुमतिप्रकारः। प्रत्युत्तरं मुद्रणमेव वाचो नवाङ्गनानां नव एव पन्थाः॥ ६ ॥ चुम्बनेषु परिवर्तिताधरं हस्तरोधि रसनाविघट्टने। विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ ७॥ विरम नाथ विमुञ्च ममाञ्चलं शमय दीपमिमं समर्था सखीम्। इति नवोढवधूवचनैर्युवा मुदमगादधिकां सुरतादपि ॥ ८ ॥ नीवीदृढार्पितकरां निबिडीकृतोरुं व्रीडानतां तत इतो वदनं हरन्तीम्। आरोप्य वक्षसि सुखं परिरब्धुमेनां बालां बलादभिलषामि न पारयामि ॥ ९ ॥ पटालग्ने पत्यौ नमयति मुखं जातविनया हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम्। न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥ १० ॥ समाकृष्टं वासः कथमपि हठात्पश्यति तदा क्रमादूरुद्वन्द्वं जरठशरगौरं मृगदृशः। तथा दृष्टिं दत्त्वा महति मणिदीपे निपुणया निरुद्धं हस्ताभ्यां झटिति निजनेत्रोत्पलयुगम् ॥ ११ ॥ बलान्नीता पार्श्वं मुखमभिमुखं नैव कुरुते धुनानां मूर्धानं हरति बहुशश्चुम्बनविधिम्। हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना नवोढा वोढारं सुखयति च संतापयति च ॥ १२ ॥ स्फुरद्रोमोद्भेदस्तरलतरताराकुलदृशो भयोत्कम्पोत्तुङ्गस्तनयुगभरासङ्गसुभगः। अधीराक्ष्या गुञ्जन्मणिवलयदोर्वल्लिरचितः परीरम्भो मोदं जनयति च संमोहयति च ॥ १३ ॥ अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने। आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वादाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः ॥ १४ ॥ दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते। निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते बाला वामतया प्रियस्य नितरां प्रीत्यै नवोढाऽभवत् ॥ १५॥ अंसाकृष्टदुकूलयासरभसं गूढौ भुजाभ्यां स्तनावाकृष्टे जघनांशुके कृतमधः संसक्तमूरुद्वयम्। नाभीमूलनिबद्धचक्षुषि तया व्रीडानताङ्ग्या प्रिये दीपः फूत्कृतवातवेपितशिखः कर्णोत्पलेनाहतः ॥ १६ ॥ हस्तं कम्पवती रुणद्धि रशनाव्यापारलोलाङ्गुलिं हस्तौ स्वौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्। पातुं पक्ष्मलचक्षुरुन्नमयतः साचीकरोत्याननं व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १७ ॥ कण्ठाश्लेषिणमुन्नतस्तनभरश्रोणी-

---

१ मनोरथान् सफलीकर्तुमनीश्वरा (अक्षममाणा)। २ भय-ईषत्-। ३ लाक्षा-। ४ रक्तवर्ण-रुधिरयुक्त-(च)। ५ भय-। ६ 'कूण' इति पीडाद्योतकं शब्दं करोति। ७ कम्पते। ८ सखीं समर्थेत्यन्वयः। सखीति पाठस्तु चिन्त्यः। ९ पटं गृहीत्वा स्थिते। १० कम्पयन्ती। ११ गाढलिङ्गनानन्दम्। १२ अभुक्तपूर्वत्वात्। मुग्धा इति भावः। १३ मेखला-।

तटग्राहिणं संसक्तोरुयुगं गृहीतजघनप्राकारमप्यन्ततः । द्रागेव श्लथबन्धमिन्दुवदना गाढावमर्दासहं विज्ञायात्यजदाशु काञ्चनपटं व्रीडाकुलाऽपि क्षणम् ॥ १८ ॥ कान्ते कञ्चुलिकावलोकिनि कलावत्या नमन्त्या स्थितं तस्मिन्कोमलकाकुभाषिणि तया स्पन्दी निरुद्धोऽधरः । उत्थायाथ करस्पृशि प्रियतमे यूनोर्नवे संगमे काञ्चीकूजितकैतवेन मदनो धैर्यैःशान्तिमभ्यस्यति ॥ १९ ॥ इत्थं तल्पतलाधिरोहणमियं पर्णार्पणप्रक्रिया शय्याया वचनक्रमस्य दयितस्यैवंविधाऽऽराधना । एवं केलिगृहोपदेहलि बलादानीयमाना मुहुश्चाटूक्तिप्रकरैश्चिरं नववधूरालीभिरध्याप्यते ॥ २० ॥

## प्रौढासुरतम् ।

सुभगे दीयते प्राते पुरस्कृत्य मनः सखि । सुरतं भिक्षितुं सर्वाण्यङ्गान्यर्थीनि तत्क्षणात् ॥ १ ॥ आस्तां दूरेण विश्लेषः प्रियामालिङ्गतो मम । स्वेदैः किं नु सरिन्नाथो रोमाञ्चैः किं नु पर्वतः ॥ २ ॥ उग्ररूपं कुचद्वन्द्वं हारगङ्गाधरं तव । चन्द्रचूडं करिष्यामि कुरु तावद्दिगम्बरम् ॥ ३ ॥ कान्ते कलितचोलान्ते दीपे वैरिणि दीप्यति । आसीदसितपद्माक्ष्याः पक्षो नयनमुद्रणम् ॥ ४ ॥ ब्रह्मानन्दप्रचुरं किमपीदं नेति रतिषु वचनेन । श्रुतिसीमसंगताक्षी मुग्धे सारङ्गमादिशसि ॥ ५ ॥ तव तन्वि तरुणपुण्यादम्बरमणिमकरसंक्रमो जातः । अधिवेणि भवति नियमः फलमविलम्बेन भावि कामस्य ॥ ६ ॥ विधृताः प्रियस्य केशाः कण्ठे लग्नं भुजे वलितम् । मज्जन्त्या रससिन्धौ किं किं न कृतं तया सुदृशा ॥ ७ ॥ पृष्ठे कञ्चुकमुक्त्यै सुतनुरसव्यं प्रहिण्वती पाणिम् । हन्तुमिव चित्तहरिणं यूनस्तूणादिवेषुमादत्ते ॥ ८ ॥ चारुनूपुरझणत्कृतं रते कामिनां हरति मानसं यथा । नो तथा मधुरगीतवादितं केकिचातकपिकस्वना अपि ॥ ९ ॥ हेमकुम्भमिव तुङ्गमुरोजं वल्लभे स्पृशति चोरवदस्याः । जाग्रति स्म सहसैव तदानीं यामिका इव तनूरुहसंघाः ॥ १० ॥ पाणिपल्लवविधूननमन्तःसीत्कृतानि नयनार्धनिमेषाः । योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥ ११ ॥ धैर्यमुल्बणमनोभवभावा वामतां च वपुरर्पितवत्यः । व्रीडितं ललितसौरतधार्ष्ट्यास्तेनिरेऽभिरुचितेषु तरुण्यः ॥ १२ ॥ पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः । कामिनः स्म कुरुते करभोरूर्हारिशुष्करुदितं च सुखेऽपि ॥ १३ ॥ पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे । पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥१४॥ वारणार्थपदगद्गदवाचामीर्ष्यया मुहुरपत्रपया च । कुर्वते स्म सुदृशामनुकूलं प्रातिकूलिकतयैव युवानः ॥ १५ ॥ अन्यकालपरिहार्यमजस्रं तद्द्वयेन विदधे द्वयमेव । धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमितरैरबलासु ॥ १६ ॥ बाहुपीडनकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः । बोधितस्तनुशयस्तरुणीनामुन्मिमील विशदं विषमेषुः ॥ १७ ॥ कान्तया सपदि कोऽप्युपगूढः प्रौढपाणिरपनेतुमियेष । संहतस्तनतिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥ १८ ॥ आहतं कुचतटेन तरुण्याः साधु सोढुमधुनेति पपात । त्रुट्यतः प्रियतमोरसि

---

१ झटित्येव । २ छलेन । ३ खेदकृतमन्तरमपि सरित्पतिवदपारं प्रत्येमीति भावः । ४ रोमाञ्चकृतमप्यन्तरं पर्वतवदनुल्लङ्घ्यं प्रत्येमीति भावः । ५ महेश्वरलिङ्गाकारम्, पीनत्वातिशयाच्चोग्रम् । ६ हारसदृशगङ्गाधाराधरम् । हाररूपगङ्गाधरं च । ७ चन्द्रशेखरत्वेन । नखाघातैस्तथाभूतं च । ८ नग्नम्, निरावरणं च । ९ अन्तःस्थितः । १० कामदेवः ।

हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ १९ ॥ सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि । हासभूषणरवाश्च रमण्याः कामसूत्रपदतामुपजग्मुः ॥ २० ॥ उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः । श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥ २१ ॥ ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु । क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् ॥ २२ ॥ प्राप्यते स्म गतचित्रकचित्रैश्चित्रमार्द्रनखलक्ष्म कपोलैः । दध्रिरेऽथ रमसच्युतपुष्पाः स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ २३ ॥ यद्यदेव रुरुचे रुचिरेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् । आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥ २४ ॥ प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य । शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ २५ ॥ पत्युः प्रवृत्तस्य रतौ जिगीषावचो निशम्याथ न किंचिदूचे । कलावती किं तु विहस्य तस्य कपोलयोः स्वेदमपाचकार ॥ २६ ॥ उरोरुहाम्भोरुहदर्शनाय · विमुञ्चतः कञ्चुकबन्धनानि । आनन्दनीराकुललोचनस्य प्रियस्य जातो विपुलः परिश्रमः ॥ २७ ॥ स्वामिन्प्रभो प्रिय गृहाण परिष्वजस्व किं किं शठोऽस्यकरुणोऽसि सुखोचितोऽसि । हा दुःखयस्यलमलं विरमेति वाचः स्त्रीणां भवन्ति सुरते प्रणयानुकूलाः ॥ २८ ॥ मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे कान्तापयोधरयुगे रतिखेदखिन्नः । वक्षो निधाय भुजपञ्जरमध्यवर्ती धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ २९ ॥ कान्ते तथा कथमपि प्रथितं मृगाक्ष्या चातुर्यमुद्धतमनोभवया रतेषु । तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैर्यथास्याः ॥ ३० ॥ आमीलितालसविवर्तिततारकाक्षीमुत्कण्ठबन्धनदरश्लथबाहुवल्लीम् । प्रस्वेदवारिकणिकाचितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥ ३१ ॥ रतिरभसनितान्तश्रान्तकान्ताकुचान्तश्चलदमलकराग्रा नाभिदेशेष्वधो वा । स्मितमधुरमुखीनां ह्रीणनेत्रोत्पलानामधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ ३२ ॥ अविदितसुखदुःखं निर्गुणं वस्तु किंचिज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे । मम तु मतमनङ्गस्मेरतारुण्यघूर्णन्मदकलमदिराक्षीनीविमोक्षो हि मोक्षः ॥ ३३ ॥ अभिनवपुलकालीमण्डिता गण्डपाली निगदति विनिगूढानन्दहिन्दोलि चेतः । सुदति वदति पुण्यैः कस्य धन्यैर्मनोजप्रसरमसकृदेतच्चापलं लोचनस्य ॥ ३४ ॥ भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहितस्मितं याते गेहाद्बहिरवहितालीपरिजने । प्रियास्यं पश्यन्त्याः स्मरशरसमाकूतसुभगं सलज्जाया लज्जा व्यगमदिव दूरं मृगदृशः ॥ ३५ ॥ दुकूलं दोर्मूलाध्वणयिनि परीरम्भरसिके हरत्यम्भोजाक्षी निभृतनिभृतं नम्रवदना । प्रियाश्लेषद्वैविण्यपसरखु लज्जा स्फुटमिति स्मितक्षीरेणैव स्तनकलशशम्भुं स्नपयति ॥ ३६ ॥ चिरविरहिणो रत्युत्कण्ठाश्लथीकृतगात्रयोर्नवमिव जगज्जातं भूयश्चिरादपि नन्दतोः । कथमपि दिने दीर्घे याते निशामधिरूढयोः प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ ३७ ॥ दृशा सपदि मीलितं दशनरोचिषा निर्गतं करेण परिवेपितं वलयकैरथाक्रन्दितम् । प्रियैः समदयोषितां ननु विखण्ड्यमानेऽधरे परव्यसनकातराः किमिव कुर्वतां साधवः ॥ ३८ ॥ नैषा वेगं मृदुतरतनुस्तावकीनं विसोढुं शक्ता नैनां चपल नितरां खेदयेन्दीवराक्षीम् । रत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा कर्णोपान्ते

---

१ शब्दः । २ अविच्छिन्नतया प्रवर्तमानैः । ३ पृथिव्याम् । ४ वेग- । ५ श्रुत्वा । ६ यदि तव पौरुषं तर्हि किमेवं श्रमचिह्नं बिभर्षि, अथापि यदि गर्वस्तदुद्यतो भवेति भावः । ७ कुच- । ८ विस्तारिणि । ९ श्याम- । १० वारंवारम् । ११ लज्जित- । १२ पूर्णप्रौढ- । १३ अधोवस्त्रग्रन्थि- । १४ युवत्या यूनश्च । १५ दन्तकान्त्या ।

निभृतनिभृतं नूपुरं शंसतीव ॥ ३९ ॥ आयाते दयिते मनोरथशतैर्नीते कथंचिदिने वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वति । दष्टाऽस्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं तन्वङ्गया रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ ४० ॥ गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा । मा मा मानद मा[3]ति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥ ४१ ॥ दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै[4]राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः । हस्तेनानमितः करेऽधरसुधास्पन्देन संमोहितः कान्तः कामपि तृप्तिमाप तदहो कामस्य वा[5]मा गतिः ॥ ४२ ॥ ईषन्मीलितदृष्टि मुग्धहसितं सीत्कारधारावशादव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् । श्वासोत्कम्पिपयोधरोपरिपरिष्वङ्गात्कुरङ्गीदृशो हर्षोत्कर्षविमुक्तनिःसहतनोर्धन्यो धयं[6]त्याननम् ॥ ४३ ॥ स्विन्नं मण्डलमैन्दवं[7] विगलितं स्रग्भारबद्धं तमः प्रागेव प्रथमानकेतकशिखावीरायितं च स्थितम् । शान्तं कुण्डलताण्डवं कुवलयद्वन्द्वं तिरोमीलितं वीतं विद्रुमसीत्कृतं न हि ततो जाने किमासीदिति ॥ ४४ ॥ गाढाश्लेषनिपीडनान्निपतितामालोक्य हारावलीं स्थातुं हन्त भि[8]या क्षणं निबिडया नीव्याऽपि न व्यापृतम् । विश्लेषज्वरवेदनासहनयोः कारुण्यकीर्णात्मना कापि प्रापितयोः समागमसुखं यूनोर्मनोजन्मना ॥ ४५ ॥ हारस्त्रुटयति कङ्कणं निपतति स्रक्कौमुदी क्लिश्यति ध्वान्तं धावति सीत्करोति रजनीजा[9]निर्वली भज्यति । काञ्ची क्षुभ्यति काञ्चनक्षितिधरे किं च क्षतं चञ्चति प्रारम्भे मदनाहवस्य[10] विजयी देवो मनोभूरभूत् ॥ ४६ ॥ सिन्दूरं रविमिन्दुमाननमसौ धम्मिल्लराहुस्त्वयं यद्गाढं ग्रसतीव तत्प्रियतमे निर्णीतमौत्पातिकम् । चोले चञ्चलता भविष्यति मुहुः स्यात्कुन्तले कर्षणं नीवी स्थास्यति न स्थिरा समुदयेदङ्गे महान्संगरः ॥ ४७ ॥ पश्यन्ती परिणामकेलिषु मुहुर्निःशङ्कमालिङ्ग्य तां प्रोत्कूजत्कलमग्रहीषमधरं स्पर्धावती साप्यभूत् । नाहं वेद्मि न वेत्ति सा च दयिता तत्रावयोश्चेष्टितं शय्या वेत्ति न वेत्ति वा स तु कुतः सङ्ग्रामलोलैः[11] स्मरः ॥ ४८ ॥ प्रत्यूहः पुलकाङ्कुरेण निबिडाश्लेषे निमेषेण च क्रीडाकूतविलोकितेऽधरसुधापाने कथाकेलिभिः । आमन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभूदुद्भूतः स तयोर्बभूव सुरतारम्भः प्रियंभावुकः ॥ ४९ ॥ ईषत्कम्पपयोधरं गुरुकटिप्रौढप्रहाराद्भुतं स्विद्यद्भालमनेकहास्यसरसं संरम्भमन्दव्यथम् । बारंबारमुरः[12]प्रहारसुभगं संदश्यमानाधरं किंचिद्दत्तनितम्बदेशनखरं धन्यो रतं सेवते ॥ ५० ॥ त्वं मुग्धाक्षि विनैव कञ्चुलिकया[13] धत्से मनोहारिणीं लक्ष्मी[14]मित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि । शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यातः शनकैरलीक[15]वचनोपन्यासमालीजनः ॥ ५१ ॥ कोकः स्तोकविमुक्तमौक्तिकभरो निस्यन्दमिन्दीवरं चापं चापलवर्जितं हिमकरक्रोडे तमः क्रीडति । वातः कातरयत्यपाकृतरसं बन्धूकमेतावती वार्ता कापि कदापि पाणिविहिता कस्यापि वा तिष्ठति ॥ ५२ ॥ धम्मिल्लो[16] भङ्गमेतु प्रविशतु

---

१ चातुर्यनिवृत्तेः । २ प्रेमातिशय- । ३ खेदयेति शेषः । ४ नखैः । ५ रमणीया, कुटिला च । ६ पिबति । ७ चन्द्रसम्बन्धि । ८ भयेन । ९ चन्द्रमाः । १० मदनसङ्ग्रामस्य । सुरतरूपस्य द्वन्द्वयुद्धस्येत्यर्थः। ११ सुरतसङ्ग्रामे व्याकुलः । 'स्वस्थे चित्ते बुद्धयः संस्फुरन्ति' इति हि नयः । १२ वक्षः- । १३ कञ्चुकया । १४ शोभाम् । १५ 'मया माला तत्र विस्मृता मया तत्र गन्तव्यम्' इत्येवं वचनच्छलपूर्वमिति भावः । १६केशपाशः ।

तिलकः केशपाशान्धकारं पत्राली गण्डपालिं त्यजतु च विवरं कर्णयोर्गन्तुकामा। वामायाः कान्तदत्तक्षततिसहने एक एवाधरोऽसौ वीरः कामाहवेऽस्मिन्निति वदति मुहुर्नूपुरः क्वाणभङ्ग्या ॥ ९३ ॥

## पुरुषायितरमणम्।

प्रशान्ते नूपुरारावे श्रूयते मेखलाध्वनिः। कान्ते नूनं रतिश्रान्ते कामिनी पुरुषायते ॥ १ ॥ पततु तवोरसि सततं दयिताधम्मिल्लमल्लिकानिकरः। रतरसरभसकचग्रहलुलितालकवल्लरीगलितः ॥ २ ॥ विपरीतमविपरीतं यद्रतमन्यत्तदेव विपरीतम्। तरुमारोहति लतिका नारोहति च लतिकां तरुः क्वापि ॥ ३ ॥ साक्षादभूत्स्वयंभूरथ मुक्तास्तिमिरनिकरभराः। प्रणनाम शीतरोचिस्तत्र पाठं मेखला विदधे ॥ ४ ॥ वियति विलोलति जलदः स्खलति विधुश्चलति कूजति कपोतः। निष्पतति तारकाततिरान्दोलति वीचिरमरवाहिन्याः ॥ ५ ॥ स्थगयति तमः शशाङ्कं चलति गिरिः स्रवति तारकापटलम्। कथयति मन्ये काञ्ची पुरसीम्नि किमपि संक्षोभम् ॥ ६ ॥ मुक्ताः पतन्ति भूमौ बालाः कलयन्ति केवलां मुक्तिम्। चुम्बत्यम्बरमवनिं विपरीते किं न विपरीतम् ॥ ७ ॥ वल्गत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमन्दहासम्। पुण्यातिरेकात्पुरुषा लभन्ते पुंभावमम्भोरुहलोचनानाम् ॥ ८ ॥ वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे। पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गरेखां लिलेख ॥ ९ ॥ मधुपानसमुल्लसत्प्रवालं चलहेमाचलकान्तिभिर्जटालम्। विधुनिष्पतदन्धकारजालं शुभकालं क्व पुनर्विलोकयामः ॥ १० ॥ अभिमुखपतयालुभिर्ललाटश्रमसलिलैरपनीतपत्रलेखः। कथयति पुरुषायितं वधूनां मृदितहिमद्युतिनिर्मलः कपोलः ॥ ११ ॥ तन्नास्ति कारयति यन्न मनोभवस्य सा शक्तिरप्रतिहता भुवने तथाहि। उद्वाह्य पीवरपयोधरमण्डलाग्रं वल्गन्ति यत्पुरुषवत्प्रमदा अपीह ॥ १२ ॥ प्रारब्धे रतिकेलिसंकुलरणारम्भे तया साहसप्रायं कान्तजयाय किंचिदुपरि प्रारम्भि तत्संभ्रमात्। खिन्ना येन कटीतटी शिथिलिता दोर्वल्लिरुत्कंपितं वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥ १३ ॥ मुग्धे तवास्मि दयिता दयितो भव त्वमित्युक्तया न हि न हीति शिरो विधूय। स्वस्मात्करात्प्रियकरे वलयं क्षिपन्त्या वाचं विनाऽभ्युपगमः कथितो मृगाक्ष्या ॥ १४ ॥ वीरायितेषु मृगशावविलोचनानां कण्ठोदितान्यचरमं कलकूजितानि। आम्रेडयद्भिरथ सौधगतैः कपोतैः शङ्के गृहीत इति सम्प्रति शिष्यभावः ॥ १५ ॥ तमःस्तोमः सोमं गिलति वमतीवोडुनिकरं रथाङ्गद्वन्द्वेऽस्मिन्नमरतटिनी खेलति मुहुः। लतायामुत्कम्पो मदनवसती काञ्चनगिरिर्विपर्येति प्रायो रतिपतिमते सर्वमधुना ॥ १६ ॥ विहायसि विहारिणी भवतु नाम सौदामिनी सुमेरुशिखरादधः पततु नाम मन्दाकिनी। परं तदिदमद्भुतं यदयमेत्य भूमीतलं नमन्नमृतदीधितिः कमलसारमाकर्षति

---

१ झङ्कारमिषेण। २ चन्द्रमाः। ३ इदमलकभारमुद्दिश्य वचनम्। ४ इदं मुखमुद्दिश्य वचनम्। ५ इदं कण्ठमुद्दिश्य वचनम्। ६ इदं हारमुद्दिश्य वचनम्। ७ तरङ्गः धारेति यावत्। ८ गङ्गायाः। इदं त्रिवलिमुद्दिश्य वचनम्। ९ सखी। १० चन्द्र-। ११ क्रीडन्ति। १२ स्वीकारः। १३ केशपाशः कालिमसाम्यात्। १४ मुखं सौन्दर्यसाम्यात्। १५ केशेभ्यः पतन्ति कुसुमानि उद्दिश्येदं वचनम्। १६ कुचयोः। १७ गंगा, इदं हारमुद्दिश्य वचनम्। १८ विद्युत्। १९ कुचात्। २० गङ्गा हाररूपा। २१ चन्द्रमाः मुखाभः।

॥ १७ ॥ आलोलामलकावलिं सकुसुमां विभ्रवलत्कुण्डलं किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः सीकरैः। तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥ १८ ॥ प्रागल्भ्यं पुरुषायिते मम पुरः पश्येति संनद्धया तन्व्या ताम्यदुरोजयाऽपि सुचिरं विक्रम्य रम्यं तया। श्रान्ता वक्षसि मे निपत्य च पुनः सापत्रपं सस्मितं साकूतं च समीक्षितं मृगदृशा यत्तत्कथं कथ्यते ॥ १९ ॥ प्रारब्धे विपरीतनामनि रते सर्वं तदाभूत्क्षणाल्लक्ष्माङ्क्ष्यां विपरीतमेव कुटिला मुक्ताः सुवृत्ता अपि। मुक्ता निष्पतिता भवन्ति तरलास्तौ चाचलौ चेलतुः सीदन्ति श्रुतिपारगाः सुमनसः कान्ता नु कान्तायते ॥ २० ॥ निःशेषं व्यपनीय नीविवसनं मञ्जुक्कणन्मेखलं क्रीडान्दोलनखिन्नमध्यलतिकं किंचित्प्रकम्पत्स्तनम्। उद्यत्कुण्डलताण्डवं च रुचिरं विक्रम्य कान्तोपरि क्लान्ता वक्षसि कामिनां मुकुलितप्रान्ताक्षिकं शेरते ॥ २१ ॥

## रमणाद्विरतिः।

संन्यासमकृत काञ्ची जहौ कलत्रं दुकूलमबलायाः। तत्याज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः ॥ १ ॥ सुतनु श्रुतिसेवनतो मन्ये नयनं निरञ्जनं जातम्। मुग्धा स्नेहात्कबरी युक्तां मुक्तिं कथं प्राप ॥ २ ॥ खिन्नालसनयनान्तं खिन्नालिकलग्नकुन्तलस्तबकम्। वदनमवलुप्ततिलकं मदनं नेदयति दवयति धृतिं मे ॥ ३ ॥ पपात मेरोः सुरसिन्धुधारा ववर्ष तारागणमन्धकारः। बभूव भृङ्गावलिरव्यरूपा शशाम शम्फालतिकाविलासः ॥ ४ ॥ पपात गङ्गा हरमौलिसङ्गादन्धं तमो भूतमपेतबन्धम्। तडिल्लता चञ्चलतामहासीदस्पन्दमासीदरविन्दयुग्मम् ॥ ५ ॥ कामसंगरविधौ मृगदृशः प्रौढपौरुषवरे पयोधरे। स्वेदराजिरुदियाय सर्वतः पुष्पवृष्टिरिव पुष्पधन्वनः ॥ ६ ॥ संगताभिरुचितैश्चलितापि प्रागमुच्यत चिरेण सखीव। भूय एव समगंस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य ॥ ७ ॥ प्रेक्षणीयकमिव क्षणमासन्ह्रीविभङ्गुरविलोचनपाताः। संभ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सुरतान्ताः ॥ ८ ॥ अप्रभूतमतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरु। क्षौममाकुलकरा विचकर्ष कान्तपल्लवमभीष्टतमेव ॥ ९ ॥ मृष्टचन्दनविशेषकभक्तिभ्रष्टभूषणकदर्थितमाल्यः। सापराध इव मण्डनमासीदात्मनैव सुदृशामुपभोगः ॥ १० ॥ योषितः पतितकाञ्चनकाञ्चौ मोहनातिरभसेन नितम्बे। मेखलेव परितः स्म विचित्रा राजते नवनखक्षतलक्ष्मीः ॥ ११ ॥ भातु नाम सुदृशां दशनाङ्कः पाटलो धवलगण्डतलेषु। दन्तवाससि समानगुणश्रीः संमुखोऽपि परभागमवाप ॥ १२ ॥ सुभ्रुवामधिपयोधरपीठं पीडनैस्त्रुटितवत्यपि पत्युः। मुक्तमौक्तिकलवुगुणशेषा हारयष्टिरभवद्गुरुरेव ॥ १३ ॥ विश्रमार्थमुपगूढमजस्रं यत्प्रियैः प्रथमरत्यवसाने। योषितामुदितमन्मथमादौ तद्द्वितीयसुरतस्य बभूव ॥ १४ ॥ आस्तृतेऽभिनवपल्लवपुष्पैरप्य-

---

१ कर्णः। २ धूम्रत्वम्। ३ अपत्रपा परतो लज्जा। ४ कृशोदर्याम्। ५ वक्राः केशाः। ६ शिथिलबन्धनाः। मोक्षं प्राप्ताश्च। ७ अतिवर्तुलाः सच्चरिताश्च। ८ मौक्तिकानि। मोक्षं प्राप्ताश्च। ९ हारभङ्गाद्भ्रश्यन्ति स्म। मोक्षाधिकारतश्च्युताश्च। १० कुचौ स्थाणू च। ११ मनोरमम् यथा तथा-। १२ म्लानाः, श्रान्ताः। १३ तत्याज। १४ कर्णान्तायतत्वात् कर्णोपासनातः। वेदाभ्यासाच्च। १५ कज्जलशून्यम्, विषयवासनादिदोषशून्यं च। १६ ललाट—। १७ कन्दर्पस्य। १८ लज्जा। १९ 'श्वेतरक्तस्तु, पाटलः' इत्यमरः।

नारतंरतामिरताभ्यः। दीयते स्म शयितुं शयनीये न क्षणः क्षणदयाऽपि वधूभ्यः॥ १५॥ उपबर्हमम्बुजदृशो निजं भुजं विरचय्य वक्त्रमपि गण्डमण्डले। निजसक्थि सक्थिनि निधाय सादरं स्वपिति स्तनार्पितकराम्बुजो युवा॥ १६॥ करकिसलयं धूत्वा धूत्वा विमार्गति वाससी क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति। स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षते॥ १७॥ सुरतविरतक्रीडावेशश्रमश्लथहस्तया रहसि गलितं तन्व्या प्राप्तुं न पारितमंशुकम्। रतिरसजडैरङ्गैरङ्गे पिधातुमशक्तया प्रियतमतनौ सर्वाङ्गीणं प्रविष्टमधृष्टया॥ १८॥ प्रियकृतपटस्तेयव्रीडाविलम्बनविह्वलां किमपि कृपणालापां बालां विलोक्य ससंभ्रमः। अपि विचलिते स्कन्धावारे गते सुरताहवे त्रिभुवनमहाधन्वी स्थाने न्यवर्तत मन्मथः॥ १९॥ शयानस्योत्तानं हृदि निहितवक्षोरुहभरा तिरश्चीने वक्त्रे निविडकलितात्मीयवदना। समाक्रम्योरुभ्यामतिदृढतरं सक्थियुगलं स्वपित्यम्भोजाक्षी शिथिलभुजबन्धेयमधुना॥ २०॥ मुखं जृम्भारम्भि प्रसरति मदामोदलहरी दृशोस्तन्द्राभारः स्फुरति विगलत्यङ्गलतिका। त्वमेतादृक्कान्तिः कमलमुखि धन्यैव नितरामसौ धन्यो यस्ते सकलरजनीं जागरयिता॥ २१॥ प्रियायाः प्रत्यूषे गलितकबरीबन्धनविधावुदञ्चद्दोर्वल्लीदरदलितचेलाञ्चलमुरः। घनाकूते पश्यत्यथ मयि समन्दाक्षिवलितं नमन्त्या यद्रूपं न हि लिखितुमीशो मनसिजः॥ २२॥ रतान्ते प्राणेशे वसनमददाने कथमपि स्थिताया याचन्त्या वितर मम चैलं गुणनिधे। सरोषं पश्यन्त्याः किमपि च हसन्त्याः परिचलन्नमन्त्यास्तद्रूपं न हि लिखितुमीशो मनसिजः॥ २३॥ शान्ते मन्मथसंगरे रणभृतां सत्कारमातन्वती वासोऽदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम्। बिम्बोष्ठस्य च वीटिकां सुनयना पाण्यो रणत्कङ्कणे पश्चाल्लम्बिनि केशपाशनिचये युक्तो हि बन्धक्रमः॥ २४॥ नेपथ्यादपि राजते हि नितरां व्यालुप्तभूषा तनुः संभोगश्रममीलितं विजयते चक्षुः कटाक्षादपि। गाढालिङ्गनकौतुकादपि नवं दोर्वल्लिविस्रंसनं प्रीत्यालापरसादपि प्रियतमं मौनं कुरङ्गीदृशः॥ २५॥ निर्वृत्ते सुरतोत्सवे बहुविधे जातेऽधिकेऽङ्गक्लमे तल्पे स्वेदजलाद्रचन्दनमये किंचिद्गृहीतेऽम्बरे। सान्द्रस्नेहवशाद्विशेषविषयव्यासङ्गजिह्मात्मनोर्दम्पत्योः स्मरघस्मरातुरतया भूयोऽपि जाता स्पृहा॥ २६॥ मुक्ता भूषणमिन्दुबिम्बमजनि व्याकीर्णतारं नभः स्मारं चापमपेतचापलमभूदिन्दीवरे मुद्रिते। व्यालीनं कलकण्ठकण्ठनिनदैर्मन्दानिलैर्मन्दितं निष्कम्पस्तबकापि चम्पकलता साभून्न जानेऽथ किम्॥ २७॥ नीव्यां संयमनं कचे नियमनं श्रोणीतले चासनं निश्वासाभ्यसनं मुखे समभवत्प्रत्याहृतिर्भूषणे। ध्यानं प्रेमणि धारणा स्तनतटे तन्व्याः समाधिः प्रिये निर्वेदादिव किं रतान्तसुलभात्सर्वाङ्गयोगोत्सवः॥ २८॥ निर्लेपौ कुचकुङ्मलौ कचभरस्तत्याज बन्धं ययौ काञ्ची निर्गुणतां निरञ्जनदशा दृग्भ्यां समासादिता। नीरागोऽधरपल्लवश्च गुरुणा केनापि गौराङ्गि ते शङ्के शम्बरशासनोपनिषदां तत्त्वावबोधः कृतः॥ २९॥ तन्द्रांतुन्दिलशोणलोचनयुगं दत्ताङ्कदन्तच्छदं पर्यस्तालकवल्लि घर्मपटलप्रोद्भिन्नपत्रावलि। जृम्भोज्जृम्भितसीधुसौरभमिलद्भृङ्गीभिरङ्गीकृतस्तोत्रं शंसति वृत्तमेव रजनीवृत्तान्तमेणीदृशः॥ ३०॥ स्वामिन्भङ्गुरयालकं सतिलकं भालं विलासिन्कुरु प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय। इत्युक्त्वा सुरतावसानसमये संपूर्णचन्द्रानना स्पृष्टा तेन

---

१ निरन्तर-। २ नेपथ्य- ३ चौर्य-। ४ प्रातः। ५ सुरतरूपे कामसङ्ग्रामे। ६ शय्यायाम्। ७ आलस्य-। ८ रमणवृत्तम्।

तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥ ३१ ॥ व्यामिश्रैकैकबाहु प्रवलितपृथुलैकैकचारूरुकाण्डं दष्ट्वा दष्ट्वाऽधरोष्ठं दरशिथिलतनुश्लेषमालिङ्ग्य कान्ताः । शश्वन्निःश्वासवेगस्फुरितगुरुकुचद्वन्द्वसंघृष्टवक्षाः श्रान्तः शेते रतान्ते सुखमिह सुकृती लीलया कामिलोकः॥ ३२ ॥ व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ क्लिष्टा बिम्बाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः । काञ्ची कांचिद्गताऽऽशां स्तनजघनपदं पाणिना छादयन्ती भूषाहीनाऽपि काचित्प्रियहृदयमहो प्रीणयत्येव मुग्धा ॥ ३३ ॥ सव्यासव्योरुबाहुव्यतिकरमधुकरं कूर्परन्यस्तशीर्षं संसक्तास्याब्जयुग्मश्वसितहतचलच्चारुनासाविभूषम् । भूयो निद्रातिरेकात्क्रमशिथिलभुजाश्लेषदत्तावकाशोच्छ्वासोदञ्चत्कुचाग्रप्रतिहतहृदयं शेरतेऽमी रतान्ते ॥ ३४ ॥

## शशाङ्कास्ताचलप्रस्थानावसरवर्णनम् ।

कलङ्कदाशो गगनाम्बुराशौ प्रसार्य चन्द्रातपतन्तुजालम् । लग्नोडुमीनांल्लघु संजिघृक्षुश्चन्द्रप्लवःस्थश्चरमाद्रिमेति ॥ १ ॥ असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः । नलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ २ ॥ वृन्देन तारावलितण्डुलानामङ्केन च श्रीफलपल्लवेन । अभ्यर्च्य जागेश्वरमिन्दुबिम्बं विसर्जयत्येष नभोमुनीन्द्रः ॥ ३ ॥ मैन्दमग्निर्मधुरर्यमोपलादर्शितश्वयथु चाभवत्तमः । दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसंनिधौ ॥ ४ ॥ अरुणकिरणजालैरन्तरिक्षे गतर्क्षे चलति शिशिरवाते मन्दमन्दं प्रभाते । युवतिजनकदम्बे नाथमुक्तौष्ठबिम्बे चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे ॥ ५ ॥ जरठ इव मरालो जर्जराग्रैर्मयूखैः स्खलति शिशिरभानुः पश्चिमाम्भोधिपारे । श्लथगरुत इवामूस्तत्र तत्रान्तरिक्षे विरलविरलभासः किं च तारा लुठन्ति ॥ ६ ॥ चरमगिरिकुरङ्गीशृङ्गकण्डूयनेन स्वपिति सुखमिदानीमन्तरिन्दोः कुरङ्गः । परिणतरविगर्भव्याकुला पौरुहूती दिगपि घनकपोतीहुंकृतैः कुप्यतीव ॥ ७ ॥ उदयमुदितदीप्तिर्याति यः संगतौ मे पतति न वरमिन्दुः सोऽपरामेष गत्वा । स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः ॥ ८ ॥ नवकुमुदवनश्रीहासकेलिप्रसङ्गादभिकरुचिरशेषामप्युषां जागरित्वा । अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥ ९ ॥ सपदि कुमुदिनीभिर्मीलितं हा क्षपापि क्षयमगमदपेतास्तारकास्ताः समस्ताः । इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ १० ॥ प्रकटमलिनलक्ष्मा मृष्टपत्रावलीकैरधिगततरतिशोभैः प्रत्युषःप्रोषितश्रीः । उपहसित इवासौ चन्द्रमाः कामिनीनां परिणतशरकण्डापाण्डुभिर्गण्डभागैः ॥ ११ ॥ विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः । जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः ॥ १२ ॥ नक्षत्रक्षितिनायकोऽयमधुना रुद्धः प्रभातागमे सत्त्वाश्वेन बलीयसाऽतिमहसा रोषारुणज्योतिषा । भ्रश्यद्ध्वान्तशिरोरुहां प्रविगलत्तारालिहारावलीमादाय क्षणदां प्रियां क्षितिधरं पाश्चात्यमारोहति ॥ १३ ॥ संश्लिष्टा सानुरागं स्वकरपरिचयप्राप्तभूरिप्रसादा या पूर्वा भुक्तपूर्वा रविकरकलितां तामुदीक्ष्यामृतांशुः । निस्तेजाः पश्चिमाब्धौ प्रविशति हि सतां दुःसहो मानभङ्गः किं वक्तव्यं सितांशोः स तु सकलसतां मण्डलस्यापि नेता ॥ १४ ॥

---

१ मत्स्यजीवी । २ अस्ताचलम् । ३ दन्ताग्रभागमिव । ४ महेश्वरम् । ५ शान्तप्रायं वह्निम् । अग्निमान्द्यं च । ६ अधारयन् । ७ सूर्यकान्ताः । ८ चन्द्रमसः । ९ अस्ताचल- । १० वृद्धः । ११ पश्चिमां दिशम् । १२ चन्द्रः । १३ रात्रिम्, सुरतोत्सवदात्रीं च ।

## निशीथरमणम्।

शमितनिखिलदीपे सुप्तनिद्रालुलोके रतपरवशचित्ता मध्यरात्रे विबुद्धाः। प्रथमसुरतखिन्ना मुग्धिकां बोधयन्तो बहुदृढपरिरम्भैः कामुकाः खेदयन्ति ॥ १ ॥ अनुनयमगृहीत्वा व्याजसुप्ता परीची रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये। कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ २ ॥ चिररतिपरिखेदप्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः। अपरिचलितगात्राः कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥ ३ ॥ वदनशशिनः स्पर्शे शीतादिवागतवेपथुः स्तनयुगलके भ्रान्त्वा तुङ्गे निविष्ट इव श्रमात्। ज्वलितमदनाङ्गारे तन्व्यास्ततो जघनस्थले सपुलकजलः पत्युः पाणिर्विलीन इवाभवत् ॥ ४ ॥ रतिक्लान्तिगते मायानिद्रां प्रवर्तितचुम्बना पुलकपयसा तत्त्वं मत्वा मुखादहृताननना। कृतकशयनो निग्राह्योऽसीत्युदीर्य कलं वधूर्व्रणितमधरं कृत्वा दन्तैरपूरयत स्पृहाम् ॥ ५ ॥

## विभातवर्णनम्।

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी। दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ १ ॥ कुक्कुटे कुर्वति क्वाणमाननं श्लिष्टयोस्तयोः। दिवाकरकराक्रान्तं शशिकान्तमिवाबभौ ॥ २ ॥ विकसितसंकुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्ष्याः। कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः ॥ ॥ ३ ॥ प्रियवसतेरपयान्त्यो मिथः करम्बितकराम्बुजन्मानः। करजपदव्रणविरलस्तनपुलकममूः किमपि विवदन्ते ॥ ४ ॥ आश्लेषशेषा रतिरङ्गनानामामोदशेषा कुचकुङ्कुमश्रीः। तूणीरशेषः कुसुमायुधोऽपि प्रभातशेषा रजनी बभूव ॥५॥ नभोवनं नक्तमसौ विगाह्य नक्षत्रसेनासहितः शशाङ्कः। कराग्रलग्नान्कतिचित्प्रहृत्य पान्थान्प्रभाते प्रपलायतेऽद्य ॥ ६ ॥ चन्द्रकान्तगलदम्बुनाऽधुना हा चकोरनयने समाश्रिते। कोकलोकहृदयानलः पुनः सूर्यकान्तमणिमाश्रयत्यहो ॥ ७ ॥ संनिगृह्य चिकुरं तमोमयं यामिनी तदनु केलिविच्युतम्। कुर्वती श्रवसि चन्द्रमण्डलं कुण्डलं गगनकेलिमुज्झति ॥ ८ ॥ तरुणां दिवाकरमयूखमञ्जरीमरुणामशोकशिखरावलम्बिनीम्। कमनीयपुष्पमनसा समाश्रितां मधुपो विडम्बयति मञ्जुभाषिणीम् ॥ ९ ॥ प्राची दिगम्बरमणौ दयिते विभाते प्रान्तेऽम्बरं स्पृशति वासकसज्जिकेयम्। धीरा जगाद रमणस्य न भूषणानि रोषारुणा त्यजति तारकभूषणानि ॥ १०॥ यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतोऽरुणपुरःसर एकतोऽर्कः। तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवैष दशान्तरेषु ॥ ११ ॥ अन्तर्हिते शशिनि सैव कुमुद्वतीयं दृष्टिं न नन्दयति संस्मरणीयशोभा। इष्टप्रवासजनितान्यबलाजनानां दुःखानि नूनमतिमात्रदुरुद्वहानि ॥ १२॥ प्रालेयमिश्रमकरन्दकरालकोशैः पुष्पैः समं निपतिता रजनीप्रबुद्धैः। अर्कांशुभिन्नमुकुलोदरसान्द्रगन्धसंसूचितानि कमलान्यलयः पतन्ति ॥ १३ ॥ दिङ्मण्डलीमुकुटमण्डनपद्मरागरत्नाङ्कुरे किरणमालिनि गर्भितेऽपि। सौखप्रसुप्तिकमधुव्रतचक्रवाकवाचालपङ्कजवनीसरसाः सरस्यः ॥ १४॥ पीत्वा भृशं कमलकुड्मलशुक्तिकोषा दोषातनीं तिमिरवृष्टिमथ स्फुटन्तः। निर्यन्मधुव्रतकदम्बमिषा-

---

१ पराङ्मुखी। २ प्राप्त-। ३ प्रफुल्लेषु। ४ कस्तूर्यादिलेपसौगन्ध्यमात्रेणावशिष्टा। ५ सूर्ये। ६ ओषधीनां पतिरित्यन्वयः चन्द्रः। ७ अवस्थान्तरेषु। उदितपूर्वस्य अस्तरूपासु अस्तमितपूर्वकस्योदयरूपासु च दशासु। ८ निःसरद्भ्रमरपुञ्जकपटात्।

द्वमन्ति बिभ्रन्ति कारणगुणाविव मौक्तिकानि ॥ १५ ॥ आपाटलैः प्रथममङ्कुरितैर्मयूखैरह्नां पतिः प्रथमशैलविहारिणीनाम् । सोऽयं करोति सुरपुङ्गवसुन्दरीणां कर्णेषु कल्पतरुपल्लवभङ्गलक्ष्मीम् ॥१६॥ अन्यत्र यापितनिशं परिलोहिताङ्गमन्याङ्गनागतमिवागतमुष्णरश्मिम् । प्रातर्निरीक्ष्य कुपितेव हि पद्मिनीयमुत्फुल्लहल्लकसुलोहितलोचनाऽभूत् ॥ १७ ॥ का काऽबला निधुवनश्रमपीडिताङ्गी निद्रां गता दयितबाहुलतानुबद्धा । सा सा तु यातु भवनं मिहिरोद्गमोऽयं संकेतवाक्यमिति काकचया वदन्ति ॥ १८ ॥ दिशि दिशि मृगयन्ते वल्गुना घासमेते मुहुरपगतनिद्राः सप्तयो हेषितेन । अयमपि च सरोषैः कामिभिः श्रूयमाणो नदति मधुरतारं ताम्रचूडो विहंगः ॥ १९ ॥ अविरतमविरामाः रागिणां सर्वरात्रं नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य । इदमुदवसितानामस्फुटालोकसंपन्नयनमिव सनिद्रं घूर्णते दैपमार्चिः ॥ २० ॥ रतिरभसविलासाभ्यासतान्तं न यावन्नयनयुगममीलत्तावदेवाहतोऽसौ । रजनिविरतिशंसी कामिनीनां भविष्यद्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः॥२१॥ प्रहरकमपनीय स्वं निदिद्रासतोच्चैः प्रतिपदमुपहूतः केनचिज्जागृहीति । मुहुरविशदवर्णां निद्रया शून्यशून्यां दददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥ २२ ॥ विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छञ्जीवितेशोऽवकाशम् । रतिपरिचयनश्यन्नैन्द्रतन्द्रः कथंचिद्गमयति शयनीये शर्वरीं किं करोतु ॥ २३ ॥ द्रुततरकरदक्षाः क्षिप्तवैशाखशैले दधति दधनि धीरामारवान्वारिणीव । शशिनमिव सुरौघाः सारमुद्धर्तुमेते कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति ॥ २४ ॥ परिशिथिलितकर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव । रिरंसयिषति भूयः शष्पमग्रे विकीर्णं पटुतरचपलोष्ठः प्रस्फुरत्प्रोथमश्वः ॥ २५ ॥ कृतधवलिमभेदैः कुङ्कुमेनेव किंचिन्मलयरुहरजोभिर्भूषयन्पश्चिमाशाम् । हिमरुचिररुणिम्ना राजते रज्यमानैर्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ २६ ॥ शिशिरकिरणकान्तं वासरान्तेऽभिसार्य श्वसनसुरभिगन्धिः सांप्रतं सत्वरेव । व्रजति रजनिरेषा तन्मयूखाङ्गरागैः परिमिलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ २७ ॥ भजति विषयमक्ष्णामंशुमाली न यावत्तिमिरमखिलमस्तं तावदेवारुणेन । परपरिभवि तेजस्तन्वतामाशु कर्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २८ ॥ विगततिमिरपङ्कं पश्यति व्योम यावद्धुवति विरहखिन्नः पक्षती यावदेव । रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना सरिदपरतटान्तादागता चक्रवाकी ॥ २९ ॥ अरुणजलदराजीमुग्धहस्ताग्रपादा बहुलमधुपमालाकज्जलेन्दीवराक्षी । अनुपतति विरावैः पत्रिणां व्याहरन्ती रजनिमचिरजाता पूर्वसंध्या सुतेव ॥ ३० ॥ अयमुदयमहीभृन्मूर्ध्नि पाणिं गृहीत्वा दिवसपतिरहौषीदिन्दुपादान्हवींषि । अरुणकिरणवह्नौ कन्यका पौरुहूती[10] [11]हरिदपि किमकार्षीत्तारकालाजहोमम् ॥ ३१ ॥ कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरोचिर्याति शीतांशुरस्तं हतविधिलसितानां ही विचित्रो विपाकः ॥ ३२ ॥ लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्यः । तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ ३३ ॥ शिथिलयति सरागो यावदर्को नलिन्याः कमलमुकुलनीवीग्रन्थिमुद्रां करेण । प्रविकसदलिमाला गुञ्जितैर्मञ्जुशब्दा जनयति

१ देवरमणीनाम् । २ द्वीपान्तरे, सपत्नीगृहे च । ३ तुरगाः । ४ कुक्कुटपक्षी । ५ सुरत- । ६ गोपाः । ७ ऊर्ध्वजानुः । ८ आस्वादयितुमिच्छतीति भावः । ९ चन्द्ररूपं सायकम् । १० इन्द्रस्येयम् । ११ दिशा । १२ निश्शोभम् । १३ कृश- । १४ वेश्याः ।

मुदमुच्चैः कामिनां कामिनीव ॥ ३४ ॥ नभसि विरलतारा मौक्तिकानीव भान्ति स्फुटतरमयमस्तक्ष्माधरं चुम्बतीन्दुः । रविरुदयधरित्रीधारिमूर्धानमेतुं हृदयमनु नितान्तोल्लासमङ्गीकरोति ॥ ३५ ॥ अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य[1] कनकं गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि । क्षणं क्षीणास्तारा नृपतय इवानुद्यमपरा न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥ ३६ ॥ इतः शुक्ला चन्द्रद्युतिभिरिह रक्तारुणकरैस्तमिस्रैरप्यन्तःस्खलितगतिभिर्मेचकरुचिः[2] । प्रभातश्रीरेषा विलसति पुरःस्था सुकृतिनां मिमङ्क्षूणां जह्नुद्युमणिविधिजासंगम इव ॥ ३७ ॥ तमोभिः पीयन्ते गतवयसि पीयूषवपुषि[3] ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः । सरोजानां कर्षन्नलिमयमयस्कान्तमणिवत्क्षणादन्तःशल्यं तपति पतिरद्यापि न रुचाम् ॥ ३८ ॥ इतः पौरस्त्यायां[4] ककुभि विवृणोति क्रमदलत्तमिस्रामर्माणं किरणकलिकामम्बरमणिः । इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ ३९ ॥ द्रुमाः पाण्डुप्राया धृतनिबिडगर्भाः स्त्रिय इव प्रफुल्लास्ते कन्दा नृपतिकृतमाना इव जनाः । पिको मन्दं मन्दं हृदि मदननामानि जपति प्रभोरग्रे पूर्वापरिचितसभाकः कविरिव ॥ ४० ॥ विरलविरलीभूतास्ताराः कलौ सुजना इव व्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनः । मन इव मुनेः सर्वत्रापि प्रसन्नमभून्नभो विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥ ४१ ॥ व्रजत्यपरवारिधिं[5] रजतपिण्डपाण्डुः शशी न भान्ति जलबुद्बुदद्युतिसपत्निकास्तारकाः[6] । कुरण्टकविपाण्डुरं दधति धाम दीपाङ्कुराश्चकोरनयनारुणा भवति दिक्च सौत्रामणी[7] ॥ ४२ ॥ अयं मृदुमृणालिनीवनविलासवैहासिकस्त्विषां वितपते पतिः सपदि दृश्यमाना निजाः । स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले विपर्यपितवृत्तयो घुसृण[8]पङ्कपत्राङ्कुराः ॥ ४३ ॥ जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टैर्हस्तैर्भानोर्[9]नृपतय इव स्पृश्यमाना विबुद्धाः । स्त्रीभिः सार्धं घनपरिमलस्तोक[10]लक्ष्याङ्गरागा मुञ्चन्त्येते विकच[11]नलिनीगर्भशय्यां द्विरेफाः ॥ ४४ ॥ यः सैन्ये स्मरपार्थिवस्य विरहिप्रत्यर्थिनामग्रणी[12]र्ज्योत्स्नानिर्झरमुज्झति स्म जगतां यस्तापनिर्वारणम् । सोऽयं तारकनायकः[13] किमपरं शृङ्गारसंजीवनं जातः पृष्ठपरागपाण्डुरजरत्[14]कूष्माण्डपिण्डाकृतिः ॥ ४५ ॥ ये कुण्ठीकृतवल्लभप्रणतयः शस्त्रैरनङ्गस्य ये न प्राप्ताश्च निशीथिनीपतिकरैः शैथिल्यवीथीमपि । ते निःशङ्कविटङ्कतालुतुमुलप्रोतप्लुतप्लाविते[15]श्छिन्नाः कुक्कुटकूजितैर्मृगदृशां मानग्रहग्रन्थयः ॥ ४६ ॥ कान्ते जग्मुषि ताम्रचूडरटितं श्रुत्वा प्रबुद्धा जवात्किंचिद्द्रा[16]क्सविदिङ्मुखं प्रविकसद्दृष्ट्या गवाक्ष[17]ध्वना । संत्रासेन समीरिता प्रियतमप्रेम्णावरुद्धा शनैरुत्थानोपनिवेशनानि कुरुते तल्पे मुहुः पांसुला[18] ॥ ४७ ॥ निर्यान्त्या रतिवेश्मनः[19] परिणतप्रायां[20] विलोक्य क्षपां गाढालिङ्गनचुम्बनानि बहुशः कृत्वाऽप्यसंतुष्टया । एकं भूमितले निधाय चरणं तल्पे प्रकल्यापरं[21] तन्वङ्ग्या परिवर्त्तिताङ्गलतया प्रेयांश्चिरं चुम्बितः[22] ॥ ४८ ॥ पद्मिन्यां[23] सकलां विधाय विकलां[24] ताराधिपः संपदं तत्प्रेयस्युदयोन्मुखे[25] सति रवावुद्विग्नतामा[26]स्थितः । ताराः स्वस्य

१ भक्षित्वा । २ नीलकान्तिः । ३ अमृतमयेचन्द्रे । ४ पुरो भवेति पौरस्त्या तस्याम्, पूर्वस्याम् । ५ पश्चिमसमुद्रम् । ६ सदृश्यः । ७ सुत्रामा इन्द्रस्तस्येयमिति यथोक्ता, पूर्वेत्यर्थः । ८ कुङ्कुम- । ९ किरणैः । १० ईषत्- । ११ विकसित- । १२ वियोगिपीडकानाम् । १३ चन्द्रमाः । १४ वृद्ध, परिपक्वेत्यर्थः । १५ कुक्कुट- । १६ इन्द्र- । १७ वातायनरन्ध्रेण । १८ असतीनारी । १९ क्रीडास्थानात् । २० प्रायेण व्यतीताम् । २१ द्वितीयं चरणम् । २२ अत्र रतिबन्धविशेषो व्यज्यते । २३ कमलिन्याः नायिकाविशेषस्य च । जातावेकवचनम् । २४ विच्छायां दूषितां च । २५ तस्याः पद्मिन्याः प्रेयसि सूर्ये नायके च । २६ उदयमाने । समुद्यते च । २७ खेदम् ।

कैरवै[1]र्विकृष्य सहसा गच्छन्नितोऽस्ताचलं लग्नाः काश्चन ताः प्रभाकरकरे पश्यन्परिम्लायति ॥ ८९ ॥ एते केतकधूलिधूसररुचः शीतद्युते[2]रंशवः प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः । अप्येते विकसत्सरोरुहवनीदृक्पातसंभाविताः प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥ ९० ॥ सद्यः संघटमानकोकमिथुनव्याजेन पीनस्तनद्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः । दुर्दैवाक्षरमालिकामिव झटित्याकृष्य भृङ्गावलीं लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वरः ॥ ९१ ॥ उन्मीलन्ति निशानिशाचरवधूप्रोच्चाटनामान्त्रिकाः सायं सालससुप्तपङ्कजवनप्रोद्बोधवैतालिकाः । फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावलीझङ्कारप्रणवोपदेशगुरवस्तीव्रद्युतेरंशवः ॥ ९२ ॥ एतत्तर्कय चक्रवाकसुदृशामाश्वासनादायिनः प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः । दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदकव्यात्युक्षीचतुराः सरोरुहवनश्रीकेलिकाराः कराः ॥ ९३ ॥ द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकैर्ज्योत्स्नापानभरालसेन वपुषा मत्ताश्चकोराङ्गनाः । यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप् ॥ ९४ ॥ जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातवः[3] । लूता[4]तन्तुवितानवर्तुलमितो बिम्बं दधच्चुम्बति प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥ ९५ ॥ प्राचीविभ्रमकर्णिकाकमलिनीसंवर्तिकाः संप्रति द्वे तिस्रो रमणीयमम्बरमणेर्धामुच्चरन्ते रुचः । सूक्ष्मोच्छ्वासमपीदमुत्सुकतया संभूय कोषाद्बहिर्निष्क्रामद्भ्रमरौघसंभ्रमभरादम्भोजमुज्जृम्भते ॥ ९६ ॥ एकद्विप्रभृतिक्रमेण गणनामेषामिवास्तं यतां[5] कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्तिकाः । भूयोऽपि क्रमशः प्रसारयति ताः संप्रत्यमूनुद्यतः संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ९७ ॥ प्रत्यासन्नसुरेन्द्रसिन्धुर[6]शिरःसिन्दूरसान्द्रारुणा यत्तेजस्त्रसरेणवो वियदितः प्राचीनमाचिन्वते । शङ्के संप्रति यावदभ्युदयते तत्तर्कुटङ्कोन्मृजारज्यद्बिम्बरजश्छटावलयितो देवस्त्विषा[7]मीश्वरः ॥ ९८ ॥ निषेव्य बहु वारुणीं[8] जलनिधौ स्खलन्तं क्षणादमुं विगलितांशुकं द्विजपतिं विलोक्य ध्रुवम् । इयं प्रियतमा हरेर्दिगरुणोदयस्य च्छलात् कुसुम्भवसनाञ्चलैः स्वमुखमावृणोति ह्रिया ॥ ९९ ॥ प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलंकुर्वते । प्रौढध्वान्तकरालितस्य वपुषश्छायाच्छलेन क्षणादप्रक्षालितनिर्मलं जगदहो निर्मोकमुन्मुञ्चति ॥ ६० ॥ स्तोकोन्निद्रनिदाघदीधितिमहस्तन्द्रालुचन्द्रातपास्तायन्ते ककुभो रथाङ्ग[10]गृहिणीगार्हस्थ्यगर्हाभिदः । अद्यापि स्वकुलाय[11]शाखिशिरसि स्थित्वा रुवन्तो मुहुस्तूष्णीं प्रत्यभिजानते बलिभुजो भीताः स्वयूथ्यस्वरान् ॥ ६१ ॥ प्राचीं वासक[12]सज्जिकामुपगते भानौ दिशां वल्लभे पश्यैता रुचयः पतङ्गदृषदा[13]माग्नेयनाडिंधमाः । लोकस्य क्षण[14]दानिरङ्कुशरसौ संभोगनिद्रागमौ कोकद्वन्द्वकुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥ ६२ ॥ मालिन्यं परिदृश्यते हिमरुचौ मन्दश्रियस्तारकाः शीताः केचन संचरन्ति कमलामोदस्पृशो मारुताः । आसीदन्ति च चक्रवाकमिथुनान्यन्योन्यमुत्कण्ठया पादैस्ताडितकैरवा मधुलिहो गच्छन्ति पद्माटवीम् ॥ ६३ ॥

---

१ रश्मिभिः हस्तैश्च । २ चन्द्रस्य । ३ कमलोल्लासकारिणः । ४ ऊर्णा- । ५ गच्छताम् । ६ ऐरावत- । ७ त्विषां द्युतीनाम्, ईश्वरः । सूर्य इत्यर्थः । ८ पश्चिमां दिशं मदिरां च । ९ सूर्य- । १० चक्रवाक- । ११ नीड- । १२ कान्तोपगमनप्रतीक्षया धृतोत्सवाम् । १३ सूर्यकान्तोपलानाम् । १४ क्षणदाया रात्रेः उत्सववर्धिन्याः नायिकायाश्च निरङ्कुशरसौ अनिवार्यास्वादरूपावित्यर्थः ।

किंचिद्विश्लथकेशपान्तकुसुमाः क्रीडाविलोलांशुका लुप्तालुप्तशरीरचन्दनतया लोकैकनेत्रोत्सवाः । संभोगश्रमविह्वलैरवयवैः संकेतशालान्तरान्निद्राशेषकषायितार्धनयना निर्यान्ति वाराङ्गनाः ॥ ६४ ॥ सौरभ्ये चलिते रसे विगलिते चापालिवर्गे गते म्लानाऽतीव कुमुद्वतीयमधुना मूर्छां परामृच्छति । तामुद्वीक्ष्य तथाविधां कमलिनी जाता प्रहासोन्मुखी हन्तोदीक्ष्य विपन्नवैरिवनितां का वा न संतुष्यति ॥ ६५ ॥ आलोकैरतिपाटलैरचरमां विस्तारयद्भिर्दिशं नक्षत्रद्युतिमाक्षिपद्भिरचिरादाशङ्क्य सूर्योदयम् । पुञ्जीभूय भयादिवान्धतमसं मन्ये द्विरेफच्छलान्मीलन्नीलसरोरुहोदरकुटीकोणान्तरे लीयते ॥ ६६ ॥ भिन्दानो मानिनीनां पतिषु रुषमयं हर्म्यपारावतेभ्यो वाचालत्वं ददानः कवितृषु कविताप्रातिभं संदधानः । प्रातस्त्यस्तूर्यनादः स्थगयति गगनं मांसलः पांसुतल्पादस्वल्पादुत्थितानां नरवरकरिणां शृङ्खलाशिञ्जितैर्नः ॥ ६७ ॥ कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटीस्कन्धरोमा तिरश्चीं लोलेनाहन्यमानस्तुहिनकणमुचा चञ्चता केसरेण । निद्राकण्डूकषायं कषति निबिडितश्रोत्रशुक्तिस्तुरंगः त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणं कोणमक्ष्णः खुरेण ॥ ६८ ॥ कोकानुज्जीवयन्तः पथि पथि कुलटामानसं कम्पयन्तः प्रस्थातारं प्रभाते प्रियतममबला गाढमालिङ्गयन्तः । उत्थातुं चाङ्गभङ्गीः कुलकमलदृशा कारयन्तो निशान्ते कूकाराः कुक्कुटानां मधुमधुरसमारम्भगम्भीरधीराः ॥ ६९ ॥

## उषोमारुतप्रशंसनम् ।

लतां पुष्पवतीं स्पृष्ट्वा स्नातो विमलवारिणा । पुनः संपर्कशङ्कीव मन्दं चरति मारुतः ॥ १ ॥ लवङ्गलतिकाभङ्गदयालुर्दक्षिणानिलः । कथमुन्मूलयत्येष मानिनीमानपर्वतान् ॥ २ ॥ सुरतभरखिन्नपन्नगविलासिनीपानकेलिजर्जरितः । पुनरपि विरहिश्वासैर्मलयमरुन्मांसली क्रियते ॥ ३ ॥ दरफुल्लकमलकाननसौरभसंभारमन्थरः पवनः । दयितोरसि शयितामपि दयितां सन्तापयांचक्रे ॥ ४ ॥ भिक्षितकमलकुटुम्बाः शिक्षितगजगामिनीगतयः । लङ्घितहिमगिरिपादाः प्रातरमी मातरिश्वानः[10] ॥ ५ ॥ आदाय बकुलगन्धानन्धीकुर्वन्पदे पदे भ्रमरान् । अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥ ६ ॥ अपहाय शनैः पटीरवाटी[11]रिह [12]लाटीजनमानलुण्ठनाय । समुदेति मनोजराजधाटीपरिपाटीपटुरेष गन्धवाहः ॥ ७ ॥ वासो विधूय स्तनयोरमुष्याः कपोलकीर्णां कबरीमुदस्य । अवारितः प्रोञ्छति वारिधारां मुखे मृगाक्ष्याः सुकृती समीरः ॥ ८ ॥ अरविन्दवृन्दमकरन्दतुन्दिलो मरुदेति मन्दमिह मन्दराचलात् । सुरतान्ततान्त[13]सुदतीमतल्लिका[14]कबरीपरीमलझरीपरीवृतः ॥ ९ ॥ उत्सार्य कुन्तलमपास्य दुकूलकूलमुन्नाम्य बाहुलतिकामलसास्तरुण्यः । स्वेदाम्बुसिक्ततनवः स्पृहयन्ति यस्मै तस्मै नमः सुकृतिने मलयानिलाय ॥ १० ॥ चोलाङ्गनाकुचनिचोलतलानुलीनो द्राक्केरलीविरलकुन्तलकम्पलोलः । लाटीललाटतटशोषणमानसोऽयं फुल्लारविन्दघन[15]बंधुरुपैति वायुः ॥ ११ ॥ वैभातिको मरुदनुक्रमवर्धमानपद्माटवीपरिमलप्रसरानुमेयः । आयाति सोऽयमलसोत्थितसारसाक्षीपुंभावनृत्यपुनरुद्यमसूत्रधारः ॥ १२ ॥ झञ्झानिलोऽपि सुरतान्तनितान्ततान्तकान्ताकुचान्तघनघर्ममपाकरोति । भूयोऽभिलाषजननी पुनरन्यथैव

---

१ च्युत- । २ प्रागल्भ्यम् । ३ शब्देन । ४ प्रभाते । ५ प्रफुल्लाम् । रजस्वलां च । ६ पुष्पवतीसंसर्ग- । ७ सकरुणः । ८ ईषत् । ९ कुटुम्बशब्दः समूह (बान्धव) परः । १० वायवः । ११ चन्दनवाटिकाः । १२ विदग्धवनिताजन- । १३ म्लान- । १४ प्रशस्ता- । १५ दृढ- ।

स्वेदापनोदनकला मल्यानिलस्य ॥ १३ ॥ विकचकमलगन्धैरन्धयन्भृङ्गमालाः सुरभितमकरंद मन्दमावाति वातः । प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्षः ॥ १४ ॥ स्तनपरिसरभागे दूरमावर्तमानाः स्फुटतनिम्नि मध्ये किंचिदेव स्खलन्तः । बवुरलघुनितम्बाभोगरुद्धा वधूनां निधुवनरसखेदच्छेदिनः प्राह्णवाताः ॥ १५ ॥ दरविगलितमल्लीवल्लिचञ्चत्परागप्रकटितपटवासैर्वासयन्काननानि । इह हि दहति चेतः केतकीगन्धबन्धुः प्रसरदसमबाणप्राणवद्गन्धवाहः ॥ १६ ॥ सललितमलकानां वल्लरीर्नर्तयन्तो मधुसुरभिमुखाब्जोच्छ्वासगन्धानुबन्धाः । नवतररतभाजां योषितां स्वेदबिन्दून्सतृष इव पिबन्तो वान्ति मन्दं समीराः ॥ १७ ॥ उषसि मलयवासी जालमार्गप्रविष्टो विकचकमलरेणुं व्याकिरन्मोहचूर्णम् । सपदि शमितदीपो वायुचोरो वधूनां हरति सुरतखेदस्वेदमुक्ताफलानि ॥ १८ ॥ कुसुमपरिमलेनामोदितालिर्लतानां वलितकिसलयानां लास्यलीलोपदेष्टा । लुलितकमलवृन्दः शीकरासारवोढा मृदुमलयसमीरो वाति वैभातिकोऽयम् ॥ १९ ॥ विलुलितकमलौघः कीर्णवल्लीवितानः प्रतिवनमवधूताशेषशाखिप्रसूनः । क्वचिदयमनवस्थः स्थास्नुतामेति वायुर्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २० ॥ पुरातनपरीमलप्रकरमेदुरा मारुता न वान्ति मुकुलीभवत्कुमुदगर्भलीना इव । चरन्ति नवसौरभाः पुनरमी समीराङ्कुराः सजृम्भणसरोजिनीसरसिजास्यमुक्ता इव ॥ २१ ॥ अमी तटसमीपनिर्झरतरङ्गरिङ्गत्पयोजडीकृतपटीरभूरुहकुटीरसंचारिणः । मनो विधुरयन्ति मे मलयमेखलामेदुरा दुरासदवनप्रियप्रियतमारुता मारुताः ॥ २२ ॥ लताकुञ्जे गुञ्जन्मदवदलिपुञ्जं चपलयन्समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् । मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि ॥ २३ ॥ अनन्यक्षुण्णश्रीर्मलयवनजन्माऽयमनिलो निपीय स्वेदाम्बु स्मरमकरसंभुक्तविभवम् । विदग्धानां भूरि प्रियतमपरीरम्भरभसप्रसङ्गादङ्गानि द्विगुणपुलकासञ्जि तनुते ॥ २४ ॥ वृथा धूलीधाराः परिकिरसि वात्याः प्रथयसे नवावेगः कोऽयं पवन तव हा नन्वसमये । रतान्तश्रान्ताभिः स्तिमितनयनान्ताभिरनिशं स्मृतौ यत्कान्ताभिर्न सुलभतरः क्वापि च भवान् ॥ २५ ॥ वारं वारं धुतकुसुमितारण्यरेवातटे वा सेवापुण्यं परिणतमिदं तावकं तर्कयामि । यत्त्वां मत्वाऽन्तिकमुपगतं कामबामाभिरामा रामाः स्वैरं कुचकलशतो वस्त्रमुत्सारयन्ति ॥ २६ ॥ चूतश्रेणीपरिमलमुषश्चञ्चरीकानुयाता भूयो भूयः कुवलयकुटीकोटरे लीयमानाः । मन्दं मन्दं सुरतविरतौ वान्ति सीमन्तिनीनां गण्डाभोगश्रमजललवग्राहिणो गन्धवाहाः ॥ २७ ॥ रामाणां रमणीयवक्त्रशशिनः स्वेदोदबिन्दुप्लुतो व्यालोलालकमञ्जरीः प्रचलयन्धुन्वन्नितम्बाम्बरम् । प्रातर्वाति मधौ प्रकामविकसद्राजीवराजीरजःपुञ्जामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥ २८ ॥ उत्सिक्तैः कुसुमासवैः कुमुदिनीं राजप्रियां पुष्पिणीमालिङ्गन्निशि निर्भयं परिचयं कुर्वन्पुनः पल्लवैः । यावत्पङ्कजसौरभस्वमखिलं गृह्णन्धु प्रस्थितस्तावत्कल्य उपस्थिते मरुदयं विष्वग्भयाद्धावति ॥ २९ ॥

---

१ प्रकटकृशिमनि । २ सुरत- । ३ प्रभातकालिक- । ४ लता- । ५ कन्दर्प- । ६ प्रभाते । ७ परिमल- । ८ सविकास- । ९ चलत- । १० चन्दन- । ११ मत्तभ्रमर- । १२ विकसितम् । १३ कम्पित- । १४ समीपम् । १५ हारिणः । १६ भ्रमर- । १७ स्त्रीणाम् । १८ कपोलस्थल- । १९ सुन्दरीणाम् । २० कम्पयन् । २१ वसन्ते । २२ प्रमादं प्राप्तः, संसक्तश्च । २३ द्विजराज- (चन्द्र-) प्रेयसीम् । नृपतिरमणीं च । २४ प्रफुल्लाम्, रजस्वलां च । २५ कोमलदलैः, विटैश्च । २६ कमलसौरभरूपं धनम् । २७ क्षिप्रम् । २८ प्रातःकाले । २९ सर्वतः ।

अद्योत्सङ्गवसद्भुजंगकवलक्लेशादिवेशाचलप्रालेयप्लवनेच्छयाऽनुसरति श्रीखण्डशैलानिलः । किं च स्निग्धरसाल[1]मौलिमुकुलान्यालोक्य हर्षोदयादुन्मीलन्ति कुहूः कुहूरिति कलोत्तालाः पिकानां गिरः ॥ ३० ॥ नारीणां मृग[2]नाभिकुङ्कुमरसप्रक्षालनश्यामलान्सम्भोगश्रमशीकरान्परिहरन्नाकम्पयन्कुन्तलान् । पुष्पामोदमनोरमान्विगलितानम्भोजगन्धं वहन्प्रातस्त्यैः[3] पवनो वहत्ययमलं स्वान्त[4]प्रमोदप्रदः ॥ ३१ ॥ प्रातः सीमन्तिनीनां निधुवन[5]लुलितान्स्रंसयन्केशपाशानुन्मीलत्पङ्कजान्तःपरि[6]मलसुरभिः स्फारयन्कामलीलाः । स्वच्छावश्यायबिन्दून्दिशि दिशि विकिरन्स्थूलमुक्ताफलाभान्धूलीभिः केतकीनां धवलितभुवनो वाति मन्दं नभस्वान्[7]॥ ३२ ॥धुन्वाना[8]श्चन्दनाली बकुलमुकुलजां धूलिमुद्धूलयन्तश्चुम्बन्तश्चूतयष्टीः[9] परिमलबहलांश्चम्पकान्कम्पयन्तः । आरां[10]दारा[11]मसीमातटघटितघटीयन्त्रनिर्मुक्तवारां धारामाधारयन्तः श्रमशमपटवो वान्त्यमी गन्धवाहाः ॥ ३३ ॥ कुप्यल्लङ्केशबाहुप्रकरनियमिताशेषलेखाम्बुजाक्षीशापक्षीणाः क्षरन्तः शणपरिकलिताः केकिनां[12] कामिनीभिः । कार्णाटीनामकाण्डे मृगमदमसृणं[13] केशपाशं स्पृशन्तः पम्पा[14]संपातपूता मलयजमरुतो जातकम्पाः पतन्ति ॥ ३४ ॥ कृत्वा कर्णाट[15]कान्ताकुचकनकगिरिप्रान्तसंचारलीलां झम्पामासाद्य पम्पापयसि वनभुवि क्षिप्तमल्लीरजस्काः । आकर्षन्तः पुरस्तान्निगडमिव कलध्वानपुष्पन्धयालीं धावन्त्येते मदान्धा मदननरपतेः सिन्धुरा[16] गन्धवाहाः ॥ ३५ ॥ एते पाटीरवाटीनवविटपनटीलास्य[17]शिक्षातिदक्षा दोलाखेलत्पुरंध्री[18]श्रमजलकणिकाजालपातिप्रतानाः । सौरभ्यादापतद्भिर्मधुकरपटलैः पृष्ठतोऽनुप्रयाताः कामाग्नेः स्फारधाय्यः[19] पथिककुलवधूबद्धवैराः समीराः ॥ ३६ ॥ एष क्रीडान्तताम्यत्[20]कुसुमपुरवधूवक्त्रसौरभ्यबन्धुर्मुग्धं निद्राजडानां रसितमनुसरो द्रावयन्सारसानाम् । आवात्यङ्गानुकूलश्लथलितविचकिलश्रोणिगन्धानुधावद्रोलम्बोष्ठ्युयमाणस्मरजयबिरुदाडम्बरो मातरिश्वा[21] ॥ ३७ ॥ कावेरीवारिवेल्लल्लहरिपरिकरक्रीडनक्लान्तशान्तस्फीतश्रीखण्डखण्डभ्रमणभरभवद्भूरिसौरभ्यगर्भाः । चोलस्त्रीचीनचेलाञ्चलकलनकलाक्रान्तकान्तारुचान्ता वान्ति प्रेमाग्निकीलाकलितवरवधूबद्धवैराः समीराः ॥ ३८ ॥ चञ्चत्कर्पूरचौरा मलयगिरिगुरुग्रावहावादवाप्ता मन्दानन्दैर्मिलिन्दैः[22]रहमहमिकया[23]नुद्रवद्दीर्घपान्थाः । कावेरीवारिसेकाविरलतरतरत्तीरवानीर[24]रसिक्ता मुक्तार्द्राः स्वेदनिद्रालव इव पवनास्तालवन्यां विशन्ति ॥ ३९ ॥ लीलादोलातिखेलारसरभसलसद्बालचेलाञ्चलानां चोलीनामापिबन्तो मृगमदसुरभिस्वेदबिन्दूनमन्दान् । लोलन्तः सुन्दरीणां[25] कुचकलशलसत्कुङ्कुमालेपनेषु श्लिष्यन्तो मालवीनां मलयजमधुराः कञ्चुकीर्वान्ति वाताः ॥ ४० ॥ भृङ्गालीकण्ठमालाः स्फुटितकमलिनीधूलिभिर्धूसराङ्गाश्चञ्चन्तश्चन्द्रकल्पा लघुतरलहरीशीकरासारलालाः । अङ्कादङ्कं व्रजन्तो विकसितविलसत्केतकीमालतीनां मोदन्ते मन्दमन्दं मलयगिरिदरीगर्भतो वातपोताः ॥ ४१ ॥

---

१ आम्र- । २ कस्तूरीकेसर- । ३ प्रभातकालिकः । ४ चित्त- । ५ रमण- । ६ विमर्दोत्थसौरभ- । ७ मारुतः । ८ कम्पयमानाः । ९ आम्रशाखाः । १० समीपे । ११ उपवन- । १२ मयूराणाम् । १३ कस्तूरीरमणीयम् । १४ पम्पासरस्या अपि दक्षिणदिग्वर्तित्वादिदं वचनम् । १५ कर्णाटदेशभवा- । १६ हस्तिनः । १७ नृत्य- । १८ नारी- । १९ वह्निज्वालनमन्त्रसदृशाः । २० सुरतोत्तरावसरे दूयमान- । २१ पवनः । २२ भ्रमरैः । २३ अहं पूर्वमहम्पूर्वमिति कृत्वा । २४ वेतस- । २५ केरलीनामिति पाठान्तरम् ।

## भानूदयप्रशंसनम् ।

ततः कोकवधूबन्धु[1]र्बन्धूककुसुमप्रभः । उदयाद्रिशिरोरत्नमुच्चयौ तेजसां निधिः ॥ १ ॥ निजांशुकावृतां प्राचीं चुम्बत्यर्केऽतिरागिणीम् । लज्जयेव ययौ क्वापि श्यामा[2] मीलितलोचना ॥ २ ॥ निसर्ग[3]सौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी । उदिते वासराधीशे[4] स्मेरा[5]जनि सरोजिनी[6] ॥ ३ ॥ पुरुहूत[7]दिगङ्गना प्रसूता रविमुद्दाम[8]सुतं चिरादुपेतम् । अलिनो[9] नलिनोदराद्विमुक्ताः प्रियबाहुद्वयबन्धनान्नवोढाः ॥ ४ ॥ उदयति वितततोर्ध्वरश्मिरज्जावहिम[10]रुचौ हिमधाम्नि[11] याति चास्तम् । वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्र[12]लीलाम् ॥ ५ ॥ घटमानकोककुचमामृशन्[13]करैर्विकसत्पयोजनयनावलोकितः । परिचुम्बतीदमरुणप्रभाधरं रविरद्य वारवनिता[14]मुखं मुहुः ॥ ६ ॥ आगत्य संप्रति वियोगविसंस्थुला[15]ङ्गीमम्भोजिनीं क्वचिदपि[16] क्षपितत्रियामः । एतां प्रसादयति पश्य जनैः प्रभाते तन्वङ्गि पादपतनेन[17] सहस्ररश्मिः[18] ॥ ७ ॥ उन्निद्रकोकनद[19]रेणुपिशङ्गिताङ्गा गायन्ति मञ्जु मधुपाः[20] गृहदीर्घिकासु[21] । एतच्चकास्ति च रवेर्नवबन्धजीवपुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥ ८ ॥ भूयो निपीय लवणाम्बुधिमाप्रभातं[22] पुञ्जीभवन्नुदयते तपनच्छलेन । और्वोऽग्निरम्बरपयोनिधिमद्य पातुं लीनोडुबुद्बुदकदम्बमिति प्रतीमः ॥ ९ ॥ अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दार[23]पुष्पम् । विरहविधुर[24]कोकद्वन्द्वबन्धुर्विभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥ १० ॥ करनखरविदीर्णध्वान्तकुम्भीन्द्रकुम्भात्तुहिनकणमिषेण क्षिप्तमुक्ताप्ररोहः । अयमुदयधरित्रीधारिमूर्धाधिरूढो नयनपथमुपेतो भानुमत्केसरीन्द्रः ॥ ११ ॥ नवकनकपिशङ्गं वासराणां विधातुः ककुभि कुलिशपाणेः[25] भाति भासां वितानम् । जनितभुवनदाहारम्भमम्भांसि दग्ध्वा ज्वलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥ १२ ॥ विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलश इव गरीयान्दिग्भि[26]राकृष्यमाणः । कृतचपलविहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥ १३ ॥ पयसि सलिलराशेर्नक्त[27]मन्तर्निमग्नः स्फुटमनिश[28]मतापि ज्वालया वाडवाग्नेः । यदयमिदमिदानीमङ्गमुद्यन्दधाति ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ १४ ॥ अतुहिनरुचिनासौ केवलं नोदयाद्रिः क्षणमुपरि गतेन क्ष्माभृतः सर्व एव । नवकरनिकरेण स्पष्टबन्धूकसून[29]स्तबकरचितमेते शेखरं बिभ्रतीव ॥ १५ ॥ उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्खन्[30]सकमलमुखहासं वीक्षितः पद्मिनीभिः । विततमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥ १६ ॥ क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः[31] प्रणतिपरमवेक्ष्य प्रीतमह्नाय[32] लोकम् । भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः क्षितिधरतटपीठादुत्थितः सप्तसप्तिः[33] ॥ १७ ॥

---

१ सूर्योदये हि कोकयोः सम्मेलनं भवतीति तयोः सम्मेलकत्वात्सूर्यस्य बन्धुत्वम् । २ तमिस्रा, रात्रिरिति यावत् । वरवर्णिनी नायिका च । ३ स्वभाव- । ४ सूर्ये तदाख्ये नायके च । ५ प्रफुल्ला, प्रसन्ना च । ६ कमलिनी, पद्मिनी, नायिका च । ७ इन्द्र- । ८ प्रचण्ड- । ९ भ्रमराः । १० सूर्ये । ११ चन्द्रमसि । १२ गजराज- । १३ स्पृशन् । १४ वासर- । (वाराख्यनायक) सुन्दरी-वेश्या च । १५ मलिन- । १६ द्वीपान्तरे, नायिकान्तरगृहे च । १७ किरणपातेन । चरणयोः पतनेन च । १८ सूर्यः । तदाख्यो नायक इति तु व्यज्यत इति समासोक्तिरलङ्कारः । १९ विकसितरक्तकमल- । २० भ्रमराः, मद्यपाश्च । २१ वापीषु, नायिकासमीपमिति तु समासोक्तेर्विषयः । २२ प्रभातावधि- । २३ कल्पतरु- । २४ दुःखित- । २५ इन्द्रस्य । २६ दिग्रूपाभिर्नायिकाभिः । २७ रात्रौ । २८ निरन्तरम् । २९ पुष्प- । ३० चलन् । ३१ किरणः, चरणश्च पादशब्दार्थः । ३२ झटिति । ३३ सूर्यः ।

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः। रचयतितरां स्वैराचारप्रवर्तनकर्तनं बत बत लसत्तेजःपुञ्जो विभाति विभाकरः॥ १८॥ अयं खलु मृणालिनीनवविलासवैहासिकस्त्विषां वितपते पतिः सपदि दृश्यमाना निजाः। स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले विपर्यसितवृत्तयो घुसृणपङ्कपत्राङ्कुराः॥१९॥आयान्त्या दिवसश्रियः पदतलस्पर्शानुभावादिव व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भते। आतन्वन्नवतंसविभ्रममसावाशाकुरङ्गीदृशामुन्मीलत्तरुणप्रभाकरकरस्तोमः समुद्भासते ॥ २० ॥ एतत्तर्कय चक्रवाकहृदयाश्वासाय तारागणग्रासाय स्फुरदिन्दुमण्डलपरीहासाय भासां निधिः। दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहोल्लासाय स्फुटवैरकैरववनत्रासाय विद्योतते ॥ २१ ॥ मीलत्कैरवलोचनां प्रविगलत्ताराच्छहारावलीं ग्लायच्चन्द्रमुखां विशृङ्खलतमःकेशां सशेषाम्बराम्। प्राप्तः सत्वरमित्वरीमिव बलादुद्गाढरागैः करैराकर्षन्निव यामिनीमनुपतत्यम्भोजिनीवल्लभः ॥ २२ ॥ यावन्नीरनिधेः प्रभातसमयः प्रोद्धृत्य लोकत्रयीमाणिक्यं रविबिम्बमम्बरवणिग्वीथीपथे न्यस्यति। तावत्कर्तुमिवास्य मूल्यमुचितं पद्माकरेण स्वयं लक्ष्मीर्लब्धविकासपङ्कजकरन्यस्ता पुरः स्थाप्यते ॥ २३ ॥ मञ्जिष्ठारुणदीधितिर्मधुकरैर्माङ्गल्यगीतिस्ततः कोकाह्लादपटुः सरोरुहवनं प्रीत्या समुज्जृम्भयन्। लोकालोककरः करैश्च तमसां स्तोमं समुत्सारयन्नारोहत्युदयाचलं रविरयं बन्धूकगुच्छच्छविः ॥ २४ ॥ कीर्लालैः कुङ्कुमानां सकलमपि जगज्जालमेतन्निषिक्तं मुक्ताश्चोन्मत्तभृङ्गा विघटितकमलक्रोडकारागृहेभ्यः। उत्सृष्टं गोसहस्रं किमुत कलकलः श्रूयते च द्विजानां भाग्यैर्वृन्दारकाणां हरिहयहरितां सूयते पुत्ररत्नम् ॥ २५ ॥

## प्रभाते सुन्दरीवर्णनम्।

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते। श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥१॥ गुरुत्रासादासादितभवदुपालम्भवचसां मुहुः स्मारं स्मारं कथमपि निशीथे समगमम्। इदानीं मुञ्च त्वं दयित पुनरेष्यामि समभूदुषःकालीनोऽयं चटुलचटकौलीकलकलः ॥ २ ॥ प्रबुद्धायाः प्रातर्लसदलसदोर्वल्लिवलयं गलन्मल्लीदाम्नः शिथिलकबरीबन्धसमये। प्रियालोके घूर्णन्नयनमसृणस्मेरमधुरो मुखे जृम्भारम्भी जयति भृशमिन्दीवरदृशः॥ ३ ॥ प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते जातातङ्का रचयति चिरं चन्दनालेपनानि। धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥ ४ ॥ धम्मिल्लं परिबध्नती नखमुखैः सीमन्तमातन्वती पश्यन्ती नखरोत्सवं कुचयुगे सव्यापसव्यं मुहुः। नाभीसीमनि कुञ्चिताङ्गुलिदलं नीवीभरं रुन्धती शय्यागारविनिर्गताऽपि हृदयान्नाद्यापि निष्क्रामति ॥ ५ ॥ एषा का भुक्तमुक्ता विलुलितवसना स्वेदलग्नान्तवस्त्रा प्रत्यूषे याति बाला मृग इव चकिता सर्वतः शङ्कयन्ती। केनेदं वक्त्रपद्मं ह्यधरमधुरसं खण्डितं केन पीतं स्वर्गः केनाद्य भुक्तो हरनयनहतो मन्मथः कस्य तुष्टः॥ ६ ॥

---

१ 'उद्विभ्यां तपः १।३।२७' इत्यात्मनेपदम्। २ कुङ्कुम-। ३ दिक्-। ४ सूर्यः। ५ निबिड़-। ६ गत्वरीम्। ७ विकासयन्। ८ जलैः। ९ देवानाम् १० इन्द्रदिशा, तद्रूपया देव्या च। ११ प्रकटयते, उत्पाद्यते च। १२ सूर्ये। १३ उपनायके। १४ वृद्धजन-। १५ स्मृत्वा स्मृत्वा। १६ प्रभात-। १७ सखी-। १८ मधुर-। १९ नीलकमलेक्षणायाः। २० पुनः पुनः। २१ नखाघात-। २२ पूर्वं भुक्ता पश्चात् मुक्ता।

## संयोगप्रादुर्भावना।

रतखिन्नतरां प्रातर्लज्जानम्रमुखीं वधूम्[१]। स्मरन्तीं रात्रिचरितं दृष्ट्वाऽऽप्नोति न को मुदम् ॥ १ ॥ राजते राजरामाया[२] एष बिम्बाधरव्रणः । सुधां पीत्वेव कान्तेन तच्छेषोऽयं समुद्रितः ॥ २ ॥ सखि दशनक्षतमधरे किं गोपयसे प्रयत्नेन। संप्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥ ३ ॥ संवरणाय वधूटी बहुपरिपाटीं करोतु किं तेन । सम्प्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥ ४ ॥ उषसि परिवर्तयन्त्या मुक्तादामोपवीततां नीतम्। पुरुषायितवैदग्ध्यं लज्जावति कैन कलितं ते ॥ ५ ॥ चन्दनं स्तनतटेऽधरबिम्बे यावकं घनतरं च सपत्न्याः। प्रातरीक्ष्य कुपिताऽपि मृगाक्षी सागसि प्रियतमे परितुष्टा ॥ ६ ॥ दर्पणेषु परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः। प्रेक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया ॥ ७ ॥ किमपि कान्तभुजान्तरवर्त्तिनी कृतवती यदियं कलभाषिणी। तदनुकृत्य गिरा गुरुसंनिधौ ह्रियमनीयत सारिकया वधूः ॥ ८ ॥ धन्याऽसि या कथयसि प्रियसंगमेऽपि नर्मोक्तिचाटुकशतानि रतान्तरेषु। नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥ ९ ॥ नीवीं प्रति प्रणिहिते नयनेऽपि तेन पद्माननेन दयितेन रहोगतेन। शय्याश्रयोऽपि बत दुर्लभतां प्रयाति बुद्धिः सखी क्वचन लीयत एव सख्यः ॥ १० ॥ आमुष्मिकैहिकसुखेच्छुभिरर्चनीयं लिङ्गद्वयं पुररिपोरविनाभितीर्थम्। प्रेयःकराग्ररुहभावितचन्द्ररेखं मोदाय कस्य कृतिनो न चिराय लोके ॥ ११ ॥ बहु जगद पुरस्तात्तस्य मत्ता किलाहं चकर च किल चाटु प्रौढयोषिद्वदस्य । विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य व्यपगतमदैयाऽह्नि व्रीडितं मुग्धवध्वा ॥ १२ ॥ शशपदमणिमालं चन्द्ररेखाभिराम ललितपुलकजालं लक्ष्यबिन्दुप्रवालम् । वपुरनघमुष्या वक्ति कस्यापि यूनः सुरतकलहलीलासूक्ष्ममार्गाभियोगम् ॥ १३ ॥ प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरीर्नवोढा न व्रीडामुकुलितमुखीयं सुखयति । लिखन्तीनां मन्त्राङ्कुरमनिशमस्यास्तु कुचयोश्चमत्कारो गूढं करजपदमासां कथयति ॥ १४ ॥ क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः । बलीभङ्गाभोगैरकलपतितैः कीर्णकुसुमैः स्त्रियः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥ १५ ॥ नखक्षतमुरःस्थलेऽधरदले रदस्य व्रणं च्युता बकुलमालिका विगलिता च मुक्तावली। रतान्तसमये मया सकलमेतदालोकितं स्मृतिः क च रतिः क च क च तवालि शिक्षाविधिः ॥ १६ ॥ वक्षस्ते दृढलग्नकर्कशकुचद्वन्द्वावभग्नान्तरं कण्ठः कङ्कणरत्नकोटिकलनासुव्यक्तमुद्राङ्कितः। व्यत्यासव्यतिषञ्जितश्च तिलकः फाले तवायं सखे कस्याश्चित्प्रकटीकरोति सुरतप्रौढिं परां सुभ्रुवः ॥ १७ ॥ तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ निर्धूताधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजाः ।

---

१ सुन्दरीमुख्यायाः। राजदन्तादिवत् पूर्वनिपातः। २ रसविशेषम्। ३ खिन्नया। ४ एकान्तकालिकवृत्तान्तम्। ५ नख-। ६ एतेनाधोवदनाया उत्तम्भितनितम्बाया मार्जरीसुरतं व्यज्यते। ७ एतेनाधोमुख्याः समभावेन स्थितताया धेनुसुरतं व्यज्यते। ८ एतेन स्वाभाविकं सुरतं व्यज्यते। चूर्णोद्गारस्तु दीपनिर्वापणार्थः। उद्गारपदं प्रक्षेपपरम्। ९ एतेन सङ्कुचितचरणयुगाया उत्तानस्थिततायाः सुरतं व्यज्यते। १० अत्र चाधोमुख्याः समभावेन स्थिततायाः शय्यास्तरणे वलीभङ्गाभोगोपलक्षणमिति सुरतविशेषो व्यज्यते। ११ एतेन पुरुषायितं सुरतं व्यज्यते। १२ अत्र विस्तरस्त्वस्माकं साहित्यदर्पणव्याख्यायाम्। १३ दन्तस्य। जातावेकवचनम्। १४ हारः। १५ विपरीत-। १६ शोणवर्णता।

काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निखातैर्दृशोरेभिः कामशरैस्तदद्भुतमहो पत्युर्मनः कीलितम् ॥ १८ ॥ यद्रात्रौ रहसि व्यपेतविनयं वृत्तं रसात्कामिनोरन्योन्यं शयनीयमीहितरसावाप्तिप्रवृत्त-स्पृहम् । तत्सानन्दमिलद्दृशोः कथमपि स्मृत्वा गुरूणां पुरो हासोद्भेदनिरोधमन्थरमिलत्तारं कथं-चित् स्थितम् ॥ १९ ॥ दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचस्तत्प्रातर्गुरुसंनिधौ निगदत-स्तस्योपहारं वधूः । कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे व्रीडार्ता प्रकरोति दाडिमफल-व्याजेन वाग्बन्धनम् ॥ २० ॥ धन्यास्ताः सखि योषितः प्रियतमे सर्वाङ्गलग्नेऽपि याः प्रागल्भ्यं रचयन्ति मन्मथविधावालम्ब्य धैर्यं महत् । अस्माकं तु तदीयपाणिकमलेनोन्मोचय-त्यंशुकं कोऽयं का वयमत्र किं च सुरतं नैव स्मृतिर्जायते ॥ २१ ॥ कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनाद्वासो विश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् । एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः कोऽयं का वयमत्र किं नु सुरतं स्वल्पाऽपि मे न स्मृतिः ॥ २२ ॥ गाढाश्लेषविशीर्णचन्दनरजःपुञ्जप्रसारादियं शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि । गाढौष्ठग्रहपूर्वमाकुलतया पादाग्रसंदंशकेनाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥ २३ ॥ निद्रातुन्दिलशोणलोचनयुगं दत्ताङ्कदन्तच्छदं पर्यस्तालकवल्लि घर्मपटलप्राम्रष्टपत्रावलि । जृम्भाजृम्भितसीधुसौरभमिलद्भृङ्गीभिरङ्गीकृतस्तोत्र शंसति वक्त्रमेव रजनीवृत्तान्तमेणीदृशः ॥ २४ ॥

## प्रवत्स्यन्नायकाया नायिकाया दशा ।

यामीति प्रियपृष्टायाः कान्तायाः कण्ठवर्त्मनि । वचोजीवितयोरासीद्बहिर्निःसरणे रणः ॥ १ ॥ मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्च्छिता । बुद्धा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो भवान् ॥२॥ बाष्पाकुलं प्रलपतोर्गृहिणि निवर्तस्व कान्त गच्छेति । यातं दंपत्योर्दिनमनुगमनावधि सरस्तीरे॥ ३॥यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः । गलितानि पुरो वलयान्यपराणि तथैव दलितानि ॥४॥ मनसि निविशते स कोऽपि तापः प्रणयिनि बाहुलतान्तरस्थितेऽपि । सरसिजमकरन्दगन्ध-बन्धुर्वहति यदेष शनैः शनैः समीरः ॥ ५ ॥ कान्ते कथंचिद्वदितप्रयाणे क्षणं विनम्रा विरहार्दिताङ्गी । ततः समालोक्य कदागतोऽसीत्याख्याय कान्ता मुदमाससाद ॥ ६ ॥ लज्जां विहाय रुदितं विधृतः पटान्ते मा गास्त्वमित्युदितमञ्जुलयो मुखेऽस्ताः । स्थित्वा पुरः पतित-मेव निवर्तनाय प्राणेश्वरे व्रजति किं न कृतं कृशाङ्ग्या ॥ ७ ॥ गन्तुर्विवस्वदुदये हृदयेश्वर-स्य प्रत्यूषपक्षिनिनदश्रमजातकम्पा । निद्रां जलैरशिशिरैर्नयनाब्जजातैः कान्ता तदंसशिखरे पतितैर्जहार ॥ ८ ॥ प्राणेश्वरे किमपि जल्पति निर्गमाय क्षामोदरी वदनमानमयांचकार । आली पुनर्निभृतमेत्य लतानिकुञ्जमुन्मत्तकोकिलकलध्वनिमाततान ॥ ९ ॥ गन्तुं प्रिये वदति निःश्वसितं न दीर्घमासीन्न वा नयनयोर्जलमाविरासीत् । आयुर्लिपिं पठितुमेणदृशः परंतु भालस्थलीं किमु करः समुपाजगाम ॥ १० ॥ प्रहरविरतौ मध्ये वाऽह्नस्ततोऽपि परेण वा

---

१ ईषत्-- । २ खण्डम् । एतच्च दाडिमबीजदानच्छलादिति बोध्यम् । ३ मूर्च्छानिवृत्त्यु-त्तरम् । ४ अत्र यामीति श्रवणे शोकातिशयोद्रेक इति दौर्बल्ये वलयानां भ्रंशः, न यामीति श्रवणेन हर्षातिशयोद्रेक इति परिपुष्टत्वेन वलयानां दलनमिति संबन्धायोगेऽपि सम्बन्धोक्ति-रूपाऽतिशयोक्तिः । ५ 'नेर्विशः १ । ३ । १७' इत्यात्मनेपदम् । ६ प्राप । ७ क्षिप्ताः । ८ प्रातः । ९ तप्तैः । १० कथयति । ११ कृशोदरी ।

किमुत सकले यातेऽप्यह्नि प्रिय त्वमिहैष्यसि । इति दिनशतप्राप्यं देशं प्रियस्य यियासतो हरति गमनं बालाऽऽलापैः सबाष्पझलज्झलैः ॥ ११ ॥ पितुरधिपुरं त्यक्ताः सख्यः समं निजबान्धवैर्न च परिचितिर्जाता पत्युर्गृहेऽपि कयाचन । कतिपयदिनोदञ्चत्प्रेम्णि प्रिये प्रवसत्यसौ कथयतु मनस्तापं कस्मै नवं नवकामिनी ॥ १२ ॥ सान्त्वप्रायैः प्रणयवचनैर्गन्तुमापृच्छमाने कान्ते तिर्यङ्नमितवदना रुन्धती बाष्पपूरम् । दीर्घोच्छ्वासस्थगनविकलोत्कम्पिनासापुटान्ता संख्याशून्यं गणयति मृगीलोचना कङ्कणानि ॥ १३ ॥ यामीत्युक्ते हृदयपतिना पञ्चेषाः शङ्खभूषाः स्वैरं स्वैरं झटिति गलिताः पाणिपङ्केरुहाग्रात् । नो यास्यामीत्यनुपदमिमां वाचमाकर्णयन्त्यास्तन्व्याः शेषा अपि चटचटेत्येव भङ्गं समीयुः ॥ १४ ॥ आयाते श्रुतिगोचरं प्रियतमप्रस्थानकाले बलात्तत्पान्तःस्थितया तया जनमलं दृष्ट्वा चिरं मुग्धया । सोच्छ्वासं दृढमन्युनिर्भरगलद्बाष्पाम्बुधौतं तया स्वं वक्त्रं विनिवेश्य भर्तृहृदये निःशब्दकं रुद्यते ॥ १५ ॥ दृष्टः कातरनेत्रया चिरतरं बद्ध्वाञ्जलिं याचितः पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः । इत्याक्षिप्य समस्तमर्थमघृणो गन्तुं प्रवृत्तः शठः पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ १६ ॥ लग्ना नांशुकपल्लवे भुजलता नो द्वारदेशेऽर्पिता नो वा पादयुगे तया निपतितं तिष्ठेति नोक्तं वचः । काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठस्तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ॥ १७ ॥ दूरं सुन्दरि निर्गताऽसि नगरादेष द्रुमः क्षीरवानस्मादेव निवर्त्यतामिति शनैरुक्त्वाऽध्वगेन प्रियाम् । गाढालिङ्गनचक्रितस्तनतटाभोगस्फुटत्कञ्चुकं वीक्ष्योरःस्थलमश्रुपूरितदृशः प्रस्थानभङ्गः कृतः ॥ १८ ॥ चिन्तामोहविनिश्चलेन मनसा मौनेन पादानतः प्रत्याख्यानपराङ्मुखः प्रियतमो गन्तुं प्रवृत्तोऽधुना । सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैर्लोचनैः श्वासोत्कम्पकुचं निरीक्ष्य सुचिरं जीवाशया वारितः ॥ १९ ॥ यामि प्रेयसि बारिदागमदिने जानीहि मामागतं चिन्तां चेतसि मा विधेहि कथयत्येवं सबाष्पे मयि । निःश्वासैः पवनायितं वरतनोरङ्गैः कदम्बायितं कान्त्या केतकपत्रकायितमहो दृग्भ्यां पयोदायितम् ॥ २० ॥ यामीत्यप्रियवादिनि प्रियतमे मुद्राऽभवत्कङ्कणं केलीसद्मबहिर्गतैकचरणे भूमौ शरीरस्थितिः । अन्तर्धानगते पुनर्मृगदृशो वाच्या किमन्या दशा लाजास्फोट इव स्फुटत्यविरलं हारोऽपि वामभ्रुवः ॥ २१ ॥ प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः । यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता गन्तव्ये सति जीवितं प्रियसुहृत्सार्थः[11] किमु त्यज्यते ॥ २२ ॥ गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं त्यक्त्वा तिर्यगवेक्ष्य बाष्पकलुषेणैकेन मां चक्षुषा । अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यतामित्थं स्नेहविवर्धितो मृगशिशुः सोत्प्रासं[12] संभाषितः ॥ २३ ॥

## सख्योर्भाषणम् ।

वयो नव्यं स्वान्तं विषयतरलं हन्त सततं प्रियो दूरे देशे जनकनगरं दुर्लभतरम् । जनश्चायं दुष्टो भृशमिदमनर्थाय सततं कथंकारं पारं कथय सखि यामोऽस्य[13] वयसः ॥ १ ॥ आयता जलदावली

---

१ यातुमिच्छतः। २ पञ्च वा षड्वेति पञ्चषाः। डच्। ३ शृण्वन्त्याः। ४ शोक-। ५ निर्दयः। ६ यावत्प्राणनं न तावत्त्यक्तः। ७ रोमोद्गमात्। ८ अतिकार्श्यात्। ९ अवस्था। १० हे जीवितेति सम्बुद्धिपदम्। ११ प्रियसुहृदां वलयादीनां सार्थः समूहः। त्वयाऽपि इदानीमेव गम्यतामिति भावः। १२ मम जीवनमद्यावध्येवेति सम्भावनार्थमिदं वचनम्। १३ तारुण्याख्यस्य।

सरभसं विद्युत्समालिङ्गिता शैलानां[1] परितः सशब्दं[2]महिभुक्श्रेणी नरीनृत्यति[3] । एवं सत्यपि हन्त संप्रति पतिर्देशान्तरं प्रस्थितस्तद्दुःखं विनिवेद्यतां सखि कथं कस्याधुनाऽग्रे मया ॥ २ ॥ कान्तो यास्यति दूरदेशमिति मे चिन्ता परं जायते लोकानन्दकरो हि चन्द्रवदने वैरायते चन्द्रमाः । किं चायं वितनोति कोकिलकलालापो विलापोदयं प्राणानेव हरन्ति हन्त नितरामाराममन्दानिलाः ॥ ३ ॥

## प्रवसन्तं कान्तं प्रति कान्ताया उक्तयः ।

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १ ॥ न चिरं मम तापाय तव यात्रा भविष्यति । यदि यास्य[5]सि यातव्यमलमाशङ्कया[6]ऽपि ते ॥ २ ॥ सहिष्ये विरहं नाथ देह्यदृश्याञ्जनं मम । यदक्तनेत्रां कंदर्पः प्रहर्तुं मां न शक्ष्यति ॥ ३ ॥ प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः । संप्रत्यय[7]योग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥ ४ ॥ एतस्मिन्सहसा वसन्तसमये प्राणेश देशान्तरं गन्तुं त्वं यतसे तथापि न भयं तापात्प्रपद्येऽधुना । यस्मात्कैरव[8]सारसौरभमुषा साकं सरोवायुना[9] चान्द्री[10] दिक्षु विजृम्भते रजनिषु स्वच्छा मयूखच्छटी[11] ॥ ५ ॥ लोलैर्लोचनवारिभिश्च शपथैः पादप्रणामैः परैरन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् । पुण्याहं व्रज मङ्गलं सुदिवसः प्रातः प्रयातस्य यत्त्वत्स्नेहोचितमीहितं प्रिय मया त्वं निर्गतः श्रोष्यसि[12] ॥ ६ ॥ भास्वांश्चूत[13]तरुर्गुरु[14]र्मनसिजः कोऽप्येष[15] भृङ्ग[16]स्तमो[17] मन्दो[18] गन्धवहः सितो[19] मलयजो दोषाकरो[20] माधवः[21] । अङ्गारो[22] नवपल्लवः परभृतो विज्ञो[23] गुरोराज्ञया निर्यातोऽसि विचारिताः कथममी क्रूरा ग्रहा न त्वया ॥ ७ ॥ मा याहीत्यपमङ्गलं बत सखे स्नेहेन हीनं वचस्तिष्ठेति प्रभुता यथारुचि कुरुष्वैषाप्युदासीनता । नो जीवामि विना त्वयेति वचनं संभाव्यते वा न वा तन्मां शिक्षय नाथ यत्समुचितं वक्तुं त्वयि प्रस्थिते ॥ ८ ॥

## आल्याः कान्तं प्रति वचनम् ।

किमिति सखे परदेशे गमयसि दिवसानधनाशया लुब्धः । वर्षति मौक्तिकनिकरं तव भवनद्वारि काञ्चनी वल्ली ॥ १ ॥ या विम्बौष्ठरुचिः क्व विद्रुममणिः स्वप्नेऽपि तां लब्धवान्हासश्रीसदृशैस्तपोभिरपि

---

१ सम्बन्धसामान्यविवक्षया 'शेषे' इति षष्ठी, अन्यथा तु द्वितीयैव प्राप्ता । २ अहिभुजां मयूराणां श्रेणी । ३ वारंवारमत्यन्तं च नृत्यति । ४ इयं सखीं सम्बोध्योक्तिः । ५ अस्ति त्वं यासीति वा पदच्छेदः । असीत्यव्ययम् । ६ याते त्वयि मम प्राणा अनुयास्यन्तीति व्यञ्जनम् । ७ इदानीं त्वत्प्रवासोद्यमाभिलाषावसरे । एतेनैवं त्वयि प्रस्थातुमिच्छत्येव हिमांश्वादयः प्रतिकूलाः संवृत्ताः, तदा त्वयि प्रस्थिते तु सर्वं विपरीतमित्यत्र कः सन्देह इति सूचितम् । ८ सुगन्धितेनेति भावः । ९ शीतलताद्योतनार्थम् । १० इदमाह्लादकत्वसम्भावनार्थम् । ११ इदं सर्वं विपरीतलक्षणयोक्तम् 'उपकृतं बहु तत्र किमुच्यते' इत्याद्यपकारिणं प्रतीव । १२ मां विना सा क्षणमपि जीवितं धर्तुं न क्षमाऽभूदिति वृत्तमिति भावः । १३ चूततरुः आम्रवृक्ष एव भास्वान् सूर्यः, सन्तापकत्वात् । १४ दुर्भरः, बृहस्पतिश्च । १५ कोपी-क्रुद्धः, कोऽपि अनिर्वचनीयश्च । १६ कृष्णत्वसाम्यात् । १७ राहुः । १८ मन्दगामी, सूर्यनन्दनश्च । १९ श्वेतः । शुक्रश्च । २० चन्द्रः, विरहिपीडकत्वादिरूपाणामपराधानामाकरश्च । २१ वैशाखः, तदुपलक्षितो वसन्तसमयश्च । यद्वा-मधोः-वसन्तस्यायं (समयः) वसन्तकाल इत्यर्थः । २२ भौमः महास्फुलिङ्गश्च । इदं रक्तिमसाम्याद्वचनम् । २३ बुधाः ।

किं मुक्ताफलैर्भूयते । तत्कान्तिः शतशोऽपि वह्निपतनैर्हेम्नः कुतः सेत्स्यति त्यक्त्वा रत्नमयीं प्रयासि दयितां कस्मै धनायाध्वग ॥ २ ॥ उद्यद्बर्हिषि दुर्दरारवपुषि प्रक्षीणपान्थायुषि च्योतद्विप्रुषि चन्द्ररुण्मुषि सखे हंसद्विषि प्रावृषि । मा मुग्धोच्चकुचान्तसंततगलद्बाष्पाकुलां बालिकां काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषि ॥ ३ ॥ मा गच्छ प्रमदाप्रिय प्रियशतैरभ्यर्थितस्त्वं मया बाला प्राङ्गणमागतेन भवता प्राप्नोत्यवस्थां पराम् । किं चास्याः कुचभारनिःसहतरैरङ्गैरनङ्गाकुलस्त्रुट्यत्कञ्चुकजालकैरनुदिनं निःसूत्रमस्मद्गृहम् ॥ ४ ॥

## मित्रालापः ।

शेते शीतकरोऽम्बुजे कुवलयद्वन्द्वाद्विनिर्गच्छति स्वच्छा मौक्तिकसंहतिर्धवलिमा हैमीं लतामञ्चति । स्पर्शात्पङ्कजकोशयोरभिनवा यान्ति स्रजः क्लान्ततामेषोत्पातपरम्परा मम सखे यात्रास्पृहां कृन्तति ॥ १ ॥

## सख्योरालापः ।

वारंवारमुदश्रु लोचनयुगं पर्याकुलं जायते निःश्वासा विरमन्ति न क्षणममी व्याश्लिष्टदन्तच्छदाः । प्रस्थानश्रवणादपि प्रियतमस्याहो तवेयं स्थितिर्नो जाने निलयं गते तु दयिते कीदृग्दशामाप्स्यसि ॥ १ ॥

## प्रोषितवर्णनम् ।

दिदृक्षमाणः क्षणमायताक्ष्या मुखाम्बुजं मञ्जुलमध्वनीनः । मुहूर्तमात्रं सुमुहूर्तकालं स वर्षकालं कलयांचकार ॥ १ ॥ निशम्य केलीभवनोपकण्ठे मञ्जीरमञ्जुध्वनिमध्वनीनः । यथा तथा बद्धकथावशेषं समापयामास समं सुहृद्भिः ॥ २ ॥ मुखं प्रियायाः समुदीक्षमाणः कान्तो दिनस्यान्तमपेक्षमाणः । मुहुर्मुहुर्व्योमनि तिग्मभानौ निवेशयामास विलोचने स्वे ॥ ३ ॥

## मधुवर्णनम् ।

मधुपराजिपराजितमानिनीजनमनः सुमनः सुरभिश्रियम् । अभृत वारितवारिजविप्लवं स्फुटितताम्रतताम्रवनं जगत् ॥ १ ॥ रणत्कङ्कणानां झणन्नूपुराणां चलत्कुण्डलानां क्वणत्किङ्किणीनाम् । वधूनां मुखाम्भोरुहं द्रष्टुकामो रथं मन्थरं चक्रबन्धुश्चकार ॥ २ ॥ विकसितसहकारभारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः । नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥ ३ ॥ कोकिलश्चूतशिखरे मञ्जरीरेणुपिञ्जरः । गदितैर्व्यक्ततामेति कुलीनश्चेष्टितैरिव ॥ ४ ॥ परिचुम्बति संश्लिष्य भ्रमरश्चूतमञ्जरीम् । नवसंगमसंहृष्टः कामी प्रणयिनीमिव ॥ ५ ॥ आम्रे पल्लविते स्थित्वा कोकिला मधुरस्वरम् । चुकूज कामिनां चित्तमाकर्षन्तीव दूतिका ॥ ६ ॥ सुभगे कोटिसंख्यत्वमुपेत्य मदनाशुगैः । वसन्ते पञ्चता त्यक्ता पञ्चताऽऽसीद्वियोगिनाम् ॥ ७ ॥ पतङ्गपाकसमये पतङ्गपतिविक्रमाः । पतङ्गस्योदये चेलुः पतङ्गा इव वानराः ॥ ८ ॥ सहकारकुसुमकेसरनिकरभरा-

---

१ चक्रवाकबान्धवः। २ पञ्चसङ्ख्यत्वम् । ३ मरणम् । पञ्चसङ्ख्यतेति तु प्रतीतिमात्रम् । ४ पतङ्गशब्दः शालिधान्यविशेषपरः । ५ वैनतेयसमवेगाः । ६ भास्करस्य । ७ ज्योतिरिङ्गणा इव । ८ अतिसुरभिताम्र- ।

मोदमूर्च्छितदिगन्ते । मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ९ ॥ मलयानिलमिलितोत्कटमदकलकलक[1]ण्ठकलकलल[2]लामः । मधुरमधुविधुरमधुपो म[3]धुरयमधुना धिनोति धराम् ॥ १० ॥ किंशुककलिकान्तर्गतमिन्दुकलास्पर्धिकेसरं भाति । रक्तनिचोल कपिहितं धनुरिव ज[4]तुमुद्रितं वि[5]तनोः ॥ ११ ॥ आयाता:मधुरजनी मधुरजनीगीतिहृद्येयम् । अङ्कुरितः स्मरविटपीस्मर विट पीनस्तनीमबलाम् ॥ १२ ॥ अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः । रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः ॥ १३ ॥ सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भज्यन्ते । सहकारमञ्जरीणां शिखोद्गमग्रन्थयः प्रथमे ॥ १४ ॥ अ[6]सौ मरुच्चुम्बितचारुकेसरैः[7] प्रसन्न[8]ताराधिपमण्डलाग्रणीः । वियु[9]क्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥ १५ ॥ प्रसूनशृङ्गैर्मकरन्दतोयं सलीलमादाय वसन्तकामी । वनस्थलीवामदृशां मुखानि सिञ्चत्यसौ मन्दम[10]रुत्करेण ॥ १६ ॥ व्यतीतकल्पे शिशिरैकबाल्ये संकल्पपुष्पोद्गमबन्धुराङ्गी । इयं लवङ्गी युवभृङ्गसङ्गादुच्छूनगुच्छस्तनिकेव भाति ॥ १७ ॥ दत्ते जनोऽसौ खलु विद्यमानमविद्यमानं तु न कोऽपि तावत् । वियोगिनां पुष्पनमन्नशोकः शोकप्रदोऽभूदतिचित्रमेतत् ॥ १८ ॥ जगौ विवाहावसरे वनस्थलीवसन्तयोः कामहुताशसाक्षिणि । पिकद्विजः प्रीतमना मनोरमं मुहुर्मुहुर्मङ्गलमन्त्रमादरात् ॥ १९ ॥ रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् । उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम्[11] ॥ २० ॥ आस्वादितं स्वादुमरन्दबिन्दुस्वच्छन्दमिन्दीवरसुन्दरीभिः । माकन्दपुष्पं प्रमदाजनस्य प्रमोदमामोदभरैरकार्षीत् ॥ २१ ॥ कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य । दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥ २२ ॥ असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि । पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥ २३ ॥ सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे । निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥ २४ ॥ वर्णप्रकर्षे सति कार्णिकारं दु[12]नोति निर्गन्धतया स्म चेतः । प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २५ ॥ बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि । सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ २६ ॥ लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं[13] प्रकाश्य । रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार ॥ २७ ॥ मृगाः प्रियालद्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः । मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ २८ ॥ चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज । म[14]नस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ २९ ॥ हिमव्यपायाद्विशदाधराणामापाण्डुरीभूतमुखच्छवीनाम् । स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ ३० ॥ मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः । शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ ३१ ॥ ददौ रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः । अर्धोपभुक्तेन बिसेन[15] जायां संभावयामास रथाङ्गनामा

---

१ कोकिल- । २ रमणीयार्थको ललामशब्दः । ३ वसन्तः । ४ लाक्षा- । ५ कन्दर्पस्य । ६ वसन्तः । ७ केसरपदं पुन्नागपरं सटापरं च । ८ चन्द्रताराप्रिय ( सुग्रीव- ) । ९ प्रोषितपतिका- । वनगतरामचन्द्र- । १० दक्षिणानिलरूपेण हस्तेन । ११ उत्तरस्यां हि अश्वा महोच्चा भवन्तीति तथा सम्भावनम् । १२ पीडयति । १३ तिलकं वृक्षविशेषं, चन्दनलेपविशेषं च । १४ प्रगल्भमानिनी- । १५ मृणालेन ।

॥ ३२ ॥ गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् । पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे ॥ ३३ ॥ पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः । लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ ३४ ॥ न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् । न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥ ३५ ॥ कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् । इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ ३६ ॥ उपहितं शिशिरापगमश्रिया[1] मुकुलजालमशोभत किंशुके । प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ॥ ३७ ॥ याचकाय मधवे[2] तरुदानी दत्तवान् किसलयान्यखिलानि । तेन नूतनदलैः सहितोऽभून्निष्फलं भवति जातु न दत्तम् ॥ ३८ ॥ अस्मिन् वसन्ते न नराः सहन्ते वधूवियोगं च बलासं[3]रोगम् । कुरङ्गनाभिद्रवलेपभाभिर्भजन्तु दत्ताः प्रमदाः प्रलिप्ताः ॥ ३९ ॥ आज्ञां मन्मथचक्रवर्तिनृपतेरादाय निःशङ्कधीर्भ्राम्यद्भृङ्गमहाजनान् पिकगिरा साकूतमाकारयन् । कुञ्जोटे[4] च्युतपत्रसंस्तरवति श्रीमान् वसन्ताभिधो व्यापारी सुमनोमरन्दवसुभिर्वाणिज्यमालम्बते ॥ ४० ॥ किंशुककुसुमवक्रनखो मदनप्रह्लादपक्षपातपरः मानवतीमानदितिजमिच्छति हन्तुं वसन्तनरसिंहः ॥ ४१ ॥ प्रसह्य चम्पको भृङ्गान्निष्कासयति दूरतः । स्वमुन्नतो हि संसर्गं मधुपैः कोऽभिनन्दति ॥ ४२ ॥ व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम् । न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान्हिमम् ॥ ४३ ॥ अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा । अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ॥ ४४ ॥ नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः । अभिययुः सरसो मधुसंभृतां कमलिनीमलिनीरपतत्रिणः ॥ ४५ ॥ कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम् । किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रव[6]णार्पितः ॥ ४६ ॥ विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः । मधुलिहां मधुदानविशारदाः कुरबका रवकारणतां ययुः ॥ ४७ ॥ सुवदनावदनासवसंभृतस्तदनुवादिगुणः कुसुमोद्गमः । मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः ॥ ४८ ॥ प्रथममन्यभृताभि[7]रुदीरिताः प्रविरला इव मुग्धवधूकथाः । सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥ ४९ ॥ श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः । उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ५० ॥ ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् । पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥ ५१ ॥ शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः । विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहङ्गमाः ॥ ५२ ॥ उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः । सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनीवधूः ॥ ५३ ॥ अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः । कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ५४ ॥ हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् । युवतयः कुसुमं दधुराहितं तदलके[10] दलकेसरपेशलम् ॥ ५५ ॥ अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः । न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः

---

१ वसन्तशोभया । २ मदद्दूरीकृतत्रपया । ३ वसन्ताय । ४ कफ- । ५ कुञ्जरूपे विपणौ । ६ कर्ण- । ७ कोकिलाभिः । ८ शब्द- । ९ प्रफुल्लकमला । १० केशे । ११ सुन्दरम् ।

प्रमदामिव ॥ ९६ ॥ अमदयन्मधुगन्धसनाथया किसलयाधरसन्ततया मनः । कुसुमसंभृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ ९७॥ अरुणरागनिषेविभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः । परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ९८॥ उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी । सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालकजालकमौक्तिकैः ॥ ९९ ॥ ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः । कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ६० ॥ अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया । अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ॥ ६१ ॥ त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः । परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ६२ ॥ नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् । मृदुलतान्तलतान्तमलोकयत्स सुरभिं[1] सुरभि[2] सुमनोभरैः[3] ॥ ६३ ॥ विलुलितालकसंहतिरामृशन्मृगदृशां श्रमवारि ललाटजम् । तनुतरङ्गततिं सरसां दलत्कुवलयं वलयन्[4] मरुदाववौ ॥ ६४ ॥ स्फुटमिवोज्ज्वलकाञ्चनकान्तिभिर्युतमशोकमशोभत चम्पकैः । विरहिणां हृदयस्य भिदाभृतः कपिशितं[5] पिशितं[6] मदनाग्निना ॥ ६५ ॥ स्मरहुताशनमुर्मुरचूर्णतां दधुरिवाम्रकणस्य रजःकणाः । निपतिताः परितः पथिकव्रजानुपरि ते परितेपुरतो भृशम् ॥ ६६ ॥ रतिपतिप्रहितेव कृतक्रुधः प्रियतमेव वधूरनुनायिका । बकुलपुष्परसासवपेशलध्वनिरगान्निरगान्मधुपावलिः ॥ ६७ ॥ प्रियसखीसदृशं प्रतिबोधिताः किमपि काम्यगिरा[7] परपुष्टया । प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गनाः[8] ॥ ६८ ॥ मधुकरैरपवादकरैरिव स्मृतिभुवः[9] पथिका हरिणा इव । कलतया वचसः परिवादिनी[10]स्वरजिता रजिता वशमाययुः ॥ ६९ ॥ समभिसृत्य रसादवलम्बितः प्रमदया कुसुमावचिचीषया । अविनमन्न रराज वृथोच्चकैरनृतया नृतया वनपादपः ॥ ७० ॥ वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रतसंभ्रतशोभया । चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥ ७१ ॥ कुसुमकार्मुककार्मुक[11]संहितद्रुतशिलीमुख[12]खण्डितविग्रहाः । मरणमप्यपराः प्रतिपेदिरे किमु मुहुर्मुहुर्गत[13]भर्तृकाः ॥ ७२ ॥ मधुरया मधुबोधित[14]माधवी[15]मधुसमृद्धिसमेधित[16]मेधया । मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ ७३ ॥ अरुणिताखिलशैलवना मुहुर्विदधती पथिकान्परितापिनः । विकचकिंशुकसंहतिरुच्चकैरुदवहद्दवहव्यवहश्रियम् ॥ ७४ ॥ कमलिनी मलिनी दयितं विना न सहते सह तेन निषेवितुम् । तमधुना मधुना निहितं हृदि स्मरति सा रतिसारमहर्निशम् ॥ ७५ ॥ सुहृदस्तरुणीनखक्षतानां प्रतिपक्षाः पथिकाङ्गनाजनानाम् । दहनद्युतिदस्यैव[17] समन्ताद्विपिने किंशुककुड्मला विरेजुः ॥ ७६ ॥ किंशुकक्षितिरुहां विलसन्तः कुड्मलाः कुटिलतां कलयन्तः । पान्थवारणविदारणताम्राः कामकेसरिनखा इव रेजुः ॥ ७७ ॥ प्रस्फुरत्प्रचुरबालपल्लवा वीरुधश्च तरलाश्चकाशिरे । क्रीडिता इव कुसुम्भवारिभिः काममित्र[18]समये समागते ॥ ७८ ॥ कूजितानि कलयन्वनप्रियो न प्रियो विरहिणामजायत । मन्मथाग्निरपि भस्मना दरं सादरं मुनिमनोऽम्बुजं व्यधात् ॥ ७९ ॥ बकुलकुलमिलन्मिलिन्द[19]मालामदकलकोकिलकूजितोदयेन । अहह नियमिनोऽपि तत्त्वचिन्ताच्युतमतयो मतयोषितो बभूवुः ॥ ८० ॥ कुसुमनगवनान्युपैतुकामा

---

१ वसन्तम् । २ सुगन्धितम् । ३ पुष्पातिशयैः । ४ चालयन् । ५ कपिशवर्णम् । ६ मांसम् । ७ स्पृहणीय भाषिण्या । ८ अयाचितमदुरित्यन्वयः । ९ मदनस्य । १० वीणा- । ११ पुष्प- । १२ भ्रमर- । बाण-च । १३ प्रोषितभर्तृकाः । १४ विकासित- । १५ वासन्तीलता- । १६ परिवृद्ध-- । १७ रक्तिम्ना समानत्वात् । १८ वसन्त- । १९ भ्रमर- ।

किसलयिनीमवलम्ब्य चूतयष्टिम् । क्वणदलिकुलनूपुरा निरासे नलिनवनेषु पदं वसन्तलक्ष्मीः ॥ ८१ ॥ विकसितकुसुमाधरं हसन्तीं कुरबकराजिवधूं विलोकयन्तम् । ददृशुरिव सुराङ्गना निषण्णं सशरमनङ्गमशोकपल्लवेषु ॥ ८२ ॥ मुहुरनुपतता विधूयमानं विरचितसंहति दक्षिणानिलेन । अलिकुलमलकाकृतिं प्रपेदे नलिनमुखान्तविसर्पिपङ्कजिन्याः ॥ ८३ ॥ श्वसनचलितपल्लवाधरोष्ठे नवनिहितेर्ष्यमिवावधूनयन्ती । मधुसुरभिणि षट्पदेन पुष्पे मुख इव शाललतावधूश्चुचुम्बे ॥ ८४ ॥ उत्सृष्टमम्बुजदृशामिव मानरत्नमादाय षट्पदतिलान्मधुवारिपूरान् । पुंस्कोकिलस्य कलकूजितकैतवेन संकल्पवाक्यमयमातनुते रसालः ॥ ८५ ॥ उत्फुल्लपङ्कजानिषक्तलसद्द्विरेफः किंचिद्विनिद्रकुमुदोत्करसंभृतश्रीः । आमूलनद्धविविधाद्भुतमाल्यमालश्चित्रं न कस्य तनुते ललितस्तमालः ॥ ८६ ॥ धुन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि । निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि ॥ ८७ ॥ कुपितापि मनःपतिना सह का सहकारविलोकनजातरसा । तरसा रमते स्म न हा रमणी रमणीयतनुः सुतनुः सुरभौ ॥ ८८ ॥ स्थलकमलतरूणां कामिनीलोचनेषु क्षिपति मुकुलमुष्ट्या धूलिजालं विशालम् । तदनु हरति हन्त स्वान्तसर्वस्वमासामयमनयविदग्धो धूर्तवन्मीनकेतुः ॥ ८९ ॥ पथि पथि शुकचञ्चूचारुराभाङ्कुराणां दिशि दिशि पवमानो वीरुधां लासकश्च । नरि नरि किरति द्राक्सायकान्पुष्पधन्वा पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥ ९० ॥ इह मधुपवधूनां पीतमल्लीमधूनां विलसति कमनीयः काकलीसंप्रदायः । इह नटति सलीलं मञ्जरी वञ्जुलस्य प्रतिपदमुपदिष्टा दक्षिणेनानिलेन ॥ ९१ ॥ विकसति सहकारे स्फारसौरभ्यसारे वहति धुतपटीरे मन्दमन्दं समीरे । कलयति कलवाचं कोकिलोऽपि रुष्टः क्षणमपि न मृगाक्ष्या वल्लभो दुर्लभोऽभूत् ॥ ९२ ॥ इह हि नववसन्ते मञ्जरीरेणुपुञ्जच्छुरणधवलदेहा बद्धहेलं सरन्ति । तरलमलिसमूहा हारिहुंकारिकण्ठा बहलपरिमलालीसुन्दरं सिन्दुवारम् ॥ ९३ ॥ स्थाने स्थाने मलयमरुतः पूरयन्त्यङ्कपालीं पुष्पालीषु स्मरगजरजःस्नानयोग्याः परागाः । जातं चूते मधु मधुकरप्रेयसी जानुदघ्नं निर्विघ्नत्वं सपदि भवते रागराज्याभिषेकः ॥ ९४ ॥ प्रसूनकलिकाकुलैः किसलयैः करस्पर्धिभिः स्फुरन्मधुमदभ्रमद्भ्रमरकोकिलाकूजितैः । इति क्रमसमुद्गतैरुपवनावलीमण्डलीममण्डयदिव प्रियामृतुवसुंधरावल्लभः ॥ ९५ ॥ विलासिभिरिवोन्मदै रचितरम्यगुञ्जारवैः प्रसूनसुरभीकृतैर्विगलितत्रपास्तापसाः । अशोकशिखरस्थितैः सुनयनान्वितैः षट्पदैर्निरन्तरनिषेविताभितमधौ मधौ रेमिरे ॥ ९६ ॥ मन्दोऽयं मलयानिलः किसलयं चूतद्रुमाणां नवं माद्यत्कोकिलकूजितं विचकिलामोदः पुराणं मधु । बाणानित्युपदीकरोति सुरभिः पञ्चैव पञ्चेषवे यूनामिन्द्रियपञ्चकस्य युगपत्संमोहसंपादिनः ॥ ९७ ॥ उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः । भ्राम्यन्तो मलयानिलाहतिचलैः शाखासहस्रैर्मुहुर्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥ ९८ ॥ चूतानां चिरनिर्गताऽपि कलिका बध्नाति न स्वं रजः संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया । कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ९९ ॥ पुष्पाणि

---

१ कम्पयन्ती । २ वास्तविकप्रेमविषयभूतेन नायकेन । ३ पवनः । ४ लतानाम् । ५ नर्तकः । ६ मल्लिका- । ७ सूक्ष्म-मधुर- । ८ अतिसुगन्धिते आम्रे । ९ निर्गुण्डीं पुष्पविशेषम् । १० जानुपरिमाणकम् । ११ ऋतुराजः वसन्त इत्यर्थः ।

प्रथमं ततः प्रकटिताः स्वान्तोत्सवाः पल्लवाः पश्चादुन्मदकोकिलालिललनाकोलाहलः कोमलः। इत्थं प्रादुरभूदुपेत्य परितः प्राज्यप्रमोदप्रदः प्रोद्दामद्रुमराजिराजितवनक्षोणीमृतुक्ष्मापतिः॥ १०० ॥ स्तोत्रं चैत्रगुणोदयस्य विरहिप्राणप्रयाणानकष्टंकारः स्मरकार्मुकस्य सुदृशां शृङ्गारशिक्षागुरुः। दोलाकेलिकलासु मङ्गलपदं बन्दी वनान्तश्रियां नादोऽयं कलकण्ठकण्ठकुहरप्रेङ्खोलितः श्रूयते॥ १०१॥ [1]माकन्दच्युतपुष्परेणु[2]पटलीक्लृप्तालवालोदरे मन्दस्यन्दिमरन्दपूरभरिते वातोत्थपुष्पप्लवैः। खेलन्तो ललितं मधोर्गुणगणान्गायन्ति [3]पुष्पंधयाः कान्तानामधरे धयन्ति मधुरं सक्तं मधूलीरसम्॥ १०२ ॥ आरूढो मलयानिलद्विपवरं युक्तो विलासानुगैः पीतः पुष्पविलोचनैर्नवलतापौराङ्गनानां गणैः। अभ्राम्यद्वनपत्तने मधुमहीपालस्ततः कोकिलालीलालापमिलद्भ्रमद्भ्रमरिकाझाङ्कारभेरीरवैः॥ १०३ ॥ [4]वारस्त्रीव वनस्थली नवनवां शोभां बभारान्वहं पान्थान्पीडयति स्म तस्कर इव क्रूरैः शरैर्मन्मथः। शृङ्गारः सगुणः क्षमापतिरिव प्राप्तः प्रतिष्ठां परां रात्रिः स्वीकुरुते स्म मुग्धललनालज्जेव कार्श्यं क्रमात्॥ १०४ ॥ साम्यं संप्रति सेवते [5]विचकिलं षाण्मासिकैर्मौक्तिकैर्बाह्लीकीदशनव्रणारुणतरैः पत्रैरशोक[6]श्रितैः। भृङ्गालङ्कितकोटि किंशुकमिदं किंचिद्विवृन्तायते माञ्जिष्ठस्तबकैश्च पाटलितरोरन्यैव काचिल्लिपिः॥ १०५ ॥ गर्भग्रन्थिषु [7]वीरुधां [8]सुमनसो मध्ये[9]ऽङ्कुरं पल्लवा वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे [10]पञ्चमः। किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्[11]मनोजन्मनो देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः॥ १०६ ॥

## समयाविशेषे कान्तानेपथ्यशोभा।

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्। आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव॥१॥

## वामानां पुष्पादानम्।

निजनयनप्रतिबिम्बैरम्बुनि बहुशः [12]प्रतारिता कापि। नीलोत्पलेऽपि विमृशति करमर्पयितुं [13]कुसुमलावी॥ १ ॥ असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति। एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः॥ २ ॥ अताडयत्पल्लवपाणिनैकं पुष्पोच्चये [14]राजवधूरशो[15]कम्। तच्छेदहेतोरलिपङ्क्तिभङ्ग्या विकुन्तिता नाललता स्मरेण॥ ३ ॥ अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः। नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितो[16]ऽञ्जलिर्वः॥ ४ ॥ उच्चित्य प्रथममवस्थितं मृगाक्षी पुष्पौघं श्रितविटपं ग्रहीतुकामा। आरोढुं पदमदधादशोकयष्टावामूलं पुनरपि [17]तेन पुष्पिता सा॥ ५ ॥ मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि। तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या॥ ६ ॥ [18]व्रततिविततिभिस्तिरोहितायां प्रतियुवतौ वदनं प्रियः प्रियायाः। यदधयदधरावलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे

---

१ रसाल-। २ समूह-। ३ भृङ्गाः। ४ गणिकेव। ५ मदनवृक्षपुष्पम्। ६ व्याप्तः। ७ लता नाम्। ८ पुष्पाणि। ९ अङ्कुराणाम्मध्ये। १० स्वरविशेषः। ११ कामस्य। १२ वञ्चिता। १३ कुसुमानामवचयकारिणी। १४ राजतीति राजा पचदित्वादच्,अजादित्वाट्टाप्। साऽसौ वधूरिति, सुन्दरी नारीत्यर्थः। राज्ञो वधूरिति तु स्पष्टोऽर्थः। १५ 'पादाघातादशोको विकसति' इति हि समयः। १६ काव्यप्रकाशव्याख्यानकारास्तु वने सखीवेषेणायान्तं कान्तमवेक्ष्य सखीप्रतारणपरेयमुक्तिरित्याहुः। १७ पादविन्यासेन। १८ लता-।

॥ ७ ॥ विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः । रमणभृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग । सललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयाऽन्या । सकलकलभकुम्भविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ॥ ८ ॥ मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य । उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयाऽन्या ॥ ९ ॥ उपरिजतरुजानि याचमानां कुशलतया परिरम्भलोलुपोऽन्यः । प्रथितपृथुपयोधरां गृहाण स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥ १० ॥ इदमिदमिति भूरुहां प्रसूनैर्मुहुरतिलोभयता पुरः पुरोऽन्या । अनुरहसमनायि नायकेन त्वरयति रन्तुमहो जनं मनोभूः ॥ ११ ॥ विजनमिति बलादमुं गृहीत्वा क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या । अभिपतितुमना लघुत्वगीतेरभवदमुञ्चति वल्लभेऽतिगुर्वी ॥ १२ ॥ पूर्वं द्विरेफपरिभूतिभयाद्भवत्या यत्केशपुष्पभरणं हरिणाक्षि मुक्तम् । व्यर्थं तदद्य पुनरप्यलकेषु भृङ्गाः पुञ्जीभवन्निजकुलभ्रमतः पतन्ति ॥ १३॥ सन्तु द्रुमाः किलयोत्तरपुष्पभाराः प्राप्ते वसन्तसमये कथमित्थमेव । न्यासैर्नवद्युतिमतोः पदयोस्तवेयं भूः पुष्पिता सुतनु पल्लवितेव भाति ॥ १४ ॥ अनुभवत युवत्यो भाग्यवत्यो नितान्तं कुसुमवलयवेलासङ्गखेलासुखानि । मम तु मधुकराणां वाटपाटच्चराणां सपदि पतति धाटी पुष्पवाटीनिवेशे ॥ १५ ॥ पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोर्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे । लीयन्ते कबरीभरे निजकुलव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ १६ ॥

## दक्षिणपवनः ।

यथायथं ताः सहिता नभश्चरैः प्रभाभिरुद्भासितशैलवीरुधः । वनं विशन्त्यो वनजायतेक्षणाः क्षणद्युतीनां दधुरेकरूपताम् ॥ १ ॥ विनयति सुदृशो दृशः परागं प्रणयिनि कौसुममाननानिलेन । तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ २ ॥ स्फुटमिदमभिचारमन्त्र एव प्रतियुवतेरभिधानमङ्गनानाम् । वरतनुरमुनोपहूय पत्या मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥ ३ ॥ विपुलकमपि यौवनोद्धतानां घनपुलकोदयकोमलं चकाशे । परिमलितमपि प्रियैः प्रकामं कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥ ४ ॥ हिमलवसदृशः श्रमोदबिन्दूनपनयता किल नूतनोढवध्वाः । कुचकलशकिशोरकौ कथंचित्तरलतया तरुणेन पस्पृशाते ॥ ५ ॥ समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः । व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ॥ ६ ॥ अतिमन्दचन्दनमहीधरवातं स्तबकाभिरामलतिकातरुजातम् । अपि तापसानुपवनं मदनार्तान्मदमञ्जुगुञ्जदलिपुञ्जमकार्षीत् ॥ ७ ॥ उपवनतरुनृत्याध्यापने लब्धवर्णो विरचितजलकेलिः पद्मिनीकामिनीभिः । प्रियसुहृदसमेषोरायया योगियोगस्थितिविदलनदक्षो दक्षिणो गन्धवाहः ॥ ८ ॥ आलिङ्गन्ते मलयजतरूनास्वजन्ते वनान्तानापृच्छन्ते चिरपरिचितान्मालयान्निर्झरौघान् । अद्य स्थित्वा द्रविडमहिलाऽभ्यन्तरे श्वः प्रभाते प्रस्थातारो मलयमरुतः कुर्वते संनिधानम् ॥ ९ ॥ लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् । मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि ॥ १० ॥ मलयशिखरादाकैलासं मनोभवशासनाद्भुवनवलयं जेतुं

---

१ प्रियम् । २ केशेषु । ३ विद्युताम् । ४ तत्सपत्न्याः । ५ न हि दृष्टाः कनकभूषामाद्रियन्ते । ६ पण्डितः । ७ चन्दन- ।

वाञ्छन्वसन्तसमीरणः । विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं मनसि विमृशन्भीतः शङ्के प्रयाति शनैः शनैः ॥ ११ ॥ पथि पथि लतालोलाक्षीभिः स्रवन्मधुसीकरं कुसुमनिकरं वर्षन्तीभिः सहर्षमिवार्चितः । मधुकरवधूगीतासक्त कुरङ्गकमास्थितः प्रसरति वने मन्दं मन्दं वसन्तसमीरणः ॥ १२ ॥ उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे नटन्तः कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितेभाः । अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केल्लिमल्लीचलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः ॥ १३ ॥ हेमाम्भोरुहपत्तने परिमलस्तेयी वसन्तानिलस्तत्रत्यैरिव यामिकैर्मधुकरैरारब्धकोलाहलः । निर्यातस्त्वरया व्रजन्निपतितः श्रीखण्डपङ्कद्रवैर्लिप्ते केरलकामिनीकुचतटे खञ्जः शनैर्गच्छति ॥ १४ ॥ प्राप्तः प्रौज्यमिव श्रमं जलजिनीसौरभ्यभारं वहन्नुद्दामस्तबकानमन्नवलतालक्ष्मीमिवालोकयन् । स्वीकुर्वन्मदमन्थरानिव गतेर्वामभ्रुवां विभ्रमान्मन्दं मन्दमुपाजगाम पवनः पौंटीरवाटीतटात् ॥ १५ ॥ पानीयं नारिकेलीफलकुहरकुहूत्कारि कल्लोलयन्तः कावेरीतीरतालद्रुमभरितसुराभाण्डभाङ्कारचण्डाः । एते तन्वन्ति वेलावनललितलताताण्डवं द्राविडस्त्रीकर्पूरापाण्डुगण्डस्थललुठितरया वायवो दाक्षिणात्याः ॥ १६ ॥ कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः कर्णाटीचीनपीनस्तनवसनदशान्दोलनस्पन्दमन्दः । लोलल्लाटीललाटालकललितलतालास्यलीलाविलोलः कष्टं भो दाक्षिणात्यः प्रसरति पवनः पान्थकान्ताकृतान्तः ॥ १७ ॥ ये दोलाकेलिकाराः किमपि मृगदृशां मानतन्तुच्छिदो ये सद्यः शृङ्गारदीक्षाव्यतिकरगुरवो ये च लोकत्रयेऽपि । ते कण्ठे लोठयन्तः परभृतवयसां पञ्चमं रागराजं वान्ति स्वैरं समीराः स्मरविजयमहासाक्षिणो दाक्षिणात्याः ॥ १८ ॥

## वासन्तिकपान्थवर्णनम् ।

वक्रेण शिरसि पतता नित्यं रुधिरारुणेन दुर्वारः । मत्तद्विप इव पथिकः किंशुककुसुमाङ्कुशेन भृतः ॥ १ ॥ समवलोक्य विलासवनस्थलीं न पथिकैः पथि कैः पतितं भुवि । मलयजद्रुमसौरभमेदुरोदरसमीरसमीरितवल्लरीम् ॥ २ ॥ वसन्तप्रारम्भे चिरविरहखिन्ना सहचरी यदि प्राणान्मुञ्चेत्तदिह वधभागी भवति कः । वयो वा स्नेहो वा कुसुमविशिखो वेति विमृशंस्तुहीति प्रव्यक्तं पिकनिकरझाङ्कारमशृणोत् ॥ ३ ॥ रे पान्थाः स्वगृहाणि गच्छत सुखं सेवाक्षणो मुच्यतां मानं मानिनि मुञ्च वल्लभजने कोपानुबन्धेन किम् । आयातः कुसुमाकरः क्षपयति प्राणान्वियोगातुरेष्वित्येवं परपुष्टनादपटहो वक्तीव कामाज्ञया ॥ ४ ॥ सा तन्वीति घनस्तनीति विकसन्नीलाब्जनेत्रेति च स्वैरं संचरतीति वक्ति मधुरां वाचं विचित्रामपि । इत्थं विद्रुमपाटलाधरपुटां सीमन्तिनीं ध्यायतो रोमाञ्चो रुदितं स्मितं प्रलपितं पान्थस्य संजायते ॥ ५ ॥ अध्वन्यस्य वधूर्वियोगविधुरा भर्तुः स्मरन्ती यदि प्राणानुज्झति कस्य तत्खलु महत्संजायते

---

१ भुजङ्गा वाताशना इति तथोक्तिः । २ भ्रमरी- । ३ प्रवर्धमान- । दक्षिणस्यां दिशि कावेर्यपि नदीति तथोक्तिः । ४ मेघविस्फूर्जितावृत्तमिदम् । 'रसर्त्वश्वैर्य्मौ न्सौ ररगुरुता मेघविस्फूर्जिता स्यात् ।' इति वृत्तरत्नाकरोक्तेः । ५ सुवर्णकमलनगरे । पत्तनपदं लक्षणया वनविशेषपरम् । ६ सौरभहारी । ७ चौरान्वेषिभिः । ८ लूनपादः । मन्दगामित्वमुत्प्रेक्ष्येदं वचनम् । ९ प्रवृद्धम् । १० चन्दन- । ११ छिद्र- । १२ मदनोद्दीपकत्वेन विरहिणां कृते यमायमानत्वात् । १३ कोकिलानाम् । १४ पूर्ण- । १५ त्वमेवेत्यर्थकं हिन्दीभाषापदम् । किंतु पिकानां 'कुहू' इत्येव शब्दः, न तु 'तुही' इति भ्रान्त्यैवेदं भावनम् । १६ पथिकस्य प्रोषितस्येति भावः । १७विरहदुःखार्दिता ।

पातकम् । यावन्नो कृतमध्वगेन हृदये तावत्तरोर्मूर्धनि प्रोद्घुष्टं परपुष्टया तव तवेत्युच्चैर्वचोऽनेकशः ॥ ६ ॥ उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः । नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ ७ ॥ अध्वन्यैर्मकरन्दशीकरसुरामत्तक्वणत्कोकिले मार्गे मार्गनिरोधिनी परिहृता शङ्केऽशुभाशङ्कया । पान्थस्त्रीवधपातकादुपनतं चण्डालचिह्नं मधोरेषा खिङ्खिणिकेव षट्पदमयी झाङ्कारिणी संहतिः ॥ ८ ॥ सव्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालास्रुतिः किञ्चिन्नैतदिहास्ति तत्कथमसौ पान्थस्तपस्वी मृतः । आ ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता ॥ ९ ॥ एतस्मिन्दक्षिणाशानिलचलितलतालीनमत्तालिमालापक्षक्षोभावधूतच्युतबहलरजोह्लादिहृद्ये वसन्ते । प्रेमस्वेदार्द्रबाहुश्लथवलयलसत्प्रौढसीमन्तिनीनां मन्दः कण्ठग्रहोऽपि ग्लपयति हृदयं किं पुनर्विप्रयोगः ॥ १० ॥

## निदाघमहत्त्ववचनम् ।

परमप्रतापशाली माधवसम्पादितोत्कर्षः । ललनालिङ्गनविमुखो ग्रीष्मोऽयं भीष्मतां धत्ते ॥ १ ॥ रेजे पुष्पैर्ग्रीष्ममासाद्य मल्लीं मल्लीं सद्यः संश्रयन्ते स्म भृङ्गाः । भृङ्गैस्तत्रारम्भि हर्षेण गानं गाने लौल्यं लेभिरे योगिनोऽपि ॥२॥ अत्युल्लसद्विसरहस्ययुजा भुजेन वक्त्रेण शारदसुधांशुसरोरुहेण । पीयूषपोषसुभगेन च भाषितेन त्वं चेत्प्रसीदसि मृगाक्षि कुतो निदाघः ॥ ३ ॥ प्रतिगतमार्थिजनानां विच्छिन्नाशं समूहमवलोक्य । स्फुटितमपयसस्तापादिव हृदयमलं तडागस्य ॥ ४ ॥ सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः । प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ५ ॥ देशे देशे जडिमकुरङ्गास्तेजोभल्लैर्दिनकरभिल्लैः । धावंधावं प्रहरति राज्ञां धारागेहं शरणमवापुः ॥ ६ ॥ संजातपत्रप्रकरान्वितानि समुद्वहन्ति स्फुटपाटलत्वम् । विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानि च वृद्धिमीयुः ॥ ७ ॥ प्रचण्डभानुः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसंचयः । दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालः समुपागतः प्रिये ॥ ८ ॥ दुष्प्रेक्ष्यमुच्चैर्गगनं निदाघे कोपाकुलस्येव मुखं नृपस्य । हरेः शयानस्य मृणालबुद्ध्या कर्षन्ति पुच्छं करिणः करेण ॥ ९ ॥ प्रायश्चरित्वा वसुधामशेषां छायासु विश्रम्य ततस्तरूणाम् । प्रौढिं गते संप्रति तिग्मभानौ शैत्यं शनैरन्तरपामयासीत् ॥ १० ॥ रवितुरङ्गतनूरुहतुल्यतां दधति यत्र शिरीषरजोरुचः । उपययौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसंपदः ॥ ११ ॥ दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि । मरुति वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे ॥ १२ ॥ निदधिरे दयितोरसि तत्क्षणस्नपनवारितुषारभृताः स्तनाः । सरसचन्दनरेणुरनुक्षणं विचकिरे च करेण वरोरुभिः ॥ १३ ॥ कथमिव तव संमतिर्भवित्री सममृतुभिर्मुनिनावधीरितस्य । इति विरचितमल्लिकाविकासः स्मयत इव स्म मधुं निदाघकालः ॥ १४ ॥ बलवदपि बलं मिथोविरोधि प्रभवति नैव विपक्षनिर्जयाय । भुवनमरिभवी न

---

१ 'चण्डावल्ली' इति ख्यातो लताविशेषः । २ भाङ्कारिणीति पाठान्तरम् । ३ भयङ्करतां शान्तनवस्वरूपतां च । ४ मल्लिका । ५ सन्ध्यायां रम्याः । ६ हिम- । ७ बाणविशेषाणां भल्लेति संज्ञा । ८ सूर्यरूपे किराते । ९ अतिवेगेन पर्यट्य । १० जलप्रपातस्थानम् । ११ विकसितपाटलतरुत्वं स्पष्टसितशोणवर्णत्वं च । १२ प्रापुः । १३ प्रचण्डो भानुर्यत्रेति । एवं परत्रापि बहुव्रीहिरेव । १४ सिंहस्य । १५ सूर्ये । १६ जलानाम् । १७ रोम- । १८ निदाघसमयः । १९ निक्षिप्यते स्म ।

यत्तदानीं तमृतुगणः क्षणमुन्मनीचकार ॥ १९ ॥ अपि शिशिरतरोपचारयोग्यं द्वितयमिदं युगपन्न सह्यमेव । जरठितरविदीधितिश्च कालो दयितजनेन समं च विप्रयोगः ॥ १६ ॥ तप्ता मही विरहिणामिव चित्तवृत्तिस्तृष्णाऽध्वगेषु कृपणेष्विव वृद्धिमेति । सूर्यः करैर्दहति दुर्वचनैः खलो नु छाया सतीव न विमुञ्चति पादमूलम् ॥ १७ ॥ छाया वियोगिवनितेव गता कृशत्वं ततं पयः पिशुनमानसवद्बभूव । केनाधुना बत मनागवलोकनीयः क्रुद्धोत्तमर्णमुखमण्डलवत्पतङ्गः ॥ १८ ॥ रिक्तेषु वारिकथया विपिनोदरेषु मध्याह्नजृम्भितमहातपतापतप्ताः । स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥ १९ ॥ मुखकृतबिसखण्डश्चण्डमार्तण्डतापात्सितजलजतलस्थो राजते राजहंसः । रजतघट इवायं विद्रुमाबद्धधाराविवरविगलदम्बुः कम्बुकण्ठि प्रतीहि ॥२०॥ रजनिचरमयामेष्वादिशन्ती रतेच्छां किमपि कठिनयन्ती नालिकेरीफलाम्भः । अपि परिणमयित्री राजरम्भाफलानां दिनपरिणतिभोग्या वर्तते ग्रीष्मलक्ष्मीः ॥ २१ ॥ निजां कायच्छायां श्रयति महिषः कर्दमधिया च्युतं गुञ्जापुञ्जं रुधिरमिति काकः कलयति । समुत्सर्पन्सर्पः सुषिरविवरं तापविवशः सचीत्काराधूतं प्रविशति करं कुञ्जरपतेः ॥ २२ ॥ तदात्वस्नातानां दरदलितमल्लीमुकुलिताः स्रजो बिभ्राणानां मलयजरसार्द्रद्रवपुषाम् । निदाघाग्निप्लोषग्लपितमभिसार्यं मृगदृशां परिष्वङ्गोऽनङ्गं पुनरपि शनैरङ्कुरयति ॥ २३ ॥ जलार्द्राः शष्पाणां बिसकिसलयैः केलिवलयाः शिरीषैरुत्तंसा विचकिलमयी हाररचना । शुचौ वेणाक्षीणां मलयजरसार्द्राश्च तनवो विना तन्त्रं मन्त्रं रतिरमणमृत्युंजयविधिः ॥ २४ ॥ हरन्ति हृदयानि यच्छ्रवणशीतला वेणवो यददेति करम्बिता शिशिरवायुना वारुणी । भवन्ति च हिमोपमाः स्तनभवो यदेणीदृशो रुचेरुपरि संस्थितो रतिपतेः प्रसादो गुरुः ॥ २५ ॥ मूलं बालकवीरुधां सुरभयो जातीतरूणां त्वचः सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च । शैरीषी कुसुमोन्नतिः परिणमन्मोचश्च सोऽयं गणो ग्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ॥ २६ ॥ अङ्गारैः खचितेव भूर्वियदपि ज्वालाकरालं करैस्तिग्मांशोः किरतीव तीव्रमभितो वायुः कुकूलानलम् । अप्यम्भांसि नखंपचानि सरितामाशा ज्वलन्तीव च ग्रीष्मेऽस्मिन्नववह्निदीपितमिवाशेषं जगद्वर्तते ॥ २७ ॥ पाश्चात्यैर्मरुमार्गैस्त्रिजगतामुन्मूलयन्नार्द्रतां दावाग्निर्ज्वलितैरपारगहनान्यप्यानयन्भस्मताम् । वात्याभिस्तृणपत्रधूलिनिकरान्धुन्वन्विहायःस्थले ग्रीष्मः शुष्यदपुच्छपल्वलल्लुठन्मत्स्यः समभ्यागतः ॥ २८ ॥ अत्यच्छं सितमंशुकं शुचि मधु स्वामोदमच्छं रजः कार्पूरं विधृतार्द्रचन्दनकुचद्वन्द्वाः कुरङ्गीदृशः । धारावेश्म सपाटलं विचकिलस्रग्दाम चन्द्रत्विषो धातः सृष्टिरियं वृथैव तव न ग्रीष्मोऽभविष्यद्यदि ॥ २९ ॥ माकन्दद्रुममञ्जरीषु वसतिस्तत्पल्लवैर्वर्तनं सा नो मञ्जुलता वचःसु मधुना सर्वं सह प्रस्थितम् । एतत्तिष्ठतु दुःश्रवं मृदुहृदां निःस्वामिनस्तत्सखे प्रोन्मीलत्करुणो द्विजोऽयमिति हि त्वं ग्रीष्ममुष्णाहि नः ॥ ३० ॥ कानि स्थानानि दग्धान्यतिशयगहनाः सन्ति के वा प्रदेशाः किं वा शेषं वनस्य स्थितमिति पवनासङ्गविस्पष्टतेजाः । चण्डज्वालावलीढस्फुटिततनुलताग्रन्थिमुक्ताट्टहासो दावाग्निः शुष्कवृक्षे शिखरिणि गहनेऽधिष्ठितः पश्यतीव ॥ ३१ ॥ बाले

---

१ उदकण्ठयत् । २ पिपासा लिप्सा च । ३ किरणैः । राजदेयैर्भागैश्च । परस्मिन् पक्षे सूर्यस्य राजत्वं समासोक्तिविषयम् । ४ सूर्यः । ५ ईषत्- । ६ दाह- । ७ मृणाल- । ८ निदाघे । ९ कामदेवोज्जीवन- । १० नवलतानाम् । ११ आकाशे । १२ आम्र- ।

मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां किं त्वं पक्ष्मान्तवान्तैर्मलिनयसि मुधा[1] वक्त्रमश्रुप्रवाहैः । एषा प्रोद्वृत्तमत्तद्विपकटे[2]कषणक्षुण्णविन्ध्योपलानां दावाग्नेः संप्रवृद्धा मलिनयति दिशां मण्डलं धूमलेखा ॥ ३२ ॥ स्फीतं[3] शीतं गतं क क शिशिरकिरणः कास्ति हेमन्तमासः कैते पानीयपूर्णा मलिनजलधराः काद्य विद्युत्प्रमोदः । इत्युच्चैर्जल्पमानै[4]रिव मुखरमुखैर्भिल्लिदूतैरुपेतो वातौघश्चागतोऽसौ प्रकटितविजयस्तम्भचिह्नैर्निदाघः ॥ ३३ ॥ एष सूर्यांशुसंतप्तो मृगः कुतरु[5]माश्रितः । साधुर्भाग्यपरिक्षीणो नीचं प्राप्येव सीदति ॥ ३४ ॥ मध्याह्ने नूनमापोऽपि तिग्मतापोपशान्तये । दधुः कमलिनीपत्रमातपत्रमिवोपरि ॥ ३५ ॥ दुःसहसंतापभयात्संप्रति मध्यस्थिते दिवसनाथे । छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥ ३६ ॥ रवेर्मयूखैरभितापितो भृशं विदह्यमानः पथि तप्तपांसुभिः । अवाक्फणो जिह्मगतिः[6] श्वसन्मुहुः फणी मयूरस्य तले निषीदति ॥ ३७ ॥ अस्मद्रिपूणामनिलाशनानां[8] दत्तो निवासः खलु चन्दनेन । इतीव रोषाद्व्यजनस्य वायुर्व्यशोषयच्चन्दनमङ्गसंस्थम् ॥ ३८ ॥ स्पृशति तिग्मरुचौ[9] ककुभः करैर्दयितयेव विजृम्भिततापया । अतनुमानपरिग्रहया स्थितं रुचिरया चिरयायिदिनश्रिया ॥ ३९ ॥ तरुण[10]तरणितेजःपुञ्जसंतप्तदेहः पतति जरठखङ्गः पल्वले पङ्कलेहः । हरिरपि सलिलार्थी शङ्कया तस्य नीरं न पिबति न च याति क्लिश्यति प्राप्य तीरम् ॥ ४० ॥ किरति मिहिरे विष्वद्रीचः करानतिवामनी स्थलकमठवद्देहच्छाया जनस्य विचेष्टते । गजपतिमुखोद्गीर्णैरा[11]प्यैरथ त्रसरेणुभिः शिशिरमधुरामेणाः कच्छस्थलीमधिशेरते ॥ ४१ ॥ भानोः पादै[12]र्दहनपरुषैर्दह्यमानान्तराणामुत्क्रामन्तः किल विटपिनां प्राणपिण्डा इवामी । गाढोदन्याकुलितमनसो भिन्नचञ्चूपुटान्ताः कोकूयन्ते विहगशिशवः कोटराणां मुखेषु ॥ ४२ ॥ वहद्दुहलमारुतप्रसरदग्निखण्डैरिव स्फुरद्द्युमणिमण्डलद्युतिवितानकैस्तापिता । विसारि वपुरात्मनः सपदि वासरश्रीरियं चलन्मरुमरीचिकासिचयपल्लवेनावृणोति ॥ ४३ ॥ विशन्तीनां स्नातुं जघनपरिवेषैर्मृगदृशां यदम्भः संप्राप्तं प्रमदवनवाप्यास्तटभुवम् । गभीरे तन्नाभीकुहरपरिणाहाध्वनि रसत्कुहुंकारस्फारं रचयति निनादं नयति च ॥ ४४ ॥ धत्ते पद्मलतादलेप्सुरुपरि स्वं कर्णतालं द्विपः शष्पस्तम्बरसान्नियच्छति शिखी मध्येशिखण्डं[13] शिरः । मिथ्या लेढि मृणालकोटिरभसाद्दंष्ट्राङ्कुरं शूकरो मध्याह्ने महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ॥ ४५ ॥ सर्पत्सारिणि वारिशीतलतले विन्यस्तपुष्पोत्करे नीरन्ध्रे कदलीवने गुरु[14]दलच्छायाहतार्कत्विषि । कर्पूरागरुपङ्कपिच्छलघनोत्तुङ्गस्तनालिङ्गिभिः कान्ताकेलिरतैरहो सुकृतिभिर्मध्यंदिनं नीयते ॥ ४६ ॥ उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपलज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः । भीमोष्मप्लवमानसूर्यकिरणाः क्रूरप्रकाशा दशामायुःकर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः ॥ ४७ ॥ मध्याह्ने[15] हरितो हुताशनमुचः[16] कामोऽपि वामभ्रुवां पाटीरद्रवचर्चितां स्तनतटीमासाद्य निद्रायते । एणाः[17] केसरिणो[18]ऽपि केसरसटोपान्तश्रिताः शेरते छायामङ्गगतां न मुञ्चति तरुर्बोढा नवोढामिव ॥ ४८ ॥ मध्याह्ने चलतालवृन्तमनिलः सर्वात्मना सेवते वारि स्वेदमिषेण शीतलवधूवक्षोजमालम्बते । निद्रा नेत्रमुपैति

---

१ मृषा- । २ गजगण्डस्थल- । ३ स्वच्छम् । ४ कथयद्भिः । अत्र शानच् चिन्त्यः । ५ आश्रयदानाक्षमं वृक्षम् । ६ कुटिलगमनः । ७ तापातिशयेन भक्षकभीत्यवधारणापायात् । ८ भुजङ्गानाम् । ९ सूर्ये । १० प्रचण्ड- । मध्याह्नकालिकेत्यर्थः । ११ जलमयैः । १२ किरणैः । १३ मयूरशिखण्डान्तः । १४ दुर्भर- । १५ दिशः । १६ अग्निवर्षिण्यः । १७ मृगाः । १८ स्वभक्षकस्यापि सिंहस्येति भावः ।

पक्ष्मयुगलच्छायाश्रिता दैहिकी पान्थानामथ पादयोर्निपतति च्छायापि मा यान्त्विति ॥ ४९ ॥ काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते तीराश्मन्तकशिम्बिचुम्बितमुखा धावन्त्यपः पूर्णिकाः । दात्यूहैस्तिनिशस्य[3] कोटरवति स्कन्धे निलीय स्थितं वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुटाः ॥ ५० ॥ स्वे स्वे कर्मणि संनियोज्य सुहृदो भूमीसुरान्[4]मन्त्रिणश्चक्रं निर्भयमारचय्य भगवान्संप्राप्तरागोदयः । स्वालोकक्षेणकांदिशीकमधुनोत्खातं विचिन्वन्निव ध्वान्तं क्वापि निलीनमम्बरमणि[6]व्योमाग्रमारोहति ॥ ५१ ॥ छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं मूलं याति सरोजलस्य जडता ग्लानेव मीनैः सह । आचामत्यहिमांशुदीधिरपस्तप्तेव लोकैः समं निद्रा गर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥ ५२ ॥ उष्णार्त्तः शिशिरे निषीदति तरोर्मूलालवाले शिखी निर्भिद्योपरिकार्णिकारकुसुमान्याशेरते षट्पदाः । तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते क्रीडावेश्मनिवेशिपञ्जरशुकः क्लान्तो जलं याचते ॥ ५३ ॥ स्कन्धान्सिन्धुरयूथगण्डकषणव्यासक्तदानोदकान्सेवन्ते मधुपा महीरुहशिरःपुष्पाणि हित्वा भृशम् । लीयन्ते वलभीकुलायकुहरे निस्पन्दमेते खगा जिह्वालीढवधूमुखो मृगगणश्छायासु विश्राम्यति ॥ ५४ ॥ उत्तप्तोऽयमुरंगमः शिखितलच्छायां समालम्बते वैरं साहजिकं विहाय च शिखी मूलं तरोर्गच्छति । याचन्ते च जलं निकुञ्जभवने तृष्णातुराः सारिकास्तप्ते वारिणि पङ्कजानि मधुपास्त्यक्त्वा श्रयन्ते लताः । ॥ ५५ ॥ अङ्गं चन्दनपाण्डु पल्लवमृदुस्ताम्बूलताम्रोऽधरो धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने । अन्तः पुष्पसुगन्धिरार्द्रकबरी सर्वाङ्गलग्नाम्बरं रामाणां[11] रमणीयतां विदधति ग्रीष्मापराह्णागमे ॥ ५६ ॥ पान्थानां प्रमदा इव प्रतिदिनं दैन्यं हृदिन्यो ययुर्दृश्यन्ते स्म दिगम्बरा इव वने पत्रोज्झिताः पादपाः । निःश्वासा इव दुःसहा विरहिणां वाता ववुः सर्वतः पायंपायमिव[12] प्रियाधररसं पाथः पपुः प्राणिनः ॥ ५७ ॥ अस्वाध्यायः[13] पिकानां मदनमखसमारम्भणस्याधिमासो निद्राया जन्मलग्नं किमपि मधुलिहां कोऽपि दुर्भिक्षकालः । वृष्टिर्यात्रोत्सुकानां[14] मलयजमरुतां[15] पान्थकान्ताकृतान्तः प्रालेयोन्मूलमूलं[16] समजनि समयः कश्चिदौत्पातिकोऽयम् ॥ ५८ ॥ पत्रच्छाये मराला मुकुलितनयना दीर्घिकापद्मिनीनां सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि । बिन्दूत्क्षेपान्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं सर्वैरुस्रैः[17] समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः[18] ॥ ५९ ॥ एष तपति चतुरस्रं तीक्ष्णांशुरतिप्रबुद्धतीक्ष्णांशुः । आकाशसीम्नि चिह्नी प्रसह्य सूते यदण्डानि ॥ ६० ॥

## जलक्रीडा ।

निजप्रियमुखभ्रान्त्या हर्षेणाचुम्बदम्बुजम् । दष्टाधरा तु भृङ्गेण सीत्कारमकरोन्मृदु ॥ १ ॥ ललितमुरसा तरन्ती तरलतरङ्गौघचालितनितम्बा । विपरीतरतासक्ता किमदृश्यत सरसिन्यो सख्या ॥ २ ॥ एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्यः । गाढाङ्गदैर्बाहुभिरप्सु बालाः क्लेशोत्तरं रागवशात्प्लवन्ते[19] ॥ ३ ॥ अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् ।

---

१ अत्र समासोक्तिरलङ्कारः । २ करटैः । ३ तिनिशवृक्षस्य । ४ ब्राह्मणान् । ५ स्वावलोकनत्रासपलायिताम् । ६ सूर्यः । ७ सूर्यकिरणः । ८ निदाघतप्तः । ९ मयूरः । १० गज- । ११ सुन्दरीणाम् । १२ वारंवारं निपीय । १३ तूष्णीम्भावः । १४ सञ्चरताम् । १५ चन्दनमारुतानाम् । १६ हिमोन्मूलनकारणम् । १७ रश्मिभिः । १८ सूर्यः । १९ तरन्ति ।

पारिप्लवाः स्रोतसि निम्नगायाः[1] शैवाललोलांश्छलयन्ति मीनान् ॥ ४ ॥ आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्धिषु शीकरेषु । पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते न च्छिदुरोऽपि हारः ॥ ५ ॥ आवर्तशोभा नतनाभिकान्तेर्भङ्ग्यो भ्रुवां द्वन्द्वचराः स्तनानाम् । जातानि रूपावयवोपमानान्यदूरवर्तीनि विलासिनीनाम् ॥ ६ ॥ तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् । श्रोत्रेषु संमूर्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥ ७ ॥ संदष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः । अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः[2] ॥ ८ ॥ एताः करोत्पीडितवारिधारा दर्पात्सखीभिर्वदनेषु सिक्ताः । वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान्वारिलवान्वहन्ति ॥ ९ ॥ उद्बन्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः । मनोज्ञ एव प्रमदामुखानामम्भोविहाराकुलितोऽपि वेषः ॥ १० ॥ उन्मृष्टपत्राः कलितालकान्ताः कण्ठेषु लग्ना जघनं स्पृशन्तः । स्तनस्थलेष्वाहतिमादधाना गता वधूनां प्रियतां जलौघाः ॥ ११ ॥ हृतोऽङ्गरागस्तिलकं विमृष्टं लब्धान्तरैरेभिरतीव मत्वा । सुसंहितेनेति तदा जलानामदायि मध्यं न कुचद्वयेन ॥ १२ ॥ निरीक्ष्य वेणीप्रतिबिम्बमेणीदृशो भुजंगभ्रममावहन्त्यः । पतद्दुकूलं धुतबाहुमूलं झम्पाप्रकम्पाकुलिताः प्रचेलुः ॥ १३ ॥ अथ स्फुरन्मीनविधूतपङ्कजा विपङ्कतीरस्खलितोर्मिसंहतिः । पयोऽवगाढुं कलहंसनादिनी समाजुहावेव वधूः सुरापगा[3] ॥ १४ ॥ प्रशान्तघर्माभिभवः शनैर्विवान्विलासिनीभ्यः परिमृष्टपङ्कजः । ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥ १५ ॥ गतैः स हावैः कलहंसविक्रमं कलत्रभारैः पुलिनं नितम्बिभिः । मुखैः सरोजानि च दीर्घलोचनैः सुरस्त्रियः साम्यगुणान्निरासिरे ॥ १६ ॥ विभिन्नपर्यन्तगमीनपङ्क्तयः पुरो विगाढा सखिभिर्मरुत्वतः । कथंचिदापः[4] सुरसुन्दरीजनैः सभीतिभिस्तत्प्रथमं प्रपेदिरे ॥ १७ ॥ विगाढमात्रे रमणीभिरम्भसि प्रयत्नसंवाहितपीवरोरुभिः । विभिद्यमाना विससार सारसानुदस्य[5] तीरेषु तरङ्गसंहतिः ॥ १८ ॥ शिलाघनैर्नाकसदामुरःस्थलैर्बृहन्निवेशैश्च वधूपयोधरैः । तटाभिनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥ १९ ॥ विधूतकेशाः परिलोलितस्रजः सुराङ्गनानां प्रविलुप्तचन्दनाः । अतिप्रसङ्गाद्विहितागसो[6] मुहुः प्रकम्पमीयुः सभया इवोर्मयः ॥ २० ॥ विपक्षचित्तोन्मथना नखव्रणास्तिरोहिता विभ्रममण्डनेन ये । हृतस्य शेषानिव कुङ्कुमस्य तान्विकत्थनीयान्दधुरन्यथा स्त्रियः ॥ २१ ॥ प्रियेण संग्रथ्य विपक्ष[7]संनिधावुपाहितां वक्षसि पीवरस्तने । स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ २२ ॥ असंशयं न्यस्तमुपान्तरक्ततां यदेव रोद्धुं रमणीभिरञ्जनम् । हृतेऽपि तस्मिन्सलिलेन शुक्लतां निरास[8] रागो नयनेषु न श्रियम् ॥ २३ ॥ द्युतिं वहन्तो वनितावतंसका हृताः प्रलोभादिव वेगिभिर्जलैः । उपप्लुतास्तत्क्षणशोचनीयतां च्युताधिकाराः सचिवा इवाययुः ॥ २४ ॥ विपन्नलेखा निरलक्तकाधरा निरञ्जनाक्षीरपि बिभ्रतीः श्रियम् । निरीक्ष्य रामा बुबुधे नभश्चरैरलङ्कृतं तद्वपुषैव मण्डनम् ॥ २५ ॥ तथा न पूर्वं कृतभूषणादरः प्रियानुरागेण विलासिनीजनः । यथा जलार्द्रो नखमण्डनश्रिया ददाह दृष्टीश्च विपक्षयोषिताम् ॥ २६ ॥ शुभाननाः साम्बुरुहेषु भीरवो विलोलहाराश्चलफेनपङ्क्तिषु । नितान्तगौर्यो हृतकुङ्कुमेष्वलं न लेभिरे ताः परभागमूर्मिषु ॥ २७ ॥ हृदाऽम्भसि व्यस्तवधूकराहते रवं मृदङ्गध्वनिधीरमुज्झति । मुहुः स्तनैस्तालसमं

---

१ नद्याः । २ मेखला- । ३ गङ्गा । ४ जलानि । ५ उत्क्षिप्य । ६ कृतापराधाः । ७ सपत्नीजन- । ८ निरगमयत् । ९ देवैः ।

समाददे मनोरमं नृत्यमिव प्रवेपितम् ॥ २८ ॥ श्रिया हसद्भिः कमलानि सस्मितैरलंकृताम्बुः प्रतिमागतैर्मुखैः । कृतानुकूल्या सुरराजयोषितां प्रसादसाफल्यमवाप जाह्नवी ॥ २९ ॥ परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः । उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥ ३० ॥ भयादिवाश्लिष्य झषाहतेऽम्भसि प्रियं मुदानन्दयति स्म मानिनी । अकृत्रिमप्रेमरसाहितैर्मनो हरन्ति रामाः कृतकैरपीहितैः ॥ ३१ ॥ तिरोहितान्तानि नितान्तमाकुलैरपां प्रपातादलकैः प्रसारिभिः । ययुर्वधूनां वदनानि तुल्यतां द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ ३२ ॥ करौ धुनाना नवपल्लवाकृती पयस्यगाधे किल जातसंभ्रमा । सखीषु निर्वाच्यमधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषमवाप मानिनी ॥ प्रियैः सलीलं करवारिवारितः प्रवृद्धनिःश्वासविकम्पितस्तनः । सविभ्रमाधूतकराग्रपल्लवो यथार्थतामाप विलासिनीजनः ॥ ३४ ॥ उदस्य धैर्यं दयितेन सादरं प्रसादितायाः करवारिवारितम् । मुखं निमीलन्नयनं नतभ्रुवः श्रियं सपत्नीवदनादिवाददे ३५ ॥ विहस्य पाणौ विधृते धृताम्भसि प्रियेण वध्वा मदनार्द्रचेतसः । सखीव काञ्ची पयसा घनीकृता बभार वीतोच्चयबन्धमंशुकम् ॥ ३६ ॥ निरञ्जने साचिविलोकितं दृशावयावकं वेपथुरोष्ठपल्लवम् । नतभ्रुवो मण्डयति स्म विग्रहे बलिक्रिया चातिलकं तदास्पदम् ॥ ३७ ॥ निमीलदाकेकरलोलचक्षुषां प्रियोपकण्ठं कृतगात्रवेपथुः । निमज्जतीनां श्वसितोद्धतस्तनः श्रमो नु तासां मदनो नु पप्रथे ॥ ३८ ॥ प्रियेण सिक्ता चरमं विपक्षतश्चुकोप काचिन्न तुतोष सान्त्वनैः । जनस्य रूढप्रणयस्य चेतसः किमप्यमर्षोऽनुनये भृशायते ॥ ३९॥ अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरलाञ्छितम् । आत्तमात्तमपि कान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ॥ ४० ॥ निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः । तद्भवैः कुहुरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥ ४१ ॥ संक्षोभं पयसि पुनर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने । विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ॥ ४२ ॥ किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते तरुण्याः । संशय्य क्षणमिति निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः ॥ ४३ ॥ योग्यस्य त्रिनयनलोचनानलार्चिर्निर्दग्धस्मरपृतनाधिराज्यलक्ष्म्याः । कान्तायाः करकलशोद्यतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥ ४४ ॥ पर्यच्छे सरसि हृतेंऽशुके पयोभिर्लोलाक्षे सुरतगुरावपत्रपिष्णोः । सुश्रोण्या दलवसनेन वीचिहस्तन्यस्तेन द्रुतमकृताब्जिनी सखीत्वम् ॥ ४५ ॥ नारीभिर्गुरुजघनस्थलाहतानामास्यश्रीविजितविकासिवारिजानाम् ।लोलत्वादपहरतां तदङ्गरागं संजज्ञे स कलुष आशयो जलानाम् ॥४६॥ सौगन्ध्यं दधदपि काममङ्गनानां दूरत्वाद्गतमहमाननोपमानम् । नेदीयो जितमिति लज्जयेव तासामालोले पयसि महोत्पलं ममज्ज ॥ ४७ ॥ प्रभ्रष्टैः सरभसमम्भसोऽवगाहक्रीडाभिर्विदलितयूथिकापिशङ्गैः । आकल्पैः सरसि हिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिव व्यराजि ॥ ४८ ॥ आस्माकी युवतिदृशामसौ तनोति च्छायैव श्रियमनपायिनीं किमेभिः । मत्वैवं स्वगुणपिधानसाभ्यसूयैः पानीयैरिति विदधाविरेऽञ्जनानि ॥ ४९ ॥ निर्धौते सति हरिचन्दने जलौघैरापाण्डोर्गतपरभागयाङ्गनायाः । अह्रीय स्तनकलश-

---

१ सुराश्च राजानश्च योषितश्चेति, सुराश्च राजानश्चेत्येषां योषित इति वा, सुराणां राजा राजानो ( मुख्याः ) वा; तेषां योषित इति वा तासाम् ।२ सुन्दर्यः। ३ कम्पयन्ती। ४ स्वाभाविकम्। ५ वक्र-। ६ प्रतिच्छाय-। ७ बालमीन-। ८ गभीर। ९ मुखसमानत्वम्। १० नेपथ्यैः। ११ खण्डैः। १२ झटिति।

द्वयादुपेये विच्छेदः सहृदययेव हारयष्ट्या ॥ ९० ॥ अन्यूनं गुणममृतस्य धारयन्ती संफुल्लस्फुरितसरोरुहावतंसा । प्रेयोभिः सह सरसी निषेव्यमाणा रक्तत्वं व्यधित वधूदृशां सुरेव ॥ ९१ ॥ स्नान्तीनां बृहदमलोदबिन्दुचित्रौ रेजाते रुचिरदृशामुरोजकुम्भौ । हाराणां मणिभिरुपाश्रितौ समन्तादुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥ ९२ ॥ आरूढः पतित इति स्वसंभवोऽपि स्वच्छानां परिहरणीयतामुपैति । कर्णेभ्यश्च्युतमसितोत्पलं वधूनां वीचीभिस्तटमनु यन्निरासुरापः ॥ ९३ ॥ दन्तानामधरमयावकं पदानि प्रत्यग्रास्तनुमविलेपनां नखाङ्काः । आनिन्युः श्रियमधितोयमङ्गनानां शोभायै विपदि सदाश्रिता भवन्ति ॥ ९४ ॥ कस्याश्चिन्मुखमनु धौतपत्रलेखं व्यातेने सलिलभरावलम्बिनीभिः । किञ्जल्कव्यतिकरपिञ्जरान्तराभिश्चित्रश्रीरलमलकाग्रवल्लरीभिः ॥ ९५ ॥ अविरलमिदमम्भः स्वेच्छयोच्छातयन्त्या विकचकमलशोभोत्तानहस्तद्वयेन । परिकलितमिवार्घैः कामबाणातिथिभ्यः सलिलमिव वितीर्णं बाललीलासुखेभ्यः ॥ ९६ ॥ जलविलुलितवस्त्रव्यक्तनिम्नोन्नताभिः परिगततटभूमिस्नानमात्रोत्थिताभिः । कनकरुचिरकुम्भश्रीनदाभोगतुङ्गस्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ ९७ ॥ एतस्याः करिकुम्भसंनिभकुचप्राग्भारपृष्ठे लुठद्गुञ्जागर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि । दूरादेत्य तरङ्ग एष पतितो वेगाद्विलीनः कथं को वान्योऽपि विलीयते न सरसः सीमन्तिनीसंगमे ॥ ९८ ॥

## जलपानालयनायिकावर्णनम् ।

यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः । तथा प्रपापालिकाऽपि धारां वितनुते तनुम्[१] ॥ १ ॥ अङ्गुल्यग्रनिरोधतस्तनुतरां धारामियं कुर्वती कर्कर्यां नितरां पयोनिपुणिका दातुं प्रपापालिका । विश्लिष्टाङ्गुलिना करेण दशनापीडं शनैः पान्थ हे निस्पन्दोर्ध्वविलोचनस्त्वमपि हा जानासि पातुं पयः ॥ २ ॥ दूरादेव कृतोऽञ्जलिर्न तु पुनः पानीयपानोचितो रूपालोकनकौतुकात्प्रचलितो मूर्धा न शान्त्या तृषः । रोमाञ्चोऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादपामक्षुण्णो विधिरध्वगेन विहितो वीक्ष्य प्रपापालिकाम् ॥ ३ ॥ गन्तुं सत्वरमीहसे यदि पुनर्व्यालोलवेणीलतां द्रष्टुं वा स्वकुटुम्बिनीमनुदिनं कान्तां समुत्कण्ठसे । तत्तृष्यन्नपि मुग्धमन्थरवलन्नेत्रान्तरुद्धाध्वगामेतां दूरत एव हे परिहर भ्रातः प्रपापालिकाम् ॥ ४ ॥ मध्याह्नेऽतिखरे निदाघसमये तापोऽध्वनो वर्तते शीते कुञ्जतटे विचित्रविटपे भो पान्थ विश्रम्यताम् । एकाकी च भवानहं च तरुणी शून्या प्रपा वर्तते लज्जेऽहं ब्रुवती स्वयं च चतुरो जानासि कालोचितम् ॥ ५ ॥ कस्येयं तरुणि प्रपा पथिक नः किं पीयतेऽस्यां पयो धेनूनामथ माहिषं पथिक रे वारः कथं मङ्गलः । सोमो वाऽथ शनैश्चरोऽमृतमिदं तत्तेऽधरे दृश्यते भो भोः पान्थ विलाससुन्दर सखे यद्रोचते तत्पिब ॥ ६ ॥ मध्याह्नं गमय त्यज श्रमजलं स्थित्वा पयः पीयतां मा शून्येति विमुञ्च पान्थ विवशः शीतः प्रपामण्डपः । तामेव स्मर घस्मरस्मरशरत्रस्तां निजप्रेयसीं त्वच्चित्तं तु न रञ्जयन्ति पथिक प्रायः प्रपापालिकाः ॥ ७ ॥

---

१ केसर- । २ अल्पाम् । ३ जलदानपात्रेण । ४ अम्बु, दुग्धं च । ५ अम्बूनि, सूर्यादिवासरश्च । ६ अम्बु, सुधा च । ७ भक्षक- ।

## निदाघमारुतवर्णनम् ।

आध्मातोद्धतदावबह्निसुहृदः कीर्णोष्णरेणूत्कराः सन्तप्ताध्वगमुक्तखेदविषमश्वासोष्णसंवादिनः । तृष्णार्ताजगरायतास्यकुहरैरक्षिप्रप्रवेशोत्कटा भ्रूभङ्गैरिव तर्जयन्ति पवना दग्धस्थलीकज्जलैः ॥ १ ॥ कारञ्जीं कुञ्जयन्तो निजजरठरवव्यञ्जितावीरकोशानुत्पाकान्क्रूष्णलानां पृथुसुषिरगताञ्शिम्बिकान्पाटयन्तः । झिल्लीकाझल्लरीणां बधिरितककुभं झंकृतं खे क्षिपन्तः सिञ्जानाश्वत्थपत्रप्रकरझणझणाराविणो वान्ति वाताः ॥ २ ॥ व्योमव्यालोलमुक्ताफलधवलगलद्बिन्दुसंदोहगर्भानम्भोदान्भर्त्सयित्वा दिशि दिशि भुवने भीतिमुद्भावयन्तः । एते रक्षोमृगाक्षीगतलुलितमदक्षोभसंरम्भरूक्षा वाताः पातालकुक्षिस्थितमपि सलिलं तत्क्षणाद्भक्षयन्ति ॥ ३ ॥

## निदाघे पान्थावस्था ।

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि । शुष्यत्स्रोतसि तप्तभूमिरजसि ज्वालायमानार्णसि ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥ १ ॥ वाताकीर्णविशीर्णवीरणतृणश्रेणीझणत्कारिणी ग्रीष्मे सोष्मणि चण्डसूर्यकिरणप्रकाथ्यमानाम्भसि । चित्तारोपितकामिनीमुखशशिज्योत्स्नाहृतक्लान्तयो मध्याह्नेऽपि सुखं प्रयान्ति पथिकाः स्वं देशमुत्कण्ठिताः ॥ २ ॥ ग्रीष्मोष्मग्लोषशुष्यत्पयसि बकभयोद्भ्रान्तपाठीनभाजि प्रायः पङ्कैकमात्रं गतवति सरसि स्वल्पतोये लुठित्वा । कृत्वा कृत्वा जलार्द्रीकृतमुरसि जरत्कर्पटार्धं प्रपायां तोयं लब्ध्वापि पान्थः पथि वहति हहाहेति कुर्वन्पिपासुः ॥ ३ ॥ भ्राम्यच्चीत्कारचक्रभ्रमभरितघटीयन्त्रचक्रप्रमुक्तस्रोतःपूर्णप्रणालीपथसरणिशिरासारिसात्कारि वारि । कौपं पान्थाः प्रकामं शितमणिमुसलाकारविस्फारधारं विक्षिप्तक्षुण्णमुक्ताकणनिकरनिभा सारपातं पिबन्ति ॥ ४ ॥

## प्रावृड्वर्णनम् ।

सरसाशया सतडिद्गुणगौरा परिवेष्टिताम्बरोत्कर्षा । उद्धतपयोधरश्रीर्मुग्धवधूरिव विभाति घनवेला ॥ १ ॥ चञ्चद्विद्युद्वलया विरचितघनकृत्तिपात्रजलसेका । प्रावृड्रजकी परितः प्रक्षालनमम्बरस्य विदधाति ॥ २ ॥ नृपतेरहो महोभिः प्रायः पीतानि नाकनीराणि । नो चेत् प्रजल्प जलदाः प्रागिव वर्षासु किं नु वर्षन्ति ॥ ३ ॥ नेमाः सीमन्तिन्यः सौदामन्यः पयोदमालायाः । निर्गत्य सौधलग्ना विलसन्ति महे नभस्तृतीयायाः ॥ ४ ॥ अत्यन्तकामाकुलसवरामा लोकस्य लक्ष्म्याघृतपूरभक्ष्या । एषा सखि श्रावणजा विमिश्रा हर्षैर्विमिश्रा ध्रुवमद्वितीया ॥ ५ ॥ जीमूतमालाग्रथितैकजाला विद्युद्विशालाः स्मरमत्तबालाः । हंसप्रधर्षाः कृतलोक-

---

१ उत्तप्तत्वसाम्यात् । २-समानाः । ३ गुहा- । ४ निनदत् । ५ राक्षसी- । ६ प्रतप्यमानजले । ७ वीरणेति 'खसखस' इत्यस्य सञ्ज्ञा । ८ दाह- । ९ पुरातन- । १० पीत्वा । ११ कूपस्येदम् । १२ सजलगर्भा, सानुरागा च । १३ वसन-गगन-च । १४ उत्थितमेघशोभा, उन्नतस्तनशोभा च । १५ 'मसक' इति भाषायाम् । १६ सखायं सम्बोध्येदं वचनम् । १७ उत्सवे । १८ श्रावणशुक्लतृतीयायाः । अस्यां स्वर्णगौर्याः स्त्रीप्रधान उत्सवो देशविशेषे । १९ अत्र बहुव्रीहिसमासः । २० 'घीवर' इति भाषायां घृतपूरस्य सञ्ज्ञा । २१ श्रावणशुक्लद्वितीयायाः 'शृङ्गारदोयज' इति नाम भाषायाम् । २२ अनुपमा । २३ मेघ- ।

हर्षाः संतापघर्षाः सखि भान्ति वर्षाः ॥ ६ ॥ चलद्बलाकादशनाभिरामः परिस्रवद्वारिमदाम्बुधारः । आहन्यमानस्तडिदङ्कुशेन स्मरस्य दध्वान वनद्विपेन्द्रः ॥ ७ ॥ या कामिनी सा यदि मानिनी स्यात्स्मरस्य राज्ञो ह्यपराधिनी स्यात् । इतीव दण्डैः किमु ताडयतेऽसौ कादम्बिनी कामनृपस्य ढक्का ॥ ८ ॥ चन्द्रबिम्बरविबिम्बतारकामण्डलानि घनमेघडम्बरैः । भक्षितानि जलदोदरेषु तद्रोदनध्वनिरिवैष गर्जितम् ॥ ९ ॥ निद्रितस्य बत शम्बरद्विषो जागराय किमु वारिवाहकः । ऊर्जितं दधदतीव गर्जितं संभ्रमन्नभसि संभ्रमाद्ययौ ॥ १० ॥ काप्यङ्घ्री रङ्गपत्र्या॰ऽरुणयति रमणी भूषणैर्भाति काचिद्धायत्यन्या पराऽपि प्रलसति लहरीलक्ष्म॰ वासो वसाना॰ । यत्रान्या स्नेहपूरान् वितरति च मुदं याति दोलाभिरन्या सा शृङ्गारद्वितीया रचयति न मनः कस्य शृङ्गारमग्नम् ॥ ११ ॥ आकाशे पश्य नेमा निविडघनघटाः सम्भृताग्नेयचूर्णा॰ मञ्जूषा भान्ति तासामुपरि सुरधनुः कैतवात्केतवोऽमी । विद्युन्नो नालयन्त्रश्रुतिमुखनिपतद्दीप्तवर्त्तिप्रकाशः सैन्यं मारस्य मन्ये स्फुरति विमथितुं मानिनी मानदुर्गम् ॥ १२ ॥ पापं केऽपि जगुर्निदानमनिलं प्राहुः परे नैर्ऋतं नक्षत्रं कतिचिज्जजल्पुरितरे दुर्दैवमूचुर्नृणाम् । यत्तु प्रावृषि वैपरीत्यमधुना लोके समुज्जृम्भते तत्स्तुते जगदीश्वरे जलमुचामन्याय उन्नीयते ॥ १३ ॥

## प्रावृषः प्राकृतिकवर्णनम् ।

शीतलादिव संत्रस्तां प्रावृषेण्यान्नभस्वतः॰ । नभो॰ बभार नीरन्ध्रं जीमूतकुलकम्बलम् ॥ १ ॥ स्फुरन्तः पिङ्गलाभासो धरण्यामिन्द्रगोपकाः । सरक्तवान्तपान्थस्त्रीजीवा इव चकाशिरे ॥ २ ॥ पतत्यविरतं वारि नृत्यन्ति च कलापिनः । अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥ ३ ॥ उत्कण्ठयन्ति॰ मेघानां माला वर्गं कलापिनाम् । उत्कण्ठयन्ति यूनां च मानसं मदनादयः ॥ ४ ॥ अस्थिरमनेकरागं गुणरहितं नित्यदुष्प्रापम् । प्रावृषि सुरेन्द्रचापं विभाव्यते युवतिचित्तमिव ॥ ५ ॥ नन्दयति कस्य न मनः शबलैर्घनधूलिधूसरच्छायैः । आक्रम्य पुत्रकैरिव मलिनीकृतमम्बरं जलदैः ॥ ६ ॥ आयाताः सखि वर्षा वर्षादपि यासु वासरो दीर्घः । दिशि दिशि नीरतरङ्गो नीरतरङ्गो॰ ममापि हृदयेशः ॥ ७ ॥ गर्जति वारिदपटले वर्षति नयनारविन्दमबलायाः । भुजवल्लिमूलसेके विरहलता पल्लवं सूते ॥ ८ ॥ अतिशयितकदम्बामोदकदम्बानिलो वहति । वियदम्बुदमेदुरितं मे दुरितं पश्य नागतो दयितः ॥ ९ ॥ शमयति जलधारधारा चातकयूनां तृषं चिरोपनताम् । क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम् ॥ १० ॥ आस्वाद्य निर्विशेषं विरहिवधूनां मृदूनि मांसानि । करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनि ॥ ११ ॥ वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढपयोधराऽभूत् । पुष्पोद्गमोऽजायत मालतीनां बभूवुरस्पृश्यतमास्तटिन्यः ॥ १२ ॥ वसन्तविश्लेषमपारयन्त्या भुवो निदाघस्मरतापशान्त्यै । आशावयस्याभिरुदाह्रियन्ते पयोदनीलोत्पलपल्लवानि ॥ १३ ॥ घनोद्यमे गाढतमेऽन्धकारे न कोऽपि निर्णेतुमहः शशाक । स्पृशन्मुहुः किंतु करेण नाभीसरोजमाभीरकुला-

---

१ रङ्गपत्रीति 'महँदी' इत्यस्य नाम । २ लहरीलक्ष्मसाम्यात् 'लहर्यो' इति भाषायां सञ्ज्ञा । ३ दधाना । ४ 'बारुद' इत्यस्याग्नेयचूर्णेति सञ्ज्ञा । ५ वह्नियन्त्रस्यैव नालयन्त्रेति सञ्ज्ञा । ६ वर्षाकालिकात् पवनात् । ७ आकाशम् । ८ श्यामिमसाम्यात् । ९ ऊर्ध्वकण्ठं कुर्वन्ति । १० निर्गतो रतस्य ( रमण ) रङ्गः प्रसङ्गो यस्य सः । ११ नायकः । प्रोषितपतिकाया इदं वचनम् । १२ जलदः अदन्तश्च ।

धिनाथैः ॥ १४ ॥ कामेन कामं प्रहिता जवेन प्रावृट् चचाल त्रिजगद्विजेतुम् । किं चन्द्रबिम्बं दधि भक्षयन्ती संधारयन्ती हरितः शुभाय ॥ १५ ॥ निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारकायाः । धारानिपातैः सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररासे ॥ १६ ॥ सजलजलधरं नभो विरेजे विवृतिमियायै रुचिस्तडिल्लतानाम् । व्यवहितरतिविग्रहैर्वितेने जलगुरुभिः स्तनितैर्दिगन्तरेषु ॥ १७ ॥ परिसुरपतिसूनुधाम सद्यः समुपदधन्मुकुलानि मालतीनाम् । विरलमपजहार बद्धबिन्दुः सरजसतामवनेरपां निपातः ॥ १८ ॥ प्रतिदिशमभिगच्छताभिमृष्टः ककुभविकाससुगन्धिनाऽनिलेन । नव इव विबभौ स चित्तजन्मा गतधृतिराकुलितश्च जीवलोकः ॥ १९ ॥ व्यथितमपि भृशं मनो हरन्ती परिणतजम्बुफलोपभोगहृष्टा । परभृतयुवतिः स्वनं वितेने नवनवयोजितकण्ठरागरम्यम् ॥ २० ॥ अभिभवति मनः कदम्बवायौ मदमधुरे च शिखण्डिनां निनादे । जन इव न धृतेश्चचाल जिष्णुर्नहि महतां सुकरः समाधिभङ्गः ॥ २१ ॥ धृतबिसवलयावलिर्वहन्ती कुमुदवनैकदुकूलमात्तबाणा । शरदमलतले सरोजपाणौ धनसमयेन वधूरिवालम्बे ॥ २२ ॥ समदशिखिरुतानि हंसनादैः कुमुदवनानि कदम्बपुष्पवृष्ट्या । श्रियमतिशयिनीं समेत्य जग्मुर्गुणमहतां महते गुणाय योगः ॥ २३ ॥ सरजसमपहाय केतकीनां प्रसवमुपांतिकनीपरेणुकीर्णम् । प्रियमधुरसनानि षट्पदाली मलिनयति स्म विनीलबन्धनानि ॥ २४ ॥ मुकुलितमतिशय्य बन्धुजीवं धृतजलबिन्दुषु शाद्वलस्थलीषु । अविरलवपुषः सुरेन्द्रगोपा विकचपलाशचयश्रियं समीयुः ॥ २५ ॥ रटतु जलधरः पतन्तु धाराः स्फुरतु तडिन्मरुतोऽपि वान्तु शीताः । इयमुरसि महौषधीव कान्ता निखिलभयप्रतिघातिनी स्थिता मे ॥ २६ ॥ स्फुरदधीरतडिन्नयना मुहुः प्रियमिवागलितोरुपयोधरा । जलधरावलिरप्रतिपालितस्वसमयासमया जगतीधरम् ॥ २७ ॥ गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे । अभिससार न वल्लभमङ्गना न चकमे च कमेकरसं रहः ॥ २८ ॥ अनुययौ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् । धृतधनुर्वलयस्य पयोमुचः शबलिमा बलिमानमुषो वपुः ॥ २९ ॥ द्रुतसमीरचलैः क्षणलक्षितव्यवहिता विटपैरिव मञ्जरी । नवतमालनिभस्य नभस्तरोरचिररोचिररोचत वारिदैः ॥ ३० ॥ पटलमम्बुमुचां पथिकाङ्गना सपदि जीवितसंशयमेष्यती । सनयनाम्बुसखीजनसंभ्रमाद्विधुरबन्धुरबन्धुरमैक्षत ॥ ३१ ॥ प्रवसतः सुतरामुदकम्पयद्विदलकन्दलकम्पनलालितः । नमयति स्म वनानि मनस्विनीजनमनोनमनो घनमारुतः ॥ ३२ ॥ जलदपङ्क्तिरनर्तयदुन्मदं कलविलापि कलापिकदम्बकम् । कृतसमार्जनमर्दलमण्डलध्वनिजया निजया स्वनसंपदा ॥ ३३ ॥ नवकदम्बरजोऽरुणिताम्बरैरधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः । मनसि रागवतामनुरागिता नवनवा वनवायुभिरादधे ॥ ३४ ॥ शमिततापमपोढमहीरजः प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् । प्रविरलैरचलाङ्गनमङ्गनाजनसुगं न सुगन्धि न चक्रिरे ॥ ३५ ॥ द्विरदद‌न्तवलक्षमलक्ष्यत स्फुरितभङ्गमृगच्छवि केतकम् । घनघनौघविघट्टनया दिवः कृशशिखं शशिखण्डमिव च्युतम् ॥ ३६ ॥ दलितमौक्तिकचूर्णविपाण्डवः स्फुरितनिर्झरशीकरचारवः । कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् ॥ ३७ ॥ नवपयः-

---

१ गोपनन्दनः । वैकुण्ठनाथ इति भावः । २ आक्रन्दन्ते स्म । ३ प्राप । ४ कोकिला । ५ मयूराणाम् । ६ कदम्ब- । ७ हरितदूर्वा- । ८ 'इन्द्रगोप' इति भाषायाम् । ९ प्रफुल्लकिंशुकशोभाम् । १० अभिलषितवती । ११ नानावर्णशालिता । १२ विद्युत् । १३ मयूरवृन्दम् । १४ पुरन्ध्रीषु । १५ अनुकरणम् ।

कणकोमलमालतीकुसुमसंततिसंततसन्निभिः । प्रचलितोड्डुनिभैः परिपाण्डिमा शुभैरजोभरजो[1]ऽलिभिरादद ॥ ३८ ॥ निजरजः पटवासमिवाकिरद्धृतपटोपमवारिमुचां दिशाम् । प्रियवियुक्तवधूजनचेतसामनवनी[2] नवनीपवनावलिः ॥ ३९ ॥ प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः । प्रणयिनः परिरब्धुमथाङ्गना ववलिरे[3] वलिरेचितमध्यमाः ॥ ४० ॥ विगतरागगुणोऽपि जनो न कश्चलति वाति पयोदनभस्वति । अभिहितेऽलिभिरेवमिवोच्चकैरनृते[4] ननृते नवपल्लवैः ॥ ४१ ॥ प्रौढमौक्तिकरुचः पयोमुचां बिन्दवः कुटजपुष्पबन्धवः । विद्युतां नभसि नाट्यमण्डले कुर्वते स्म कुसुमाञ्जलिश्रियम् ॥ ४२ ॥ महीमण्डलीमण्डपीभूतपाथोधरारब्धहर्षासु वर्षासु सद्यः । कदम्बे प्रसूनं प्रसूने मरन्दो मरन्दे मिलिन्दो मिलिन्दे मदोऽभूत् ॥ ४३ ॥ उन्निद्रकन्दलदलान्तरलभ्यमानगुञ्जन्मदान्धमधुपे घनमेघकाले । स्वप्नेऽपि यः प्रवसति प्रविहाय कान्तां तस्मै विषाणरहिताय नमो वृषाय ॥ ४४ ॥ घन[5]समयमहीभृत्पत्तनस्याम्बरस्य त्रिभुवनपति[6]चापं गोपुरत्वं प्रपेदे । अपि विरसवचोभिः प्राप्तपङ्काभिषेकाः कुकवय इव भेकाः[7] खेदयन्ति स्म लोकान् ॥ ४५ ॥ घनतरघनवृन्दच्छादिते व्योम्नि लोके सवितुरथ हिमांशोः संकथैव[8] व्यरंसीत् । रजनिदिवसभेदं मन्दवाताः शशंसुः कुमुदकमलगन्धानाहरन्तः क्रमेण ॥ ४६ ॥ घनतरघनवृन्दच्छादिते व्योम्नि लोके सवितुरथ हिमांशोः संकथैव व्यरंसीत् । विरहमनुभवन्ती संगमं चापि भर्त्रा रजनिदिवसभेदं[9] चक्रवाकी शशंस ॥ ४७ ॥ अथ नभसि[10] निरीक्ष्य व्याप्तदिक्चक्रवालं सजलजलदजालं प्राप्तहर्षप्रकर्षः । विहितविपुलबर्हाडम्बरो नीलकण्ठो[11] मदमृदुकलकण्ठो नाट्यमङ्गीचकार ॥ ४८ ॥ अभिनवयवसश्रीशालिनि क्ष्मातलेऽस्मिन्नतिशयपरभागं भेजिरे जिष्णुगोपाः[12] । कुवलयशयनीये मुग्ध[13]मुग्धे[14]क्षणाया मणय इव विमुक्ताः कामकेलिप्रसङ्गात् ॥ ४९ ॥ मलिनहुतभुग्धूमश्यामैर्दिशो मलिना घनैरविरलतृणश्यामा भूमिर्नवोद्गतकन्दलैः । सुरतसुभगो[15] नूनं कालः स एष समागतो मरणशरणा[16] यस्मिन्नेते भवन्ति वियोगिनः ॥ ५० ॥ क्षपां[17] क्षामीकृत्य[18] प्रसभमपहृत्याम्बु सरितां प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् । क्व संप्रत्युष्णांशु[19]र्गत इति तदन्वेषणपरास्तडिद्दीपालोका दिशि दिशि चरन्तीव जलदाः[20] ॥ ५१ ॥ मेघाटोपैः स्तनितसुभगं वीक्ष्य खं हस्तिदन्तैः कृत्वा भित्तीरुपरिसदनं चामरैश्छादयित्वा । कर्पूरैस्ता मृगमदरसैर्भूमिमाल्येऽप्यशेत सैंहे चर्मण्युरसि दयिताबाहुरूढः पुलिन्दः ॥ ५२ ॥ उपैति घनमण्डली नदति नीलकण्ठावली तडिल्लसति सर्वतो वहति केतकीमारुतः । इतोऽपि यदि नागतः प्रियतमो नु मन्येऽधुना दधाति मकरध्वजस्त्रुटितशिञ्जि[21]नीकं धनुः ॥ ५३ ॥ दिशां हाराकाराः शमितशमभारा शमवतामसूचीसंचाराः कृतमदविकाराश्च शिखिनाम् । हृताध्वव्यापारास्तुहिनकणसारा विरहिणीमनःकीर्णाङ्गाराः किरति जलधारा जलधरः ॥ ५४ ॥ देवे वर्षत्यशनपचनव्यापृता वह्निहेतोर्गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः । नीध्रप्रान्तानविरलजलान्पाणिभिस्ताडयित्वा शूर्पच्छत्रस्थगितशिरसो योषितः

---

१ शुभपरागातिशयजन्यः । २ अरक्षिका । ३ संचेरुः । ४ सत्ये । ५ वर्षा- । ६ इन्द्रधनुः । ७ मण्डूकाः । ८ वृत्तान्तादिचर्चैव । ९ 'चक्रवाकी दिने एव पत्या रमते' इत्युक्तेः । १० श्रावणे मासि, आकाशे वा । ११ मयूरः, शिवश्च । १२ इन्द्र- । १३ अनिर्मुक्तबालभाव- । १४ सुन्दर- । १५ रमणीयः । १६ मरणं विना कष्टानिवृत्तेः । १७ रात्रिम् । १८ अल्पां विधाय । १९ सूर्यः । २० वर्षासु हि सूर्यादर्शनमिति तथा सम्भावनम् । २१ अन्यथा मदनार्त्त आगमिष्यत्येवेति भावः ।

संचरन्ति ॥ ९९ ॥ आकर्ण्य स्मरयौवराज्यपटहं जीमूत[1]धीरध्वनिं नृत्यत्केकिकुटुम्बकस्य[2] दधतं मन्दां मृदङ्गक्रियाम् उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चिता हर्षेणेव समुत्थिता वसुमती दध्रे शिलीन्ध्रध्वजान् ॥ ९६ ॥ वज्रेण त्रिजगत्पतेर्बल[3]रिपोरच्छिन्नपक्षाः पुरा ये भीता निममज्जुरब्धि-जठरे तांल्लूनपक्षान्गिरीन् । आश्वास्य व्रणदुःखजां शमयितुं तेषामुदग्रव्यथामुत्तस्थुर्जलदच्छलेन जल-धेरूर्ध्वेऽम्भसः पर्वताः ॥ ९७ ॥ मन्दं मुद्रितपांसवः परिपतज्झंकारिझञ्झामरुद्वेगध्वस्तकुटीर-काग्रनिपतच्छिद्रेषु लब्धान्तराः । कर्मव्यग्रकुटुम्बिनीकुचतटस्वेदच्छिदः प्रावृषः प्रारम्भे निपतन्ति कन्द-लदलोल्लासाः पयोबिन्दवः ॥ ९८ ॥ किंचिन्मुद्रितपांसवः शिखिकुलैरुत्कण्ठमालोकिता जीर्णावासरुद-द्दरिद्रगृहिणीश्वासानिलैर्जर्जराः । एते ते निपतन्ति नूतनघनप्रावृट्भरारम्भिणो विच्छायीकृतविप्रयुक्तवनिता वक्त्रेन्दवो बिन्दवः ॥९९॥ काले नीलबलाहके सतडिति प्रीतिप्रदे बर्हिणामाश्चर्यं कथयामि वः शृणुत भो यद्वृत्तमस्मद्गृहे । सौभाग्यव्ययशङ्कयैकशयने कान्ताप्रियाभ्यामहो मानिभ्यां बत रात्रिमेव सकलां चीर्णं प्रवासिव्रतम् ॥ ६० ॥ उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झानिलप्रेङ्खोलत्स्खलितेन्द्रनीलशकल-स्निग्धाम्बुदश्रेणयः । धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एवाधुना धर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥ ६१ ॥ आच्छन्ने शितितेजसी मनसिजव्यापारमेयं मनः स्वात्मा च द्वयमेतदस्ति दशमं द्रव्यं परेषां तमः । कालाकाशदिशां निरस्तमधुना नामापि वर्षागमे द्रव्यं वारिगुणश्च वारिदरवः कर्मापि वारिक्रियाः ॥ ६२ ॥ आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिङ्ग्यते । जालैः शीकरशीतलैश्च मरुतो रत्यन्तखेद-च्छिदो धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥ ६३ उद्योगः क्षयमेति हन्त सहसा जाड्यं समुज्जृम्भते मित्रस्यापि च दर्शनं भवति नो किं वाऽन्यदाचक्ष्महे । यल्लोकस्पृ-हणीयतां गतमभूत्तज्जीवनं व्यर्थतां प्राप्तं येन दुनोति तन्मम मनो दुर्दैववद्दुर्दिनम् ॥ ६४ ॥ सर्वप्रोद्गतकन्दला वसुमती वृद्धिर्जलानां परा जातं निष्कमलं जगत्तु मलिनैर्लब्धा घनैरुन्नतिः । सर्पन्ति प्रतिमन्दिरं द्विरसनाः संत्यक्तमार्गो जनो वर्षाणां च कलेश्च संप्रति जयत्येकैव राज्य-स्थितिः ॥ ६५ ॥ नैतद्वारिदगर्जितं रतिपतिप्रस्थानढक्कारवो नैते वारिधराः स्रवन्मदजलास्तत्सिन्धुराः प्रोद्धुराः । नैषा विद्युदियं विभाति रुचिरा तच्चन्द्रहासप्रभा मन्ये मानिनि मानदुर्गमधुना जेतुं किमायात्यसौ ॥ ६६ ॥ दृष्ट्वाऽऽडम्बरमम्बरे घनकृतं सौदामिनीनर्तकीनृत्यारम्भमृदङ्गमङ्गलरवं श्रुत्वा च तद्गर्जितम् । पुष्प्यत्पुष्पभरानताङ्गणतरुस्कन्धावसद्वायसकाणाकर्णनलसोत्सवप्रियतमं पान्था ययुर्मन्दि-रम् ॥ ६७ ॥ सद्मन्येव निरन्तरं निवसतिर्मित्राद्यनालोकनं पन्थाः पङ्कसमाकुलः कलुषतां वारां सदा दुर्दिनम् । एवं यद्यपि दूषणानि तदपि स्वर्भूजनोल्लासकृत्सस्योत्पत्तिनिमित्ततैकगुणतः प्रावृट् प्रपेदे यशः ॥ ६८ ॥

---

१ मेघ- । २ नृत्यन्मयूरगणस्य । ३ इन्द्रस्य । ४ श्यामैर्मेघैर्व्याप्त इति भावः । ५ मेघच्छन्न-तयाऽनिर्मलं दिनम् । ६ सूर्यस्यापि । ७ जलम् । प्राणा इति तु प्रतीतिमात्रम् । ८ अनुपयुज्य-मानत्वात् । ९ वारीणां,जडानां च । १० कमलानामदर्शनात् । कमलायाः,लक्ष्म्याः ( शोभायाः ) अदर्शनाच्च । ११ सर्पाः,पिशुनाश्च । १२ मार्गाणां पङ्कादिनाऽन्यथात्वात् । धर्ममर्यादानष्टत्वाच्च । १३ एकरूपैव । श्लेषेणाभिन्नाःमनोक्तत्वात् । १४ स्मरगजाः । १५ विद्युत्- । १६ विरहिणः ।

## दोलाक्रीडावर्णनम् ।

सौन्दर्यमिन्दीवरलोचनानां लोलासु दोलासु यदुल्ललास । यदि प्रसादाल्लभते कवित्वं जानाति तद्वर्णयितुं मनोभूः ॥ १ ॥ प्रसार्य पादौ विहितस्थितीनां दोलासु लोलांशुकपल्लवानाम् । मनोरथानामपि यन्न गम्यं तद्द्रष्टुमापुः सदृशां युवानः ॥ २ ॥ उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बबिम्बाः। दोलाविलासेन जितश्रमत्वात्प्रकर्षमापुः पुरुषायितेषु ॥३॥ दृशा विदधिरे दिशः कमलराजिनीराजिताः कृता हसितरोचिषा हरिति चन्द्रिकावृष्टयः । अकारि हरिणीदृशः प्रबलदण्डकप्रस्फुरद्वपुर्विपुलरोचिषा वियति विद्युतां विभ्रमः ॥ ४ ॥ प्रत्यासन्नमुखी कराम्बुजयुगप्रेङ्खोलिता प्रेङ्खिकामारुह्येयमुदस्तहारलतिकाव्याविद्धतुङ्गस्तनी । दृष्टादृष्टमुखा गतागतवशादालोलमानांशुका तन्वङ्गी गगने करोति पुरतः शार्तेह्रदं विभ्रमम् ॥ ५ ॥

## प्रावृट्कालिकमरुद्वर्णनम् ।

एते ते दुरतिक्रमक्रममिलद्घर्मोर्मिमर्मच्छिदः कादम्बेन रजोभरेण ककुभो रुन्धन्ति झञ्झानिलाः । गाढारम्भनिगूढनीरदघटासंघट्टनीलीभवद्व्योमक्रोडकटाहपातुकपयोवेणीकणग्राहिणः ॥ १ ॥ धाराधौतं धुनानाः शशधरधवलं केसरं केतकीनां कैलासे किंनरीणां चलदलकलतालास्यलीलां दधानाः । आमूलं मानिनीनां मनसि विनिहितं मानमुन्मूलयन्तो वान्त्येते वारिवाहव्यतिकरशिशिराः प्रावृषेण्याः समीराः ॥ २ ॥ गोकर्णं गाहमानाः पृथुतरपृषतग्राहिणः शंबरौघानाकर्षन्तो दिगन्तानपि च विदधतः कन्दलीसुप्रचारान् । एते धावन्ति वार्धश्रवसमुरुधनुर्धारयन्तः समन्तादावृण्वन्तोऽभ्रवीथीं वनमिव शबरभ्रान्तिभाजोऽम्बुवाहाः ॥ ३ ॥

## प्रावृषि विरहिणां वर्णनम् ।

उपरि पयोधरमाला दूरे दयिता किमेतदापतितम् । हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥ १ ॥ उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः । क्षितिरपि कन्दलधवला दृष्टिं पथिकः क पातयतु ॥ २ ॥ किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम् । इत्युदीक्ष्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम् ॥ ३ ॥ शिखिनि कूजति गर्जति तोयदे स्फुटति जातिलताकुसुमाकरे । अहह पान्थ न जीवति ते प्रिया नभसि मासि न यासि गृहं यदि ॥ ४ ॥ रसति तरुणीकेशश्यामे पयोभृति निर्भरं स्फुटति चपले वारंवारं क्षणद्युतितेजसि । उपगुरुजनं मन्ये दैन्यात्पराङ्मुखसुप्तया निभृतनिभृतं मन्दोच्छ्वासं तया बत रुद्यते ॥ ५ ॥ निशीथे लीनानां झटिति तडितां वीक्ष्य विषयं घनानामाभोगं रसिकपथिकेनोन्मुखदृशा । न गीतं सोत्कठं न च रुदितमुत्कण्ठतरलं न मुक्ता निःश्वासाः स्फुरदनुमतं किं तु हृदयम् ॥ ६ ॥ यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः । यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥ ७ ॥

---

१ दोलाम् । २ विद्युत्सम्बन्धिनम् । ३ कदम्बसम्बन्धिना । ४ कम्पयन्तः । ५ वर्षाकालिकाः । ६ पवनाः । ७ जल- । ८ श्रावणे । ९ मेघे । १० विद्युत्- । ११ अग्निकणानाम् । १२ ज्योतिरिङ्गणाः । १३ मदनरूपोऽग्निः ।

बर्हीं रौति बका रटन्ति तडितो भ्राम्यन्त्यतिव्याकुला विक्रोशन्ति घना घना च विलपत्युच्चैर्बलाकावलिः । आत्मानं मरुतः क्षिपन्ति सलिलासारः पतत्यग्रतो मुक्त्वा प्रावृषि साहसैकरसिके याति प्रियामध्वगे ॥ ८ ॥ नृत्यच्चन्द्रिकिणि क्वणन्मधुलिहि श्यामायमानक्षितौ धीरध्वानपयोमुचि प्रविलसत्सौदामनीदामनि । धाराम्भःकणवाहिशीतमरुति प्राणान्पयोदागमे हाहा हास्यति मुग्धिका नववधूरित्यध्वगः क्रन्दति ॥ ९ ॥ श्रुत्वा बालमृगीविलोलनयना शब्दं घनानां पुरा भीत्या वक्षसि संश्रितापि निबिडं भूयः समालिङ्गति । या वक्त्रादपहृत्य रोपितवती कण्ठे ममैवाननं सा द्रक्ष्यत्यधुना कथं नु विरहे बाला पयोदावलीम् ॥ १० ॥ रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया । आस्तां जीवितहारिणः प्रवसनालापस्य सङ्कीर्तनं मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥ ११ ॥ ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा । तेनोद्गीय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति॥ १२ ॥ भ्रातः पान्थ कुतो भवान्नगरतो वार्ता न वा वर्तते बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति । सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ॥ १३ ॥ धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं दीर्घोच्छ्वाससमुदश्रुणा विरहिणीं बालां चिरं ध्यायता । अध्वन्येन विमुक्तकण्ठकरुणं रात्रौ तथा क्रन्दितं ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्धा यथा ॥ १४ ॥ भ्रातः पान्थ प्रसीद प्रतिविरम समुत्सृज्य बालामकाण्डे गन्तुं बाष्पाम्बुपूरप्लुतनयनमुखीं प्रेयसीं ते न युक्तम् । वृत्तं ग्रामेऽतिकष्टं यदिह गृहपतेः प्रोषितस्य प्रियाया मुक्ताक्रन्दांस्तदेतान्सलिलवितरणे निर्गतान्पश्य बन्धून् ॥ १५ ॥ भद्रात्र ग्रामके त्वं वससि परिचयस्तेऽस्ति जानासिवार्तामस्मिन्नध्वन्यजाया जलधररसितोत्का न काचिद्विपन्ना । इत्थं पान्थः प्रवासावधि दिनविगमापायशङ्की प्रियायाः पृच्छन्वृत्तान्तमारात् स्थितनिजभवनोऽप्याकुलो न प्रयाति ॥ १६ ॥ आवासेऽस्मिन् विदग्धाः क्वचिदपि न विभो नापि निद्रोपभोग्यो योग्यत्वं स्रस्तरोऽस्था विलयमुपगता सम्मुखे विद्युदेषा । प्रोद्यंश्चायं पयोभृत् तदिति यदि रुचिर्नैशवासे तदास्स्वेत्युक्तः पान्थः सुदत्या हतमदनभयस्तत्रैव मुग्धोऽतिमुग्धः॥ १७ ॥

## प्रावृषि विरहिणीवर्णनम् ।

अदृष्टपूर्वमस्माभिर्यदेतद्दृश्यतेऽधुना । विषं विषधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥ १ ॥ सखि हे पश्य रसमयं जलधरसमयं समुन्नद्धम् । विलसति कापि बलाका कापि बलाका मुदं धत्ते ॥ २ ॥ शिशिरसीकरवाहिनि मारुते चरति शीतभयादिव सत्वरः । मनसिजः प्रविवेश वियोगिनीहृदयमाहितशोकहुताशनम् ॥ ३ ॥ एष्यन्त्यवश्यमधुना हृदया-

१ मेघाः । २ निबिडा । ३ पवनाः । ४ जलधाराप्रपातः । ५ मयूरनृत्यशालिनि । ६ मेघजालम् । ७ आवयोश्चेष्टाविज्ञाः । महान्तश्च । ८ पर्यङ्काद्यभावात्, रमणेतरोपयोगस्यानभिलषितत्वाच्च । ९ शास्त्रविश्वासः । आस्तरणसम्भावना च । १० तडित् तद्वत्प्रकाशमाना नायिका च । ११ असौ, वक्री च । १२ मेघः। कुचश्च अत्रैकवचनं श्लेषरक्षणाय । १३ सुन्दरः । १४ अतिमूढः विस्मृतगृहगमनत्वात् । १५ गरलम्, जलं च । १६ मेघैः ।

धि[1]नाथा मुग्धा मुधा कुरुत मा विविधं विलापम् । इत्थं शशंसुरिव गर्जितकैतवेन पाथोधराः[2] पथिकपङ्कजलोचनाभ्यः ॥ ४ ॥ आकर्णितानि[3] रसितानि[4] यया प्रसर्पत्प्रद्युम्न[5]राजरथनिस्वनसोदराणि । उच्चै रणच्चरणनूपुरया पुरन्ध्र्या[6] क्षिप्रं प्रियं कुपितयापि तयाऽभिसस्रे ॥ ५ ॥ प्रणतिभिरपि पत्युः प्रार्थनाभिश्च सख्याः क्षणमपि न मनस्तो मानिनी मानमौज्झत्[7] । तमसमशर[8]शस्त्रीभूतगानप्रकारः फणिन[9]मिव शिखण्डी[10] किं न खण्डीचकार ॥ ६ ॥ नभसि जलदलक्ष्मीं सास्रया वीक्ष्य दृष्ट्या प्रवससि यदि कान्तेत्यर्धमुक्त्वा कथंचित् । मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं तदनुकृतवती सा यत्र वाचो निवृत्ताः ॥ ७ ॥ विरमत घनाः किं वो वृष्ट्या मुधैव विसृष्टया व्रजत ककुभं कामप्यन्यां मनोरुचिरामतः । न तदिह वनं नासौ मार्गो न तच्च धरातलं विरहगलितैस्तन्व्या यन्न प्लुतं नयनाम्बुभिः ॥ ८ ॥ प्रसरदलकाकीर्णे कर्णे न केकिरुतं श्रुतं श्वसितविजितो वातो घ्रातो न वा कुटजोत्कटः । न च परिचितासावासंपत्स्नुताश्रुणि लोचने तदपि किमपि प्रावृट्[11]श्यामा धुनोति वियोगिनीः ॥ ९ ॥ मेघैर्व्योम नवाम्बुभिर्वसुमती विद्युल्लताभिर्दिशो धाराभिर्गगनं वनानि कुटजैः पूरैर्वृता निम्नगाः[12] । एकां घातयितुं वियोगविधुरां दीनां वराकीं स्त्रियं प्रावृट्काल हताश वर्णय कृतं मिथ्या किमाडम्बरम् ॥ १० ॥ वाता वान्तु कदम्बरेणुशबला नृत्यन्तु सर्पद्विषः[13] सोत्साहा नववारिगर्भगुरवो मुञ्चन्तु नादं घनाः । मग्नां कान्तवियोगशोकजलधौ मां वीक्ष्य दीनाननां विद्युत्किं स्फुरसि त्वमप्यकरुणे स्त्रीत्वे समाने सति ॥ ११ ॥ अम्भोवाहमुरद्विषो निवसनं ध्वान्ताद्रिदिव्यौषधी कन्दर्पस्य विलासचम्पकधनुर्वर्षालतामञ्जरी । लेखा व्योमकषोपले विरचिता चामीकरस्य स्फुरद्धाम्नः पन्थविलासिनीजनमनःकम्पाय शम्पा[14]ऽभवत् ॥ १२ ॥ श्रुत्वा तन्व्या निशीथे नवघनरसितं विश्लथाङ्गं पतित्वा शय्यायां भूमिपृष्ठे करतलधृतया दुःखितालीजनेन । सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटाघातशीर्णाश्रुबिन्दु स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा ॥ १३ ॥

## ज्योतिरिङ्गणवर्णनम् ।

प्राचीमहीधर[15]शिलाविनिवेशितस्य धाराधरस्फुरदयोघनताडितस्य । तप्तायसस्य तपनस्य[16] कणा विकीर्णाः खद्योतपोतसुषमां स्फुटमावहन्ति ॥ १ ॥

## प्रावृषि मरालचेष्टितम् ।

तटमुपगतं पद्मे पद्मे निवेशितमाननं प्रतिपुटकिनीपत्रच्छायां मुहुर्मुहुरासितम् । मुहुरुपगतैरस्रैः कोष्णीकृता जलवीचयो जलदमलिनां हंसेनाशां विलोक्य पिपासता ॥ १ ॥ हन्तेयं परितः प्रसारिततमःपुञ्जा पयोदावली गर्जन्ती पुरतः पिशाचदयिताकाराऽऽगता दृश्यते । तस्मान्नात्र सुखाय हन्त वसतिः स्यादित्यतिव्याकुलो हंसो[17] याति विहाय सर्वकरणो[18]द्योगं निजं मानसम्[19] ॥ २ ॥

---

१ प्रियाः । २ मेघाः । ३ श्रुतानि । ४ शब्दाः । ५ कामदेव- । ६ सुन्दर्या । ७ मुमोच । ८ कन्दर्प- । ९ सर्पम् । १० मयूरः । ११ अत्र प्रावृषः सपत्नीत्वं व्यज्यते । एकस्याः सौभाग्येऽन्यस्या ईर्ष्ययाऽध्युज्ज्वलनं हि स्थितम् । श्यामेति पदम् असितकान्तिपरं नायिकाविशेषपरं च । १२ नद्यः । १३ मयूराः । १४ विद्युत् । १५ उदयाद्रि- । १६ सूर्यस्य । १७ मरालः, जीवश्च । १८ कार्येन्द्रिय- । १९ सरोवरविशेषम् । मनश्च ( शोकमुद्रां च ) ।

## शारदशोभाऽऽशंसनम् ।

शरसामर्थ्यं शरदि स्मरवीरयोर्जितं पश्य । अप्याजगाम सोऽयं कन्यां भोक्तुं त्विषां नाथः ॥ १ ॥ गोधूमसर्पिर्यवमुद्गधान्यं रक्तस्रुती रेचनमस्ति मान्यम् । हंसोदकं तिक्तकषायमिष्टं घनान्तकाले लघु दुग्धमिष्टम् ॥ २ ॥ अहो बाणस्य सन्धानं शरदि स्मरभूपतेः । अपि सोऽयं त्विषामीशः कन्याराशिमुपागतः ॥ ३ ॥ अपीतक्षीबकादम्बमसंसृष्टामलाम्बरम् । अप्रसादितसूक्ष्माम्बु जगदासीन्मनोरमम् ॥ ४ ॥ अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा । कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥ ५ ॥ वधूनयननिर्जितं मधुपकैतवान्नीरजं शिवाक्षवलयं दधन्मुखरितं तदुद्धुजितैः । विधाय तपसि स्थितिं वननिवासि पीतातपं जयाय जपति ध्रुवं कमपि मन्दमन्दं मनुम् ॥ ६ ॥ नारीनयननिराकृतमम्बुजमम्भसि निमज्जति त्रपया । मधुलुब्धाः पुनरलयः करुणं क्रन्दन्ति गुञ्जितव्याजात् ॥ ७ ॥ स्त्रीमुखकमलेन बलाद्विलुलितकमलं सखे कमलम् । अश्रूणि मुञ्चति रयादमन्दमकरन्दकैतवतः ॥ ८ ॥ विधुवदनावदनजितं प्रबोधितमपि प्रसह्य मित्रेण । विचिनोति कवलनार्थं पद्ममलिच्छद्मतो गरलम् ॥ ९ ॥ मधुमाविताशयानां सत्यपमानेऽपि नैव निर्वेदः । जीवनरुचि पश्याब्जं न्यक्कृतमपि नागरीनयनैः ॥ १० ॥ दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः । नवसंगमसव्रीडा जघनानीव योषितः ॥ ११ ॥ एकेन चुलकेनाब्धिर्निपीतः कुम्भजेन यत् । तस्योदयेऽन्तःकालुष्यं त्यजन्त्यापो भयादिव ॥ १२ ॥ पाथोदजालजटिलं मलिनं शरदङ्गना । अम्बरं धावयामास चन्द्रिकाचयवारिभिः ॥ १३ ॥ धन्याः शरदि सेवन्ते प्रोल्लसच्चित्रशालिकान् । प्रासादान्स्त्रीसखाः पौराः केदारांश्च कृषीवलाः ॥ १४ ॥ नमिताः फलभारेण नमिताः शालमञ्जरीः । केदारेषु हि पश्यन्तः के दारेषु विनिस्पृहाः ॥ १५ ॥ हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा । विमलाः कुमुदानीव तारकाः शरदागमे ॥ १६ ॥ राजीवमिव राजीवं जलं जलमिवाजनि । चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे ॥ १७ ॥ काशाः क्षीरनिकाशा दधिशरवर्णानि सप्तपर्णानि । नवनीतनिभश्चन्द्रः शरदि च तक्रप्रभा ज्योत्स्ना ॥ १८ ॥ द्वयमिदमत्यन्तसमं नीचप्रभविष्णुता शरच्चेयम् । क्षेत्रेभ्यः प्राप्य फलं खलेषु निःक्षिप्यते यस्याम् ॥ १९ ॥ अथ प्रसन्नेन्दुमुखी सिताम्बरा समाययावुत्पलपत्रलोचना । सपङ्कजा श्रीरिव गां निषेवितुं सहंसबालव्यजना शरद्वधूः ॥ २० ॥ समुल्लसत्पङ्कजलोचनेन विनोदयन्ती तरुणानशेषान् । शुद्धाम्बरा गुप्तपयोधरश्रीः शरन्नवोढेव समाजगाम ॥ २१ ॥ पयोदकेशेषु विकृष्य रोषान्निष्कास्य सा कोकनदायताक्षी । वर्षावधूं स्वां श्रियमुन्नयन्ती प्रौढा सपत्नीव शरत्प्रकाशे ॥ २२ ॥ चन्द्रायते शुक्लरुचाऽपि हंसो हंसायते चारुगतेन कान्ता । कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥ २३ ॥ ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् । प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥ २४ ॥ उपैति सस्यं परिणामरम्यतां

---

१ बाणप्रहारः- । २ राशिविशेषं, पुत्रीं च । ३ कान्तीनां, नारीविशेषाणां च । बहुवचनं च कन्योपभोगानौचित्यद्योतनाय । ४ पतिः, सूर्यश्च । ५ 'कुम्भस्थं किरणैः कठोरमहसः संतप्तमह्नि क्षपाप्राणेशस्य करैर्हिमं निशि जलं जायेत हंसोदकम् ।' इति त्रिमल्लाभिहितम् । ६ जल- । अरण्य- । ७ मन्त्रम् । ८ अभिभूतलक्ष्मीकम् । ९ सुहृदा सूर्येण च । १० जल- । प्राणन- । ११ मेघ- । १२ वस्त्रम्, आकाशं च ।

नदीरनौद्धत्यमपङ्कता महीम् । नवैर्गुणैः संप्रति संस्तवस्थिरं तिरोहितं प्रेम घनागमश्रियः ॥ २५ ॥ पतन्ति नास्मिन्विशदाः पतत्रिणो जितेन्द्रचापा न पयोदपङ्क्तयः । तथापि पुष्णाति नभः श्रियं परां न रम्यमाहार्यमपेक्षते गुणम् ॥ २६ ॥ विपाण्डुभिर्ग्लानतया पयोधरैश्च्युता-चिराभागुणहेमदामभिः । इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते ॥ २७ ॥ विहाय वाञ्छामुदिते मदात्ययादरक्तकण्ठस्य रुते शिखण्डिनः । श्रुतिः श्रयत्युन्मदहंसनिःस्वनं गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥ २८ ॥ अमी पृथुस्तम्बभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः । विकासि वप्राम्भसि गन्धसूचितं नमन्ति निघ्रातुमिवासितोत्पलम् ॥ २९ ॥ विहारभूमेरभिघोषमुत्सुकः शरीरजेभ्यश्च्युतयूथपङ्क्तयः । असक्तमूधांसि पयः क्षरन्त्यमूरुपायनानीव नयन्ति धेनवः ॥ ३० ॥ जगत्प्रसूतिर्जगदेकपावनी व्रजोपकण्ठं तनयैरुपेयुषी । द्युतिं समग्रां समितिर्गवामसावुपैति मन्त्रैरिव संहिताहुतिः ॥ ३१ ॥ कृतावधानं जितबर्हिणध्वनौ सुरक्तगोपी-जनगीतनिःस्वने । इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥ ३२ ॥ असावनास्थापरयाऽवधीरितः सरोरुहिण्या शिरसा नमन्नपि । उपैति शुष्यन्कलमः सहाम्भसा मनोभुवा तप्त इवाभिपाण्डुताम् ॥ ३३ ॥ अमी समुद्धूतसरोजरेणुना हृताहृतासारकणेन वायुना । उपागमे दुश्चरिता इवापदां गतिं न निश्चेतुमलं शिलीमुखाः ॥ ३४ ॥ मुखैरसौ विद्रुमभ-ङ्गलोहितैः शिखाः पिशङ्गीः कलमस्य बिभ्रती । शुकावलिर्व्यक्तशिरीषकोमला धनुःश्रियं गोत्र-भिदोऽनुगच्छति ॥ ३५ ॥ ददतमन्तरिताहिमदीधितिं[१] खगकुलाय कुलायनिलायिताम् । जल-दकालमबोधकृतं दिशामपरथाऽऽप रथाङ्गयवायुधः ॥ ३६ ॥ स विकचोत्पलचक्षुषमैक्षत क्षिति-भृतोऽङ्कगतां दयितामिव । शरदमच्छगलद्वसनोपमाक्षमघनामघनाशनकीर्तनः ॥ ३७ ॥ जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः । जलजराजिषु नैद्रमदिद्रवन्न महतामहताः क च नारयः ॥ ३८ ॥ समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् । शरदि हंसरवाः परुषीकृतस्वरमयूरमयूं रमणीयताम् ॥ ३९ ॥ तनुरुहाणि पुरोविजितध्वनेर्धवलपक्षविह-ङ्गमकूजितैः । जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥ ४० ॥ अनुवनं वनरा-जिवधूमुखे बहलरागजवाधरचारुणि । विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ४१ ॥ कनकभङ्गपिशङ्गदलैर्दधे सरजसारुणकेसरचारुभिः । प्रियविमानितमानवतीरुषां निरसनैरसनैरवृथार्थता ॥ ४२ ॥ मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशां यतः । धृतनवातपमुत्सु-कतामतो न कमलं कमलम्भयदम्भसि ॥ ४३ ॥ विगतसस्यजिघत्समघट्टयत्कलम-गोपवधूर्न मृगव्रजम् । श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ४४ ॥ कृतमदं निगदन्त इवाकुलीकृतजगत्त्रयमूर्जमतङ्गजम् । बवुरयुक्छदगुच्छसुगन्धयः सततगाः स्ततगानगिरोऽलिभिः ॥ ४५ ॥ तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः । तोयं प्रसीदति मुनेरिव चित्तवृत्तिः कामं दरिद्र इव शोषमुपैति पङ्कः ॥ ४६ ॥ आसादितप्रकटनिर्मलचन्द्रहासः[१३] प्राप्तः शरत्समय एष विशुद्धकान्तः[१४] । उत्खाय

---

१ कृत्रिमम् । २ अरमणीयस्वरस्य । ३ गोस्थानसमीपे । ४ तिरस्कृतः । ५ धान्यविशेषः । ६ सूर्यम् । ७ चक्रपाणिः । ८ अविनष्टाः । ९ प्रापुः । १० शत्रुकृताः । ११ अलम्भयदिति च्छेदः । १२ पवनाः । १३ चन्द्रप्रकाशः । खड्गश्च । १४ विशुद्धश्चासौ कान्तः, विशुद्धत्वं मेघमालिन्या-भावात्, तत एव रमणीयत्वम् । तथा-विशुद्धा सती, कान्ता- सीता, यस्य सः ।

गाढतमँसं घनकालमुग्रं रामो दशास्यमिव संभृतबन्धुजीवः[2] ॥ ४७ ॥ वृद्धाङ्गनेव विजहौ सरिदुद्धतत्वं वेदान्तिनामिव मनः शुचि नीरमासीत् । चन्द्रे प्रभा युवतिवक्त्र इवाद्भुताभूद्विद्वत्कवित्वमिव केकिरुतं न रेजे ॥ ४८ ॥ मधुमधुरिमभङ्गीं भेजिरे हंसनादास्तुहिनपटललीलां लेभिरे वारिवाहाः । क्षितिरभवपदपङ्का किं च रोलम्बबालावलिकलितनलिन्यः शैवलिन्यस्तदासन् ॥ ४९ ॥ स्फुटं स्फुटपलाशवत्सुभगभासि चञ्चूपुटे विपाककपिशीकृताः कलमम‍ञ्जरीर्बिभ्रती । बभौ दिवि शुकावलिः कुवलयच्छविर्जङ्गमा स्वभावहृदयंगमा विबुधचापलक्ष्मीरिव ॥ ५० ॥ अपाकृत्याशेषाण्यपि च घनजालानि परितस्तमोधूमस्तोमोद्भवमलिनिमानं च तदनु । शरच्चन्द्रः शिल्पी रतिपतिमुदेऽसौ निजकरैः सुधासंदोहार्द्रैर्भुवनभवनं पाण्डुरयति ॥ ५१ ॥ रम्यं हर्म्यतलं नवाः सुनयना गुञ्जद्विरेफा लताः प्रोन्मीलन्नवमालतीसुरभयो वाताः सचन्द्राः क्षपाः । यद्येतानि जयन्ति हन्त परितः शस्त्राण्यमोघानि मे तद्भोः कीदृगसौ विवेकविभवः कीदृक्प्रबोधोदयः ॥ ५२ ॥ अर्धे सुप्तो निशायाः सरभससुरतायाससन्नश्लथाङ्गः प्रोद्भूतासह्यतृष्णो मधुमदविरतौ हर्म्यपृष्ठे प्रबुद्धः । संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो ज्योत्स्नाभिन्नाच्छधारं न पिबति सलिलं शारदं मन्दपुण्यः ॥ ५३ ॥ चेतः कर्षन्ति सप्तच्छदकुसुमरसासारसौरभ्यलुभ्यद्भृङ्गीसंगीतभङ्गिश्रुतिसुभगदिशो वासराः शारदीनाः । किं च व्याकोशपङ्केरुहमधुरमुखीं संचरच्चञ्चरीकश्रेणीवेणीसनाथां रमयति तरुणः पद्मिनीमंशुमाली ॥ ५४ ॥

## मधुकरकेलिवर्णनम्।

अलक्षितकुचाभोगं भ्रमन्ती नृत्यभूमिषु । स्मरेणापि सरोजाक्षी न लक्ष्यीक्रियते शरैः ॥ १ ॥ भ्रमात्प्रकीर्णे भ्रमरीषु किंचिच्चेलाञ्चले चञ्चललोचनायाः । कुचौ कदाचिज्जघनं युवानो विलोक्य साफल्यमवापुरक्ष्णोः ॥ २ ॥ परिभ्रमन्त्या भ्रमरीविनोदे नितम्बबिम्बाद्विगलद्दुकूलम् । विलोक्य कस्याश्चन कोमलाङ्ग्याः पुंभावमन्याः सुदृशो बवाञ्छुः ॥ ३ ॥ यतो यतः षट्चरणोऽभिवर्तते ततस्ततः प्रेरितलोललोचना । विवर्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम् ॥ ४ ॥ करौ धुनाना नवपल्लवाकृती वृथा कृथा मानिनि मा परिश्रमम् । उपेयुषी कल्पलताभिशङ्कया कथं न्वितस्त्रस्यति षट्पदावलिः ॥ ५ ॥ चेलाञ्चलेन चलहारलताप्रकाण्डैर्वेणीगुणेन च चलद्वलयीकृतेन । हेलाँहितभ्रमरकभ्रममण्डलीभिश्छत्रत्रपां रचयतीव चिरं नतभ्रूः ॥ ६ ॥ मुक्ते काञ्चनकुण्डले निपतिते माणिक्यभूषामणौ कीर्णे केलिसरोरुहे विगलिते मुक्ताकलापे सति । निःश्वस्याम्बुजलोचनाभ्रमरिकानृत्यावसाने पुनः प्राणेशच्युतिशङ्कयेव हृदये हस्तारविन्दं ददौ ॥ ७ ॥

## शरदि पवनः।

वान्ति रात्रौ रतिक्लान्तकामिनीसुहृदोऽनिलाः । ललनालोलधम्मिल्लमल्लिकामोदवासिताः ॥ १ ॥ वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः । वाता नवरतग्लानवधूगमनमन्थराः ॥ २ ॥ रतिश्रमं दूरतरं नयन्तः प्रामोदसम्भारमुदाहरन्तः । सीत्कारशिक्षां परिवर्धयन्तः प्रवान्ति नद्याः पवनाः समन्तात् ॥ ३ ॥

---

१ गाढं तमः-तिमिरम्, अज्ञानं च यत्र यस्य वेति तम् । २ बन्धुजीवेति पुष्पविशेषनाम । बन्धवो, वानरादयः, जीवाः अन्ये प्राणिनश्च । ३ अरसिक- । ४ पत्र- । ५ धान्यविशेष- । ६ श्रोणीदेशात् । ७ भावविशेष- । ८ कमलविशेष- । ९ सप्तपर्णाख्यतरु- ।

## शरदि पान्थावस्थानिदर्शनम् ।

पङ्कानुषङ्गं पथि विस्मरन्तः कथावशेषे च पयोदवृन्दे । मार्गेषु चन्द्रातपपिच्छिलेषु पदे पदे चस्खलुरध्वनीना[1]ः ॥ १ ॥ इह निचुले[2]निकुञ्जे वंशसंभारभाजि स्वपिषि यदि मुहूर्तं पश्यति क्षेत्र[3]मेतत् । इति पथिकमकस्मान्मार्ग एवोपविष्टं वदति तरुणकान्तं गोपिका साङ्गभङ्गम् ॥ २ ॥

## हेमन्तशोभानिदर्शनम् ।

हेमन्तहिमनिष्पन्दमवलोक्य मनोभवम् । प्रहर्तुं सुभ्रुवां चेतो रविर्देवो धनुर्दवौ ॥ १ ॥ दुराशेव दरिद्रस्य तृष्णेव कृपणस्य च । अहो न विरमत्येषा हन्त हेमन्तयामिनी ॥ २ ॥ हेमन्ते बहुदोषाढये द्वौ गुणौ सर्वसंमतौ । अयत्नशीतलं वारि सुरतं स्वेदवर्जितम् ॥ ३ ॥ भ्रमति हिमानी सैन्ये विमुक्तदैन्ये जिगीषया जगतः । भयविह्वलमौष्ण्यमिदं तरुणीस्तनदुर्गमाश्रयति ॥ ४ ॥ हेमन्तकालेऽत्र वियोगिकाले[4] शीतस्य रुक् पश्य न तस्य यस्य । अङ्के हसन्ती[5] दयिता हसन्ती[6] पार्श्वे हसन्ती[7] वसनानि सन्ति ॥ ५ ॥ यो धातुमश्नाति सकृद्धिमर्तौ तं नैव शीतं व्यथते कदाऽपि । गृह्णन्ति याः प्रत्यहमेव धातुं स्त्रीणां कुतः स्याद्बत शीतबाधा ॥ ६ ॥ हे हेमन्त स्मरिष्यामि त्वय्यतीते गुणद्वयम् । अयत्नशीतलं वारि निशाश्च सुरतक्षमाः ॥ ७ ॥ हसन्तीं[8] वा हसन्तीं वा हसन्तीं वामलोचनाम् । हेमन्ते ये न सेवन्ते ते नूनं दैववञ्चिताः ॥ ८ ॥ कामिनो हन्त हेमन्तनिशि शीतज्वरातुराः । जीवन्ति हरिणाक्षीणां वक्षोजाश्लेषरक्षिताः ॥ ९ ॥ अद्य शीतं वरीवर्ति सरीसर्ति[9] समीरणः । अपत्नीको[10] मरीमर्ति नरीनर्ति कुचोष्मवान्[11] ॥ १० ॥ हिमधवलदन्तकेशी मन्दद्युतितारका बृहत्तिमिरा । द्विगुणीभूता रजनी वृद्धेव शनैः शनैर्याति ॥ ११ ॥ अम्बरमेष रमण्यै यामिन्यै वासरः प्रेयान् । अधिकं ददौ निजाङ्गादथ संकुचितः स्वयं तस्थौ ॥ १२ ॥ विकसति सूर्ये विकसति मुकुलति चास्तं गते तस्मिन् । शिशिरे निःस्व[12]कुटुम्बः पङ्कज[13]लीलां समुद्वहति ॥ १३ ॥ कन्या[14]प्रसूतस्य धनु[15]ष्प्रसङ्गादङ्गा[16]धिकासादितविक्रमस्य । धनञ्जया[17]धीनपराक्रमस्य हिमस्य कर्ण[18]स्य च को विशेषः ॥ १४ ॥ अलं हिमानीपरिदीर्णगात्रः समापितः फाल्गुन[19]संगमेन । अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा[20] भीष्मो[21] महात्माजनि माघतुल्यः ॥ १५ ॥ अविरलफलिनीवनप्रसूनः कुसुमितकुन्दसुगन्धिगन्धवाहः । गुणमसमयजं चिराय लेभे विरलतुषारकणस्तुषारकालः ॥ १६ ॥ निचयिनि लवली[22]लताविकासे जनयति लोध्रसमीरणे[23] च हर्षम् । विकृतिमुपययौ न पाण्डुसूनुश्चलति नयान्न जिगीषतां हि चेतः ॥ १७ ॥ कतिपयसहकारपुष्परम्यस्तनुतुहिनोऽल्पविनिद्र[24]सिन्धुवारः ।

---

१ पथिकाः । २ वेतस- । ३ धान्यवपनस्थानम् । ४ वियोगिनां काले-मारके । ५ स्मयमाना । ६ देदीप्यमाना । ७ 'अगीठी' इति ख्याता अङ्गारधानिका । ८ अगीठी सोड 'हँसती हुई' इत्यर्थका अत्र हसन्तीशब्दाः । ९ अतिशयेन सरति । १० वियोगीति भावः । ११ कान्तावक्षसा परिष्वक्त इति भावः । १२ दरिद्र- । १३ कमलसाम्यम् । १४ कन्याराशौ जन्म धृतवतः, कानीनस्य च । १५ धनूराशिसङ्क्रमणवशात् । धनुर्विद्याऽऽसादनाच्च । १६ शरीरदेशविशेष- । १७ अग्नि- । मध्यमपाण्डव- । १८ राधेयस्य । १९मासविशेष-- । अर्जुनाख्यपाण्डव- । २० इष्टवह्निः, अभिमतवासुदेवमार्गः । २१ भयावहः शान्तनवश्च । २२ लवङ्ग- । २३ सुगन्धितपुष्पविशेष- । २४ पुष्पित- ।

सुरभिमुखहिमागमान्तशंसी समुपययौ शिशिरः स्मरैकबन्धुः ॥ १८ ॥ गजपतिद्वयसीरपि हैमनस्तुहिनयन्सरितः पृषतां पतिः । सलिलसंततिमध्वगयोषितामतनुतातनुतापकृतं दशाम् ॥ १९ ॥ इदमयुक्तमहो महदेव यद्वरतनोः स्मरयत्यनिलोऽन्यदा । स्मृतसयौवनसोष्मपयोधरान्सतुहिनस्तुहिनस्तु वियोगिनः ॥ २० ॥ प्रियतमेन ययौ सरुषा स्थितं न सहसा सहसा परिरभ्य तम् । श्लथयितुं क्षणमक्षमताङ्गना न सहसा सहसा कृतवेपथुः ॥ २१ ॥ भृशमदूयत या धरपल्लवक्षतिरनावरणा हिममारुतैः । दशनरश्मिपटेन च सीत्कृतैर्निवसितेन शितेन शुनिर्ववौ ॥ २२ ॥ व्रणभृता सुतनोः कलसीत्कृतस्फुरितदन्तमरीचिमयं दधे । स्फुटमिवावरणं हिममारुतैर्मृदुतया दुतं-याधरलेखया ॥ २३ ॥ धूततुषारकणस्य नभस्वतस्तरुलताङ्गुलितर्जनविभ्रमाः । पृथुनिरन्तरमिष्टभुजान्तरं वनितयानितया न विषेहिरे ॥ २४ ॥ हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि । प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥ २५ ॥ प्रालेयशैलशिखरानिलसंप्रयोगः प्रोत्फुल्लकुन्दमकरन्दहृतालिवृन्दः । कालोऽयमातपति कुङ्कुमपङ्कपिङ्गप्रोत्तुङ्गरम्यरमणीकुचसङ्गयोग्यः ॥ २६ ॥ शुकहरितयवानां सीम्नि नीहारभासः सपदि विगतनिद्राक्रौञ्चकान्ताः क्षपन्ति । विदधति कमनीयक्वाणमुत्ककारं सरलितगलनालं जर्जरस्फाररेफम् ॥ २७ ॥ लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकलमपलालस्रस्तरे सोपधाने । परिहरति सुषुप्तं हालिकद्वन्द्वमारात्कुचकलशमहोष्मावद्धरेखस्तुषारः ॥ २८ ॥ अपि दिनमणिरेष क्लेशितः शीतसंवैरथ निशि निजभार्यां गाढमालिङ्ग्य दोर्भ्याम् । स्वपिति पुनरुदेतुं सालसाङ्गस्तु तस्मात्किमु न भवतु दीर्घा हैमिनी यामिनीयम् ॥ २९ ॥ जरीजृम्भत्प्रौढधुमणिकरसंदोहसदृशस्फुरद्दीप्तिव्रातप्रगुणतरतारुण्यसुभगाम् । हसन्तीं हेमन्ते परिजनयुतां वा सुवदनां हसन्तीं सेवन्ते परिणतमहाभाग्यनिचयाः ॥ ३० ॥ वेपन्ते कपयो भृशं कृतजडं गोजाविकं ग्लायति श्वा चुल्लीकुहरोदरं क्षणमपि प्राप्यापि नैवोज्झति । शीतार्तिव्यसनातुरः पुनरसौ दीनो जनः कूर्मवत्स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति ॥ ३१ ॥ शीतांशोरिव नूतनस्य रुचयो विद्या इवामेधसां विप्रातिकमिणां विभूतय इव क्षीबस्य बोधा इव । भावैः संवलिता इव प्रियतमे दृग्भङ्ग्यः सुभ्रुवां प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥ ३२ ॥ लज्जाप्रौढमृगीदृशामिव नवस्त्रीणां रतेच्छा इव स्वैरिण्या नियमा इव स्मितरुचः कुल्याङ्गनानामिव । दंपत्योः कलहा इव प्रणयितो वाराङ्गनानामिव प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥ ३३ ॥ हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः काश्मीरद्रवलिप्तचारुवपुषः खिन्ना विचित्रै रतैः । वृत्तोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ३४ ॥ चक्रे चण्डरुचा समं रणमसौ हेमन्तपृथ्वीपतिर्ये ये तत्र जिता दिवाकरकरास्ते तेऽमुना तत्क्षणात् । कान्तानां कुचभूधरे निदधिरे मन्येऽहमेवं तदा नो चेन्मन्दकरः कथं दिनकरस्तत्पश्च तन्वीस्तनः ॥ ३५ ॥ प्रोद्यत्प्रौढारविन्दद्युतिभृति विदलत्कुन्दमाद्यद्द्विरेफे काले प्रालेयवातप्रबलविकसितोद्दाममन्दारदाम्नि । येषां नो कण्ठलग्ना क्षणमपि तुहिनक्षोददक्षा मृगाक्षी तेषामायामियामा यमसदनसमा यामिनी याति नूनम् ॥ ३६ ॥

---

१ सन्तप्तया । २ हिमालय- । ३ प्रभाते । ४ शब्द- । ५ उद्दीप्यमानसूर्य- । ६ अग्न्याधानीम् । ७ छिद्र- । ८ मूढानाम् । ९ हेमन्तसम्बन्धिनः । १० प्रशस्तकुलोत्पन्न- । ११ प्रेमित्वम् । १२ सूर्येण ।

## कन्दुकखेलावर्णनम् ।

पयोधराकारधरो हि कन्दुकः करेण रोषादिव ताड्यते मुहुः । इतीव नेत्राकृति भीतमुत्पलं तस्याः प्रसादाय पपात पादयोः ॥ १ ॥ वनिताकरतामरसाभिहतः पतितः पतितः पुनरुत्पतसि । विदितं खलु कन्दुक ते हृदयं वनिताधरसंगमलुब्धमिव ॥ २ ॥ सानन्दकन्दुकविहारविधौ वधूनां दोलायमानमणिकङ्कणनिक्वणेन । उड्डायितेषु युवचित्तविहंगमेषु श्येना इव स्मृतिभुवो विशिखा विलग्नाः ॥ ३ ॥ स्मरशरधिनिकाशं कर्णपाशं कृशाङ्गी रयविगलिततालीपत्रताटङ्कमेकम् । वहति हृदयचोरं कुङ्कुमन्यासगौरं वलयितमिव नालं लोचनेन्दीवरस्य ॥ ४ ॥ अमन्दमणिनूपुरक्वणनचारुचारिक्रमं झणज्झणितमेखलास्खलिततारहारच्छटम् । इदं तरलकङ्कणावलिविशेषवाचालितं मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडनम् ॥ ५ ॥ भ्रमच्चरणपल्लवक्वणदमन्दमञ्जीरकं परिस्खलदुरोरुहस्तबककम्पमानांशुकम् । रणत्कनकमेखलं करसरोरुहाभ्यां पुरः पतन्तमपराऽऽददे कुसुमकन्दुकं सुन्दरी ॥ ६ ॥ वक्त्रश्रीजितलज्जितेन्दुमलिनं कृत्वा करे कन्दुकं व्रीडाकौतुकमिश्रभावमनया तिर्यग्वहन्त्याननम् । भृङ्गाग्रग्रहकृष्णकेतकदलस्पर्धावतीनां दृशां दीर्घापाङ्गतरङ्गकैणसुहृदां कोऽप्येव पात्रीकृतः ॥ ७ ॥ व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि प्रेङ्खत्कुण्डलशोभिगण्डयुगलं प्रस्वेदिवक्त्राम्बुजम् । शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया यस्मात्कन्दुक सादरं सुभगया संसेव्यसे तत्कृती ॥ ८ ॥ चञ्चेलाञ्चलानि प्रतिसरणिचलव्यस्तवेणीनि बाहोर्विक्षेपाद्दक्षिणस्य प्रचलितवलयस्फारकोलाहलानि । श्वासत्रुट्यद्वचांसि द्रुतमितरकरोत्क्षेपलोलालकानि स्रस्तैंस्रजि प्रमोदं दधति मृगदृशां कन्दुकक्रीडितानि ॥ ९ ॥ अस्याः स्वेदाम्बुबिन्दुच्युततिलकतया व्यक्तवक्त्रेन्दुकान्तेर्वारंवारेण वेगग्रहणनगणनाकेलिवाचालितायाः । तत्पातोत्थानतालक्रमनमितदृशस्ताण्डवोत्तालतालीलालित्याल्लोभिताः स्मः प्रतिकलममुना कन्दुकक्रीडितेन ॥ १० ॥

## हेमन्ते पवनः ।

दधत्यधरचुम्बनं नयनपङ्कजं मुद्रयत्यमन्दपुलकं मनागमलमङ्गमालिङ्गते । विचालयति चालकं चपललोचनानां हठात्तनोत्यविनयं मरुत्प्रिय इवैष हैमन्तिकः ॥ १ ॥ हूणीसीमन्तमुद्रां सपदि तरलयन्कीरकान्ताकुचान्तः स्वच्छन्दस्रस्तवस्त्रश्चलचपलतया लोलयन्हारवल्लीम् । प्रालेयावासपृथ्वीधरशिखरचलच्चारुमारिप्रवाहप्रक्षोभप्रातिभश्रीः प्रसरति परितो हैमनो गन्धवाहः ॥ २ ॥ नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसङ्गान्परागान्कौन्दानानन्दिताली नतितरसुरभीन्भूरिशो दिङ्मुखेषु । एते ते कुङ्कुमाक्तस्तनकलशभरास्फालनादुच्छलन्तः पीत्वा सीत्कारिवक्त्रं शिशुहरिणदृशां हैमना वान्ति वाताः ॥ ३ ॥

## हेमन्ते विरहिदशावर्णनम् ।

आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि । गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥ १ ॥ हेमन्ते पथिकजनाः प्रियावियुक्ता लोकानां गृहबहिरङ्गणे शयानाः । कन्दर्पाकुलमनसां निशासु तेषां शीतं किं लगति जगत्प्रकम्पकारि ॥ २ ॥ हेमन्ते हिमकरबिम्बचारुमुख्या रामाया

---

१ स्मरस्य । २ कर्णपूर- । ३ संचलत्- । ४ स्खलितमालानि । ५ हूणदेशभूनारी- । ६ चपलयन् । ७ सुन्दर्याः ।

मृदुभुजपञ्जरे शयानाः । ये कालं परमसुखं नयन्ति तेषां शीतं किं लगति जगत्प्रकम्पकारि ॥ ३ ॥ हे पान्थ प्रिय विप्रयोगहुतभुग्ज्वालानभिज्ञोऽसि किं किंवा नास्ति तव प्रिया गतघृणः किंवा विहीनो धिया । येनास्मिन्नवकुङ्कुमारुणरुचिन्यासङ्गघर्मोचिते कुन्दानन्दितमत्तषट्पदकुले काले गृहान्निर्गतः ॥४॥ शीतार्तिप्रसरस्तथाऽऽकुलपदन्यासैः समुत्कम्पिभिः पान्थैर्निर्दय[1]तुच्छगोधननदद्वापारवैः सूचिताः । प्राप्यन्ते हिमपीडितानि निभृतप्रोद्धाटधूमा घनस्तोकालक्षकुटीरकाः कथमपि प्राप्ता गिरिग्रामकाः ॥ ५ ॥ अन्योन्याहैतिदन्तनादमुखरं वक्रं मुखं कुर्वता नेत्रे साश्रुकणे निमील्य पुलकव्यासङ्गि कण्डूयता । हाहाहेति सुनिष्ठुरं विवदता बाहू प्रसार्य क्षणं पुण्याग्निः पथिकेन पीयत इव ज्वालाहतश्मश्रुणा ॥ ६ ॥

## शिशिरशोभोद्भावना ।

परमप्रमदा प्रमदा भ्रमरी भ्रमरीतिकोविदा विपिने । पवनो विभाति जवनो मदनः शिशिरे वियोगिनां कदनः ॥ १ ॥ प्रावारैरङ्गारैर्गर्भगृहैः स्तनतटैश्च दयितानाम् । संतर्जितमाढ्यानां निपतति शीतं दरिद्रेषु ॥ २ ॥ कारणोत्पन्नकोपोऽपि सांप्रतं प्रमदाजनः । निशि शीतापदेशे[3]न गाढमालिङ्गति प्रियम् ॥ ३ ॥ एते समुल्लसद्भासो राजन्ते कुन्दकोरकाः । शीतभीता लताकुन्दमाश्रिता इव तारकाः॥ ४ ॥ अंशुकमिव शीतभयात्संस्त्यानत्वच्छलेन हिमधवलम् । अम्भोभिरपि गृहीतं पश्यत शिशिरस्य माहात्म्यम् ॥ ५ ॥ आचुम्ब्य बिम्बाधरमङ्गवल्लीमालिङ्ग्य संस्पृश्य कपोलपालिम् । श्रीखण्डमादय करेण कान्तः संत्रासयामास सरोरुहाक्षीम् ॥ ६ ॥ मानिन्या ननु मानः शीतभयाद् दूरगो भवेच्छिशिरे । नेदं हन्त सुचित्रं किं तूष्णांशूष्णताऽप्येवम् ॥ ७ ॥ तर्पनस्तपति स्म मन्दमन्दं ज्वलनोऽपि ज्वलति स्म किंचिदेव । शरणं शिशिरेऽथ किं च यूनां युवतीनां स्तनयुग्ममात्रमासीत् ॥ ८ ॥ कुसुमयन्फलिनी रलिनीरवैर्मदविकासिभिराहितहुंकृतिः । उपवनं निरभर्त्सयत प्रियान्वियुवतीर्युवतीः शिशिरानिलः ॥ ९ ॥ उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद्बलवानपि । तपसि मन्दगभस्तिरभीषुमान्न हि महाहिमहानिकरोऽभवत् ॥ १० ॥ अभिषिषेणयिषु भुवनानि यः स्मरमिवाख्यत लोध्ररजश्चयः । क्षुभितसैन्यपरागविपाण्डुरद्युतिरयं तिरयन्नुदभूद्दिशः॥ ११॥ शिशिरभासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः । इति धियाऽस्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान्प्रियाः ॥ १२ ॥ अधिलवङ्गममी रजसाऽधिकं मलिनताः सुमनोदलतालिनः । स्फुटमिति प्रसवेन पुरो हसत्सपदि कुन्दलता दलतालिनः ॥ १३ ॥ द्वारं गृहस्य पिहितं शयनस्य पार्श्वे वह्निर्ज्वलत्युपरि तूलपटो गरीयान् । अङ्गानुकूलमनुरागवशं कलत्रमित्थं करोति किमसौ स्वपतस्तुषारः ॥ १४ ॥ वह्नेः शक्तिर्जलमिव गता दर्शनाद्दाहवृत्तेर्नित्योद्गन्धे नवमरुबके वर्तते पुष्पकार्यम् । शीतत्रासं दधदिव रविर्याति सिन्धोः कृशानुः शीतैर्भीता इव च दिवसाः सांप्रतं संकुचन्ति ॥ १५ ॥ पीनोत्तुङ्गपयोधराः परिलसत्संपूर्णचन्द्राननाः कान्ता नैव गृहे गृहे न च दृढं जात्यं न काश्मीरजम् । ताम्बूलं न च तूलिका न च पटी तैलं न गन्धाविलं सद्यो गोघृतपाचिता न वटकाः शीतं कथं गम्यते ॥ १६ ॥ चुल्लीसीमनि गोरसार्द्रमशनं भुक्त्वा परीतोऽर्भकैरभ्याशे स्वकृषीक्षुयन्त्रनिनदं हर्षात्समाकर्णयन् । शेते संहतगोगणोष्मणि गृहे स्रस्ताम्बरां गेहिनीमालिङ्ग्यागणयन्निशासु तुहिनं प्रोड्डामरः पामरः ॥ १७ ॥

---

१ निर्दयः । २ आघात- । ३ छलेन । ४ सूर्यः । ५ माघे । ६ त्यक्त्वा । ७ 'रजाई' इति भाषायाम् । ८ भक्ष्यविशेषाः । ९ भोजनम् । १० समीपे ।

## नयननिमीलनखेलनम् ।

न पाणिप्रच्छाद्यं नयनयुगमत्यायतमिदं नितम्बस्यौदार्याच्चरितगतियोगोऽप्यसुलभः । अतिस्वल्पौ पाणी स्तनभरनिरोधान्न मिलितौ निमीलक्रीडायां कलुषयसि मुग्धे किमिति नः ॥ १ ॥ नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ सर्वत्रैव विलोक्यते मुखशशिज्योत्स्नावितानैरियम् । इत्थं बालतया सखीभिरसकृद्दृङ्मीलनाकेलिषु व्याविद्धा रजनीमुखे च नयने स्वे गर्हते कन्यका ॥ २ ॥

## शैशिरपवनप्रशंसनम् ।

केशानाकुलयन्दृशौ मुकुलयन्वासो बलादाक्षिपन्नातन्वन्पुलकोद्गमं प्रकटयन्नावेगकम्पं गतेः । बारंवारमुदारसीत्कृतिभरैर्दन्तच्छदं पीडयन्प्रायः शैशिर एष संप्रति मरुत्कान्तासु कान्तायते[1] ॥ १ ॥ चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना वक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः । ऊरूनाकम्पयन्तः पृथुजघनतटात्स्रंसयन्तोंऽशुकानि व्यक्तं कान्ताजनानां विटचरितभृतः[2] शैशिरा वान्ति वाताः ॥ २ ॥

## शिशिरे विरहिणां दशानिदर्शनम् ।

पुण्याग्नौ पूर्णवाञ्छः प्रथममगणितप्लोषदोषः प्रदोषे पान्थः सुप्त्वा यथेच्छं तदनु च सतृणे धामनि ग्रामदेव्याः । उत्कम्पी कर्पटार्धे जरति परिजडे छिद्रिणि च्छिन्ननिद्रे वाते वाति प्रकामं हिमकणिनि रणन्कोणतः कोणमेति ॥ १ ॥ संविष्टो ग्रामदेव्याः कुटघटितकुटीकुड्यकोणैकदेशे शीते संवाति वायौ हिमकणिनि रणद्दन्तपङ्क्तिद्वयाग्रः । पान्थः कन्थां निशीथे परिकुथितजरत्तन्तुसंतानगुर्वीं ग्रीवापादाग्रजानुग्रहणचटचटत्कर्पटां प्रावृणोति[3] ॥ २ ॥ आरात्कारीषवह्नेर्विविधचिततृणप्रस्तरान्तर्निषण्णैः संशीर्णग्रन्थिकन्थाविवरवशविशच्छीतवाताभिभूतैः । नीताः कृच्छ्रेण पान्थैः श्वभिरिव निबिडं जानुसंकोचकुब्जैरन्तर्दुर्वारदुःखद्विगुणतरकृतायामयामास्त्रियामाः ॥ ३ ॥

## नारीगर्हणा ।

अनृतं साहसं माया मूर्खत्वमतिलोभता । अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः[4] प्रियसाहसाः[5] । घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ २ ॥ स्त्रियो हि नाम खल्वेता निसर्गादेव[6] पण्डिताः । पुरुषाणां तु पाण्डित्यं शास्त्रेणैवोपदिश्यते ॥ ३ ॥ विधायालीकविश्रम्भमज्ञेषु[8] त्यक्तसौहृदाः । नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ४ ॥ जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमम् । हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम्[9] ॥ ५ ॥ स्त्रीणां द्विगुण आहारो लज्जा चापि चतुर्गुणा । साहसं षड्गुणं चैव कामश्चाष्टगुणः स्मृतः ॥ ६ ॥ अन्तः क्रूराः सौम्यमुखा अगाधहृदयाः[10] स्त्रियः । अन्तर्विषा बहिःसौम्या भक्ष्या विषकृता इव ॥ ७ ॥ कामनाम्ना किरातेन वितता मूढचेतसाम् । नार्यो नरविहंगानामङ्गबन्धनवागुराः[11] ॥ ८ ॥ दर्शनाद्धरते चित्तं स्पर्शनाद्धरते धनम् । संगमाद्धरते सत्त्वं[12]

---

१ कान्त इवाचरति । २ उपनायक- । ३ आवृणोति । ४ क्षमाहीनाः । ५ परमारणान्तकर्मोद्यताः । ६ प्रकृतेः । ७ असत्य- । ८ विषयवासनामूढेषु । ९ इदं सर्वं पुरुषापेक्षया । १० दुर्ज्ञेयाभिप्रायाः । ११ पाशाः । १२ पराक्रमम्

नारी प्रत्यक्षराक्षसी ॥ ९ ॥ चतुरः सृजता पूर्वमुपायांस्तेन वेधसा । न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥ १० ॥ स्त्रियस्तु यः कामयते संनिकर्षं च गच्छति । ईषत्प्रकुरुते सेवां तं तमिच्छन्ति योषितः ॥ ११ ॥ स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥ १२ ॥ यो मोहान्मन्यते मूढो रक्तेयं[1] मम कामिनी । स तस्या वशगो नित्यं भवेत्क्रीडाशकुन्तवत्[2] ॥ १३ ॥ अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च । मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति सर्वदा ॥ १४ ॥ नासां कश्चिदगम्योऽस्ति नासां च वयसि[3] स्थितिः । विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १५ ॥ रक्तोऽभिजायते भोग्यो नारीणां शाटको[4] यथा । घृष्यते यो दशालम्बी नितम्बे विनिवेशितः ॥ १६ ॥ अलक्तको यथा रक्तो निष्पीड्य[5] पुरुषस्तथा । अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ १७ ॥ शम्बरस्य च या माया या माया नमुचेरपि । बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ १८ ॥ हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि । अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः ॥ १९ ॥ उशना[6] वेद यच्छास्त्रं यच्च वेद बृहस्पतिः । स्त्रीबुद्ध्या न विशिष्येत तस्माद्रक्ष्याः कथं हि ताः ॥ २० ॥ अनृतं सत्यमित्याहुः सत्यं चापि तथाऽनृतम् । इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ॥ २१ ॥ अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः । गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ २२ ॥ यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाञ्छनः । स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद्दुर्जनो हितः ॥ २३ ॥ या भार्या दुष्टचरिता सततं कलहप्रिया । भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ २४ ॥ तस्मात्सर्वप्रयत्नेन नामापि परिवर्जयेत् । स्त्रीणामिह हि सर्वासां य इच्छेत्सुखमात्मनः ॥ २५ ॥ के नाम न विनश्यन्ति मिथ्याज्ञानान्वितम्बिनीम् । रम्यां बुद्ध्वोपसर्पन्ति ये ज्वालां शलभा इव ॥ २६ ॥ यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः । यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥ २७ ॥ ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः । न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ २८ ॥ आस्तां तावत्किमन्येन दौरात्म्येनात्र योषिताम् । विधृतं स्वोदरेणापि घ्नन्ति पुत्रमपि स्वकम् ॥ २९ ॥ रूक्षायां स्नेहसंभारं कठोरायां सुमार्दवम् । नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ३० ॥ भोजनाच्छादने दद्यादृतुकाले च संगमम् । भूषणाद्यं च नारीणां न ताभिर्मन्त्रयेत्सुधीः ॥ ३१ ॥ यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता । राजन्निर्मूलतां याति तद्गृहं भार्गवोऽब्रवीत् ॥ ३२ ॥ तावत्स्यात्सुप्रसन्नास्यस्तावद्गुरुजने रतः । पुरुषो योषितां यावन्न शृणोति वचो रहः ॥ ३३ ॥ एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः । न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना ॥ ३४ ॥ यदि स्याच्छीतलो वह्निश्चन्द्रमा दहनात्मकः । सुस्वादः सागरः स्त्रीणां तत्सतीत्वं प्रजायते ॥ ३५ ॥ संगतानि मृगाक्षीणां तडिद्विलसितान्यपि । क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥ ३६ ॥ उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते । राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥ ३७ ॥ न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता । प्रार्थनाभाव एवैकः सतीत्वे कारणं स्त्रियाः ॥ ३८ ॥ न दानेन न मानेन नार्जवेन न सेवया । न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः ॥ ३९ ॥ सुरूपं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् । योनिः क्लिद्यति नारीणा-

---

१ अनुरक्ता । २ क्रीडापक्षीव । ३ बाल्याद्यवस्थायाम् । ४ 'साडी' इति भाषायाम् । ५ पाषाणादिना सङ्घर्ष्य, आश्लेषेण संपीड्य च । ६ शुक्राचार्यः ।

मामपात्रमिवाम्भसा ॥ ४० ॥ न स्त्रीणामप्रियः कश्चित्प्रियो वाऽपि न विद्यते । गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ ४१ ॥ कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ॥ ४२ ॥ समयज्ञानर्थवतः प्रतिरूपान्वशे स्थितान् । पतीनां तटमासाद्य नालं नार्यः प्रतीक्षितुम् ॥ ४३ ॥ न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथंचन । न ज्ञातिकुलसंबन्धात्स्त्रियस्तिष्ठन्ति भर्तृषु ॥ ४४ ॥ माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा न माद्यति । यस्माद्दृष्टिमदा नारी तस्मात्तां परिवर्जयेत् ॥ ४५ ॥ यौवने वर्तमानानां मृष्टाभरणवाससाम् । नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥ ४६ ॥ या हि शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः । अपि ताः संप्रसज्ज्यन्ते कुब्जान्धजडवामनैः ॥ ४७ ॥ पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता जनाः । स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने ॥ ४८ ॥ अलाभात्पुरुषाणां हि भयात्परिजनस्य च । वधबन्धभयाच्चैव तथा गुप्ता हि योषितः ॥ ४९ ॥ लोकानामपि दातारं कर्तारं मानसान्त्वयोः । रक्षितारं न मृष्यन्ति भर्तारं परमस्त्रियः ॥ ५० ॥ न कामभोगान्बहुलान्नालंकारार्थसंचयान् । तथाहि बहु मन्यन्ते यथा रत्याः परिग्रहम् ॥ ५१ ॥ असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो । पापीयसो नरान्यद्वै लज्जां त्यक्त्वा भजन्ति ताः ॥ ५२ ॥ अविद्वांसमलं लोके विद्वांसमपि वा पुनः । प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ ५३ ॥ यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क भोगभूः । स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ ५४ ॥ यस्य जिह्वासहस्रं स्याज्जीवेत्साग्रशतं च यः । अनन्यकर्मा स्त्रीदोषान्सोऽप्यनुक्त्वा लयं व्रजेत् ॥ ५५ ॥ न विषेण न शस्त्रेण नाग्निना न च मृत्युना । अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः ॥ ५६ ॥ नयनविकारैरन्यं वचनैरन्यं विचेष्टितैरन्यम् । रमयति सुरतेनान्यं स्त्री बहुरूपा निजा कस्य ॥ ५७ ॥ स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति । रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥ ५८ ॥ हृदयं हरन्ति नार्यो मुनेरपि भ्रूकटाक्षविक्षेपैः । दोर्मूलनाभिदेशं प्रदर्शयन्त्यो महाचपलाः ॥ ५९ ॥ सुमुखेन वदन्ति वल्गुना प्रहरन्त्येव शितेन चेतसा । मधु तिष्ठति वाचि योषितां हृदये हालहलं महद्विषम् ॥ ६० ॥ अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते । पुरुषैः सुखलेशवञ्चितैर्मधुलुब्धैः कमलं यथाऽलिभिः ॥ ६१ ॥ गुणाश्रयं कीर्तियुतं च कान्तं पतिं विधेयं[4] सधनं रतिज्ञम् । विहाय शीघ्रं वनिता व्रजन्ति नरान्तरं शीलगुणादिहीनम् ॥ ६२ ॥ समुद्रवीचीव चलस्वभावाः सन्ध्याभ्रलेखेव मुहूर्तरागाः । स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति ॥ ६३ ॥ स्त्रियो हि मूलं निधनस्य पुंसः स्त्रियो हि मूलं व्यसनस्य पुंसः । स्त्रियो हि मूलं नरकस्य पुंसः स्त्रियो हि मूलं कलहस्य पुंसः ॥ ६४ ॥ अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति । श्रियो हि कुर्वन्ति तथैव नार्यो भुजंगकन्यापरिसर्पणानि ॥ ६५ ॥ एकं मनुष्यं हृदयेन धृत्वा परं ततो दृष्टिभिराह्वयन्ति । अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते ॥ ६६ ॥ नातिप्रसङ्गः प्रमदासु कार्यो नेच्छेद्बलं स्त्रीषु विवर्धमानम् । अतिप्रसक्तैः पुरुषैर्यतस्ताः क्रीडन्ति काकैरिव लूनपक्षैः ॥ ६७ ॥ कुर्वन्ति तावत्

---

१ कारुण्यात् । २ भोगवासनाऽऽविर्भावः । ३ तीक्ष्णेन । ४ वशंवदम् । ५ सागरतरङ्गवत् । ६ प्रदोषकालिकगगनवत् । ७ निपीडितयावकरसरञ्जिततूलिकावत् । ८ मृत्योः । ९ अत्र 'तस्मात् स्त्रियो नैव बुधेन सेव्याः' इति चतुर्थपादपाठस्तु युक्तः । अन्यथाऽनवीकृतार्थत्वदोषापत्तेः । १० छिन्नः ।

प्रथमं प्रियाणि यावन्न जानन्ति नरं प्रसक्तम् । ज्ञात्वाऽथ तं मन्मथपाशबद्धं ग्रस्तामिषं मीनमिवोद्धरन्ति ॥ ६८ ॥ संमोहयन्ति मदयन्ति विडम्बयन्ति निर्भर्त्सयन्ति रमयन्ति विषादयन्ति । एताः प्रविश्य सदयं हृदयं नराणां किं नाम वामनयना न समाचरन्ति ॥ ६९ ॥ स्त्रीणामशिक्षितपटुत्वममानुषीणां संदृश्यते किमुत याः परिबोधवत्यः । प्रागन्तरिक्षगमनात्स्वमपत्यजातमन्यैर्द्विजैः परभृताः किल पोषयन्ति ॥ ७० ॥ अनङ्कुरितकूर्चकः स तु सितोपलाढ्यं पयः स एव घृतकूर्चकः सलवणाम्बुतक्रोपमः । स एव सितकूर्चकः कथितगुग्गुलुद्वेगकृद्भवन्ति हरिणीदृशां प्रियतमेषु भावास्त्रयः ॥ ७१ ॥ शृणु हृदय रहस्यं यत्प्रशस्तं मुनीनां न खलु न खलु योषित्सन्निधिः संविधेयः । हरति हि हरिणाक्षी क्षिप्रमक्षिक्षुरप्रैः पिहितशमतनुत्रं चित्तमप्युत्तमानाम् ॥ ७२ ॥ शास्त्रज्ञोऽपि प्रकटविनयोऽप्यात्मबोधेऽपि गाढं संसारेऽस्मिन्भवति विरलो भाजनं सद्गतीनाम् । येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती वामाक्षीणां भवति कुटिला भ्रूलता कुञ्चिकेव ॥७३॥ अपसरत रे दूरादस्मात्कटाक्षविषानलात्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः। इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधैश्चटुलवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ७४ ॥ स्वातन्त्र्यं पितृमन्दिरे च वसतिर्यात्रोत्सवे संगतिर्गोष्ठीपूरुषसंनिधाननियमो वासो विदेशे तथा । संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः पत्युर्वार्धकमीर्ष्यितं प्रवसनं नाशस्य हेतुः स्त्रियः ॥ ७५ ॥ अग्राह्यं हृदयं तथैव वदनं यद्दर्पणान्तर्गतं भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते । चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं नारी नाम विषाङ्कुरैरिव लतादोषैः समं वर्धिता ॥ ७६ ॥ एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षरं वीक्षन्तेऽन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः । दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ॥ ७७ ॥ कार्कश्यं स्तनयोर्दृशोस्तरलताऽलीकं मुखे दृश्यते कौटिल्यं कचसंचये प्रवचने मान्द्यं त्रिके स्थूलता । भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये यासां दोषगणो गुणो मृगदृशां ताः किं नराणां प्रियाः ॥ ७८ ॥ भर्ता यद्यपि नीतिशास्त्रनिपुणो विद्वान्कुलीनो युवा दाता कर्णसमः समृद्धविभवः शृङ्गारदीक्षागुरुः । स्वप्राणाधिककल्पिता स्ववनिता स्नेहेन संलालिता तं कान्तं प्रविहाय सैव युवती जारं पतिं वाञ्छति ॥ ७९ ॥ आलापैर्मधुरैश्च कांश्चिदपरानालोकितैः सस्मितैरन्यान्विभ्रमकल्पनाभिरितरानङ्गैरनङ्गोज्ज्वलैः । आचारैश्चतुरैः परानभिनवैरन्यान्भ्रुवः कम्पनैरित्थं कांश्चन रञ्जयन्ति सुदृशो मन्ये मनस्त्वन्यथा ॥ ८० ॥ हासस्तूत्कलिकाप्रदीपनपटुर्हस्ताङ्घ्रिनेत्राननं तन्वङ्ग्या विषजातमेव भुजगी वेणी च रोमावलिः । किं च श्रीफलमुन्नतस्तनभरः कामं मनस्तामिमां सर्वाकारविषोग्रमूर्तिमबलां प्राप्यापि यज्जीवति ॥ ८१ ॥ मुक्ताहारलता रणन्मणिमया हैमास्तुलाकोटयो रागः कुंकुमसंभवः सुरभयः पौष्प्यो विचित्राः स्रजः । वासश्चित्रदुकूलमल्पमतिभिर्नार्यामहो कल्पितं बाह्यान्तः परिपश्यतां तु निरयो नारीति नाम्ना कृतः ॥ ८२ ॥ आवर्तः संशयानामविनयभवनं पत्तनं साहसानां दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् । दुर्ग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं स्त्रीयन्त्रं केन लोके विषममृतमयं धर्मनाशाय सृष्टम् ॥ ८३ ॥

---

१ प्रतिकूल-। सुन्दर-। २ अन्यैः पक्षिभिः काकैरिति भावः। ३ कोकिलाः। ४ सङ्गमः। ५ परदेशे प्रस्थानम्। ६ अभिप्रायः। ७ पद्म-। ८ कर्कशत्वम्। ९ अङ्गविशेषाः। १० पुष्पसम्बन्धिन्यः।

## सतीवर्णनम् ।

यस्य भार्या शुचि[1]र्दक्षा भर्तारमनुगच्छति । नित्यं मधुर[2]वक्त्री च सा रमा[3] न रमा रमा ॥ १ ॥ नित्यं स्नाता सुगन्धा च नित्यं च प्रियवादिनी । अल्पभुङ् मितवक्त्री च देवता सा न मानुषी ॥ २ ॥ असारभूते संसारे सारभूता नितम्बिनी । इति संचिन्त्य वै शंभुरर्धाङ्गे पार्वतीं दधौ ॥ ३ ॥ सैव साध्वी सुभक्त[4]श्च सुस्नेहः स[5]रसोज्ज्वलः । पा[6]कः संजायते यस्याः करादप्यु[7]दरादपि ॥ ४ ॥ रू[8]पसंपन्नमग्राम्यं[9] प्रेम[10]प्रायं प्रियंवदम्[11] । कुलीनमनुकूलं च कलत्रं[12] कुत्र लभ्यते ॥ ५ ॥ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहं तु गृहिणीहीनं कान्तारादतिरिच्यते ॥ ६ ॥ वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद्गृहम् । प्रासादोऽपि तया हीनो ह्यरण्यसदृशः स्मृतः ॥ ७ ॥ तावत्कुलस्त्रीमर्यादा यावल्लज्जावगुण्ठनम् । हृते तस्मिन्कुलस्त्रीभ्यो वरं वेश्याङ्गनाजनः ॥ ८ ॥ कार्ये दासी रतौ वेश्या भोजने जननीसमा । विपत्तौ बुद्धिदात्री च सा भार्या भुवि दुर्लभा ॥ ९ ॥ वश्यभावेन सुमना[13]: सुव्रता[14] सुसमाहिता । अन[15]न्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ १० ॥ न कार्येषु न भोगेषु नैश्वर्ये न सुखे तथा । स्पृहा यस्या यथ भर्तुः सा नारी सुखभागिनी ॥ ११ ॥ कल्योत्थान[16]परा नित्यं गुरुशु[17]श्रूषणे रता । सुसंमृ[18]ष्टगृहा चैव गोशकृत्कृ[19]तलेपना ॥ १२ ॥ या नारी सुव्रता दक्षा विमलाऽमृताभाषिणी । सदाचारा पतिप्राणा सा स्वर्गादतिरिच्यते ॥ १३ ॥ श्वश्रूश्वशुरयोः पादौ पूजयन्ती प्रतिव्रता । मातापितृपरा नित्यं या नारी सा पतिव्रता ॥ १४ ॥ पतिर्देवः पतिर्बन्धुः पतिः स्वर्गः पतिः सुखम् । जीवनं च पतिर्नार्या नान्यत् किञ्चिज्जगत्त्रये ॥ १५ ॥ बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥ १६ ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते येन तेन स्वर्गे म[20]हीयते ॥ १७ ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् ॥ १८ ॥ सदा प्रहृष्टया भाव्यं गृहकार्ये च दक्षया । सुसंस्कृतोपस्करया व्यये चामु[21]क्तहस्तया ॥ १९ ॥ जीवति जीवति नाथे मृते मृता या मुदा युता मुदिते । सहजस्नेहरसाला कुलवनिता केन तुल्या स्यात् ॥ २० ॥ प्रतिरजनि प्रतिदिवसं विहर बहिश्चण्डि डिण्डिमं दत्त्वा । कोणवधूद्गवलितैर्विश्वं पुनराकुलीभवति ॥ २१ ॥ दीपदशा कुलयुवती वैदग्ध्येनैव मलिनतामेति । दोषा[22] अपि भूषायै गणिकायाः शशिकलायाश्च ॥ २२ ॥ मनसा वचसा सततं भवन्ति या भर्तृवत्सलाः साध्व्यः । अपि पतितं परीणीतं नयन्ति ता अक्षयं त्रिदिवम् ॥ २३ ॥ तल्पे प्रभुरिव गुरुरिव मनसिजशास्त्रे श्रमे भुजिष्येव । गेहे श्रीरिव गुरुजन-

---

१ पवित्राचरणा । २ सुभाषिणी । ३ लक्ष्मीः । ४ आज्यपरिप्लुतः, रतिरूपः, वात्सल्यविषयभूतश्च । ५ सरसोऽथ चोज्ज्वलः ( पवित्रः ) शृङ्गाराख्यरसशाली ( "शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः ) च, रत्नान्तरवदपरुषतया सरसः, सदाचारित्वाच्चोज्ज्वलः । ६ भोज्यम्, रमणसुखाभिरूपः परिणामः, सन्ततिरूपं फलं च । ७ उदरपदेन वक्षःपरिष्वङ्गग्रहणं गर्भग्रहणं च । ८ लावण्य- । ९ चातुर्यशालि सदाचारपरं च । १० प्रेमपूर्णम् । ११ मिष्टवक्तृ । १२ भार्या । १३ प्रसन्नचेताः । १४ नियताचारा । १५ भर्तर्येव निहितचित्ता । १६ पत्युः पूर्वं प्रभात एव प्रबोधकारिणी । १७ श्वश्रूप्रभृति- । १८ गृहं सम्मार्ज्य सदाऽवस्थापिनी । १९ गोमय- । २० प्रतिष्ठां लभत इति भावः । २१ अनुदार- । २२ दूषणानि रात्रयश्च ।

पुरतो मूर्तैव सा व्रीडा ॥ २४ ॥ ढक्कामाहत्य मदं वितन्वते कारिण इव चिरं पुरुषाः । स्त्रीणां करिणीनामिव मदः पुनः स्वकुलनाशाय ॥ २५ ॥ अमृतमयी[1] निरवद्यो[2] हृद्यो[3] गम्भीरभावसंपन्नो[4] । पतिमनुगच्छति तन्वी गङ्गा भागीरथं रथं यद्वत् ॥ २६ ॥ परपतिविमुखा सुमुखी गुरुजनशिष्यायमाणा च । ममताऽहन्ताविधुरो[5] दयिता कस्यापि सा कृतिनः ॥ २७ ॥ कार्येषु मन्त्री करणेषु[6] दासी भोज्येषु माता शयनेषु रम्भा[7] । धर्मानुकूला क्षमया धरित्री भार्या च षाड्गुण्यवतीह धन्या ॥ २८ ॥ बहिर्न लोला दृगपाङ्गमूलादुपैति कूलादिव सागरोर्मिः । न वा सतीनामभिलाषबन्धं व्यनक्ति गन्धं कलिकेव चेतः ॥ २९ ॥ लज्जावशावनतमन्थरदृष्टिपातं यैश्चुम्बितं कुलवधूवदनारविन्दम् । तेषामनेकपुरुषव्रणिताधरेषु सक्तिः कथं भवति वेशवधूमुखेषु[8] ॥ ३० ॥ नातः परं कुलमतः परतो न शीलं नातः परं च करुणासदनं च पूज्यः । नाराधनं न च परः पुरुषः पुराणः सर्वस्वमेणशिशुलोलदृशो हि भर्त्ता ॥ ३१ ॥ मानाग्निवर्धनमहौषधमेतदेव स्त्रीणां सपत्नवनिताह्वयकीर्तनं[9] यत् । अव्याजनिर्भरभयप्रणतोत्तराणां मन्ये विशेषत इदं कुलकन्यकानाम् ॥ ३२ ॥ पदन्यासो गेहाद्बहिरहिफणारोपणसमो[10] निजावासोद्[11] अन्यद्भवनमपरद्वीपतुलितम् । वचो लोकालभ्यं कृपणधनतुल्यं[12] मृगदृशः पुमानन्यः कान्ताद्[13] विधुरिव चतुर्थीसमुदितः ॥ ३३ ॥ चतुर्थेऽह्नि स्नातां त्रिदिनविरहात्पाण्डुवदनां रजोमुक्तां तन्वीं चपलनयनां कामकलिताम् । हिमत्वङ्मार्जारीमलयभवगन्धप्रणयिनीमधन्यः को भुङ्क्ते च्युतकुसुमशेषामिव लताम् ॥ ३४ ॥ गतागतकुतूहलं नयनयोरपाङ्गावधि स्मितं कुलनतभ्रुवामधर एव विश्राम्यति । वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३५ ॥ भक्तिः प्रेयसि संश्रितेषु[14] करुणा श्वश्रूषु[15] नम्रं शिरः प्रीतिर्यातृषु[16] गौरवं गुरुजने क्षान्तिः[17] कृतागस्यपि[18] । अम्लाना[19] कुलयोषितां व्रतविधिः सोऽयं विधेयः पुनर्मद्भर्तुर्दयिता इति प्रियसखीबुद्धिः सपत्नीष्वपि ॥ ३६ ॥ अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या[20] स्वयम् । सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च[21] शय्यामिति प्राच्यैः पुत्रि निवेदितः कुलवधूसिद्धान्तधर्मागमः ॥ ३७ ॥ शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं[22] गमः । भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी[23] यान्त्येवं गृहिणीपदं युवतयो वामाः[24] कुलस्याधयः[25] ॥ ३८ ॥ निर्व्याजा दयिते ननान्दृषु[26] नता श्वश्रूषु भक्ता भव स्निग्धा बन्धुषु[27] वत्सला परिजने[28] स्मेरा[29] सपत्नीष्वपि । भर्तुर्मित्रजने सनम्रवचना खिन्ना च तद्वैरिषु[30] प्रायः संवननं नतभ्रु तदिदं वीतौषधं भर्तृषु ॥ ३९ ॥ भास्वानुद्गतवान् शशी विगतवान् देवाग्निकार्योहितः सम्भारो रचितो विशुद्धवसने कालोचिते योजिते । स्नानं नाथ विधीयतां सुमनसोऽर्च्यन्तां शिखी चेज्यतां भोज्यन्ता गृहमागता इति सती कर्त्तव्यमाभाषते ॥ ४० ॥ संचारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतं[31]

---

१ जलरूपा, सुधावदुपकर्त्री च । २ निष्पङ्का, निष्पापा च । ३ पेया, भोग्या च । ४ गम्भीरा अक्षुद्रा च । ५ निर्ममा निरहङ्कारा च । ६ कार्यसाधनेषु । ७ तदाख्या देवाङ्गनेवेति भावः । ८ वेश्यामुखेषु । ९ नाम- । १० सर्पभोग- । ११ स्वस्थानात् । १२ कदर्यधनमिव । १३ स्वपतेः । १४ आश्रितजनेषु । १५ इदं गुरुजनोपलक्षणम् । १६ भर्तृभ्रातृपत्नीषु । १७ क्षमा । १८ स्वापराधे । १९ प्रसन्ना । २० सेवा । २१ परित्यजेत् । २२ प्रतिकूलताम् । २३ दर्पशून्या । २४ एतदुक्तगुणातः प्रतिकूलाः । २५ चिन्तारूपा एव । २६ पतिभगिनीषु । २७ पतिबन्धुषु । २८ सेवकवर्गे । २९ प्रसन्ना । ३० पतिविरुद्धेषु । ३१ वचनम् ।

चेतः कान्तसमीहितावधि[1] महामानोऽपि मौनावधि । हास्यं चाधरपल्लवावधि पदन्यासावधि प्रेक्षितं[2] सर्वं सावधि नावधिः कुलभुवां[3] प्रेम्णः[4] परं केवलम् ॥ ४१ ॥ शुश्रूषामनुरुन्धती गुरुजने वाक्ये ननान्दुः स्थिता दाक्षिण्यैकपरायणा परिजने स्निग्धा[5] सपत्नीष्वपि । सन्नद्धाऽतिथिसत्कृतौ गृहभरे नैस्तन्द्र्यमाबिभ्रती[6] वत्से किं बहुना भजस्व कुशलं भर्तुः प्रिये जाग्रती[7] ॥ ४२ ॥ साध्वी शीलवती दयावसुमती दाक्षिण्यलज्जावती तन्वी व्याजपराङ्मुखी स्मितवती मुग्धा प्रियालापिनी । देवब्राह्मणबन्धुसज्जनहिता यस्यास्ति भार्या गृहे तस्यार्थागममोक्षभोगफलदा सैकैव पुण्या लता ॥ ४३ ॥

## निन्द्यस्त्रीनिदर्शनम् ।

यस्य भार्या विरूपा च कश्मला[8] कलहप्रिया । अधिकाधिकभक्षा च सा जरा[9] न जरा जरा ॥ १ ॥ एषैव योषितां धन्या शीलं च लभते सुखम् । दिवा पतिव्रता भूयो नक्तं च कुलटा यतः ॥ २ ॥ पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् । तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतिलुब्धाः ॥ ३ ॥ दुर्दिवसे[10] घनतिमिरे दुःसंचारासु नगरवीथीषु । पत्युर्विदेशगमने परमसुखं जवनचपलायाः ॥ ४ ॥ इह वटवृक्षे यक्षः प्रतिवसति दिवाऽपि यत्र भयशङ्का । तस्मिन्नभिनववध्वा नीता वीतोदयाः क्षणदाः ॥ ५ ॥ सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि । तुलयन्ति न लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥ ६ ॥ दिवसे घटिकास्त्रिंशत्रिंशद्घटिकाः परं रजनौ । लक्ष नगरयुवानस्तात विधातः किमाचरितम् ॥ ७ ॥ आरोपिता शिलायामश्मेव त्वं भवेति मन्त्रेण । मग्नाऽपि परिणयापदि जारमुखं वीक्ष्य हसितैव ॥ ८ ॥ कुलपतनं[11] जनगर्हां[12] बन्धनमपि जीवितस्य[13] संदेहम् । अङ्गीकरोति सकलं वनिता परपुरुषसंसक्ता ॥ ९ ॥ सखि सुखयत्येवकाशे[14] प्राप्तः प्रेयान्यथा तथा न गृहे । वातादवारितादपि भवति गवाक्षानिलः शीतः ॥ १० ॥ द्वारि स्तम्भविलग्ना प्रियसखि दृष्टिं पथि क्षिपसि । प्रहिणोषि[15] भाग्यभाजि प्रेयसि दूतीमिव भ्रमरीम् ॥ ११ ॥ सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम् । पीयूषेऽपि हि भेषजभावोपहिते भवत्यरुचिः[16] ॥ १२ ॥ इह नगरे प्रतिरथ्यं[17] भुजंग[18]संबाधरुचिरसंचारे । सुन्दरि मम मतमेतन्नकुल[19]प्रतिपालनं श्रेयः ॥ १३ ॥ केलिः प्रदहति मज्जां शृङ्गारोऽस्थीनि चाटवः कटवः । बन्धक्याः परितोषो न स्यादनभीष्टदंपत्योः ॥ १४ ॥ संदिग्धे परलोके जनापवादे च जगति बहुचित्रे । स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः ॥ १५ ॥ यदि भवति दैवयोगात्पुमान्विरूपोऽपि बन्धकी रहसि । न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥ १६ ॥ यदवधि विवृद्धमात्रा विकसितकुसुमोत्करा शणश्रेणी । पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्री ॥ १७ ॥ तिमिरेऽपि दूरदृश्या कठिनाश्लेषे च रहसि मुखरा च । दन्तमयवलयराजी गृहपतिशिरसा सह स्फुटतु ॥ १८ ॥ एष्यति मा पुनरयमिति गमने यदमङ्गलं मयाऽकारि । अधुना तदेव कारणमवस्थितौ दग्धगेहपतेः ॥ १९ ॥ ग्रामतरुणं तरुण्या नववञ्जुल[20]मञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना

---

१ पत्यभिप्रायबोधनपरम् । २ दृष्टिपातः । ३ कुलीनानां स्त्रीणाम् । ४ पतिप्रेम्णः । ५ स्नेहयुक्ता । ६ अनालस्यम् । ७ समाहितचित्ता सती । ८ अपवित्रा । ९ वार्धक्यम् । १० मेघच्छन्ने दिने । ११ जातिभ्रंशम् । १२ लोकापवादम् । १३ जीवनस्य । १४ अवसरे । १५ क्षिपसि । १६ अस्पृहा । १७ मार्गे मार्गे । १८ सर्प- । जार- । १९ नकुलस्य सर्पान्तकस्य पोषणम्, कुलधर्मोपासनतो वैमुख्यं च । २० अशोक- ।

मुखच्छायैं ॥ २० ॥ मया कुमार्याऽपि न सुप्तमेकया न जारमुत्सृज्य पुमान्विलोकितः । अनेन गोत्रैस्थितिपालनेन मे प्रसन्नतामेतु भवोपकारिणी ॥ २१ ॥ पाणौ गृहीताऽपि पुरस्कृताऽपि स्नेहैर्नित्यं परिवर्धिताऽपि । परोपकाराय भवेदवश्यं वृद्धस्य भार्या करदीपिकेव ॥ २२ ॥ प्रियो मयैवावचितैः प्रसूनैर्हृष्टो हरस्यातनुते सपर्याम् । अतो नतानेकलतावृतानि यास्यामि सायं विपिनानि सख्यः ॥ २३ ॥ निभृतं निभृतं निभालयन्त्या वरुणाशाभरणायितं पतङ्गम् । गुरुयन्त्रितयाऽपि गोपवध्वा नयनान्तेन निमन्त्रितो मुकुन्दः॥ २४ ॥ शिरसि शिरसिजं दृशोर्निमेषं विटपिनि पल्लवमालये तृणं वा । गणयितुमपि पारयन्ति केचित्प्रियसखि के कथयन्तु जारसंख्याम् ॥ २५॥ पतिरतीव धनी सुभगो युवा परविलासवतीषु पराङ्मुखः । शिशुरलंकुरुते भवनं सदा तदपि सा सुदती रुदती कुतः ॥ २६ ॥ नाम्बुजैर्न कुमुदैरुपमेयं स्वैरिणीनयनपङ्कजयुग्मम् । नोदये दिनकरस्य न चेन्दोः केवलं तमसि यस्य विकासः ॥ २७ ॥ दृग्भङ्गभङ्गिमशतैरसतीरहस्यमन्वेषयन्कपटभिक्षुक लक्षितोऽसि । स्वस्य प्रभुर्न च भवामि ततः क्षमस्व भिक्षोपढौकनमिषादयमञ्जलिस्ते ॥ २८ ॥ ब्रह्मैव सत्यमखिलं न हि किंचिदन्यत्तस्मान्नमे सखि परापरभेदबुद्धिः । जारे तथा निजवरे सदृशोऽनुरागो व्यर्थं किमर्थमसतीति कदर्थयन्ति ॥ २९ ॥ जन्मैव माऽस्तु यदि वा न नितम्बिनीषु तत्रापि चेदर्हह नैत्र कुलाङ्गनासु । हा धिग्विधे कुलवधूरथ चेद्भवेयं नैवास्तु च कचन मे मनसोऽनुबन्धः ॥ ३० ॥ गोष्ठेषु तिष्ठति पतिर्बधिरा ननान्दा नेत्रद्वयस्य च न पाटवमस्ति यातुः । इत्थं निशम्य तरुणीकुचकुम्भसीम्नि रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥ ३१ ॥ वयं बाल्ये बालांस्तरुणिमनि यूनः परिणतावपीच्छामो वृद्धान्परिणयविधौ नः स्थितिरियम् । त्वयाऽऽरब्धं जन्म क्षपयितुमनेनैकपतिना न मे गोत्रे पुत्री क्वचिदपि सतीलाञ्छनमभूत् ॥ ३२ ॥ दृशा किंचित्किंचिच्चलितभुजलीलाविलसितैः कराघातैः किंचिन्नखविलिखनैः किंचिदधिकम् । स्पृशन्त्यः संबाधे गुरुभिरनभिप्रेक्षितपथे यथेष्टं चेष्टन्ते स्फुटकुचतटाः पश्य कुलटाः ॥ ३३ ॥ अनार्यप्रज्ञानामिह जनवधूनां हि मनसो महाशल्यं कर्णे तव नवकजम्बूकिसलयः । भ्रमन्भिक्षाहेतोरधिनगरि बुद्धोऽसि न मया त्वयैतावान्वेषः पथिक न विधेयः पुनरपि ॥ ३४ ॥ अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः समीरोऽयं वेलानवविदलदेलापरिमलः । इयं प्रावृड् धन्या नवजलदविन्यासचतुरा पराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ ३५ ॥ स्थितिर्गेहोपान्ते परिजनपरीहासकलना मुहुर्यातायाते सकृदपि गृहे व्याजगमनम् । मुहुस्तद्धोग्येऽपि क्षणपरिचयो वस्तुनि दृशः समुत्पन्नप्रेम्णः सकलमिदमापातसुखदम् ॥ ३६ ॥ नितम्बिन्यो नित्यं विनयपथविन्यस्तमनसः पताकाः स्युः पुत्रि प्रतिनियतमेताः स्वकुलयोः । गुरोरित्यादेशं सदसि सुदृशामौक्तवती गतातङ्कं राधा हरिमुखमृगाङ्कं मृगयते ॥ ३७ ॥ अये को जानीते निजपुरुषसङ्गो न हि तथा यथा स्त्रीणां चेतः परपुरुषसङ्गो रमयति । अपि स्वैरं भुक्त्वा दिवसमखिलं वासरकृता

---

१ सङ्केतं कृत्वाऽपि गन्तुमपारितवत्या इदं दशावर्णनमिति काव्यप्रकाशे स्पष्टम् । २ कुल-। ३ तैलेन, प्रेम्णा च । ४ हस्तस्था दीपज्वालेव । ५ सूर्यम् । ६ शोभने ( कुयोगादुष्टे ) भे नक्षत्रे गच्छति रमत इति । किंतु न महिषवद्भ्रमत इत्येव रोदनहेतुरिति बोध्यम् । ७ सदृशम् । ८ इदमतिकष्टावेदनार्थम् । ९ पतिभगिनी । १० सामर्थ्यमित्यर्थः । ११ पतिभ्रातृपत्न्याः । १२ पथिक इति शेषः । १३ वृद्धत्वे । १४ नखचिह्नैरित्यर्थः । साधुत्वं चास्य चिन्त्यम् । १५ युवजनसङ्घर्षस्थले । १६ कन्दर्प- । १७ इत्येतादृशीमाज्ञाम् ।

करस्पर्शादिन्दोर्मुकुलयति नेत्राणि नलिनी ॥ ३८ ॥ ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी घोटीहेषा[1] विकृतविरुतं[2] हेतुहीनं[3] हसन्ती । स्थानस्थानस्खलितपदविन्यासमाभासमाना[4] यूनामग्रे वसति कुटिलं नर्तितोच्चैर्नितम्बम्[5] ॥ ३९ ॥ ज्ञाता मैत्री सहजमधुरापातिभिर्लोचितान्तैः कर्णाकर्णि[6] प्रथितमयशो बन्धुवर्गैरभाणि । संप्रत्येवं तदपि न मनाङ्[7] मुञ्चति प्राणनाथं को जानीते कुवलयदृशः कीदृशः प्रेमबंधः ॥ ४० ॥ भ्रूभेदैः कतिचिद्गिरा कुटिलया काश्चित्कियत्यः स्मितैः स्वैरिण्यः कथयन्ति मन्मथरसव्यापारवश्यं मनः । कासांचित्पुनरङ्गकेषु[8] मसृणच्छायेषु मध्यस्थितो भावः काचपुटेषु पुष्करमिव[9] प्रव्यक्तमालोक्यते ॥ ४१ ॥ यः कौमारहरः[10] स एव हि[11] रवैस्ता[12] एव चैत्रक्षपास्ते[13] चोन्मीलितमालतीसुरभयः[14] प्रोढाः कदम्बानिलाः[15] । सा[16] चैवास्मि[17] तथापि चौर्यसुरतव्यापारलीलाविधौ[18] रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते[19] ॥ ४२ ॥ दृष्टिं हे प्रतिवेशिनि[20] क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति । एकाकिन्यपि यामि तदूरमितः[21] स्रोतस्तमालाकुलं नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः[22] ॥ ४३ ॥ शुश्रूषस्व गुरून्निवर्तय सखीवृन्दस्य बन्धुस्त्रियः कावेरीतटसंनिविष्टनयने मुग्धे किमुत्ताम्यसि । आस्ते पुत्रि समीप एव गमनादेलालतालिङ्गितन्यञ्चद्वालतमालदन्तुरदरी[23] तत्रापि गोदावरी[24] ॥ ४४ ॥ भद्रं तस्य तरोः स्वयं चिरकृतप्रस्थानकं कथ्यतां दुर्वारस्तमरण्यवह्निरदहद्धिग्दारुणं दुर्वचः । मा खिद्यस्व ततः प्रभृत्यनुदिनं तस्याः पतद्भिर्दृशोरम्भोभिः परिणद्धपल्लवघनच्छायस्तरुर्वर्धते ॥ ४५ ॥ स्वामी निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः । तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते वैदग्धीमधुरप्रपञ्चचतुर व्यर्थोऽयमत्र श्रमः ॥ ४६ ॥ आयाताऽसि विमुञ्च वेपथुभरं दृष्टाऽसि नो केनचिन्नीलं चोलममुं विमुञ्च हरतु स्वेदं निशीथानिलः । इत्यन्तर्भयसन्नकण्ठमसकृद्यामीति तल्पं गता जल्पन्ती परिरभ्यते सुकृतिभिः स्वैरं नवस्वैरिणी ॥ ४७ ॥ सव्रीडार्थनिरीक्षणं यदुभयोर्यद्दूतिसंप्रेषणं तेन श्वो भविता समागम इति प्रीतिप्रसादश्च यः । प्राप्ते कालसमागमे सरभसं यच्चुम्बनालिङ्गनं

---

१ वडवासदृशशब्दकारिणी । २ विकृतं विरुतं यत्र कर्म्मणि तद् यथा तथा । ३ इदमपि क्रियाविशेषणम् । ४ प्रतिपदं स्खलत्पदविन्यासपूर्वम् । ५ नर्तितः पुनः पुनः परिवर्तितः उच्चैःनितम्बः कटिपश्चाद्भागो यस्मिन् कर्म्मणि तद् यथा तथा । ६कर्णे कर्णे । ७ईषदपि ।८रमणीयेषु । ९सलिलमिव ।१० कौमारं हृतवानिति कौमारहरः 'हरतेरनुद्यमनेऽच्' इत्यच् ।पतिरित्यर्थः । ११ यद्यपीत्यर्थः । १२ अभिमतः कान्तः । १३ अत्र चैत्रपदं वसन्तोपलक्षकम् । १४ प्रस्फुटवासन्तीकुसुमसौरभाः । १५ धूलिकदम्ब- । १६ अनेकवारं भुक्तपूर्वा । १७ अहमित्यर्थकमव्ययमिदम् । १८ तत्रेति पाठः काव्यप्रकाशादौ ।वेतसीतरुतल इत्यस्य विशेषणम्,तथा च नात्र पुंश्चलीत्वमस्या व्यज्यत इति बोध्यम् । १९ अनुभुक्ते हि पदार्थे उत्कण्ठा न तूपभुक्त इति विभावना, उपभुक्तत्वरूपानुकण्ठाकारणसत्त्वेऽपि अनुत्कण्ठारूपकार्यानुपपत्तेर्विशेषोक्तिः, अनयोश्चैकतरसम्भवस्य वक्तुमशक्यत्वात्संदेहसङ्कर इति साहित्यदर्पणकाराः । प्रकाशकारास्तु तत्तदस्फुटत्वमामनन्तीति दिक् । २० 'पाडोसन' इति भाषायाम् । गृहसमीपवासिन्या इयं सम्बुद्धिः । २१ सत्वरमिति प्रकाशसम्मतः पाठः ।२२ इदं सर्वं जारसङ्गे भाविनखाघातनिह्नवकामनया । २३ व्याप्त- । २४ इदं सुरतश्रमनिवृत्त्यौचित्यसम्भावनार्थम् । २५ अस्मिन् सुरतप्रार्थनविषये अहं तु समुद्यतैव, न यावदवसरस्तावदलक्षिततया क्वापि भवता भवितव्यमित्यादि व्यज्यते ।

तत्कामस्य फलं तदेव सुरतं शेषा पशूनां स्थितिः ॥ ४८ ॥ इन्दुर्यत्र न निन्दते न मधुरं दूतीवचः श्रूयते नोच्छ्वासा हृदयं दहन्त्यशिशिरा नोपैति कार्श्यं वपुः । स्वाधीनामनुकूलिकां स्वगृहिणीमालिङ्ग्य यत्सुप्यते तत्किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥ ४९ ॥ चेत्पौरादपि शङ्कसे हिमरुचोरप्यार्चिषो लज्जसे भोगीन्द्रादपि चेद्बिभेषि तिमिरस्तोमादपि त्रस्यसि । चेत्कुञ्जादपि दूयसे जलघटध्वानादपि क्षुभ्यसि प्रायः पुत्रि हताऽस्मि हन्त भविता त्वत्तः कलङ्कः कुले ॥ ५० ॥ आः पाकं न करोषि पापिनि कथं पापी त्वदीयः पिता रण्डे जल्पसि किं तवैव जननी रण्डा त्वदीया स्वसा । निर्गच्छ त्वरितं गृहाद्बहिरितो नेदं त्वदीयं गृहं चेदेवं बहिरेमि गर्दभ गृहान्नात्रावतिष्ठे क्षणम्² ॥ ५१ ॥ कार्ये सत्यपि जातु³ याति न बहिर्नाप्यन्यमालोकते साध्वीरप्यनुकुर्वती गुरुजनं श्वश्रूं च शुश्रूषते । विस्रम्भं कुरुते च पत्युरधिकं प्राप्ते निशीथे पुनर्निद्राणे सकले जने शशिमुखी निर्याति रन्तुं विटैः⁵ ॥ ५२ ॥ आकारेण शशी गिरा परभृतः पारावतश्चुम्बने हंसश्चङ्क्रमणे⁶ समं दयितया रत्यां प्रमत्तो गजः । इत्थं भर्तरि मे समस्तयुवतिश्लाघ्यैर्गुणैः सेविते क्षुण्णं नास्ति विवाहितः पतिरिति स्यान्नैष दोषो यदि ॥ ५३ ॥ ज्ञातं ज्ञातिजनैः प्रवृद्धमयशो दूरं गता धीरता त्यक्ता ह्रीः प्रतिपादितोऽप्यविनयः साध्वीपदं प्रोज्झितम् । लुप्ता चोभयलोकसाधुपदवी दत्तः कलङ्कः कुले भूयो दूति किमन्यदस्ति यदसावद्यापि नागच्छति ॥ ५४ ॥ देहे दुर्ललितस्य देवरशिशोः स्फोटव्रणो दारुणो जातस्तेन वनस्पतित्वचमुपाहर्तुं मया गम्यते । दृप्यन्तु श्वसितानि घर्मसलिलैः पत्राणि लुप्यन्तु वा वक्षो वा विलिखन्तु हन्त नखरैः क्रुद्धाः कपिश्रेणयः ॥ ५५ ॥ अम्ब श्वश्रु यदि त्वया हतशुकः संवर्धनीयस्तदा लौहं पञ्जरमस्य दुर्नयवतो गाढान्तरं कारय । अथैनं बदरीनिकुञ्जकुहरे संलीनमन्विष्यती दष्टा यन्न भुजङ्गमेन तदतिश्रेयः किमेभिः क्षतैः ॥ ५६ ॥ न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरोस्त्यक्ता प्रीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम् । अज्ञानां शतयातना नयनयोः कोऽपि क्रमो रौरवः कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥ ५७ ॥ नारीणां खलु बन्धुरन्धतमसं पाथोधरः सोदरः कुञ्जो वासगृहं निशा सहचरी सेव्यः स्मरः क्ष्मापतिः । इत्थं चारुचकोरचञ्चलदृशां यासां मतिर्जायते तासामेव यशः सुधांशुधवलं तासां च सौख्यं सदा ॥ ५८ ॥ श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना । यातुर्वीचि सुहृद्गणस्य वचसा प्रत्युत्तरं दीयते श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा ॥ ५९ ॥ हंसैः शैवलमञ्जरीति कबरी चञ्चूभिराकर्षिता वक्रे चन्द्रधिया चकोरवनिता चक्रे नखैराक्रमम् । भृङ्गैः पङ्कजकोरकप्रतिभया वक्षोरुहो वीक्षितस्तन्मातः करवै पुनर्न सरसीतोयावगाहोद्यमम् ॥ ६० ॥ आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने तत्राप्यर्पयितुं दृशं सुरुचिरां शक्नोमि न व्रीडया । लोकोऽप्येष परोपहासकुशलः सूक्ष्मेङ्गितज्ञोऽप्यलं मातः कं शरणं व्रजामि हृदयेऽजीर्णोऽनुरागानिलः¹¹

---

१ कुलटाया गणिकाया वा पुत्रीं कामपि बालां वा दुराचरणार्थं शिक्षयन्त्या इयमुक्तिः । एतादृशीनां कुलं हि नैकरताभिः पूज्यत इति तथोक्तिः । २ कुलटाया नायकस्य चोक्तिप्रत्युक्तिरूपं पद्यम् । ३ कदाऽपि । ४ विश्वासम् । ५ जारैः । अत्र बहुवचनमविवक्षितम् । ६ गमने । ७ प्रेयान् विट इति शेषः । ८ दुर्भाग्यस्य । ९ प्रत्यावर्त्तनावसरे भाविजारोपभोगचिह्ननिह्नवनार्थेयं भूमिका । एवं परत्रापि । १० मेघः । ११ जारानुरागो न जीर्ण इति सर्वासु तासु विपत्सु सतीष्वपि न ततो विमुखी भवामीति भावः ।

॥ ६१ ॥ कार्येणापि विलम्बनं परगृहे श्वश्रूर्न संमन्यते शङ्कामारचयन्ति यूनि भवनं प्राप्ते मिथो यातरः । वीथीनिर्गमनेऽपि तर्जयति च क्रुद्धा ननान्दा पुनः कष्टं हन्त मृगीदृशां पतिगृहं प्रायेण कारागृहम्॥६२॥ एकान्ते बत नो गृहं शशिमुखोऽप्यन्यादृशो दृश्यते क्षिप्रं साधय यातु पुत्रि स दिने भुक्त्वाऽन्यमावासकम् । श्वश्र्वा संभ्रमिता किलेति बहुशः संप्रेरयन्त्या वधूः पान्थं वीक्ष्य बभञ्ज सस्मितमुखी सैवार्धसिद्धौदनम् ॥ ६३ ॥ एते वारिकणान् किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः शैलाः शाद्वलमुद्गमन्ति न सृजन्त्येते पुनर्नायकान् । त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥ ६४ ॥ संपत्कस्याद्य तारा भवति तरलिता यत्पुरो नेत्रतारा दृष्टा केनाद्य काञ्ची यदभिमुखगता वेपते रत्नकाञ्ची । उग्रः कस्याद्य तुष्टः सखि यदनुमते कश्चिदुग्रोऽनुतापः स्नातं केनाद्य वेणीपयसि विलुलिता यत्कृते कापि वेणी ॥ ६५ ॥ पश्यन्ति स्निग्धमुग्धं प्रतिकलमधुरैर्मोहयन्त्यङ्गहारैः साकूतैर्मन्दहासैरपि परपुरुषाञ्शश्वदानन्दयन्ति । चेष्टन्ते चेत एते किमपि परिचयाद्धारयिष्यन्ति तेषां प्राणान्को वेद लोके परजलजदृशां चित्तमत्यन्तलोलम् ॥६६॥ पृथ्वी तावत्त्रिकोणा विपुलनदनदीग्रावरुद्धं तदर्धं तत्राप्यर्धं युवत्यः शिशुगतवयसो रोगिणो योगिनश्च । त्याज्यास्तत्रापि मान्याः श्वशुरपितृमुखाः सन्ति शेषाः कियन्तो मिथ्यावादो ममायं मुखरमुखरवः पुंश्चली पुंश्चलीति ॥ ६७ ॥

## सङ्केतचेष्टा ।

ग्रामेऽस्मिन्प्रस्तरप्राये[2] न किंचित्पान्थ विद्यते[1] । पयोधरोन्नतिं[3] दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥ १ ॥ पान्थ मन्दमते किंवा सन्तापमनुविन्दसि । पयोधरं समाशास्व येन शान्तिमवाप्नुयाः ॥ २ ॥ वीक्षितुं न क्षमा[4] श्वश्रूः स्वामी दूरतरं गतः । अहमेकाकिनी बाला तवेह वसतिः कुतः ॥ ३ ॥ त्वमिव पथिक प्रियो मे विटपिस्तोमेषु गमयति क्लेशान् । किमितोऽन्यत्कुशलं मे सम्प्रति यत्पान्थ जीवामि ॥ ४ ॥ किमिति कृशाऽसि किं तव कृशोदरि परकीयवृत्तान्तैः । कथय तथापि मुदे मम कथयिष्यति पान्थ तव जाया ॥५॥ यदि गन्तासि दिगन्तं पथिक पतिस्तत्र संबोध्यः । नयनश्रवणविहीना कथमुपचर्या मयैकया जननी ॥६॥ निबिडतमतमालमल्लिवल्लीविचकिलराजिविराजितोपकण्ठे । पथिक समुचितस्तवाद्य तीव्रे सवितरि तत्र[7] सरित्तटे निवासः ॥ ७ ॥ भोः पान्थ पुस्तकधर क्षणमत्र तिष्ठ वैद्योऽसि किं गणितशास्त्रविशारदोऽसि । केनौषधेन मम पश्यति भर्तुरम्बा किं वाऽऽगमिष्यति पतिः सुचिरप्रवासी[8] ॥ ८ ॥ एकाकिनी यदबला तरुणी तथाऽहमस्मिन्गृहे गृहपतिश्च गतो विदेशे । कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ ९ ॥ रथ्यारजोऽरुणितधूसरिताङ्गयष्टेः कच्चित्पितुः स्मरसि पुत्रक निर्घृणस्य[9] । उक्त्वैवमङ्कगतयाऽऽयतमायताक्ष्या पान्थस्त्रिया प्ररुदितं करुणं दिनान्ते ॥ १० ॥ भवनमिव मदीयं निर्जनः पान्थ पन्थाः कुसुमशर इवास्मिंस्तस्करा दुर्निवाराः । गृहप इव पतङ्गोऽप्येष यातो दिगन्तान्मदनसुभग भूयो नैव गन्तुं समीहे ॥ ११ ॥ अहमिव दिनलक्ष्मीः प्रोषितप्राणनाथा त्वमिव पथिक पन्था मुक्तपान्थानुबन्धः । अयमपि परदेशः सोऽपि यत्रासि गन्ता मदनमधुरमूर्ते किं वृथा सत्वरोऽसि ॥ १२ ॥

---

१ पात्रमिति शेषः । २ शिलासमे, शिलाप्रचुरे च । ३ कुचोच्चत्वम् । मेघासन्नतां च । एवं परत्रापि । ४ किं त्वन्धेति भावः । ५ एतन्मिषेण स्वगृहे वासौचित्यं व्यञ्जितम् । ६ तत्राहमप्यायामीति त्वया तत्रैवोपस्थीयतामिति । ७ इत्थं स्वगृहे निवासौचित्यं सम्भावितम् । ८ इदमपि पूर्ववत् । ९ उज्झितपान्थान्तरसार्थः ।

यामिन्येषा बहलजलदैर्बद्धभीमान्धकारा[1] निद्रां याता[2] मम पतिरसौ क्लेशितः कर्मदुःखैः । बाला चाहं मनसिजभयात्प्राप्तगाढप्रकम्पा ग्रामश्चोरैरयमुपहतः पान्थ निद्रां जहीहि ॥ १३ ॥ कुत्रायासीः किमिदमकरोः साहसं पान्थ बन्धो यद्येतस्मिन्निवससि पुरे सावधानस्तदा स्याः । अत्रोत्तालाः कतिचिदबलाः सन्ति यासां विलासैरुत्पद्यन्ते सपदि मदनव्याधयो दुर्निवाराः ॥ १४ ॥ इयं सुरतरंगिणी[3] न पुनरत्र नौसंगमो[4] भवेत्तरणिमज्जनं पथिक नैव पान्थागमः । निधाय हृदये सदा विपुलचारुकुम्भद्वयं सखे घनघनागमे घनरसस्य[5] पारं व्रज ॥ १५ ॥ वाणिज्येन गतः स मे गृहपतिर्वार्ताऽपि न श्रूयते प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता । बालाऽहं नवयौवना निशि कथं स्थातव्यमस्मिन्गृहे सायं संप्रति वर्तते पथिक हे स्थानान्तरं गम्यताम् ॥ १६ ॥ रे रे पान्थ कुतो भवान्नगरतो वार्ता न चापि श्रुता बाढं ब्रूहि युवा पयोदसमये[6] हित्वा[7] प्रियां जीवति । सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ॥ १७ ॥ शून्यं वेश्म चिरायितो[8] गृहपतिर्[9]जाताधुना शर्वरी[10] स्थातुं नोचितमत्र[11] गच्छ निभृतं[12] लोकैरनालक्षितः । इत्थं लोलदृशा ह्यसावभिहितो दासीमुखेनाध्वगः स्थित्वा किंचिदिव क्व यामि रजनी प्राप्तेत्युदीर्य[13] स्थितः ॥ १८ ॥ स्मर्तव्या वयमिन्दुसुन्दरमुखि प्रस्तावतोऽपि[14] त्वया स्यादेवं यदि नाथ दास्यति विधिर्जातिस्मरत्वं[15] मम । एकस्मिन्नपि जन्मनि प्रियतमे जातिस्मरत्वं कुतः प्राणाः पान्थ समं त्वयैव चलिताः क्वाद्यापि जन्मैकता ॥ १९ ॥ भ्रातः पान्थ पथि त्वया न पथिकः कश्चित्समासादितो बाले नैकशतानि कीदृश इति प्रख्यायतां वल्लभः । यं दृष्ट्वा प्रमदाजनस्य भवतः स्फारे[16] मुदा लोचने स ज्ञेयो दयितो ममेति पथिकायावेद्य मोहं गता[17] ॥ २० ॥ भोः पान्थ त्वरितोऽसि तिष्ठ निमिषं किंचिद्वदामो वयं मार्गोऽयं पुरतो द्विधा खलु भवेद्वामेन नो गम्यताम् । तत्रास्ते सहकार कोमलतरोर्मूले प्रपापालिका तस्या लोचनवागुरा[18]निपतितो न त्वं पुनर्यास्यसि ॥ २१ ॥ नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां त्यक्त्वा मामिह पुष्पिणीति[19] गुरवः प्राप्ता गृहाभ्यन्तरम् । शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते स्वामिन्नागम[20]लालनीय रजनीं[21] लक्ष्मीपते[22] रक्ष माम् ॥ २२ ॥

---

१ गाढान्धकारा । २ एतेन रात्रौ जागरणपरतया भवितव्यमिति सूचितम् । ३ गङ्गा, सुरतोत्साहवर्धिका च । ४ आवयोर्मेलनम् । नावः सङ्गमो वा । ५ निबिडशृङ्गारात्मकस्यानन्दस्य जलस्य चेत्यर्थः । ६ प्रावृट्काले । ७ त्यक्त्वा । ८ बहोः समयाद् दूरं प्राप्तः । ९ गृहस्य पतिः न तु मम पतिरित्येवं तत्रानुरागाभावः सूचितः । १० रात्रिः । ११ मम गृहे बहिःप्रदेशे च । १२ अनुद्धतं सत् । १३ अभिधाय । १४ प्रसङ्गवशात् । १५ जन्मान्तरस्मर्तृत्वम् । एतेन त्वयि गते मम जीवनं तु न भावि, जन्मान्तरे चावश्यं भाविनि तव प्रेयस्त्वस्मरणं विधाता विदध्यादिति प्रार्थय इति गाढानुरागित्वं सम्भावितम् । एतदेव परार्द्धे स्पष्टीकृतम् । १६ विकसिते । १७ एतेन त्वादृशमेवाकाङ्क्षामीति सूचितम् । १८ मृगबन्धनजालम् । एतेन पान्थस्य मृगत्वं सूचितमिति तत्रैव त्वयाऽवस्थेयम्, अहमेव तादृशी भूत्वाऽवस्थास्य इति सूचितम् । १९ रजस्वलेति । न त्वहं तादृशीत्येकाकिनी त्वयाऽहं भोक्तव्येति सूचितम् । २० आगमेन-'स्वागतमस्तु' इति आगमनानुमोदनेन लालनीयेत्यर्थः । वेदस्तव्येति तु प्रतीतिमात्रम् । २१ सकलां रात्रिमित्यर्थः । २२ लक्ष्म्या इव चपलाया मम पते । नारायणेति तु वस्तु 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु ।' इति सिद्धान्तानुरोधेन प्रत्यायनमात्रम् ।

## गणिकाप्रशंसा ।

गणिकाऽगण्यभावाढया सौन्दर्यमदसम्भृता । अङ्गलग्ना भवेद्भव्या किं तर्हि स्वर्गवाञ्छया ॥ १ ॥ गाने वाद्ये च नृत्ये च भाषणे दर्शने रतौ । अद्वितीयाऽऽहि[1]ता धात्रा गणिका भुवनत्रये ॥ २ ॥ यदि स्यात् स्वप्रिया भोगे प्रमोदस्तात्त्विकः स्थितः । किं तर्हि कृतिनोऽभूवन् गणिकारतिलोलुपाः ॥ ३ ॥ क स भावः क वा हावः परिष्वङ्गविधिः क सः । यस्या दर्शनमात्रेण निर्[3]वृतिर्गणिका परा ॥ ४ ॥ न येषां यौवनोद्रेको न वा येषामुदारता । ते निन्दन्तुतरां कामं गणिकां दैववञ्चिताः ॥ ५ ॥ नागरिकै[4]रतिसौख्यं प्रभवति वेत्तुं यथा न दुर्मेधाः[5] । गणिकासङ्गामोदं न तथा (ऽ)[6]सुकृती सखे जातु ॥ ६ ॥ दुर्लभ इति बत मन्दा गणिकासङ्गं परं विनिन्दन्ति । वयमपि निन्दितुमीशाः स्वर्गप्रमदारतेर्लक्ष्मीम् ॥ ७ ॥ आराधयितुः प्रेमप्रतीक्षणार्थं स्पृहा परं यासाम् । ता ननु सौभगदेव्यो गणिकाः कृतिनां समाराध्याः ॥ ८ ॥ यदि गणिकाऽऽराधनतो निर्वृतिलाभोऽञ्जसा सुखं कृतिनाम् । अ[7]तनुसुखे तनु[8]हानिर्न तर्हि कष्टा बुधैर्भाव्या ॥ ९ ॥

## गणिकानिन्दा ।

वेश्याऽसौ मदनज्वाला रूपेन्धनसमेधिता । कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १ ॥ अस्याश्च सुरतं ज्वाला कामोऽग्निः प्रणयः समित् । नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ २ ॥ इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः । निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥ ३ ॥ धनाशा कैतवस्नेहो[9] [10]वितथैश्चित्ततोषणम् । एकमप्यस्ति नात्मासु कथं वेश्यासमा वयम् ॥ ४ ॥ कष्टं जीवति गणिका गणकोऽपि च राजसेवको वैद्यः । दिवसे दिवसे मरणं परस्य यच्चित्तर[11]ञ्जनं वृत्तिः ॥ ५ ॥ न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति । यवाः[12] प्रकीर्णा न भवन्ति शैलयो न वेश[13]जाता शुचयस्तथाऽङ्गनाः ॥ ६ ॥ हारहीरकहिरण्यभूषणैस्तोषमेति[14] गणिका धनैषिणी । प्रेमकोमलकटाक्षवीक्षितैरेव जीवति कुलाङ्गनाजनः ॥ ७ ॥ एता हसन्ति च रुदन्ति च वित्तहेतोर्विश्वासयन्ति पुरुषं न च विश्वसन्ति । तस्मान्नरे[15]ण कुलशीलसमन्वितेन वेश्याः श्मशानघटिका इव वर्जनीयाः ॥ ८ ॥ जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च । यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया पण्य[16]स्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ९ ॥ केशः कुन्दमिषादिवोपहसति द्रव्यैर्विहीनाञ्जनान्यूनां ग्रन्थिधनं विलोकितुमिवोद्ग्रीवस्तनस्तिष्ठति । प्रेमच्छेदकृपाणवल्लिसुष[17]मां रोमालिरालम्बते यस्याः सा कथमस्तु चेतसि चमत्काराय वाराङ्गना ॥ १० ॥ वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि

---

१ स्थापिता निर्मितेति भावः । २ पुरूरवाद्याः । ३ स्खलनं मोक्षश्च । ४ विदग्धनायिकासुरतानन्दम् । ५ ग्रामीणः । अचतुर इति भावः । ६ सुकृती अधर्मभीरुः । असुकृती-मन्दभाग्यश्चेत्यकारप्रश्लेषादर्थः । ७ परमानन्दे कामसुखे च । ८ अल्प-शरीर- । कुगणिकानां सांसर्गिकरोगे शरीरसौख्यं नश्यतीति, मोक्षलाभे तनोस्त्यागः शास्त्रसिद्धः इत्युभयथा तथा वचनम् । ९ छलप्रधानोऽनुरागः । १० कृत्रिमैर्भावैः । ११ अत्र गणिकादेरन्योऽन्यं साम्यं व्यज्यते । १२ धान्यविशेषाः । १३ वेश्याः । १४ 'सर्वं वाक्यं सावधारणं भवति' इति हीरादिभिरेव तोषमेति न तु प्रेमादिभिरिति वक्तव्यम् । अत एव धनैषिणीतिविशेषणसार्थकयम् । १५ तृषितेनापीति शेषः । १६ वेश्यासु । १७ 'सुषमा परमा शोभा' इत्यमरः ।

वर्णाधमः फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा। ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे त्वं वापीव लतेव नौरिव जनं वेश्याऽसि सर्वं भज ॥ ११ ॥

## स्वाधीननायकावर्णनम्।[1]

यदपि रतिमहोत्सवे नकारो यदपि करेण च नीविधारणानि। प्रियसखि पतिरेष पार्श्वदेशं तदपि न मुञ्चति तत्किमाचरामि ॥ १ ॥ मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति। अन्यापि किं न सखि भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरागः ॥ २ ॥ वपुषि तव तनोति रत्नभूषां प्रचुरिति धन्यतमाऽसि किं ब्रवीमि। सखि तनुनयनान्तरालभीरुःकलयति मे न विभूषणानि कान्तः ॥ ३ ॥ अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः। किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः पतिर्नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःखितम् ॥ ४ ॥ श्वश्रूः पश्यति नैव पश्यति यदि भ्रूभङ्गवक्रेक्षणा मर्मच्छेदपटु प्रतिक्षणमसौ ब्रूते ननान्दा वचः। अन्यासामपि किं ब्रवीमि चरितं स्मृत्वा मनो वेपते कान्तः स्निग्धदृशा विलोकयति मामेतावदागः सखि ॥ ५ ॥ वक्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य[2] वा धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम्। स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं दृक्पथं काप्यन्या दयितस्य मे सखि कथं तस्यास्तु भेदग्रहः[3] ॥ ६ ॥ स्वीयाः सन्ति गृहे गृहे मृगदृशो यासां विलासक्वणत्काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति। को हेतुः सखि कानने पुरपथे सौधे सखी संनिधौ भ्राम्यन्ती मम वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ॥ ७ ॥ सन्त्येव प्रतिमन्दिरं युवतयो यासां सुधासागरस्रोतःस्यूतसरोजसुन्दरचमत्कारा दृशोर्विभ्रमाः। चित्रं किंतु विचित्रमन्मथकलावैशद्यहेतोः पुनर्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम्[4] ॥ ८ ॥ एतत्किं प्रणयिन्यपि प्रणयिनी यन्मानिनी जायते मन्ये मानविधौ भविष्यति सुखं किंचिद्विशिष्टं रसात्। वाञ्छा तस्य सुखस्य मेऽपि हृदये जागर्ति नित्यं परं स्वप्नेऽप्येष न मेऽपराध्यति पतिः कुप्यामि तस्मै कथम् ॥ ९ ॥ मध्ये न कृशिमा[7] स्तने न गरिमा[8] देहे न वा कान्तिमा[9] श्रोणौ न प्रथिमा[10] गतौ न गरिमा[11] नेत्रे न वा वक्रिमा। लास्ये न द्रढिमा[12] न वाचि पटिमा[13] हास्ये न वा स्फीतिमा[14] प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम्[15] ॥ १० ॥

## खण्डिता[16]नायिकाया वर्णनम्।

वक्षः किमु कलशाङ्कितमिति किमपि प्रष्टुमिच्छन्त्याः। नयने नवोढसुदृशः प्राणेशः पाणिना पिदधे ॥ १ ॥ सत्यमेव गदितं त्वया विभो जीव एक इति यत्पुरावयोः। अन्यदार[17]निहिता नखव्रणा-

---

१ अस्या एव स्वाधीनभर्तृकेति नाम। 'कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्। विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्तृका (नायका)॥' इति साहित्यदर्पणकाराः। २ नृत्यस्य। ३ इयं प्रौढाया उक्तिः। ४ इयं परकीयाया उक्तिरित्येके। ५ गृहे गृहे। ६ इयं वेश्याया उक्तिरित्येके। ७ कृशोदरीत्वम्। ८ दुर्भरत्वम्, अति पुष्टत्वमिति यावत्। ९ कान्तत्वम्, रमणीयतेति यावत्। १० प्रथिमा स्थूलत्वम्। ११ मन्थरगामित्वम्। १२ अभ्यासातिशयः। १३ चातुर्यम्। १४ वैशद्यम्। १५ इयं मुग्धाया उक्तिः। १६ 'पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः। सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥' इति साहित्यदर्पणोक्तलक्षणायाः। १७ परस्त्री-।

स्तावके वपुषि पीडयन्ति माम्[१] ॥ २ ॥ अनलङ्कृतोऽपि सुन्दर हरसि मनो मे यतः प्रसभम् । किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः[२] ॥ ३ ॥ सव्यलीकमवधीरितखिन्नं प्रस्थितं सपदि कोपपदेन । योषितः सुहृदिव स्म रुणद्धि प्राणनाथमभिबाष्पनिपातः ॥ ४ ॥ शङ्किताय कृतबाष्पनिपातामीर्ष्यया विमुखितां दयिताय । मानिनीमभिमुखाहितचित्तां शंसति स्म घनरोमविभेदः ॥ ५ ॥ वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य दीर्घं न निश्वसिति जल्पति नैव किंचित् । प्रातर्जलेन वदनं परिमार्जयन्ती बाला विलोचनजलानि तिरोदधाति ॥ ६ ॥ कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशं मुक्तास्तया परभिया परुषा न वाचः । दूतीमुखे मृगदृशा स्खलदम्बुपूरा दूरात्परं निदधिरे नयनान्तपाताः ॥ ७ ॥ सुभग कुरबकस्त्वं किं ममालिङ्गनोत्कः किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः । त्वयि नियतमशोके युज्यते पादघातः प्रियमिति परिहासात् पेशलं काचिदूचे ॥ ८ ॥ भवतु विदितं व्यर्थालापैरलं प्रियगम्यतां तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः । तव यदि तथा रूढं प्रेम प्रपन्नमिमां दशां प्रकृतितरले का नः पीडा गते हतजीविते ॥ ९ ॥ उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा ततो मयि विधीयतां वसु पुरा यदङ्गीकृतम् । इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया क्वणत्कनककङ्कणं करतलात्समाकृष्यते ॥ १० ॥ जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा निष्पीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः । भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं पञ्चेषुः पुनरेष मां बहुतरैः क्रूरैः शरैः कृन्तति ॥ ११ ॥ प्रातः प्रातरुपागतेन जनिता निर्निद्रता चक्षुषोर्मन्दाया मम गौरवं व्यपहृतं प्रोत्पादितं लाघवम् । किं तद्यन्न कृतं त्वया रमण भीर्मुक्ता मया गम्यतां दुःखं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि ॥ १२ ॥ लाक्षालक्ष्म ललाटपट्टफलके केयूरमुद्रा गले वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः । दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ १३ ॥ कान्तं वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकैरालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत् । रूक्षं नोक्तवती न वा कृतवती निश्वासकोष्णे दृशौ प्रातर्मङ्गलमङ्गनाकरतलादादर्शमादर्शयत् ॥ १४ ॥

## अभिसारिणीवर्णनम् ।

भीताऽसि नैव भुजगात्पथि मद्भुजस्य सङ्गे पुनः किमपि कम्पमुरीकरोषि । अम्भोधरध्वनिभिरक्षुभिताऽसि तन्वि मद्वाचि साचिवदनाऽसि किमाचरामि ॥ १ ॥ इह जगति रतीशप्रक्रियाकौशलिन्यः कति कति न निशीथे सुभ्रुवः संचरन्ति । मम तु विधिहताया जायमानस्मितायाः सहचरि परिपन्थी हन्त दन्तांशुरेव ॥ २ ॥ अम्भोजाक्ष्याः पुरनवलताधाम्नि संकेतभाजश्चेतोनाथे चिरयति भृशं मोहनिद्रां गतायाः । स्वच्छं नाभीहृदवलयितं कान्तरत्नांशुजालं तोयभ्रान्त्या पिबति हरिणी विस्मयं च प्रयाति ॥ ३ ॥ किमुत्तीर्णः पन्थाः कुपितभुजगीभोगविषमो विसोढा भूयस्यः किमिति कुलपालीकटुगिरः । इति स्मारं स्मारं दरदलितशीतद्युतिरुचौ सरोजाक्षी शोणं दिशि नयनकोणं विकरति ॥ ४ ॥ जनो दुर्लक्ष्योऽयं कुलममलिनं वर्त्म विषमं पतिश्छिद्रान्वेषी प्रणयिवचनं दुष्परिहरम् । अतः काचित्तन्वी रतिविहितसंकेतगतये गृहाद्वारंवारं

---

१ त्वदीये । २ इयं प्रौढाया उक्तिः । ३ धीरायाः प्रौढाया इदं वर्णनम् । ४ पीडयतीति भावः । ५ सहास- । ६ शत्रुः । ७ अभिमते प्रिये । ८ स्मृत्वा स्मृत्वा । ९ किञ्चिदुदित- । १० दुर्लभदर्शनः । ११ पवित्रम् । १२ मार्गः । अभिसरणपद्धतिरिति भावः । १३ कान्तस्य तत्रागमनाज्ञानरूपम् ।

निरगमदथ प्राविशदथ ॥ ५ ॥ सितं वैसनमर्पितं वपुषि नीलचोलभ्रमान्मया मृगमदाशया मलयजद्रवः सेवितः । करेण परिबोधितः स्वजनशङ्कया दुर्जनैः परं परमपुण्यतः सखि न लङ्घिता देहली ॥ ६ ॥ प्रत्यावृत्य यदि व्रजामि भवनं वाचां भवेत्प्रच्यवो निर्गच्छामि निकुञ्जमेव यदि वा को वेद किं स्यादितः । तिष्ठामो यदि वा कचिद्वनतटे किं जातमेतावता मध्येवैर्त्म कलानिधेः समुदयो जातः किमातन्यताम् ॥ ७ ॥ भ्रातः कङ्कण किं कदाप्यसि घनाश्लेषेषु विश्लेषितं दूरे किङ्किणि किं कृताऽप्यसि रतारम्भे रणत्कारिणी । किं मञ्जीर बहिष्कृतोऽप्यसि रहस्तल्पाधिरोहे मया संकेताध्वनि बद्धवैरमिव यन्मौखर्यमालम्बसे ॥ ८ ॥ उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता । आरब्धे रभसान्मया प्रियसखि क्रीडाभिसारोत्सवे चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥ ९ ॥ एषा फुल्लकदम्बपुष्पसुरभौ काले घनोद्भासिते कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका । विद्युद्वारिदगर्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी पादौ नूपुरलग्नकर्दमधरौ प्रक्षालयन्ती स्थिता ॥ १० ॥ मार्गे पङ्कचिते घनान्धतमसे निःशब्दसंचारया गन्तव्या च मया प्रियस्य वसतिर्मुग्धेति कृत्वा मतिम् । आजानूद्धृतनूपुरा करतलेनाच्छाद्य नेत्रे भृशं कृच्छ्रेणाप्तपदस्थितिः स्वभवने पन्थानमभ्यस्यति ॥ ११ ॥ छिद्रान्वेषणतत्परः प्रियसखि प्रायेण लोकोऽधुना रात्रिश्चापि घनान्धकारबहला गन्तुं न ते युज्यते । मा मैवं सखि वल्लभः प्रियतमस्तस्योत्सुका दर्शने युक्तायुक्तविचारणा यदि भवेत्स्नेहाय दत्तं जलम् ॥ १२ ॥ दूती विद्युदुपागता सहचरी रात्रिः सहस्थायिनी दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम् । वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवैर्जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम् ॥ १३ ॥ द्वित्रैः केलिसरोरुहं त्रिचतुरैर्धम्मिल्लमल्लीस्रजं कण्ठान्मौक्तिकमालिकां च तदनु त्यक्त्वा पदैः पञ्चभिः । अन्तः कान्तवियोगकातरतया दूराभिसारातुरा तन्वङ्गी निरुपायमध्वनि परं श्रोणीभरं निन्दति ॥ १४ ॥ शीतांशावुदिते च कूजति पिके मन्दं समीरे यति स्वात्मानं परिलिप्य चन्दनरसैराच्छाद्य वासः सितम् । निःशब्दामलहीरकाभृतिभृता दन्तप्रभां सर्वतो वर्षन्ती शनकैः प्रयाति दयितावासं कुरङ्गेक्षणा ॥ १५ ॥ प्राणेशेन विना वृथैव वयसः सौभाग्यलाभोऽप्ययं किं त्वासक्तिरमुष्य नास्ति तदिति प्रेम्णां विधेया मया । इत्यालोच्य विहाय भीतिमभितः प्रौढा सरोजेक्षणा प्रेयांसं समुपेतुमुद्यतवती भव्ये निशीथे क्षणात् ॥ १६ ॥ उद्दामाम्बुदवर्धितान्धतमसि प्रभ्रष्टदिङ्मण्डले काले यामिकजाग्रदुग्रसुभटव्याकीर्णकोलाहले । कर्णस्यासुहृदार्णवाम्बुवडवावह्नेर्यदन्तःपुरादायाताऽसि तदम्बुजाक्षि कृतकं मन्ये भयं योषिताम् ॥ १७ ॥ पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे जाते सद्मजना मिथः कृतमहोत्साहं पुरः प्रस्थिताः । सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमत्रान्तरे यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥ १८ ॥ लोलत्वोलचमत्कृति प्रविलसत्काञ्चीलताझङ्कृति न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नति । स्फूर्जद्दीधिति विस्फुरद्गति चलच्चामीकरालंकृति क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥ १९ ॥

---

१ इयं कृष्णपक्षेऽभिसारिणी । २ अयं च दुर्जनः पतिरेवाभिधीयते । ३ मार्गमध्ये । ४ वेगात् । ५ प्रावृषि समये । ६ इदं सख्योरन्योऽन्यमामन्त्रणम् । ७ अन्धकारपुञ्जः । ८ केशपाशे नेपथ्यात्मना धृतां मल्लिकापुष्पमालाम् । ९ अन्तःपुरम् । १० 'भ्रातः प्राणगण प्रयाणसमये स्वात्माधिनाथस्य ते कुर्याः स्थैर्यमपि क्षणं करुणया कण्ठस्थलेऽपि स्थितः । यावल्लोचन—

## [1]कलहान्तरितायाः नायिकाया वर्णनम् ।

द्वारि चक्षुरधिपाणि[2] कपोलौ जीवितं त्वयि कुतः कलहोऽस्याः । कामिनामिति वचः पुनरुक्तं प्रीतये नवनवत्वमियाय[3] ॥ १ ॥ चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारकान्ति । सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥ २ ॥ विरमति कथनं विना न खेदः सति कथने समुपैति कापि लज्जा । इति कलहमधोमुखी सखीभ्यो [4]लपितुमनालपितुं समाचकाङ्क्ष ॥ ३ ॥ अनुनयति पतिं न लज्जमाना कथयति नापि सखीजनाय किंचित् । प्रसरति मलयानिले नवोढा वहति परंतु चिराय शून्यमन्तः ॥ ४ ॥ प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता । न किंचिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥ ५ ॥ न बरीभरीति कबरीभरे स्रजो न चरीकरीति मृगनाभिचित्रकम् । विजरीहरीति न पुरेव मत्पुरो विवरीवरीति न च विप्रियं प्रिया ॥ ६ ॥ तत्तद्वदत्यपि यथावसरं हसत्यप्यालिङ्गनेऽपि न निषेधति चुम्बनेऽपि । किंतु प्रसादनभयादपि निह्नुतेन कोपेन कोऽपि विहितोऽद्य रसावतारः ॥ ७ ॥ न तिर्यगवलोकितं भवति चक्षुरालोहितं वचोऽपि परुषाक्षरं न च पदेषु संगच्छते । हिमार्त इव वेपते सकल एव बिम्बाधरः प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥ ८ ॥ मय्यायाते सपदि शयनादुत्थितं चाटु वाक्यं बद्ध्वा पाणी बहु निगदितं क्षालितं पादपद्मम् । दत्त्वा वीटीं सविनयमथोद्वीजितं तालवृन्तैर्ब्रूते कोपं कुवलयदृशो भूयसी भक्तिरेव ॥ ९ ॥ चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते । व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशितः ॥ १० ॥ स्फुटतु हृदयं कामः कामं करोतु तनुं [5]तनुं न सखि चटुलप्रेम्णा कार्यं पुनर्दयितेन मे । इति सरभसं मानोद्रेकादुदीर्य वचस्तया रमणपदवी सारङ्गाक्ष्या ससंभ्रममीक्षिता ॥ ११ ॥ पयःपीठं दत्ते त्वरितमभिधत्ते न च वचः समाज्ञामाधत्ते शिरसि न विधत्ते च मिलितम्[6] । इति [7]स्वान्ते गोपायितनिबिडकोपा प्रतिपदं कृशोदर्याश्चर्या प्रियमहह पर्याकुलयति ॥ १२ ॥ पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः । स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥ १३ ॥ ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा मनस्विन्या रोषप्रणयरभसाद्गद्गदगिरा । अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ॥ १४ ॥ चलं चेतः पुंसां सहजसरलाः पङ्कजदृशो भवत्येव क्रोधः क्वचिदपि कदाचित्तरुणयोः[8] । दहेदङ्गं [9]भृङ्गी विधुरपि विदध्यात्परिभवं स्मरो[10] मां मथ्नीयादिति किमपि नाज्ञासिषमहम् ॥ १५ ॥ आनन्द क्वचिदञ्च मुञ्च हृदयं चातुर्य धैर्य त्वया स्थेयं केति विचार्यतां रसिकते निर्याहि पर्याकुला ।

---

—नीरनिर्मितनदीवन्याभिरन्यादृशं पन्थानं परिकल्पयामि भविता येनावयोर्वाञ्छितम् ॥ १ ॥ कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ स्वस्त्यं नाथ निमीलयामि नयने यावन्न शून्या दिशः । आयाता वयमागमिष्यसि सुहृद्वर्गस्य भाग्योदयैः सन्देशं वद कस्तवाप्यभिमतस्तीर्थेषु तोयाञ्जलिः ॥ २ ॥' इत्याद्युदाहरणमपि प्रोषितनायकाया इति केचित् । वयं तु प्रवत्स्यन्नायकाया इति ब्रूमः । यावन्न शून्या दिशो यावन्न प्रलयस्तावन्नेत्रे निमीलयामीति प्रलयोत्तरं याऽन्येषां गतिः सा ममापीति भावः । १ अस्या लक्षणं तु यथोक्तं साहित्यदर्पणकारैः—'चाटुकारमपि प्राणनाथं रोषादपास्य या । पश्चात्तापमवाप्नोति कलहान्तरिताऽस्तु सा ॥' इति । २ करतलोपरि । ३ प्राप । ४ भाषितुम् । ५ सपत्नीनाम । ६ कृशाम् । ७ मेलनमित्यर्थः । अत्र भावे क्तः । ८ चित्ते । ९ तरुणी च तरुणश्चेति तयोः । १० मदनोद्दीपकत्वात् ।

रक्ताम्भोजपरीतषट्पदनदत्पक्षोपमानक्षमक्षुभ्यत्पक्ष्मचलाचलेक्षणयुगं पश्यामि तस्याननम् ॥ १६ ॥ मानम्लानमना मनागपि नतं नाकोकते वल्लभं निर्याते दयिते निरन्तरमियं बाला परं तप्यते । आनीते रमणे बलात्परिजनैर्मौनं समालम्बते धत्ते कण्ठगतानसून्प्रियतमे निर्गन्तुकामे पुनः ॥ १७ ॥ आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो भुग्नभ्रू रतिखण्ड्यमानमधरं धत्ते न केशग्रहे । अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने तन्व्या शिक्षित एष संप्रति कुतः कोपप्रकारोऽपरः ॥ १८ ॥ एकत्रासन-संस्थितिः परिहृता प्रत्युद्गमाद्दूरतस्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः।आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ १९ ॥ आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादराद्व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते । मय्यालापवति प्रतीप-वचनं सख्या सहाभाषते तन्व्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥ २० ॥ दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं संश्लिष्यत्यरुणे गृहीतवसने कोपाञ्चितभ्रूलतम् । मानिन्याश्चरणानति-व्यतिकरे बाष्पाम्बुपूर्णेक्षणं चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ २१ ॥ तारल्यं मुखमेलने न च वचोवैदग्ध्यमन्यादृशं न भ्रूभङ्गपरिग्रहो न च रहःप्रश्नेऽपि मौनस्थितिः । एवं संप्रति तर्क्यते तु सुदृशः कोपस्तु मद्वस्तुनि स्वाधीनेऽपि पुरेव पङ्कजदृशो यन्न प्रभुत्वग्रहः ॥ २२ ॥ शोणं वीक्ष्य मुखं विचु-म्बितुमहं यातः समीपं ततः पादेन प्रहृतं तया सपदि तं धृत्वा सहासे मयि । किंचित्तत्र विधातुमक्षम-तया बाष्पं त्यजन्त्याः सखे ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥ २३ ॥ सा पत्युः प्रथमापराधसमये सख्योपदेशं विना नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् । स्वच्छैरच्छकपोल-मूलगलितैः पर्यस्तनेत्रोत्पला बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥ २४ ॥ एकस्मिञ्शयने-विपक्षरमणीनामग्रहे मुग्धया सद्यः कोपपरिग्रहग्लपितया चाटूनि कुर्वन्नपि । आवेगादवधीरितः प्रियतम-स्तूष्णीं स्थितस्तत्क्षणं मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ २५ ॥ तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया काकुव्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया । हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालितप्रोष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥ २६ ॥ भ्रूभेदो रचितश्चिरं नयनयो-रभ्यस्तमामीलनं रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः । धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥ २७ ॥ न ब्रूते परुषां गिरं वित-नुते न भ्रूयुगं भङ्गुरं नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि । कान्ता गर्भगृहे गवाक्ष-विवरव्यापारिताक्ष्या बहिः सख्या वक्त्रमभिप्रयच्छति परं पर्यश्रुणी लोचने ॥ २८ ॥

## विप्रलब्धायां नायिकाया वर्णनम् ।

उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः । याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः॥ १ ॥ निस्नेह निष्करुण निस्त्रप निर्निमित्त मद्वञ्चक त्वमपि संप्रति वञ्चितः स्याः ।इत्यक्षराणि लिखितानि समीक्ष्य

---

१ ईषदपि । २ न तु वाससः स्रंसने कलहं करोतीति भावः । एवं परत्राप्यन्वयः । ३ एता-दृशानि यद्यपि न प्रकृतोदाहरणानीति वक्तुं सुशकम्, तथापि मानवत्या नायिकाया अपि प्रायोऽत्रैवान्तर्भावः स्यादिति मानवत्या अप्युदाहरणानि न पृथगिति बोध्यम् । ४ धृष्टनायकस्ये-यमुक्तिरिति दर्पणकाराः । ५ मुग्धायाः खण्डिताया मानिन्या वेदमुदाहरणं साम्प्रतमित्याह । ६ सपत्नीनामोच्चारणे । ७ शय्यासमीपम् । ८ एतस्या लक्षणं तु साहित्यदर्पणकारैः–"प्रियः कृत्वाऽपि सङ्केतं यस्या नायाति सन्निधिम् विप्रलब्धेति सा ज्ञेया नितान्तमवमानिता ॥" इत्युक्तम् । ९ प्रहरः । १० जीवितस्य नाथः । अहं तु जीवितमेव न धरिष्यामीति तस्य मत्कृते जीवितनाथत्वमेव कथमिवेति भावः । ११ निर्लज्ज ।

कश्चित्संकेतकेतकदले नितरामताम्यत् ॥ २ ॥ संकेतकेलिगृहमेत्य निरीक्ष्य शून्यमेणीदृशो निभृत-निश्वसिताधरायाः । अर्धाक्षरं वचनमर्धविकासि नेत्रं ताम्बूलमर्धकवलीकृतमेव तस्थौ ॥३॥ कपटवचन-भाजा केनचिद्वारयोषा सकलरसिकगोष्ठीवञ्चिका वञ्चिताऽसौ । इति विहसति रिङ्गद्भृङ्गविक्षिप्तचक्षुर्विकच-कुसुमकान्तिच्छद्मना केलिकुञ्जः ॥ ४ ॥ नायातो यदि निर्दयः सखि शठस्त्वं दूति किं दूयसे स्वच्छन्दं बहुवल्लभैः स रमते किं तत्र ते दूषणम् । पश्याद्य प्रियसंगमाय दयितस्याकृष्यमाणं गुणैरुत्कण्ठा-र्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ ५ ॥ शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभुवं दूती नापि निवेदिता सहचरी पृष्टाऽपि नो वाऽनया। शंभो शंकर चन्द्रशेखर हर श्रीकण्ठ शूलिञ्शिव त्रायस्वेति कुरङ्गशावकदृशा भर्गस्य चक्रे स्तुतिः ॥ ६ ॥ तत्किं कामपि कामिनीमभिसृतः किं वा कलाकेलिभिर्बद्धो बन्धुभिरन्धकारिणि वनोपान्ते किमु भ्राम्यति । कान्तः क्लान्तमना मनागपि पथि प्रस्था-तुमेवाक्षमः संकेतीकृतमञ्जुमञ्जुललताकुञ्जेऽपि यन्नागतः ॥७॥ सास्रे मा कुरु लोचने विगलति न्यस्तं शलाकाञ्जनं तीव्रं निःश्वसितं निवर्तय नवास्ताम्यन्ति कण्ठस्रजः । तल्पे मा लुठ कोमलाङ्गि तनुतां हन्ताङ्ग-रागोऽश्नुते नानीतो दयितोपयानसमयो मा स्मान्यथा मन्यथाः ॥ ८ ॥ अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृद्यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः । इत्यल्पेतरकल्पना-कवलितस्वान्ता निशान्तान्तरे बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ९ ॥ दत्त्वा धैर्य-भुजंगमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदीमङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः प्रियः । संतापाकुलया तया च परितः पाथोधरे गर्जति क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥ १० ॥ आलीभिः शपथैरनेककपटैः कुञ्जोदरं नीतया शून्यं तच्च निरीक्ष्य विक्षुभितया न प्रस्थितं न स्थितम् । न्यस्ताः किंतु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा तादृग्भङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥ ११ ॥

## प्रोषितभर्तृकाया नायिकाया वर्णनम् ।

अर्पयति प्रतिदिवसं प्रियस्य पथि लोचने बाला । निक्षिपति कमलमालाः कोमलमिव कर्तुमध्वा-नम् ॥ १ ॥ आकस्मिकस्मितमुखीषु सखीषु विज्ञा विज्ञास्वपि प्रणयनिह्नवमाचरन्ती । तत्रैव रङ्कुनयना नयनारविन्दमस्पन्दमाहितवती दयिते गतेऽपि ॥ २ ॥ विरहविदितमन्तःप्रेम विज्ञाय कान्तः पुनरपि वसु तस्मादेत्य मे दास्यतीति । मरिचनियममक्ष्णोर्न्यस्य बाष्पोदबिन्दून्विसृजति पुरयोषिद्द्वारदेशोपविष्टा ॥ ३ ॥ तां जानीथाः परिमितकथां जीवितं मे द्वितीयं दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् । गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥ ४ ॥ माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः काञ्ची याते प्रभवति हरौ सुभ्रुवः प्रस्थितैव । अन्यद्ब्रूमः किमपि धमनी वर्तते वा न वेति ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥ ५ ॥ समर्प्य हृदि दारुण

---

१ अत्र वचनादीनामर्धाक्षरत्वादिना चित्तविक्षेपः सम्भावितः । २ भ्राम्यद्- । ३ बह्व्यो वल्लभा यस्य सः । एतेन स्वात्मनि तस्यानुरागाभावः सूचितः । ४ इदं यद्यपि उत्कण्ठिताया उदाहरणं तथाऽपि विप्रलब्धाया उत्कण्ठितात्वं नातिप्रतिकूलमित्यपृथगुदा-हरणम् । ५ स्मरान्तकस्य महादेवस्येति भावः । मदनबाधां भवानेव निवर्तयितुं क्षम इति स्तवनम् । ६ अशोकेति वेतसेति वा । ७ अश्रुपूर्णे । ८ दैवस्य । ९ प्रभातावसरे । १० मेघे । ११ "नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः । सा मनोभवदुःखार्ता भवेत् प्रोषितभर्तृका ॥" इत्युक्तलक्षणायाः । १२ मृगाक्षी । १३ निहितवती । १४ वेश्या । १५ वियोगकालिकेषु, वर्षाकालिकेषु वा । अत्र विशेषस्तु अस्माकं मेघसन्देशव्याख्यायाम् । १६ नाडी ।

मदनवेदनां भूयसीमनेन तव वर्त्मना प्रचलितः स मे वल्लभः । न वामदिशि शब्दितं किमिति बालया वायसि त्वया मदनसारिके किमिति वा कृतं नोदितम् ॥ ६ ॥ आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति । दत्त्वैकं सशुचा गृहं प्रतिपदं पान्थस्त्रिया-ऽस्मिन्क्षणे मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥ ७ ॥

## वासक[3]सज्जाया नायिकाया वर्णनम् ।

निजपाणिपल्लवतटस्खलनादभिनासिकाविवरमुत्पतितैः । अपरा परीक्ष्य शनकैर्मुमुदे मुखवासमास्य-कमलश्वसनैः ॥ १ ॥ नेदं समीरितमकारि कला न चेयमित्याकुलाः कथमपि प्रथमार्धमह्नः । एवं विधेयमथ वाच्यमिदं मयेति शेषं प्रियाः सुकृतिनामतिवाहयन्ति ॥२॥ कृतं वपुषि भूषणं चिकुर[4]धोरणी धूपिता कृता शयनसंनिधौ क्रमुकवीटिकासंभृतिः । अकारि हरिणीदृशा भवनमेत्य देहत्विषा स्फुरत्कनक-केतकीकुसुमकान्तिभिर्दुर्दिनम् ॥ ३ ॥ विदूरे केयूरे कुरु करयुगे रत्नवलयैरलं गुर्वी ग्रीवाभरणलति-केयं किमनया । नयामेकामेकावलिमपि मयि त्वं विरचयेर्न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ ॥ ४ ॥ श्वश्रूं स्वापयति च्छलेन च तिरोधत्ते प्रदीपाङ्कुरं धत्ते सौधकपोतपोतनिनदैः सांकेतिकं चेष्टितम् । शश्वत्पार्श्वविवर्तिताङ्गलतिकं लोलत्कपोलद्युति कापि कापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति ॥ ५ ॥ चोलं नीलनिचोलकर्षणविधौ चूडामणिं चुम्बने याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम् । इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती तत्किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥ ६ ॥ दृष्ट्वा दर्पणमण्डले निजवपुर्भूषां मनोहारिणीं दीप्तार्चिष्कपिशं च मोहनगृहं त्रस्यत्कुरङ्गीदृशः । एवं नौ[8] सुरतं भविष्यति चिराद्द्येति सानन्दया कामं कान्तदिदृक्षया च ललिता द्वारेऽर्पिता दृष्टयः ॥ ७ ॥ हारं गुम्फति तारकान्तिरुचिरं ग्रथ्नाति काञ्चीलतां दीपं न्यस्यति किंतु तत्र बहुलं स्नेहं न धत्ते पुनः । आलीनामिति वासकस्य रजनौ कामानुरूपां क्रियां संचिस्मेरमुखी नवोढसुमुखी दूरात्समुद्वी-क्षते ॥ ८ ॥ शिल्पं दर्शयितुं करोति कुतुकात्कह्लारहारस्रजं चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्वीक्षते । गृह्णात्याभरणं नवं सहचरीभूषाजिगीषामिषादित्थं पद्मदृशः प्रतीत्य चरितं स्मेराननोऽभूत्स्मरः ॥ ९ ॥

## विरहो[11]त्कण्ठिताया नायिकाया वर्णनम् ।

अम्भोरुहाक्षि शंभोश्चरणावाराधितौ केन । यस्मै विवलितवदना मदनाकूतं विभावयसि ॥ १ ॥ सखि स विजितो वीणावाद्यैः कयाऽप्यपरस्त्रिया पणितमभवत्ताभ्यां तत्र क्षपाललितं ध्रुवम् । कथमितरथा शेफालीषु स्खलत्कुसुमास्वपि प्रसरति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यते ॥ २ ॥ भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते । कार्कश्यं नमितेऽपि

---

१ अतिबहुलाम् । २ शोकव्याकुलया । ३ "कुरुते मण्डनं या तु सज्जिते वासवेश्मनि । साऽसौ वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥" इति साहित्यदर्पणकारैर्लक्षितलक्षणाया इति भावः । ४ केशपुञ्जः । ५ नानाप्रसाधनविधिः । ६ शिशु- । ७ वेश्या । ८ आवयोः । ९ निश्चितागमनस्य निलयस्य । १० ईषत्- । ११ अस्या लक्षणं चोक्तं यथा दर्पणकारैः–'आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः । तदनागमदुःखार्ता विरहोत्कण्ठिताऽस्तु सा ॥' इति । १२ दुष्टं मुखम् ।

चेतसि तनू रोमाञ्चमालम्बते दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥ ३ ॥ किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः किंवा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः । इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥ ४ ॥ यन्नाद्यापि समागतः पतिरिति प्रायः प्रपेदे परामित्थं चेतसि चिन्तयन्त्यपि सखीं न व्रीडया पृच्छति । दीर्घं निश्वसितं दधाति चकितं न प्रेक्षते केवलं किंचित्पक्वपलाण्डु पाण्डुररुचिं धत्ते कपोलस्थलीम् ॥ ५ ॥ आनेतुं न गता किमु प्रियसखी भीतो भुजंगात्किमु क्रुद्धो वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्तते । इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छलादक्ष्णोः काऽपि नवोढनीरजमुखी बाष्पोदकं मुञ्चति ॥ ६ ॥ स्नानं वारिदवारिभिर्विरचितो वासो घने कानने शीतैश्चन्दनबिन्दुभिर्मनसिजो देवः समाराधितः । नीता जागरणव्रतेन रजनी व्रीडा कृता दक्षिणा तप्तं किं न तपस्तथापि स कथं नायाति नेत्रातिथिः ॥ ७ ॥

## वीररसवर्णनम् ।

भर्तुः पिण्डानृणकरो यशःक्रयमहापणः । सुराङ्गनास्वयंग्राहो रम्यः कालोऽयमागतः ॥ १ ॥ प्रायेण सुकरं दानं प्रायेण सुकरं तपः । प्राणानपेक्षी व्यापारः पुनर्वीरस्य दुष्करः ॥ २ ॥ मा भैष्ट नैते निस्त्रिंशा नीलोत्पलदलत्विषः । एते वीरावलोकिन्या लक्ष्म्या नूतनविभ्रमाः ॥ ३ ॥ खड्गास्तिष्ठन्तु मत्तेभकुम्भकूटाट्टहासिनः । एकदोर्दण्डशेषेऽपि कः सहेत पराभवम् ॥ ४ ॥ हतेऽभिमन्यौ क्रुद्धेन तत्र पार्थेन संयुगे । अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥ ५ ॥ लोहितायति चादित्ये त्वरमाणो धनंजयः पञ्चविंशतिसाहस्रान्निजघान महारथान् ॥ ६ ॥ रथेभ्यो गजवाजिभ्यः सङ्ग्रामे वीरसंकराः । पतिताः पात्यमानाश्च दृश्यन्तेऽर्जुनताडिताः ॥ ७ ॥ पूर्णे शतसहस्रे द्वे पदातीनां नरोत्तमः । प्रजज्वाल रणे भीष्मो विधूम इव पावकः ॥ ८ ॥ आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः । रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥९॥ लक्ष्मणो लघुसंधानो दूरपाती च राघवः । कर्णो दृढप्रहारी च पार्थस्यैते त्रयो गुणाः ॥ १० ॥ न कालस्य न शक्रस्य न विष्णोर्वित्तदस्य च । श्रूयन्ते यानि कर्माणि तानि युद्धे हनूमतः ॥ ११ ॥ सप्तषष्टिहताः कोटयो वानराणां तरस्विनाम् । पश्चिमेनाह्नशेषेण मेघनादेन सायकैः ॥ १२॥ धृतधनुषि शौर्यशालिनि शैला न नमन्ति यत्तदाश्चर्यम् । रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥ १३ ॥ जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योन्यम् । कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या ॥ १४ ॥ रविमणिरपि निश्चेष्टः पादैस्तिग्मद्युतेर्मनाक्पृष्टः । ज्वलतितरामिति को वा मन्युं सोढुं क्षमो मानी ॥ १५ ॥ छिन्नेऽपि शस्त्रभिन्नेऽप्यापत्पतितेऽपि निर्विशेषेऽपि । हनुमति कृतप्रतिज्ञे दैवमदैवं यमोऽप्ययमः ॥ १६ ॥ लोकः शुभस्तिष्ठतु तावदन्यः पराङ्मुखानां समरेषु पुंसाम् ।

---

१ विनयावधिरक्षणम् । २ विचार्य । ३ अस्य लक्षणं यथोक्तं साहित्यदर्पणकारैः । 'उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः । महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः । प्रतिनेतृतदुत्कर्षालम्बनोद्दीपनान्वितः । चातुर्यमन्त्रणस्थैर्यप्रसादाद्यनुभावभूः ॥ क्रोधाभिमानहासप्रमुखव्यभिचारिभिः पुष्टः ॥' इति । ४ खड्गाः । ५ हस्ति- । ६ भुजदण्ड- । ७ अक्षौहिणीलक्षणं च यथोक्तम्- "पत्तिः सेना सेनामुखं च गुल्मं च वाहिनी चैव । पृतना चमूरनीकिनी दशगुणाऽक्षौहिणी भवति ॥" इति । ८ रक्तवर्णे सम्पद्यमाने । अस्तोन्मुखे सतीति भावः । ९ अर्जुनः । १० निहत्येति शेषः । ११ क्षिप्र- । १२ कुबेरस्य । १३ भयादिति भावः ।

पत्न्योऽपि तेषां न[1] ह्रिया मुखानि पुरः सखीनामपि दर्शयन्ति ॥ १७ ॥ हा तात तातेति स वेदनार्तः
कणञ्छक्र[2]न्मूत्रकफानुलिप्तः । वरं मृतः किं भवने किमाजौ[3] संदष्टदन्तच्छदभीम[4]वक्त्रः ॥ १८ ॥ संमू-
र्च्छितं संयुगसंप्रहारैः पश्यन्ति सुप्तप्रतिबुद्धतुल्यम्[5] । आत्मानमङ्गेषु सुराङ्गनानां मन्दाकिनीमारुतवीजिता[7]-
ङ्गम् ॥ १९ ॥ कश्चिद्द्विषत्खड्गहतोत्त[6]माङ्गः सद्यो विमानप्रभुतामुपेत्य । वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्क-
बन्धं समरे ददर्श ॥ २० ॥ ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः । कुम्भेषु लग्नाः
सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनाम् ॥ २१ ॥ भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहु-
मध्याः । गाढं शिवा[8]भिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥ २२ ॥ सलीलयातानि न
भर्तुरभ्र[9]मोर्न चित्रमुच्चैःश्रवसः पदक्रमम् । अनुद्रुतः सं[10]यति येन केवलं बलस्य शत्रु[11]ः प्रशशंस शीघ्रताम्
॥ २३ ॥ कोऽप्येष खण्डित[12]शिरा विकसन्[13]मुखश्रीः प्रारब्धताण्डवविधिः सुरकामिनीभिः । आलोक्यते
निजकराभिनयानुरूपव्यापारितेक्षणनिवेदितसत्त्वसारः ॥ २४ ॥ स्त्रीषु प्रवीरजननी जननी तवैव देवी
स्वयं भगवती गिरिजापि यस्य । त्वद्दोर्वशीकृतविशाखमुखावलोकव्रीडाविदीर्णहृदया स्पृहयांबभूव
॥ २५ ॥ शस्त्रीकृतस्तरुवरः कपिपुङ्ग[14]वेन लङ्केशवक्षसि मृणालमृदुः पपात । तत्र स्थितैश्च कुसुमैः
कुसुमे[15]षुरेनं सीतावियोगविधु[16]रं दृढमाजघान ॥ २६ ॥ दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसा[17]रा धीरोद्धता नमय-
तीव गतिर्धरित्रीम् । कौमारकेऽपि गिरिवद्गुरुतां दधानो वीरो रसः किमयमेत्युत[18] दर्प एषः ॥ २७ ॥
अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैरप[19]हृतोऽस्मि तथापि नास्था । कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥ २८ ॥ समरविहरदस्मद्भल्लनिष्पातभिन्नप्रतिनरपतिभिन्नाद्भास्वतो बिम्ब-
मध्यात् । वयमहह धरायां पातयामः पताकावसनपवनलोलं वारि दिव्यापगायाः ॥ २९ ॥ वयस्याः क्रोष्टारः
प्रतिशृणुत बद्धोऽञ्जलिरयं किमप्याकाङ्क्षामः क्षरति न तथा वीरचरितम् । मृतानामस्माकं भवति परवश्यं
वपुरिदं भवद्भिः कर्तव्यं न हि न हि पराचीनम[20]रणम् ॥ ३० ॥ कपोले जानक्याः करिकलभ[21]दन्तद्युति-
मुषि स्मरस्मेरं गण्डोड्डम[22]रपुलकं वक्त्रकमलम् । मुहुः पश्यञ्शृण्वन्रजनिचरसेनाकलकलं जटाजूटग्रन्थिं
द्रढयति रघूणां परिवृढः[23] ॥ ३१ ॥ महा[24]सेनो यस्य प्रमदयमदंष्ट्रा[25]सहचरैः शरैर्मुक्तो जीवन्द्वि[26]रिव शर-
जन्मा समभवत् । इमां च क्षत्त्रा[27]णां भुजवनमहादुर्गविषमाम[28]यं वीरो धीमानजयदुप[29]विंशान्वसुमतीम्
॥ ३२ ॥ अहं जात्या पूज्यो न च शमनिष्ठो न च मुनेः कुले जातो नो वा सहजजननीघातविदितः ।
अहं भूयो रामस्त्रिपुररिपुकोदण्डदलने श्रुतस्त्वादृग्दर्पप्रशमनकृते नित्यमुदितः ॥ ३३ ॥ चापाचार्य-

---

१ "प्रह्वे" इति पिङ्गलानुशासनात् नात्र नस्य गुरुत्वम् । २ विष्ठा- । ३ सङ्ग्रामे ।
४ भयङ्कर- । ५ सङ्ग्रामे मृत्वा सुप्तप्रतिबुद्धवत् सपदि देहान्तरं लब्ध्वा स्वर्गे महीयन्त
इति तथोक्तिः । ६ उत्तमाङ्ग- शिरः । ७ लिप्तान् । सङ्ग्रामे त्यक्तान् देहान् पश्यन्त इति शेषः ।
८ शृगालीभिः । ९ अभ्रमोर्भर्तुरित्यन्वयः । ऐरावतस्येत्यर्थः । १० सङ्ग्रामे । ११ इन्द्रः ।
१२ सङ्ग्रामे इति शेषः । १३ स्वर्गे इति शेषः । १४ हनुमता । १५ मदनः । १६ दुःखितम् । १७
वीर्य- । १८ एति-आयाति उत अथवा । १९ अपहृतस्येतिपाठान्तरं तु दुष्टमिति काव्यप्रकाशकाराः ।
अत्रविशेषोऽस्मत्कृतायां प्रकाशव्याख्यायाम् । २० विमुखत्वाचरणम् । २१ शिशु-इदं दन्तस्य
कोमलत्वातिशयसमर्थनार्थम् । २२ उद्भूत- । २३ प्रभुः, राम इति भावः । २४ कार्तिकेयः ।
२५ प्रकुपितयमदंष्ट्रासदृशतीक्ष्णैः । २६ द्वितीयवारम् । २७ क्षत्त्रियाणाम् । २८ भार्गवः ।
२९ एकविंशतिवारमिति भावः ।

स्त्रिपुरविजयी कार्तवीर्यो विजेयैः[1] शस्त्रन्यस्तः सदनम्[2]उदधिर्भूरियं हन्तकारः[3] । अस्त्वेवैतत्किमु कृतवतो रेणुकाकण्ठबाधां बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः[4] ॥ ३४ ॥ अन्त्रैः स्वैरपि संयताग्रचरणो मूर्च्छाभिरामः क्षणे स्वाधीनव्रणिताङ्गशस्त्रनिचिते रोमोद्गमं वर्णयन् । भग्नानुद्वलयन्निजान्परभटान्संतर्जयन्निष्ठुरं धन्यो धाम जयश्रियः पृथुरणस्तम्भे पताकायते ॥ ३५ ॥ जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां मां दुःशासनकोष्ण[5]शोणितसुराक्षीब[6] रिपुं भाषसे । दर्पान्धो मधुकैटभद्विषि[7] हरावप्युद्धतं चेष्टसे मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ ३६ ॥ वीरोऽसौ किमु वर्ण्यते दशमुखश्छिन्नैः शिरोभिः स्वयं यः पूजास्रजमुत्सुको घटयितुं देवस्य खट्वाङ्गिनः[8] । सूत्रार्थी हरकण्ठसूत्रभुजगव्याकर्षणायोद्यतः साटोपं प्रमथैः[9] कृतभ्रुकुटिभिश्छित्त्वाऽन्तरे वारितः ॥ ३७ ॥ संतुष्टे तिसृणां पुरामपि रिपौ कण्डूल[10]दोर्मण्डलीक्रीडाकृत्त[11]पुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् । याच्ञादैन्यपराञ्चि[12] यस्य कलहायन्ते मिथस्त्वं वृणु त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं वर्ण्यते ॥ ३८ ॥ भूमात्रं कियदेतदर्णवमितं तत्साधितं हार्यते यद्वीरेण भवादृशेन वदति त्रिःसप्तकृत्वो जयः । वीरोऽयं नवबाहुरीदृशमिदं घोरं च वीरव्रतं तत्क्रोधाद्विरम प्रसीद भगवञ्जात्यैव पूज्योऽसि नः ॥ ३९ ॥ तात[13] त्वं निजकर्मणैव गमितः स्वर्गं यदि स्वस्ति ते ब्रूमस्त्वेकमिदं वधूहृतिकथां तातान्तिके मा कृथाः । रामो[14]ऽहं यदि तद्दिनैः कतिपयैर्व्रीडानमत्कंधरः सार्धं बन्धुजनैः सुरेन्द्रविजयी वक्ता स्वयं रावणः ॥ ४० ॥ त्वय्यर्धासनभाजि किंनरगणोद्गीतैर्भवद्विक्रमैरन्तःसंभृतमत्सरोऽपि भगवानाकारगुप्तौ कृती । उन्मीलद्भवदीयदक्षिणभुजारोमाञ्चविद्धोच्चरद्बाष्पैरेव विलोचनैरभिनयत्यानन्दमाखण्डलैः[15] ॥ ४१ ॥ शस्त्राशस्त्रिकथैव काननमगाद्वीर्योर्णपाणिंधमाः[16] पन्थानो दिवि संकुचन्ति वसुधा वन्ध्या न सूते भटान् । लक्ष्मीरप्यरविन्दसौधवलभीनिर्व्यूहपर्यङ्किका[17]विश्रान्तैरलिभिर्न कुञ्जरघटागण्डोत्करैर्मोदते ॥ ४२ ॥ अस्त्रौघप्रसरेण रावणि[18]रसौ यं दुर्यशोभागिनं चक्रे गौतमशापयन्त्रितभुजस्थेमानमाखण्डलम् । कच्छावर्तकुलीरतां गमयता वीर त्वया रावणं तत्संमृष्टमहो विशल्यकरणी[19] जागर्ति सत्पुत्रता ॥ ४३ ॥ चत्वारो[20] वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः सङ्ग्रामाध्वर[21]दीक्षितो नरपतिः[22] पत्नी[23] गृहीतव्रता । कौरव्याः[24] पशवः प्रियापरिभवक्लेशोपशान्तिः फलं राजन्यो[25]पनिमन्त्रणाय रसति[26] स्फीतं यशोदुन्दुभिः ॥ ४४ ॥ अद्यारभ्य कठोरकार्मुकलताविन्यस्तहस्ताम्बुजस्तावन्न प्रकटीकरोमि नयने शोणे निमेषोदयात् । यावत्सायककोटिपाटितरिपु-

---

१ विजित इति वाच्यं न तु विजेय इति, न हि कृत्यप्रत्ययः क्तप्रत्ययार्थं वक्तुं प्रभवतीति प्रकाशकारप्रमुखाः साहित्याचार्याः । २ स्थानम् । सर्वस्वं दत्त्वा तपश्चिचरिषुर्भार्गवः समुद्रमुत्क्षिप्य तदेकदेशे निवसति स्मेति कथा । ३ अतिथिभ्यो देयो बलिः। षोडशग्रासरूपाऽतिथिभ्यो देया भिक्षा वा । ४ खड्गः ।'चन्द्रहासासिरिष्टयः ।' इत्यमरः। ५ ईषदुष्ण-। ६ मत्तम् । ७ श्रीकृष्णे । ८ शङ्करस्य । ९ गणविशेषैः । १० कण्डूमद्भुज-। ११ छिन्न-। १२ पराङ्मुखानि । १३ जटायुः प्रति भगवतो रामचन्द्रस्येयमुक्तिः । १४ अत्र रामपदं परकृतापकारासहिष्णुतालक्षकम्, परकृतापकारासहिष्णुत्वातिशयस्य व्यञ्जकं च । १५ इन्द्रः। १६ पाणयो ध्मायन्तेऽत्रेति । १७ मञ्च-। १८ रावणपुत्र इन्द्रजित् । १९ सञ्जीवनौषधिरेव शल्यघातादिहन्त्रीत्वेन विशल्यकरणी । २० भीमादयः । २१ सङ्ग्रामाध्वरपदस्य चत्वार इत्यादिभिः सर्वैरपि योगोऽभिमतोऽपि दीक्षितपदेन समस्तत्वान्न सम्पद्यत इत्यभवन्मतयोगतेति स्पष्टं काव्यप्रकाशकाव्यप्रदीपयोस्तद्व्याख्ययोश्चास्माकम् । २२ अजातशत्रुराजा । २३ द्रुपदनन्दिनी । २४ दुर्योधनादयः । २५ क्षत्रिय-। २६ उद्घोषति ।

क्ष्मापाल[1]मौलिस्खलन्मल्ली[2]माल्यमिलत्परागपटलैरामोदिनी मेदिनी ॥ ४५ ॥ नो तावत्कलयामि केलिकृपणे वामभ्रुवो लोचने तावन्न प्रणयावलीढ[3]मनसः पश्यामि मातुर्मुखम्। यावत्तारकुठारपातनिपतत्प्रत्यर्थि[4]पृथ्वीपतिभ्राम्यत्स्वर्णकिरीटबद्धशिरसो भ्राम्यन्ति नो फेरवः[5] ॥ ४६ ॥ निष्पीते[6] कलशोद्भवेन[7] जलधौ गौरीपतेर्गङ्गया होतुं हन्त वपुर्ललाटदहने यावत्कृतः प्रक्रमः। तावत्तत्र मया विपक्षनगरीनारीदृगम्भोरुहद्वन्द्वप्रस्खलदस्रवारिपटलैः सृष्टाः पयोराशयः ॥ ४७ ॥ आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमानज्याघातश्रेणिसंज्ञान्तरितवसुमतीचक्रजैत्रप्रशस्तिः। वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः[8] पृषत्कान्[9]प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ ४८ ॥ क्षुद्राः संत्रासमेते विजहित हरयो[10] भिन्नमत्तेभकुम्भा युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः। सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः किंचित्संरम्भ[11]लीलानियमितजलधिं राममन्वेषयामि ॥ ४९ ॥ अस्त्रज्वालावलीढप्रतिबल[12]जलधेरन्तरौर्वायमाणे सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ[13] सर्वधन्वीश्वराणाम्। कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य[14] शङ्कां ताते[15] चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥ ५० ॥ कृष्टा केशेषु भार्या तव तव च पशोस्तस्य[16] राज्ञस्तयोर्वा[17] प्रत्यक्षं भूपतीनां मम[18] भुवनपतेराज्ञया द्यूतदासी[19]। तस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा बाह्वोर्वीर्यातिभारद्रविणगुरुपदं मामजित्वैष[20] गर्वः ॥ ५१ ॥ पुरोवर्ती नाद्य प्रभृति मम रामः स्वयमहं न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम्। अधीरं धीरं वा कलयतु जनो मामयमयं मया बद्धो दुष्टद्विपदलनदीक्षापरिकरः ॥ ५२ ॥

## करुणवर्णनम्।

यस्याः कुसुमशय्याऽपि कोमलाङ्ग्या रुजाकरी। साऽधिशेते कथं देवी ज्वलन्तीमधुना चिताम् ॥ १ ॥ साक्षान्मघवतः[21] पौत्रः[22] पुत्रो गाण्डीवधन्वनः। स्वस्रीयो[23] वासुदेवस्य तं गृध्राः पर्युपासते ॥ २ ॥ असहायः सहायार्थी मामनुध्यातबान्धवम्। पीडयमानः शरैस्तीक्ष्णैर्द्रोणद्रौणि[24]कृपादिभिः ॥ ३ ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः। अमितस्य हि दातारं भर्तारं का न शोचति ॥ ४ ॥ अथ बद्धजटे रामे सुमन्त्रे[25] गृहमागते[26]। त्यक्तो राज्ञा[27] सुतत्यागादविश्वस्तैरिवासुभिः ॥ ५ ॥ देशे देशे कलत्राणि देशे देशे च बान्धवाः। तं देशं नैव पश्यामि यत्र भ्राता सहोदरः[28] ॥ ६ ॥ प्रियस्य सुहृदो यत्र मम तत्रैव संभवः। भूयादमुष्य भूयोऽपि भूयासमनुसंचरेः[29] ॥ ७ ॥ विकृन्ततीव मर्माणि देहं शोषयतीव मे। दहतीवान्तरात्मानं क्रूरः शोकाग्निरुत्थितः ॥ ८ ॥ अविशीर्ण[30]कान्तपात्रे नव्य[31]दशे सुमुखि संभृत-

---

१ राजमस्तक-। २ मल्लिकास्रक्। ३ प्रेमपूर्ण-। ४ शत्रुबल-। ५ शृगालाः। ६ परिपीते। ७ आगस्त्यमुनिना। ८ तीक्ष्णीकुर्वन्। ९ बाणान्। १० वानराः। ११ कोप-। १२ शत्रु-। १३ द्रोणाचार्ये। १४ सात्यके। १५ अयं पादः पुनरुक्तार्थ इति काव्यप्रकाशादौ स्पष्टम्। १६ युधिष्ठिरस्य। १७ नकुलसहदेवयोः। १८ दुर्योधनस्य। १९ द्यूतजिता दासीति द्यूतदासी। २० दुर्योधनम्। २१ इन्द्रस्य। २२ गाण्डीवधन्वा हीन्द्रतेजसोत्पन्नः। २३ भगिन्याः पुत्रः। २४ अश्वत्थाम-। २५ एतदाख्ये मन्त्रिणि। २६ रामं वनं प्रापय्येति शेषः। २७ दशरथः। २८ शक्त्याऽऽहते लक्ष्मणे रामस्यायं प्रलापः। २९ मित्रस्य शोकोद्गारोऽयम्। सेविनीति पाठे तु कस्याश्चित्साध्व्याः पत्युः स्वर्गारोहणे। ३० न विशीर्णं नष्टम्, त्रुटितं वा कान्तपात्रं यस्याः तत्संबुद्धौ। कान्त एव पात्रमिति, कान्तं च तत्पात्रमिति च। ३१ नव्या-अजीर्णा, अदग्धा वा दशा अवस्था, वर्त्तिर्वा यस्यास्तादृशि।

स्नेहे[1] । मद्गेहदीपकलिके कथमुपयातासि निर्वाणम् ॥ ९ ॥ वत्स[3] गच्छ मम वाचिकमेतद्रामचन्द्र-चरणे कथयेथाः । आवयोरिव भवेदनुरागो नावयोरिव विधिः प्रतिकूलः ॥ १० ॥ शैशवात्[4]प्रभृति सञ्चारिणीं सौहृदाद[5]पृथगाशयां प्रियाम् । छद्मना परिददामि मृत्यवे सौनिको[7] गृहशकुन्तिकामिव[8] ॥ ११ ॥ शीलानि ते चन्दनशीतलानि श्रुतानि भूमीतलविश्रुतानि । तथापि जीर्णौ[9] पितरौ विहाय परत्र हा वत्स कथं प्रयासि ॥ १२ ॥ वनी मुनीनामटवी तरूणां दरी[10] गिरीणां तु गवेषितैव । अतः परं लक्ष्मण पक्ष्मलाक्षीं[11] प्राणा बहिर्भूय गवेषयन्तु ॥ १३ ॥ अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः[12] । जातो ममायं विशदः[13] प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥ १४ ॥ गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ । करुणाविमुखेन मृत्युना हरता त्वां[14] वद किं न मे हृतम् ॥ १५ अपहस्तितबान्धवे त्वया विहितं साहासमस्य तृष्णया । तदिहानपराधिनि प्रिये सखि कोऽयं करुणोज्झितक्रमः ॥ १६ ॥ विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः । अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीषकर्तनम् ॥ १७ ॥ मदेकपुत्रा जननी जरातुरा नजप्रसूतिर्वरटा[15] तपस्विनी । गतिस्तयोरेष[16] जनस्तमर्दयन्नहो विधे त्वां करुणा रुणद्धि न ॥ १८ ॥ मदर्थ-संदष्टमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते । विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः ॥ १९ ॥ इयमियं मयदानवनन्दिनी[17] त्रिदशनाथजितः[18] प्रसवस्थली । किमपरं दशकंधरगेहिनी त्वयि करोति करद्वययोजनम्[19] ॥ २० ॥ उत्खातदैवतमिवायतनं मुरारेरस्ता-चलान्तरितसूर्यमिवान्तरिक्षम् । हम्मीरभूभुजि गते सुरवेश्म[20] विश्वं पश्यामि हारमिव नायकरत्नशून्यम् ॥ २१ ॥ आदाय मांसमखिलं स्तनवर्जमङ्गान्मां मुञ्च वागुरिक[21] यामि कुरु प्रसादम् । सीदन्ति शष्प[22]-कवलग्रहणानभिज्ञा मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥ २२ ॥ सद्यः पुरीप[23]रिसरेऽपि शिरीषमृद्वी गत्वा जवात्त्रिचतुराणि[24] पदानि सीता । गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा रामाश्रुणः कृतवती प्रथमा-वतारम् ॥ २३ ॥ अस्तं गते शशिनि सैव कुमुद्वती मे दृष्टिं न नन्दयति संस्मरणीयशोभा । इष्टप्रवास-जनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि ॥ २४ ॥ यस्य त्वया व्रणविरोपणमिङ्गुदीनां तैलं न्यषिच्यत मुखे कुशसूचिविद्धे । श्यामाकमुष्टिपरिवर्धितको जहाति सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ २५ ॥ दैवे पराग्[25]वदनशालिनि हन्त जाते याते च संप्रति दिवं प्रति बन्धुरत्ने । कस्मै मनः कथयितासि निजामवस्थां कः शीतलैः शमयिता वचनैस्तवाधिम् ॥ २६ ॥ सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता विद्याऽपि खेदकलिता विमुखीबभूव । सा केवलं हरिणशाव[26]कलोचना मे नैवापयाति हृदयादधिदेवतेव ॥ २७ ॥ धृत्वा पदस्खलनभीतिवशात्करं मे याऽऽरूढवत्यसि शिलाशकलं विवाहे । सा मां विहाय कथमद्य विलासिनि द्यामारोहसीति हृदयं शतधा प्रयाति ॥ २८ ॥ भूमौ स्थिता रमण नाथ मनोहरेति संबोधनैर्यमधिरोपितवत्यसि द्याम् । स्वर्गं गता कथमिव क्षिपसि त्वमेणशावाक्षि तं

---

१ सम्भृतः स्नेहः प्रेम तैलादि वा, यस्यां तादृशि । २ आसन्नमरणायां प्रियायां कान्तस्यायं प्रलापः । ३ भगवत्याः सीताया लवं कुशं वा प्रतीदं वचनम् । ४ कार्तिक्याः प्रभृति इति भाष्योक्तिदिशा-'प्रभृति' योगे पञ्चमी प्रभृतीत्यव्ययं च । ५ प्रेमप्रकर्षात् । ६ अभिन्नान्तः-करणवृत्तिम् । ७ कसायी इति भाषायाम् । ८ गृहे पालितां पक्षिणीमिव । ९ वृद्धौ । १० गुहा । ११ सीतामित्यर्थः । १२ जामातुः । १३ शुद्धः । १४ इन्दुमतीम् । १५ हंसी । १६ हंसः । १७ मन्दोदरी । १८ इन्द्रजितः । १९ अञ्जलिबन्धम् । २० स्वर्गम् । २१ जालेन बन्धनकारिन् । २२ हरितदूर्वा- । २३ अयोध्यापुर्याः समीपे । २४ त्रीणि चत्वारि वा पदानि इति यावत् । २५ विमुखे । २६ शिशु- ।

धरणिधूलिषु मामिदानीम् ॥ २९ ॥ नार्या यदि प्रियतमो जगतीतले स्यात्स्वर्गेऽपि वा बत तदा पतिरेक एव । मां सोऽपि सम्प्रति विहाय यदा सुदूरं गन्तुं समुद्यत इवेति हताऽस्मि नाथ ॥ ३० ॥ कनकहरिणं हत्वा रामो ययौ निजमाश्रमं जनकतनयां प्राणेभ्योऽपि प्रियामविलोकयन् । दृढमुपगतैर्बाष्पापूरैर्निमीलितलोचनो न विशति कुटीमाशातन्तुप्रणाशभयादसौ ॥ ३१ ॥ अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि । जनस्थाने शून्ये करुणकरुणैरार्यचरितैरपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ ३२ ॥ ध्रुवं ध्वंसो भावी जलनिधिमहीशैलसरितामतो मृत्योः शीर्यत्कणलघुषु का जन्तुषु कथा । तथाप्युच्चैर्बन्धुव्यसनजनितः कोऽपि विषयो विवेकप्रोन्माथी दहति हृदयं शोकदहनः ॥३३॥ क्षत्रास्यारिकृताभिमन्युहननप्रोद्भूततीव्रक्रुधः पार्थस्याकृतशात्रवप्रतिकृतेरन्तः शुचा मुह्यतः । कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयो हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति वक्त्राद्बहिः ॥३४ ॥ कोऽहं ब्रूहि सखे स्वयं स भगवानार्यः स को राघवः के यूयं बत नाथ नाथ किमिदं दासोऽस्मि ते लक्ष्मणः । कान्तारे किमिहास्महे बत सखे देव्या गतिर्मृग्यते का देवी जनकाधिराजतनया हा जानकि काऽसि हा ॥ ३५ ॥ मध्याह्ने दैववह्निनोष्मसमये दंदह्यमानाद्गिरेः कृच्छ्रान्निर्गतमुत्तृषं जलमथो वीक्ष्यैकरक्षाक्षमम् । प्रेम्णा जीवयितुं मिथः पिब पिबेत्युच्चार्य मिथ्या पिबन्निर्मग्नास्यमपीतवारि हरिणद्वन्द्वं विपन्नं वने ॥ ३६ ॥ हा मातस्त्वरिताऽसि कुत्र किमिदं हा देवताः काशिषो धिक्प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ । इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥ ३७ ॥ यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् । वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः पीडयन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ३८ ॥ पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् । आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ३९ ॥ या केलिच्युतकेशलेशविषमां शय्यां न भेजे पुरा या जालान्तरनिर्गतार्ककिरणद्योतादपि म्लायते । सेयं निष्ठुरकाष्ठसंचितचितां देदीप्यमानानलां सस्मेरा भजते यदि प्रियमुखस्नेहस्य किं दुष्करम् ॥४०॥ ध्वस्तः काव्योरुमेरुः कविविपणिमहारत्नराशिर्विशीर्णः शुष्कः शब्दौघसिन्धुः प्रलयमुपगतो वाक्यमाणिक्यकोशः । दिव्योक्तीनां निधानं निधनमुपगतं हा हता दिव्यवाणी बाणे गीर्वाणवाणीप्रणयिनि विधिना शायिते दीर्घनिद्राम् ॥ ४१ ॥

## अद्भुतवर्णनम् ।

चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा । मौनं व्याख्यानममलं छिन्नमूलश्च संशयः ॥१॥ तस्मिन्युद्धे क्षणेनैव त्वरितो वानरध्वजः । सरथं सध्वजं सास्त्रं भीष्ममन्तर्दधे शरैः ॥२॥ रत्नभित्तिषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः । ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥३॥ चतुर्ष्वपि समुद्रेषु सन्ध्यामन्वास्य तत्क्षणात् । कक्षाक्षिप्तं निशान्ते तं वालिः पौलस्त्यमत्यजत् ॥४॥ न केनापि श्रुतं दृष्टं वारिणा वारि शुष्यति । अहो

---

१ पाषाणः । २ वज्रमिति भावः । ३ विनाशः । ४ विवेचनशक्तिविध्वंसी । ५ शोकेन । ६ वन- । ७ वनवासिनः । ८ पुत्री- । ९ प्रेम्णा । १० सनकादिं प्रति महेश्वरस्य ब्रह्मविचारे ब्रह्मणोऽनिरूपणीयताद्योतनपरमिदं वचनम् । ११ हनुमता । १२ प्रभाते । १३ रावणम् ।

गोदावरीवीरा[1] भवसिन्धुर्विशुष्यति ॥ ५ ॥ एष वन्ध्यासुतो[2] याति खपुष्प[3]कृतशेखरः । मृगतृष्णाम्भसि[4] स्नातः शशशृङ्गधनुर्धरः[5] ॥ ६ ॥ कस्मै किं कथनीयं कस्य मनःप्रत्ययो[6] भवति । रमयति गोपवधूटी[7] कुञ्जकुटीरे परं ब्रह्म[8] ॥ ७ ॥ चित्रं कनकलतायां[9] पल्लवं[10] एवामृतं सूते । कुसुमसमुद्गमसमये[11] नो जाने किं परं भावि ॥ ८ ॥ अम्बुजमम्बुनि जातं न हि दृष्टं जातमम्बुजाद[12]म्बु । अधुना तद्विपरीतं चरणसरोजाद्[13]विनिर्गता गङ्गा[14] ॥ ९ ॥ जाता लता हि शैले जातु लतायां न जायते शैलः । अधुना तद्विपरीतं कनकलतायां[15] गिरिद्वयं जातम् ॥ १० ॥ कमलमनम्भसि[16] कमले कुवलयमेतानि कनकलतिकायाम् । सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ ११ ॥ चित्रं कनकलतायां शरदिन्दुस्तत्र खञ्जनद्वितयम् । तत्र च मनोजधनुषी तदुपरि गाढान्धकाराणि[17] ॥ १२ ॥ चित्रं महानेष बतावतारः क कान्तिरेषाभिनवैव भङ्गिः[18] । लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष[19] सर्गः ॥ १३ ॥ स्थाणुः[20] स्वयं मूल[21]विहीन एव पुत्रो विशाखो[22] रमणी त्वपर्णा[23] । परोपनीतैः[24] कुसुमैरजस्रं फलत्यभीष्टं किमिदं विचित्रम् ॥१४॥ किं क्रमिष्यति किलैष वामनो यावदित्थमहसन्त दानवाः । तावदस्य न ममौ नभस्तले लङ्घितार्कशशिमण्डलः क्रमैः[25] ॥ १५ ॥ युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत । तनौ ममुस्तस्य न कैटभद्विषस्तपोधना[26]भ्यागमसम्भवा मुदः[27] ॥ १६ ॥ कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम् । कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात् ॥ १७ ॥ विपुलेन सागरशयस्य[28] कुक्षिणा भुवनानि यस्य पपिरे युगक्षये । मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥ १८ ॥ पाश्चात्यभागमिह सानुषु[29] संनिषण्णाः पश्यन्ति शान्तमलसान्द्रतरांशुजालम् । सम्पूर्णलब्धललना-

---

१ गोदावर्यां स्नानेन मुक्तिर्भवतीति तद्भक्तस्येदं सम्भावनम् । २ अधृतगर्भा 'बाँझ' इति भाषायाम् । ३ आकाशे पुष्पं न जातु सम्भवतीति मिथ्यात्वसम्भावनायेदं वचनम् । ४ मरीचिकाजले । न हि मरीचिकाजलं सत्यमिति विभाव्यम् । ५ शशस्य विषाणसद्भावोऽपि न जातु दृष्टचर इति तथोक्तिः । ६ अन्तःकरणे निश्चयः । ७ गोपी । ८ श्रीकृष्णं परब्रह्मात्मना भावयत इदं वचनम् । ९ कान्ताशरीररूपायामिति शेषः । १० अधररूप इति शेषः । ११ स्मितोद्गारावसररूपे । १२ कमलात् । १३ भगवतस्त्रिविक्रमस्येति शेषः । १४ ब्रह्मणा दत्तं हि पाद्यं गङ्गेति कथामुपजीव्येयमुक्तिः । १५ कान्तायाः कलेवरं स्वर्णलतां पयोधरद्वयं च शैलयुगमुत्प्रेक्षमाणस्येयमुपमानाभेदाध्यवसायेनोक्तिः । १६ कान्ताया मुखं नयने च कमलात्मना शरीरं च सुवर्णात्मनेयं सम्भावना । १७ अत्र कान्तायाः शरीरं कनकलतां मुखं चन्द्रं नयते खञ्जनौ भ्रुवौ स्मरधनुषी केशान् ध्वान्तानि च सम्भावयितुरिदं वचनम् । १८ प्रकारविशेषः । १९ त्रिविक्रमावतारं पश्यत इयमुक्तिः । २० वृक्षः शङ्करश्च । २१ उच्छिन्नमूलः, जन्महीनश्च । २२ शाखाशून्यः । कार्तिकेयश्च । २३ पत्रहीना पार्वती च । २४ भक्तसमर्पितैः । भगवान् हि परेण समर्पितैः पुष्पैरपि सर्वमर्थं परिपूरयतीतीदं वचनम् । २५ पादन्यासः । २६ नारद- । २७ भगवतो हि नारदं वीक्ष्य मुखं विकसितमिति तत्ताया हर्षकार्यत्वादिदं वचनम् । २८ यो हि पुराणपुरुषः सर्वं स्वात्मनि निधाय प्रलयेऽम्बुधौ शेते स एव श्रीकृष्णः नागरिकया मुखावरणान्नेत्रं किञ्चिन्निष्कास्य दृष्ट इति तथा सम्भावनम् । नागरिकाणां च दर्शनशैली यदक्ष्येकदेशपातनम् । २९ शिखरेषु ।

ल[1]पनोपमानमुत्सङ्गसङ्गिहरिणस्य हिमांशुमूर्तेः ॥१९॥ इ[2]दं तावच्चित्रं यदवनितले पार्वणशशी कलङ्कादुन्मुक्तः किमपि च तदन्तर्विलसति । प्रवालं माणिक्यं कुवलयदलं मन्मथधनुर्मनोवीणावादध्वनिरिति महच्चित्रमपरम् ॥२०॥ मूकारब्धं कमपि बधिराः श्लो[3]कमाक[4]र्णयन्ति श्र[5]द्धालुस्तं विलिखति कु[6]णिः श्लाघया वीक्षतेऽन्ध[7]ः । अभ्यारोहत्यहह सहसा प[8]ङ्गुरप्यद्रिशृङ्गं सान्द्रालस्या[9]ः शि[10]शुभरणतो मन्दमायान्ति वन्ध्या[11]ः ॥ २१ ॥ काकुत्स्थेन शिरांसि यानि शतशश्छिन्नानि मायो[12]निधेः पौलस्त्यस्य विमानसीमनि तथा भ्रान्तानि ना[13]कौकसाम् । तान्येवास्य धनुःश्रमप्रशमनं कुर्वन्ति सीतापतेः क्रीडाचामरडम्बरा[14]नुकृतिभिर्दोलायमानैः कचैः ॥ २२ ॥ किं ब्रूमो ह[15]रिमस्य विश्वमुदरे किंवा फणाभोगिनः शेते यत्र हरिः स्वयं जलनिधेः सोऽप्येकदेशे स्थि[16]तः । आश्चर्यं कल[17]शोद्भवो मुनिरसौ यस्यैकहस्तेऽम्बुधिर्ग[18]ण्डूषीयति पङ्कजीयति फ[19]णी भृङ्गीयति श्रीपतिः ॥ २३ ॥ दोर्दण्डाञ्चि[20]तचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतष्टङ्कारध्वनिरार्य[21]बालचरितप्रस्तावनाडिण्डिमः । द्रा[22]क्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥२४॥ एते किं ननु सत्यमेव तरवश्चञ्चत्प्रसूनोत्क[23]राः किं वा काननवाटिकेयमनघा यस्याममी कोकिलाः । चित्रं कुत्र तिरोहिता मरु[24]धरा सा यत्र मे पत्तनं नानानिर्झरवैभवं कुत इदं सद्यः समु[25]न्मीलितम् ॥ २५ ॥

---

१ मुख- २ इदं कान्तामुखं पूर्णं निष्कलङ्कं चन्द्रम् अधरं प्रवालं माणिक्यं दन्तं नयनं कुवलयदलं भ्रुवौ स्मरधनुः स्वरं वीणाध्वनिं च सम्भाव्येदं वचनम् । ३ पद्यं यशश्च । ४ शृण्वन्ति । ५ विश्वासी । ६ भग्नकरः । ७ नेत्रहीनः । ८ पादहीनः । ९ अतीव त्यक्तव्यापाराः । १० अर्भक- । ११ अस्य च वास्तविकोऽयमर्थः- । ब्रह्मणः 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । तद्ब्रह्म विजिज्ञासस्व' इत्यादिश्रुत्याद्यनुसारमनिर्वाच्यता स्पष्टा, तस्या एव भङ्ग्या द्योतनाय तद्द्योतकस्य मूकत्वेन निर्देशः । तस्य मूकमुद्रया द्योतयितुमारब्धं यशः 'तच्छुक्रमकायमव्रणमस्नाविरम्' इत्यादिश्रुतिभिः सम्भाव्यमानम् तच्च बधिरा एवाकर्णयन्ति, बधिराश्च संसारचर्चाश्रवणाक्षमाः । तस्य च श्लोकस्य ( यशसः ) निबन्धनं श्रद्धयैव स्यात् श्रद्धाशून्यानां तु संशयविपर्ययादिना तदुन्मुखत्वस्यैवासम्भवः । तस्य च निबन्धने प्राकृतस्य हस्तस्यानपेक्ष्यत्वात् संसारक्रियाकरण एव तस्यापेक्ष्यत्वाच्च न संसारक्रियापरहस्तादिव्यापारोऽधिकारीति संसारक्रियासो विमुख एव कुणिपदवाच्यः, असावेवाधिकारी । एवं निबद्धस्य च तस्य द्रष्टा संसाराद्दृष्टैव । अतोऽस्यान्धशब्देन निर्देशः । एतदारोह्यं च पदमत्युच्चतयाऽद्रिशृङ्गम्, तच्च न पादवताऽऽरोढुं शक्यम्, अरूपत्वादनन्यत्वाच्च, किं तु तादृशे तत्त्वेऽध्यवसिते 'ब्रह्मविद्ब्रह्मैव भवति' इत्यादिश्रुत्याद्यनुसारं संसारवृत्त्यक्षम एव पङ्गुः सन् प्रपद्यते । प्रपत्तिश्चाप्येषा न वैकुण्ठादिलोकान्तरगमनरूपा, किंतु ज्ञानरूपैव । अत एव 'यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम ।' इत्यादावपि वाक्ये गत्वेत्यादेः पदस्य ज्ञात्वेत्येवार्थः, तस्य विदूरत्वादिभावनायां तु नश्वरत्वादयोऽनेके दोषा आपद्येरन् । एतादृशं च ज्ञानं निष्कामोपासनोत्तरमेवेति, वन्ध्यापदं निष्कामोपासनापरं, तत्सुतश्च चित्तसंशुद्धिपूर्वकः स्वात्मावबोधः, ज्ञानावस्थायां च तादृशीष्वपि निष्कामोपासनासु देहाध्यासादिनिवृत्तेः स्वात्मसमाधेश्च भूयो भूयः सम्भवान्न सातत्येन प्रवृत्तिरिति सान्द्रालस्यात्मना तासां निर्देश इति दिक् । १२ माययैव शिरसां मुहुरुद्भव इत्यस्याभिधानं शतश इत्येतत्समर्थकम् । १३ देवानाम् । १४ आडम्बर- । १५ विश्वम्भरम् । १६ विष्णोरपि समुद्रशायित्वेनाभिधीयमानत्वात् । १७ अगस्त्यः । अस्य च कलशोद्भवत्वेन निर्देशादति क्षुद्रत्वं सम्भावनीयम् । १८ गण्डूषजलवदाचरति । १९ शेषः प्रलये भगवतः शय्याभूतः । अस्य च श्वेतिमसाम्यात् पङ्कजायमानत्वम्, पङ्कजपदमप्यत्र पुण्डरीकपरमेव बोध्यम् । २० भुजदण्डाकृष्ट- । २१ रामचन्द्र- । २२ सद्यो विपर्यस्त- । २३ सर्वात्मना हृद्याः । २४ निर्जलदेशः । २५ प्रकटितम् । इदमैन्द्रजालिकं दृष्टवतः कस्यचिद्वचनम् ।

## हास्यवर्णनम् ।

जिह्वायाश्छेदनं नास्ति न तालुपतनाद्भयम् । निर्विशेषेण वक्तव्यं निर्लज्जः को न पण्डितः ॥ १ ॥ परान्नं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कुरु । दुर्लभानि परान्नानि प्राणा जन्मनि जन्मनि ॥ २ ॥ विना मद्यं विना मांसं परस्वहरणं विना । विना परापकारेण दिविरो[1] दिवि[2] रोदिति ॥ ३ ॥ पूर्वं चेटी[3] ततो बेटी पश्चाद्भवति कुट्टिनी[4] । सर्वोपायपरिभ्रष्टा वेश्या[5] भवति तापसी ॥ ४ ॥ यदक्षिभ्रूलतापाङ्गैः स्त्रियः कुर्वन्ति चापलम् । जघनेष्वेव तत्सर्वं पतत्यनपराधिषु ॥ ५ ॥ केशलुञ्चनसाम्येऽपि हन्त पश्यैतदन्तरम् । उपस्थाः[6] कीटमश्नन्ति घृतभक्तं दिगम्बराः[7] ॥ ६ ॥ सामगायनपूतं मे नोच्छिष्टमधरं कुरु । उत्कण्ठिताऽसि चेद्भद्रे वामं कर्णं दशस्व मे ॥ ७ ॥ भस्माङ्गुलि[8]र्बकोड्डायी[9] बालशौची[10] तथा हिही[11] । धारावर्ती[12] चक्रवर्ती[13] षडेते पुरुषाधमाः ॥ ८ ॥ प्रेषकः[14] प्रैष्यकः[15] कौण्डः[16] कातरः[17] शम्भलीनकः[18] । कार्यकाले[19] विवर्णश्च षडेते सेवकाधमाः ॥ ९ ॥ आदौ वेश्या पुनर्दासी पश्चाद्भवति कुट्टिनी । सर्वोपायपरिक्षीणा वृद्धा नारी पतिव्रता ॥ १० ॥ गताः केचित्प्रबोधाय स्वयं तं कुम्भकर्णकम् । तदधःपवनोत्सर्गा[20]दुड्डीय[21] पतिताः कचित् ॥ ११ ॥ असारे खलु संसारे सारं श्वशुरमन्दिरम् । हरो हिमालये शेते हरिः शेते महोदधौ ॥ १२ ॥ कमले कमला[22] शेते हरः शेते हिमालये । क्षीराब्धौ च हरिः शेते मन्ये मत्कुणशङ्कया ॥ १३ ॥ बिलाद्बहिर्बिलस्यान्तःस्थितमार्जारसर्पयोः । मध्ये चाखुरिवाभाति पत्नीद्वययुतो नरः ॥ १४ ॥ सदा वक्रः सदा क्रूरः सदा पूजामपेक्षते । कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः[23] ॥ १५ ॥ स्वयं पञ्चमुखः[24] पुत्रौ गजाननषडाननौ[25] । दिगम्बरः[26] कथं जीवेदन्नपूर्णा[27] न चेद्गृहे ॥ १६ ॥ उदरद्वयभरणभया[28]दर्धाङ्गाहितदारः[29] । यदि नैवं तस्य सुतः कथमद्यापि कुमारः[30] ॥ १७ ॥ अङ्गुलिभङ्गविकल्पनविविधविवादप्रवृत्तपाण्डित्यः । जपचपलोष्ठः स जनो ध्यानपरो नगररथ्यासु[31] ॥ १८ ॥ मुण्डो जटिलो नग्नश्छत्री दण्डी कषायचीरी वा । भस्मस्मेरशरीरो[32] दिशि दिशि भोगी[33] विजृम्भते दम्भः[34] ॥ १९ ॥ भ्रुकुटीकुटिलललाटः कण्टकिताङ्गः कटाक्षविकटाक्षः[35] । कवलयति[36] पृथुककवलैस्तण्डुलमचलं द्विजः क्रुद्धः ॥ २० ॥ क्रयविक्रयकूटतुलालाघवनिक्षेपरक्षणव्याजैः ।

---

१ कायस्थः । २ स्वर्गेऽपि । वस्तुतस्तु एतादृशस्य स्वर्गप्राप्त्यसम्भवात् लक्षणया धार्मिकनृपतिसभायामित्यर्थः । तत्र प्रवेशस्तु कथञ्चित्सङ्गच्छते । ३ 'चेली' इति भाषायाम् । ४ कामिनीत्याद्यनुक्त्वा कुट्टनीत्वेन वचनं गर्भधारणसम्भवमन्तरेणापि कन्दर्पज्वालाशमनार्थं तस्यास्तथा प्रवृत्तिसम्भावनार्थम् । ५ वृद्धेति पाठान्तरम् । ६ उपस्थदेशाः । ७ जैनसंन्यासिनः । ८ भस्मनि स्वर्णादिकणनिरीक्षता । ९ बकसदृशोत्पतनकारी । १० बालकानां गुदक्षालनपरः । ११ परेषां प्रसादनार्थं 'हिही' इति हास्यप्रवर्तकः । १२ केदारादौ धाराजलसमीकरणाद्यर्थं प्रवृत्तः । १३ कुलालः । १४ क्षुद्रसेवकमुख्यः । १५ दूतः । १६ चरः । १७ किमेक इति पाठान्तरम् । १८ कुट्टन्याः पुत्रः सङ्गी वा । १९ 'योगी तत्कालयोगी च' इति पाठान्तरम् । २० कुम्भकर्णस्यापानवायोर्निःसरणवेगात् । २१ पक्षिण इवोर्ध्वं गत्वेति भावः । २२ लक्ष्मीः । द्रुहिण इति पाठान्तरम् । ब्रह्मेत्यर्थः । २३ अन्येषां ग्रहाणां सर्वदा वक्रत्वादिनाऽभवनात । २४ भगवतः शङ्करस्योपासनाविशेषे पञ्चमुखत्वमप्युक्तमिति तथोक्तम् । २५ कार्तिकेय- । २६ विरक्तत्वात । दरिद्रत्वादिति तु प्रत्यायनमात्रम् । २७ अन्न ( भोज्य ) पूर्णा पात्रीति तु प्रत्यायनमात्रम्, भगवती देवीति वास्तविकोऽर्थः । २८ भयादिवेति भावः। अत्रेवेति द्योतकाभावादुत्प्रेक्षा व्यङ्ग्या । २९ अर्धाङ्गे शरीरार्द्धभागे, आहिताः स्थापिताः दाराः पार्वती येन सः । ३० कार्तिकेयः अनूढवांश्च । ३१ धनिकनगरमार्गसञ्चारेषु । ३२ भस्मछन्नेति पाठान्तरम् । ३३ लम्पटः । ३४ धर्मध्वजित्वेन साक्षाद्दम्भ एवेति भावः । ३५ भयङ्कर- । ३६ ग्रसति ।

एते हि दिवसचौरा [1]मुष्णन्ति [2]महाजनं वणिजः ॥ २१ ॥ [3]आख्यायिकानुरागी व्रजति सदा पुण्यपुरे [4]तकं श्रोतुम् । दष्ट इव कृष्णसर्पैः पलायते दानधर्मे[5]भ्यः ॥ २२ ॥ दत्त्वा दिशि दिशि दृष्टिं याचकचकितोऽवगुण्ठनं कृत्वा । चौर इव कुटिलचारी पलायते कुटिलै[5]रथ्याभिः ॥ २३ ॥ गणयति गगने गणकश्चन्द्रेण समागमं [6]विशाखायाः । विविधभुजङ्ग[7]क्रीडासक्तां गृहिणीं न जानाति ॥ २४ ॥ [8]कलमाग्रनिर्गतमषीबिन्दुव्याजेन साञ्जनाश्रुकणैः । [9]कायस्थ[10]लुण्ठ्यमाना रोदिति खिन्नेव [11]राज्यश्रीः ॥ २५ ॥ वाचयति नान्यलिखितं लिखितमनेनापि वाचयति नान्यः । अयमपरोऽस्य विशेषः स्वयमपि लिखितं स्वयं न वाचयति ॥ २६ ॥ अर्थो नाम जनानां जीवितमखिलक्रियाकलापश्च । तं संहरन्ति धूर्ता [12]छगलगलागायना लोके ॥ २७ ॥ तमसि [13]वराकश्चौरो हा[14]हाकारेण याति संत्रस्तः । गायनचौरः कपटो हा हा कृत्वा न याति लक्ष्यं च ॥ २८ ॥ आमन्त्रणजयशब्दैः प्रतिपदहुकारघर्घ[15]राबैः । स्वयमुक्तसाधुवादैरन्तर[16]यति गायनो गीतम् ॥ २९ ॥ मेरुः स्थितोऽतिदूरे मनुष्यभूमिं परां परित्यज्य । भीतो भयेन चौर्याद्धोराणां हेम[17]काराणाम् ॥ ३० ॥ तस्मान्महीपतीनामसंभवे द[18]स्युचौराणाम् । एकः सुवर्णकारो निग्रा[19]ह्यः सर्वथा नित्यम् ॥ ३१ ॥ इह सामान्यानु[20]गमं समुपदिशन्तः स्थलेष्वनेकेषु । [21]लिङ्गपरामर्शपरा नवीननैयायिका यान्ति ॥ ३२ ॥ एकं [22]लिङ्गं प्रम[23]दाहृदयं विदधाति जर्जरं सहसा । [24]तेषां षट्कं ये[25]षामन्तर्गूढं न ते कथं पशवः ॥ ३३ ॥ [26]गणधातुपूरितमुखः सुतरां स्त्रीप्रत्ययप्रीतिः । कः पुनरयं नपुंसकलिङ्ग मुहुरामृशन्नेति ॥ ३४ ॥ स[27]लकारधातुसङ्ग्रहमुखकुहरा स्फोटविस्फारा । वद केयं पुनरन्या पुरतः पुँल्लिङ्गसाधिनी स्फुरति ॥ ३५ ॥ व्याकरणतरुणतरणिं ये बहु पश्यन्ति ते भवन्त्यन्धाः । [28]कथमन्यथा न कविताकटाक्षमेते परीक्षन्ते ॥ ३६ ॥ अन्तः प्रविश्य युवचिह्नमुरोऽबलानां येन क्रमेण बत लोडयते मनीषिन् । आश्रित्य तं हि नियमं तत उन्नयेते एतौ कुचौ सपदि हन्त विदीर्णमध्यात् ॥ ३७ ॥ ब्रह्माद्या देवताः स्वा[29]न्ते स्पृहयन्ति यमन्वहम् । व्यात्तास्यमुल्लसन्नासं तं वन्दे सुभगं भगम् ॥ ३८ ॥ प्रिये पश्य भगस्येदं निष्ठुरत्वमहो महत् । संताडितोऽप्ययं लिङ्गैरुच्चैर्ना[30]सां बिभर्त्ति यत् ॥ ३९ ॥ विधेरप्यज्ञता तन्वि मम चेतसि चञ्चति । ब्रूहि कं गन्धमाघ्रातुमुच्चैर्नासो भगः कृतः ॥ ४० ॥ कैरपि निरधारि यथा मुक्तिर्वा[31]राणसीमरणात् । निरधारि मयाऽपि तथा

---

१ चोरयन्ति । २ साधुजनं विश्वासपरमिति भावः । ३ महाभारतादिकथा- । ४ पुराणादिग्रन्थम् । ५ परसञ्चारायोग्य- । ६ विशाखा नक्षत्रविशेषः । ७ जार- । ८ लेखनी- । ९ कायस्थः दुष्टामात्यविशेषः चिन्त्यमानः प्रियश्च । १० उत्कोचादिना पीड्यमाना । सुरतसुखदानमन्तरा पीड्यमाना । कायस्थः ( चिन्त्यमानः ) प्रियो हि न साक्षात्तदानीमिति तथा वचनम् । ११ अत्र राजमहिषीति प्रतीतिः समासोक्तिविषया । १२ अज- । १३ दुष्टः । १४ 'हा हा चौरः' इत्यादि श्रुत्वैव चौरः पलायते इति तस्य प्रकृतिः । १५ अव्यक्तशब्दैः । १६ रूपान्तरं नयति विच्छिनत्तीति वा । १७ 'सुनार' इति ख्यातानाम् । एतेषामपेक्षया चौरा अपि अकिञ्चित्कराः । अत एवैषां पश्यतोहरत्वेन सङ्केतः । १८ लुण्ठक- । १९ कारागृहे प्रवेशनीयः । २० परापरसामान्यज्ञानम्, वेश्यासङ्गं च । २१ यथा पर्वतो वह्निमानित्यादौ वह्निव्याप्यधूमवान् अयं पर्वत इति नयेन व्याप्तिविशिष्टपक्षधर्म्मताज्ञानं लिङ्गपरामर्शस्तथा सर्वत्र तत्तल्लिङ्गपरामर्शकृतौ रक्ताः पुरुषचिह्नालोचनकारिणश्च । २२ पुंचिह्नम् । २३ प्रमदानां बलवतीनां स्त्रीणां च हृदयं वक्षः तत । २४ तेषां लिङ्गानाम् । अस्मिन् पक्षे लिङ्गपदं व्याकरणशास्त्रोक्तम् तद्धि पुँस्त्रीनपुंसकात्मना त्रिधा विभज्य शब्दानामजन्तहलन्तत्वद्वैविध्येन पुनार्भेद्यमानं षोढा सम्पद्यते । २५ वैयाकरणानाम् । २६ गणपदं भ्वादिपरम् बहुजनपरं च । धातुपदं भ्वादिपरम्, वीर्यपरं च । २७ लडादिः पुंचिह्नं च, अस्यापि लकारबोध्यत्वात् । २८ 'कथमन्यथा न तेषां दृष्टिर्विषयीकरोति काव्यार्थम् ।' इति पाठान्तरम् । २९ चित्ते । ३० नासाकारस्तत्र चर्मविशेषः । ३१ 'काश्याम्मरणान्मुक्तिः' इति श्रुतेः ।

सहस्रभगै[1]दर्शनान् मुक्तिः ॥ ४१ ॥ योगीश्वरैरप्यजितस्य मीनध्वजस्य जेता भुवि कोऽपि नास्ति । त्वं तन्वि धन्याऽसि यतो भगस्ते तं तस्य दण्डं ग्रसते समग्रम् ॥ ४२ ॥ अन्यत्र देशे घटिता जगन्ति ग्रसिष्यते विश्वसृजेति मत्वा । सङ्कोचयित्वा किमु पादमूलद्वयान्तराले निहिताऽस्ति योनिः॥४३॥ शष्पतृणावृतयोनिक्षेत्रोत्कषणक्रियामहासीरम् । योनिविपाटनसारं परिवाकारं लकारमहमीडे ॥४४॥ सीत्कारसंस्कृतानि कणितकनककङ्कणौघरुचिराणि । स्मरसि रतानि सखे किं न हि योनिविचुण्टनानि तन्वङ्ग्याः ॥ ४५ ॥ उपभुक्तखदिरवीटकजनिताधररागभङ्गभयात् । पितरि मृतेऽपि हि वेश्या रोदिति हा तात तातेति ॥४६॥ वर्णेनदयितः कश्चिद्धनदयितो दानकर्मदयितोऽन्यः । रक्षादयितश्चान्यो वेश्यानां नर्म[2]दयितोऽन्यः ॥ ४७ ॥ शृणु सखि कौतुकमेकं ग्राम्येण कुकामिना यदद्य कृतम् । सुरतसुखमीलिताक्षीं मृतेति भीतेन मुक्तास्मि ॥ ४८ ॥ श्रमणः श्रावकवध्वाः सुरतविधौ दशति नाधरं दत्तम् । मदिराक्षिमांसभक्षणमस्मत्समये[3] निषिद्धमिति ॥ ४९ ॥ द्विजराजशेखरो[4] यद्वृषभारूढः[5] सदा सदारस्त्वम्[6] । चक्रे हर तद्विधिना पुनरुपनयनं ललाटघटितं ते ॥ ५० ॥ मत्तातपादै[7]र्विहिते प्रबन्धे निरूपिता नूतनयुक्तिरेषा । अङ्गं गवां पूर्वमहो पवित्रं कथं न वा रासभधर्मपत्न्याः ॥ ५१ ॥ पादप्रहारोऽपि मतो विसोढुं कारागृहे वाऽपि चिराय वासः । किंतु प्रसह्य प्रमदा नवोढा परस्य भोग्यैव मया कथञ्चित् ॥ ५२ ॥ निन्दन्तु लोकान्तरभीतिसत्तां स्तुवन्तु कामं च यथेष्टचर्य्याम् । प्रारब्धसाधारणता तथाऽपि न दृष्टपूर्वा न च दृश्यतेऽत्र ॥ ५३ मातः पशवो दृष्टा मृन्मयशृङ्गा अरोगदग्धाङ्गाः । पशुपतिविमुखा बहवः पुच्छविहीना भ्रमन्ति सर्वत्र ॥ ५४ ॥ विनापि तातेन विना जनन्या गजाननः शंभुसुताभिधानः । विनैव शास्त्रेण विनैव वेदैर्माध्यंदिनानामिव पाठकोऽभूत् ॥ ५५ ॥ शिक्षिताऽपि सखिभिर्ननु सीता रामचन्द्रचरणौ न ननाम । किं भविष्यति मुनीशं[10]वधूवद्बालरत्नमिह तद्व्रजसेति ॥ ५६ ॥ अयं पटो[11] मे पितुरङ्गभूषणं पितामहाद्यैरुपभुक्तयौवनः । अलंकरिष्यत्यथ पुत्रपौत्रकान्मयाधुना पुष्पवदेव धार्यते[12] ॥ ५७ ॥ वैराग्यभङ्गिरचनावचनैः प्रतार्य रण्डां चिराय विकटै[13]स्तनसंनताङ्गीम् । ब्रह्मोपदेशमिषसंगतगण्डभित्तिं निःशङ्कचुम्बनरसैः कितवा[14] द्रवन्ति ॥ ५८ ॥ धान्याकनागरनिशार्द्रकदाडिमत्वक्कस्तूरिकालवणतैलसुसंस्कृतान्नः[15] । मत्स्यान्सुशीतसितभक्ततले ददाति स ब्रह्मलोकमधिगच्छति पुण्यकर्मा ॥ ५९ ॥ खट्वा नितान्तलघुका शिथिलप्रताना द्वेष्यः पतिः स च निरन्तरचाटुकारी । तत्रापि दैवहतिका खलु माघरात्र्यो हा सह्यता कथमयं व्यसन[16]प्रपञ्चः ॥ ६० ॥ आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे । तारस्वरं प्रहितफूत्कमदात्प्रहारं हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥ ६१ ॥ गौरी तनुर्नयनमायतमुन्नता च नासा कृशा कटितटी च पटी विचित्रा । अङ्गानि रोमरहितानि सुखाय भर्तुः पुच्छं न तुच्छमिति कुत्र समस्तवस्तु ॥ ६२ ॥ आपाण्डुराः शिरसिजा[17]स्त्रिवली कपोले दन्तावली विगलिता न च मे विषादः । एणीदृशो युवतयः पथि मां विलोक्य तातेति भाषणपराः खलु वज्रपातः ॥ ६३ ॥

---

१ वस्तुतस्तु परमेश्वरावधारणादित्येवार्थः । २ केलिप्रियः । ३ श्रावकसिद्धान्त इति भावः । ४ चन्द्रशेखरः । ब्राह्मणानां शेखरवन्मुख्यश्च । ५ नन्दीश्वरारूढः । स्वधर्मपरश्च । ६ अर्धाऽङ्गे पार्वत्याः सत्त्वात् स्त्रीसङ्गी च । ७ पादचरणशब्दौ संज्ञयन्ते नियुज्यमानौ तत्पूज्यतावाचकौ । ८ शङ्कर- । वृषभ- च । ९ गजाननो हि भगवत्या उद्वर्तनक्षालितमलराशिरूपः । १० गौतमपत्नी ह्यहल्या पाषाणरूपाऽपि तत्पादस्पर्शाद्दिव्या जातेति रामायणादौ स्पष्टम् । ११ वसनम् । १२ अयं कदर्यस्योपहासः । १३ भयङ्कर- । १४ धूर्ताः । १५ धान्याकेति 'धणिया' इत्यस्य नागरेति 'नागरमोथ' इत्यस्या निशति हरिद्रायाः अर्द्रकेति च 'आदरख' इत्यस्य नाम । एवमन्यान्यपि । १६ व्यभिचारिण्या इयमुक्तिः । १७ केशाः ।

कटी मुष्टिग्राह्या द्विपुरुषभुजग्राह्यमुदरं स्तनौ घण्टालोलौ जघनमधिगन्तुं व्यवसितौ । स्मितं[1] भेरीनादो मुखमपि च यत्तद्भयकरं तथाऽप्येषा रण्डा परिभवति संतापयति च ॥ ६४ ॥ कुरु त्वं जारं चेदभिलषसि मुग्धे रतिसुखं वृथा सङ्कल्पस्ते गृहपतिमृतेऽन्यं न रमये[2] । गुणाज्जारप्राप्तौ गणय मधुरं नित्यमशनं धनाप्तिः सत्कारो भण गृहपतौ व्यस्तमपि किम् ॥ ६५ ॥ एते वैयाकरणपशवः स्वीयमायुर्वृथैव प्राज्ञम्मन्याः श्रवणकटुभिः शब्दजालैः क्षिपन्ति । शश्वत्कान्ताऽधरमधुरतावर्णनं कुर्वतां नस्त्वाशीर्वादैरिह सहृदयाः प्रत्यहं वर्धयन्ते ॥६६॥ एका भार्या प्रकृतिमुखरा[3] चञ्चला च (?) द्वितीया पुत्रस्त्वेको भुवनविजयी मन्मथो दुर्निवारः । शेषः शय्या शयनमुदधौ वाहनं पन्नगारिः[4] स्मारं स्मारं[5] स्वगृहचरितं दारुभूतो[6] मुरारिः॥६७॥यः पृष्टोऽपि नमस्कृतोऽपि परितः स्पृष्टोऽपि शप्तोऽपि वा व्याधूतोऽपि विभीषितोऽपि नितरां मूकोऽह्नि घूको यथा । चित्रं किं च गुदेऽङ्गुलिप्रणयनाद्यत् किञ्चिदाभाषते तस्मै मैथिलसञ्ज्ञिने मम नतिः श्रीरङ्गिणे भङ्गिने ॥ ६८ ॥ गत्वा द्वारवतीं नयामि दिवसानाराधयन्ती हरिं यात्वा वाऽनशनेन जीवितमिदं मुञ्चामि भागीरथीम् । प्रातः प्रातरिति प्रवर्तितकथा निर्वेदमातन्वती रण्डा नैक्तमनन्तजारसुरतप्रीता सुखायास्तु वः ॥ ६९ ॥ पाणौ ताम्रघटी कुशः करतले धौते सिते वाससी भाले मृत्तिलकः सचन्दनरसो न्यस्तैकपुष्पं शिरः । दूरात्क्षिप्रपदा गतिर्दृढतरव्याश्लिष्टदन्ता गिरः सोऽयं वञ्चयितुं जगद्भगवतो दम्भस्य[10] देहक्रमः ॥ ७० ॥ यत्नोत्थापनमात्रनिःसहजरच्चर्म[11]विशेषश्लथभ्रश्यच्छेफ[12]सुदुर्बलाङ्गचलनव्यर्थोद्यमालिङ्गने । लज्जाधायिनि खिद्यमानयुवतौ वृद्धस्य कृच्छ्रे रते यत्स्यात्तत्प्रतिभाव्य किं नु हसितुं युक्तं किमारोदितुम् ॥ ७१ ॥ धत्ते वक्षसि कौस्तुभोपलमयं मत्वा श्रियः सोदरं तन्नामीगृहमाकलय्य मकरावासं मनाङ्नोज्झति । तन्नामप्रणयान्न लुम्पति हरिः श्रीवत्समङ्के स्थितं किं केन क्रियतां स एव यदभूदेतादृशः स्त्रीवशः ॥ ७२ ॥ अत्तुं[13] वाञ्छति वाहनं गणपतेराखुं क्षुधार्तः फणी तं च[14] क्रौञ्चरिपोः[15] शिखी[16] च गिरिजासिंहोऽपि नागाननम्[17] । गौरी जह्नुसुतामसूयति कलानाथं[18] कपालाननो[19] निर्विण्णः स पपौ कुटुम्बकलहादीशोऽपि हालाहलम् ॥७३॥ रण्डा पीनपयोधरा सदयिता मित्रं परं वाञ्छते बाला अप्यबलारताःसहृदयाःप्रौढा विरक्तिप्रियाः।वृद्धा लुब्धतराःखलाःकुशलिनो गोष्ठीषु लब्धादराःसन्तो नित्यपराभवाः सुकृतिनो मान्याः कले त्वद्यशः॥७४॥ जग्ध्वा माषमयानपूपवटकानाध्मायमानोदरे फट्फट्फाडिति पायवीय पवनं योगेश्वरे मुञ्चति । उड्डीनं विहगैर्घटैर्विघटितं दोलायितं भित्तिभिः शिष्यैर्धावितमर्मकैर्निपतितं कोलाहलोऽभून्मठे ॥ ७५ ॥ शैलैर्बन्धयति[20] स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं व्यासः पार्थशरैस्तथाऽपि न तयोरत्युक्तिरुद्भाव्यते । वागर्थौ च तुलाधृताविव तथा-

---

१ हासः । न तु मन्दहसनमिति बोध्यम् । २ नास्मानङ्गीकरोतीति भावः । ३ स्वभाव- । ४ असपत्नी अनुपमा च । ५ गरुडः । ६ स्मृत्वा स्मृत्वा पुनः पुनः स्मृतिपथं नीत्वेति भावः । ७ काष्ठरूपः । भगवतो जगदीश्वरस्य कथं काष्ठमूर्त्तित्वमिति पृष्टवन्तं प्रति कस्यापि कविपाशस्येदं वचनम् । ८ भङ्गापानलुब्धस्य भङ्गीति नाम्ना प्रसिद्धस्य च मैथिलाभिजनपण्डितविशेषमित्रभूतस्य कस्यापि मत्तस्यायमुपहासः । ९ रात्रौ । १० कपटस्य । ११ जीर्ण- । १२ पुरुषेन्द्रिय- । १३ भक्षितुम् । १४ फणिनं च । १५ कार्तिकेयस्य । क्रौञ्चपतेरिति पाठस्तु चिन्त्य एव ।'कुमारः क्रौञ्चदारणः'इत्यमरायुक्तेः । १६ मयूररूपं वाहनम् । १७ गणेशम् । अस्य गजमुखत्वेन स्वप्राकृतिकभक्ष्यगजभ्रान्त्येति बोध्यम् । १८ चन्द्रमसम् । १९ गणविशेषः । २० वाल्मीकीये रामायणे सेतुबन्धनं वानरानीतशैलमयमिति विदितचरम् । अथ कदाचिदर्जुनेन हनुमन्तं प्रत्युक्तम्, 'हन्त भगवता रामेण बाणैरेव समुद्रबन्धनं किमति न कृतमिति।' 'न बाणैर्बन्धनस्य द्रढिमा' इति पुनर्हनुमतोक्तः पार्थो बाणैः सिन्धुं बद्धवान्।—

ऽप्यस्मत्प्रबन्धानयं लोको दूषयितुं प्रसारितकरस्तुभ्यं प्रतिष्ठे नमः ॥ ७६ ॥ पीठीप्रक्षालनेन क्षितिपतिकथया सज्जनानां प्रवादैर्नीत्वा यामार्धमेवं कुशकुसुमसमारम्भणव्यग्रहस्ताः । पश्चादेते निमज्जत्पुरयुवतिकुचाभोगदत्तेक्षणार्धाः प्राणायामापदेशादिह सरिति सदा वासराणि क्षिपन्ति ॥ ७६ ॥ रे रे लोकाः कुरुध्वं श्रवणपुटपिधानं द्रुतं हस्तयुग्मैः शैलाः सर्वेऽपि यूयं भवत गुरुतराःसावधाना धरित्र्याम् । शीघ्रं रे रावण त्वं विरचय वसनैर्नासिकानां पिधानं सुप्तोऽयं कुम्भकर्णः कटुरवविकटं शर्धते दीर्घमुच्चैः ॥ ७८ ॥

## भयानकवर्णनम् ।

इदं मघोनः[2] कुलिशं[3] धारासंनिहितानलम् । स्मरणं यस्य दैत्यस्त्रीगर्भपाताय केवलम् ॥ १ ॥ ततः परामर्शविवृद्धमन्योः[4] भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य[5] । स्फुरन्नुदर्चिः[6] सहसा तृतीयादक्ष्णः कृशानुः[7] किल निष्पपात ॥ २ ॥ विनिर्गतं मानदम्[8] आत्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि[9] यम्[10] । ससंभ्रमेन्द्रद्रुत[11]पातितार्गला निमीलिताक्षीव भिया[12]ऽमरावती ॥ ३ ॥ अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव[13] यस्य[14] दर्शनम् । प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः[15] ॥ ४ ॥ महाप्रलयमारुतक्षुभितपुष्कर[16]आवर्तकप्रचण्डघनगर्जितप्रतिरवा[17]नुकारी मुहुः । रवः श्रवणभैरवः स्थगितरोदसी[18]कन्दरः कुतोऽद्य समरोदधे[19]रयमभूतपूर्वः पुरः[20] ॥ ५ ॥ किञ्चित्कोपकलाकलापकलनाहुंकारविभ्रद्भ्रुवोर्विक्षेपादकरोदसौ रघुपतिर्लङ्कापतेः पत्तनम्[21] । क्रन्दत्फेरु[22] रटत्करेटु[23] विघटद्दारु[24] स्फुटद्गुग्गुलु प्रोत्क्रीडत्कपि निःश्वसत्फणि रणज्झिल्लि भ्रमद्[25]द्वीपि च ॥ ६ ॥ अद्याप्युन्मदयातुधान[26]तरुणीचञ्चत्कराास्फालनव्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः । उद्गायन्ति यशांसि यस्य[27] विततैर्नादैः[28] प्रचण्डानिलप्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्ते रणक्षोणयः ॥ ७ ॥ गीर्वाणाःप्रतियन्ति नैव पिदधे कर्णौ सुधर्माधिपः[29] कर्णाकर्णिकयन्ति हन्त निभृतं शंभुस्वयंभूगणाः[30] । दूरादेत्य कृतान्तदूतनिवहाः स्वाकारसंगोपनैरुद्ग्रीवं कलयन्ति कौणपचमूनाथे[31] शयाने रणे ॥ ८ ॥ निःशङ्कं बहिरम्ब चण्डमनसो नामानुरूपा क्रिया स्वर्वेश्यापदघर्घरस्वनवती न क्वापि रङ्गस्थली । किंचान्यद्दशकंधराङ्घ्रियुगले कल्याणभाजि स्फुटं लङ्कायां प्रतिपक्षविक्रमयथाशङ्काकरी भ्राम्यति ॥ ९ ॥ अन्त्राकल्पचलत्पयोधरभरव्याविद्धमेघच्छटासृक्क[32]स्थामिषगृध्नुगृध्र[33]मरुदास्फालोच्चलन्मूर्धजा । व्यादायाननमट्टहासविकटं दूरेण तारापथात्त्रस्यत्सिद्धपुरन्ध्रि-

---

—स च सेतुः हनुमता पादप्रहारेण भग्नः ततः कुपितोऽर्जुनः शपथपूर्वं पुनः सेतुं कृतवान् । किंतु भक्तस्यार्जुनस्य शपथसंरक्षणाय भगवान् श्रीकृष्णस्तदन्तः प्रविश्य तं रक्षितुमुद्यतोऽभूदिति हनुमता हन्यमानोऽपि न हतः । अर्जुनेन तं वृत्तान्तमज्ञातवताऽऽत्मश्लाघनमारब्धम् । तदा श्रीकृष्णेन स्वपृष्ठं दर्शयित्वोक्तम् । नात्र तव प्रभावः, पश्य मदीयं पृष्ठं मया सर्वात्मना तद्रक्षणं कृतम्, न हि हनुमतः पादप्रहारं सोढुं योग्यः बद्धः सेतुरिति ! एतच्च स्पष्टं पुराणेषु ।

१ अपानवायुं निःसारयति । २ इन्द्रस्य । ३ वज्रम् । ४ मन्युः क्रोधः । ५ रुद्रस्य । ६ प्रज्वलन् । ७ अग्निः । ८ मानम् अभिमानं द्यति खण्डयतीति तम्, सर्वगर्वविध्वंसकमिति भावः । ९ न तु युद्धेच्छयेति भावः । १० हयग्रीवं नाम दैत्यम् । ११ न तु इन्द्रेण किङ्करैः पातितार्गला । १२ भयेन । १३ सूर्यस्य । १४ राक्षसराजस्य 'रावणस्येत्यर्थः । १५ इन्द्रः, घूकश्च । १६ पुष्करावर्त्तकनामानौ मेघाधिराजौ । १७ प्रतिध्वनि । रवशब्दो मण्डूकशब्द एव प्रयुज्यत इति समयोल्लङ्घनाद् दुष्टः । १८ 'रोदसी' इति द्यावापृथिव्योः सञ्ज्ञा । १९ सङ्ग्रामरूपसमुद्रस्य । २० सङ्ग्रामोद्यमसूचनाय ताड्यमानं दुन्दुभिं शृण्वतो भीमस्येदं वचनम् । २१ नगरम् । २२ आक्रन्दद्भिः शृगालैः पूर्णम् । २३ 'कर्कटिया' इत्याख्यः पक्षी करेटुः । २४ कपाटादिरूपकाष्ठ- । २५ पर्यटद्व्याघ्रम् । २६ राक्षसी- । २७ रामचन्द्रस्य । २८ देवाः । २९ इन्द्रः । ३० तदवध्यपि तस्य मरणाविश्वासात् । ३१ राक्षससेनापतौ रावण इत्यर्थः । ३२ ओष्ठप्रान्तभाग- । ३३ मांसलुब्ध- ।

वृन्दरभसोन्मुक्तादुपक्रामति ॥ १० ॥ प्रौढच्छेदानुरूपोच्छलनरयवशात्सैंहिकेयोपमेयैस्त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्। कुर्वन्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां झाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥ ११ ॥ माद्यन्मातङ्गकुम्भस्थलबहलवसावासनाविस्रगन्धव्यासक्तव्यक्तमुक्ताफलशकललसत्केसरालीकरालः। एणीवैधव्यवेधाः स्वभुजबलमदग्रस्ततेजस्विधामा गुञ्जन्कुञ्जे गिरीणां हरिरिह शबरीगर्भपातं विधत्ते ॥ १२ ॥ मन्थायस्तार्णवाम्भःप्रतिकुहरवलन्मन्दरध्वानधीरः कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः। कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥ १३ ॥ निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिलक्रूरतारा नरास्थिग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती। ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताडकेयम् ॥ १४ ॥

## बीभत्सवर्णनम्।

प्रस्वेदमलदिग्धेन वहता मूत्रशोणितम्। व्रणेन विकृतेनेदं सर्वमन्धीकृतं जगत् ॥ १ ॥ पद्भ्यां यतामपथ्या पथ्या रथ्यावर्तां विशेषेण। आभाति काऽपि रथ्या जनितजुगुप्सा किमत्र वद मिथ्या ॥ २ ॥ यस्यां महापङ्किलकुट्टिमान्तः पतन्त्यमेध्याम्बुवहाः प्रणाल्यः। या लङ्घ्यते संवृतनासिकास्यैः कष्टा प्रतोली कलिता न कैः सा ॥ ३ ॥ इतस्ततो वान्ति विशिष्य यस्यां वाताः शकृद्वेश्मविहारविस्राः। सा वर्ण्यते रौरवराजधानी केन प्रतोली मनसाऽप्यगम्या ॥ ४ ॥ विष्वङ्मूत्रविसूत्रनिर्झरशतां जम्बालजालोल्लुठज्जन्तुं घूत्कृतिबुद्बुदौघगहनां नासाकफैः पिच्छिलाम्। प्रौढप्रस्तरदन्तुरां समुदयद्दुर्गन्धपूरान्तरां सर्वस्वं नरकस्य केन विशिखां स्मृत्वैव नो वम्यते ॥ ५ ॥ विकीर्णहरिचन्दनद्रविणि यत्र लीलालसा निपेतुरतिचञ्चलाश्चतुरकामिनीदृष्टयः। तदेतदुपरिभ्रमन्निबिडगृध्रजालं जनैर्लुठत्कृमिकलेवरं पिहितनासिकैर्वीक्ष्यते ॥ ६ ॥ अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतः पिनह्य शिरसा हृत्पुण्डरीकस्रजः। एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिबन्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥७॥ उत्कृत्य ज्वलितां शवात्कथमपि प्रेताशनः पैशितीं पेशीमग्निमयीं निगीर्य सहसा दन्दह्यमानोदरः। धावत्युत्प्लवते मुहुर्निपतति प्रोत्तिष्ठति प्रेक्षते विष्वक्क्रोशति संपिनष्टि जठरं मुष्ट्या चलन्मस्तकः ॥ ८ ॥ अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कणप्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्। पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ ९ ॥ रक्तं नक्तंचरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः। क्रीडत्यव्रीडमस्मिन्रुधिरमदवशात्पूतना नूतनाङ्गी योगिन्यो मांसमेदःप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥ १० ॥ उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसान्यंसस्फिक्पृष्ठपिण्डा-

---

१ राहुसम-। २ मस्तकम्। ३ दुर्गन्धविशेष-। ४ व्याघ्रः। ५ मृगहन्तेति भावः। ६ शबरीणां वन एव प्रायो निवास इति तथोक्तिः। ७ क्षुब्धसमुद्र-। ८ 'भेरीशतसहस्राणि ढक्काशतशतानि च। एकदा यत्र ताड्यन्ते कोणाघातः स उच्यते ॥' इत्यात्मकेषु शब्देषु सत्सु। ९ द्रौपदी-। १० प्रतिध्वनिसमः। ११ इयं भीमसेनस्योक्तिः। १२ रथसमूहवताम्। १३ पुरीष-। १४ दुर्गन्धिताः। १५ वक्र-। १६ व्याप्ताम्। १७ कपालरूपैः पानपात्रैः। १८ मृतशरीरात्। १९ मांससम्बन्धिनीम्। २० व्योम। २१ मांसम्। २२ चर्म। २३ पृथूच्छूनेति काव्यप्रकाशे पाठः। २४ कटिप्रोथ-।

चवयवसुलभान्युग्रपूतीनि[1] जग्ध्वा । आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः[2] करङ्का[3]दङ्कस्थादस्थिसंस्थं स्थपुट[4]गतमपि क्रव्यमव्यग्रमत्ति ॥ ११ ॥

## रौद्ररसवर्णनम् ।

स रोषदष्टाधरलोहिताक्षैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः । तस्तार गां भल्लनिकृत्तकण्ठैर्हुंकारगर्भैर्द्विषतां शिरोभिः ॥ १ ॥ पातालतः किमु सुधारसमानयामि निष्पीड्य चन्द्रममृतं किमु वाऽऽहरामि । उद्यन्तमद्य तपनं[5] किमु वारयामि कीनाश[6]पाशमथवा किमु चूर्णयामि ॥ २ ॥ चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य । स्त्याना[7]वनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि[8] भीमः ॥ ३ ॥ कृत[9]मनुमतं[10] दृष्टं[11] वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्[12]भवद्भिरुदायुधैः । नरक[13]रिपुणा सार्धं तेषां सभीमकिरीटिनामहमयमसृङ्मेदोमांसैः करोमि दिशां[14] बलिम् ॥ ४ ॥ यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं यद्विस्मर्तुमपीहितं शमवता[15] शान्तिं कुलस्येच्छता । तद्द्यूतारणिसंभृतं नृपसुता[16]केशाम्बराकर्षणैः क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥ ५ ॥ येन त्वां विनिहत्य मातरमपि क्षत्रास्र[17]पूरासवास्वादोन्मत्तपरश्वधेन विदधे निःक्षत्रिया मेदिनी । यद्बाणव्रणवर्त्मनः शिखरिणः क्रौञ्चस्य[18] हंसच्छलादद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः[19] ॥ ६ ॥ देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः क्षत्रा[20]देव तथाविधः परिभवस्ता[21]तस्य केशग्रहः । तान्येवाहितशस्त्रघस्मर[22]गुरूण्यस्त्राणि भास्वन्ति[23] मे यद्रामेण[24] कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ ७ ॥ यैः प्राणापहृतिः कृता मम पितुः क्रुद्धैर्युधि[25] क्षत्रियै रामो[26]ऽहं रमणीर्विहाय बलवान्निःशेषमेषां हठात् । भास्वत्प्रौढकुठारकोटिघनकाण्डत्रुटत्कन्धरास्रोतोऽन्तःस्रुतशोणशोणितभरैः कुर्यां क्रुधां[27] निर्वृतिम् ॥८॥ राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः प्रत्यक्षं कुरुबान्धवस्य च तथा कर्णस्य शल्यस्य च । पीतं तस्य[28] ममाद्य पाण्डववधूकेशाम्बराकर्षिणः कोष्णं[29] जीवत एव तीक्ष्णकरज[30]क्षुण्णादसृग्वक्षसः ॥ ९ ॥ स्पृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा येनास्याः परिधानमप्यपहृतं राज्ञां कुरूणां पुरः । यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्सोऽयं[31] मद्भुज[32]पञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥१०॥ रक्तोत्फुल्लविशाललोलनयनः कम्प्रोत्तराङ्गो मुहुर्मुक्त्वा कर्णमपेतभी[33]र्धुतधनुर्बाणो हरेः पश्यतः[34] । आध्मातः कटूक्तिभिः[35] स्वमसकृद्दोर्विक्रमं कीर्तयन्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः ॥ ११ ॥ त्रैलोक्यत्राण[36]शौण्डः सरसिज[37]वसतेः संप्रसूतो भुजाभ्यां सुक्षत्रं नाम वर्णः कुलिशकठिनयोर्यस्य दोष्णो[38]र्विलीनः । ज्वालाजिह्वालकालानलकवलभयभ्रान्तदेवासुराणि व्यातन्वानो जगन्ति ज्वलति मुनिरयं[39] पार्वतीधर्मपुत्रः[40] ॥ १२ ॥ अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के मग्नानां स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ ।

---

१ अतिदुर्गन्धितानि । २ दरिद्रः । ३ मृतशरीरात् । ४ उच्चानुच्चप्रदेश- । ५ सूर्यम् । ६ यम- । ७ गाढ- । ८ हे द्रौपदि । ९ येन धृष्टद्युम्नेनाकारि । १० यैर्भीमादिभिरनुज्ञातम् । ११ यैः सैनिकैरवलोकितम् । १२ युद्धाद्विरतस्य हननं हि न धर्म्यम् । १३ श्रीकृष्णेन । १४ दिग्देवतानाम् । १५ शान्तेन युधिष्ठिरेण । १६ द्रौपदी- । १७ क्षत्रियरुधिर- । १८ एतदाख्यस्य गिरेः । १९ परशुरामः । २० सहस्रबाहोः धृष्टद्युम्नाच्च । २१ पितुः । जमदग्नेः द्रोणस्य च । २२ ग्रसनकारि- । २३ दीप्यमानानि । २४ जामदग्न्येन । २५ सङ्ग्रामे । २६ परशुरामः । २७ कोपानाम् । २८ दुःशासनस्य । २९ ईषदुष्णम् । ३० नख- । ३१ दुःशासनः । ३२ भीमसेन- । ३३ निर्भयः । ३४ पश्यन्तं हरिमनादृत्य । ३५ त्वद्गाण्डीवं धिगित्यादिभिर्दुरुक्तिभिः । ३६ रक्षादक्षः । ३७ विधातुः । ३८ भुजयोः । ३९ परशुरामः । ४० पार्वतीश्वरशिष्यत्वात् ।

स्फीतासृक्पानगोष्ठीरसदशिवशिवा[1]तूर्यनृत्यत्कबन्धे[2] सङ्ग्रामैकार्णवान्तः प्रविचरितुमलं पण्डिताः पाण्डुपुत्राः ॥ १३ ॥ रे धृष्टा[3] धार्तराष्ट्राः[4] प्रबलभुजबृहत्ताण्डवाः पाण्डवा रे रे वार्ष्णेयाः[5] सकृष्णाः शृणुत मम वचो यद्ब्रवीम्यूर्ध्वबाहुः । एतस्यो[6]त्खातबाहो[8]र्द्रुपदनृपसुतातापिनः पापिनोऽहं पाता हृच्छोणितानां प्रभवति यदि वस्तत्किमेतं न पाथ[7] ॥ १४ ॥ नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि । भो भो राजन्यवीराः समरशिखिशिखाभुक्तशेषाः कृतं वस्त्रासेनानेन लीनैर्हत[9]करितुरगान्तर्हितैरास्यते यत्[10]॥ १५॥ यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा । यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥ १६ ॥ नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति । अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो मम परश्वधो भैरवः ॥ १७ ॥

## शान्तवर्णनम् ।

नो देशो नैव मित्राणि न गृहं न च बन्धवः । दृश्यजातमिदं माया विभवैकनिदर्शनम् ॥१॥ यथा रज्जुस्तथा व्यालो दृश्यमानोऽपि जातुचित् । ज्ञानात् पूर्वं परं चैव भूतो भावी च नैव सन् ॥ २ ॥ पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः । सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥३ ॥ मन्ये मायेयमज्ञानं यत्सुखं स्वजनादपि । निदाघवारणायालं निजच्छाया न कस्यचित् ॥ ४ ॥ विपत्प्रशान्त्यै सेव्यन्ते यदि कष्टेन भूभृतः । तत्करिष्यति कष्टाऽपि विपत्किमधिकं ततः ॥ ५ ॥ मितमायुर्वयो नित्यं नैति यातं कदाचन । परामृशन्ति तदपि न भवं[10] भोगलोलुपाः ॥ ६ ॥ निःस्नेहो[11] याति निर्वाणं[12] स्नेहो[13]ऽनर्थस्य कारणम् । निःस्नेहेन प्रदीपेन यदेतत्प्रकटीकृतम् ॥ ७ ॥ अश्नीमहि वयं भिक्षामाशावासो वसीमहि[14] । शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः[15] ॥ ८ ॥ यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ९ ॥ प्रचण्डवासनावातैरुद्धूता नौर्मनोमयी । वैराग्यकर्णधारेण विना रोद्धुं न शक्यते ॥१०॥ रागिण्य[16]पि विरागिण्यः[17] स्त्रियस्तासु रमेत कः । अहं च कलये मुक्तिं यां विरागिणि[18] रागिणी[19] ॥ ११ ॥ लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः । तदा सुधास्पदमभूदधुना[20] तु ज्वरो महान्॥ १२॥ पूरयित्वाऽर्थिनामाशां प्रियं कृत्वा द्विषामपि । पारं गत्वा श्रुतौघस्य[21] धन्या वनमुपासते ॥ १३ ॥ स्त्रीपुत्रादिपरिष्वङ्गसुखं सम्मूढचेतसाम् । सर्वोपेक्षोद्भवं शर्म परिस्फुरति धीमताम् ॥ १४ ॥ हन्त गेहादिसम्भारे पश्यन्तोऽपि भयं महत् । विहातुं कामयन्ते तं जरन्तोऽपि न पण्डिताः ॥ १५ ॥ गतः कामकथोन्मादो गलितो यौवनज्वरः । गतो मोहश्च्युता तृष्णा कृतं पुण्या[22]श्रमे मनः ॥१६॥ वनान्यमूनि न गृहाण्येता नद्यो न योषितः । गृहा इमे न दायादा[23]स्तन्मे नन्दति मानसम् ॥ १७ ॥ शान्तिकन्थालसत्कण्ठो मनःस्थालीमिलत्करः । त्रिपुरारिपुरद्वारि[24]

---

१ भयङ्करशृगाली- । २ छिन्नमस्तकैः । ३ निर्लज्जाः, मूढा वा । ४ हे दुर्योधनादयः । ५ यदुवंश्याः । ६ दुःशासनस्य । ७ पालयथ । ८ दुःशासनादीन् हतवन्तं स्वं द्रष्टुमशक्नुवतः प्रति भीमस्येदं वचनम् । ९ पितृ ( द्रोण ) हननरूप- । १० संसारम् । ११ प्रेमहीनः । रिक्ततैलश्च । १२ मोक्षम्, प्रशमं च । १३ बन्धनस्य, ज्वलनस्य च । १४ दिगम्बरा भवाम इति भावः । १५ धनिभिः । १६ आसक्ते । १७ प्रेमशून्याः । १८ संसारभोगेभ्यो विमुखेषु । १९ अवश्यं प्राप्यत्वात् । २० संन्यासावस्थायाम् । २१ शास्त्र- । २२ सन्न्यासाश्रमे । २३ गृहधनादिभागभाजः । २४ वाराणसीपुरीद्वारे ।

कदाहं मोक्षभिक्षुकः ॥ १८ ॥ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलैः[1] । यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ १९ ॥ निर्विवेकतया बाल्यं कामोन्मादेन यौवनम् । वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम् ॥ २० ॥ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । तृप्ताः कामेन बाध्यन्ते प्राणिनो निशि निद्रया ॥ २१ ॥ गतसारेऽत्र संसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे बालानां स्तै[2]न्यविभ्रमः ॥ २२ ॥ दिनमेकं शशी पूर्णः क्षीणस्तु बहुवासरान् । सुखाद्दुःखं सुरा[3]णामप्यधिकं का कथा नृणाम् ॥ २३ ॥ न विषयभोगो भाग्यं योग्यं खलु यत्र जन्तुमात्रमपि । ब्रह्मेन्द्ररुद्रमृग्यं भाग्यं विषयेषु वैराग्यम् ॥ २४॥ पाषाणखण्डेष्वपि रत्नबुद्धिः कान्तेति धीः शोणितमांसपिण्डे । पञ्चा[4]त्मके वर्ष्म[5]णि चात्मभावो जयत्यसौ काचन मोहलीला ॥ २५ ॥ त्रय्य[6]न्तसिद्धाञ्जननिर्मलाक्षैस्तपोधनैरप्यनवेक्षितं यत् । अवेक्ष्यते धाम[7] तदेव काश्यामात्यन्तिकेनाक्षिनिमीलनेन ॥ २६ ॥ कुटुम्बचिन्ताकुलितस्य पुंसः कुलं च शीलं च गुणाश्च सर्वे । अपक्वकुम्भे निहिता इवाप[10]ः प्रयान्ति देहेन समं विनाशम् ॥ २७ ॥ सुरमन्दिरतरुमूलनिवासः शय्या भूतलम[11]जिनं वास[12]ः । सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः॥ २८ ॥ निखिलं जगदेव नश्वरं पुनरस्मिन्नित[13]रां कलेवर[14]म् । अथ तस्य कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥ २९ ॥ मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः । श्वप[15]चात्मभुवोः किमन्त[16]रं मम भूयात्परमात्मनि स्थितिः ॥ ३० ॥ नवनीलमेघरुचिरः परः पुमानवनीमवाप्य धृतगोपविग्रहः । नवनीय[17]कीर्तिरमरैरपि स्वयं नव[18]नीतभिक्षुरधुना स चिन्त्यते॥ ३१ ॥सार्वभौमभवनं वनवासो निःस्वभावभवभावनया ते । बालि[19]शो हि विषयेन्द्रियचौरैर्मुष्य[20]ते स्वभवने च वने च[21]॥ ३२॥ इतो न किंचित्परतो न किंचिद्यतो यतो यामि ततो न किंचित्। विचार्य पश्यामि जगन्न किंचित्स्वात्मावबोधादधिकं न किंचित्॥ ३३॥व्याघ्रीव तिष्ठति जरा[22] परितर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहम् । आयुः परिस्र[23]वति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ३४॥ दैन्यं क्वचित्क्वचन मन्म[24]थजा विकाराः कुत्राप्यनेकविधबन्धुजनप्रपञ्चः । क्वापि प्रभुत्वधनकल्पितमीश्वरत्वमित्येकवैकृतमिदं जगदाविभाति ॥ ३५॥ आस्तामकण्ट[25]कमिदं वसुधाधिपत्यं त्रैलोक्यराज्यमपि नैव तृणाय मन्ये । निःशङ्कसुप्तहरिणीकुलसंकुलासु चेतः प[26]रं व[27]लति शैलवनस्थलीषु ॥ ३६॥ ते तीक्ष्णदुर्जननिकारशरैर्न भिन्ना धीरास्त एव श[28]र्मसौख्य[29]भुजस्त एव । सीमन्तिनीभुजलतागहनं व्युदस्य[32] येऽव-

---

१ प्राणरूपः । २ मातृस्तनदुग्धभ्रमः । ३ सुराणामपि त्रिदशत्वात् । ४ पृथ्व्यादिभूतपञ्चकरूपे । ५ शरीरे । ६ त्रयी-वेदत्रयी, तस्या अन्तः निश्चयः सिद्धान्त इति यावत् । स एव- । ७ स्थानम् । ८ 'काश्यां मरणान्मुक्तिः ।' इति श्रुतिः । श्रुतिपदार्थे विवदन्ते वारानस्योर्नद्योरन्तरालदेशः काशी तत्रासन्नमरणाः शङ्करोपदिष्टं तारकमन्त्रमुपलभ्य मुच्यन्त इत्येके अपरे तु काश्यां ब्रह्मसाक्षात्कारे सत्येवेति ज्ञानादृते न मुक्तिः । 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादि श्रुतेः इति । ९ शयनादिकालिकेतरेण । स्वात्मतत्त्वोपलब्धिकालिकेन । १० जलानि । ११ मृगचर्म इदं चीरादेरप्युपलक्षणम् । १२ वस्त्रम् । १३ अत्यन्तम् । १४ देहः । १५ चण्डाल-जगद्विधात्रोः । १६ भेदः सर्वेषां पाञ्चभौतिकत्वादिना साम्यात् । १७ स्तोतव्ययशाः । १८ हैयङ्गवीन- । १९ मूर्खः । स्वात्मज्ञानहीन इति भावः । २० चोर्यते । २१ इदमप्यर्थं तेन ज्ञानं विना वने स्थितोऽपि मुष्यते ज्ञाने सति तु न भवनेऽपि दूरं वन इति लब्धम् । २२ वृद्धावस्था । २३ निःसरति अपयाति च । २४ कामोत्पादिता भोगवासनारूपाः । २५ शत्रुभयशून्यम् । २६ केवलम् । २७ धावति । २८ शान्ति- । २९ सावज्ञं परित्यज्य ।

स्थिताः शर्मफलेषु तपोवनेषु॥ ३७॥बुद्धेरगोचरतया न गिरां प्रचारो दूरे गुरुप्रथितवस्तुकथावतारः। तत्त्वं क्रमेण विदुषां करुणावदाते श्रद्धावतां हृदि पदं स्वयमादधाति ॥ ३८ ॥ दधति तावदमी विषयाः सुखं स्फुरति यावदियं हृदि मूढता । मनसि तत्त्वविदां तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहाः ॥ ३९ ॥ क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः । जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुर्नटः संसाराङ्के विशति यमधानीजवनिकाम् ॥ ४० ॥ क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरः क्वचिद्भूमीशय्यः क्वचिदपि च पर्यङ्कशयनः । क्वचिद्भिक्षावृत्तिः क्वचिदपि च मृष्टाशनरुचिर्महात्मा योगज्ञो न गणयति दुःखं न च सुखम् ॥ ४१ ॥ अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥ ४२ ॥ गतास्तातभ्रातृप्रमुखसुखपीयूषमधुराः पुरा लक्ष्मीक्षैव्यव्यसनसरसास्तेऽपि दिवसाः । अदः शान्तं स्वान्तं सपदि यदि निर्वेदपदवीं भजत्यभ्यासोऽयं जनयति सुखं भावविमुखम् ॥ ४३ ॥ अवश्यं यातारश्चिरतरमुषित्वापि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् । व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ ४४ ॥ न संसारोत्पन्नं चरितमनुपश्यामि कुशलं विपाकः पुण्यानां जनयति भयं मे विमृशतः । महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ४५ ॥ धनं तावल्लब्धं कथमपि तथाप्यस्य नियतं विनाशेऽलाभे वा तव सति वियोगोऽप्युभयथा । अनुत्पादः श्रेयान्किमु कथय तस्याथ विलयो विनाशो लब्धस्य व्यथयतितरां न त्वनुदयः ॥ ४६ ॥ परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् । प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे विविक्तः संकल्पः किमिव हि फलं पुष्यति न ते॥ ४७॥यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं सहार्यैः संलापः श्रुतमुपसमैकव्रतफलम् । मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृशन्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ४८ ॥ तडिन्मालालोलं निरयपरिपातैकफलकं जगत्सौख्यं हित्वा शमसुखमुपादेयमनघम् । इति व्यक्तोद्गारं चटुलवचसः शून्यमनसो वयं वीतव्रीडाः शुक इव पठामः परममी ॥ ४९ ॥ यदासौ दुर्वारः प्रसरति मदश्चित्तकरिणस्तदा तस्योद्दामप्रसररसरूढैर्व्यवसितः । क्व तद्धैर्यालानं क्व च निजकुलाचारनिगडः क्व सा लज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥ ५० ॥ गतः

---

१ शम एव फलं येषां यत्र वेति तेषु । २ अविषयभूतत्वेन । अत एवोक्तं गीतोपनिषत्सु- 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परम्मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥' इति । 'पराञ्चि खानि ( इन्द्रियाणि ) व्यतृणोत्स्वयम्भूः' इत्याद्यन्यत्रापीति दिक् । ३ स्वच्छे, रागादयो हि कषायास्तेषामपायेऽवदातत्वं स्पष्टम् । ४ यमराजधानी- । ५ सर्पे । ६ मृत्पुञ्जे । ७ पाषाणे । ८ स्त्रीविषयभोगे । इदं शरीरप्रारब्धवशात् प्राप्ते सत्येव नान्यथा । ९ पुण्ये शरीरपुण्यपाकरूपे प्रासादादौ अरण्ये शरीरपापपाकरूपे व्याघ्रादिभयकीर्णे वने वेति भावः । 'पुण्यारण्य इति समस्तपाठे तु काशीक्षेत्रस्यैव स्पृहा द्योतितेति न च साऽपि तथात्व इष्टेति । १० दृप्तत्व- । ११ चित्तम् । १२ स्थित्वाऽपि । १३ उत्तमम् । १४ फलम् । १५ तत्त्वविवेकमनुतिष्ठतः । पुण्यविपाका हि सांसारिकसुखरूपा आसक्त्यतिशयनिमित्तानीति तथोक्तम् । १६ अलाभः । १७ आत्यन्तिकक्लेशदूषितम् । १८ दुर्वासनारूपकालुष्यशून्ये । १९ हृदये । २० पुष्पितं भवति पुष्टं जायत इति वा । २१ शास्त्रम्, लक्षणया तदध्ययनम् । २२ मन्दः अल्पः स्पन्दः सञ्चारः यस्येति तादृशम् । २३ चिरकालम् । २४ विचारयन् । २५ फलम् । २६ सांसारिकपदार्थभोगामोदम् । २७ त्यक्त्वा । २८ शुद्धम् । २९ अत्रैकवचनमुपमेयवचनाद्विषममित्युपमादुष्टत्वम् । ३० तस्य चित्तकरिणो धैर्यरूपमालानं बन्धनम् । ३१ शृङ्खला ।

कालो यत्र द्विचरणपशूनां क्षितिभुजां[१] पुरः स्वस्तीत्युक्त्वा विषयसुखमास्वादितमभूत् । इदानीमस्माकं तृणमिव समस्तं कलयतां[२] अपेक्षा भिक्षायामपि किमपि चेतस्त्रपयति[३] ॥ ९१ ॥ अहंकार क्वापि व्रज वृजिन[४] हे मा त्वमिह भूरभूमिर्दर्पाणामहमपसर त्वं पिशुनते[५] । अरे क्रोध स्थानान्तरमनुसरानन्यमनसां[६] त्रिलोकीनाथो नो[७] हृदि वसतु देवो हरिरसौ ॥ ९२ ॥ अतिक्रान्तः कालो ललितललनाभोगसुखदो भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ[८] । इदानीं स्वःसिन्धोः[९] तटभुवि समाक्रन्दनगिरः सुतारैः[१०] फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥९३॥ महाशय्या[११] भूमिर्मसृणम्[१२] उपधानं[१३] भुजलता वितानं[१४] चाकाशं व्यजनमनुकूलोऽयमनिलः । स्फुरन्दीपश्चन्द्रः स्वधृति[१५]वनितासङ्गमुदितः सुखं शान्तः शेते विगतभव[१६]भीतिर्नृप इव ॥ ९४ ॥ कदा वृन्दारण्ये नवघननिभं नन्दतनयं परीतं[१७] गोपीभिः क्षण[१८]रुचिमनोज्ञाभिरभितः । गमिष्यामस्तोषं नयनविषयीकृत्य[१९] कृतिनो[२०] वयं प्रेमोद्रेकस्खलितगतयो वेपथुभृतः[२१] ॥ ९५ ॥ कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम् । कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः पतिष्यन्ति स्थाणुभ्रमहतधियः स्कन्धशिरसि ॥ ९६ ॥ कदा वृन्दारण्ये विमलयमुनातीरपुलिने चरन्तं गोविन्दं हलधरसुदामादिसहितम् । अये कृष्ण स्वामिन्मधुरमुरलीवादन विभो प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ९७ ॥ कदा वा साकेते[२२] विमलसरयूतीरपुलिने चरन्तं श्रीरामं जनकतनयालक्ष्मणयुतम् । अये राम स्वामिञ्जनकतनयावल्लभ विभो प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ९८ ॥ कदा वाराणस्याममर[२३]तटिनीरोधसि वसन्वसानः[२४] कौपीनं शिरसि निदधानोऽञ्जलिपुटम् । अये गौरीनाथ त्रिपुरहर शंभो त्रिनयन प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ९९ ॥ भूः पर्यङ्को निजभुजलतागेन्दुकः[२५] खं[२६] वितानं दीपश्चन्द्रो विरति[२७]-वनितालब्धयोगप्रमोदः । दिक्कन्यानां व्यजनपवनैर्वीज्यमानोऽनुकूलैर्भिक्षुः शेते नृप इव सदा वीतरागो जितात्मा[२८] ॥ ६० ॥ आसंसारात्त्रिभुवनमिदं चिन्वतां तात तादृङ् नो वाऽस्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा । योऽयं धत्ते विषयकरिणीगाढगूढाभिमानक्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ६१ ॥ अहो मायाजालं हृदयहरिणो यत्र पतितः समुत्थातुं भूयः प्रभवति न किञ्चित् कथमपि । न चेत्तस्य[२९] छेत्ता परमगुरुवाक्योपनमितो निजात्मज्ञानाखुर्विविधदृढसद्युक्तिदशनैः ॥ ६२ ॥ विहारः स्वच्छन्दं शयनमपि निर्बाधमनघं सुमिष्टं भिक्षाऽन्नं वसनमथ कन्था पथि पथि । धृती रामा तोषः सुहृदनुचराः स्वात्ममननादयो राज्यं विष्वग्गतभयमनन्यानुभविनः ॥ ६३ ॥ आयुर्वायुव्यथितनलिनीपत्रमित्रं किमन्यत्संपच्छम्पा[३०]द्युतिसहचरी स्वैरचारी कृतान्तः । कस्मादस्मिन्भ्रमसि तमसि त्वं प्रयाहि प्रयागं पौनःपुन्यं भुवि भगवती स्वर्धुनी[३१] ते धुनीते ॥ ६४ ॥ पूर्वं तावत्कुवलयदृशां लोललोलैरपाङ्गैराकर्षद्भिः किमपि हृदयं पूजिता यौवनश्रीः । संप्रत्यन्तर्निहितसदसद्भावलब्धप्रबोधप्रत्याहारैर्विशदहृदये वर्तते कोऽपि भावः ॥ ६५ ॥ मातर्माये भगिनि कुमते हे पितर्मोहजाल व्यावर्तध्वं भवतु भवतामेष दीर्घो वियोगः । सद्यो

---

१ राज्ञाम् । २ गणयताम् । ३ वस्तुतस्तु द्वैतवासनानिवृत्तेस्त्रपाऽपि न सम्भवति । तेन त्रपयति वचनमपि समाधिव्युत्थानकालिकम् । ४ पाप । दुःखेति वा । ५ अपात्रम् । ६ आत्मैकनिष्ठानाम् । ७ अस्माकम् । ८ जननमरणरूपे मार्गे । ९ गङ्गायाः । १० अत्युच्चैः । ११ महती शय्या । १२ कोमलम् । १३ शिरउपधानम् । १४ उल्लोचः । १५ स्वस्य या धृतिः धैर्यं सैव वनिता तत्सङ्गमुदितः । १६ संसार– । १७ वेष्टितम् । १८ विद्युत्– । १९ दृष्ट्वा । २० कृतार्थाः । २१ कम्पावन्तः । २२ अयोध्यायाम् । २३ गङ्गातीरे । २४ दधानः । २५ उपधानम् । २६ आकाशम् । २७ वैराग्य । २८ वशीकृतचित्तः । २९ भाषाजालस्य । ३० विद्युत्प्रकाश– । ३१ गङ्गा ।

लक्ष्मीरमण[1]चरणभ्रष्टगङ्गाप्रवाहव्यामिश्रायां दृषदि[2] परमब्रह्मदृष्टिर्भवामि ॥ ६६ ॥ गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य ब्रह्मज्ञानाभ्यसनविधिना योगनिद्रां गतस्य । किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः कण्डूयन्ते जरठहरिणाः शृङ्गमङ्गे मदीये ॥ ६७ ॥ भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे मायामोहौ क्षयमुपगतौ नष्टसंदेहवृत्तेः । शब्दा[3]तीतं त्रिगुणरहितं प्राप्य तत्त्वा[4]वबोधं निस्त्रैगुण्ये[5] पथि विचरतः को विधिः को निषेधः ॥६८॥यद्वाऽऽत्मानं सकलवपुषामेकमन्तर्बहिस्थं दृष्ट्वा पूर्णं खमिव सततं सर्वभाण्डस्थमेकम् । नान्यत्कार्यं किमपि च ततः कारणाद्भिन्नरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः॥ ६९॥ हेम्नः कार्यं हुतवहगतं हेममेवेति यद्वत्क्षीरे क्षीरं समरसतया तोयमेवाम्बुमध्ये । एवं सर्वं समरसतया त्वंपदं[6] तत्पदार्थे[7] निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः॥७०॥यद्वन्नद्योदधिसमरसौ सागरत्वं ह्यवाप्तौ तद्वज्जीवालयपरिगतौ सामरस्यैकभूतौ । भेदातीतं परिलयगतं सच्चिदानन्दरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७१ ॥ यस्मिन् विश्वं स्थितमविरतं येन चैतन्यमाप्तं यस्मिल्लीनं भवति सकलं मत्स्वरूपं तदेव । न प्रत्यर्थी न च मम सुहृन्नैव मच्च द्वितीयस्तत्सर्वात्मा निरुपममहाऽऽनन्दभूतोऽस्मि शश्वत् ॥७२॥ दृष्ट्वा वेद्यं परमथ पदं स्वात्मबोधस्वरूपं बुद्ध्वाऽऽत्मानं सकलवपुषामेकमन्तर्बहिस्थम् । भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७३ ॥ कार्याकार्ये किमपि सततं नैव कर्तृत्वमस्ति जीवन्मुक्तस्थितिरवगतो दग्धवस्त्रावभासः। एवं देहे प्रविलयगते तिष्ठमानो विमुक्तो निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७४ ॥ कस्मात्कोऽहं किमपि च भवान्कोऽयमत्र प्रपञ्चः स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम् । आनन्दाख्यं समरसघने बाह्यमन्तर्विहीने निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७५ ॥ किं कंदर्प करं कदर्थयसि रे कोदण्डटङ्कारितैः रे रे कोकिल कोमलैः कलरवैः किं त्वं मुधा वल्[10]गसि । मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ७६ ॥ मातर्मेदिनि तात मारुत सखे ज्योतिः[11] सुबन्धो जल भ्रातर्व्योम निबद्ध एष भवतामन्त्यैः[12] प्रणामाञ्जलिः । युष्मत्[13]सङ्गवशोपजातसुकृतोद्रेकः स्फुरन्निर्मलज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ७७ ॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला राग[14]ग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी[15] तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ७८ ॥ येषां वल्लभया[16] सह क्षणमपि क्षिप्रं क्षपा क्षीयते तेषां शीतकरः शशी विरहिणामुल्केव संतापकृत् । अस्माकं तु न वल्लभा न विरहस्तेनोभयभ्रंशिनामिन्दू राजति दर्पणाकृतिरसौ नोष्णो न वा शीतलः॥ ७९ ॥ धावन्तः प्रतिवासरं दिशि दिशि प्रत्याशया संपदां दृष्ट्वा कालवशेन हन्त पलितं कस्यापि दैवद्रुमम् । श्रावं[17] श्रावमवज्ञयोपहसितं सर्वत्र भग्नोद्यमा जीवामः परमार्थशून्यहृदयास्तृप्ता मनोमोदकैः॥ ८० ॥ सन्त्येके धनलाभमात्रगहनव्यामोहसंमूर्छिताः केचिद्दैवतसुन्दरीस्तनपरीरम्भभ्रमव्याकुलाः । अन्तर्भूतसमस्ततत्त्वनिवहं चिन्मात्रशेषं

---

१ लक्ष्मीपति- । २ शालग्रामादिरूपे पाषाणे । ३ शब्दैः प्रतिपादयितुमशक्यम् । ४ वास्तविकज्ञानं परमात्मावधारणमिति यावत् । ५ रजस्तमःसत्त्वव्यापारशून्ये । ६ जीवपदार्थः । ७ ब्रह्मपदार्थे । ८ सदृशः । ९ कस्मात् पितुरुत्पन्नः । १० वाचालतां प्रकटयसीति भावः । ११हे तेज इत्यर्थः । १२अन्तिमः । सम्बन्धविच्छेदकालिक इति यावत् । १३युष्माकं मेदिन्यादीनां पञ्चानां महाभूतानामित्यर्थः । पाञ्चभौतिकशरीरसम्बन्धः। सत्त्व एव निष्कामकर्म्मानुष्ठाने ज्ञानोद्रेक इति तथोक्तिः । १४ अत्र रागपदं द्वेषस्याप्युपलक्षणम् । १५ प्रोन्नतेन चिन्तारूपेण तटेन युक्ता । १६ स्त्रिया । १७ पुनः पुनः श्रुत्वा ।

शिवं दृष्ट्वा हृष्टतनूरुहाङ्कुरभराः कष्टं न शिष्टाः क्वचित् ॥ ८१ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥८२॥ यत्रैकं श्रुतमक्षरं पशुपतेर्[1]हेतुः श्रुतीनां कृतौ सद्यो रोहति चाष्टधा तनुभृतां यत्रैकमुद्यद्वपुः । यत्रैकाभ्रनदीकणेऽपि विधृते सर्वैव सा धार्यते सा दृष्टाद्भुतवैभवा कविगिरां पारे हि वाराणसी ॥ ८३ ॥ स्मेर[2]रस्मेरमदोन्नमत्कुचतटीकान्ताकरान्दोलितैः पुष्पाम्भोनिचितैरुशीररचितैः किं तालवृन्तैर्मम । अन्वानन्दवनं सुखं शिशयिषो[3]रर्धप्रमीलद्दृशो यातायातपरिश्रमं शमयिता गङ्गातरङ्गानिलः ॥ ८४ ॥ एकद्वैः किमभावि सूरिभिरथ द्वित्राणि मित्राणि किं व्यापन्नानि गताश्च किं त्रिचतुरा घोरा महाव्याधयः । सप्ताष्टैरलमिष्टमेतदपि नश्चेतः क्षणान्पञ्चषान्स्वात्मन्येव रमस्व तेजसि गते कालेऽथवा सर्वतः ॥ ८५ ॥ नित्यानित्यविचारणा प्रणयिनी वैराग्यमेकं सुहृन्मित्राण्येव यमादयः[4] शमदमप्रायाः[5] सखायो मताः । मैत्र्याद्याः परिचारिकाः सहचरी नित्यं मुमुक्षा बलादुच्छेद्या रिपवश्च मोहममतासंकल्पवैरादयः ॥ ८६ ॥ पुण्यैर्मूलफलैः प्रियप्रणयिनीं वृत्तिं कुरुष्वाधुना भूशय्यां नवपल्लवैः कुरु तृणैरुत्तिष्ठ यामो वने । क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा वित्तव्याध्यविवेकसंकुलगिरां नामापि न श्रूयते ॥ ८७ ॥ भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरम्परे गिरिसुताकान्तालयालंकृते । अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ ८८ ॥ कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहं नैवालोच्य गरीयसीरपि चिरादामुष्मिकी[6]र्यातनाः । द्रव्यौघाः परिसंचिताः खलु मया यस्याः कृते सांप्रतं नीवाराञ्जलिनाऽपि केवलमहो सेयं कृतार्था तनुः ॥ ८९ ॥ रथ्यान्तश्चरतस्तथा धुतजरत्कन्थालवस्याध्वगैः सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः । निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे निःशङ्कं करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥ ९० ॥ सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुणज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा । यैरेषाऽपि दुराशया कलियुगे राजावली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥ ९१ ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं माने दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम् । शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥९२॥ शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः । इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने दुष्प्रापार्थिनि[10] यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ ९३ ॥ याच्ञाशून्यमयत्नलभ्यमशनं[11] वायुः कृतो वेधसा व्यालानां पशवस्तृणाङ्कुरभुजः सुस्थाः स्थलीशायिनः। संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा[12] नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ९४ ॥ बीभत्सा[13] विषया[14] जुगुप्सिततमः कायो[15] वयो[16] गत्वरं[17] प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः । हातव्योऽय-

---

१ शङ्करस्य । २ मदनोद्रेक- । ३ शयनं कर्तुमिच्छतः । ४ यमाः-'अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता ।' अस्तेयम्' इत्युक्ताः । आदिपदेन नियमग्रहणम् । ५ शमश्चित्तनिग्रहः । दम इन्द्रियनिग्रहः । प्रायपदं प्राचुर्यपरम् । ६ पारलौकिकीः । ७ वायसः ८ महेश्वरे । ९ हरितदूर्वा । १० वने याचका नागच्छन्ति, तेषां च दानादिनाऽसंतोषणेन कालयापनमयुक्तमित्युदारवासनाशालिनः किञ्चिदुपरमत इयमुक्तिः । ११ भोजनम् । १२ वायुभोजन-स्थलीशयनरूपा । १३ जुगुप्सिताः । १४ सम्भोगादयः । १५ मांसादिपिण्डविशेषात्मा । १६ तारुण्यम् । १७ झटिति क्षयं प्रतिगन्तृ ।

मसार एष विरसः संसार इत्यादिकं सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ ९५ ॥ पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखितस्तद्दुःखादिकमार्जने तदैनये तन्मूर्खतादुःखितः। जातश्चेत्सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः पुत्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम् ॥ ९६ ॥ आहारः फलमूलमात्मरचितं शय्या मही वल्कलं संवीताय परिच्छदः कुशसमित्पुष्पाणि पुत्रा मृगाः। वस्त्रान्नाश्रयदामभोगविभवा निर्यन्त्रणाः शाखिनो मित्राणीत्यधिकं गृहेषु गृहिणां किं नाम दुःखावहे ॥ ९७ ॥ सूक्तिं कर्णसुधां व्यनक्तु सुजनस्तस्मिन्न मोदामहे ब्रूतां वाचमसूयको विषमुचं तस्मिन्न खिद्यामहे। या यस्य प्रकृतिःस तां वितनुतां किं लक्षया चिन्तया कुर्मस्तत्खलु कर्म जन्मनिगडच्छेदाय यज्जायते ॥ ९८ ॥ यत्क्षान्तिः समये श्रुतिः शिव शिवेत्युक्तौ मनोनिर्वृतिर्भैक्षे चाभिरुचिर्वनेषु विरतिः शश्वत्समाधौ रतिः। एकान्ते वसतिर्गुरौ प्रतिनतिः सद्भिः समं संगतिः सत्त्वे प्रीतिरनङ्गनिर्जितिरसौ सन्मुक्तिमार्गे स्थितिः ॥ ९९ ॥ संभोगाद्विषयामिषस्य परितः सौहित्यमस्ताखिलज्ञानोन्मेषतया कथं तव भवेदत्यास्पदं देहिनः। साध्यं तद्धि तदेव साधनमितो व्यावृत्तिरेवामिषात्तस्यां ज्योतिरुपैत्यनिन्धनमिदं दोषत्रयं धक्ष्यति ॥ १०० ॥ सत्यं वक्तुमशेषमस्ति सुलभा वाणी मनोहारिणी दातुं दानवरं शरण्यमभयं स्वच्छं पितृभ्यो जलम्। पूजार्थं परमेश्वरस्य विमलः स्वाध्याययज्ञः परं क्षुद्बाधेः फलमूलमस्ति शमनं क्लेशात्मकैः किं धनैः ॥ १०१ ॥ जिह्वे लोचन नासिके श्रवण हे त्वक् चापि नो वार्यसे सर्वेभ्योऽस्तु नमः कृताञ्जलिरिदं सप्रश्रयं प्रार्थये। युष्माकं यदि संमतं तदधुना नात्मानमिच्छाम्यहं होतुं भूमिभुजां निकारदहनज्वालाकराले गृहे ॥ १०२ ॥ भिक्षाहारमदैन्यमप्रतिहतं भीतिच्छिदं सर्वदा दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम्। सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं शंभोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ १०३ ॥ मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भूर्भोगेभ्यः स्पृहयालवो न हि वयं का निःस्पृहाणामसि। सद्यः स्यूतपलाशपत्रपुटके पात्रे पवित्रीकृते भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ १०४ ॥ धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः। शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनमेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ १०५ ॥ संध्यावन्दन भद्रमस्तु भवते भो स्नान तुभ्यं नमो भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम्। यत्र क्वापि निषद्य यादवकुलोत्तंसस्य कंसद्विषः स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥ १०६ ॥ एणाक्षीस्पृहयालुता न कथमप्यास्ते विवेकोदयान्नित्यं प्रच्युतिशङ्कया क्षणमपि स्वर्गे न मोदामहे। अप्यन्येषु विनाशिवस्तुविषयाभोगेषु तृष्णा न मे स्वर्णद्याः पुलिने परं हरिपदध्यानं मनो वाञ्छति ॥ १०७ ॥ जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं पुत्रामित्रमरातयो वसु बलं विद्या सुहृद्बान्धवाः। चित्तस्पन्दितकल्पनामनुभवन्विद्वानविद्यामयीं निद्रामेत्य विघूर्णितो बहुविधान्स्वप्नानिमान्पश्यति ॥ १०८ ॥ लाटीनेत्रपुटीपयोधरघटीक्रीडाकुटीदोस्तटीपाटीरद्रुमवर्णनेन कविभिर्मूढैर्दिनं नीयते। गोविन्देति जनार्दनेति जगतां नाथेति कृष्णेति च व्याहारैः समयस्तदेकमनसां पुंसामतिक्रामति ॥ १०९ ॥ वेदस्याध्ययनं कृतं परिचितं शास्त्रं पुराणं स्मृतं सर्वं व्यर्थमिदं पदं न कमलाकान्तस्य चेत्कीर्तितम्। उत्खातं सदृशीकृतं विरचितः सेकोऽम्भसा भूयसा सर्वं निष्फलमालवालवलये क्षिप्तं न बीजं यदि ॥ ११० ॥ हेयं हर्म्यमिदं निकुञ्जभवनं श्रेयं प्रदेयं धनं पेयं तीर्थपयो हरेर्भगवतो गेयं पदाम्भोरुहम्। नेयं जन्म चिराय दर्भशयने धर्मे निधेयं मनः स्थेयं तत्र सितासि-

---

१ रोगे। २ तस्य पुत्रस्याशिक्षितत्वे। ३ वृक्षत्वक्।

तस्य सविधे ध्येयं पुराणं महः ॥ १११ ॥ गङ्गोत्तुङ्गतरङ्गरिङ्गणलघूत्सर्पन्मरुच्छीतलान्गुञ्जत्षट्पदमञ्जुवञ्जुललसत्कुञ्जोपकण्ठान्मुदा । अध्यास्य प्रणिधाय मानसमहो शंभोः पदाम्भोरुहे धन्याः प्राप्य परं पदं प्रतिदिनं नन्दन्ति योगं विना ॥ ११२ ॥ कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी निश्चिन्तं सुखसाध्यभैक्षमशनं शय्या श्मशाने वने । मित्रामित्रसमानता पशुपतेश्चिन्ताऽथ शून्यालये स्वात्मानन्दमदप्रमोदमुदितो योगी सुखं तिष्ठति ॥ ११३ ॥ धिग्धिक्तान्कृमिनिर्विशेषवपुषः स्फूर्जन्महासिद्धयो निष्पन्दीकृतशान्तयोऽपि च तमःकारागृहेष्वासते । तं विद्वांसमिह स्तुमः करपुटीभिक्षान्नशाकोऽपि वा बालावक्त्रसरोजिनीमधुनि वा यस्याविशेषो रसः ॥ ११४ ॥ पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्ष्यमक्षय्यमन्नं वस्त्रं विस्तीर्णमाशादशकममलिनं तल्पमस्वल्पमुर्वी । येषां निःसङ्गताङ्गीकरणपरिचितिः स्वान्तसन्तोषिणस्ते धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ११५ ॥ आशा निष्ठा प्रतिष्ठा मम किल महिलास्तासु सौख्यं कदा स्यादाद्या भ्रान्त्या सा विदध्यादिह किमपि तथा मध्यमा सा परत्र । आद्या सा नोभयत्राप्यहह तदपि किं सक्ततां यामि तस्यां या प्रौढयादप्रगल्भे प्रतिदिवसमुभे ते कदर्थीकरोति ॥ ११६ ॥

## विषयोपहासः ।

नित्यमाचरतः शौचं कुर्वतः पितृतर्पणम् । यस्य नोद्विजते चेतः शास्त्रं तस्य करोति किम् ॥ १ ॥ कृमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी । स कायः परतापाय युज्यतामिति को नयः ॥ २ ॥ रक्तमांसमयः कायः स्त्रीणां स्पर्शसुखाय नः । तमेवाश्नन्ति सिंहाद्या रम्यं नास्तीह वस्तुतः ॥ ३ ॥ अङ्गमङ्गेन संपीड्य मांसं मांसेन तु स्त्रियः । पुराहमभवं प्रीतो यत्तन्मोहविजृम्भितम् ॥ ४ ॥ उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे । क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ ५ ॥ दृष्ट्वैव विकृतं कायं वायुस्पर्शविवर्जितम् । ये तु निर्व्याजमासक्तास्तेभ्योऽपि बिभिमो वयम् ॥ ६ ॥ अन्यत्र भीष्माद्गाङ्गेयादन्यत्र च हनूमतः । हरिणीखुरमात्रेण चर्मणा मोहितं जगत् ॥ ७ ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ । विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ ८ ॥ चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् । ये रमन्ते नरास्तत्र कृमितुल्याः कथं न ते ॥ ९ ॥ सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ १० ॥ लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ । मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥ ११ ॥ दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥ १२ ॥ केशः काशस्तबकविलासः कायः प्रकटितकरभविलासः । चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥ १३ ॥ आलोचनं च वचनं च निगूहनं च यासां स्मरन्नमृतवत्सरसं कृशास्त्वम् । तासां किमङ्ग पिशितास्रपुरीषपात्रं गात्रं स्मरन्मृगदृशां न निराकुलोऽसि ॥ १४ ॥ प्रादुर्भवन्ति वपुषः कति नाम कीटा यान्यत्नतः खलु तनोरपसारयन्ति । मोहः स्तुक एष जगतो यदपत्यसंज्ञां तेषां विधाय परिशोषयति स्वदेहम् ॥ १५ ॥ स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् । स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनं परं निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ १६ ॥ तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि क्षुधार्तः सञ्शालीन्कवलयति मांसाज्यकलितान् । प्रदीप्ते कामाग्नौ सुदृढतरमाश्लिष्यति वधूं प्रतीकारं व्याधेः सुखमिति विपर्यस्यति जनः ॥ १७ ॥ कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो व्रणी पूयक्लिन्नः कृमिकुलशतैराचिततनुः । क्षुधाक्षामो जीर्णः पिठरककपाला-

वृतगलः शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ १८ ॥ श्रियो दोलालोला विषयजरसाः प्रान्तविरसा विपद्गेहं देहं महदपि धनं भूरि निधनम्। बृहच्छोको लोकः सततमबला दुःखबहुलास्तथाप्यस्मिन्घोरे पथि बत रता हन्त कुधियः ॥ १९ ॥ समाश्लिष्यत्युच्चैर्घनपिशितपिण्डं स्तनधिया मुखं लालाक्लिन्नं पिबति चषकं सासवमिव। अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिको महामोहान्धानां किमिव रमणीयं न भवति॥ २०॥ बाला मामियमिच्छतीन्दुवदना सानन्दमुद्वीक्षते नीलेन्दीवरलोचना पृथुकुचोत्पीडं परीरप्सते। का त्वामिच्छति का च पश्यति पशो मांसास्थिभिर्निर्मिता नारी वेद न किंचिदत्र स पुनः पश्यत्यमूर्तः पुमान्॥ २१ ॥ आस्यं यस्याः सुधांशुं कलयति नयनाभ्यां जितः पुंसमूहः कान्त्या विद्युत्कुचाभ्यां जलकनकधरे निर्जिते हन्त मोहः। दुष्टं दुर्गन्धियुक्तं लघुकृमिविकृतं पूयमज्जास्रवाहिन्यात्तं तन्मक्षिकाभिर्गतिरिति वपुषः कुत्सिता नास्ति लोके ॥ २२ ॥ केतद्वक्त्रारविन्दं क तदधरमधु कायताास्ते कटाक्षाः कालापाः कोमलास्ते क च मदनधनुर्भङ्गुरो भ्रूविलासः। इत्थं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरं रागान्धानामिवोच्चैरुपहसति महामोहजालं कपालम् ॥ २३ ॥ कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम् । मूर्च्छामाप्नोत्युरुक्लेशो गर्भस्थैः क्षुधितैर्भृशम् ॥ २४ ॥ कटुतीक्ष्णोष्णलवणक्षाराम्लादिभिरुल्बणैः। मातृभुक्तैरुपस्पृष्टसर्वाङ्गोत्थितवेदनः ॥ २५ ॥ उल्बेन संवृतस्तस्मिन्नान्त्रैश्च बहिरावृतः। आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ २६ ॥ अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे। अनुच्छ्वसन्स्मरन्पूर्वं गर्भे किं नाम विन्दते ॥ २७ ॥ निःसृतोऽहं करिष्यामि सुकृतानीति चिन्तयन्। मेदोऽसृग्दिग्धसर्वाङ्गो जरायुपुटसंवृतः ॥ २८ ॥ निष्क्रामन्भृशदुःखार्तो रुदन्नुच्चैरधोमुखः। यन्त्रादिव विनिर्मुक्तः पतत्युत्तानशाय्यथ ॥ २९ ॥ एता याः प्रेक्षसे लक्ष्मीश्छत्रचामरचञ्चलाः। स्वप्न एष महाबुद्धे दिनानि त्रीणि पञ्च वा ॥ ३० ॥ एकेऽद्य प्रातरपरे पश्चादन्ये पुनः परे। सर्वे निःसीम्नि संसारे यान्ति कः केन शोच्यते ॥ ३१ ॥ येषां निमेषोन्मेषाभ्यां जगतां प्रलयोदयौ। तादृशाः पुरुषा याता मादृशां गणनैव का ॥ ३२ ॥ गलितानीन्द्रलक्षाणि बुद्बुदानीव वारिणि। मां जीवितनिबद्धाशं विहसिष्यन्ति साधवः ॥ ३३ ॥ संसाररात्रिदुःस्वप्ने शून्ये देहमये भ्रमे। आस्थां चेदनुबध्नामि तन्मूर्खो नास्ति मत्परः ॥ ३४ ॥ येषु येषु दृढं बद्धा भावना दृष्टवस्तुषु। तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥ ३५ ॥ यन्मध्ये यच्च पर्यन्ते यदापाते मनोरमम्। सर्वमेवापवित्रं तद्विनाशामेध्यदूषितम् ॥ ३६ ॥ नीलोत्पलाभनयनाः परमप्रेमभूषणम्। हासायैव विलासिन्यः क्षणभङ्गितया स्थिताः ॥ ३७ ॥ गन्धर्वनगराकारः संसारः क्षणभङ्गुरः। मनसो वासनैवेयमुभयोर्भेदसाधनम् ॥ ३८ ॥ गतेनापि न संबन्धो न सुखेन भविष्यता। वर्तमानं क्षणातीतं संगतिः कस्य केन वा ॥ ३९ ॥ पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते। सुशोषं सागरजलं शरीरे तत्र का कथा ॥ ४० ॥ इदं युगसहस्रस्य भविष्यदभवदिनम्। तदप्यद्यत्वमापन्नं का कथा मरणावधेः ॥ ४१ ॥ लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया। न सन्ति खलु तावन्त्यो गङ्गायामपि बालुकाः ॥ ४२ ॥ आसन्नतामेति मृत्युरायुर्याति दिने दिने। आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ ४३ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ४४ ॥ एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम्। यद्येकस्त्वरितं यातस्तत्र का परिदेवना ॥ ४५ ॥ सत्यं मनोरमा

---

१ प्राक्तनं कर्म। २ लिप्त-। ३ गर्भस्थानतो बहिरागच्छन्। ४ प्रत्यन्तम्। ५ जले। ६ वध्यस्थानम्। ७ शोकः।

रामाः सत्यं रम्या विभूतयः । किंतु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ ४६ ॥ मातापितृसहस्राणि पुत्रदारशतानि च । तवानन्तानि यातानि कस्य ते कस्य वा भवान् ॥ ४७ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ४८ ॥ बिडालभक्षिते दुःखं यादृशं गृहकुक्कुटे । न तादृङ् ममताशून्ये कलविङ्केऽथ मूषके ॥ ४९ ॥ शरदम्बुधरच्छायागत्वर्यो यौवनश्रियः । आपातरम्या विषयाः पर्यन्तपरितापिनः ॥ ५० ॥ अन्तकः पर्यवस्थाता जन्मिनः संततापदः । इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥ ५१ ॥ न्यस्तं यथा मूर्ध्नि मुदाऽत्ति मेषो यवाक्षतादं बलिकल्पितः सन् । मृत्युं समीपस्थितमप्यजानन्भुनक्ति मर्त्यो विषयांस्तथैव ॥ ५२ ॥ नन्दन्ति मन्दाः श्रियमाप्य नित्यं परं विषीदन्ति विपद्गृहीताः । विवेकदृष्ट्या चरतां नराणां श्रियो न किंचिद्विपदो न किंचित् ॥ ५३ ॥ हरिष्यमाणो बहुधा परस्वं करिष्यमाणः सुतसंपदादि । धरिष्यमाणोऽरिशिरःसु पादं न स्वं मरिष्यन्तमवैति कोऽपि ॥ ५४ ॥ उत्तुङ्गवातायनगोपुराणि गृहाणि वित्तानि दुरर्जितानि । क्षणादधःपातकराणि हन्त चितातिथेरस्य निरर्थकानि ॥ ५५ ॥ मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः । क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ५६ ॥ क्षिपसि शुकं वृषदंशकरदने मृगमर्पयसि मृगादनवदने । वितरसि तुरगं महिषविषाणे विदधच्चेतो भोगवितानं ॥ ५७ ॥ नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याधिव्यालग्रस्तं लोकं शोकहतं च समस्तम् ॥ ५८ ॥ अष्टकुलाचलसप्तसमुद्रा ब्रह्मपुरंदरदिनकररुद्राः । न त्वं नाहं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥ ५९ ॥ चेतोहरा युवतयः स्वजनोऽनुकूलः सद्बान्धवाः प्रणतिगर्भगिरश्च भृत्याः । गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः संमीलने नयनयोर्न हि किंचिदस्ति ॥ ६० ॥ मित्रं कलत्रमितरः परिवारलोको भोगैकसाधनमिमाः किल संपदो नः । एकः क्षणः स तु भविष्यति यत्र भूयो नायं न यूयमितरे न वयं न चैते ॥ ६१ ॥ अहमिह कृतविद्यो वेदिता सत्कलानां धनपतिरहमेको रूपलावण्ययुक्तः । इति कृतगुणगर्वः खिद्यते किं जनोऽयं कतिपयदिनमध्ये सर्वमेतन्न किंचित् ॥ ६२ ॥ वयं येभ्यो जाताश्चिरतरगता एव खलु ते समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः । इदानीमेते स्मः प्रतिदिवसमासन्नपतना गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ६३ ॥ यदस्माभिर्दृष्टं क्षणिकमभवत्स्वप्नमिव तत्कियन्तो भावाः स्युः स्मरणविषयादप्यवगताः । अहो पश्यन्पश्यन्स्वजनमखिलं यान्तमनिशं हतव्रीडं चेतस्तदपि न भवेत्सङ्गरहितम् ॥ ६४ ॥ अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां वियोगे धीराणां क इह परितापस्य विषयः । क्षणादुत्पद्यन्ते विलयमपि यान्ति क्षणममी न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥ ६५ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुखसहितं सेवादिभिर्नीयते जीवे वारितरङ्गबुद्बुदसमे सौख्यं कुतः प्राणिनाम् ॥ ६६ ॥ रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं किंवा प्राणसमासमागमसुखं नैवाधिकं प्रीतये । किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ ६७ ॥ भूत्वा कल्पशतायुषोऽण्डजभुवः सेन्द्राश्च देवासुरा मन्वाद्या मुनयो महीजलधयो नष्टाः पराः कोटयः । मोहः कोऽयमहो महानुदयते लोकस्य शोकावहो बन्धोः

१ रे जीवितेति शेषः । २ गतानि । ३ चटकाख्ये पक्षिणि । ४ अथवेत्यर्थः । ५ चपलाः । ६ पुण्यात्मा । ७ भक्षयति । ८ प्राप्य । आङ्-आप्- ल्यप् । ९ बिडाल- । १० व्याघ्र- । ११ सर्प- । १२ रमणीयाः । १३ विचार्य ।

फेनसमे गते वपुषि यत्पञ्चात्मके पञ्चताम् ॥ ६८ ॥ आक्रान्तं मरणेन जन्म जरया यात्युत्[1]वर्णं यौवनं संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः । लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनैरस्थैर्येण विपत्तयोऽप्यपहता ग्रस्तं न किं केन वा ॥ ६९ ॥ आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः । जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्तत्किं तेन निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम् ॥ ७० ॥ भोगास्तुङ्गतरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः स्तोकान्येव दिनानि यौवनसुखं स्फूर्तिः क्रियास्वस्थिरा । तत्संसारमसारमेव निखिलं बुद्ध्वा बुद्धा बोधका लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ७१ ॥ भोगा मेघवितानमध्यविलसत्सौदामनीचञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् । लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ ७२ ॥ साक्षात्प्रेमावतारः कमलदलदृशो दिक्षु लक्ष्मीरनन्ताः सत्पुत्राः सन्ति मित्राण्यपि विषमविपत्संविभागी कुटुम्बः । एतत्सर्वं हि तावत्सुकृतविलसितं दृश्यमानं मनोज्ञं यच्चैतत्क्षिप्रनाशप्रणयि बत मनाङ् म्लायते तेन चेतः ॥ ७३ ॥ आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीरर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः । कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥ ७४ ॥ मातुलो यस्य गोविन्दः पिता यस्य धनञ्जयः । सोऽपि कालवशं प्राप्तः कालो हि दुरतिक्रमः ॥ ७५ ॥ पुरंदरसहस्राणि चक्रवर्तिशतानि च । निर्वापितानि कालेन प्रदीपा इव वायुना ॥ ७६ ॥ अद्यैव हसितं गीतं पठितं यैः शरीरिभिः । अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥ ७७ ॥ म्रियमाणं मृतं बन्धुं शोचन्ते परिदेविनः । आत्मानं नानुशोचन्ति कालेन कवलीकृतम् ॥ ७८ ॥ ब्रह्मा विष्णुदिने याति विष्णू रुद्रस्य वासरे । ईश्वरस्य तथा सोऽपि कः कालं लङ्घितुं क्षमः ॥ ७९ ॥ अप्सु प्लवन्ते पाषाणा मानुषा घ्नन्ति राक्षसान् । कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ॥ ८० ॥ अशनं मे वसनं मे जाया मे बन्धुवर्गो मे । इति मेमेकुर्वाणं कालवृको हन्ति पुरुषाजम् ॥ ८१ ॥ प्राप्ता जरा यौवनमप्यतीतं बुधा यतध्वं परमार्थसिद्ध्यै । आयुर्गतप्रायमिदं यतोऽसौ विश्राम्य विश्राम्य न याति कालः ॥ ८२ ॥ भगीरथाद्याः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च । युधिष्ठिराद्याश्च बभूवुरेते सत्यं क्व याता बत ते नरेन्द्राः ॥ ८३ ॥ आराध्य भूपतिमवाप्य ततो धनानि भुञ्जामहे वयमिह प्रसभं सुखानि । इत्याशया बत विमोहितमानसानां कालो जगाम मरणावधिरेव पुंसाम् ॥ ८४ ॥ यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते । इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ कालः काल्या भुवनफलके क्रीडति प्राणिसारैः ॥ ८५ ॥ भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रं च तत्पार्श्वे सा च विदग्धराजपरिषत्ताश्चन्द्रबिम्बाननाः । उद्वृत्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ ८६ ॥ कांश्चित्कल्पशतं कृतस्थितिचयान्कांश्चिद्युगानां शतं कांश्चिद्वर्षशतं तथा कतिपयाञ्जन्तून्दिनानां शतम् । तांस्तान्कर्मभिरात्मनः प्रतिदिनं संक्षीयमाणायुषः कालोऽयं कवलीकरोति सकलान्भ्रातः कुतः कौशलम् ॥ ८७ ॥ कालेन क्षितिवारिवह्निपवनव्योमादिर्युक्तं

---

१ ग्रस्तम् । २ चिन्ता- । ३ विशिष्टा विपत्तयः । ४ आत्माधीनम् । ५ अल्पानि । ६ लोकोपकारपरेणेति भावः । ७ महातरङ्ग- । ८ वर्षाकालिक- । ९ मोक्षलब्ध्यै । १० सभा । ११ ग्रसति । १२ सकलाश्च सकलाश्चेति तान् सकलान्, तत्तत्पदहेतुभूतप्रभावसमेतान् सर्वानित्यर्थः । १३ आदिपदं महत्तत्त्वादिग्राहकम्।

जगद्ब्रह्माद्याश्च सुराः प्रयान्ति विलयं विद्मो विचारादिति । पश्यामोऽपि विनश्यतोऽनवरतं लोकाननेकान्मुधा माया मोहमयीं[1] भवप्रणयिनीं[2] नास्थां जहीमो[3] वयम् ॥ ८८ ॥ व्योमैकान्तविहारिणो[4]ऽपि विहगाः संप्राप्नुवन्त्यापदं बध्यन्ते निपुणैरगाधसलिलान्[5]मत्स्याः समुद्रादपि । दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ८९ ॥ मान्धाता स महीपतिः क्षितितलेऽलंकारभूतो गतः सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः[6] । अन्ये चापि युधिष्ठिरप्रभृतयो लीना धरायां क्वचित् तत् किं जीवित हा त्वमेव सुचिरं भावीह[7] यत्ते ग्रहः[8] ॥ ९० ॥ मृत्कुम्भ[9]वालुकारन्ध्रपिधानरचनाऽर्थिना । दक्षिणाऽऽवर्त्तशङ्खो[10]ऽयं हन्त चूर्णीकृतो मया ॥ ९१ ॥ जन्मैव व्यर्थतां नीतं भव[11]भोगप्रलोभिना । काचमूल्येन विक्रीतो हन्त चिन्तामणि[12]र्मया ॥ ९२ ॥ तरत्तरलतृष्णेन किमिवास्मिन्धरातले । मया न कृतमज्ञेन पश्चात्तापाभिवृद्धये ॥ ९३ ॥ यातं[13] यौवनमधुना वनमधुना शरण[14]मेकमस्माकम् । स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥ ९४ ॥ धनवानिति हि मदो मे किं गतविभवो विषादमुपयामि ॥ करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ ९५ ॥ भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः । कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ ९६ ॥ पुनः प्रभातं पुनरेव शर्वरी पुनः शशाङ्कः पुनरुद्यतो रविः । कालस्य किं गच्छति याति यौवनं तथापि लोकः कथितं न बुध्यते ॥ ९७ ॥ न चाराधि राधाधवो[15] माधवो वा न वाऽपूजि पुष्पादिभिश्चन्द्रचूडः[16] । परेषां धने धन्धने नीतकालो दयालो यमालोकने कः प्रकारः ॥ ९८ ॥ न काकारि[17]कामारि[18]कंसारि[19]सेवा न वा स्वेष्टमाचेष्टितं हन्त किंचित् । मनः प्रेयसीरूपपङ्के[20] निमग्नं किमन्ते कृतान्ते[21] मयाऽऽवेदनीयम् ॥ ९९ ॥ चित्तभू[22]वित्तभूमत्तभूपालकोपासनावासनायासनानाश्रमैः । साधुता सा धुता साधिता साधिता किं तया चिन्तया चिन्तयामः शिवम् ॥ १०० ॥ अजानन्दाहार्तिं पतति शलभ[23]स्तीव्रदहने न मीनोऽपि ज्ञात्वा बडिश[24]युतमश्नाति पिशितम्[25] । विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ १०१ ॥ चिरं ध्याता रामा[26] क्षणमपि न रामप्रतिकृतिः[27] परं पीतं रामाधरमधु न रामाङ्घ्रिसलिलम् । नता[28] रुष्टा[29] रामा यदरचि न रामाय विनतिर्गतं मे जन्माग्र्यं[30] न दशरथजन्मा परिगतः[31] ॥१०२॥ कुचौ तु परिचर्चितौ परिचितं चिरं चन्दनं कृताः परमुरोजयोः परिसरे[32]ऽरविन्दश्रियः[33]। स्तुति-

---

१ अज्ञानरूपाम् अज्ञानप्रधानां वा । २ संसारप्रापिकाम् । ३ त्यजामः । ४ गगनमात्रभ्रमणकारिणः । ५ अतलस्पर्शजलात् । ६ दशाननान्तकारी रामः । ७ एषु सांसारिकेषु पदार्थेषु । ८ आग्रहः । ९ मृन्मयस्य कलशस्यैकदेशतो मृत्कणे निःसृते तदवरोधं चिकीर्षुणा । प्रकृते च तादृशत्वं तत्तद्विनश्वरभोगस्थायित्वसिद्ध्ये साभिनिवेशत्वम् । १० एतद्रूप एतादृशो वा स्वात्मा । ११ संसार- । १२ काचोपमो भवभोगः तुच्छत्वात्, चिन्तामणिसमं ( द्विजादौ ) जन्म आत्मज्ञानसाधनरूपत्वेनात्यादरणीयत्वात् । यद्वा-यथा चिन्तामणिः सर्वं चिन्तितं पूरयति तथोत्तमकुलादौ जन्म सर्वमपि वाञ्छितमर्थं दातुं प्रभवति, भगवदाराधनादिद्वारेति । १३ नष्टम् । १४ आश्रयः । १५ राधापतिः । १६ महेश्वरः । १७ रामचन्द्र- । १८ शङ्कर- । १९ श्रीकृष्ण- । २० स्त्रीरूपरूपे कर्दमे । २१ यमराजाऽभिमुखमिति भावः । २२ चित्तभूः-कामः वित्तभूः-गर्वः । आयासः क्लेशः । धुता-अवज्ञाता । आधिना चिन्तया सहितस्तस्य भावस्तत्ता चिन्ताव्याकुलत्वमिति भावः । साधिता सम्पादिता । शिवं कल्याणम् अन्यत्स्पष्टम् । २३ क्षुद्रपक्षिविशेषः । २४ बडिशलग्नम् 'बडिशं मत्स्यवेधनम् ।' इत्यमरः । २५ मांसम् । २६ नारी । २७ रामचन्द्रमूर्त्तिः । २८ प्रणता, प्रणम्य प्रसादितेति भावः । २९ कुपिता । ३० मुख्यम् । ३१ प्राप्तः । ३२ समीपे । ३३ कमलशोभाः ।

नैतिरपि स्मृतिर्वरतनोः कृतैवादरादिदं तु निखिलं मया विरचितं पुनर्नेश्वरे ॥१०३॥ अभ्यस्ता भुवि वादिवृन्ददमनी विद्या न मोहान्तका विध्वस्ताश्च बहिश्चरा रिपुजना न त्वन्तरास्थायिनः। तारुण्यं गमितं क्षयं न तु बत श्रान्त्यादि संसेविताः पुत्राद्या न तु वत्सलः स भगवान् विश्वेश्वरः शङ्करः॥ १०४ ॥ न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः। मोहोच्छेदकृते च नोपनिषदो विद्या समाराधिता न त्यक्ता विषया न हन्त गमिता दुर्वासना वा क्षयम् ॥१०५॥ क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः सोढा दुःसहशीतवाततपैनक्लेशा न तप्तं तपः। ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥१०६॥ धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायतामानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः। अस्माकं तु मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ १०७ ॥ मन्त्रोद्भावितदैवतैर्न विधिवद्दासीकृताः सिद्धयो योगाभ्याससमाहितैरनुदिनं तीर्णो न मोहार्णवः। क्षुभ्यत्क्षुद्रनरेन्द्रदत्तविगलत्संपल्लवोल्लासितैर्धिङ् मूढैरिव पण्डितैरपि बलात्कालः कथं नीयते॥१०८॥ धावित्वा सुसमाहितेन मनसा दूराच्छिरो नामितं भूपानां प्रतिशब्दकैरिव चिरं प्रोद्धुष्टमिष्टं वचः। द्वाराध्यक्षनियन्त्रणापरिभवप्रम्लानवक्त्रैः स्थितं भ्रातः किं करवाम मुञ्चति मनो नाद्याप्यविद्याग्रहम् ॥ १०९ ॥ गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च सर्वे च्युता दृष्टिर्निष्प्रसरा बलं क्षयमितं म्लाना च वक्त्रप्रभा। कालः स्वावसरप्रतिक्षणमना व्यामोहमत्ती व हा नारायण साम्प्रतं न शरणं त्वत्तः परस्मान्मम ॥ ११० ॥ कामोऽसौ न हिताय योऽर्थविधुरः सोऽर्थोऽपि कः श्रेयसे यो धर्मेण बहिष्कृतः स बत को धर्मो न योऽयो भवेत्। सोऽयोऽपि प्रणतार्तिहारिभगवत्पादद्वयाराधनादन्यश्चेत् क इवेति गाढमनसा सेव्यः परात्मा मया ॥ १११ ॥ ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं यन्मुञ्चन्त्युपभोगवन्त्यपि धनान्येकान्ततो निःस्पृहाः। न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥११२॥ विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं शुश्रूषाऽपि समाहितेन मनसा पित्रोर्न संपादिता। आत्मानन्दसुधाप्रदाननिपुणा भक्तिर्विभोर्नार्जिता कायोऽयं बत केवलं करटवत् सम्पोषणार्थीकृतः ॥ ११३ ॥ दन्तैः प्रस्थितमग्रतस्तदनु भोः शौक्ल्यं धृतं मूर्धजैः कर्णाभ्यामपि वाग्विलासरचना कष्टात्समाकर्ण्यते। नेत्राभ्यामपि चापलं युवतिषु त्यक्तं गतं यौवनं सार्थेऽस्मिंश्चलिते कथं पुनरहं यातास्मि तच्चिन्तये ॥ ११४ ॥ रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः। व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ ११५ ॥ कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः प्रजा मथ्नन्तो विटजल्पितैरुपहताः क्षोणीभुजस्ते किल। विद्वांसोऽपि वयं किल त्रिभुवनोद्भूतिस्थितिव्यापदामीशस्तत्परिचर्यया न गणितो यैरेष नारायणः ॥ ११६ ॥ क्षोणीपर्यटनं श्रमाय विदुषां वादाय विद्याऽर्जिता मानध्वंसनहेतवे परिचितास्ते ते धराधीश्वराः। विश्लेषाय सरोजसुन्दरदृशामास्ये कृता दृष्टयः कुँशानेन मया प्रयागनगरे नाराधि नारायणः ॥ ११७ ॥ देशे देशे दुराशाकवलितहृदयो निष्कृपाणां नृपाणां धावं धावं पुरस्तादतिकुमतिरहं जन्म संपादयामि। आधायाधाय राधाधव तव चरणाम्भोजमन्तः-

---

१ दर्पादयः। २ आत्मानात्मविवेकप्रधाना वेदान्तविद्या इत्यर्थः। ३ सूर्य- । ४ पक्षिणः। ५ उत्सङ्गवर्तिनः। ६ अधीनतां नीताः। ७ प्रतिध्वनिभिः। ८ आत्मानात्मविवेकत इति पाठान्तरम्। ९ सर्वात्मना। १० शुद्धा। ११ एकाग्रेण। १२ केशैः। १३ धूर्तोक्तिभिः। १४ मुखे। १५ मूढेन भ्रान्तेन वा। १६ राधापते।

समाधावन्येऽरण्येऽतिपुण्ये पुलकितवपुषो वासरान्वाहयन्ति ॥ ११८ ॥ तृष्णा शान्तिं व्रजति न मनाग्वर्धते हन्त मोहो मानोद्रेकोऽभ्युदयमयते याति चास्तं विवेकः । लोभो वृद्धः कचिदपगता हन्त संतोषमात्रा तन्निस्तारो मम कथमितः स्याद्दते शम्भुभक्तेः ॥ ११९ ॥ बाल्यं कापि गतं गता च तरुणावस्था कचित्सोद्धता सौन्दर्यं च विनिर्गतं च धिषणा लीना कचित्साम्प्रतम् । एवं गच्छति सङ्गते परिजने रे जीवित त्वद्गमो भाव्येवाथ न किं निसर्गकरुणं तन्मित्रमालम्ब्यते ॥ १२० ॥ मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः । अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ १२१ ॥ अधीत्य चतुरो वेदान्व्याकृत्याष्टादश स्मृतीः । अहो श्रमस्य वैफल्यमात्माऽपि कलितो न चेत् ॥ १२२ ॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १२३ ॥ स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि । आहारोऽपि न रोचेत किमुतान्या विभूतयः ॥ १२४ ॥ विवेक एव व्यसनं पुंसां क्षपयितुं क्षमः । अपहर्तुं समर्थोऽसौ रविरेव निशातमः ॥ १२५ ॥ यस्मिन्वस्तुनि ममता मम तापस्तत्र तत्रैव । यत्रैवाहमुदासे तत्र मुदाऽऽसे स्वभावसंतुष्टः ॥ १२६ ॥ मुण्डी जटी वल्कलवांस्त्रिदण्डी कषायवासा व्रतकार्शिताङ्गः । त्यक्तैहिको वा यदि नाप्ततत्त्वस्तदा तु तस्योभयमेव नष्टम् ॥ १२७ ॥ जडास्तपोभिः शमयन्ति देहं बुधा मनश्चापि विकारहेतुम् । श्वा मुक्तमस्त्रं दशतीति कोपात्क्षेप्तारमुद्दिश्य हिनस्ति सिंहः ॥ १२८ ॥ किं ते धनैर्बन्धुभिरेव वा किं दारैश्च किं ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क गताः पिता च ॥ १२९ ॥ धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥ १३० ॥ बालिकारचितवस्त्रपुत्रिकाक्रीडनेन सदृशं सुरार्चनम् । यत्र शाम्यति मनो न निश्चलं स्फीतवज्जलधिमज्जनामलम् ॥ १३१ ॥ केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः । व्यासो वदत्यखिलवेदविशेषविज्ञो नारायणस्मरणहीनजनो जघन्यः ॥ १३२ ॥ भिक्षाऽशनं भवनमायतनैकदेशः शय्या भुवः परिजनो निजदेहभारः । वासश्च जीर्णपटखण्डनिबद्धकन्था हा हा तथाऽपि विषयान्न जहाति चेतः ॥ १३३ ॥ केनाप्यनर्थरुचिना कपटं प्रयुक्तमेतत्सुहृत्तनयबन्धुमयं विचित्रम् । कस्यात्र कः परिजनः स्वजनो जनो वा स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ १३४ ॥ अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् । यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ १३५ ॥ यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं तदा दृष्टं नारीमयमखिलमेतज्जगदिति । इदानीमस्माकं पटुतरविवेकाञ्जनजुषां समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ १३६ ॥ परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ १३७ ॥ विशीर्णः प्रारम्भो वपुरपि जराव्याधिविधुरं गतं दूरे विप्रस्वजनभरणं वाञ्छितमपि । इदानीं व्यामोहादहह विपरीते हतविधौ विधेयं यत्तत्त्वं स्फुरति मम नाद्यापि हृदये ॥ १३८ ॥ शुचां पात्रं धात्री परिणतिरमेध्यप्रचयभूरयं भूतावासो विमृश कियतीं याति न दशाम् । तदस्मिन्धीराणां क्षणमपि किमास्थातुमुचितं खलीकारः कोऽयं यदहमहमेवेति रभसः ॥ १३९ ॥ यदा पूर्वं नासीदुपरि च तथा नैव भविता तदा मान्याऽवस्था क्षणपरिचयो भूतनिचयैः । अतः संयोगेऽस्मिन्परिणतिवियोगे च सहजे

---

१ प्रसिद्धं परमात्मस्वरूपम् । २ मोक्षे । ३ गणितः अवगत इति यावत् । ४ संसरणात् । ५ दुःखं प्रमादं वा । ६ अन्तःकरणम् । ७ निकृष्टः । ८ शोकानाम् । ९ मलमूत्रादि- । १० अपकारः । ११ प्राणि- । यद्वा महाभूतात्मकशरीर- ।

किमाधारः प्रेमा किमधिकरणाः सन्तु च शुचः[१] ॥ १४० ॥ स्थिरापायः[२] कामः प्रणयिषु सुखं स्थैर्यविमुखं[३] महाभोगा[४] रोगाः कुवलयदृशः[५] सर्पसदृशः[६]। महावेशः[७] क्लेशः प्रकृतिचपला श्रीः सहभवो यमश्च प्रत्यर्थी[८] तदपि न हितं कर्म विहितम् ॥ १४१ ॥ विवेकः किं सोऽपि स्वरसजनिता यत्र न कृपा[९] स किं योगो यस्मिन्न भवति परानुग्रहरसः। स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः[१०] श्रुतं[११] किं तद्वा स्यादुपरशमफलं[१२] यन्न भवति ॥ १४२ ॥ शिलं किमनलं[१३] भवेदनलमौदरं[१४] बाधितुं पयः प्रसृतिपूरकं किमु न धारकं सारसम्[१५]। अयत्नमलमल्पकं पथि पटच्चरं[१६] कच्चरं[१७] भजन्ति विबुधा मुधा जगति कुक्षितः[१८] कुक्षितः ॥ १४३ ॥ क्षोणीकोणशतांशपालनखलद्दुर्वारगर्वानलक्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनां धन्यां न मन्यामहे। देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा धाना[१९]मुष्टिमुचे कुचेल[२०]मुनये धत्ते स्म वित्तेशताम्[२१] ॥ १४४ ॥ सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा गाङ्गं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः। वाचः प्राकृतसंस्कृताः श्रुतिशिरो[२२] वाराणसी[२३] मेदिनी सर्वावस्थितिरस्य वस्तुविषया दृष्टे परब्रह्मणि ॥ १४५ ॥ जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविद्[२४]उज्जृम्भते या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणि। सैवाहं[२५] न च दृश्यवस्त्विति दृढप्रज्ञाऽपि यस्यापि चेच्चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा[२६] मम ॥ १४६ ॥ दिवसरजनीकूलच्छेदैः पतद्भिरनारतं[२७] वहति निकटे कालस्रोतः समस्तभयावहम्। इह हि पततां नास्त्यालम्बो न चाऽपि निवर्तनं तदिह महतां कोऽयं मोहो यदेष मदाविलः[२८] ॥ १४७ ॥ माने म्लायिनि खण्डिते च वसुनि व्यर्थं प्रयातेऽर्थिनि क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने। युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्या[२९]पयःपूतग्रावगिरीन्द्रकन्दरदरीकुंजे निवासः क्वचित् ॥ १४८ ॥ अद्वैतोक्तिपटून्बटून्[३०]अपि वयं बालान्नमस्कुर्महे ये तु द्वन्द्ववदा[३१]स्तदीयशिरसि न्यस्याम वामं पदम्। सिंहः स्वीयशिशून्निवेश्य हृदये सान्द्रादरादाभृशत्यावेशेन भिनत्ति संभ्रमपदं मत्तेभकुम्भस्थलम् ॥ १४९ ॥ क्लेशत्यागकृतेऽर्पितेन करण[३२]व्यूहेन देहेन च स्वानर्थं बत जन्तुरर्जयति चेन्मन्तु[३३]र्नियन्तुः कुतः। शस्त्रे शत्रुजयाय नैजगुरुणा दत्तेऽथ तेनैव चेत्पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः ॥ १५० ॥ बीभत्साः प्रतिभान्ति किं न विषयाः किं तु स्पृहाऽऽयुष्मती देहस्यापचयो मृतौ निविशते गाढो गृहेषु ग्रहः[३४]। ब्रह्मोपास्यमिति स्फुरत्यपि हृदि व्यावर्तिका वासना का नामेयमतर्क्यहेतुगहना दैवी सतां यातना ॥ १५१ ॥ नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य[३५] पदस्य दातरि सुरे नारायणे तिष्ठति। यं कंचित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ १५२ ॥ रेतःशोणितयोरियं परिणति[३६]र्यद्वर्ष्म[३७] तत्राभवन्मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य विश्रामभूः। जानन्नप्यवशी विवेकविरहान्मज्जन्मविद्याम्बुधौ शृङ्गारीयति

---

१ शोकाः। २ नियतक्षयः। ३ अस्थिरम्। ४ चिरकालावधिस्थायिनः। ५ कुमुदसदृशनयनाः, सुन्दर्य इति यावत्। ६ विषधरसमानाः। क्विन्नन्तमिदम्। ७ अतितीव्रः। ८ शत्रुः। ९ दया-। १० निवृत्तिः। ११ शास्त्रम्। १२ शान्तिर्यतः स्यात्तादृशम्। १३ पर्याप्तं न। १४ उदरभवम्। १५ सरःसम्बन्धि। १६ जीर्णवस्त्रम्। १७ मलिनम्। १८ एकं कुक्षित इति पदं कुक्षये इत्यर्थकम्। द्वितीयं नृपतीनित्यर्थकम्। तथा च, कुक्षिपूर्त्तये नृपतीनिति भावः। यद्वा, कुक्षितः-एकस्मात् मातुरुदरैकदेशात्, कुक्षितः-कुक्षिम्, गर्भावासमिति यावत्। १९ धान्यैकमुष्टिदानिने। २० सुदाम-। २१ धनपतिसमवैभवसम्पन्नत्वम्। २२ उपनिषदः। २३ 'काश्यां मरणान्मुक्तिः' इत्युदितमाहात्म्या। २४ ज्ञानम्। २५ तादृशी संविदेव। २६ बुद्धिः। २७ निरन्तरम्। २८ मदपूर्णः। २९ गङ्गा-। ३० ब्रह्मचारिणः। ३१ द्वैतवादिनः। ३२ इन्द्रिय--। ३३ आगः। ३४ 'आग्रह' इति पाठान्तरेऽप्ययमेवार्थः। ३५ आत्मनः। ३६ परिणामः। ३७ शरीरम्।

पुत्रकाम्यति बत क्षेत्रीयति स्त्रीयति ॥ १९३ ॥ इन्द्रस्याशुचिशूकरस्य[१] च सुखे दुःखे च नास्त्यन्तरं स्वेच्छाकल्पनया तयोः खलु सुधा विष्ठा च काम्याशनम् । रम्भा चाशुचिशूकरी च परमप्रेमास्पदं मृत्युतः संत्रासोऽपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः ॥ १९४ ॥ अर्थप्राणविनाशसंशयकरी प्राप्यापदं दुस्तरां प्रत्यासन्नभयं न वेत्ति विभवं स्वं जीवितं काङ्क्षति । उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं प्राणानां च धनस्य चाधमधियामन्योन्यभावः पणः ॥ १९५ ॥ अग्रे कस्यचिदस्ति कश्चिदभितः केनापि पृष्ठे कृतः संसारः शिशुभावयौवनजराभाराबतारादयम् । बालस्तं बहु मन्यतामसुलभं प्राप्तं युवा सेवतां वृद्धस्त्वं विषयाद्बहिष्कृत इव व्यावृत्य किं पश्यसि ॥ १९६ ॥ येषां श्रीमद्यशोदासुतपदकमले नास्ति भक्तिर्नराणां येषामाभीरकन्याप्रियगुणकथने नानुरक्ता रसज्ञा[२] । येषां श्रीकृष्णलीलाललितगुणरसे सादरौ नैव कर्णौ धिक्तान्धिक्तान्धिगेतान्कथयति सततं कीर्तनस्थो मृदङ्गः ॥ १९७ ॥ तत् किं जन्म न यत्र शर्म्म[३] तदपि ज्ञानं विना किं भवेत् ज्ञानं किं न यदात्मतत्त्वविषयं किम्वात्मतत्त्वं च तत् । यन्नानात्मगवासनाविरहितं[५] यच्च स्फुरत् सर्वतस्तत्त्वं चापि मृषैव यत्र भगवत्पादानुरागो न चेत् ॥ १९८ ॥ यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो[६] निर्वृता यश्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः[७] । यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मविद्[८] यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ १९९ ॥

## शृङ्गारशान्तयोरेकत्र वर्णनम् ।

आकाशश्यामिमानं जलधरघटनां वा दधानं सुधांशु नूनं मन्ये प्रियाऽऽस्यं शिरसि शिरसिजैराहितापूर्वशोभम् । यद्दृष्ट्वा हन्त हर्षं मनसि कलयसे ज्ञानशान्त्यादिभव्यारामोर्वीजच्छिदायै निशिततरमसि तम्महान्तो ब्रुवन्ति ॥ १ ॥ कालिन्दीराशिरूर्ध्वं ननु मधुपकुलं मालतीपुञ्जगं वा सन्दोहं वेणीनामर्जयति शशिमुखी केशजालं मनोज्ञम् । भ्रान्तिं प्राप्नोषि किं त्वं बत गरलधराभोग[१२] एष प्रचण्डो लोकं प्रत्यक्षभूतं ग्रसति बत बलाद् यन्न भूयः सुखित्वम् ॥ २ ॥ वह्नेः सामीप्यदुःस्था त्रिपुररिपुशिरःस्थानमह्नाय[१३] हित्वा चन्द्रस्येयं कला स्यान्न तु हरिणदृशो भालदेशो विभाति । धम्मिल्लान्तः[१४] शितिं[१५] स्वं त्वदुपमतरुणामोदपीयूषतृष्णग्[१६] निह्नुत्योपेतमेतं धृतरुचिरतनुं विद्धि राहुं सुलग्नम् ॥ ३ ॥ पीयूषाब्धेर्ललितलहरीभङ्गुरो भ्रूविलासः पद्मान्तर्वा दलयुगतया सङ्गतो भृङ्गराशिः । बाणावेतौ गरलललितौ[१७] हन्त सव्यापसव्यभागेनास्यौ युवसु निशितौ कामदेवस्य विद्धि ॥ ४ ॥ सुभ्रूभ्रूयुगलं निरीक्ष्य सुमनाः को नाम नामोदते कोवाऽऽकाङ्क्षति नैव पातुममृतं तत्सन्निधाने धृतम् । जेयं[१८] नान्यदिति स्मरन् मनसिजश्चापं विधाय द्विधा न्यासैकत्र सुखं यदीच्छसि तदा दूरं प्रयाहि प्रिय ॥ ५ ॥ ते धन्या ननु भूतले यदुपरि स्फीताः कटाक्षच्छटा रामाणां निपतन्त्यहो स्वत इमे लावण्यसारश्रियाम् । ते मन्दा हतजीविताः सुदुरिता ये स्त्रीदृशोर्गोचरा यत्सम्पातलवोऽपि मोहगरलं यूनो हिनस्ति क्षणात् ॥ ६ ॥ कमलनयनाकर्णाभूषे स्फुरन्मणिमञ्जुले त्रिभुवनतले दृष्ट्वाऽऽमोदं प्रयाति न को युवा । शमभटशिरश्छेत्तुं सज्जीकृते बत वेधसा न किमु कुमते रज्जूक्षिप्ते विबोधसि चक्रके ॥ ७ ॥ इमं तिलसुमायितं युवतिनासिकासम्पुटं विभाव्य

---

१ ग्रामवराहस्य, विड्वराहस्येति भावः । २ गोप-- । ३ जिह्वा । ४ सुखम् । ५ देहादिनिष्ठात्मभावनाऽभिनिवेश— । ६ इन्द्रप्रभृतयः । ७ विरक्तिं प्राप्तः । ८ 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुतेः । ब्रह्मणः स्वात्मातिरिक्तत्वमज्ञानादिति तन्निवृत्तौ ब्रह्माभिन्नत्वं 'तत्त्वमसि' इत्यादि बोध्यम् । ९ केशैः । १० वृक्ष– । ११ कस्तूर्याः । १२ सर्प-- । १३ झटिति । १४ केशपाशमध्ये । १५ कृष्णवर्णम् । १६ पातेच्छुः । १७ विषदिग्धौ । १८ जेतुं योग्यम् ।

सुमनोजनो मनसि मोदमापद्यते। सखे भुजगमुत्फणं सविषफूत्कृताहंकृतं विभावय न तत्स्पृहां कुरु जहीहि तद्दृश्यताम्[1] ॥ ८ ॥ कृशोदर्याः स्मेराम्बुरुहसुषमा मानदलनक्रियादक्षे नेत्रे जयति जयतः साम्यविधुरे। स्मरेणेदं शान्तिच्छिदुरशरयुग्मं सुनिहितं न किं जानासि त्वं त्यज दयित तत्पातपदवीम् ॥ ९ ॥ विकचरजनीगन्धा पुष्पप्रभापरिभाविनी जयति सुभगानासा रम्या यथा स्मरदुन्दुभिः। उपरतिसुखं हन्तुं धात्रा न्यधायि सुनालिकायुधमिदमहो भाव्यं भव्यं यदीच्छसि भोः सखे ॥ १० ॥ अकृत विशद-धाम्नो विम्बसारं गृहीत्वा दयित युवतिवक्त्रं लोकधातेति विज्ञः। न हि न हि भवदीयो मोह एवैष मित्र सितगरलनिधानं तत्त्वतो निश्चिनु त्वम् ॥ ११ ॥ कनकमृदुलवल्ली काऽपि कान्ता विधात्रा व्यरचि मसृणहासो यत्प्रसूनं विभाति। शर्मशमनविधात्रीं शक्तिमेताममोघां स्मर मनसिभवेनोद्दङ्कितां तात चेतः ॥ १२ ॥ कान्ताधरासवनिपानमुपास्य धीमान् पीयूषपानकृतये न रुचिं प्रयाति। तत्रास्ति चे-न्मधुरिमा बत कोऽपि सत्यं किं नाम तात तृषिताः क्षुधिताः पुनः स्युः ॥ १३ ॥ पीयूषं चेत् पिपासु-स्त्वमपि भवसि तत् किं नु कान्ताऽऽननेन्दुं नोपास्से मित्र दिव्यं सुकृतिजनमुदे प्रेषितं लोककर्त्रा। श्लेष्मासृङ्मांसचर्म्मप्रभृतिमयमिदं कुत्र साऽशेषतापच्छेत्री चान्द्री कला वा क्व तदपि बत ते भ्रान्तिरेषा प्रवृद्धा ॥ १४ ॥ विकसितकमलाक्ष्या मित्र मन्ये कपोलौ सततविमलकान्तादर्शयुग्मं स्मरस्य। न हि दयित तथा किं त्वस्मयुग्मं निबद्धं निरयपतनदाढर्यादेशसिद्ध्यै स्मर त्वम् ॥ १५ ॥ लोकोत्तरामृत-मयाधरबिम्बपानात् को नाम तृप्यति वयस्य न चेत् परासुः। किं त्वं ब्रवीषि न हि वेत्सि सखे बुधत्वप्राणान्तकं शमहर विषसारभूतम् ॥ १६ ॥ दन्तच्छदद्वयमुदीक्ष्य नितम्बिनीनां पीयूषपात्रमिदमि-त्यवधारणा मे। दुष्कर्म्मजं द्विदलतां फलमेत्य नैजं संक्रान्तमत्र शमजीवितहारि विद्धि ॥ १७ ॥ दन्ता-वलिं स्मर सुधांशुनवप्ररोहपङ्क्तिं सखे ननु विभावयते मनो मे। आत्मामृतद्युतिनिपानविधातृराहोर्दंष्ट्राङ्कु-रोच्चयमवेहि सखे मनीषिन् ॥ १८ ॥

इति सुभाषितसुधारत्नभाण्डागारे द्वितीयं भाण्डम्।

---



---

१ तद्दृष्टिपथतो दूरं गच्छेति भावः। २ रमणीय-। ३ शान्ति-।

# तृतीयं भाण्डम् ।

## विशिष्टकविवर्णनम् ।

### तत्र नारायणकविप्रशंसा ।

सरस्वतीं यो हृदये दधाति सदा समाश्लिष्टतनुः श्रियाऽपि । दुर्गाप्रसादाय पुनः प्रयासी **नारायणः** कोऽपि विचित्र एलः[1] ॥ १ ॥ अभिनषति वैनतेयं[2] चामरसहितः[3] ससत्यभामो[4] यः । नारायणः स साक्षाद्विबुधसमर्च्यः सदा जयतु ॥ २ ॥ गङ्गां धारयते कदाऽपि न पदा नाधो विधत्ते द्विजं[6] नो वैकुण्ठ इति श्रुतो जलनिधेः[7] सङ्गे न यः स्निह्यति । सचक्रं[8] कचिदेव न क्षिपति नो शङ्खेन[9] शं[10] खेलति श्रीमन्तं वयमन्वहं कमपि तं नारायणं मन्महे ॥ ३ ॥ सन्त्येव प्रतिभाजुषोऽत्र शतशः प्रौढप्रभावा बुधा[11] येषां बुद्धिसमृद्धिरप्रतिहता जागर्ति वेदेष्वपि । किं त्वेषोऽहमचिन्त्यचित्रचरितं सच्चक्रचञ्चद्रुचिं श्रीनारायणमेकमेव विबुधं वन्देऽरविन्देक्षणम् ॥ ४ ॥ माराकृतेर्निजगभीरतयाऽस्तपारावाराशया स्फुटदशेषगुणौघकारा धारा गिरां वहति यस्य मुखादुदारा नारायणः स समुपैति मुदः सुसाराः ॥ ५ ॥

### अमरसिंहप्रशंसा ।

प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने प्रसत्तौ गाम्भीर्ये रसवति च काव्यार्थरचने । अगम्यायामन्यैर्दिशि परिणतावर्थवचसोर्मतं चेदस्माकं कवि**रमरसिंहो** विजयते ॥ १ ॥

### कालिदासप्रशंसा ।

कवयः **कालिदासाद्याः** कवयो वयमप्यमी । पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥१॥ वाल्मीकिमिव समासं यशःशरीरेण सर्वदा सन्तम् । रसवद्वचनविकासं नमत कविं कालिदासं तम्॥२॥ निर्गतामलवाक्यस्य कालिदासस्य सूक्तिषु । प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥ ३ ॥ कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च । अन्ये कवयः कपयश्चापलमात्रं परं दधति ॥ ४ ॥ वयमपि कवयः कवयः कवयोऽपि च कालिदासाद्याः । दृषदो[12] भवन्ति दृषदश्चिन्तामणयोऽपि हा दृषदः ॥ ५ ॥ साकूत[13]मधुरकोमलविलासिनीकण्ठकूजितप्राये । शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ ६ ॥ पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा । अद्यापि तत्तुल्यकवेरभावादनामिका सा[14]ऽर्थवती बभूव ॥ ६॥

---

१ एतन्नाम्ने मित्राय । देव्याः प्रसन्नतायै च । २ गरुडम् । वै नूनम्, नते प्रणतजने अयं शुभावहं विधिं च । ३ चामराभ्यां सेवितः । अमरैर्महितश्च । ४ सत्यकान्तिलक्ष्मीभिः पूर्णः । सत्यभामाऽऽख्यया देव्या युक्तश्च । ५ अत्र व्यतिरेकोऽलङ्कारः । ६ ब्राह्मणं गरुडं च । ७ डलयोरभेदः । ८ सतां समाजं, सुदर्शनचक्रं च । ९ मूढेन, पाञ्चजन्येन च । १० शं सुखं यथा तथा । ११ पण्डिताः, देवाश्च । १२ पाषाणाः । १३ साभिप्राय- । तथा सेङ्गित- । १४ अन्वर्थाभिधाना ।

## गणेश्वरप्रशंसा ।

**गणेश्वरकविः** साक्षादवतीर्णो गणेश्वरः । ऋद्धिसिद्धियुतो भव्यो विबुधैः[1] परिषेवितः ॥१॥ गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः । तथा जयति भारती भगवती यथा सा सुधा मुधीभवति[2] सुभ्रुवामधरमाधुरी म्लायति ॥ २ ॥

## गुणाढ्यप्रशंसा ।

**गुणाढ्यः** कस्य नाभ्यर्च्यो यो नामानुगुणो गुणैः । यस्य बन्धपटुत्वेन[3] सर्वत्र सरला स्थितिः ॥१॥ शश्वद्बाणद्वितीयेन नमदाकारधारिणा । धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ २ ॥ समुद्दीपितकन्दर्पा[5] कृतगौरीप्रसाधना[6] । हरलीलेव लोकस्य विस्मयाय बृहत्कथा[7] ॥ ३ ॥ अतिदीर्घजीविदोषाद्व्यासेन यशोऽपहारितं हन्त । कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥ ४ ॥

## गोविन्दराजप्रशंसा ।

इन्दुप्रभारसविदं विहगं विहाय कीराननने स्फुरसि भारति का रतिस्ते । आद्यं यदि श्रयसि जल्पतु कौमुदीनां **गोविन्दराज**वचसां च विशेषमेषः ॥१॥ नानाप्रबन्धरचनाविशदप्रभावः सर्वत्र गीतचरितः प्रतिभाविशालः । नित्यं प्रसादमधुरोज्ज्वलवाग्विलासी गोविन्दराजकविरस्तु मुदे चिराय ॥ २ ॥

## पण्डितराजजगन्नाथप्रशंसा ।

**जगन्नाथो** जगन्नाथो भारतीरतिदैवतम् । यत्पदोपासना सद्यो विधत्ते परमां मुदम् ॥ १ ॥ कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः । नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः ॥ २ ॥ माधुर्यैरपि धुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकादीनाम् । बन्ध्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥ ३ ॥ गिरां देवी वीणागुणरणनहीनादरकरा यदीयानां वाचाममृतमयमाचामति रसम् । वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपतेरधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः ॥ ४ ॥ मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा कदाचित्केषांचित्खलु हि विदधीरन्नपि मुदम् । ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो न येषामानन्दं जनयति जगन्नाथभणितिः ॥ ५ ॥

## जयदेवप्रशंसा ।

सरसा भूतसद्भावा रुचिरा सकलप्रिया यस्य । भाषा सशृङ्गारा **जयदेवः** स राजते ॥ १ ॥ साध्वी माध्वीक[9] चिन्ता न भवति भवतः शर्करे कर्कशाऽसि द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते । माकन्द क्रन्द कान्ताधर धरणितलं गच्छ यच्छन्ति[10] भावं यावच्छृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि ॥ २ ॥

---

१ देवैर्विशिष्टैः पण्डितैश्च । २ विफला भवति । ३ चक्रबन्धादिचित्रकाव्यरचना-- । तथा बन्धनकारित्व-- । ४ पटुत्वे इति न इति च च्छेदः । ५ शृङ्गाररसप्रधानतया कन्दर्पोद्दीपनकारिणी । परिदग्धकामा च । ६ देव्याः स्तवनपरा ( अर्धाङ्गे ) अलङ्कृता गौरी यया तादृशी च । ७ बृहती कथा यस्याः सा, एतदाख्यो ग्रन्थश्च । ८ चरण- । शब्दविशेष-- । ९ मद्यविशेष । १० वितरन्ति ।

## ज्योतिरीशप्रशंसा ।

वाग्ज्योतिर्यस्य सर्वेषां तमोध्वंसनतत्परम् । प्रभावमहितः सोऽयं **ज्योतिरीशो** विराजताम् ॥ १ ॥ यश्चत्वारि शतानि बन्धघटनालंकारभाञ्जि द्रुतं श्लोकानां विदधाति कौतुकवशादेकाहमात्रे कविः । ख्यातः क्ष्मातलमण्डलेष्वपि चतुःषष्टेः कलानां निधिः संगीतागमनागरो विजयते श्रीज्योतिरीशः कृती ॥ २ ॥

## दण्डिप्रशंसा ।

त्रयो वेदास्त्रयो लोका यथा वा पावकास्त्रयः । प्रबन्धा यस्य राजन्ते स **दण्डी** केन नेडयते ॥ १ ॥ त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः । त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥ २ ॥ जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ ३ ॥

## द्रोणप्रशंसा ।

यत्प्रभाववशाद्धीरा अधीरा एव भूतले । **द्रोणे** गर्जति तस्मिन् कः समितावतिष्ठताम् ॥ १ ॥ सरस्वतीपवित्राणां जातिस्तत्र न देहिनाम् । व्यासस्पर्धी कुलालोऽभूद्यद्द्रोणो भारते कविः ॥ २ ॥

## धनदप्रशंसा ।

ऐश्वर्यस्य परा काष्ठा यत्र नित्यं विभाव्यते । **धनदः** स न केषां स्यात् स्पृहणीयगुणोदयः ॥ १ ॥ यथेयं वाग्देवी सुकविमुखवासव्यसनिनी कुहूकण्ठीकण्ठे विलसति तथा चेदनवधिः । तदा भूमीभागे निरुपमतमः किंचिदिव वा समाधत्ते साम्यं धनदभणितीनां मधुरिमा ॥ २ ॥

## नरहरिप्रशंसा ।

यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते तदा गतमदा मदालसमरालबालारवाः । न विभ्रमचरी-करी भवति चाधरी माधुरी सुधाकरसुधाझरीमधुकथा वृथा जायते ॥ १ ॥

## प्रवरसेनप्रशंसा ।

कीर्तिः **प्रवरसेनस्य** प्रयाता कुमुदोज्ज्वला । सागरस्य परं पारं कपिसेनेव सेतुना ॥ १ ॥

## अकालजलदप्रशंसा ।

**अकालजलदेन्दोः** सा हृद्या वचनचन्द्रिका । नित्यं कविचकोरैर्या पीयते न च हीयते ॥ १ ॥ स मूर्तो यत्रासीद् गुणगण इवाकालजलदः सुरानन्दः सोऽपि श्रवणपुटपेयेन वचसा । न चान्ये गण्यन्ते तरलकविराजप्रभृतयो महाभागस्तस्मिन्नयमजनि यायावरकुले ॥ २ ॥

## बाणप्रशंसा ।

हृदि लग्नेन **बाणेन** यन्मन्दोऽपि पदक्रमः । भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥ १ ॥ सहर्षचरितारब्धाद्भुतकादम्बरीकथा । बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ ॥ २ ॥ शब्दार्थयोः

---

१ वानरविशेष- । कुवलय- । २ काव्यविशेषेण, बन्धविशेषेण च । ३ अस्मिन्नेव जरत्कारु प्रभृतयोऽपि महर्षयः समभवन् । एतद्वृत्तं च महाभारतादौ स्पष्टम् ।

समो गुम्फः पाञ्चाली रीतिरुच्यते । शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ ३ ॥ जाता शिखण्डिनी प्राग्यथा शिखण्डी तथाऽवगच्छामि । प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ ४ ॥ श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽलंकारे कतिचित्सदर्थविषये चान्ये कथावर्णने । आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरीसंचारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥ ५ ॥

## बिल्हणप्रशंसा ।

बिन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं कर्मेति प्रतिबोधितान्वयविदो ये येऽपि तेभ्यो नमः । ये तु ग्रन्थसहस्रशाणकषणत्रुटयत्कलङ्कैर्गिरामुल्लेखैः कवयन्ति **बिल्हणकवि**स्तेष्वेव संनह्यति ॥ १ ॥

## भट्टारकहरिचन्द्रप्रशंसा ।

पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः । **भट्टारहरिचन्द्रस्य** गद्यबन्धो नृपायते ॥ १ ॥

## विजयाङ्काप्रशंसा ।

सरस्वतीव **कर्णाटी विजयाङ्का** जयत्यसौ । या वैदर्भगिरां वासः कालिदासादनन्तरम् ॥ १ ॥ एकोऽभून्नलिनात्ततश्च पुलिनाद्वाल्मीकितश्चापरस्ते सर्वे कवयो भवन्ति गुरवस्तेभ्यो नमस्कुर्महे । अर्वाञ्चो यदि गद्यपद्यरचनैश्चेतश्चमत्कुर्वते तषां मूर्ध्नि ददामि वामचरणं कर्णाटराजप्रिया ॥ २ ॥

## भवभूतिप्रशंसा ।

भव्यां यदि विभूतिं त्वं तात कामयसे तदा । **भवभूति**पदे चित्तमविलम्बं निवेशय ॥ १ ॥ सुकविद्वितयं मन्ये निखिलेऽपि महीतले । भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः ॥ २ ॥ भवभूतेः संबन्धाद् भूधरभूरेव भारती भाति । एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥ ३ ॥ रत्नावलीपूर्वकमन्यदास्तामसीमभोगस्य वचोमयस्य । पयोधरस्येव हिमाद्रिजायाः परं विभूषा भवभूतिरेव ॥ ४ ॥

## भासप्रशंसा ।

नाटकाविष्क्रियाकारी नानाकौतुकदर्शकः । गद्यपद्यनिबन्धश्रीर्भासा **भासस्य** भासते ॥ १ ॥ भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम् । स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ २ ॥ सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः । सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ३ ॥

## मयूरप्रशंसा ।

तावत्कविविहङ्गानां ध्वनिर्लोकेषु शस्यते । यावन्नो विशति श्रोत्रे **मयूरमधुरध्वनिः** ॥ १ ॥ दर्पकविभुजङ्गानां गता श्रवणगोचरम् । विषविद्येव मायूरी मायूरी वाङ्निकृन्तति ॥ २ ॥

---

१ यथेयं पुंस्त्वं प्राप तत्सर्वं महाभारते स्पष्टम् । २ भेदनकारी । ३ सिंहः । ४ रामः पौलस्त्यं जघान इत्यत्र कर्तृपदं बिन्दुद्वयान्तं कर्मपदं शिरोबिन्द्वन्तमितीवान्यत्रापि कर्तृकर्मपदे इति प्रतीतिमन्तो लोकाः । ५ तुमर्थे चतुर्थी । ६ अहमिति शेषः । ७ महेश्वरैश्वर्यस्य, कवेश्च । ८ गौरी । गिरि-( गिरिस्नमजड-- ) समाजश्च । ९ एतत्प्रधाने उत्तररामचरिते नाटके । १० पाषाणः । 'अपि ग्रावा रोदित्यपि' इत्यादौ स्पष्टम् । ११ सूत्रधारो नाटकप्रवर्तकः । वास्तुविद्याशाली च । १२ आमुखादिविशेषोऽट्टालकादिविशेषो वा । १३ छिनत्ति ।

## मातङ्गदिवाकरप्रशंसा ।

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः[1] । श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥ १ ॥

## मुरारिप्रशंसा ।

भवभूतिमनादृत्य[2] निर्वाणमतिना[3] मया । मुरारिपदचिन्तायामिदमाधीयते मनः ॥ १ ॥ मुरारिपदमाधुर्यमास्वाद्य[4] सुमनोजनः । मुरारिपदमाप्नोति[5] नात्र कार्या विभावना ॥ २ ॥ मुरारिपदभक्तिश्चेत्तदा माघे[6] रतिं कुरु । मुरारिपदभक्तिश्चेत्तदा माऽघे[7] रतिं कुरु ॥ ३ ॥ देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः । अब्धिर्लङ्घित एव वानरभटैः किंत्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥ ४ ॥

## कुलशेखरप्रशंसा ।

दूरादपि सतां चित्ते लिखित्वाऽऽश्चर्यमञ्जरीम् । कुलशेखरधीरोऽसौ चकाराश्चर्यमञ्जरीम् ॥ १ ॥

## रत्नखेटदीक्षितप्रशंसा ।

विपश्चितामपश्चिमे[8] विवादकेलिनिश्चले सपत्नजित्ययत्नतस्तु रत्नखेटदीक्षिते । बृहस्पतिः क जल्पति प्रसर्पति क सम्पराडसंमुखस्तु[9] षण्मुखः सुदुर्मुखश्चतुर्मुखः ॥ १ ॥

## राजशेखरप्रशंसा ।

बालरामायणादीनि काव्यानि प्रणिनाय यः । स राजशेखरः कस्य न कवेः शेखरोऽभवत् ॥ १ ॥ बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम् । स्थितः पुनर्यो भवभूतिरेखया स वर्तते संप्रति राजशेखरः ॥ २ ॥ पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमतां व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः । भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ ३ ॥

## वाल्मीकिप्रशंसा ।

वाल्मीकिकविसिंहस्य कवितावनचारिणः । शृण्वन् रामकथानादं को न याति परं पदम् ॥ १ ॥ रामेति परिकूजन्तमारूढं कवितालताम् । शृण्वतो मोदयन्तं तं वाल्मीकिं को न वन्दते ॥ ॥ २ ॥ इदानीं सन्तु काव्यानि बहूनि जगतीतले । यदादर्शमयं काव्यमाद्यं तत्तु तदेव हा ॥ ३ ॥ कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् । चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥ ४ ॥ सदूषणाऽपि[11] निर्दोषा सखराऽपि[12] सुकोमला । नमस्तस्मै कृता येन रम्या रामायणी कथा ॥ ५ ॥ योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः । वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥ ६ ॥ लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति

---

१ चाण्डालदिवाकरः इत्यपि पाठः । एवं सत्यस्य सङ्केतग्रहे सन्देहः । यद्वा, चाण्डालो जात्या, दिवाकरो नाम्ना चेति स्यादिति चिन्त्यम् । २ संसारसम्पदं तदाख्यकविं च । ३ विरक्तिप्रणयिना । ४ भगवच्चरणभक्तिम् । मुरारिकविपदविन्यासरसं च । ५ विष्णु- । ६ माघकाव्ये । ७ अघे मति च्छेदः । ८ विदुषाम् । ९ अग्रणीः । १० आदिशेषः । ११ दुःश्रवत्वादिदोष- । राक्षसविशेष- । १२ परुषत्वयुता राक्षसविशेषचरितयुक्ता च ।

॥ ७ ॥ आदिकवी चतुरास्यौ[1] कमलजवल्मीकजौ वन्दे । लोकश्लोकविधात्रोर्ययोर्भिदा लेशे[2]-मात्रेण ॥ ८ ॥ तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् । सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ॥ ९ ॥ विहित[3]घनालंकारं विचित्र[4]वर्णावलीमयस्फुरणम् । शक्रायुधमिव वक्रं वल्मीकभुवं मुनिं नौमि ॥ १० ॥ सति काकुत्स्थकुलोन्नतिकारिणि रामायणेऽपि किं काव्यम् । रोहति कुल्या गङ्गापूरे किं बहुरसे वहति ॥ ११ ॥ भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः । पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किमप्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ १२ ॥

## सुरानन्दप्रशंसा ।

नदीनां मेकलसुता नृपाणां रणविग्रहः । कवीनां च सुरानन्दश्चेदिमण्डलमण्डनम् ॥ १ ॥

## सुभद्राप्रशंसा ।

पार्थस्य मनसि स्थानं लेभे खलु सुभद्रया । सुकवीनां वचोवृत्तिचातुर्ये च शुभद्रया ॥ १ ॥

## शीलाभट्टारिकाप्रशंसा ।

शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते । शीलाभट्टारिवाचि बाणोक्तिषु च सा यदि ॥ १ ॥

## विज्जिकाप्रशंसा ।

नीलोत्पलदलश्यामां विज्जकां मामजानता । वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥ १ ॥

## व्यासप्रशंसा ।

नमः सर्वविदे तस्मै व्यासाय कविवेधसे । चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ १ ॥ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शम्भुर्भगवान्बादरायणः ॥ २ ॥ श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः । तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे ॥ ३ ॥ व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे । भूषणतयैव संज्ञां यदङ्कितां भारती वहति ॥ ४ ॥

## शाकल्लमल्लप्रशंसा ।

एकोऽभूत्पुलिनात्ततस्तु नलिनाच्चान्योऽपि नाकोरभूत्प्राच्यास्ते त्रय एव दिव्यकवयो दीव्यन्तु देव्या गिरा । अर्वाञ्चो यदि गद्यपद्यरचनाचातुर्यवागुद्धतास्तान्सर्वानतिशय्य खेलतितरां शाकल्लमल्लः कविः ॥ १ ॥

## सातवाहनप्रशंसा ।

पृथिव्यां प्रथिता गाथा सातवाहनभूभुजा । व्यधुर्धृतेस्तु विस्तारमहो चित्रपरम्परा ॥ १ ॥ अविनाशिनमग्राम्यमकरोत्सातवाहनः । विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥ २ ॥

## कृष्णशङ्करप्रशंसा ।

स्थिता माध्वीकपाकत्वान्निसर्गमधुराऽपि हि । किमपि स्वदते वाणी केषांचित् कृष्णशाङ्करी ॥ १ ॥

---

१ चत्वारि आस्यानि मुखानि यस्येति, चतुरं वाग्विस्फोरणे पटु आस्यं यस्येति च चतुरास्यः । अनयोरेकशेषे रूपमिदम् । २ ले लकारे शमात्रेण-केवलेन शकारेण अंशमात्रेण च । ३ विहिताः रचिताः घनाः निबिडाः अलङ्काराः अनुप्रासादयः येनेति, विहितो घनानां मेघानाम् अलङ्कारः पर्याप्तता येनेति च तम् । ४ अक्षर-नीलादि-च ।

## कैकटनितम्बप्रशंसा ।

के कैकटनितम्बेन गिरां गुम्फेन रञ्जिताः । निन्दन्ति निजकान्तानां न मौग्ध्यमधुरं वचः ॥ १ ॥

## सुदर्शनप्रशंसा ।

न मुग्धदयिताधरे न विषभाजि रत्नाकरे न राहुमुखकोटरे न किल तार्क्ष्यपक्षान्तरे । **सुदर्शन**-कवीश्वरे रसिकचक्रचूडामणौ गुणौकसि मुधा बुधास्त्यजत सान्द्रचन्द्रभ्रमम् ॥ १ ॥

## सुबन्धुप्रशंसा ।

वाचां विन्यासमात्रेण परमां यान्ति निर्वृतिम् । सुमनस्त्वविधाता स **सुबन्धुः** कस्य नो मुदे ॥१॥
कवीनामगलद्दर्पो नूनं वासवदत्तया । शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥ २ ॥

## तरलप्रशंसा ।

यायावरकुलश्रेणेर्हारयष्टेश्च मण्डनम् । सुवर्णबन्धरुचिरस्**तरल**स्तरलो यथा ॥ १ ॥

## देवीसहायप्रशंसा ।

भजन्ते भारतीलक्ष्मीपार्वत्यो[1] यान्निरन्तरम् । तेषां **देवीसहायानां** पादौ कैर्नाभिवन्दितौ ॥ १ ॥
वाग्लक्ष्मीश्च शिवाऽमला च विभुता शान्तिः प्रसत्तिर्धृतिः कीर्तिः कान्तिरुदारता च करुणा गम्भीरता वा स्वयम् । जाता येन समं दिवं च सकला याता यथाऽर्थाभिधं तं विश्वविदितानवद्यचरितं देवी-सहायं नुत ॥ २ ॥

## शिवनाथप्रशंसा ।

कवीनां च बुधानां च वदान्यानां च यो गुरुः । नानाशास्त्रचणप्रज्ञः **शिवनाथः** स नम्यते ॥ १ ॥ सर्वेषु शास्त्रेषु धृतप्रबोधः कारुण्यमूर्तिः सुकृतप्रतिष्ठः । लब्धप्रसादश्च सतां सभासु स्वस्थः[2] स धन्यः शिवनाथसूरिः ॥ २ ॥

## मेण्ठराजप्रशंसा ।

वक्रोक्त्या **मेण्ठराजस्य** वहन्त्या सृणिरूपताम्[3] । आविद्धा इव धुन्वन्ति मूर्धानं कविकुञ्जराः ॥ १ ॥

## प्रभुदेवीप्रशंसा ।

सूक्तीनां स्मरकेलीनां कलानां च विदर्भभूः । **प्रभुदेवी** कविर्लाटी गताऽपि हृदि तिष्ठति ॥ १ ॥

## भीमटप्रशंसा ।

कालञ्जरपतिश्चक्रे **भीमटः** पञ्चनाटकीम् । प्रायः प्रबन्धराजत्वं तेषु स्वप्नदशाननम् ॥ १ ॥

## मायूराजप्रशंसा ।

मायूराजसमो जज्ञे नान्यो मतिमतां वरः । उदन्वतः समुत्तस्थुः कति वा तुहिनांशवः ॥ १ ॥

---

१ भारत्या सेवितो ब्रह्मा लक्ष्म्या सेवितो विष्णुः पार्वत्या सेवितो महेश्वरश्चेत्येवमेते देवीसहायाः । तथा-गीर्वाणरूपया भारत्या सम्पत्तिरूपया लक्ष्म्या पार्वतीनाम्न्या पत्न्या च सेविताः पण्डिताः । बहुवचनमत्र पक्षे गौरवातिशयद्योतनाय । २ स्वर्गस्थः सुखी च । ३ अङ्कुश- ।

## देवसूरिप्रशंसा ।

बार्हस्पत्याधिपत्यस्यै पातने प्रथितोद्यमः । अपूर्वः कोऽपि लोकेऽस्मिन् **देवसूरिः** कृतोदयः ॥ १ ॥ कृत्वा ग्रन्थांश्चारुतत्त्वार्थपूर्णान् विद्वन्मान्यान् दुर्धियां भीतिहेतून् । लब्ध्वा मानं सर्वविद्वत्सभासु ख्याताभिख्यो देवसूरिर्विभाति ॥ २ ॥

## उदयप्रभप्रशंसा ।

**उदयप्रभ**सूरीन्द्रे प्रकाशयति भूतलम् । अपरे विबुधाः सर्वे निष्प्रभा इव सर्वतः ॥ १ ॥ उदयप्रभसूरीन्द्रः प्रथितः प्रतिभोदयः । नानादिव्यप्रबन्धानां निर्म्माताऽयं विराजते ॥ २ ॥

## यशोविजयप्रशंसा ।

नानानिबन्धनिर्म्माता प्रस्फुरद्दिव्यदर्शनः । **यशोविजय** आचार्यो वादीन्द्रव्यूहकेसरी ॥ १ ॥

## हजारिलालप्रशंसा ।

**हजारिलालः** कविवृन्दमल्लः शल्यायमानः प्रतिवादिनां च । अध्यापितानेकनिबन्धराजोऽनवद्यविद्यः स्फुटहृद्यकीर्तिः ॥ १ ॥

## हरिवल्लभप्रशंसा ।

**हरिवल्लभ**कविमल्लो वल्लैभरमपि ब्रवीति नो वितथम् । अधुना बुधवैल्लभतां हरिवल्लभतां पटुमतल्ली ॥ १ ॥

## धर्म्मसूरीश्वरप्रशंसा ।

यस्य ज्ञानमनन्तदर्शिसमयाम्भोराशिमन्थाचलो यस्य क्षान्तिरनल्पकोपनजनक्रोधाग्निधाराधरः । यस्य ब्रह्मतपः सहस्रकिरणो भूमण्डलद्योतकः सोऽयं संयमिनां वरो विजयते श्री**धर्म्मसूरीश्वरः** ॥ १ ॥

## धनञ्जयप्रशंसा ।

द्विसंधाने निपुणतां स तां चक्रे **धनञ्जयः** । यया जातं फलं तस्य सतां चक्रे धनं जयः ॥ १ ॥

## पाणिनिप्रशंसा ।

स्वस्ति **पाणिनये** तस्मै यस्य रुद्रप्रसादतः । आदौ व्याकरणं काव्यमनु जाम्बवतीजयम् ॥ १ ॥

## प्रद्युम्नप्रशंसा ।

सहर्षचरितारब्धाऽद्भुतकादम्बरीकथा । **प्रद्युम्नान्ना**परस्येह पौष्पा अपि शराः खराः ॥ १ ॥

## गोनन्दनप्रशंसा ।

अनुप्रासिनि सन्दर्भे **गोनन्दन**समः कुतः । यथाऽर्थनामतैवास्य यद्वाग्वदति चारुताम् ॥ १ ॥

## गणपतिप्रशंसा ।

मुहु**र्गणपतिं** वन्दे महामोदविधायिनम् । विद्याधरमणेर्यस्य पूज्यते कण्ठगर्जितम् ॥ १ ॥

## कुमारदासप्रशंसा ।

जानकीहरणं कर्त्तुं रघुवंशे स्थिते सति । कविः **कुमारदास**श्च रावणश्च यदि क्षमः ॥ १ ॥

## आनन्दवर्धनप्रशंसा ।

ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना । **आनन्दवर्धनः** कस्य नासीदानन्दवर्धनः ॥ १ ॥

---

१ बृहस्पतिसमः इति भावः । २ गुञ्जात्रयमानं वल्लः । ३ बुधवत् सौम्यवत् देववद्वा हरेः सूर्यस्य विष्णोश्च वल्लभता, हरिवत् बुधवल्लभतां लभतामिति वा भावः ।

## वस्तुपालप्रशंसा ।

पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः । वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः केषां न प्रथयन्ति चेतसि मुदं श्रीवस्तुपालोक्तयः ॥ १ ॥ श्रीशारदैकसदनं हृदयालवः के नो सन्ति हन्त सकलासु कलासु निष्णाः । तादृक्परस्य ददृशे न कवित्वतत्त्वबोधाय बुद्धिविभवस्तु न वस्तुपालात् ॥ २ ॥ विरचयति वस्तुपालश्चुलुक्यसचिवेषु[1] कविषु च प्रवरः । न कदाचिदर्थहरणं श्रीकरणे काव्यकरणे वा ॥ ३ ॥ नरनारायणं नाम्ना विबुधानां मुदावहम् । तेने तेन महाकाव्यं वाग्देवीधर्म्मसूनुना[2] ॥ ४ ॥

## वसन्तपालप्रशंसा ।

कीर्त्या सौरभसारसान्द्रसुमनःसन्दोहसन्दोहकृत्कान्त्या पाति वसन्तमन्वहमसावित्यर्पितार्थक्रमम् । ख्यातं प्राप वसन्तपाल इति यो नामाद्वितीयं मुदा विद्वद्भिः परिकल्पितं हरिहरश्रीसोमशर्म्मादिभिः ॥ १ ॥

## हरिहरप्रशंसा ।

स्ववाक्पाकेन यो वाचां पाकं शास्त्यपरान् कवीन् । स्वयं हरिहरः सोऽभूत्कवीनां पाकशासनः ॥ १ ॥ सुधा मधु मुधा सीधु मुधा सोऽपि सुधारसः । आस्वादितं मनोहारि यदि हारिहरं वचः ॥ २ ॥

## रामचन्द्रप्रशंसा ।

निर्दोषकाव्यशतकं विरचय्य लोके लोकोत्तराशुकविकीर्त्तिविशुद्धकान्तिः । सोऽयं पवित्रधिषणः प्रतिभा[3]विशालः श्रीरामचन्द्रविबुधो महितो महिम्ना ॥ १ ॥ प्रबन्धानाधातुं नवभणितिवैदग्ध्यमधुरान् कवीन्द्रा निस्तन्द्राः कति न हि मुरारिप्रभृतयः । ऋते रामान्नान्यः किमुत परकोटौ घटयितुं रसान् नाट्यप्राण्यान् पटुरिति वितर्को मनसि नः ॥ २ ॥ प्रबन्धा इक्षुवत्प्रायो हीयमानरसाः क्रमात् । कृतिस्तु रामचन्द्रस्य सर्वा स्वादुः पदे पदे ॥ ३ ॥

## श्रीपालप्रशंसा ।

एकाहनिष्पन्नमहाप्रबन्धः[4] श्रीसिद्धराजप्रतिपन्नबन्धुः । श्रीपालनामा कविचक्रवर्त्ती प्रशस्तिमेतामकरोत्प्रशस्ताम् ॥ १ ॥

## कृष्णरामप्रशंसा ।

काव्यं यदीयं गृहमम्बरं वा सुवर्णचित्रोज्ज्वलमाविभाति । स नन्दनो नन्दति कुन्दनस्य श्रीकृष्णरामः कविराप्तकामः ॥ १ ॥ साहित्यामृतसागरप्रमथने निर्व्याजमन्थाचलः स्फारस्फूर्जितगद्यपद्यकविताकान्तारकण्ठीरवः । रोग्यारोग्यविधिप्रबुद्धधिषणो लक्ष्मीविलासास्पदं श्रीमत्कुन्दननन्दनो विजयते श्रीकृष्णरामः कविः ॥ २ ॥ उद्यल्लावण्यलक्ष्मीवलयितवपुषां स्वर्गवाराङ्गनानामाश्लेषे यः प्रमोदः स्फुरति च गरिमा योऽमृते माधुरीणाम् । सौरभ्यं कुङ्कुमे यत् पयसि विमलता याऽप्यहो तत्समस्तं मित्रैकत्रेक्षितुं चेदभिलषसि तदा पश्य कृष्णस्य काव्यम् ॥ ३ ॥

---

१ चुलुक्यराजामात्येषु । २ भारत्या यः पुत्रवत्परिरक्षितस्तेन । ३ नवनवोन्मेषशालिनी बुद्धिः प्रतिभा । ४ एकाहे निष्पन्नः सम्पूर्णो महान् प्रबन्धो यस्येति । यद्वा णिजर्थोऽत्रान्तर्भावितः, तथा च, एकाहे निष्पन्नः निष्पादितो महान् प्रबन्धो येनेति ।

## गोपालदत्तप्रशंसा ।

यो बाल्य एव परिदर्शितवाग्विलासप्रागल्भ्य उन्नमितबुद्धिविभूतिराशिः । यो ज्येष्ठयोरनुजनौ सहजे च सर्वं विन्यस्य सूनुमितवान् विबुधान् विजेतुम् ॥ १ ॥ अद्यापि येन विहिता विपुलाः प्रबन्धा विद्योतमानविभवाः सुखयन्ति विश्वम् । सोऽयं द्विशुद्धगुरुवंशभवः प्रसिद्धो **गोपालदत्त** उपमेयपदं कथं स्यात् ॥ २ ॥ युग्मकमिदम् ।

## कृष्णदत्तप्रशंसा ।

गोपालभक्तः प्रतिपन्नविद्यः सर्वत्र सम्यग्विहितप्रबन्धः । मुग्धोऽप्यमुग्धः परमुग्धतादः **श्रीकृष्णदत्तो** जयताच्चिराय ॥ १ ॥

## रामचन्द्रपण्डितप्रशंसा ।

भूतं भविष्यत्प्रभवच्च सर्वं जानाति यः श्रीहनुमत्प्रसादात् । समुल्लसत्पण्डितवंशवर्यः **श्रीरामचन्द्रः** स न कस्य वन्द्यः ॥ १ ॥

## हेमचन्द्रप्रशंसा ।

नानाप्रबन्धपरिबन्धननन्ददच्छप्रज्ञः प्रबुद्धधिषणः सुमनोगरिष्ठः । कोटित्रयाधिककवित्वविभावनेद्धः शास्त्रेष्वनन्यविभवो ननु **हेमचन्द्रः** ॥ १ ॥ चिन्तामणिप्रभृतिरत्नमुदारभावात्सर्वोपकारकृतये परितो वितीर्णम् । को दिव्यवाग्विभवमच्छगुणं न हेमचन्द्रं स्तुवीत सुमनाः सुमनोवरेण्यम् ॥ २ ॥ किं स्तुमः शब्दपाथोधेर्हेमचन्द्रयतेर्मतिम् । एकेनानेन येनेदं कृतं शब्दानुशासनम् ॥ ३ ॥ श्रीहेमचन्द्रः कविकालिदासं सर्वज्ञकल्पः कविचक्रवर्ती । योगे च पातञ्जलयोगशास्त्रं ज्ञानान्मुनीन्द्रोऽनुविगाहतेऽयम् ॥ ४ ॥

## श्रीहर्षप्रशंसा ।

कविषु दधतमुत्कर्षं विस्फुरदनवद्यहृद्यवाग्वर्षम् । इह खलु खलप्रधर्षं **श्रीहर्षं** नौमि हर्षसङ्घर्षम् ॥ १ ॥ अमोघचिन्तामणिमन्त्रसिद्धिप्राप्तप्रभावं प्रथितप्रतापम् । समस्तशास्त्रप्रतिबुद्धविद्यं श्रीहर्षमेकं विबुधं प्रतीमः ॥ २ ॥

## माघप्रशंसा ।

कविताकुन्दविकासनकृतिने विजितजनतानिदाघाय । दलितोद्दामाघाय प्रणतिं कलयामि **माघाय** ॥ १ ॥ माघो माघ इवाशेषं क्षमः कम्पयितुं जगत् । श्लेषामोदभरं चापि सम्भावयितुमीश्वरः ॥ २ ॥

## भारविप्रशंसा ।

जिगाय विस्फूर्तिमती यदीया प्रतिभा रविम् । मन्महे कविरत्नं तं वयं सम्प्रति **भारविम्** ॥ १ ॥ प्रकाशं सर्वतो दिव्यं विदधाना सताम्मुदे । प्रबोधनपरा हृद्या भा रवेरिव भारवेः ॥ २ ॥

## भासप्रशंसा ।

**भास**नाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम् । स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ १ ॥

---

१ कनीयसीत्यर्थः । २ एतेनास्यात्पवयस एव स्वर्गारोहणं सूचितम् । ३ श्रीकृष्ण- । एतन्नामज्येष्ठभ्रातृ- । ४ प्रकृते चिन्तामणिपदमभिधानचिन्तामणिपरम् । प्रभृतिपदेन काव्यानुशासनादिग्रहणम् ।

## श्रीगङ्गासहायप्रशंसा ।

**गङ्गासहायो** जितकामवीर्यो दयालुवर्यो द्विजराजमौलिः[1] । श्रीरामराज्याहितदिव्यचर्यो[2] निरस्तमोहप्रसरो मुदेऽस्तु ॥ १ ॥ प्रतिपदमुदीतभावं भागवतीयं[3] पदं कृतं येन । विद्यावाचस्पतिपदमहितो गङ्गासहायोऽसौ[4] ॥ २ ॥ अवाप्य यो रामधनात्मभूतिं[5] लेभे विभूतिं परितः प्रसिद्धाम् । नमामि तं तत्त्वविदां गरिष्ठं गङ्गासहायं विनमन्ति के न ॥ ३ ॥

## चेतरामप्रशंसा ।

नीतौ प्रवीणो मतिमत्सु मान्यो महान् महिम्ना महसा च नित्यम् । मुकुन्दपूज्योऽपि मुकुन्दभक्तः श्रीमान्स वन्द्यो मम **चेतरामः** ॥ १ ॥

## गोविन्दसहायप्रशंसा ।

प्रबुद्धबुद्धिर्विहितप्रवृद्धिं प्राप्तो विभूतिं च सतां प्रतिष्ठाम् । सदा सुनीतिर्भुवि लब्धकीर्तिर्जागर्ति **गोविन्दसहाय**सूरिः ॥ १ ॥

## जगन्नाथप्रशंसा ।

महत्सु वैयाकरणेष्वनन्यं गभीरभावं कविषु प्रसिद्धम् । पीयूषपाणिं कमलायताक्षं वन्दे **जगन्नाथ**मपास्तदर्पम् ॥ १ ॥

## पण्डितराजोपनामजगन्नाथप्रशंसा ।

पण्डिताः सन्तु भूयांसस्तेषां राजा य एव सः । **जगन्नाथो** जगन्नाथ इव केन न वन्द्यते ॥ १ ॥ रसगङ्गाधरो येनोद्भावितो भव्यभावनः । तेन गङ्गाधरः शम्भुः कथं साधर्म्यमाश्रयेत् ॥ २ ॥

## चन्द्रदत्तप्रशंसा ।

जिह्वाऽग्रविस्फूर्जितसर्वभारतः परं नतः सद्गुणगुच्छभारतः । विराजते राजगुरुः सभारतः स **चन्द्रदत्तः** परमप्रभारतः ॥ १ ॥

## दुर्गाप्रसादप्रशंसा ।

विना दुर्गाप्रसादं को यस्य न्यासे पटुः पुमान् । काव्यमालामनुः सोऽयं विदुषामस्तु संविदे ॥ १ ॥

## सरयूप्रसादप्रशंसा ।

शास्त्रार्थविध्वस्तविपक्षवादः पवित्रचर्याक्षपितप्रवादः । श्रीयन्त्रपूजापरमप्रसादः स मन्त्रशास्त्री **सरयूप्रसादः** ॥ १ ॥

---

१ द्विजराजानां मौलीभूतः, द्विजराजः चन्द्रः मौलौ यस्य स इति च । २ श्रीरामस्य श्रीरामसिंहस्य राज्ये आहिता दिव्या चर्या उपासना येन सः। श्रीरामाणां परशुरामरामचन्द्रबलरामाणां राज्या पङ्क्त्या आहिता कृता दिव्या चर्या प्रतिष्ठा यस्य स इति च । ३ श्रीमद्भागवतपुराणसम्बन्धि, भगवद्भक्तलभ्यं च । ४ एष हि भागवतव्याख्याता । ५ रामधनतो जन्म, रामरूपं यद्धनं तदेवात्मभूतिर्यस्येति च ।

## रघुवरप्रशंसा।

यो धर्म्मैशासनपदाधिकृतोऽधिकश्रीर्भासा दिशो दशरथप्रवणः पिधत्ते। सल्लक्ष्मणाञ्चिततनुर्ननु सोऽतिचारुचर्याभृतो रघुवरो जयताच्चिराय ॥ १ ॥

## कविसमाजप्रशंसा।

उपमा कालिदासस्य भारवेरर्थगौरवम्। दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥ १ ॥ माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे। स्मरन्तो भारवेरेव कवयः कपयो यथा ॥ २ ॥ श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः। त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥ ३ ॥ प्राचेतसव्यासपराशराद्याः प्राञ्चः कवीन्द्रा जगदञ्चितास्ते। गोष्ठी नवीनाऽपि महाकवीनां पूज्या गुणैस्त्रिभुवनोपकर्त्री ॥ ४ ॥ धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥ ५ ॥ यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो भासो हासः कविकुलगुरुः कालिदासो विलासः। हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः केषां नैषा कथय कविताकामिनी कौतुकाय ॥ ६ ॥ भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कविर्मेण्ठो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः। दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥ ७ ॥ वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुते। शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोईकविक्ष्मापतिः ॥ ८ ॥ माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः। श्रीदण्डीडिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥ ९ ॥

## कुकविगर्हा।

अप्रगल्भाः पदन्यासे जननीरागहेतवः। सन्त्येके बहुलालापाः कवयो बालका इव ॥ १ ॥ कविभिर्नृपसेवासु वित्तालंकारहारिणी। वाणी वेश्येव लोभेन परोपकरणीकृता ॥ २ ॥ अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः। अनाख्यातः सतां मध्ये कविश्चोरो विभाव्यते ॥ ३ ॥ प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः। कोकिला इव जायन्ते वाचालाः कामकारिणः ॥ ४ ॥ किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी। कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ॥ ५ ॥ किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः। परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ६ ॥ मुखमात्रेण काव्यस्य करोत्यहृदयो जनः। छायामच्छामपि श्यामां राहुस्तारापतेरिव ॥ ७ ॥ श्लोकार्थस्वादकाले तु शब्दोत्पत्तिविचिन्तकाः। नीवीविमोक्षवेलायां वस्त्रमौल्यविचिन्तकाः ॥ ८ ॥ अधिभिल्लिपल्लिगल्लं बहुलवपल्लवोऽपि वाचालः। नागरनरवरपरिषदि कस्य मुखादक्षरं क्षरति ॥ ९ ॥ गणयन्ति नोपशब्दं न वृत्तभङ्गं क्षयं न चार्थस्य। रसिकत्वे-

---

१ न्यायालये, धर्म्मरक्षायां च। दशदिशो भासा पिधत्ते रथप्रवण इत्यन्वयः। दशरथाज्ञावर्त्ती भावा दिशः पिधत्त इति च। सता लक्ष्मणा चिह्नेनाश्चिततनुः। सता लक्ष्मणेनाश्चिता तनुर्यस्येति च। २ धनुर्धारिणः। ३ अरसहृदयः। ४ सभायाम्। ५ दुर्वाच्यं च्युतसंस्कृतित्वादिना दुष्टं शब्दं च। ६ चरित्रभ्रंशम्, छन्दोभङ्गं च।

नाकुलिता वेश्यापतयः कुकवयश्च ॥ १० ॥ दुर्जनहुताशतप्तं काव्यसुवर्णं विशुद्धिमायाति । दर्शयितव्यं तस्मान्मत्सरिमनसः प्रयत्नेन ॥ ११ ॥ कविरनुहरति च्छायां पदमेकं पादमेकमर्धं वा । सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तस्मै ॥ १२ ॥ विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे । निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी ॥ १३ ॥ अतिरमणीये काव्ये पिशुनोऽन्वेषयति दूषणान्येव । अतिरमणीये वपुषि व्रणमेव हि मक्षिकानिकरः ॥ १४ ॥ बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम् । कविमाणवका दूतीव्याख्यातमधीयते भावम् ॥ १५ ॥ द्राघीयसा धाष्टर्यगुणेन युक्ताः कैः कैरपूर्वैः परकाव्यखण्डैः । आडम्बरं ये वचसां वहन्ति ते केऽपि कन्थाकवयो जयन्ति ॥ १६ ॥ कर्णामृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान्खलस्य । अवेक्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव ॥ १७ ॥ साहित्यपाथोनिधिमन्थनोत्थं काव्यामृतं रक्षत हे कवीन्द्राः । यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति ॥ १८ ॥ गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः कापि कवीश्वराणाम् । रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥ १९ ॥ दैवीर्गिरः केऽपि कृतार्थयन्ति ताः कुण्ठयन्त्येव पुनर्विमूढाः । या विप्रुषः शुक्तिमुखेषु दैव्यस्ता एव मुक्ता न तु चातकेषु ॥ २० ॥ परिश्रमज्ञं जनमन्तरेण मौनिव्रतं बिभ्रति वाग्मिनोऽपि । वाचंयमाः सन्ति विना वसन्तं पुंस्कोकिलाः पञ्चमचञ्चवोऽपि ॥ २१ ॥ काव्यं करोषि किमु ते सुहृदो न सन्ति ये त्वामुदीर्णपवनं न निवारयन्ति । गव्यं घृतं पिब निवातगृहं प्रविश्य वाताधिका हि पुरुषाः कवयो भवन्ति ॥ २२ ॥ यः सत्पदस्थमिह काव्यमधु प्रसन्नं मुर्ष्णन्परस्य तनुते निजपद्यमध्ये । अस्थानदोषजनितेव पिपीलिकाली काली विभाति लिखिताक्षरपङ्क्तिरस्य ॥ २३ ॥ हठादाकृष्टानां कतिपयपदानां रचयिता जनः स्पर्धालुश्चेदहह कविना वश्यवचसा । भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ २४ ॥ स्तुवद्भवनिवर्तके सति हरौ कविः सूक्तिभिः करोति वरवर्णिनीचरितवर्णनं गर्हितम् । अनीतिरवनीपतिर्बत शुनीतनुं मौक्तिकैर्विभूषयति देवतामुकुटभागयोग्यैर्यथा ॥ २५ ॥ श्रीनाथस्तवनानुरूपकवनां वाणीं मनोहारिणीं कष्टं हा कवयः कदर्यकुटिलक्ष्मापालसात्कुर्वते । दूरोपाहृतसौरसैन्धवपयो देवाभिषेकोचितं संसेके विनियुञ्जते सुमतयः शाखालवालस्य किम् ॥ २६ ॥ लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः । अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां वृकाः सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥ २७ ॥ स्वाधीनो रसनाञ्चलः परिचिताः शब्दाः कियन्तः क्वचित्क्षोणीन्द्रो न नियामकः परिषदः शान्ताः स्वतन्त्रं जगत् । तद्यूयं कवयो वयं वयमिति प्रस्तावनाहुंकृतिं स्वच्छन्दं प्रतिसद्म गर्जत वयं मौनव्रतालम्बिनः ॥ २८ ॥ स्वर्गानर्गलनिर्गलत्सुरसरित्पाथःप्रपातप्रथाप्रत्याख्यानपटीयसाऽपि वचसा जिह्रेति जिह्वेह नः । एकद्व्यक्षरकष्टपिष्टरचनादुर्वारगर्वग्रहाः कन्थामात्रकुविन्दकाः कवयितुं सज्जन्ति लज्जामुचः ॥ २९ ॥ यः स्यात्केवललक्ष्यलक्षणरतो नो तर्कसंपर्कभृन्नालंकारविचारचारुधिषणः काव्यज्ञशिक्षोज्झितः । तस्माच्चेद्रसशालि काव्यमुदयेदेकान्ततः सुन्दरं प्रासादो धवलस्तदा क्षितिपतेः काकस्य कार्ष्ण्याद्भवेत् ॥ ३० ॥

---

१ दूषणान्वेषी । २ अतिदीर्घेण । ३ उष्ट्रः । ४ समुद्र- । ५ दैवैः । ६ अयं पूर्वः श्लोकश्च साक्षेपौ । ७ बिन्दवः । ८ अपहरन् । ९ जल्पन्ति । १० प्रतिगृहम् ।

## सत्पण्डितप्रशंसनम् ।

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः । तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १ ॥ यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि । निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ २ ॥ किं कुलेन विशालेन विद्याहीनस्य देहिनः । अकुलीनोऽपि विद्यावान्देवैरपि स पूज्यते ॥ ३ ॥ [1]रोहणं सूक्तिरत्नानां वन्दे वृन्दं विपश्चिताम् । यन्मध्यपतितो नीचः काचोऽप्युच्चैर्महीयते ॥ ४ ॥ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । न हि वन्ध्या विजानाति [2]गुर्वीं प्रसववेदनाम्[3] ॥ ५ ॥ प्राज्ञो हि [4]जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ ६ ॥ विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ७ ॥ अलंकरोति यः श्लोकं शुक एव न मध्यमः । अलं करोति यः श्लोकं शुक एव [5]नमध्यमः ॥ ८ ॥ [6]सदोषमपि निर्दोषं भवत्यग्रे विपश्चितः । [7]रामस्येवा[8]र्जुनवपुः कवेश्च सरसं वचः ॥ ९ ॥ गुणदोषौ बुधो [9]गृह्णन्निन्दु[10]क्ष्वेडौविवेश्वरः । शिरसा [11]श्लाघते पूर्वं परं कण्ठे [12]नियच्छति ॥ १० ॥ स्थिरा शैली गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययाऽपि न नाश्यते ॥ ११ ॥ वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् । हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा ॥ १२ ॥ विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः । याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ १३ ॥ अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् । [13]अव्ययेभ्योऽपि ये चार्थान्निष्कर्षन्ति सहस्रशः ॥ १४ ॥ स एव रसिको लोके श्रुत्वा काव्यं परैः कृतम् । उत्पद्यते च युगपद्वदनेऽक्ष्णोश्च यस्य [14]वाः ॥ १५ ॥ श्रुते महाकवेः काव्ये नयने वदने च वाः । युगपद्यस्य नोदेति स वृषो महिषोऽथवा ॥ १६ ॥ विद्या विनयोपेता हरति न चेतांसि कस्य मनुजस्य । काञ्चनमणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥ १७ ॥ व्याख्यातुमेव केचित्कुशलाः शास्त्रं प्रयोक्तुमलमन्ये । उपनामयति करोऽन्नं रसांस्तु जिह्वैव जानाति ॥ १८ ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रमाणं च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ १९ ॥ कवीश्वराणां वचसां विनोदैर्नन्दन्ति विद्यानिधयो न चान्ये । चन्द्रोपला एव करैर्हिमांशोर्मध्ये शिलानां सरसा भवन्ति ॥ २० ॥ शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स विद्वान् । सुचिन्तितं चौषधमा[15]तुराणां न नाममात्रेण करोत्यरोगम् ॥ २१ ॥ न पण्डिताः [16]साहसिका भवन्ति श्रुत्वाऽपि ते संतुलयन्ति तत्त्वम् । तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥ २२ ॥ इह तुरगशतैः प्रयान्तु मूढा धनरहितास्तु बुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरगताऽपि काकपङ्क्तिः [17]पुलिनगतैर्न समत्वमेति हंसैः ॥ २३ ॥ सन्तश्चेदिह गुणबिन्दवो बुधस्तान्संतुष्टः कवलयति स्फुटेऽपि दोषे । संयुक्तानपि पयसः कणान्विचिन्वन्नम्भस्तो ग्रसति हि मङ्क्षु [18]मल्लिकाक्षः ॥ २४ ॥ अन्या जगद्धितमयी मनसः प्रवृत्तिरन्यैव कापि रचना वचनावलीनाम् । लोकोत्तरा च कृतिराकृतिरङ्गहृद्या

---

१ अङ्कुरभूतम् । २ अतिशयिताम् । ३ सन्तानोत्पत्तिकालिकीं पीडाम् । ४ प्रलपताम् । ५ नकारो मध्यमो यस्य सः । नकारस्य मध्ये निवेशे शुनक इति सम्पद्यते । ६ दूषितं हस्तयुक्तं च । ७ भार्गवस्य । ८ सहस्रबाहु शरीरम् । ९ बुध्यन् । गृह्णंश्च । १० विषम् । ११ प्रशंसति । धारयति च । १२ अवरुणद्धि अवस्थापयति च । १३ निपातविशेषेभ्यः, न व्ययो धनवितरणकर्म्म येषां तेभ्यश्च । १४ जलम् । वा वा इति प्रशंसाशब्दश्च । १५ रोगिणाम् । १६ अविमृश्यकारिणः । १७ सैकत- । १८ राजहंसः ।

विद्यावतां सकलमेव गिरां दवीयः[1] ॥ २५ ॥ अधिगतपरमार्थान्पण्डितान्मावमंस्थास्तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि । मदमिलितमिलिन्दश्यामगण्डस्थलानां न भवति बिसतन्तुर्वारणं वारणानाम्[2] ॥ २६ ॥ शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः । तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनाऽपीश्वराः कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः[3] पातिताः ॥ २७ ॥ हर्तुर्याति न गोचरं किमपि शं[4] पुष्णाति सर्वात्मना ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं[5] प्राप्नोति वृद्धिं पराम् । कल्पान्तेष्वपि न प्रयाति निधनं[6] विद्याख्यमन्तर्धनं येषां तान्प्रति मानमुज्झत[7] नृपाः कस्तैः सह स्पर्धते ॥ २८ ॥

## असत्पण्डितगर्हणम् ।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १ ॥ मूर्खचिह्नानि षडिति गर्वो दुर्वचनं मुखे । विरोधी विषवादी च कृत्याकृत्यं न मन्यते ॥ २ ॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥ ३ ॥ उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ ४ ॥ वरं[8] पर्वतदुर्गेषु भ्रान्तं[9] वनचरैः[10] सह । न मूर्खजनसम्पर्कः सुरेन्द्र-भवनेष्वपि[11] ॥ ५ ॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादपि शीतलः । यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ ६ ॥ अन्तःसारविहीनस्य[12] सहायः किं करिष्यति । मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ ७ ॥ यस्य नास्ति विवेकस्तु केवलं यो बहुश्रुतः । न स जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥ ८ ॥ रूपयौवनसम्पन्ना विशालकुलसंभवाः । विद्याहीना न शोभन्ते निर्गन्धाः किंशुका इव ॥ ९ ॥ विद्याविधिविहीनेन किं कुलीनेन देहिना । अकुलीनोऽपि यो विद्वान्दैवतैरपि पूज्यते ॥ १० ॥ मदोपशमनं शास्त्रं खलानां कुरुते मदम् । चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥ ११ ॥ ज्ञानविद्याविहीनस्य विद्याजालं निरर्थकम् । कण्ठसूत्रं विना नारी अनेकाभरणैर्युता ॥ १२ ॥ मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति हि । कः सुधीः सन्त्यजेद्भाण्डं शुल्कस्यैवा[13]तिसाध्वसात् ॥ १३ ॥ माता शत्रुः पिता वैरी येन बालो न पाठितः । न शोभते सभामध्ये हंसमध्ये बको यथा ॥ १४ ॥ पुस्तकेषु च नाधीतं नाधीतं गुरुसन्निधौ । न शोभते सभामध्ये हंसमध्ये बको यथा[14] ॥१५॥ विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा । विद्याहीनो नरः प्राज्ञः सभायां नैव शोभते ॥ १६ ॥ शोभते विदुषां मध्ये नैव निर्गुणमानसः । अन्तरे तमसां दीपः[15] शोभते नार्कतेजसाम् ॥ १७ ॥ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः । अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ १८ ॥ पदद्वयस्य सन्धानं कर्तुमप्रतिभाः खलाः । तथाऽपि परकाव्येषु दुष्करेष्वप्यसंभ्रमाः ॥ १९ ॥ क दोषोऽत्र मया लभ्य इति संचिन्त्य

---

१ अतिदूरम् । २ हस्तिनाम् । ३ मूल्यतः । ४ सुखम् । ५ प्रदीयमानम् । ६ मरणम् । ७ मुञ्चत । ८ ईषत् प्रियम् । ९ भ्रमणम् । १० पशुभिः, भिल्लादिभिर्वा । ११ इन्द्रादीनां दिव्येष्वपि स्थानेष्विति भावः । १२ सारशब्दोऽत्रोपादेयतत्त्वपरः । असत्पण्डितपक्षे क्षुद्रतया यत्तदीयं भाषणादि तत्सर्वं विपरीतं भवतीति वैपरीत्यं हि निःसारत्वम् वेणुपक्षे तु आभ्यन्तरपुष्टताहेतुशून्यत्वं निःसारत्वम् । १३ राजग्राह्यस्य करस्य । राजग्राह्यकरमपि यो न दातुं प्रभवति, तद्भयान्मूलमपि जहाति स च कथन्नाम ततोऽन्यल्लब्धव्यं लप्स्यत इति भावः। १४ जारगर्भा इव स्त्रियः इति पाठान्तरे तु जारनिहितो गर्भो यासां ताः । शाकपार्थिवादित्वान्निहितपदलोपः । १५ तथा च निर्गुणो मूर्खाणाम्मध्य एव तावत् शोभते न तु विदुषामिति स्थितम् ।

चेतसा । खलः काव्येषु साधूनां श्रवणाय प्रवर्तते ॥ २० ॥ उपपत्तिभिरम्लाना नोपदेशैः कदर्थिताः । स्वसंवेदनसंवेद्यसाराः सहृदयोक्तयः ॥ २१ ॥ केषांचिद्वाचि शुकवत्परेषां हृदि मूकवत् । कस्याप्या हृदयाद्वक्त्रे वल्गु वल्गन्ति सूक्तयः ॥ २२ ॥ बहूनि नरशीर्षाणि लोमशानि बृहन्ति च । ग्रीवासु प्रतिबद्धानि किं चित्तेषु सकर्णकम् ॥ २३ ॥ कवीनां महतां सूक्तैर्गूढार्थान्तरसूचिभिः । विध्यमानश्रुतेर्माभूदुर्जनस्य कथं व्यथा ॥ २४ ॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति ॥ २५ ॥ गुणिगणगणनारम्भे न पतति कठिनी सुसंभ्रमाद्यस्य । तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥ २६ ॥ निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि । पश्य धनुर्गुणशून्यं निर्जीवं यदिह शंसन्ति ॥ २७ ॥ अन्तर्भूतो निवसति जडे जडः शिशिरमहसि हरिण इव । अजडे शशीव तपने स तु प्रविष्टोऽपि निःसरति ॥ २८ ॥ जीवित इव कण्ठगते सूक्ते दुःखासिका कवेस्तावत् । नयनविकासविधायी स चेतनाम्यागमो यावत् ॥ २९ ॥ साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः । तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥ ३० ॥ जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः । प्राप्ताग्निनिर्वापणगर्वमम्बु रत्नाङ्कुरज्योतिषि किं करोति ॥ ३१ ॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ ३२ ॥ मुक्ताफलैः किं मृगपक्षिणां च मृष्टान्नपानं किमु गर्दभानाम् । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥ ३३ ॥ अज्ञातपाण्डित्यरहस्यमुद्रा ये काव्यमार्गे दधतेऽभिमानम् । ते गारुडीयाननधीत्य मन्त्रान्हालाहलास्वादनमारभन्ते ॥ ३४ ॥ अवद्यजम्बालगवेषणाय कृतोद्यमानां खलसैरिभाणाम् । कवीन्द्रवाङ्निर्जरनिर्झरिण्यां संजायते व्यर्थमनोरथत्वम् ॥ ३५ ॥ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटाऽपि शोभते न नेत्रहीना कनकैरलंकृता ॥ ३६ ॥ व्यालाश्च राहुश्च सुधाप्रसादाज्जिह्वाशिरोनिग्रहमुग्रमापुः । इतीव भीताः पिशुना भवन्ति पराङ्मुखाः काव्यरसामृतेषु ॥ ३७ ॥ सरस्वतीमातुरभूच्चिरं न यः कवित्वपाण्डित्यघनस्तनंधयः । कथं स सर्वाङ्गमनाप्तसौष्ठवो दिनादिनं प्रौढिविशेषमश्नुते ॥ ३८ ॥ वितीर्णशिक्षा इव हृत्पदस्थसरस्वतीवाहनराजहंसैः । ये क्षीरनीरप्रविभागदक्षा विवेकिनस्ते कवयो जयन्ति ॥ ३९ ॥ काव्यामृतं दुर्जनराहुनीतं प्राप्यं भवेन्नो सुमनोजनस्य । सचक्रमव्याजविराजमानतैक्ष्ण्यप्रकर्षं यदि नाम न स्यात् ॥ ४० ॥ विना न साहित्यविदा परत्र गुणः कथंचित्प्रथते कवीनाम् । आलम्बते तत्क्षणमम्भसीव विस्तारमन्यत्र न तैलबिन्दुः ॥ ४१ ॥ अत्यर्थवक्रत्वमनर्थकं या शून्या तु सर्वान्यगुणैर्व्यनक्ति । अस्पृश्यतादूषितया तया किं तुच्छश्वपुच्छच्छटयेव वाचा ॥ ४२ ॥ नीचस्तनोत्वश्रु नितान्तकार्ष्ण्यं पुष्णातु साधर्म्यभृदञ्जनेन । विना तु जायेत

---

१ अज्ञोऽपि कथञ्चिद्बोधनीयो भवति, किञ्चिज्ज्ञस्तु स्वयं पण्डितम्मन्यः परान् बहुज्ञानपि तुच्छं मनुते इति तथोक्तम्। २ कनिष्ठिकाऽङ्गुलिः। प्रथमगणनं तत आरभ्य हि भवति। ३ पुत्रवती। ४ मूढे जलरूपे च। चन्द्रो हि जलात्मा गद्यते। ५ मूढः, पशुत्वेन जडात्मा च। ६ चन्द्रमसि। ७ प्रबुद्धे जलरूपत्वाद्विरुद्धे च। सूर्यो हि तेजोरूपो गद्यते। ८ सूर्ये। ९ शृङ्ग-। १० जीविमानीति तु युक्तं शानचोऽनुपपत्तेः। ११ भाग्यम्। १२ जारस्येति पाठान्तरम्। १३ दोषरूपपङ्क-। १४ दुर्जनरूपाणां महिषाणाम्। १५ गङ्गायाम्। १६ शिशुः। १७ हृदयासनस्थ-। १८ देव-। उदार-। महत्-। १९ प्रकटयति। २० उपमा-।

कथं तदीयक्षोदेन सारस्वतदृक्प्रसादः ॥ ४३ ॥ विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः । यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ४४ ॥ विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथ वा बुधाः । न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥४५ ॥ अथवाऽभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् । रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥ ४६ ॥ इतरकर्मफलानि यदृच्छया विलिख तानि सहे चतुरानन । अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥ ४७ ॥ कतिचिदुद्धतनिर्भरमत्सराः कतिचिदात्मवचःस्तुतिशालिनः । अहह केऽपि निरक्षरकुक्षयस्तदिह संप्रति कं प्रति मे श्रमः ॥४८॥ ये के विचित्ररसशालिषु सत्कवीनां सूक्तेषु कर्णपथगामिषु नाद्रियन्ते । ते मालतीपरिमलेष्वपि कन्दलत्सु नासापुटं करतलेन पिदध्युरेव ॥ ४९ ॥ मद्वाणि मा कुरु विषादमनादरेण मात्सर्यमग्नमनसां सहसा खलानाम् । काव्यारविन्दमकरन्दमधुव्रतानामास्येषु धास्यसितमां कियतो विलासान् ॥ ५० ॥ चेतःप्रसादजननं विबुधोत्तमानामानन्दि सर्वरसयुक्तमतिप्रसन्नम् । काव्यं खलस्य न करोति हृदि प्रतिष्ठां पीयूषपानमिव वक्त्रविवर्ति राहोः ॥ ५१ ॥ बद्धा यदर्पणरसेन विमर्दपूर्वमर्थान्कथं झटिति तान्प्रकृतान्न दद्युः । चौरा इवातिमृदवो महतां कवीनामर्थान्तराण्यपि हठाद्वितरन्ति शब्दाः ॥ ५२ ॥ अर्थोऽस्ति चेन्न पदशुद्धिरथास्ति साऽपि नो रीतिरस्ति यदि सा घटना कुतस्त्या । साऽप्यस्ति चेन्न नववक्रगतिस्तदेतद्व्यर्थं विना रसमहो गहनं कवित्वम् ॥ ५३ ॥ श्लाघ्यैव वक्रिमगतिर्विनदाढर्यबन्धोस्तस्याः कविप्रवरसूक्तिधनुर्लतायाः । कर्णान्तिकप्रणयभाजि गुणे यदीये चेतांसि मत्सरवतां झटिति त्रुटन्ति ॥५४॥ अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् । श्वपुच्छमवनामितं बधिरकर्णजापः कृतो धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ ५५ ॥ प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् । भुजंगमपि कोपितं शिरसि पुष्पवद्धारयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥५६॥ लभेत सिकतासु तैलमपि यत्नतः पीडयन्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः । कदाचिदपि पर्यटञ्छशविषाणमासादयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५७ ॥ यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः । यदा किंचित्किंचिद्बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥५८॥ शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् । अधोऽधो गङ्गेयं पदमुपगता स्तोकमधुना विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ५९ ॥ परश्लोकान्स्तोकाननुदिवसमभ्यस्य ननु ये चतुष्पादीं कुर्युर्बहव इह ते सन्तु कवयः । अविच्छिन्नोद्गच्छज्जलधिलहरीरीतिसुहृदः सुहृद्या वैशद्यं दधति किल केषांचन गिरः ॥ ६० ॥ वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा । भवति च पुनर्भूयान्भेदः फलं प्रति तद्यथा प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥ ६१ ॥ अविनयभुवामज्ञानानां शमाय भवन्नपि प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये । फणिभयभृतामस्तु च्छेदक्षमस्तमसामसौ विषधरफणारत्नालोको भयं तु

---

१ सरस्वतीदृष्टि- । २ ज्ञानदरिद्रः मूढ इति भावः । ३ क्षुद्रः । ४ कथितम् । ५ अगामिनीं विपदम् । ६ स्वयम् । ७ निश्चिनोति । ८ आग्रहग्रहिलज्ञानेषु । ९ चन्द्रमसः । १० यथेच्छम् । ११ सुभाषितेषु । १२ मुखेषु । १३ स्थापयिष्यसितमाम्- । १४ प्रसन्नता । १५ प्ररोहायोग्ये । १६ मूढः । १७ आग्रहग्रस्त- । १८ वालुकामध्ये । १९ मरीचिकासु । २० शृङ्ग- । २१ सदर्पम् । २२ शङ्करसम्बन्धि । २३ महेश्वरमूर्ध्नः । २४ पर्वतात् । २५ अल्पम् । २६ स्वच्छत्वं विशालत्वं च । २७ दर्शनम् ।

भृशायते ॥ ६२ ॥ व्यासादीन्कविपुङ्गवाननुचितैर्वाक्यैः सलीलं हसन्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठ । काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधैर्यद्यभ्यर्थयसे [1]श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ६३ ॥ ये संसत्सु विवादिनः परयशःशूलेन शल्याकुलाः कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद्गुणाच्छादनम् । तेषां रोषकषायितोदरदृशां कोपोष्णनिःश्वासिनां दीप्ता रत्नशिखेव कृष्णफणिनां विद्या जनोद्वेजिनी ॥ ६४ ॥ ग्रीवास्तम्भभृतः परोन्नतिकथामात्रे शिरःशूलिनः सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः । अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः कष्टा नूनमपण्डितस्य विकृतिर्भीमज्वरारम्भभूः ॥ ६५ ॥ मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणा निश्चिन्तो बहुभोजनोऽतिमुखरो रात्रिंदिवं स्वप्नभाक् । कार्याकार्यविचारणान्धबधिरो मानापमाने समः [3]प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ६६ ॥ [4]व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते छेत्तुं [5]वज्रमणीञ्शिरीषकुसुमप्रान्तेन संनह्यते । माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरी[6]र्हते नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः [7]सुधास्यन्दिभिः ॥ ६७ ॥ शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ६८ ॥ तोयं निर्मथितं घृताय मधुने निष्पीडितः प्रस्तरः पानार्थं मृगतृष्णिकोर्मितरला भूमिः समालोकिता । दुग्धा सेयमचेतनेन [8]जरती दुग्धाशया सूकरी कष्टं यत्खलु दीर्घया धनतृषा नीचो जनः सेवितः ॥ ६९ ॥ काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहुर्दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः । [9]कासारेऽपि विकासिपङ्कजचये खेलन्[10]मराले पुनः क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्वेषते ॥ ७० ॥ विद्ये ह्यद्यतराऽसि किंनु कृपणासंभावनैर्लज्जसे सन्त्यन्ये तव तोषणाहितधियो धन्या वदान्या भुवि । कान्तानां कुचकुम्भकौशलरुचां नो हानिरेतावता [11]षण्ढानां हृदयेऽपि यत्प्रणयते नान[12]ङ्गरोगोदयः ॥ ७१ ॥ मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्त्वतः श्रीमच्छङ्करभाष्यतो भगवती गीताऽप्यधीता न यैः । सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वाऽपि किंचित्ततो भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते ॥ ७२ ॥ पेटीचीवरपट्टवस्त्रपटलश्वेतातपत्रच्छटाशाटीहारकघोटकस्फुटघटाटोपाय तुभ्यं नमः । येनानक्षरकुक्षयोऽपि जगतः कुर्वन्ति सर्वज्ञताभ्रान्तिं येन विना तु हास्यपदवीं सन्तोऽपि कष्टं गताः ॥ ७३ ॥ [13]साकूतं निजसंविदेकविषयं तत्त्वं सचेता ब्रुवन्नग्रे नूनमबोधमोहितधियां हास्यत्वमायास्यति । तद्युक्तं विदुषो जनस्य जडवज्[14]जोषं तु नामासितुं जात्यन्धं प्रति रूपवर्णनविधौ कोऽयं वृथैवोद्यमः ॥ ७४ ॥ ये तावत्त्वगुणोपबृंहितधियस्तेषामरण्यं जगद्येऽप्येते कृतमत्सराः परगुणं स्वप्नेऽपि नेच्छन्ति ये । अन्येषामनुरागिणां क्वचिदपि स्निग्धं मनो निर्वृतावित्थं यान्तु तपोवनानि महतां सूक्तानि मन्येऽधुना ॥ ७५ ॥ यातास्ते रससारसंग्रहविधिं निष्पीड्य निष्पीड्य ये वाक्तत्त्वेक्षुलतां पुरा कतिपये तत्त्वस्पृशश्चक्रिरे । जायन्तेऽद्य यथायथं तु कवयस्ते तत्र संतन्वते येऽनुप्रासकठोरचित्रयमकश्लेषादिशल्कोच्चयम् ॥ ७६ ॥ [15]प्रादुःष्यात्पण्डितानां कविवचसि कथं [16]प्रत्ननूत्नत्वचिन्ता [17]विद्युरन्यद्यवद्यान्यभिजहति तथा गृह्णते स्युर्गुणाश्चेत् । अन्यस्त्वन्यप्रमाणः परमवतनुते छिद्यते तावता किं नायं रत्नस्य दोषो दृषदिति यदिदं क्षिप्रमन्धाः क्षिपन्ति ॥ ७७ ॥

---

१ शास्त्रज्ञानेन । २ आधिक्येन । ३ रोग- । ४ सर्पम् । ५ हीरक- । ६ कामयते । ७ अमृत- । ८ वृद्धा । ९ तडाके । १० मराला हंसाः । ११ नपुंसकानाम् । १२ कन्दर्प- । १३ साभिप्रायम् । १४ तूष्णीम् । १५ आविर्भवतु । १६ पुरातन-नूतन- । १७ जानीयुः ।

## सच्छान्दसप्रशंसनम् ।

नाध्यापयिष्यन्निगमा[1]ञ्श्रमेणोपाध्यायलोका यदि शिष्यवर्गान् । निर्वेदवादं किल निर्वितानमुर्वीतलं हन्त तदाऽभविष्यत्[2] ॥ १ ॥

## असच्छान्दसगर्हणम् ।

आः कष्टमप्रहृष्टाः शिष्टा अपि वित्तचापलाविष्टाः । अध्यापयन्ति वेदानादाय चिराय मासि मासि भृतिम् ॥ १ ॥

## वैयाकरणप्रशंसा ।

वैयाकरणकिराता[3]दपशब्दमृगाः क यान्ति सन्त्रस्ताः[4] । ज्योति[5]र्नर्त[6]विट[7]गायकभिष[8]गाननगह्वराणि[9] यदि न स्युः ॥ १ ॥ यद्यपि बहु नाधीषे तथाऽपि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो[10] मा भूत्सकलं शकलं सकृच्छकृत्[11] ॥ २ ॥ कृतदुरितनिराकरणं व्याकरणं चतुर[12]धीरधीयानः[13]। बुधगणगणनावसरे कनिष्ठिका यां परं जयति ॥३॥ सूत्रं[14] पाणिनिबद्धं[15] कलयन्[16]पुरुषः समुद्वहति[17] सुदृशम्[18] । वर्णादीनां[19] धर्मान्बुद्ध्वा[20] विधिवत्[21]प्रयुङ्क्ते[22]ऽसौ ॥ ४॥ पातं[23] जले विष्णुपदी[24]पगायाः पातञ्जले[25] चापि नये[26]ऽवगाहम्[27] । आचक्षते शुद्धिदर्मा[28] प्रसूतेरा[29] च क्षते रागम[30]धोक्षजे च ॥ ५ ॥ नृणाम[31]नभ्यस्तफणाभृदीशगिरां दुरापा[32] बुधराजगोष्ठी[33] । अबुद्ध[34]चापश्रुतिपद्धतीनां युद्धक्षमेवोद्धृतयोद्धसार्था[35] ॥ ६ ॥ नाङ्गीकृतव्याकरणौषधानामपाटवं[36] वाचि सुगाढमास्ते । कस्मिंश्चिदुक्ते तु पदे कथंचित्[37]स्वैरं वपुः स्विद्यति वेपते[38] च ॥ ७ ॥ शब्दशास्त्रमनधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे । बन्द्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना! ॥ ८ ॥

## वैयाकरणपाशगर्हणम् ।

टिड्ढाणञ्द्वयसच्,चुटू,ङसिङसोस्तिप्तस्झिसिप्थस्थमिब्वस्मस्ता, हशिच,ष्टुनाष्टुरतइञ्शश्छोऽव्यचोऽन्त्यादिटि । लोपोव्योर्वलि,वृद्धिरेचि,यचिभं,दाधाघ्वदाप्छे च,टेरित्ये[39]ब्दानखिलान्नयन्ति[40] कतिचिच्छब्दान्पठन्तः कटून्[41] ॥ १ ॥ सूत्रैः पाणिनिनिर्मितैर्बहुतरैर्निष्पाद्य शब्दावलिं वैकुण्ठ[42]स्तवमक्षमा रचयितुं मिथ्याश्रमाः शाब्दिकाः[43] । पक्वान्नं विविधं श्रमेण विविधापूपा[44]ग्र्यसूपा[45]न्वितं मन्दाग्नीननुरुन्धते[46] मितबलानाघ्रातुमप्यक्षमान् ॥ २ ॥ कुप्वोः ᳲक ᳲपौ च, शेषोध्यसखि,ससजुषोरुर्विरामोऽवसानं, शश्छोऽटीत्यादिशब्दैः सदसि[47] यदि

---

१ वेदान् । २ वेतनम् । ३ भिल्लात् । ४ भीताः । ५ ज्योतिर्वित्- । ६ नाट्यकारि- । ७ जार- । ८ वैद्य- । ९ गुहाः । १० शुनकः । ११ विष्ठा- । १२ पटुः । १३ पठन् । १४ कङ्कणम् । अनल्पार्थप्रतिपादकत्वे सति अल्पाक्षरकं वाक्यं च । १५ पाणौ निबद्धं पाणिनिना बद्धं रचितं च । १६ अवगच्छन् । धारयंश्च । १७ सम्यग्दधाति । सम्यगुद्वहति । १८ शोभनां दृष्टिम् । विवेचनदृष्टिमिति भावः । सुन्दराक्षीं च । १९ अकारादीनां ब्राह्मणादीनां च वर्णानाम् । २० ज्ञात्वा । २१ यथाशास्त्रोपदेशम् । २२ प्रयोगमनुतिष्ठति । संयोजयति च । २३ पतनम् । २४ भागीरथ्याः । २५ पतञ्जलिमुनिप्रणीते । २६ शास्त्रे । २७ निमज्जनम् अभ्यासदार्ढ्यं च । २८ प्रसूतेः जन्मनःआ प्रभृतीत्यर्थः । २९ क्षतेः मरणात् च आ अवधीकृत्य मरणपर्यन्तमिति भावः । ३० अधोऽक्षजे । परमात्मनि विषये रागम् अनुरागं च । ३१ नाभ्यस्ताः फणाभृदीशस्य पतञ्जलेः गिरः महाभाष्यरूपा वाचः यैस्तेषाम् । ३२ दुःखेन लब्धुं शक्या । ३३ बुधानां विदुषां राजानस्तेषां गोष्ठी सभा । ३४ अनवबुद्ध धनुः शास्त्रप्रयोगाणाम् । ३५ सार्थः समूहः । ३६ अपटुत्वम् । ३७ अत्यन्तम् । ३८ कम्पते । ३९ संवत्सराणि यावत् । ४० क्षपयन्ति । ४१ परुषवर्णान् । ४२ नारायण- । ४३ वैयाकरणाः । ४४ मालपुआ इति भाषायाम् । ४५ व्यञ्जनविशेषे । ४६ विडम्बयन्ति । ४७ सभायाम् ।

[1]शठाः शाब्दिकाः पण्डिताः स्युः । तेषां को वाऽपराधः कथयत सततं ये पठन्तीह [2]थोन्तेत्ताथय्याथय्यथ-य्याधिगधिगधिगधिक्थय्यथय्येति शब्दान् ॥ ३ ॥

## सत्तार्किकप्रशंसा ।

अद्भुतस्[3]तर्कपाथोधिरगाधो यस्य वर्धकः । [4]अक्षपादो[5]ऽतमःस्पृष्टस्[6]त्वकलङ्कः [7]कलानिधिः ॥ १॥ अपरीक्षितलक्षणप्रमाणै[8]रपरामृष्टपदार्थसार्थतत्त्वैः । अवशीकृत[9]जैत्रयुक्तिजालैरल[10]मेतैरनधीततर्कविद्यैः ॥ २ ॥ मोहं[10] [11]रुणद्धि विमलीकुरुते च बुद्धिं [12]सूते च संस्कृतपदव्यवहारशक्तिम् । शास्त्रान्तराभ्यसनयोग्यतया युनक्ति तर्कश्रमो न तनुते किमिहोपकारम् ॥ ३ ॥ ज्ञानाब्धिर[13]क्षिचरणः [14]कणभक्षकश्च श्री [15]पक्षिलोऽप्युदयनः स च वर्धमानः । गङ्गेश्वरः शशधरो बहवश्च नव्या ग्रन्थैर्व्य[16]रुन्धत इमे [17]हृदयान्धकारम् ॥ ४ ॥ प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः सारज्ञस्याप्यपरिकलि[18]तन्यायशास्त्रस्य पुंसः। वादारम्भे वदितुमनसो वाक्यमेकं सभायां प्रह्वा [19]जिह्वा भवति कियतीं पश्य कष्टामवस्थाम् ॥ ५ ॥

## असत्तार्किकगर्हणम्।

परामृशन्तो लिङ्गानि व्यभिचारविचारकाः । तार्किका यदि विद्वांसो विटैः[20] किमपराध्यते ॥ १ ॥ गु[21]रोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च । अमी समाघ्रातवितर्कवादाः समागताः कुक्कुट[22]पादमिश्राः ॥ २ ॥ कर्कशतर्कविचारव्यग्रः किं वेत्ति काव्यहृदयानि। ग्राम्य इव कृषिविलग्नश्चञ्चलनयनावचोरहस्यानि ॥ ३ ॥ नैयायिकानां मलिनाम्बराणां जनुर्गतं रा[23]सभचिन्तयैव । ततोऽपि वेश्यास्तनसंनिवेशस्तोतुः कवेः कोऽपि विशेष एव ॥ ४ ॥ न जिघ्रत्या[24]म्नायं स्पृशति न त[25]दङ्गान्यपि सकृत्पुराणं [26]नादत्ते न गणयति किं च स्मृतिगण[27]म् । पठञ्शुष्कं तर्कं पर[28]परिभवार्थोक्तिभिरसौ नयत्यायुः सर्वं निहतपरलोकार्थयतनः ॥ ५ ॥ प्रयत्नैर[29]स्तोकैः परिचितकुतर्कप्रकरणाः परं वाचोवश्यान्कतिपयपदौघान्विदधतः। सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्न लज्जन्ते मन्दाः स्वयमपि तु जिह्रेति[30] विबुधः ॥ ६ ॥ कर्म[31]ब्रह्मविचारणां वि[32]जहतो भोगाप[33]वर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः। प्रत्यक्षं न पुनाति नापहरते पापानि पीलु[34]च्छटा व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति

---

१ मूढाः स्तब्धा वा । २ इदं गानकृतां शब्दानुकरणम् । ३ न्यायशास्त्ररूपसमुद्रः । ४ गौतममुनिः । एष हि महात्मा तत्त्वानुसंधानपरतया निमीलितनेत्रो गच्छन् क्वापि कूपे निमग्नः । तदनु भगवतः प्रसादेन मार्गनिरीक्षणसाधनं तृतीयं नेत्रं पादे लब्धवान् । ततः प्रभृत्यस्य अक्षपादः इत्यभिख्याऽऽसीदिति श्रूयते । न क्षपादः रात्रिप्रवर्त्तकः, अस्मादन्य इति भावः । क्षपां ददातीति क्षपादः । अक्षि नेत्रं तद्रूपाः पादाः किरणा यस्येति वा । ५ न तमसा-अज्ञानेन अन्धकारेण च स्पृष्टः । ६ सर्वथा कलङ्करहितः ईषत् कालिमरूपकलङ्कयुक्तश्च । ७ विद्याविशेषाः कलाः प्रकाशावच्छेदविशेषाश्च तासां निधिः । अत्र श्लेषमूलो व्यतिरेकः । ८ अननुभूत- । ९ विजयसाधनभूत- । १० अबोधम् । ११ विनाशयति । १२ उत्पादयति । १३ अक्षपादः। १४ कणादमुनिः । १५ एतन्नामाऽऽचार्यः। एवमुदयनादयोऽपि न्यायाचार्या ज्ञेयाः । १६ विनाशितवन्तः । १७निगूढमज्ञानम् ।१८ अमीमांसित- । १९ नम्रा अप्रसारिणी ( निष्क्रिया ) २० इति यावत् । षिड्गैः गुदभङ्गकारकैरिति भावः । २१ प्रभाकरस्य । २२ उपहासार्थं पादशब्दान्तत्वेन निर्देशः । २३ गर्दभ- । २४ वेदम् । २५ वेदाङ्गभूतानि व्याकरणादीनि शास्त्राणि । २६ नादत्ते- नाभ्यस्यति । २७ धर्मशास्त्राणि । २८ वादितिरस्कार- । २९ अनल्पैः । ३० लज्जते । ३१ पूर्वोत्तरमीमांसाप्रतिपाद्यार्थावधारणाम् । ३२ त्यजन्तः । ३३ मोक्ष- । ३४ परमाणुपुञ्ज- ।

॥ ७ ॥ हेतुः कोऽपि विशिष्टधी[1]रनुमितौ न ज्ञानयुग्मं[2] मरुत्त्वाचो[3] नेति च मोघवादमुखरा[4] नैयायिकाश्चेद्बुधाः । मेषस्याण्डमियत्पलं बलिभुजो[5] दन्ताः कियन्तस्तथेत्येवं संततचिन्तनैः श्रमजुषो न स्युः कथं पण्डिताः ॥ ८ ॥ साधु व्याकरणं हिताय विशदं काव्यं पिकीगीतवन्मीमांसा श्रुतितत्परा तदनुगं सांख्यं सपातञ्जलम् । त्वं तु न्यायविशुद्धवैदिकविधिव्याकोपबौद्धागमव्याघाताय गिगूढतर्कगहन कामोदमाधास्यसि ॥ ९ ॥ हे हे मित्र जिता मयाऽतिबलिनो विप्रा धनं चार्जितं शेषेभ्यः शरयन्त्रदानमपि सत्संपादितं भूरिशः । ग्रन्थाश्चापि कृताः सुतर्कघटकाः शास्त्राणि संदूष्य वै सोऽहं तर्कविभूषणोऽत्र गहने धात्रा शृगालः कृतः ॥ १० ॥

## सन्मीमांसकप्रशंसनम् ।

भर्ग[6]वदनभ्युपगमनं दैवतचैतन्यनिह्नव[7]श्चैषाम् । कर्मश्रद्धावर्धकतत्प्राधान्यप्रदर्शनायैव ॥ १ ॥ आगम[8]रूपविचारिण्यधिकरणसहस्रशिक्षितविपक्षे । स्वामिनि जैमिनियोगिन्युपरज्यति हृदयमस्मदीयमिदम् ॥ २ ॥ शबर[9]कुमारिलगुरवो मण्डनभवदेवपार्थसारथयः । अन्ये च विश्वमान्या जयन्ति संत्रायमाणतन्त्रास्ते ॥ ३ ॥ नैयायिका वा ननु शाब्दिका वा त्रयीशिरःसु[10] श्रमशालिनो वा । वादाहवे[11] बिभ्रति जैमिनीयन्याये[12]योपरोधे सति मौनमुद्राम् ॥ ४ ॥ आदौ धर्मे प्रमाणं विविधविधिभिदाशेषतां च प्रयुक्तिं पौर्वापर्याधिकारौ तदनु बहुविधं चातिदेशं तथोहम् । बाधं तन्त्रं प्रसङ्गं नयमनयशतैः सम्यगालोचयद्भ्यो भिन्ना मीमांसकेभ्यो विदधति भुवि के सादरं वेदरक्षाम् ॥ ५ ॥

## असन्मीमांसकगर्हणम् ।

ते मीमांसाशास्त्रलोकप्रसिद्धाः सर्वर्षीणां सेहिरे नैव सत्ताम् । चैतन्यस्यापह्नवं देवतानां चक्रुर्विश्वं नश्वरं मन्यमानाः ॥ १ ॥ मीमांसकाः कतिचिदत्र मिलन्ति वेदप्रामाण्यसाधनकृतोऽपि न तेऽभिवन्द्याः । उद्घोषितोऽप्युपनिषद्भिरशेषशेषी ब्रह्मैव नाभ्युपगतः पुरुषोत्तमो यैः ॥ २ ॥

## सद्भिषक्प्रशंसनम् ।

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः[13] कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ रागादिरोगान्सततानुषक्तानशेषकायप्रसृतानशेषान् । औत्सुक्यमोहारतिदाञ्जघान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥ २ ॥ अन्यानि शास्त्राणि विनोदमात्रं प्राप्तेषु वा तेषु न तैश्च किंचित् । चिकित्सितज्योतिषमन्त्रवादाः पदे पदे प्रत्ययमावहन्ति ॥ ३ ॥ मा बोधि वैद्यकमथाऽपि महामयेषु प्राप्तेषु यो भिषगिति प्रथितस्तमेव । आकारयत्य[14]खिल एव विशेषदर्शी लोकोऽपि तेन भिषगेष न दूषणीयः ॥ ४ ॥ मस्ते[15] दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं तप्तायां ज्वरपावकेन च तनौ तान्ते[16] हृषीकव्रजे[17] । दूने[18] बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो

---

१ व्याप्तिविशिष्टपक्षधर्मताज्ञानं विशिष्टज्ञानम् । २ प्रागुक्तज्ञानद्वयम् । ३ त्वगिन्द्रियविषयः । ४ निष्फलजल्पनपराः । ५ करटस्य । ६ ईश्वरस्य कर्तृत्वानङ्गीकरणम् । ७ देवताश्चेतना इति मतस्य निराकरणम् । ८ वेद- । ९ शबरादयो हि मीमांसाशास्त्राचार्याः । १० उपनिषत्सु । ११ शास्त्रार्थसङ्ग्रामे । १२ जैमिनिप्रणीतन्यायविरोधे । १३ झटित्यारोग्यप्रवर्तकक्रियाप्रयोजकत्वात् । १४ आह्वयति । १५ मस्तके । १६ म्लाने क्षीणे वा । १७ इन्द्रियगणे । १८ आर्ते । आरोग्यसम्भावनातो निवृत्त इति भावः ।

विद्यते ॥ ५ ॥ भ्रान्ता वेदान्तिनः किं पठथ शठतयाऽद्यापि चाद्वैतविद्यां पृथ्वीतत्त्वे लुठन्तो विमृशथ सततं कर्कशास्तार्किकाः किम्। वेदैर्नानागमैः किं ग्लपयथ हृदयं श्रोत्रियाः श्रोत्रशूलैर्वैद्यं सर्वानवद्यं विचिनुत शरणं प्राणसंप्रीणनाय ॥ ६ ॥

## असद्भिषग्गर्हणम्।

वैद्यराज नमस्तुभ्यं यमराजसहोदर। यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ १ ॥ वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव। त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ २ ॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः। नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ३ ॥ कषायैरुपवासैश्च कृतामुल्लाघतां नृणाम्। निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ४ ॥ अज्ञातशास्त्रसद्भावाञ्शास्त्रमात्रपरायणान्। त्यजेद्दूराद्भिषक्पाशान्पाशान्वैवस्वतानिव ॥ ५ ॥ मिथ्यौषधैर्हन्त मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः। वैद्या इमे वञ्चितरुग्णवर्गाः पिचण्डभाण्डं परिपूरयन्ति ॥ ६ ॥ नटोऽपि दद्याद्गणकोऽपि दद्यात्संप्रार्थितः पाशुपतोऽपि दद्यात्। वैद्यः कथं दास्यति याच्यमानो यो मर्तुकामादपि हर्तुकामः ॥७ ॥ न धीतोर्विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः। तथाप्येते वैद्या इति तरलयन्तो जडजनानसून्मृत्योर्भृत्या इव वसु हरन्ते गदजुषाम् ॥ ८ ॥ सत्कोणं लोलनेत्रं कुलयुवतिमुखं दृश्यते सानुकम्पै रण्डानामर्धलज्जाञ्चितमधिपुलकं स्पृश्यते पीनमङ्गम्। क्लीबानां खाद्यतेऽन्तश्चिरनिहितधनं काष्ठमूलाग्नितोयैः पूर्वा सिद्धा कलानां सकलगुणनिधिर्वैद्यविद्याऽभिवन्द्या ॥९ ॥

## सद्दैवज्ञप्रशंसनम्।

चतुरङ्गबलो राजा जगतीं वशमानयेत्। अहं पञ्चाङ्गबलवानाकाशं वशमानये ॥ १ ॥ एकासनस्था जलवायुभक्षा मुमुक्षवस्त्यक्तपरिग्रहाश्च। पृच्छन्ति तेऽप्यम्बरचारिचारं दैवज्ञमन्ये किमुतार्थचित्ताः ॥ २ ॥ न दैवं न पित्र्यं च कर्मावसिद्ध्येन्न यत्रास्ति देशे ननु ज्योतिषज्ञः। न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥ ३ ॥ दूतो न संचरति खे न चलेच्च वार्ता पूर्वं न जल्पितमिदं न च संगमोऽस्ति। व्योम्नि स्थितं रविशशिग्रहणं प्रशस्तं जानाति यो द्विजवरः स कथं न विद्वान् ॥ ४ ॥ वृद्धिह्रासौ कुमुदसुहृदः पुष्पवन्तोपरागः शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः। आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भीपुलाकन्यायाज्ज्योतिर्नयगतिविदां निश्चलं मानभावम् ॥ ५ ॥ भानोः शीतकरस्य वापि भुजगग्रासे पुरो निश्चिते तीर्थानामटनं जनस्य घटते तापत्रयोच्चाटनम्। इष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवेद्दृष्टे तु व्यसनेऽत्र तत्परिहृतिः कर्तुं जपाद्यैः क्षमा ॥ ६ ॥

---

१ वेदपाठकाः। २ कर्णकटुभिः। ३ सर्वेषु मध्ये निर्मलम्। ४ रक्षकम्। ५ एतेन यमादपि व्यतिरेकः सूचितः। ६ निहत-। ७ असद्भिषजि। ८ निहितमारणकार्यकर्तृत्वगौरवः। ९ अरोगताम्। १० शास्त्रतत्त्वज्ञानशून्यान्। ११ निन्दितवैद्यान्। १२ यमरूपान् यमसम्बन्धिनो दूतानिव वा। १३ प्रतारितरोगि--। १४ उदर-। १५ पारदादेः। १६ भ्रामयन्तः। १७ प्राणान्। १८ यमराजस्य। १९ धनम्। २० रोगग्रस्तानाम्। २१ मोक्षकामाः। २२ आकाशस्थग्रहसंक्रमणम्। २३ कथितम्। २४ क्षयवृद्धी। २५ चन्द्रमसः। २६ सूर्याचन्द्रमसोर्ग्रहणम्। २७ उदयास्तभावौ। २८ स्थालीपुलाकवत्। स्थल्यां पच्यमान एकस्य कणस्य पाके दृष्टे सर्वेषामन्येषां तथात्वमितिबोधरीतिरिवेति भावः। २९ ग्रहणे। ३० दुःखे। ३१ दुःखपरिहरणम्।

## असद्दैवज्ञगर्हणम् ।

गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः । विविधभुजङ्गक्रीडासक्तां गृहिणीं न जानाति ॥ १ ॥ गणिकागणकौ समानधर्मौ निजपञ्चाङ्गनिदर्शकावुभौ । जनमानसमोहकारिणौ तौ विधिना वित्तहरौ विनिर्मितौ ॥ २ ॥ असुखमथ सुखं वा कर्मणां पक्तिवेलास्वहह नियतमेते भुञ्जते देहभाजः । तदिह पुरत एव प्राह मौहूर्तिकश्चेत्कथय फलममीषामन्ततः किं ततः स्यात् ॥ ३ ॥ विलिखति सदसद्वा जन्मपत्रं जनानां फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम् । न फलति यदि लग्नद्रष्टुरेवाह मोहं हरति धनमिहैवं हन्त दैवज्ञपाशः ॥ ४ ॥ प्रमोदे खेदे वाप्युपनमति पुंसां विधिवशान्मयैवं प्रागेवाभिहितमिति मिथ्या कथयति । जनानिष्टानिष्टाकलनपरिहारैकनिरतानसौ मेषादीनां परिगणनयैव भ्रमयति॥५॥ ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गापवादात्मभिः कल्लोलैर्निबिडे कणान्कतियालँब्ध्वा कृतार्था इव । दीर्घायुःसुतसंपदादिकथनैर्दैवज्ञपाशा इमे गेहं गेहमनुप्रविश्य धनिनां मोहं मुहुः कुर्वते ॥ ६ ॥

## सत्पौराणिकप्रशंसा ।

नानाकथाप्रबन्धोपदेशव्याजेन दुर्धियाम् । अज्ञानध्वान्तसंहर्तॄन् स्तुमः पौराणिकान् मुहुः ॥ १ ॥ समस्तश्रुततत्त्वज्ञान् वाग्मिनः सिद्धदर्शकान् । धर्मादिपथबोद्धॄंस्तान् स्तुमः पौराणिकान् मुहुः ॥ २ ॥

## असत्पौराणिकगर्हणम् ।

पौराणिकानां व्यभिचारदोषो नाशङ्कनीयः कृतिभिः कदाचित् । पुराणकर्ता व्यभिचारजातस्तस्यापि पुत्रो व्यभिचारजातः ॥ १ ॥

## सत्पुरोहितप्रशंसा ।

पुरस्तादेव सर्वेषां हितानार्थनिवर्त्तकाः । सर्वतत्त्वानुभविनः कैर्न वन्द्याः पुरोहिताः ॥ १ ॥ कुलाचार्या महात्मानः सत्यवाचो जितेन्द्रियाः । यजमानहिताधाने दक्षा वन्द्याः पुरोहिताः ॥ २ ॥

## असत्पुरोहितगर्हणम् ।

पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च । आद्याक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम् ॥ १ ॥

## सत्कायस्थप्रशंसनम् ।

यस्य मन्त्रोपदेशेन राज्यतन्त्राभिरक्षणम् । सर्वाभीष्टपरोऽलुब्धः कायस्थः कैर्न शस्यते ॥ १ ॥

## असत्कायस्थगर्हणम् ।

काकाल्लौल्यं यमात्क्रौर्यं स्थपतेर्दृढघातिताम् । आद्याक्षरणि संगृह्य कायस्थः केन निर्मितः ॥ १ ॥ कायस्थेनोदरस्थेन मातुरामिषशङ्कया । अन्त्राणि यन्न भुक्तानि तत्र हेतुरदन्तता ॥ २ ॥ कलमाग्रनिर्गतमषीबिन्दुव्याजेन साञ्जनाश्रुकणा । कायस्थलुण्ठ्यमाना रोदिति खिन्नेव राजश्रीः ॥ ३ ॥

## सत्पुरुषप्रशंसनम् ।

अहो किमपि चित्राणि चरित्राणि महात्मनाम् । लक्ष्मीं तृणाय मन्यन्ते तद्भरेण नमन्त्यपि ॥ १ ॥

---

१ परिणामावसरेषु । २ चातुर्यम् । ३ कुत्सितो ज्योतिषिकः । ४ मोहयति ।

नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः । येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ २ ॥ अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् । अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥ ३ ॥ वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ४ ॥ गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि । क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥ ५ ॥ गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा । पापं तापं च दैन्यं च घ्नन्ति सन्तो महाशयाः ॥ ६ ॥ छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः । मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥७॥ संपदो महतामेव महतामेव चापदः । वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित्॥८॥ सम्पदो विपदो वाऽपि परेषामेव कारणात् । वर्धते क्षीयते वाऽपि परार्थमेव चन्द्रमाः ॥ ९ ॥ अपकुर्वन्नपि प्रायः प्राप्नोति महतः फलम् । और्वं दहन्तमेवाग्निं संतर्पयति सागरः ॥ १० ॥ महतां प्रार्थनेनैव विपत्तिरपि शोभते । दन्तभङ्गो हि नागानां श्लाघ्यो गिरिविदारणे ॥ ११ ॥ गुणग्रामाविसंवादि नामापि हि महात्मनाम् । तथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ १२ ॥ वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् । कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥ १३ ॥ नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः ॥ १४ ॥ महात्मानोऽनुगृह्णन्ति भजमानान्रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १५ ॥ मुखेन नोद्गिरत्यूर्ध्वं हृदये न नयत्यधः । जरयत्यन्तरे साधुर्दोषं विषमिवेश्वरः ॥ १६ ॥ विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः । आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥ १७ ॥ मान्या एव हि मान्यानां मानं कुर्वन्ति नेतरे । शंभुर्बिभर्ति मूर्ध्नीन्दुं स्वर्भानुस्तं जिघृक्षति ॥ १८ ॥ सुजनं व्यजनं मन्ये चारुवंशसमुद्भवम् । आत्मानं च परिभ्राम्य परतापनिवारणम् ॥ १९ ॥ उदये सविता रक्तो रक्तश्चास्तमये तथा । संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २० ॥ आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ २१ ॥ सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् । असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ २२ ॥ हरेः पदाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् । स्पर्धाऽपि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥ २३ ॥ साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् । न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ २४ ॥ नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः । अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ २५॥ स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम् । भङ्गेनापि मृणालानामनुबध्नन्ति तन्तवः ॥ २६ ॥ परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् । धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥ २७ ॥ सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम् । आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ २८ ॥ पतन्ति व्यसने दैवाद्दारुणे दारुणात्मनि । संवर्मयति वज्रेण धैर्येण महतां मनः ॥ २९ ॥ स्वतः सन्तः प्रकाशन्ते गुणा न परतो नृणाम् । आमोदो न हि कस्तूर्याः शपथेन विभाव्यते ॥ ३० ॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः । प्रायेण हि सुवृत्तानामस्थायिन्यो विपत्तयः ॥ ३१ ॥ सकृत्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि । तथा त्वनार्यः पतति

---

१ उदारपुरुषाणां पुष्पाणां च । २ परस्मिन् दिवसे । ३ विकारः । ४ सर्पसम्बन्धशून्याः । ५ सुखेनारोढुं शक्याः । ६ सम्पदे । ७ पर्वत- । ८ गुणसमूहानुरूपम् । ९ निर्गुणः । १० असहिष्णुः । ११ दयां कुर्वन्ति । १२ पर्वतत उद्भूता नद्यः । १३ जीर्णतां नयति । १४ राहुः । १५ भक्षयितुं काङ्क्षते । १६ वेणु- । कुल- । १७ अश्वस्य । १८ गर्दभ- । १९ विकारं क्षोभमिति यावत् । २० असज्जनाः । २१ कमल- । २२ सद्वर्मच्छन्नमिव करोति ।

मृत्पिण्डपतनं यथा ॥ ३२ ॥ दन्तिदन्तसमानं हि निःसृतं महतां वचः । कूर्मग्रीवेव नीचानां पुनरायाति याति च ॥ ३३ ॥ श्लोकस्तु श्लोकतां याति यत्र तिष्ठन्ति साधवः । लकारो[1] लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः ॥ ३४ ॥ किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः । न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ३५ ॥ काकैः सह विवृद्धस्य कोकिलस्य कला[2] गिरः । खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ३६ ॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः । चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ ३७ ॥ विवेकः सह संयत्या विनयो विद्यया सह । प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ ३८ ॥ उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम् । सज्जनानां स्वभावोऽयं तेनेन्दुः शिशिरीकृतः ॥ ३९ ॥ निर्गुणेष्वपि सत्त्वेषु[3] दयां कुर्वन्ति साधवः । न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मसु[4] ॥ ४० ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ४१ ॥ हृदयानि सतामेव कठिनानीति मे मतिः । खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्[5] यतः ॥ ४२ ॥ अपेक्षन्ते न च स्नेहं[6] न पात्रं[7] न दशान्तरम्[8] । सदालोकहिते[9] युक्ता रत्नदीपा इवोत्तमाः ॥ ४३ ॥ परैराहन्यमानोऽपि सन्नासत्तां व्रजेत् कचित् । चन्दनः सुरभिं सूते न दुर्गन्धं कदाचन ॥ ४४ ॥ ब्रूतेऽन्यस्यासतोऽप्यार्यो गुणान्दोषांस्तु दुर्जनः । तुल्येऽप्यसत्त्वे किं त्वेको[10] गच्छत्यूर्ध्वमधोऽपरैः[11] ॥ ४५ ॥ सन्तो मनसि कृत्वैव प्रवृत्ताः कृत्यवस्तुनि । कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं[12] रविः ॥ ४६ ॥ आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः । परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥ ४७ ॥ सन्त एव सतां नित्यमापदुद्धरणक्षमाः । गजानां पङ्कमग्नानां गजा एव धुरन्धराः ॥ ४८ ॥ नूनं दुग्धाब्धिमन्थोत्थाविमौ सुजनदुर्जनौ । किंत्विन्दोः सोदरः पूर्वः कालकूटस्य चेतरः ॥ ४९ ॥ गोत्रस्थितिं[13] न मुञ्चन्ति सदा सन्नतिमाश्रिताः । उदन्वन्तश्च[14] सन्तश्च महासत्त्वतयाऽनया[15] ॥ ५० ॥ विगृहीतः पदाक्रान्तो भूयो भूयश्च खण्डितः । माधुर्यमेवावहति सुश्लोक इव सज्जनः ॥ ५१ ॥ प्रकृतिप्रत्ययोपेतः[16] सद्वृत्तः[17] साधुसम्मतः[18] । अर्थार्पण[19]समर्थश्च सुश्लोक इव सज्जनः ॥ ५२ ॥ गुणोऽपि नूनं दोषाय दुर्विधातोः खलस्य च । सन्मार्गसिद्धये वृद्धिर्मृजेः[20] साधुजनस्य च ॥ ५३ ॥ मुञ्चन्तश्चापलरसं प्रस्थिताः पावने पथि । घना इवार्द्रहृदयाः सन्तो जीवनहेतवः ॥ ५४ ॥ धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥ ५५ ॥ साधुरेव प्रवीणः स्यात्सद्गुणामृतचर्वणे । नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥ ५६ ॥ उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः[21] । मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥ ५७ ॥ सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् । पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ ५८ ॥ स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् । न त्यजन्ति रुतं[22] मञ्जु[23] काकसम्पर्कतः पिकाः ॥ ५९ ॥ सम्पत्तौ कोमलं चित्तं साधोरापदि कर्कशम् । सुकुमारं मधौ[24] पत्रं तरोः स्यात्कठिनं शुचौ[25] ॥ ६० ॥ स्वभावं न जहात्येव

---

१ श्लोकशब्दतो लकारपृथक्करणे शोकरूपता सम्पद्यते । २ मधुराः । ३ प्राणिषु । ४ गृहेषु । ५ किञ्चित् । ६ तैलं सौहार्दं च । ७ योग्यम् । भाजनं च । ८ अन्यामवस्थाम् । वर्तिं च । ९ सदा सतां वा लोकानां हिते सदा य आलोकः प्रकाशः स एव हितं तत्र च । १० आर्यः । ११ अनार्यः । १२ शोभाम् । १३ कुलाचारं गिरिस्थितिं च । १४ सागराः । १५ महाप्राणिसम्भृततया महता धैर्येण सम्पन्नतया च । १६ प्रकृत्या स्वभावेन प्रत्ययोपेतः विश्वासपात्रम् । प्रकृतयः-प्रातिपदिकादिरूपाः प्रत्ययाः-सुबादिरूपाः तदुपेतश्च । १७ सदाचारः प्रशस्तच्छन्दोनिबद्धश्च । १८ साधुभिः साधुरिति वा सम्मतः । १९ धनदान- । वाच्यबोधन- । २० मृजिधातोः । २१ पामरः । २२ शब्दम् । २३ मधुरम् । २४ वसन्ते । २५ ग्रीष्मे ।

साधुरापद्गतोऽपि सन्। कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥ ६१ ॥ अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम्। विधोर्विधुंतुदास्कन्दविपत्कालोऽपि सुन्दरः ॥ ६२ ॥ विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः। स्ववर्मबन्धान्नो शुद्धिर्ज्ञायते कर्षणं विना ॥ ६३ ॥ दृष्टदुर्जनदौरात्म्यः सज्जने रज्यते जनः। आरुह्य पर्वतं पान्थः सानौ[1] निर्वृति[2]मेत्यलम् ॥ ६४ ॥ क्षयक्षयिणि साप्ययि[3] भोगे रज्यन्ति नोत्तमाः। संत्यज्याम्भोजकिञ्जल्कं[4] न प्रार्थयति शैवलम् ॥ ६५ ॥ उत्तमं सुचिरं नैव विपदोऽभिभवन्त्यलम्। राहुग्रसनसम्भूतिः क्षणं विच्छाययेद्विधुम् ॥ ६६ ॥ प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम्। चण्डाश्चण्डातपात्पादा हिमांशोरमृतोत्सृजः ॥ ६७ ॥ तुल्यं परोपतापित्वं क्रुद्धयोः साधुनीचयोः। न दाहे ज्वलतोर्भिन्नं चन्दनेन्धनयोः क्वचित् ॥ ६८ ॥ महतां तादृशं तेजो यत्र शाम्यन्त्यनोर्जसः[5]। अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ६९ ॥ आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु। व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ७० ॥ न गुणाः क्वापि पूज्यन्ते सत्स्वीकारो हि गौरवम्। पीतिमा गुणसाम्येऽपि हरिद्रास्वर्णयोरिव ॥ ७१ ॥ आः किमर्थमिदं चेतः सतामम्भोधिदुर्भरम्। इति क्रुधेव दुर्वेधाः परदुःखैरपूरयत् ॥७२॥ काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः। सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥ ७३ ॥ दोषानपि गुणीकर्तुं दोषीकर्तुं गुणानपि। शक्तो वादी न तत्तथ्यं दोषा दोषा गुणा गुणाः ॥ ७४ ॥ गुणराशिमहाभारनिर्भरापूरितान्तराः। सन्तो गौरवमायान्ति यदि तत्र किमद्भुतम् ॥ ७५ ॥ स्वात्मन्येव लयं यातु तादृशो गुणिनां गुणः। स्वयं प्रख्याप्यमानोऽपि यस्तृणाय न मन्यते ॥ ७६ ॥ सुवृत्तस्यैकरूपस्य परप्रीत्यै धृतोन्नतेः। साधोः स्तनयुगस्येव पतनं कस्य तुष्टये ॥ ७७ ॥ च्युतोऽप्युद्गच्छति पुनः प्रज्ञावान्न तु मूढधीः। कन्दुकः पतनोत्थायी न तु कान्ता-कुचद्वयी ॥ ७८ ॥ नालोकः क्रियते सूर्ये भूः प्रतीपं न धार्यते। न हि प्रत्युपकाराणामपेक्षा सत्सु विद्यते ॥ ७९ ॥ दृष्टाऽपि दृश्यते दृश्यं श्रुत्वाऽपि श्रूयते पुनः। सत्यं न साधुवृत्तस्य दृश्येते पुनरुक्तता ॥८०॥ सत्पक्षा ऋजवः शुद्धाः सफला गुणसेविनः। तुल्या अपि गुणैश्चित्रं सन्तः सन्तः शराः शराः ॥ ८१ ॥ लाभप्रणयिनो नीचा मानकामा मनस्विनः। मँद्गुः[6] सरसि मत्स्यार्थी हंसस्येष्टा प्रसन्नता ॥ ८२ ॥ परदुःखं समाकर्ण्य स्वभावसरलो जनः। उपकारासमर्थत्वात्प्राप्नोति हृदये व्यथाम् ॥८३॥ वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता। निर्दम्भता[7] सदाचारे स्वभावोऽयं महात्मनाम् ॥ ८४ ॥ न कदाचित्सतां चेतः प्रसरत्यघकर्मसु। जलेषु द्रुतमप्यन्तः सर्पिराश्यानतां[8] व्रजेत् ॥ ८५ ॥ सागसेऽपि[9] न कुप्यन्ति कृपया चोपकुर्वते। बोधं स्वस्यैव नेच्छन्ति ते विश्वोद्धरणक्षमाः ॥ ८६ ॥ साभिमानमसंभाव्यमौचित्यच्युतमप्रियम्। दुःखावमा-नदीनं वा न वदन्ति गुणोन्नताः ॥ ८७ ॥ आपत्स्वेव हि महतां शक्तिरभिव्यज्यते[11] न संपत्सु। अगुरोस्तथा न गन्धः प्रागस्ति यथाऽग्निपतितस्य ॥ ८८ ॥ शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः। विवराणि मुद्रयन्द्रा[12]गूर्णायुरिव सज्जनो जयति ॥ ८९ ॥ तरुमूलादिषु निहितं जलमाविर्भवति पल्लवाग्रेषु। निभृतं[13] यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः

---

१ राहुकर्तृकपीडन-। २ प्रस्थे। ३ शान्तिम्। ४ निश्चितक्षये। ५ केसरम्। ६ निस्तेजसः। ७ पक्षिविशेषः। ८ निष्कपटता। ९ घृतम्। १० सापराधाय। ११ प्रकटिता जायते। १२ झटिति। १३ गुप्तम्।

॥ ९० ॥ संपदि यस्य न हर्षो विपदि विषादो रणे[1] च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ९१ ॥ दुर्जनवचनाङ्गारैर्दग्धोऽपि न [2]विप्रियं वदत्यार्यः[3] । अगुरुरपि दह्यमानः स्वभावगन्धं परित्यजति किं नु ॥ ९२ ॥ अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदार[4]परितुष्टैः । परपरिवाद[5]निवृत्तैः क्वचित्क्वचिन्मण्डिता[6] वसुधा ॥ ९३ ॥ पतितोऽपि राहुवदने तरणि[7]र्बोधयति[8] पद्म[9]खण्डानि । भवति विपद्य[10]पि महतामङ्गीकृतवस्तु[11]निर्वाहः ॥ ९४ ॥ छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके । इति विमृशन्तः सन्तः[12] संतप्यन्ते न लोकेऽस्मिन् ॥ ९५ ॥ वासर[13]गम्यमनूरो[14]रम्बर[15]मवनी[16] च वामनै[17]कपदा । जलधिरपि पोतलङ्घ्यः[18] सतां मनः केन[19] तुलयामः ॥ ९६ ॥ गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम् । जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति ॥ ९७ ॥ निजपद[20]गतिगुणरञ्जितजगतां करिणां च सत्कवीनां च । वहतामपि महिमानं[21] शोभायै सज्जना एव ॥ ९८ ॥ बाणं[22] हरि[23]रिव कुरुते सुजनो बहु[24]दोषमप्यदोष[25]मिव । यावद्[26]दोषं जाग्रति[27] मलिम्लुचा[28] इव पुनः पिशुनाः ॥ ९९ ॥ महतोः[29] सुवृत्त[30]योः सखि हृदय[31]ग्रहयोग्ययोः समस्थितयोः । सज्जनयोः स्तनयोरपि निरन्तरं संगतं भवति ॥ १०० ॥ महतो[32]ऽपि हि विश्वासान्महाशया[33] दधति नाल्पमपि लघवः[34] । संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि ॥ १०१ ॥ वैगुण्येऽपि हि महतां विनिर्मितं भवति कर्म शोभायै । दुर्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यम् ॥१०२॥ सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा । न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः॥ १०३॥ भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य । वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्योतः ॥ १०४ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करणं परोपकरणं येषां केषां न ते वन्द्याः ॥१०५॥ उपकारमेव तनुते विपद्गतः सद्गुणो महताम् । मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ १०६ ॥ गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् । तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ १०७ ॥ अनवरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् । आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥ १०८ ॥ न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ १०९ ॥ इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः । तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ ११० ॥ उपचरितव्याः सन्तो यद्यपि कथयन्ति नैकमुपदेशम् । यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥१११॥

---

१ सङ्ग्रामे । २ अप्रियम् । ३ सज्जनः । ४ स्त्री- । ५ निन्दन- । ६ अलङ्कृता । ७ दिनकरः । ८ विकसितानि करोति । ९ कमलवनानि । १० आपत्तिकालेऽपि किं पुनः सम्पत्तिकाल इति भावः । ११ इदमुपलक्षणं कार्यमात्रस्य । १२ तरुवच्छिद्यमानाश्चन्द्रवत् क्षीयमाणाश्चापि सज्जना इति भावः । १३ एकनैव दिनेनोल्लङ्घनीयमित्यर्थः । १४ ऊरुहीनस्यापि सूर्यसारथेः । १५ आकाशं निराधारस्वरूपोऽपि देशः । १६ त्रिभुवनराजबलिराज्यगता समस्ता पृथिवी अपीत्यर्थः । १७ वामनेनैकेनैव पदेन परिमेया । १८ पोतेन लङ्घ्यः । १९ अनूरोरेकवासरगम्यत्वेनाम्बरमपि न सतां मनसा समम् । एवम्पृथिव्यपि न समा वामनेनैकपदेनैव तस्या आक्रान्तत्वात् । तथा सागरोऽपि न समः । तस्यापि पोतेन लङ्घ्यत्वात् । सतां मनो हि न तथा वासरगम्यं न च परिमेयं न वोल्लङ्घ्यम्, किन्तु तथात्वतोऽतीव दूरमिति भावः । २० पादेति सुप्तिङन्तेति चार्थः । २१ बहु परिमाणम्, प्रतिष्ठां च । २२ तदाख्यमसुरम् । २३ कृष्णः । २४ बहुभुजम् अनेकावद्यं च । २५ अभुजम् निरस्तदोषमिवेत्यर्थः । २६ समस्तदोषम् । समस्तां रात्रिं च यावत् । २७ तद्विषयस्य गवेषणाशालिनो भवन्ति । २८ चौराः । २९ उत्तमयोः बहुपरिमाणयोरित्यर्थश्च । ३० सदाचारशालिनोः सुवर्तुलयोश्च । ३१ आलिङ्गनोचितयोः ग्रहणोचितयोश्च । ३२ श्रेष्ठान् महापरिमाणांश्च । ३३ शिष्टा गम्भीराश्च । ३४ तुच्छा अल्पपरिमाणाश्च ।

सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति[1] मुखं कुठारस्य ॥ ११२ ॥ अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः । हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥ ११३ ॥ अनुकुरुतः[2] खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः । विदधाति रन्ध्रमेको[3] गुणवानन्यस्तु पिदधाति[4] ॥ ११४ ॥ आस्तामन्यत्सुजनाः परोपकारैककरणदुर्ललिताः । संतापितपिशुनेषु स्वगुणेष्वपि हन्त खिद्यन्ते ॥ ११५ ॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो[5] मेघः । नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ११६ ॥ यदमी दशन्ति दशना रसना तत्स्वादमनुभवति । प्रकृतिरियं विमलानां क्लिश्यन्ति यदन्यकार्येषु ॥ ११७ ॥ तदपकृतं विधिनाऽर्थिषु यत्सन्तः स्वल्पसंपदो विहिताः । तुच्छे पयसि घनानां सीदति बत जीवलोकोऽयम् ॥ ११८ ॥ अमृतं किरति[6] हिमांशुर्विषमेव फणी समुद्गिरति । गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ ११९ ॥ गुणिनामपि निजरूपप्रतिपत्तिः[7] परत एव संभवति । स्वमहिमदर्शनमक्ष्णोर्मुकुरतले[8] जायते यस्मात् ॥ १२० ॥ उत्कर्षवान्निजगुणो यथा यथा याति कर्णमन्यस्य । धनुरिव सुवंशजन्मा[9] तथा तथा सज्जनो नमति ॥ १२१ ॥ दुर्जनवदनविनिर्गतवचनभुजङ्गेन[10] सज्जनो दष्टः । तद्विषनाशनिमित्तं साधुः संतोषमौषधं पिबति ॥ १२२ ॥ कमठकुलाचलदिग्गजफणिपतिविधृताऽपि[11] चलति वसुधेयम् । प्रतिपन्नममलमनसां[12] न चलति पुंसां युगान्तेऽपि[13] ॥ १२३ ॥ अन्तः कठुरपि लघुरपि[14] सद्वृत्तं[15] यः पुमान्न संत्यजति । स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥ १२४ ॥ अद्यापि दुर्निवारं स्तुतिकन्या[16] भजति कौमारम्[17] । सद्भ्यो न रोचते सा सन्तोऽप्यस्यै न रोचन्ते ॥ १२५ ॥ मूकः[18] परापवादे परदारनिरीक्षणेऽप्यन्धः । पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥ १२६ ॥ पेशलमपि[19] खलवचनं दहतितरां मानसं सुतत्त्वविदाम् । परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ १२७ ॥ भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे । चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ १२८ ॥ उपरि करवालधाराकाराः[20] क्रूरा भुजंगमपुंगवाः । अन्तः साक्षाद्द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥ १२९ ॥ स्वस्थानादपि विचलति मज्जति जलधौ च नीचमपि भजते । निजपक्षरक्षणमनाः सुजनो मैनाकशैल[21] इव ॥ १३० ॥ दुर्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति प्रतिपर्व तपनवासी निःसृतमात्रः शशी शीतः ॥ १३१ ॥ विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः । क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ॥ १३२ ॥ खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते । एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥ १३३ ॥ न विमोचयितुं शक्यः क्षमां महान्मोचितो यदि कथंचित् । मन्दरगिरिरिव हि तलं निवर्तते न तु स समवाप्य ॥ १३४ ॥ स्वाधीनैव समृद्धिर्जनोपजीव्यत्वमुच्छ्रयश्छाया । सत्पुंसो मरुभूरिव जीवनमात्रं समाशास्यम् ॥ १३५ ॥ सर्वस्य सर्वदाऽपि स्पर्शनयोगेन तापमपनेतुम् । सुजनस्य व्यजनस्य च शक्तिमसंगृह्णतः पश्य ॥ १३६ ॥ किं मधुना किं विधुना किं सुधया किं च वसुधयाऽखिलया । यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयो-

---

१ सुरभितं करोति । २ साम्यं भजतः । ३ छिद्रम् । ४ आच्छादयति । ५ निःशब्दः । ६ वर्षति । ७ ज्ञानम् । ८ दर्पणे । ९ वेणु- । कुल- । १० एतेन वदनस्य वल्मीकत्वं व्यज्यते । ११ कच्छप- । १२ शुद्धान्तःकरणानाम् । १३ प्रलयेऽपि । १४ अमहान् अत्याढ्यताशून्यः । १५ सदाचरणम् । उत्तमवर्तुलतां च । १६ प्रशंसारूपा कन्या । १७ कुमारिकात्वम् । १८ अजिह्वः । १९ मृदुलम् । २० खड्गसदृशतीक्ष्णाः । २१ स्तब्ध इति शेषः । २२ संतापम् ।

स्यनम् ॥१३७॥ ते धन्यास्ते कृतिनः श्लाघ्या तेषां हि जन्मनोत्पत्तिः । यैरुज्झितात्मकार्यैः सुहृदामर्था हि साध्यन्ते ॥१३८॥ स्वल्पाऽपि साधुसंपद्भोग्या महतां न पृथ्व्यपि खलश्रीः । सारसमेव पयस्तृष्णमपहरति न वारिधेर्जातु ॥ १३९ ॥ दोषो गुणाय गुणिनां महदपि दोषाय दोषिणां सुकृतम् । तृणमिव दुग्धाय गवां दुग्धमिव विषाय सर्पाणाम्॥१४०॥विषमगता अपि न बुधाः परिभवमिश्रां श्रियं हि वाञ्छन्ति । न पिबन्ति भौममम्भः सरजसमिति चातका एते ॥ १४१ ॥ योग्यतयैव विनाशं प्रायोऽनार्येषु यान्ति गुणवन्तः । स्फुटवचना एव शुकाः पञ्जरबन्धं निषेवन्ते ॥ १४२ ॥ निर्गुणमप्यनुरक्तं प्रायो न समाश्रितं जहति सन्तः । सह वृद्धिक्षयभाजं वहति शशाङ्कः कलङ्कमपि ॥ १४३ ॥ अन्त्यावस्थोऽपि बुधः स्वगुणं न जहाति जातिशुद्धतया । न श्वेतभावमुज्झति शङ्खः शिखिभुक्तमुक्तोऽपि ॥ १४४ ॥ साप्तपदीनं सख्यं भवेत्प्रकृत्या विशुद्धचित्तानाम् । किमुतान्योन्यगुणकथाविस्रम्भनिबद्धभावानाम् ॥ १४५ ॥ स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः । त्रयमपि येषां सदृशं हृदयं वचनं तथाऽऽचारः ॥ १४६ ॥ गुणिनः समीपवर्ती पूज्यो लोकस्य गुणविहीनोऽपि । विमलेक्षणप्रसङ्गादञ्जनमाप्नोति काणाक्षि ॥१४७॥ वृजिनं नीतोऽपि महान् विजहाति कदाऽपि नोपकारित्वम् । छिन्नो घृष्टोऽपि पटीरः सौरभमेवोद्गिरत्यमितः ॥ १४८ ॥ अगुरोरपि सत उच्चैः प्रशंसनं तद्गुणा वितन्वन्ति । अगुरुर्ज्वलनेऽप्यस्तः सौरभमिषतो गुणान् वमति ॥ १४९ ॥ सहसिद्धमिदं महतां धनेष्वनास्था गुणेषु कृपणत्वम् । परदुःखे कातरता महच्च धैर्यं स्वदुःखेषु ॥ १५० ॥ उपकृतिसाहसिकतया क्षतिमपि गणयन्ति नो गुणिनः । जनयन्ति हि प्रकाशं दीपशिखाः स्वाङ्गदाहेन ॥ १५१॥ उपकर्तुमप्रकाशं क्षन्तुं न्यूनेष्वयाचितं दातुम् । अभिसंधातुं च गुणैः शतेषु केचिद्विजानन्ति ॥ १५२ ॥ मा भूत्सज्जनयोगो यदि योगो मा पुनः स्नेहः । स्नेहो यदि विरहो मा यदि विरहो जीविताशा का ॥ १५३ ॥ अम्बरमनूरुलङ्घ्यं वसुन्धरा साऽपि वामनैकपदा । अब्धिरपि पोतलङ्घ्यः सतां मनः केन तुल्यं स्यात् ॥ १५४ ॥ किमपेक्ष्य फलं पयोधरान्ध्वनतः प्रार्थयते मृगाधिपः। प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ १५५ ॥ वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः । किमपैति रजोभिरौर्वरैरवकीर्णस्य मणेर्महार्घता ॥ १५६ ॥ प्रकटान्यपि नैपुणं महत्पदवाच्यानि चिराय गोपितुम् । विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥ १५७ ॥ किमिवाखिललोककीर्तितं कथयत्यात्मगुणं महामनाः । वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ १५८ ॥ विसृजन्त्यविकत्थिनः परे विषमाशीविषवन्नराः क्रुधम् । दधतोऽन्तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥ १५९ ॥ जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः । विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥ १६० ॥ इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता । उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ १६१ ॥ सावलेपमुपलिप्सिते परैरभ्युपैति विकृतिं रजस्यपि । अर्थितस्तु न महान्समीहते जीवितं किमु धनं धनायितुम् ॥ १६२ ॥ आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने । छेदतापनविघर्षताडनैर्नान्यभावमुपयाति काञ्चनम् ॥ १६३ ॥ चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासया । सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ १६४ ॥ दोष-

---

१ सुकृतिनः । २ दुष्टेषु । ३ त्यजन्ति । ४ सप्तभिः पदैः प्राप्यमाणम् । ५ स्वभावेन । ६ आकाशम् । ७ तरणि- । ८ गर्जतः । ९ क्षीयते । १० छन्नस्य । ११ अनात्मप्रशंसाकारिणः । १२ सर्प- । १३ सुधियः । १४ धैर्य- । १५ गर्वम् । १६ लुब्धे । १७ विकारम् ।

जातमवधीर्य[1] मानसे धारयन्ति गुणमेव सज्जनाः । क्षारभावमपनीय गृह्णते वारिधेः सलिलमेव वारिदाः ॥ १६५॥ सज्जनस्य हृदयं नवनीतं यद्वदन्ति कवयस्तदलीकम्[2] । अन्यदेहविलसत्परितापात्सज्जनो द्रवति नो नवनीतम्[3] ॥ १६६ ॥ उपकारिणि वीतमत्सरे वा सदयत्वं यदि तत्र कोऽतिरेकः[4] । अहिते सहसाऽपराद्धलब्धे सघृणं यस्य मनः सतां स धुर्यः[5] ॥ १६७ ॥ तुङ्गात्मनां तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः । धाराधरा एव धराधराणां निदाघदाहं शमितुं[6] न नद्यः[7] ॥ १६८ ॥ प्रकाममभ्यस्यतु नाम विद्या सौजन्यमभ्यासवशादलभ्यम् । कर्णौ सपत्न्यः प्रविशालयेयुर्विशालयेदक्षियुगं न कोऽपि ॥ १६९ ॥ सन्तोऽपि सन्तः क्व किरन्तु तेजः क्व नु ज्वलन्तु क्व ननु प्रथन्ताम् । विधाय रुद्धा ननु वेधसैव ब्रह्माण्डकोशे घटदीपकल्पाः ॥ १७० ॥ प्रसादमाधुर्यगुणोपपन्ना यत्नादनौचित्यपराङ्मुखानाम् । अर्थाः कवीनामिव सज्जनानां सर्वस्य सर्वावसरोपयोगाः ॥ १७१ ॥ वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति । एवं कुलीना व्यसनाभिभूता न नीचकर्माणि समाचरन्ति ॥ १७२ ॥ अहो महत्त्वं महतामपूर्वं विपत्तिकालेऽपि परोपकारः । यथाऽऽस्यमध्ये[9] पतितोऽपि राहोः कलानिधिः पुण्यचयं ददाति ॥ १७३ ॥ पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः । नादन्ति सस्यं खलु वारिवाहाः[10] परोपकाराय सतां विभूतयः ॥ १७४ ॥ रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः[11] किं परोपकाराय सतां विभूतयः॥१७५॥जहाति नासत्पुरुषं न दोषः स हन्त तत्रैव दृढप्रतिष्ठः । जले गृहीतेऽपि न सागरस्य क्षारोदकत्वं जलदान् प्रयाति ॥१७६॥ श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः। यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गाद्विमुखाः प्रयान्ति॥१७७॥ सन्तस्तृणोत्सारणमुत्तमाङ्गात्सुवर्णकोट्यर्पणमामनन्ति । प्राणव्यये वापि कृतोपकाराः खलाःपरे वैरमिहोद्वहन्ति ॥ १७८ ॥ कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं[12] बन्धनशृंखला इव । मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ १७९ ॥ क्षारं जलं वारिमुचः पिबन्ति तदेव कृत्वा मधुरं वमन्ति । सन्तस्तथा दुर्जनदुर्वचांसि पीत्वा च सूक्तानि समुद्गिरन्ति ॥१८० ॥ अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् । सुधांशुरेष स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥ १८१ ॥ कर्णेजपानां[13] वचनप्रपञ्चान्महात्मनः क्वापि न दूषयन्ति । भुजङ्गमानां गरलप्रसङ्गान्नापेयतां यान्ति महासरांसि ॥ १८२॥ अपां निधिं वारिभिरर्चयन्ति दीपेन सूर्यं प्रतिबोधयन्ति । ताभ्यां तयोः किं परिपूर्णता स्याद्भक्त्या हि तुष्यन्ति महानुभावाः ॥ १८३ ॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय । परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः स एकः ॥ १८४ ॥ न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः । द्वेष्यैव केषामपि चन्द्रखण्डविपाण्डुरा पुण्डकशर्करा[14]ऽपि ॥ १८५ ॥ दीपाः स्थितं वस्तु विभावयन्ति कुलप्रदीपास्तु भवन्ति केचित् । चिरव्यतीतानपि पूर्वजान्[15]न्ये प्रकाशयन्ति[16] स्वगुणप्रकर्षात् ॥ १८६ ॥ व्रते विवादं विमतिं विवेके सत्येऽतिशङ्कां विनये विकारम् । गुणेऽवमानं कुशले निषेधं

---

१ अवज्ञाय । २ मिथ्या । ३ नवनीतगतास्य व्यतिरेकः सम्भावितः । ४ अतिशयः । ५ सदयम् । ६ मुख्यः । ७ अत्र णिजर्थोऽन्तर्भूतः । तथा च शमयितुमित्यर्थः । ८ प्रसन्नता अकठोरता- । प्रसादो माधुर्यं च काव्यगुणौ । प्रसादश्च ओजसोऽप्यविरुद्धः । प्रत्युत प्रसादमन्तरौजोऽपि दोषायैव । अन्यत्स्पष्टम् । ९ मुखाभ्यन्तरे । १० मेघाः । ११ चन्दन- । १२ पीडयन्ति । १३ पिशुनानाम् । १४ इक्षु- । १५ परमपुरुषान् । १६ विख्याति नयन्ति प्रत्यक्षतां नयन्ति च । अत्रापि दीपापेक्षया व्यतिरेकः ।

धर्मे विरोधं न करोति साधुः ॥ १८७ ॥ वन्द्यः स पुंसां त्रिदशाभिनन्द्यः कारुण्यपुण्योपचयक्रियाभिः । संसारसारत्वमुपैति यस्य परोपकाराभरणं शरीरम् ॥ १८८ ॥ किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥ १८९ ॥ चिराय सत्सङ्गमशुद्धमानसो न यात्यसत्संगतमात्मवान्नरः । मनोहरेन्दीवर[1]खण्डगोचरो न जातु भृङ्गः कुणपे निलीयते ॥ १९० ॥ इदं हि माहात्म्यविशेषसूचकं वदन्ति चिह्नं महतां मनीषिणः । मनो यदेषां सुखदुःखसंभवे प्रयाति नो हर्षविषादवश्यताम् ॥ १९१ ॥ सुभाषितैः प्रीतिरनुन्नतिः श्रिया परार्थनिष्पत्ति[2]पटीयसी क्रिया । गुणेष्वतृप्तिर्गुणवत्सु चादरो निगूढमेतच्चरितं महात्मनाम् ॥ १९२ ॥ विपदि धैर्यमथाभ्युदये क्षमा सदसि[3] वाक्पटुता[4] युधि विक्रमः । यशसि चाभिरतिर्व्यसनं[5] श्रुतौ[6] प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १९३ ॥ अविरतं[7] परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् । अपि च मानसमम्बुनिधिर्यशो विमलशारदपार्वणचन्द्रिका ॥ १९४ ॥ यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः । लवणमम्बु सदैव महोदधेः प्रकृतिरेव[8] सतामविषादिता[9] ॥ १९५ ॥ आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहन[10]मध्यगतः समन्ताल्लोकोत्तरं परिमलं[11] प्रकटीकरोति ॥ १९६ ॥ यः प्रीणयेत्[12]सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम्[13] । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ १९७ ॥ प्रेमैव माऽस्तु यदि चेत्पथिकेन सार्धं[14] तेनापि चेद्गुणवता न समं[15] कदाचित् । तेनापि चेद्भवतु माऽस्तु कदाऽपि भङ्गो[16] भङ्गोऽपि चेद्भवतु वश्यम्[17]अवश्यमायुः ॥ १९८ ॥ चन्द्रः क्षयी[18] प्रकृतिवक्र[19]तनुर्जडात्मा[20] दोषाकरः[21] स्फुरति मित्रविपत्तिकाले[22] । मूर्ध्ना तथापि[23] विधृतः परमेश्वरेण[24] नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १९९ ॥ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये[25] विहितोदयोऽपि । चन्द्रस्तथापि हर[26]वल्लभतामुपैति नैवाश्रितेषु महतां गुणदोषशङ्का ॥ २०० ॥ लज्जागुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृदयामनुवर्तमानाम् । तेजस्विनः सुखमसूनपि सन्त्यजन्ति सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ २०१ ॥ सत्पुरुषः खलु हिताचरणैरमन्दम्[27]आनन्दयत्यखिललोकमनुक्त एव । आराधितः कथय केन करैरुदारैरिन्दुर्विकासयति कैरविणीकुलानि ॥ २०२ ॥ दाता न दापयति दापयिता न दत्ते यो दानदापनपरो मधुरं न वक्ति । दानं च दापनमथो मधुरा च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ २०३ ॥ केनाञ्जितानि[28] नयनानि मृगाङ्गनानां को वा करोति रुचिराङ्ग[29]रुहान्मयूरान् । कश्चोत्पलेषु दलसन्निचयं करोति को वा करोति विनयं कुलजेषु[30] पुंसु ॥ २०४ ॥ अद्यापि[31] नोज्झति[32] हरः किल कालकूटं कूर्मो बिभर्ति

---

१ नीलकमल- । २ इतरमनोरथपूरणेऽतिप्रवृद्धा । ३ सभायाम् । ४ वाग्मित्वम् । ५ आसक्तिः । ६ शास्त्रमात्रे वेदशास्त्र एव वा । ७ निरन्तरम् । ८ स्वभावः । ९ अविकारित्वम् । १० अग्नि- । ११ सौरभम् । १२ संतर्पयेत् । १३ भार्या । १४ समम् । १५ सह । १६ विघातः । १७ अनुकूलम् । १८ क्षयरोगी । १९ स्वभावतः कुटिलः । २० मूढमना इति द्योत्यम् । डलयोःसाम्याज्जलरूपः समुद्रादुत्पन्नः किल चन्द्र इति तथोक्तिः । यद्वा ज्योतिर्विदां मते जलरूप एव चन्द्रः प्रकाशः पुनः सूर्यबिम्बस्येति भावः । २१ दोषाया रात्रेः करः दोषाणामाकर इतिद्योत्यं च । २२ मित्रः सूर्यः तस्य विपत्तिकालो रात्रिस्तत्र । सुहृत्सङ्कटावसर इति तु द्योत्योऽर्थः । २३ पुनरपि । २४ महेश्वरेण । २५ सूर्यप्रकाशभावावसरे सुहृद्विनाशसमये च । २६ महेश्वरसङ्गित्वम् । २७ अत्यन्तम् । २८ प्रकटितानि । २९ पिच्छान् । ३० कुलीनेषु,महत्स्विति यावत् । किन्तु स्वत एव इति शेषः । ३१ एवं सुकृतिनोऽपि अस्पृश्यम्भवतु असह्यं भवतु दुर्जरं वा भवतु तदपि यदभ्युपपन्नं तदेव वरमित्याश्रयन्तीति प्रकृतिस्तेषामिति भावः । ३२ त्यजति ।

धरणीं खलु पृष्ठभागे । अम्भोनिधिर्वहति दुर्वहवाडवाग्निमङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ २०५ ॥ विश्वाभिरामगुणगौरवगुम्फितानां रोषोऽपि निर्मलधियां रमणीय एव । लोकप्रियैः परिमलैः परिपूरितस्य काश्मीरजस्य कटुताऽपि नितान्तरम्या ॥ २०६ ॥ किं जन्मना च महता पितृपौरुषेण शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् । कुम्भा न कूपमपि शोषयितुं समर्थाः कुम्भोद्भवेन मुनिनाऽम्बुधिरेव पीतः ॥ २०७ ॥ आरभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ २०८ ॥ सौजन्यधन्यजनुषः पुरुषाः परेषां दोषानपास्य गुणमेव गवेषयन्ति । त्यक्त्वा भुजङ्गमविषाणि पटीरगर्भात्सौरभ्यमेव पवनाः परिशीलयन्ति ॥ २०९ ॥ आक्रोशितोऽपि सुजनो न वदत्यवाच्यं निष्पीडितो मधुरमुद्वमतीक्षुदण्डः । नीचो जनो गुणशतैरपि सेव्यमानो हास्येन तद्वदति यत्कलहेऽप्यवाच्यम् ॥ २१० ॥ यद्वञ्चनाहितमतिर्बहु चाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति । तत्साधवो न न विदन्ति विदन्ति किंतु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ २११ ॥ सद्वंशजस्य परितापनुदः सुवृत्तशुद्धात्मनः सकललोकविभूषणस्य । छिद्रं प्रजातमपि साधुजनस्य दैवान्मुक्तामणेरिव गुणाय भवत्यवश्यम् ॥ २१२ ॥ न्यायः खलैः परिहृतश्चलितश्च धर्मः कालः कलिः कलुष एव परं प्रवृत्तः । प्रायेण दुर्जनजनः प्रभविष्णुरेव निश्चक्रिकः परिभवास्पदमेव साधुः ॥ २१३ ॥ सत्यं गुणा गुणवतां विधिवैपरीत्याद्यत्नार्जिता अपि कलौ विफला भवन्ति । साफल्यमस्ति सुतरामिदमेव तेषां यत्तापयन्ति हृदयानि पुनः खलानाम् ॥ २१४ ॥ पापं समाचरति वीतघृणो जघन्यः प्राप्यापदं सघृण एव तु मध्यबुद्धिः । प्राणात्ययेऽपि न तु साधुजनः सुवृत्तं वेलां समुद्र इव लङ्घयितुं समर्थः ॥ २१५ ॥ शुद्धः स एव कुलजश्च स एव धीरः श्लाघ्यो विपत्स्वपि न मुञ्चति यः स्वभावम् । तप्तं यथा दिनकरस्य मरीचिजालैर्देहं त्यजेदपि हिमं न तु शीतलत्वम् ॥ २१६ ॥ याच्ञापदं मरणदुःखमिवानुभाव्य दत्तेन किं खलु भवत्यतिभूयसाऽपि । कल्पद्रुमान्परिहसन्त इवेह सन्तः संकल्पितैरतिददत्यर्केदर्थितं यत् ॥ २१७ ॥ ते साधवो भुवनमण्डलमौलिभूता ये साधुतां निरुपकारिषु दर्शयन्ति । आत्मप्रयोजनवशीकृतखिन्नदेहः पूर्वोपकारिषु खलोऽपि हि सानुकम्पः ॥ २१८ ॥ नान्तर्विचिन्तयति किंचिदपि प्रतीपमाकोपितोऽपि सुजनः पिशुनेन पापम् । अर्कद्विषोऽपि हि मुखे पतिताग्रभागास्तारापतेरमृतमेव कराः किरन्ति ॥ २१९ ॥ ते साधवो जगति केऽपि जयन्ति येषां सम्बन्धतो जडतरा अपि पूज्यमानाः । पाषाणमूर्तिरपि मन्त्रदशां प्रसङ्गात्तत्तद्वरप्रदतया कथिता चिराय ॥ २२० ॥ हेतोः कुतोऽप्यसदृशाः सुजना गरीयः कार्यं निसर्गगुरवः स्फुटमारभन्ते । उत्थाय किं कलशतोऽपि न सिन्धुनाथमुदीचिमालमपिबद्भगवानगस्त्यः ॥ २२१ ॥ पात्रं पवित्रयति नैव गुणान्क्षिणोति स्नेहं न संहरति नापि मलं प्रसूते । दोषावसानरुचिरश्चलतां न धत्ते सत्संगमः सुकृतसद्मनि कोऽपि दीपः ॥ २२२ ॥ उदधिरवधिरुर्व्यास्तं हनूमांस्ततार निरवधि गगनं चेत्काण्डकोशे बिलीनम् । इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः स तु निरवधिरेकः सज्जनानां विवेकः ॥ २२३ ॥ न हि भवति वियोगः स्नेहविच्छेद-

---

१ केसरस्य । २ अगस्त्येन । ३ परिहाय । ४ चन्दन- । ५ सुगन्धम् । ६ प्रतारण- । ७ निर्दयः । ८ नीचः । ९ अजुगुप्सितम् । १० अतिमूढाः सर्वथाऽचेतनाश्च । ११ अतिदुर्भरम् । सुदुःशकमिति भावः । १२ सिन्धूनां नदीनां नाथं पतिं समुद्रमिति तत्त्वम् । १३ लघयति । १४ रात्र्यन्त- । दोषक्षालन- । १५ चपलताम् । १६ उत्तीर्णवान् । १७ कस्य ब्रह्मणोऽण्डकोशे ब्रह्माण्डैकदेश इति भावः ।

हेतुर्जगति गुणनिधीनां सज्जनानां कदाचित् । घनतिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ २२४ ॥ धवलयति समग्रं चन्द्रमा जीवलोकं किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि। भवति विदितमेतत्प्रायशः सज्जनानां परहितनिरतानामादरो नात्मकार्ये ॥ २२५ ॥ प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम् । ददति जलमनल्पास्वादमाजीवितान्तं[२] न हि कृतमुपकारं साधवो विस्मरन्ति ॥ २२६ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः[३] प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ २२७ ॥ उदयति यदि भानुः पश्चिमे दिग्विभागे प्रचलति यदि मेरुः शीततां याति वह्निः । विकसति यदि पद्मं पर्वताग्रे शिलायां न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ २२८ ॥ व्यतिकरितदिगन्ताः श्वेतभानै-र्यशोभिः सुकृतविलसितानां स्थानमूर्जस्वलानाम्[४] । अकलितमहिमानः केतनं मङ्गलानां कथमपि भुवने-ऽस्मिंस्तादृशाः संभवन्ति ॥ २२९ ॥ वपुरविहितसिद्धा एव लक्ष्मीविलासाः प्रतिजनकमनीयं कान्ति-मत्केतयन्ति[६] । अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा विकसितमिव पद्मं बिन्दवो माकरन्दाः[७] ॥ २३० ॥ अपि विभवविहीनः प्रच्युतो वा स्वदेशान्न हि खलजनसेवां प्रार्थयत्युन्नतात्मा । तनु तृणमुपभुङ्क्ते न क्षुधार्तोऽपि सिंहः पिबति रुधिरमुष्णं प्रायशः कुञ्जराणाम् ॥ २३१ ॥ वहति भुवनश्रेणीं शेषः फणा-फलकस्थितां कमठपतिना मध्येपृष्ठं सदा स च धार्यते । तमपि कुरुते क्रोडाधीनं पयोनिधि-रादरादहह महतां निःसीमानश्चरित्रविभूतयः ॥ २३२ ॥ अणुरपि मणिः प्राणत्राणक्षमो विषभक्षिणां शिशुरपि रुषा सिंहीसूनुः समाह्वयते गजान् । तनुरपि तरुस्कन्धोद्भूतो दहत्यनलो वनं प्रकृतिमहतां जात्यं तेजो न मूर्तिमपेक्षते ॥ २३३ ॥ सुखलवदशाप्राप्तौ क्लैव्ये खलः खलु खेलते स्खलति भजते लेशाक्लेशे विषादविषूचिकाम् । भवति न सतां दर्पोद्दामा न दैन्यमयी मतिर्दुरभिभवता गम्भीराणां सुखेष्वसुखेषु च ॥ २३४ ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् । दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ २३५ ॥ केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ[११] विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः[१२] । विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः[१३] ॥ २३६ ॥ कस्यादेशात्क्षपयति तमः सप्तसप्तिः प्रजानां छायाहेतोः पथि विटपिनामञ्जलिः केन बद्धः । अभ्यर्थ्यन्ते जललवमुचः केन वा वृष्टिहेतोर्जात्यैवैते परहितविधौ साधवो बद्धकक्ष्याः ॥ २३७ ॥ यैर्वातूलो[१४] भवति पुरतः कथ्यमानैर्जनानां कामप्यन्तर्निदधति रुजं येऽप्यनुद्गी-र्यमाणाः । तेऽभिप्रायाः किमपि हृदये कण्ठलग्नाः स्फुरन्तो यस्याख्येयास्तमिह सुहृदं पुण्यवन्तो लभन्ते ॥ २३८ ॥ उदन्वच्छन्ना[१५] भूः स च निधिरपां योजनशतं सदा पान्थः पूषा[१६] गगनपरिमाणं कल-यति । इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः[१७] सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ २३९॥ यदेतन्नेत्राम्भः पतदपि समासाद्य तरुणीकपोले व्यासङ्गं कुचकलशमस्याः कलयति । ततः श्रोणी-

---

१ शोधयति । २ जीवनावधि । ३ हितपरम्पराभिः । ४ बलवताम् । ५ स्थानम् । ६ सङ्केतयन्ति, प्रत्याययन्तीत्यर्थः । ७ मकरन्दः पुष्परसः तस्येम इति तथोक्ताः । ८ कृतघ्न- । ९ मत्तगजानाम् । १० कच्छपमूर्तिना भगवता । ११ सूर्याचन्द्रमसौ । १२ मेघः । १३ स्वभावः । १४ पवनवेगातिशयः । १५ धरा येन च्छन्नेति निर्दोषः पाठः । १६ सूर्यः । १७ निरवधिकाः ।

बि[1]म्बं व्यवसितविलासं तदुचितं स्वभावस्वच्छानां विपदपि सुखं नान्तरयति ॥ २४० ॥ यदिन्दोरन्वेति
व्यसनमुदयं वा निधि[2]रपामुपाधिस्तत्रायं [3]जयति जनिकर्तुः प्रकृतिता । अयं कः संबन्धो यदनु[4]हरते तस्य
कुमुदं विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ २४१ ॥ गुणायन्ते दोषाः सुजनवदने दुर्जन-
मुखे गुणा दोषायन्ते तदिदमपि नो विस्मयपदम् । महामेघः क्षारं पिबति कुरुते वारि मधुरं [5]फणी
क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥ २४२ ॥ प्रिय[6]प्राया वृत्तिर्विनयमधुरो वाचि नियमः प्रकृत्या[7]
कल्याणी मतिरन[8]वगीतः परिचयः । पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं रहस्यं साधूनामनुपधि
विशुद्धं विजयते ॥ २४३ ॥ सतां सङ्गाद्दोषा अपि रुचिरतां यान्ति च गुणा अपि क्षुद्रासङ्गान्नि-
जमहिततां हन्त जहति । श्रुतिक्रूरत्वादेरपि सुगुणतौ[9]जोऽनुगमनात् तथा माधुर्यादेरपि विगुणतौजो-
ऽननुगमात् ॥ २४४ ॥ असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो न सङ्गाद्दौर्जन्यं न हि सुजनता
कस्यचिदपि । प्ररूढे सं[10]सर्गे मणिभुजगयोर्जन्मजनिते मणिर्नाहेर्दोषान्स्पृशति न तु सर्पो मणि-
गुणान् ॥ २४५ ॥ न साधुः कुत्रापि व्रजति खलु दोषं न गुणतां खलानां संसर्गैरपि कृतनिवा-
सोऽपि निपुणः । यथा [11]पक्षिव्यालैरपिहित[12]तनुश्चन्दनतरुर्न वैकृत्यं याति क्षपयति च तापं सुमनसाम्
॥ २४६ ॥ करे श्लाघ्यस्त्या[13]गः शिरसि गुरुपादप्रणयिता मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम् ।
हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं विनाऽप्यैश्वर्येण प्रकृतिमहतां [14]मण्डनमिदम् ॥ २४७ ॥
अचिन्त्याः पन्थानः किमपि महताम[15]न्धकरिपोर्यदक्ष्णोऽभूत्तेजस्तदकृत कथामप्यमदनाम्[16] । मुनेर्नेत्राद-
त्रेर्यदजनि पुनर्ज्योतिरहह प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ २४८ ॥ इहानेके सन्तः सतत-
मुपकारिण्युपकृतिं कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः । कियन्तस्ते सन्तः सुकृतपरि-
पाकप्रणयिनो विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ २४९ ॥ अभेदेनोपास्ते कुमुदमुदरे वा
स्थितवतो विपक्षादम्भोजादुपगतवतो वा मधुलिहः । अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचयप्रबन्धः
साधूनामयमनभिसंधानमधुरः ॥ २५० ॥ तृषार्तैः सा[17]रङ्गैः प्रतिजलधरं भूरि विरुतं घनैर्मुक्ता धाराः
सपदि पयसस्तान्प्रति मुहुः । खगानां के मेघाः क इह विहगा वा जलमुचामयाच्यो नार्तानामनुपक-
रणीयो न महताम् ॥ २५१ ॥ शिला बाला जाता चरणरजसा यत्कुलशिशोः स एवायं सूर्यः
सपदि निजपा[18]दैर्गिरिशिलाम् । स्पृशन्भूयो भूयो न खलु कुरुते कामपि वधूं कुले कश्चिद्धन्यः प्रभ-
वति नरः श्लाघ्यमहिमा ॥ २५२ ॥ परार्थव्यासङ्गादुपजह[19]दपि स्वार्थपरतामभेदैकत्वं यो वहति गुरु-
भूतेषु सततम् । स्वभावादस्यान्तः स्फुरति ललितोदात्त[20]महिमा समर्थो यो नित्यं स जयतितरां कोऽपि
पुरुषः ॥ २५३ ॥ तमांसि ध्वंसन्ते परिणमति भूयानुप[21]श्लेषैः सकृत्संवादेऽपि प्रथत इह चामुत्र च
शुभम् । अथ प्रत्या[22]सङ्गः [23]कमपि महिमानं वितरति प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ २५४ ॥
प्रिया न्याय्या[24] वृत्तिर्मलिनम[25]सुभङ्गेऽप्यसुकरं त्वसन्तो [26]नाभ्यर्थ्याः सुहृदपि न याच्यः कृश[27]धनः । विप-

---

१ नितम्बस्थलम् । २ जलानाम् । ३ उत्पत्ति- । ४ प्रमोदयति । ५ सर्पः । ६ आनन्द-
रूपा । ७ स्वभावेन । ८ अनिन्दितः । ९ ओजो नाम गुणस्तदानुगुण्याच्छ्रुतिकटुत्वादेर्दोषस्य
गुणत्वं माधुर्यादेस्तु तद्वैपरीत्याद्दोषत्वमिति तत्त्वम् । १० सम्बन्धे । ११ पक्षवद्विषधरैः ।
१२ छन्नशरीरः । १३ वितरणम् । १४ भूषणम् । १५ महेश्वरस्य । १६ कन्दर्पसम्बन्धशून्याम् ।
कथाशेषमदनमिति पाठान्तरम् । १७ चातकैः । १८ निजचरणैः स्वकिरणैश्च । १९ परित्य-
जन्नपि । २० उदार- । २१ सन्निधानम् । २२ आतिसन्निधानम् । २३ अनिर्वचनीयम् ।
२४ उपादेया । २५ प्राणान्ते । २६ प्रार्थनीयाः । २७ धनरिक्तः ।

उच्चैः स्थेयं पदमनुविधेयं[1] च महतां सतां केनोद्दिष्टं विषमम[2]सिधाराव्रतमिदम् ॥ २५५ ॥ प्रदानं प्रच्छन्नं[3] गृहमुपगते संभ्रमविधिः[4] प्रियं कृत्वा मौनं सदसि[5] कथनं नाप्युपकृतेः[6] । अनुत्सेको[7] लक्ष्म्यां निरभिभवसाराः[8] परकथाः सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ २५६ ॥ विजेतव्या लङ्का चरणतरणीयो[9] जलनिधिर्विपक्षः[10] पौलस्त्यो[11] रणभुवि सहायाश्च कपयः । तथाप्येको रामः सकलमवधीद्राक्षसकुलं क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे[12] ॥ २५७ ॥ रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा निरालम्बो मार्गश्चरणरहितः[13] सारथिरपि । रविर्गच्छत्यन्तं प्रतिदिनमपारस्य नभसः[14] क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २५८ ॥ धनुः पौष्पं[15] मौर्वी मधुकरमयी[16] चञ्चलदृशां दृशां कोणो बाणः सुहृदपि जडात्मा[17] हिमकरः । तथाप्येकोऽनङ्गस्त्रिभुवनमपि[18] व्याकुलयति क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २५९ ॥ विपक्षः श्रीकण्ठो[19] जडतनुरमात्यः शशधरो वसन्तः सामन्तः[20] कुसुममिषवः सैन्यमबलाः । तथाऽपि त्रैलोक्यं जयति मदनो देहरहितः क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २६० ॥ घटो जन्मस्थानं मृगपरिजनो भूर्जवसनो[21] वने वासः कन्दाशनमपि च दुःस्थं वपुरिदम् । तथाप्येकोऽगस्त्यः सकलमपिबद्वारिधिजलं क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २६१ ॥ जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः पराभ्युदयसुस्थिताः परविपत्तिखेदाकुलाः । महापुरुषसत्कथाश्रवणजातकौतूहलाः समस्तदुरितार्णवप्रकटसेतवः साधवः ॥ २६२ ॥ ये जाते व्यसने[22] निराकुलधियः[23] संपत्सु नाभ्युन्नताः प्राप्तेनैव पराङ्मुखाः प्रणयिनि प्राणोपयोगैरपि । ह्रीमन्तः[24] स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डितास्ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ २६३ ॥ क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः । दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं[25] वाडवो[26] जीमूतस्तु[27] निदाघ[28]तापितजगत्संतापविच्छित्तये[29] ॥ २६४ ॥ मज्जन्तोऽपि विपत्पयोधिगहने निःशङ्कधैर्यावृताः कुर्वन्त्येव परोपकारमनिशं[30] सन्तो यथाशक्ति वै । राहोरुग्र[31]करालवक्रकुहरग्रासाभिभूतोऽप्यलं चन्द्रः किं न जनं करोति सुखिनं ग्रासावशेषैः करैः[32] ॥ २६५ ॥ वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां व्यसनं स्वयोषिति[33] रतिर्लोकापवादाद्भयम्[34] । भक्तिः शूलिनि[35] शक्तिरात्मदमने[36] संसर्गमुक्तिः[37] खलेष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ २६६ ॥ दृश्यन्ते भुवि भूरिनिम्बतरवः कुत्रापि ते चन्दनाः पाषाणैः परिपूरिता वसुमती वज्रो[38] मणिर्दुर्लभः । श्रूयन्ते करटारवाश्च[39] सततं चैत्रे कुहूकूजितं तन्मन्ये खलसंकुलं जगदिदं द्वित्राः क्षितौ सज्जनाः ॥ २६७ ॥ घर्मार्तं न तथा सुशीतलजलैः स्नानं न मुक्तावलिर्न श्रीखण्ड[40]विलेपनं सुखयति प्रत्यङ्गमप्यर्पितम् । प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसः सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रो-

---

१ अनुसरणीयम् । २ दुःशकम् । ३ कीर्तिशून्यम् । कीर्तनादेर्हि दानादि क्षीयते । ४ आदरानुष्ठानम् । ५ सभायाम् । ६ उपकारस्य । ७ अहंत्वम् । ८ निन्दनीयताभावनाशून्या । ९ न तु नौकादितरणीयः । १० शत्रुः विजेतव्य इति यावत् । ११ रावणः । १२ सामग्र्याम् । १३ अनूरुत्वात् । १४ आकाशस्य । १५ पुष्पसम्बन्धि । १६ भ्रमरैः कल्पितेति भावः । १७ बुद्धिविकलः डलयोरभेदाज्जलरूपश्च । १८ स्वयं चानङ्गोऽपीति पाठान्तरम् । १९ रुद्रः । २० स्ववश्यो राजा पीठमर्दो नाम सहाय इति भावः । २१ वल्कलविशेष- । २२ विपत्तौ । २३ स्वस्थाः । २४ लज्जाभृतः । २५ सागरम् । २६ वाडवानलः । २७ मेघः । २८ ग्रीष्म- । २९ क्षयकरणाय । ३० पुनः पुनः । ३१ भयङ्कर- । ३२ किरणैः हस्तैश्च । ३३ स्वोढायां सुन्दर्यामिति भावः । ३४ परकर्तृकात्मनिन्दातः । ३५ महेश्वरे । ३६ चित्त- । ३७ सम्बन्धविच्छेदः । ३८ हीरनामा । ३९ करटानां काकानाम् आरवाः शब्दाः ४० चन्दनलेपः ।

पमम् ॥ २६८ ॥ धर्मे तत्परता मुखे मधुरता दाने समुत्साहिता मित्रेऽवञ्चकता गुरौ विनयिता चित्तेऽतिगम्भीरता । आचारे शुचिता[1] गुणे रसिकता[2] शास्त्रेऽतिविज्ञानिता[3] रूपे सुन्दरता हरौ[4] भजनिता[5] सत्स्वेव संदृश्यते ॥ २६९ ॥ सौजन्यामृतसिन्धवः[6] परहितप्रारब्धवीरव्रता[7] वाचालाः परवर्णने[8] निजगुणालापे च मौनव्रताः । आपत्स्वप्यविलुप्तधैर्यनिचयाः संपत्स्वनुत्सेकिनो[9] मा भूवन्खलवक्त्रनिर्गतविषज्वालातताः[10] सज्जनाः ॥ २७० ॥ ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो व्यग्रा[11] ये च परोपकारकरणे हृष्यन्ति ये याचिताः । स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये तैः स्तम्भैरिव सुस्थितैः कलिभरक्रान्ता धरा धार्यते ॥ २७१ ॥ क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्पर्जन्यश्चपलाश्रयो[12]ऽभ्रपटलेऽदृश्यः सुवर्णाचलः[13] । शून्यं व्योम रसा[14] द्विजि[15]ह्वविधृता स्वर्धाम[16]धेनुः पशुः काष्ठं कल्पतरुर्दृषत्सुरमणि[17]स्तत्केन साम्यं सताम् ॥ २७२ ॥ कस्मादिन्दुरसौ [18]धिनोति जगतीं पीयूषगर्भैः करैः कस्माद्वा जलधारयैष धरणिं धाराधरः सिञ्चति । भ्रामं भ्रामम[19]यं च नन्दयति वा कस्मात्त्रिलोकीं रविः साधूनां हि परोपकारकरणे नोपा[20]ध्यपेक्षं मनः ॥ २७३ ॥ अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा[21] यस्मिन्नहार्यो[22] रसः । कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥ २७४ ॥ गर्वं नोद्वहते न निन्दति परान्नो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियं च सहते क्रोधं च नालम्बते[23] । श्रुत्वा काव्यमलक्षणं[24] परकृतं संतिष्ठते[25] मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम् ॥ २७५ ॥ किं कूर्मस्य भरव्यथा[26] न वपुषि क्ष्मां न क्षिपत्येष यत्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः । किं[27]त्वङ्गीकृतमुत्सृजन्हि मनसा श्लाघ्यो जनो लज्जते निर्वाहः प्रतिपन्न[28]वस्तुषु सतामेतद्धि गोत्रव्रतम्[29] ॥ २७६ ॥ सेतूपक्रमकौतुकाहृतगिरिप्रक्षेपवेगोच्छलन्निःशेषाम्बुपरिस्फुटोदरदरीगं[30]भीरिमा सागरः । चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भयं मारुतेः पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घ्यता ॥ २७७ ॥ शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः सन्ति श्रीपतयो[31] निरस्तधनदास्[32]तेऽपि क्षितौ भूरिशः । सत्कर्मण्यनिरीक्ष्यकारि मनुजं दुःखार्दितं यन्मनस्ताद्रूप्यं प्रतिपद्यते जगति ते सत्पूरुषाः पञ्चषाः ॥ २७८ ॥ ख्यातिं यत्र गुणा न यान्ति गुणिनस्तत्रादरः स्यात्कुतः किं कुर्याद्बहुशिक्षितोऽपि पुरुषः पाषाणभूते जने । प्रेमारूढविलासिनीमदवशव्यावृत्तकण्ठस्वनः सीत्कारो हि मनोहरोऽपि बधिरे किं नाम कुर्याद्गुणम् ॥ २७९ ॥ तृष्णां छिन्धि भज क्षमां जहि[33] मदं पापे रतिं मां कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्यान्मानय विद्विषोऽप्यनुनय ह्याच्छादय स्वान्गुणान्कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ २८० ॥ स्वाम्ये पेशलता[34] गुणे प्रणयिता हर्षे

---

१ पवित्रता । २ सादरं ग्राहकता । ३ अत्यन्तमनुभूतसारत्वम् । ४ इदं शङ्करादेरप्युपलक्षणम् । तथा च यस्मिन् कस्मिंश्चिदेव देवे इत्यर्थः । ५ भक्तिपरत्वम् । ६ अनौद्धत्यादि- । ७ परश्रेयःसम्पादन एव दृढां व्रतदीक्षां गृहीतवन्तः । ८ परेषां ( गुण ) वर्णने परोत्कर्षसूचन इति यावत् । ९ अनौद्धत्यवन्तः अदृप्ता इति यावत् । १० खलरूपभुजङ्गेत्यर्थः । अभेदाध्यवसायेनेदमुक्तम् । ११ त्वरावन्तः । १२ विद्युत्स्थानभूतः । एतेनास्य भयानकत्वं सूचितम् । क्षणिकत्वं च । १३ सुमेरुः । १४ पृथिवी । १५ शेषधृता द्व्यर्थभाषिणां हस्ते पतिता च । १६ कामधेनुः । १७ चिन्तामणिः । १८ प्रीणयति । १९ वारं वारं भ्रमित्वा । २० निमित्तविशेषापेक्षामूलम् । २१ वृद्धावस्थया । २२ हर्तुमशक्यः । २३ अङ्गीकरोति । २४ अदोषं गुणवत् । इत्यादिविरुद्धलक्षणकम् । २५ 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । २६ भार- । २७ किन्त्वित्यर्थः । २८ अङ्गीकृत- । २९ कुलनियमः । स्वाभाविको नियम इति भावः । ३० गुहागाम्भीर्यम् । ३१ लक्ष्मी- । ३२ कुबेरापेक्षयापि सम्पन्नाः । ३३ त्यज । ३४ मधुरता ।

निरुत्सेकता[1] पत्रे संवृतता श्रुते सुमतिता[2] वित्तोदये त्यागिता[3] । साधौ[4] सादरता खले विमुखता पापे परं भीरुता दुःखे क्लेशसहिष्णुता च महतां कल्याणमाकाङ्क्षति ॥२८१॥ गेहं दुर्गतबन्धुभिर्गुरुगृहं छात्रैरहंकारिभिर्हट्टं पत्तन[5]वञ्चकैर्मुनिजनैः शापोन्मुखैराश्रमान् । सिंहाद्यैश्च वनं खलैर्नृपसभां चौरैर्दिगन्तानपि संकीर्णान्यवलोक्य सत्यसरलः साधुः क्व विश्राम्यति ॥ २८२ ॥ आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रो दीनानां कल्पवृक्षः सुगुणफलनतः सज्जनानां कुटुम्बी । सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥ २८३ ॥ नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः स्वार्थान्संपादयन्तो विततबहुतरारम्भयत्नाः परार्थे । क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दुःखयन्तः सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्थनीयाः ॥ २८४ ॥ वक्रे वल्गा[6]प्रकर्षः समर[7]भुवि तव प्राणरक्षाऽपि दैवात्स्वेच्छाचारो न चास्ते न हि भवति तथा भारवाहो नितान्तम् । इत्युक्तोऽश्वः खरेण प्रहसितवदनो मूक एवावतस्थे तस्माज्जात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ते ॥ २८५ ॥ येषां स्वान्तं गभीरं विमलमनृजुतादुर्विधं भीमसत्त्वं सत्तारिक्तं सुपेश्यं बहुविधपरमोत्कृष्टरत्नार्थदित्सु । ते शान्ता मुक्तहस्ताः प्रतिदिनमितराभीष्टपूर्त्यै प्रवृत्ताः सद्वृत्ता न्यस्तदर्पा जगति सुपुरुषाः केचनैवोद्भवन्ति ॥ २८६ ॥

## असत्पुरुषगर्हणम् ।

असतां बत सत्ता[8]ऽपि न न्यायानुगता यदा । ततस्तेभ्योऽर्थपूर्त्याशा सुधालिप्सेव भोगिनः[9] ॥ १ ॥ खलः सर्षपमात्राणि परच्छिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ २ ॥ न विना परवादेन[10] रमते दुर्जनो जनः । काकः सर्वरसान्भुक्त्वा विनाऽमेध्यं[11] न तृप्यति ॥ ३ ॥ विशिखव्याल[12]योरन्त्यवर्णाभ्यां यो विनिर्मितः । परस्य हरति प्राणान्नैतच्चित्रं कुलोचितम् ॥ ४ ॥ विषमा[13] मलिनात्मानो[14] द्विजिह्वा[15] जिह्मगा[16] इव । जगत्प्राणहरा[17] नित्यं कस्य नोद्वेजकाः खलाः ॥५॥ दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् । मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ६ ॥ खलानां कण्टकानां च द्विविधैव प्रतिक्रिया । उपानन्[18]मुखभङ्गो वा दूरतो वा विसर्जनम्[19] ॥ ७ ॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहाद्[20]वर्धतेऽन्यस्य वारितः[21] ॥ ८ ॥ ऊर्जितं[22] सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः । कवलीकुरुते[23] स्वस्थं[24] विधुं दिवि विधुंतुदः[25] ॥ ९ ॥ कचित्सर्पोऽपि मित्रत्वमियान्[26]नैव खलः कचित् । न शेषशायिनोऽप्यस्य वशे दुर्योधनो हरेः ॥१०॥ उपकारोऽपि नीचानामपकारो हि जायते । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥११॥ अलकाश्च[27] खलाश्चैव मूर्धभिः सुजनैर्धृताः ।

---

१ अनुद्धतता । २ सत्सिद्धान्तानुवर्त्तित्वम् । ३ दातृत्वम् । ४ सज्जने । ५ नगरस्थजनप्रतारकैः- । ६ रज्जुविशेषः । वाचालत्वराहित्यमिति भावः । ७ सङ्ग्राम- । ८ साधुता, सत्त्वं च । ९ विषधरात् । १० परनिन्दया । ११ मलमूत्रादि । १२ विशिखशब्दस्यान्त्यो वर्णः 'ख' इति व्यालशब्दस्य 'ल' । तयोर्मेलने 'खल' इति दुष्टार्थकं पदं सम्पद्यते तादृशस्य बाणसर्पवद्धीमत्वात्प्राणहरत्वं सुसम्भवम् ।१३ विकटाःविषमेव मा लक्ष्मीर्येषां तादृशाश्च ।१४ कृष्णवर्णाः, दूषितान्तःकरणाश्च ।१५ द्व्यर्थभाषिणः। जिह्वाद्वयवन्तः सर्पाश्च ।१६ कपटवृत्तयःकुटिलगन्तारश्च । १७सर्वजीवनहन्तारः। वायुभक्षिणश्च।अत्र खलानां भुजगापेक्षयाऽतिशयोऽभिहित इति व्यतिरेकः। १८ पादवर्म्मभूतचर्म-। १९ परित्यागः । २० प्रेम्णः तैलादेश्च । २१ जलतः । २२ अभ्युदयशालिनं प्रतिष्ठितं वा । २३ ग्रसति । २४ आकाशस्थम् । २५ राहुः । २६ प्राप्नुयात् । २७ केशाः ।

उपर्युपरि संस्कारेऽप्याविष्कुर्वन्ति वक्रताम्[1] ॥ १२ ॥ खलानां धनुषां चापि सद्वंश[2]जनुषा[3]मपि । गुणलाभो भवेदाशु परहृद्भेदकारकः ॥ १३ ॥ बहुनिष्क[4]पटद्रोही बहुधान्यो[5]पघातकः । रन्ध्रा[6]न्वेषी च सर्वत्र दूषको मूषको यथा ॥ १४ ॥ नौश्च दुर्जनजिह्वा च प्रतिकूल[7]विसर्पिणी । परप्रतारणा[8]यैव दारुणा[9]केन[10] निर्मिता ॥ १५ ॥ यस्मिन्वंशे[11] समुत्पन्नस्तमेव निजचेष्टितैः । दूषयत्यचिरेणैव घुण[12]कीट इवाधमः ॥ १६ ॥ स्वभावकठिनस्यास्य कृत्रिमां[13] बिभ्रतो नतिम्[14] । गुणो[15]ऽपि परहिंसायै चापस्य च खलस्य च ॥ १७ ॥ अयः[16]पिण्ड इवोत्तप्ते खलानां हृदये क्षणात् । पतिता अपि नेक्ष्यन्ते गुणास्तोयकणा इव ॥ १८ ॥ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः । श्वा[17] भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १९ ॥ वक्रतां बिभ्रतो यस्य गुह्य[18]मेव प्रकाशते । कथं खलु समो न स्यात्पुच्छेन पिशुनः शुनः ॥ २० ॥ स्नेहेन[19] भूति[20]दानेन कृतः स्वच्छोऽपि दुर्जनः । दर्पणश्चान्तिके तिष्ठन्करोत्येकमपि द्विधा ॥ २१ ॥ आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य च । सोढुं तयोर्मुखाक्षेपमलमेकैव सा क्षमा[21] ॥ २२ ॥ यथा यथैव स्नेहेन भूयिष्ठमुपचर्यते । धत्ते तथा तथा तापं महावैश्वानरः[22] खलः ॥ २३ ॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् । अहो नु सदृशी वृत्तिस्तुला[23]कोटेः खलस्य च ॥ २४ ॥ दुर्जनः कृतशिक्षोऽपि सज्जनो नैव जायते । अपि गङ्गाजलस्नानान्नाधः केशः कुशायते[24] ॥ २५ ॥ दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना । अशक्तास्तत्पदं[25] गन्तुं ततो निन्दां प्रकुर्वते ॥ २६ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम्[26] ॥ २७ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् । व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ २८ ॥ संत्यज्य शूर्पवद्दोषान्गुणान्गृह्णाति पण्डितः । दोषग्राही गुणत्यागी पल्लोलीव[27] हि दुर्जनः ॥ २९ ॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन् । सरित्पूरःप्रपूर्णोऽपि क्षारो न मधुरायते ॥ ३० ॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः । सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ ३१ ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः । शीलमेतदसाधूनामभ्रं पारिप्लवं[28] यथा ॥ ३२ ॥ अशक्ताः शक्तिमात्मीयां श्लाघयन्ते च दुर्जनाः । ते भवन्त्युपहासाय महतामेव संनिधौ ॥ ३३ ॥ सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः । मन्त्रेण[29] शाम्यते सर्पो न खलः शाम्यते कदा ॥ ३४ ॥ दुर्जनः प्रकृतेरेव परकार्योपघातकः । मूषको नोदरं वह्नि निहन्तुं पटभक्षकः ॥ ३५ ॥ दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् । मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ ३६ ॥ दुर्जनः सुजनो न स्यादुपायानां शतैरपि । अपानं[30] मृत्सहस्रेण धौतं चास्यं[31] कथं भवेत् ॥ ३७ ॥ खलास्तु कुशलाः साधुहितप्रत्यूह[32]कर्मणि । निपुणाः फणिनः प्राणानपहर्तुं निरागसाम्[33] ॥ ३८ ॥ अहो बत मह-

---

१ अनृजुत्वम्, प्रतिकूलत्वं च । २ उत्तमकुलोत्पन्नानाम्, अच्छिद्रवेणुनिर्मितानां च ३ सम्पन्नत्वादि- । मौर्वी- । ४ बहु अत्यन्तं निष्कपटेभ्यो द्रोग्धारः । बहुनिष्क ( वक्षोभूषण ) पटस्य द्रोही च । ५ बहुधा अन्येषामुपघातकः । बहुधान्यस्यो घातकश्च । ६ दूषण- । छिद्र- । ७ तीरं प्रति गमनपरा । विरोधाचरणपरा च । ८ परेषां पारप्रापणार्थम् । परेषां वञ्चनार्थं च । ९ भयावहा । काष्ठेन च । १० ब्रह्मणा किं रूपेण अकेनाशोभनेन वा । ११ कुले वेणौ च । १२ काष्ठच्छिद्रकारी कीटः । १३ कार्यविशेषसिद्ध्यर्थं कल्पिताम् । १४ नम्रताम् । १५ धर्मः । मौर्वी च । १६ लोह- । १७ शुनकः । १८ गुप्तमर्थमङ्गं च । १९ ममतया, तैलादिना च । २० वैभव- । भस्म- । २१ पृथिवी, शान्तिश्च । २२ अग्निः । २३ तुलादण्डस्य । २४ कुशवत्पवित्रः ।२५ तादृशीं प्रतिष्ठां,धाम च ।२६राजहंसत्वम् ।२७ चालनीति भाषायाम् । २८ चपलम् । २९ गारुडमन्त्रेण । सान्त्ववचनेन च । ३० गुदम् । ३१ मुखं तद्वत्पवित्रमिति यावत् । ३२ विघ्न- । ३३ निरपराधानाम् ।

स्कष्टं विपरीतमिदं जगत् । येनापत्रपते[1] साधुरसाधुस्तेन तुष्यति ॥ ३९ ॥ तक्षकस्य[2] विषं दन्ते मक्षिकायाः[3] विषं शिरः । वृश्चिकस्य विषं पुच्छं सर्वाङ्गे दुर्जनो विषम् ॥ ४० ॥ दुर्जनो नार्जवं याति सेव्यमानोऽपि नित्यशः । स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम्[4] ॥ ४१ ॥ वर्धनं[5] वाऽथ सम्मानं खलानां प्रीतये कुतः । फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ ४२ ॥ दुर्जनैरुच्यमानानि वचांसि मधुराण्यपि । अकालकुसुमानीव भयं संजनयन्ति हि ॥ ४३ ॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् । विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥ ४४ ॥ अहो खलभुजंगस्य विपरीतो वधक्रमः । अन्यस्य दशति[6] श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ ४५ ॥ न यत्नकोटिशतकैरपि दुष्टः सुधीर्भवेत्[7] । किं मर्दितोऽपि कस्तूर्या लशुनो याति सौरभम्[8] ॥ ४६ ॥ पाषाणो भिद्यते टङ्कैर्वज्रं वज्रेण भिद्यते । सर्पोऽपि भिद्यते मन्त्रैर्दुष्टात्मा नैव भिद्यते ॥ ४७ ॥ दुर्जनो दोषमादत्ते दुर्गन्धमिव सूकरः । सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥ ४८ ॥ अपूर्वा रसनाव्यालाः[9] खलाननबिलेशयाः । कर्णमूले स्पृशन्त्यन्यं हरन्त्यन्यस्य जीवितम् ॥ ४९ ॥ दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ ५० ॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥ ५१ ॥ मनस्यन्यद्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ५२ ॥ जीवनं[10]ग्रहणे नम्रा[11] गृहीत्वा पुनरुन्नताः[12] । किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य[13] दुर्जनाः ॥ ५३ ॥ बिभ्राणा गरलं कण्ठे भुजङ्ग[14]परिवेष्टिता । शाम्भवीव तनुः कस्य न वन्द्या दौर्जनी[15] सभा ॥ ५४ ॥ अक्षमालापवृत्तिज्ञा[16] कुशासनपरिग्रहा[17] । ब्राह्मीव दौर्जनी संसद्[18]वन्दनीया समेखला[19] ॥ ५५ ॥ खलः करोति दुर्वृत्तं नूनं फलति साधुषु । दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥ ५६ ॥ कुर्वते स्वमुखेनैव बहुधान्यस्य खण्डनम् । नमः पतनशीलाय मुसलाय खलाय च ॥ ५७ ॥ अपवादाद[20]भीतस्य समस्य गुणदोषयोः । असद्वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥ ५८ ॥ न देवाय न धर्माय न बन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥ ५९ ॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं क्रोधसंयुक्तं त्रिविधं धूर्तलक्षणम् ॥ ६० ॥ निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः । चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ६१ ॥ खलः सज्जनकार्पासध[21]क्षणैकहुताशनः । परदुःखाग्निधमनमारुतः केन वर्ण्यताम् ॥ ६२ ॥ यशःसौरभ्यलशुनः शान्तिशैत्यहुताशनः । कारुण्यकुसुमाकाशः खलः सज्जनदुःखदः ॥ ६३ ॥ अन्तर्मलिनदेहेन बहिराह्लादकारिणा । महाकालफलेनेव के खलेन न वञ्चिताः ॥ ६४ ॥ अहो प्रकृति[22]सादृश्यं श्लेष्मणो[23] दुर्जनस्य च । मधुरैः[24] कोपमायाति[25] कटुकेनैव[26] शाम्यति ॥ ६५ ॥ ईषल्लब्धप्रवेशोऽपि स्नेहविच्छेदकारकः । कृतक्षोभो नरीनर्ति खलो मन्थानदण्डवत् ॥ ६६ ॥ विवृण्वती पुरस्तैक्ष्ण्यं

---

१ लज्जते । २ भुजगस्य । ३ मधुमक्षिकायाः । ४ नम्रतां प्रापितम् । ५ दानं, विवदनं च । ६ स्पृशतीति तु लक्षणयाऽर्थः । ७ उत्तमबुद्धिः सत्स्वभाव इति यावत् । ८ इष्टगन्धताम् । ९ जिह्वारूपा विषधराः । १० जल- । प्राणश्च । ११ अधोमुखाः, प्रणताश्च । १२ ऊर्ध्वमुखाः, उद्धताश्च । १३ एकशृङ्खलाबद्धकलशदामविशेषस्य । १४ सर्प- । जार- । १५ दुर्जनसम्बन्धिनी । १६ अक्षमा ये आलापाः भाषणानि तेषाम् अभिप्रायाभिज्ञा । अक्षमालाया रुद्राक्षमालायाश्च तस्या अपवृत्तिं जानातीति । १७ कुत्सितं यच्छासनं तत् कुशमयं च । १८ सभा- । १९ मेखलया समेताः । समेखला इति च । २० कलङ्कात् । २१ बलाज्ज्वलनरूप- । २२ स्वभाव- । २३ कफस्य । २४ घृतादिभिः, प्रणयवचनादिभिश्च । २५ प्रज्वलनरूपम् । २६ औषधविशेषेण, तीव्रोक्त्या च ।

पृष्ठतः कुर्वती गुणम् । कर्णान्विध्यति लोकस्य सूचीवत्सूचकस्य वाक् ॥ ६७ ॥ सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता । यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ६८ ॥ कापुरुषः कुक्कुरश्च भोजनैकपरायणः । लालितः पार्श्वमायाति वारितो न च गच्छति ॥ ६९ ॥ मालिन्यमवलम्बेत यदा दर्पणवत्खलः । तदैव तन्मुखे देयं रजो नान्या प्रतिक्रिया ॥ ७० ॥ नीचः समुत्थितोऽवश्यम-नवाप्य पराश्रयम् । छिद्रं न रतिमाप्नोति दृष्टान्तोऽत्र कटीभवः ॥ ७१ ॥ दुर्जनः परिहर्तव्यः प्रत्यक्षो द्विपदः पशुः । विध्यते वा कुशल्येन परोक्षः कण्टको यथा ॥ ७२ ॥ यथा वृष्टिः समुद्रेषु भुक्तस्यो-परि भोजनम् । एवं प्रीतिः खलैः सार्धमुत्पन्नेऽर्थेऽवसीदति ॥ ७३ ॥ कचित्कार्यवशान्नीचोऽप्यलं भवति नो महान् । कांस्यस्यैव हि राज्ञोऽपि दर्पणः कनकस्य न ॥ ७४ ॥ दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् । मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥ ७५ ॥ यथा दोषो विमात्यस्य जनस्य न तथा गुणः । प्रायः कलङ्क एवेन्दोः प्रस्फुटो न प्रसन्नता ॥ ७६ ॥ संपत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् । शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ॥ ७७ ॥ प्रायः प्रकुप्यतितरां प्रीत्यैव प्रखलो जनः । नयनं स्नेहसंपर्कात्कालुष्यं समुपैत्यलम् ॥ ७८ ॥ प्राप्य वित्तं खलास्तूर्णं निर्वृतिं यान्ति नान्यथा । तोयमासाद्य गर्जन्ति न रिक्ताः स्तनयित्नवः ॥ ७९ ॥ सदा खण्डनयोग्याय तुषपूर्णाशयाय च । नमोऽस्तु बहुबीजाय खलायोलूखलाय च ॥ ८० ॥ जिह्वादूषितसत्पात्रः पिण्डार्थी कलहोत्कटः । तुल्यतामशुचिर्नित्यं बिभर्ति पिशुनः शुनः ॥ ८१ ॥ अहो बत खलः पुण्यैर्मूर्खो-ऽप्यश्रुतपण्डितः । स्वगुणोदीरणे शेषः परनिन्दासु वाक्पतिः ॥ ८२ ॥ खलः सुजनपैशुन्ये सर्व-तोऽक्षिशिरोमुखः । सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥ ८३ ॥ सत्साधुवादे मूर्खस्य मात्सर्य-गलरोगिणः । जिह्वा कङ्कमुखेनापि कृष्टा नैव प्रवर्तते ॥ ८४ ॥ मायामयः प्रकृत्यैव रागद्वेषमदा-कुलः । महतामपि मोहाय संसार इव दुर्जनः ॥ ८५ ॥ खचित्रमपि मायावी रचयत्येव लीलया । लघुश्च महतां मध्ये तस्मात्खल इति स्मृतः ॥ ८६ ॥ खलेन धनमत्तेन नीचेन प्रभविष्णुना । पिशु-नेन पदस्थेन हा प्रजे क गमिष्यसि ॥ ८७ ॥ ये श्रमं हर्तुमीहन्ते महतां चिरसंभृतम् । वन्ध्यास्तेऽस-त्कुलात्मानो दुर्जनाः सज्जना इव ॥ ८८ ॥ अहो कुटिलबुद्धीनां दुर्ग्राह्यमसतां मनः । अन्यद्वचसि कण्ठेऽ-न्यदन्यदोष्ठपुटे स्थितम् ॥ ८९ ॥ खलेषु सत्सु निर्याता वयमर्जयितुं गुणान् । इयं सा तस्करग्रामे रत्नक्रयविडम्बना ॥ ९० ॥ वर्धेते स्पर्धयेवोभौ संपदा शतशाखया । अङ्कुरोऽवस्करोद्भूतः पुरुष-श्चाकुलोद्भवः ॥ ९१ ॥ यत्स्मृत्वैव परां यान्ति सन्तः संतापसंततिम् । तदसन्तो हसन्तोऽपि हेल-यैव हि कुर्वते ॥ ९२ ॥ गुणदोषावशास्त्रज्ञः कथं विभजते जनः । किमन्धस्याधिकारोऽस्ति रूप-भेदोपलब्धिषु ॥ ९३ ॥ प्रायः प्रकाशतां याति मलिनः साधुबाधया । नाप्रसिष्यत चेदर्कं कोऽज्ञा-

---

१ परदोषैकदर्शिनः । २ अगर्हणीयता । ३ दर्पणोपरि । दुर्जनवदनोपरि च । ४ धूलिः, तिरस्कारानुष्ठानविशेषश्च । ५ पुरुषेन्द्रियम् । ६ विमलं स्वच्छम् श्वेतं च अम्बरम् आकाशं वस्त्रं च । ७ लोहम् । ८ मेघाः । ९ वंशादिपात्रं जिह्वया स्पृष्ट्वा श्वा दूषयति खलश्च वाङ्मात्रेण सज्जनं दूषयति । १० उदरपूर्तये । ११ अपवित्रः । १२ शास्त्राध्ययनमन्तरैव पण्डितः । १३ सहस्रमुखः । १४ सिद्धवाक् । १५ नहि साधुजनगुणान् वक्तुमुत्सहते दुष्ट इति तथोक्तम् । १६ पक्षिविशेषचञ्चूः । १७ प्रभुत्वं दधता । १८ विफलयितुम् । १९ कुटिलात्मान इति पाठान्तरम् । २० मलादिस्थानसम्भूतः । २१ दुष्कुले उत्पन्नः । २२ तादृशं कर्म । २३ अनायासेनैवेति भावः ।

स्यत्सिंहिकासुतम्[1] ॥ ९४ ॥ प्रायः परोपतापाय दुर्जनः सततोद्यतः । अवश्यकरणीयत्वान्न कारणमपेक्षते ॥ ९५ ॥ यथा गजपतिः श्रान्तश्छायार्थी वृक्षमाश्रितः । विश्रम्य तं द्रुमं हन्ति तथा नीचः स्वमाश्रयम् ॥ ९६ ॥ चारुता परदारार्थं[2] धनं लोकोपतप्तये । प्रभुत्वं साधुनाशाय[3] खले खलतरा गुणाः ॥ ९७ ॥ परोपकारविज्ञानमात्रलाभोपजीविनाम् । दाशानामिव[4] धूर्तानां जालाय गुणसंग्रहः ॥ ९८ ॥ करोति पूज्यमानोऽपि लोकव्यसनदीक्षितः । दर्शने दर्शने त्रासं गृहाहिरिव दुर्जनः ॥ ९९ ॥ सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव[5] । नास्तिकोऽपि ह्युद्विजते जनः किं पुनरास्तिकः ॥ १०० ॥ येषां प्राणिवधः क्रीडा नर्ममर्मच्छिदो गिरः । कार्यं परोपतापित्वं ते मृत्योरपि मृत्यवः ॥ १०१ ॥ न तथेच्छन्त्यकल्याणाः[6] परेषां वेदितुं गुणान् । यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ १०२ ॥ अतो हास्यतरं लोके किंचिदन्यन्न विद्यते । यत्र दुर्जन इत्याह दुर्जनः सज्जनं जनम् ॥ १०३ ॥ अपकारमसंप्राप्य तुष्येत्साधुरसाधुतः । नैष लाभो भुजङ्गेन वेष्टितो यन्न दश्यते ॥ १०४ ॥ लुब्धः स्तब्धोऽनृजुर्मूर्खः प्रभुरेकान्तदारुणः । बहूनेष खलः साधून्मारयित्वा मरिष्यति ॥ १०५ ॥ का खलेन सह स्पर्धा सज्जनस्याभिमानिनः । भाषणं भीषणं साधुदूषणं यस्य भूषणम् ॥ १०६ ॥ मुखेनैकेन विध्यन्ति पादमेकस्य कण्टकाः । दूरान्मुखसहस्रेण सर्वप्राणहराः खलाः ॥ १०७ ॥ निर्माय खलजिह्वाग्रं सर्वप्राणहरं नृणाम् । चकार किं वृथा शस्त्रविषवह्नीन्प्रजापतिः ॥ १०८ ॥ यथा परोपकारेषु नित्यं जागर्ति सज्जनः । तथा परापकारेषु जागर्ति सततं खलः ॥ १०९ ॥ बिभेति साधुकर्मभ्यो न दुष्टोऽसाधुकर्मणः । सितांशनात्[7] खरो भीतो न तु दूषितभक्षणात् ॥ ११० ॥ वृथाज्वलितकोपाग्नेः परुषाक्षरवादिनः । दुर्जनस्यौषधं नास्ति किंचिदन्यदनुत्तरात् ॥ १११ ॥ जीवन्नपि न तत्कर्तुं शक्नोति सुजनस्तथा । दुर्जनो यन्मृतः कुर्यात्परेभ्योऽहितमुत्तरम् ॥ ११२ ॥ यद्यदिष्टतमं तत्तद्देयं[8] गुणवते किल । अत एव खलो दोषान्साधुभ्यः संप्रयच्छति ॥ ११३ ॥ वरमत्यन्तविफलः सुखसेव्यो हि सज्जनः । न तु प्राणहरस्तीक्ष्णः शरवत्सफलः खलः ॥ ११४ ॥ स्वभावेनैव निशितः कृतपक्षग्रहोऽपि सन् । शरवद्गुण[9]निर्मुक्तः खलः कस्य न भेदकः ॥ ११५ ॥ दुर्जनः सुजनीकर्तुं यत्नेनापि न शक्यते । संस्कारेणापि लशुनं कः सुगन्धीकरिष्यति ॥ ११६ ॥ नैवात्मनो विनाशं गणयति पिशुनः परव्यसनहृष्टः[10] । प्राप्य सहस्रविनाशं समरे नृत्यति कबन्ध[11] इव ॥ ११७ ॥ रविरपि न दहति तादृग्यादृक्संदहति वालुकानिकरः[12] । अन्यस्माल्लब्धपदो[13] नीचः प्रायेण दुःसहो भवति ॥ ११८ ॥ त्यक्त्वाऽपि निजप्राणान्परहितविघ्नं खलः करोत्येव । कवले पतिता सद्यो वमयति[14] खलु मक्षिकाऽन्नभोक्तारम् ॥ ११९ ॥ कृतमपि महोपकारं पय इव पीत्वा निरातङ्कम्[15] । प्रत्युत हन्तुं यतते काकोदरसोदरः[16] खलो जगति ॥ १२० ॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ १२१ ॥ एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् । सिद्धार्थानामेषां[17] [18]स्नेहोऽप्य-

---

१ राहुम् । २ अन्यस्त्रीमोहनार्थम् । ३ सज्जनवासदानाय । ४ मत्स्यजीविनाम् । ५ सर्पात् । ६ दुष्टाः । ७ सिताभक्षणेन हि गर्दभो रुग्णो भवति । ८ ददाति । ९ निर्गुणः, मौर्वीतो निर्गतश्च । १० विपत्ति- । ११ छिन्नमस्तकं शरीरम् । १२ सिकतापुञ्जः । १३ प्राप्तप्रभावः लब्धोच्चाधिकार इति यावत् । तथा च यद्यपि वालुकानिकरस्य स्वतो दाहकत्वाभावः तथापि यथा उष्णरश्मिनाऽऽहिततेजा दाहको भवति तथा केनापि राजाद्यन्यतमेन दत्तशासनाधिकार इति निष्कृष्टोऽर्थः । १४ उद्गिरयति । १५ निःसङ्कोचम् । १६ विषधरसदृशः । १७ सर्षपाणां कृतकार्याणां च । १८ तैलम्, प्रेम च ।

श्रूणि पातयति ॥ १२२ ॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते । पुष्पे फले विरागी क्रमेलकः कण्टकौघमिव ॥ १२३ ॥ सुजनानामपि हृदयं पिशुनपरिष्वङ्गतो मतं मलिनम् । पवनः परागवाही रथ्यासु[1] वहन्रजस्वलो[2] भवति ॥ १२४ ॥ परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति । अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥ १२५ ॥ दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः । बालः पयसा[5] दग्धो दध्यपि फूत्कृत्य भक्षयति ॥ १२६ ॥ विषधरतोऽप्यतिविषमः खल इति न मृषा[6] वदन्ति विद्वांसः । यदयं नकुलद्वेषी[7] स कुलद्वेषी पुनः पिशुनः ॥ १२७ ॥ अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः । तिमिरे हि कौशिकानां[9] रूपं प्रतिपद्यते दृष्टिः ॥ १२८ ॥ लब्धोच्छ्रायो नीचः प्रथमतरं स्वामिनं पराभवति[10] । भूमिरजो रथ्यादावुत्थापकमेव संवृणुते ॥ १२९ ॥ उपकृतमनेन सुहृदयमित्यसतामस्ति न कश्चिदपेक्षा । होतुः स्वहस्तमाश्रितमुद्वृत्तोऽग्निर्दहत्येव ॥ १३० ॥ परवादे दशवदनः परन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्त[11]वित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥ १३१ ॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते[12] । पवनाशिनोऽपि भुजगाः परोपतापं न मुञ्चन्ति[13] ॥ १३२ ॥ उपकारिणमपि पूज्यं हन्ति महान्तं खलोऽत्रपोऽवसरे । धृष्टद्युम्नो मध्येवीरं हतवान् गुरुं शान्तम् ॥ १३३ ॥ प्रेरयति परमनार्यः[14] शक्तिविहीनोऽपि जगदभिद्रोहे । तेजयति शस्त्रधारां स्वयमसमर्था शिला छेत्तुम् ॥ १३४ ॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः[15] । तरुणीकच इव नीचः कौटिल्यं[16] नैव विजहाति ॥ १३५ ॥ व्योम्नि स वासं कुरुते चित्रं निर्माति सुन्दरं पवने । रचयति रेखाः सलिले चरति खले यस्तु सत्कारम् ॥ १३६ ॥ अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः । परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ १३७ ॥ मृद्घटवत्सुखभेद्यो दुःसंधानश्च दुर्जनो भवति । सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशुसंधेयः ॥ १३८ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ १३९ ॥ रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि । अथवाऽलं पापात्मन्कृतया कथयाऽपि ते हतया ॥ १४० ॥ विध्वस्त[19]परगुणानां भवति खलानामतीव मलिनत्वम् । अन्तरितशशिरुचामपि सलिलमुचां मलिनिमा[21]ऽभ्यधिकः ॥ १४१ ॥ परगुह्य[22]गुप्तिनिपुणं गुणमयमखिलैः[23] समीहितं नितराम् । ललिताम्बर[24]मिव सज्जनमाखव इव दूषयन्ति खलाः ॥ १४२ ॥ दूरस्थापितहृदयो गूढरहस्यो विकामसाशङ्कः । आश्लेषो बालानां भवति खलानां च संभेदः[25] ॥ १४३ ॥ धर्मारम्भेऽप्यसतां परहिंसैव प्रयोजिका भवति । काकानामभिषेकेऽकारणतां वृष्टिरनुभवति[26] ॥ १४४ ॥ यद्वीक्ष्यते खलानां माहात्म्यं क्वापि दैवयोगेन । काकानामिव शौक्ल्यं[27] तदपि हि न चिरा[28]दनर्थाय ॥ १४५ ॥ यत्खलु खलमुखहुतवहविनिहितमपि

---

१ उद्धूः । २ असंमार्जितेषु मार्गेषु । ३ संचरन् । ४ धूलिधूसरः, पुष्पिणीस्त्रीवदस्पृश्य इति तु व्यज्यते । ५ दुर्जनैर्दूषितमनसस्तेषाम् । दुर्जनैरन्यथाभावितभावानां महतामिति भावः । ६ तस्मेनेति विशेषणमप्यूह्यम् । ७ असत्यम् । ८ नकुल-बभ्रु- । नकुलेति च । ९ उलूकानाम् । १० तिरस्कुरुते । ११ सदाचारिजनस्य धनापहरणे । १२ पीडयति । १३ वितन्वन्तीति पाठान्तरम् । १४ कुटिलः । १५ अनेकविधैस्तैलैः । अतिशयितैः सौहार्दैश्च । १६ अनृजुतां प्रतिकूलतां च । १७ अतिमधुरमिति भावः । १८ समीकर्तुमशक्यः । १९ विध्वंसित- । २० मेघानाम् । २१ मालिन्यम् । २२ परगुह्य (अप्रकाश्य)-गोपने लग्नम् । गुह्यं च रहस्यं वृत्तम् । अङ्गविशेषश्च । २३ विनयादि । तन्तु- । २४ सुन्दरं वस्त्रम् । २५ श्लेषेण विशेषणसाम्यरक्षणात् । नो भेदः इति पाठान्तरं स्पष्टार्थम् । २६ करटा यदा जले स्नान्ति तदा वृष्टिर्न जायत इति निमित्तज्ञाः प्राहुः । २७ श्वेतवर्णत्वम् । २८ न चिरात् तत्क्षणात्

शुद्धिमेव परमेति । तदनलशौचमिवांशुकमिह लोके दुर्लभं प्रेम ॥ १४६ ॥ वं[1]शावलम्बनं यद्वो विस्तारो गु[2]णस्य या च नतिः । तज्जालस्य खलस्य च निजाङ्क[3]मुत्तप्रणाशाय ॥ १४७ ॥ गुदरन्ध्रं खलवदनं सममिति मन्ये पवित्रताहीनम् । निःसरति ततो यद्यत्ततः परं हन्त दौर्गन्ध्यम् ॥ १४८ ॥ पुंचिह्नं खललोकः समुन्नतिं प्राप्य दूषयत्येव । न च पश्यति निजपातं भाविनमाश्वपि तदौद्धत्यात् ॥ १४९ ॥ सुगृहीतमलिनपक्षा लघवः परभेदिनस्तीक्ष्णाः । पुरुषा अपि विशि[4]खा अपि गुणच्युता[5]ः कस्य न भयाय ॥ १५० ॥ स्वकपोलेन प्रकटीकृतं प्रमत्तत्वकारणं किमपि । द्वि[6]रदस्य दुर्जनस्य च मदं चकारैव दानमपि ॥ १५१ ॥ संतापमोहकम्पान्संपादयितुं निहन्तुमपि जन्तून् । सखि दुर्जनस्य भू[7]तिः प्रसरति दूरं ज्वरस्येव ॥ १५२ ॥ अर्थग्रहणे न तथा व्यथयति कटुकूजितैर्यथा पिशुनः । रुधिरादानादधिकं दु[8]र्नोति कर्णे कणन्मशकः ॥ १५३ ॥ क्षुद्रोद्भवस्य कटुतां प्रकटयतो विदधतश्च मदमुच्चैः । मधुनोऽधमपुरुषस्य च गरि[9]मा लघि[10]मा च भेदाय ॥ १५४ ॥ त्यजति च गुणान्सुदूरं त[11]नुमपि दोषं निरीक्ष्य गृह्णाति । मुक्त्वाऽलंकृतकेशान्यूकामिव वान[12]रैः पिशुनः॥१५५॥दोषा[13]लोकननिपुणाः परुषगिरो दुर्जनाश्च घूकाश्च । दर्शनमपि भयजननं येषामनिमित्तपिशुनानाम् ॥ १५६ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव तेऽकेन[14] वेधसा सृष्टाः ॥ १५७ ॥ हस्त इव भू[15]तिमलिनो लङ्घयति यथा यथा खलः सुजनम् । दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ १५८ ॥ अन्यस्य लगति कर्णे जीवितमन्यस्य हरति बाण इव । हृदयं दुनोति पिशुनः कण्टक इव पादल[16]ग्नोऽपि ॥ १५९ ॥ स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम् । पिशुनानां पनसानां कोशाभोगोऽप्यविश्वास्यः ॥ १६० ॥ वंशे घुण इव न विशति दोषो र[17]सभाविते सतां मनसि । र[18]समपि तु न प्रतीच्छति बहु[19]दोषः संनिपातीव ॥ १६१ ॥ परपरितापनकुतुकी गणयति नात्मीयमपि तापम् । परहतिहेतोः पिशुनः संदं[20]श इव स्वपीडनं सहते॥१६२॥ सगुणो[21]पि हन्त विगुणा भवति खला स्याद्विचित्रव[22]र्णाऽपि । आखुमुखादिव शाटी पदपरिपाटी कवेः का[23]पि ॥ १६३ ॥ कतिपयदिनपरमायुषि मदकारिणि यौवने दुरात्मानः । विदधति तथापराधं जन्मैव यथा वृथा भवति ॥ १६४ ॥ दुश्चरितैरेव निजैर्भवति दुरात्मा विशङ्कितो नित्यम् । दर्शनपथमापन्नं पन्नगकु[24]लमाकुलीभवति ॥ १६५ ॥ स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन् । तितउ[25]स्तुषस्य पिशुनो दोषस्य विवेचनेऽधिकृतः ॥ १६६ ॥ पिशुनः खलु सुजनानां खलमेव पुरो निधाय जेतव्यः । कृत्वा ज्वरमात्मीयं जिगाय बा[26]णं रणे विष्णुः ॥ १६७ ॥ वक्राः कपटस्नि[27]ग्धा मलिनाः कर्णान्तिके प्रसज्जन्तः । कं भेदयन्ति न सखे खलाश्च गणिकाकटाक्षाश्च ॥ १६८ ॥ कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।

---

१ वंशस्य-वेणोः, कुलस्य च अवलम्बनम् । आश्रितत्वं संसार्गित्वं च । २ रज्जु-महत्त्वादि च । ३ स्वान्तर्गत- । स्वविश्वासानातङ्क- । ४ बाणाः । ५ निर्गुणाः, मौर्वीतो निपतिताश्च । ६ हस्तिनः । ७ वृद्धिः । ८ व्यथयति । ९ गुरुत्वम् । १० लघु (क्षुद्र) त्वम् ११ अल्पम् । १२ वानरा यूकाग्रहणे पटवो भवन्तीति तेषां प्रकृतिः । १३ दूषण- । रात्रि- । १४ न त्वनेनेति भावः । यद्वा-अकेन-मूढेन दुष्टेनेति वाऽर्थः । १५ प्रभुत्व- । भस्म । १६ कण्टकादपि दुष्टः । पिशुन इति तत्त्वम् । १७ आर्द्रे-प्रेमशालिनि च । १८ पारदादिं सौहार्दं च । १९ वातादिदोषत्रयदुष्टः । मूर्खत्वौद्धत्यादियुक्तश्च । २० मन्त्रविशेषः । २१ तन्तु- । माधुर्यादि- । २२ रङ्ग- । अक्षर- । २३ अनिर्वचनीया । २४ सर्प- । २५ चालिनी । २६ एतदाख्यं दैत्यम् । २७ तैलेनैव स्निग्धाः कृताः न तु सुभगानामिव जन्मतो मसृणाः । बहिरेव प्रकटितसौहार्दाश्च । दुष्टानां केशरौक्ष्यादि जन्मसिद्धमिव सतीनां केशकोमलत्वादीति लक्षणज्ञाः ।

यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥ १६९ ॥ आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान् । तन्न न जाने जाने स्पृशति मनः किंतु नैव निष्ठुरताम् ॥ १७० ॥ नष्टमपात्रे दानं नष्टं हितमफलबुद्ध्यवज्ञाने । नष्टो गुणोऽगुणज्ञे नष्टं दाक्षिण्यमकृतज्ञे ॥ १७१ ॥ रोगोऽण्डजोऽङ्कुरोऽग्निर्विषमश्वतरो घुणाः क्रिमयः । प्रकृतिकृतघ्नश्च नरः स्वाश्रयमविनाश्य नैधन्ते ॥ १७२॥आदौ लज्जयति कृतं मध्ये परिभवति रिक्तमवसाने । खलसंगतस्य कथयत यदि सुस्थितमस्ति किंचिदपि ॥ १७३ ॥ परमर्मदिव्यदर्शिषु जात्यैवोचितनिगूढवैरेषु । कः खलु खलेषु शङ्कां श्लथयिष्यति दम्भनिरतेषु ॥ १७४ ॥ अस्थानाभिनिवेशी प्रायो जड एव भवति नो विद्वान् । बालादन्यः कोऽम्भसि जिघृक्षतीन्दोः स्फुरद्बिम्बम् ॥ १७५ ॥ मलिनयति परं मलिनः कज्जलराशिर्यथेति नो चित्रम् । श्वित्रासज्जनसितिमा प्रभवन्नेव ग्रसत्यपरम् ॥ १७६॥ लब्धोदयोऽपि हि खलः प्रथमं स्वजनं नयति परितापम् । उद्गच्छन्दवदहनो जन्मभुवं दारु निर्दहति ॥ १७७ ॥ अल्पश्रुतलव एव प्रायैः प्रकटयति वाग्विभवमुच्चैः । सर्वत्र कुनट एव हि नाटकमधिकं विडम्बयति ॥ १७८ ॥ प्रखला एव गुणवतामाक्रम्य धुरं पुरः प्रकर्षन्ति । तृणकाष्ठमेव जलधेरुपरि प्लवते न रत्नानि ॥ १७९ ॥ महतां यदेव मूर्धसु तदेव नीचास्तृणाय मन्यन्ते । लिङ्गं प्रणमन्ति बुधाः काकः पुनरासनीकुरुते ॥ १८० ॥ सह वसतामप्यसतां जलरुहजलवद्भवत्यसंश्लेषः । दूरेऽपि सतां वसतां प्रीतिः कुमुदेन्दुवद्भवति ॥१८१॥ साधयति यत्प्रयोजनमज्ञस्तत्तस्य काकतालीयम् । दैवात्कथमप्यक्षरमुत्किरति घुणोऽपि काष्ठेषु ॥ १८२ ॥ प्रायः खलप्रकृतयो नापरिभूता हिताय कल्पन्ते । पुष्प्यत्यधिकमशोको गणिकाचरणप्रहारेण ॥ १८३ ॥ परमर्मघट्टनादिषु खलस्य यत्कौशलं न तत्कृत्ये । यत्सामर्थ्यमुपेहतौ विषस्य तन्नोपकाराय ॥ १८४ ॥ अतिसत्कृता अपि शठाः सहभुवमुज्झन्ति जातु न प्रकृतिम् । शिरसा महेश्वरेणाऽपि धृतो ननु वक्र एव शशी ॥ १८५ ॥ वायुरिव खलजनोऽयं प्रायः पररूपमेति संपर्कात् । सन्तस्तु रविकरा इव सदसद्योगेऽप्यसंश्लिष्टाः ॥१८६॥ कुजनश्च सरश्च गुणानपेक्षमेवात्मजीवनं विसर्जयति । कूपश्च सन्नरोवा विना गुणं न विषमप्यहह ॥१८७॥ दूरेऽपि परस्यागसि पटुर्जनो नात्मनः समीपेऽपि । स्वं व्रणमक्षि न पश्यति शशिनि कलङ्कं निरूपयति ॥ १८८ ॥ साधुष्वेवातितरामरुंतुदाः स्वां विवृण्वते वृत्तिम् । व्याधा निघ्नन्ति मृगान्मृतमपि न तु सिंहमाददते ॥ १८९ ॥ अविकारिणमपि सज्जनमनिशमनार्यः प्रबाधतेऽत्यर्थम् । कमलिन्या किमिह कृतं हिमस्य यत्तां सदा दहति ॥ १९० ॥ स्वगुणानिव परदोषान्वक्तुं न सतोऽपि शक्नुवन्ति बुधाः । स्वगुणानिव परदोषानसतोऽपि खलास्तु कथयन्ति ॥१९१॥ कृत्वाऽपि येन लज्जामुपैति साधुः परोदितेनापि । तदकृत्वैव खलः स्वयमुल्लासयतीति धिग्लघुताम् ॥ १९२ ॥ प्रकृतिखलत्वादसतां दोष इव गुणोऽपि बाधते लोकान् । विषकुसुमानां गन्धः सुरभिरपि मनांसि मोहयति ॥ १९३ ॥ मृगमदकर्पूरागुरुचन्दनगन्धाधिवासितो लशुनः । न त्यजति गन्धमशुभं प्रकृतिमिव सहोत्थितां नीचः ॥ १९४ ॥ उपकृतिरेव खलानां दोषस्य गरीयसो भवति हेतुः । अनुकूलाचरणेन हि कुप्यन्ति व्याधयोऽत्यर्थम् ॥ १९५ ॥ न परं फलति हि किंचित्खल एवानर्थमावहति यावत् । मारयति सपदि विषतरुराश्रयमाणं श्रमापनुदे ॥ १९६ ॥ स्वार्थनिरपेक्ष एव हि परोपघातोऽसतां

---

१ न वर्धन्ते-प्रभवन्ति । २ अन्ते । ३ बाहुल्येन । ४ किंतु परिभूता एवेति भावः । ५ विनाशने । ६ उदासीनाः सम्पर्कमप्राप्ता इति भावः । ७ जीवितं, जलं च । ८ जलम् । यद्वा सन्नरः सद्वैद्यः । रोगापनयनक्षमत्वमवलोक्यैव विषप्रयोगं सेवयतीति तथोक्तम् । ९ मर्मोपपीडकाः । १० पुनः पुनः । ११ अन्योक्तेन । १२ खेदय[illegible]ति पाठान्तरम् ।

व्यसनमेव । अशनाया[1]योदन्या[2] वा विरमति फणिनो न दन्दशूकतः[3] ॥ १९७ ॥ एकीभावं गतयोर्जलपयसोर्मित्रचेतसोश्चैव । व्यतिरेक[4]कृतौ शक्तिर्हंसानां दुर्जनानां च ॥ १९८ ॥ शल्यमपि स्खलदन्तः सोढुं शक्येत हालहलदिग्धम् । धीरैर्न पुनरकारणकुपितखलालीक[5]दुर्वचनम् ॥ १९९ ॥ प्रारम्भतोऽतिविपुलं भृश[6]कर्कशमन्ते विभेदकृन्मलिनम् । महिषविषाणमिवानृजु परुषं भयदं खलप्रेम ॥ २०० ॥ कृतकर्मफलादितरद्वितरति न यमः स्वयं कुपितः । हन्त खलोऽकृतमागः फलयति न कृतं च शुभं नृणाम् ॥ २०१ ॥ ह्रेपयति प्रियवचनैरादरमुपदर्शयन्खलीकुरुते । उत्कर्षयंश्च लघयति मूर्खसुहृत्सर्वथा वर्ज्यः ॥ २०२ ॥ अगुणकणो गुणराशिर्द्वयमपि दैवात्खलमुखे पतितम् । प्रसरति तैलमिवैकः सलिले घृतवज्जड्डत्व[8]मेत्यन्यः ॥ २०३ ॥ तस्मिन्गतार्द्रभावे वीतरसे शुण्ठिशकल[9] इव पुरुषे । अपि भूतिभाजि[10] मलिने नागर[11]शब्दो विडम्बाय ॥ २०४ ॥ परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः । परदोषकथाभिरल्पकः[12] स्वजनं तोषयितुं किलेच्छति ॥ २०५ ॥ सहजान्धदृशः[13] स्वदुर्नये[14] परदोषेक्षणदिव्यचक्षुषः । स्वगुणोच्चगिरो मुनिव्रताः परवर्ण[15]ग्रहणेष्वसाधवः ॥ २०६ ॥ सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः । सहसैव समुद्गिरन्त्यमी क्षपयन्त्येव हि तन्मनीषिणः ॥ २०७ ॥ उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः । असतामनिशं तथाऽप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ २०८ ॥ परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः[16] । परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः ॥ २०९ ॥ अनिराकृततापसंपदं फलहीनां[17] सुमनोभि[18]रुज्झिताम् । खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥ २१० ॥ अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठ[19]मिच्छति । वसनाशनमात्रमस्ति चेद्धनदादप्यतिरिच्यते खलः ॥ २११ ॥ अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः[20] । ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ २१२ ॥ वदने विनिवेशिता भुजंगी पिशुनानां रसना[21]मिषेण धात्रा । अनया कथमन्यथाऽवलीढा नहि जीवन्ति जना मनागमन्त्राः[22] ॥ २१३ ॥ अमरैरमृतं न पीतमब्धेर्न च हालाहलमुल्बणं हरेण । विधिना निहितं खलस्य वाचि द्वयमेतद्बहिरेक[23]मन्तरन्यत्[24] ॥ २१४ ॥ वहति विषधरान्पटीर[25]जन्मा शिरसि मषीपटलं दधाति दीपः । विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥ २१५ ॥ मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥ २१६ ॥ प्रकटमपि न संवृणोति दोषं गुणलवलम्पट एष साधुवर्गः । अतिपरुषरुषं विनाऽपि दोषैः पिशुनशुनां रुषतां प्रयाति कालः ॥ २१७ ॥ अन्तर्वाणिं मन्यमानः खलोऽयं पौरोभाग्यं[26] सूक्तिमुक्तासु[27] धत्ते । सर्वानन्दिन्यङ्गके कामिनीनामी[28] मं मार्गत्येष[29] वै भम्भरालिः[30] ॥ २१८ ॥ बोधितोऽपि बहुसूक्तिविस्तरैः किं खलो जगति सज्जनो भवेत् । स्नापितोऽपि बहुशो नदीजलैर्गर्दभः

---

१ अशनाया बुभुक्षा । २ उदन्या पिपासा । ३ भृशं दशतः । ४ विभेदेनावस्थापने । ५ असत्य- । ६ अत्यल्पम्, अतितीक्ष्णाग्रभाग च । ७ लज्जयति । ८ घनीभावम् । ९ शुण्ठीखण्डे । १० दग्धे, सम्पन्ने च । ११ मुस्तकविशेषवाचित्वं, विदग्ध ( साधु ) पुरुषवाचित्वं च । १२ क्षुद्रः । १३ प्रकृत्या अन्धा दर्शनासमर्था दृग्येषां ते । १४ स्वापराधे । १५ इतरगुणस्वीकारे । १६ सर्वथा गोपनपरः । १७ फलहीनां व्यर्थां च । १८ पुष्पैः, सज्जनैश्च । १९ महादेवम् । २० मा दृप्यः स्म दृप्तो मा भूः । २१ जिह्वा- । २२ अलब्धमन्त्राः । २३ अमृतम् । २४ हालाहलम् । २५ चन्दनम् । २६ दोषदर्शनमात्रपरत्वम् । २७ सुभाषितरूपासु मुक्तासु । २८ व्रणम् । २९ गवेषयति । ३० मक्षिकापङ्क्तिः ।

किमु हयो भवेत्कश्चित् ॥ २१९ ॥ विद्यया विमलयाऽप्यलंकृतो दुर्जनः सदसि माऽस्तु कश्चन । साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ॥ २२० ॥ दोषपोषमभियाति परं यो बाधमेति बहुसज्जनयोगात् । संमतौ विमतिमात्रसहायो दुर्जनो भ्रम इवातिचकास्ति ॥ २२१ ॥ उन्नतं पदमुपैति यो लघुर्हेलयैव स पतेदिति ध्रुवम् । शैलशेखरगतः पृषद्गणश्चारुमारुतधुतः पतत्यधः ॥ २२२ ॥ भग्न-कुम्भशकलेन वै मलं बालकस्य जननी व्यपोहति । तद्वदोष्ठवदनेन दुर्जनो मातृतः शतगुणाधिको भवेत् ॥ २२३ ॥ एवमेव नहि जीव्यते खलात्तत्र का नृपतिवल्लभे कथा । पूर्वमेव हि सुदुःसहोऽनलः किं पुनः प्रबलवायुनेरितः ॥ २२४ ॥ अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा । सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ २२५ ॥ इतरदेव बहिर्मुखमुच्यते हृदि तु यत्स्फुरतीतरदेव तत् । चरितमेतदधीरवितारकं धुरि पयःप्रतिबिम्बमिवासताम् ॥ २२६ ॥ क्व पिशुनस्य गतिः प्रतिहन्यते दशति दृष्टमपि श्रुतमप्यसौ । अतिसुदुष्करमव्यतिरिक्तदृक्श्रुतिभिरप्यथ दृष्टिविषैरिदम् ॥ २२७ ॥ नमः खलेभ्यः क इवाथवा न तानलं नमस्येदिह यो जिजीविषुः । विनैव ये दोषमृषिप्रकाण्डवन्नयन्ति शापेन रसातलं नरान् ॥ २२८ ॥ अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते । विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ २२९ ॥ तथाऽरिभिर्न व्यथते शिलीमुखैर्हतो दिगन्ते हृदये न दूरतः । यथा खलानां कुधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ २३० ॥ गुणापवादेन तदन्यरोपणाद्भृशाधिरूढस्य समञ्जसं जनम् । द्विधेव कृत्वा हृदयं निगूहतः स्फुरन्नसाधोर्विवृणोति वागसिः ॥ २३१ ॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥ २३२ ॥ न लज्जते सज्जनवर्जनीयया भुजंगवक्रक्रिययाऽपि दुर्जनः । धियं कुमायासमयाभिचारिणीं विदग्धतामेव हि मन्यते खलः ॥ २३३ ॥ समर्पिताः कस्य न तेन दोषा हठाद्गुणा वा न हृताः खलेन । तथापि दोषैर्न वियुज्यतेऽसौ स्पृष्टोऽपि नैकेन गुणेन चित्रम् ॥ २३४ ॥ आराध्यमानो बहुभिः प्रकारैर्नाराध्यते नाम किमत्र चित्रम् । अयं त्वपूर्वः प्रतिभाविशेषो यत्सेव्यमानो रिपुतामुपैति ॥ २३५ ॥ दोषा असन्तोऽपि बलान्निरूप्य विशोधनीया ननु येन नित्यम् । न स्यात्खलोऽसौ यदि हन्त केन विधीयतां शोधनमेवमाशु ॥ २३६ ॥ विद्वानुपालम्भमवाप्य दोषान्निवर्ततेऽसौ परितप्यते च । ज्ञातेऽपि दोषे मम सर्वथेति पापो जनः पापतरं करोति ॥ २३७ ॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ २३८ ॥ सद्वंशजातं गुणकोटियुक्तं धनुः कथं पार्थिववामहस्ते । शरः परप्राणविहारदक्षः सपक्षपातोऽप्यधमो गरीयान् ॥ २३९ ॥ दुष्टो वा सुकृतशतोपलालितो वा क्लिष्टो वा व्यसनशताभिरक्षितो वा । दौःशील्याजनयति नैव जात्वसाधुर्विस्रम्भं भुजग इवाङ्कमध्यसुप्तः ॥ २४० ॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोघीकरोति विदुषां निखिलप्रयासम् । एकाऽपि पूर्णमुदरं मधुरैः पदार्थैरालोड्य रेचयति हन्त न मक्षिका किम् ॥ २४१ ॥ हालाहलं खलु पिपासति कौतुकेन कालानलं परिचुचुम्बिषति प्रकामम् ।

---

१ सभायाम् । २ उत्कृष्टम्, उच्चं च । ३ अवज्ञयैव । ४ जलकण- । ५ मन्द- । ६ अत्र निदर्शनाऽलङ्कारः । ७-खण्डेन । ८ पुरीषम् । ९ मलव्यपोहनोचितभग्नकुम्भशकलेन तुल्यम् । १० वचनरूपः खड्गः । ११ कुमायया समयं सिद्धान्तम् अभिचरति-व्यभिचरतीत्येवंशीलाम् । मायाधिक्येन निर्मर्यादाम् । १२ प्रसन्नतां प्राप्यमानः । १३ अनेनेति तेनेति वा शेषः । १४ नृपति- । १५ हरण- । १६ पुङ्ख- । आग्रह- । १७ कदाचिदपि । १८ विश्वासम् । १९ विफलयति ।

व्यालाधिपं[1] च यतते परिरब्धुमद्धा[2] यो दुर्जनं वशयितुं कुरुते मनीषाम्[3] ॥ २४२ ॥ तं दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः[4] खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामपि न त्यजन्ति ॥ २४३ ॥ प्राक्पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति[6] शनैर्विचित्रम् । छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥ २४४ ॥ हित्वा मदं सममसज्जनसज्जनौ तौ वन्दे नितान्तकुटिलप्रगुणस्वभावौ । एकं भिया निरभिसंहितवैरिभावं प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ २४५ ॥ पादाहतोऽपि दृढदण्डसमाहतोऽपि यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः । हर्षादिवैष पिशुनोऽत्र मनुष्यधर्मा कर्णे परं स्पृशति हन्त्यपरं समूलम् ॥ २४६ ॥ उद्भासिताखिलखलस्य विशृङ्खलस्य प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः । दैवादवाप्तविभवस्य गुणद्विषोऽस्य नीचस्य गोचरगतैः सुखमाप्यते कैः ॥ २४७ ॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः । दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥ २४८ ॥ कस्तूरिकां तृणभुजामटवीमृगाणां निक्षिप्य नाभिषु चकार च तान्वधार्हान् । मूढो विधिः सकलदुर्जनलोलजिह्वामूले स्म निक्षिपति चेत्सकलोपकारः ॥ २४९ ॥ रूक्षं[10] विरौति परिकुप्यति निर्निमित्तं स्पर्शेन दूषयति वारयति प्रवेशम् । लज्जाकरं दशति नैव च तृप्यतीति कौलेयकस्य[11] च खलस्य च को विशेषः ॥२५०॥ युक्तं यया किल निरन्तरलब्धवृत्तेरस्याभिमानतमसः प्रसरं निरोद्धुम् । विद्वत्तया जगति तामवलम्ब्य केचित्तन्वन्त्यहंकृतिमहो शतशाखमान्ध्यम् ॥ २५१ ॥ प्रायः स्वभावमलिनो महतां समीपे तिष्ठन्खलः प्रकुरुतेऽर्थिजनोपघातम् । शीतार्दितैः सकललोकसुखावहोऽपि धूमे स्थिते नहि सुखेन निषेव्यतेऽग्निः ॥ २५२ ॥ धूमः पयोधरपदं[12] कथमप्यवाप्य वर्षाम्बुभिः शमयति[13] ज्वलनस्य तेजः[14] । दैवादवाप्य कलुषप्रकृतिर्महत्त्वं[15] प्रायः स्वबन्धुजनमेव तिरस्करोति ॥ २५३ ॥ नाश्चर्यमेतदधुना हतदैवयोगादुच्चैः स्थितं यदधुना[16] पिशुनप्रभुत्वम् । प्रायो विवेकविधुरा बत चाटुवाक्यशुश्रूषवो हि बत दुर्जनमाश्रयन्ते[17] ॥ २५४ ॥ बिसमलमशनाय[18] स्वादु पानाय तोयं शयनमवनिपृष्ठे वल्कले वाससी च । नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २५५ ॥ मलयभुवि निरूढश्चन्दनैर्नाभिवृद्धो[19] न भजति किल वेणुः सौरभं चन्दनस्य । तदिह नहि विचित्रं सर्वदोषाकराणां नहि भवति खलानां साधुतागन्धलेशः ॥ २५६ ॥ हसति लसति हर्षात्तीव्रदुःखे परेषां स्खलति गलति मोहादात्मनः क्लेशलेशे । नदति वदति निन्द्यं मानिनं किं च नीचः परुषवचनमल्पं श्रावितो हन्तुमेति ॥ २५७ ॥ दिगन्ते खेलन्ती सरसहृदयानन्दजननी मया नीता दुष्टप्रचुरनगरीं कापि कविता । अकस्मादुन्मीलत्खलवदनवल्मीक[20]रसनाभुजंगीदष्टाङ्गी शिव शिव समाप्तिं गतवती ॥ २५८ ॥ अभूदम्भोराशेः सहवसतिरासीत्कमलया[21] गुणानामाधारो नयनफलमिन्दुः प्रथयति । कथं सिंहीसूनुस्तं[22][23]मपि तुदति प्रौढदशनैर्गुणानामास्वादं पिशुनरसना किं रसयति ॥ २५९ ॥ वृथा दुग्धोऽनड्वान्[24]स्तनभरनता गौरिति चिरं परिष्वक्तः षण्ढो युवतिरिति[25] लावण्यसहिता । कृता वैदूर्याशा

---

१ महाभुजगम् । २ साक्षात् । ३ विचारम् । अत्र निदर्शनाऽलङ्कारः । ४ चूर्णकुन्तलाः । ५ भाल- । वृथा- । ६ शब्दं कुरुते । ७ भयेन । ८ निर्मर्यादस्य । ९ वन- । १० नीरसम् । ११ कुक्कुरस्य १२ मेघसञ्चरणस्थानम्, मेघस्वरूपं च । १३ अग्नेः । १४ ज्वालाम् । १५ मलिनस्वभावः । १६ कलौ । १७ प्रभुत्वं नयन्तीति भावः । १८ भोजनाय । १९ चन्दनेन सहेत्यर्थः । २० सर्पावास स्थानभूत- । २१ लक्ष्म्या । २२ राहुः । २३ चन्द्रमसम् । २४ वृषभः । २५ धियेति शेषः । एवम् इति इति इत्यनन्तरं परत्रापि ।

विकचकिरणे काचशकले[1] मया मूढेन त्वां कृपणमगुणज्ञं प्रणमता ॥ २६० ॥ स्वपक्षच्छेदं वा समुचितफलभ्रंशमथवा स्वमूर्तेर्[2]भङ्गं वा पतनमशुचौ नाशमथवा । शरः प्राप्नोत्येतान्हृदयपथसंस्थोऽपि धनुष ऋजोर्वक्राश्लेषाद्भवति खलु सुव्यक्तमशुभम् ॥ २६१ ॥ गुणानां सा शक्तिर्विपदमनुबध्नन्ति यदमी प्रसन्नस्तद्वेधा मम यदि न तैर्योगमकरोत् । विषण्णं दौर्गत्या[3]दिति गुणिनमालोक्य विगुणः करोति स्वे गेहे ध्रुवमतिसमृद्धयोत्सवमसौ ॥ २६२ ॥ अवेक्ष्य स्वात्मानं विगुणमपरानिच्छति तथा फलत्येतन्नो चेद्विलपति न सन्तीह गुणिनः । निमार्ष्टुं शप्तुं वा परिभवितुमुद्यच्छति ततोऽप्यहो नीचे रम्या सगुणविजिगीषा विधिकृता ॥ २६३ ॥ न विषममृतं कर्तुं शक्यं प्रयत्नशतैरपि त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोह्रदे[4] । गुणपरिचितामार्यां वाणीं न जल्पति दुर्जनश्चिरमपि बलाध्माते लोहे कुतः कनकाकृतिः[5] ॥ ॥ २६४ ॥ यदि परगुणा न क्षम्यन्ते यतस्व तदर्जने[6] नहि परयशो निन्दाव्याजैरलं परिमार्जितुम् । विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिनकरकरान्पाणिच्छत्रैर्नुदञ्छ्रममेष्यसि ॥ २६५ ॥ शमयति यशः क्लेशं सूते दिशत्यशिवां गतिं जनयति जनोद्वेगायासं नयत्युपहास्यताम् । भ्रमयति मतिं मानं हन्ति क्षिणोति च जीवितं क्षिपति सकलं कल्याणानां कुलं खलसंगमः ॥ २६६ ॥ जिह्मो लोकः कथयति पुरा हन्त हित्वा गुणौघानम्भः क्षारं गुणगणनिधेस्तस्य रत्नाकरस्य । विश्वे छिद्रानुसरणसमारूढसर्वेन्द्रियाणां दोषे दृष्टिः पिशुनमनसां नानुरागो गुणेषु ॥ २६७ ॥ सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः[9] सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा । अव्युत्पन्नमतिः[10] कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः[11] ॥ २६८ ॥ या लोभात्[12]सविधे खलस्य सुरसा[13] वाणी बुधैर्नीयते नो जानाति स तामचेतनतया सैव स्वयं लीयते । भर्तुः स्नेहचयात्प्रविश्य दहने भस्मीभवत्यङ्गना गाढालिङ्गनतत्परेण मनसा प्रेतो न वेत्ति प्रियाम् ॥ २६९ ॥ नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते । ईर्ष्यावेशकषायिते हृदि घृणा[14]लेशोऽपि न स्पृश्यते किं त्वेकः प्रवदन्समञ्जसमपि प्राज्ञः शठैर्हस्यते ॥ २७० ॥ दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः[15] । अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ २७१ ॥ जाड्यं[16] ह्रीम[17]ति गण्यते व्रत[18]रुचौ दम्भः[19] शुचौ कैतवं[20] शूरे निर्घृणता[21] मुनौ विमतिता दैन्यं प्रियालापिनि । तेजस्विन्य[22]वलिप्तता मुखरता[23] वक्तर्यशक्तिः स्थिरे तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः[24] ॥ २७२ ॥ पोतो[25] दुस्तरवारिराशितरणे दीपोऽन्धकारागमे निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः[26] । इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः ॥ २७३ ॥ धातस्तात तवैव दूषणमिदं यन्नाम कस्तूरिका कान्तारान्तरचारिणां तृणभुजां[27] यन्नाभिमूले कृता । यद्येवं पिशुन[28]स्य हन्त रसनामूले-

---

१ हरितकाचखण्डे । २ अपवित्रे । ३ दारिद्र्यात् । ४ दुग्धपूर्णतडाके । ५ सुवर्ण- । ६ तेषां गुणानाम्, अर्जने सङ्ग्रहार्थम् । ७ नारकीम् । ८ जिह्मः कुटिलो लोको रत्नाकरस्य (यथा) गुणौघान् हित्वाऽम्भः क्षारमिति कथयति तथा तस्य गुणगणनिधेः गुणौघान् हित्वा क्षारमम्भः तदुपमं सत्यतः परिणामहिताधायकत्वेऽपि तदानीमप्रियतया प्रतीयमानं गुणं दूषयतीति भावः । ९ यन्त्रणाः पीडाविशेषाः । १० अप्रगल्भ- । ११ नीचः । १२ समीपे । १३ शृङ्गाराद्यन्यतमशालिनी प्रेमयुक्ता च । १४ जुगुप्सा- । दया- । १५ प्रकटितसौहार्दः । १६ शठत्वम् । १७ लज्जावति । १८ तपस्विनि विषये । १९ कपटः । २० छलम् । २१ निर्दयत्वम् । २२ गर्वितत्वम् । २३ वाचालता । २४ कलङ्कितः । २५ नौका । २६ अङ्कुशः । २७ मृगाणाम् । २८ कर्णेजपस्य ।

ऽकरिष्यस्तदा प्रायासेन विनाऽभविष्यदतुला कीर्तिश्च निर्दोषता ॥ २७४ ॥ एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ २७५ ॥ नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति । किंचित्कापि न साहसं वितनुते देहे चिरं दूयते नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥ २७६ ॥ वक्रत्वं ननु कुन्तलादिव मुखे तैक्ष्ण्यं कटाक्षादिव क्रूरत्वं कुचमण्डलादिव सुनैर्घृण्यं स्वचित्तादिव । मालिन्यं नयनाञ्जनादिव किलाधैर्यं स्वभावादिव स्वैरिण्यैव सुशिक्षितोऽसि खल किं जातोऽस्यतोऽरुंतुदः ॥ २७७ ॥ वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः । तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैर्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ २७८ ॥ कस्त्वं भद्र खलेश्वरोऽहमिह किं घोरे वने स्थीयते शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया । कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान्नरान् ॥ २७९ ॥ भिक्षो मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह । वेश्या द्रव्यरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा चौर्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य काऽन्या गतिः ॥ २८० ॥ वेश्यावेश्मसु सीधुगन्धललनावक्त्रासवामोदितैर्नीत्वा निर्भरमन्मथोत्सवसुखैरुन्निद्रचन्द्राः क्षपाः । सर्वज्ञा इति दीक्षिता इति चिरात्प्राप्ताग्निहोत्रा इति ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ २८१ ॥ वृत्तिं स्वां बहु मन्यते हृदि शुचं धत्तेऽनुकम्पोक्तिभिर्व्यक्तं निन्दति योग्यतां मितमतिः कुर्वन्स्तुतीरात्मनः । गर्ह्योपायनिषेवणं कथयति स्थास्नु वदन्व्यापदं श्रुत्वा दुःखमरुंतुदां वितनुते पीडां जनः प्राकृतः ॥ २८२ ॥ पाकश्चेन्न शुभस्य मेऽद्य तदसौ प्रागेव नादात्किमु स्वार्थश्चेन्न मयाऽस्य किं न भजते दीनान्स्वबन्धूनयम् । मत्तो रन्ध्रदर्शोऽस्य भीर्यदि न तल्लुब्धः किमेष त्यजेदित्यन्तः पुरुषोऽधमः कलयति प्रायः कृतोपक्रियः ॥ २८३ ॥ वर्णस्थं गुरुलाघवं न गणयत्याशङ्कते न क्वचिद्रूपं नैव परीक्षते न पुरुषं वृत्तेषु वार्ता कुतः । कष्टं नायशसो बिभेति महतो नैवापशब्दान्तरान्मृत्युर्मूर्खकविः खलः कुनृपतिश्चैते ततश्चौरवत् ॥ २८४ ॥ वन्द्यान्निन्दति दुःखितानुपहसत्याबाधते बान्धवान्छूरान्द्वेष्टि धनच्युतान्परिभवत्याज्ञापयत्याश्रितान् । गुह्यानि प्रकटीकरोति घटयन्यत्नेन वैराशयं ब्रूते शीघ्रमवाच्यमुज्झति गुणान्गृह्णाति दोषान्खलः ॥ २८५ ॥ कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्घोषितं तन्नमाज्ञतया वदन्ति करुणं यस्मात्रपावान्भवेत् । श्लाघन्ते तदुदीर्यते यदरिणाऽप्युग्रं न मर्मान्तकृद्ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभृतां रञ्जकाः ॥ २८६ ॥ भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यांस्ते वै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि

---

१ अत्यन्तेन श्रमेण । २ सूर्ये । ३ मध्याह्नकालिके । ४ अतिनिष्ठुरत्वम् । ५ मर्मघातकः । ६ चमूरुर्मृगः । ७ जानन् । ८ असमीक्ष्यकारी । ९ व्याघ्रप्रभृतिभिः । १० जात- । ११ शार्दूलादयः । १२ मांसनिषेवणेन । १३ वेश्याभिः । १४ द्रव्ये रुचिर्यस्याः सा अत्रैकवचनं जातौ । १५ भ्रष्टस्येति पाठान्तरम् । १६ मद्य- । १७ सुप्रकाशमानचन्द्राः । १८ दिने । १९ प्रतार्यते । २० शोकम् । २१ अल्पज्ञः मूढः इति भावः । २२ दीर्घकालावधि स्थायिनीम् । २३ नीचः । २४ आघातावसरान्वेषिणः । २५ अकारादिवर्णगतम् । ब्राह्मणादिगतं च । २६ पूज्यत्वमपूज्यत्वं च । द्विमात्रिकैकमात्रिकत्वम् । २७ दीनत्वादिरूपम् । सूत्रानुसारं साधुत्वापत्तिकालिकमाकारविशेषं च । २८ सुहृदादिम् । तत्पुरुषादिरूपं च । २९ चरित्रेषु । छन्दःसु च । ३० अन्यथा वचनात् । गणवर्णादिदुष्टाच्च । ३१ दीनान् दरिद्रान् ।

वेश्याम् । दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभित्ताऽस्मि येषां चोरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥ २८७ ॥ दैवादप्युत्तमानामपहरति यदा दुर्जनो वा कथंचिन्मानं नाप्नोति तेषामनुजनितगुणानेव कुत्राधिकत्वम् । स्वर्भानुर्भानवीयान्हरति यदि पुनः शीतरश्मेर्मरीचीन्ब्रह्माण्डस्येह खण्डे तदपि नरपते किं ग्रहेशत्वमेति ॥ २८८ ॥ हे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियद्वो विशालं किं मद्धाम्नोऽपि बाढं तदतिशठ महापाप मा ब्रूहि मिथ्या । इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं नीचः प्रायः शठार्थो भवति हि विषमो नापराधेन हृष्टः ॥ २८९ ॥ आखुः कैलासशैलं तुलयति करटस्तार्क्ष्यमांसाभिलाषी बभ्रुर्लाङ्गूलमूलं चलयति चपलस्तक्षकाहिं जिघांसुः । भेकः पारं यियासुर्भुजगमपि महाघस्मरस्याम्बुराशेः प्रायेणासन्नपातः स्मरति समुचितं कर्म न क्षुद्रकर्मा ॥ २९० ॥ येषां स्नेहो न धर्मे विरतिरितरतो वाऽपि येषां न किञ्चित्त्रासोऽन्यस्मान्न लोकाद्भयमपयशसो नापि दण्डो नृपेभ्यः । नैवं नष्टा च वाणी न च करणगणो निष्फलत्वं प्रयातस्ते नीचाश्चाटुकारे प्रथितपृथुधियो नास्तिका हन्त विष्वक् ॥ २९१ ॥

## लक्ष्मीप्रकृतिनिदर्शनम् ।

या स्वसद्मनि[1] पद्मेऽपि सन्ध्यावधि[2] विजृम्भते[3] । इन्दिरा[4] मन्दिरेऽन्येषां कथं तिष्ठति सा चिरम् ॥ १ ॥ गुणिनं जनमालोक्य निजबन्धनशङ्कया । राजँल्लक्ष्मीः कुरङ्गीव[5] दूरं दूरं पलायते ॥ २ ॥ शूरं त्यजामि वैधव्यादुदारं[6] लज्जया[7] पुनः । सापत्न्यात्पण्डितमपि[8] तस्मात्कृपणमाश्रये ॥ ३ ॥ गोभिः क्रीडितवान्कृष्ण इति गोसमबुद्धिभिः[10] । क्रीडत्यद्यापि सा लक्ष्मीरहो देवी पतिव्रता ॥ ४ ॥ अत्यार्यमतिदातारमतिशूरमतिव्रतम् । प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ५ ॥ अनागत[11]विधातारमप्रमत्तमकोपनम् । स्थिरारम्भ[12]मदीनं च नरं श्रीरुपतिष्ठते ॥ ६ ॥ मन्ये सत्यमहं लक्ष्मीः समुद्राद्धूलिरुत्थिता । पश्यन्तोऽपि न पश्यन्ति सन्तो विह्वललोचनाः ॥ ७ ॥ समायाति यदा लक्ष्मीर्नारिकेलफलाम्बुवत्[13] । विनिर्याति यदा लक्ष्मीर्गजभुक्तकपित्थवत्[14] ॥ ८ ॥ लक्ष्मीर्यादो[15]निधेर्यादो[16] नादो[17] बादोचितं वचः । बिभ्यती धीवरेभ्यो[18] या जडेष्वेव[19] निमज्जति[20] ॥ ९ ॥ कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र । प्रायः श्वश्रूस्नुषयो[21]र्न दृश्यते सौहृदं लोके ॥ १० ॥ अव्यवसायिन[22]मलसं दैवपरं[23] साहसाच्च परिहीनम् । प्रमदा[24] पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुम् ॥ ११ ॥ गुणवद्भिः सह संगममुच्चैःपदमाप्तुमुत्सुका लक्ष्मीः । वीरकर[25]वालवसतिर्ध्रुवमसिधाराव्रतं चरति ॥ १२ ॥ श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा .विदग्धचरितानाम् । उप-

---

१ स्वनिवासस्थानभूते । २ सायङ्कालं यावत्, न तु ततःपरमिति भावः । ३ अवतिष्ठते । ४ लक्ष्मीः शोभा च । ५ मृगीव । ६ शूरस्य हि मृत्युः प्रायो निश्चितः सङ्ग्रामादपलायित्वात्, अपमानासहिष्णुत्वाच्च । ७ अयं मां कस्मैचिद्दास्यतीति पितृरूपेऽस्मिन्ननुरागं कथमिव निदध्यामिति लज्जा । ८ विद्यारूपाया अन्यस्याः कान्तायास्तत्र वर्त्तमानत्वात् । ९ विद्याकान्तं च सापत्न्यादिति सुपाठः । १० जडबुद्धिभिरिति भावः । ११ आपत्त्यागमनात्प्रथममेव तत्प्रतीकारकारिणम् । १२ दृढोत्साहम् । १३ तदास्वादस्य दुर्लभत्वात् । १४ तत्स्वरूपस्य पुनरनुपलब्धेः । १५ समुद्रस्य । १६ 'यादांसि जलजन्तवः ।' इत्यमरः । १७ इदम् । १८ दाशेभ्यः सुमतिभ्यश्च । १९ डलयोरभेदाज्जलेषु, मूढेषु च । २० अन्तः प्रविशति । अनुरज्यते च । २१ लक्ष्मीः श्वश्रू सरस्वतीपतेर्ब्रह्मणो भगवत्पुत्रत्वात्, सरस्वती च ब्रह्मपत्नीत्वात्स्नुषा ( पुत्रवधूः ) इति भावः । २२ अनुद्योगिनम् । २३ 'भाग्यं फलति सर्वेषाम्' इति मानिनम् । २४ प्रौढा युवतिः । २५ वीराणां करवाले खड्गे वसतिः निवासो यस्याः सा ।

दिशति[1] कामिनीनां यौवनमद एव ललितानि[2] ॥ १३ ॥ वाक्चक्षुःश्रोत्रलयं[3] लक्ष्मीः कुरुते नरस्य को दोषः । गरलसहोदर[4]जाता तच्चित्रं यन्न मारयति ॥ १४ ॥ अनुभवत ददत वित्तं मान्यान्मानयत सज्जनान्भजत । अतिपरुषपवनविलुलितदीपशिखाचञ्चला लक्ष्मीः ॥ १५ ॥ रत्नाकरतनुजनुर्[5]षि द्विजराजे राजनि श्रियो मित्रे[6] । अमृतकरे च कलावति[7] पद्मिनि[8] वामा[9] कुतो भवसि ॥ १६ ॥ पूरयति पूर्णमेषां[10] तरङ्गिणीसंहतिः समुद्रमिव । लक्ष्मीरधनस्य पुनर्लोचनमार्गेऽपि नायाति ॥ १७ ॥ सुव्यवसायिनि शूरे क्लेशसहिष्णावनाकुलारम्भे[11] । मयि पृष्ठतो विलग्ने यास्यसि कमले कियद्दूरम् ॥ १८ ॥ अपि दोर्भ्यां परिबद्धा बद्धाऽपि गुणैरनेकधा निपुणैः । निर्गच्छति क्षणादिव जलधिजलोत्पत्ति[12]पिच्छला लक्ष्मीः ॥ १९ ॥ हरिभामिनि[13] सिन्धुसंभवे[14] कमले किं कथयामि ते गुणान् । अनुरज्यसि हा जडे[15] जने गुणगौरे पुरुषे विरज्यसि ॥ २० ॥ वीक्षितानि तव वारिधिकन्ये यत्र पालितजगन्ति लगन्ति[16] । चित्रमत्र च परत्र च देही[17] देहिशब्दमपहाय[18] चकास्ति ॥ २१ ॥ यद्वदन्ति चपलेत्यपवादं नैव दूषणमिदं कमलायाः[19] । दूषणं जलनिधेर्हि भवेत्तद्यत्पुराणपुरुषाय[20] ददौ ताम् ॥ २२ ॥ चाञ्चल्यमुच्चैःश्रवसस्तुरंगात्कौटिल्यमिन्दोर्विषतो विमोहः । इति श्रियाऽशिक्षि सहोदरेभ्यो[21] न वेद्मि कस्माद्गुणवद्विरोधः ॥ २३ ॥ श्वश्रूं विना वृत्तिरिह स्वतन्त्रा प्रायः स्नुषाणाम्[22]अपवादहेतुः । यद्वाणि लोके रमया[23] विहीनां सतीमपि त्वामसतीं वदन्ति ॥ २४ ॥ उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्व[24]सक्तम् । शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ २५ ॥ हालाहलो[25] नैव विषं विषं रमा[26] जनाः परं व्यत्ययम्[27]अत्र मन्वते । निपीय जागर्ति सुखेन तं[28] शिवः स्पृशन्निमां मुह्यति निद्रया हरिः ॥ २६ ॥ तापापहे सुहृद्ये रुचिरे प्रबुद्धे[29] मित्रा[30]नुरागनिरते धृतसद्गुणौघे । स्वाङ्गप्रदानपरिपूरितषट्पदौघे युक्तं तवेह कमले[31] कमले[32] स्थितिर्यत् ॥ २७ ॥ रत्नाकरस्तव पिता कमले निवासो भ्राता सुधामयतनुः[33] पतिरादिदेवः[34] । केनापरेण कमले बत शिक्षितानि सारङ्ग[35]शृङ्गकुटिलानि विचेष्टितानि ॥ २८ ॥ लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्तमन्धीभवन्ति पुरुषास्त्वदुपासनेन । नो चेत्कथं कमलपत्रविशालनेत्रो नारायणः स्वपिति पन्नगभोगतल्पे[36] ॥ २९ ॥ असौभाग्यं[37] धत्ते परमसुखभोगास्पदमयं विचित्रं[38] तद्गेहं भवति पृथुकार्तस्वरमयम्[39] । निविष्टः पर्यङ्के[40] कलयति स कान्तारतरणं[41] प्रसादं कोपं मा जननि भवती यत्र तनुते ॥ ३० ॥

---

१ आविष्करोतीति व्यङ्ग्य इति काव्यप्रकाशादौ स्पष्टम् । २ विलसितानि । ३ वागादीनां संहारम् । ४ समुद्रादेव लक्ष्मीर्गरलं चोद्भूतामिति तथोक्तिः । ५ जनुः-उत्पत्तिः । ६ सहजत्वात् प्रेमास्पदभूते । ७ कलानिधौ । ८ हे लक्ष्मि । ९ रम्या, प्रतिकूला च । १० सम्पन्नानां मध्ये प्राणिनां मध्ये वा पूर्णं पूर्वतः समृद्धम् । तरङ्गिणीनां नदीनां संहतिः समूहः समुद्रमिव पूरयतीत्यन्वयः । ११ नाकुलः अविचार्य प्रवर्त्यमानः आरम्भः कर्मानुष्ठानक्रमो यस्य तत्र । १२ जलधिजलादुत्पत्तिर्यस्याः । साऽसौ पिच्छला, यद्वा-जलधिजलोत्पत्तिः-तरङ्गः, तद्वत् पिच्छला क्षणिकदृश्येति । १३ श्रीहरिप्रिये । १४ समुद्रादुत्पन्ने । १५ मूढे । १६ उपतिष्ठन्ते । १७ देही जीवः । १८देहि इति पराभ्यर्थनाऽनावश्यकत्वात् । १९ लक्ष्म्याः । २० वृद्धः सनातन- । २१ उच्चैःश्रवःप्रभृतीनामपि समुद्रजत्वात् । २२ पुत्रवधूनाम् । २३ लक्ष्मीरूपया श्वश्र्वा । २४ द्यूतादिषु । २५ उत्कटं गरलम् । २६ लक्ष्मीः । २७ विपर्ययताम् । २८ हालाहलम् । २९ विकसिते समाहिते च । ३० सूर्य- । सुहृत् । ३१ लक्ष्मिः । ३२ सरोजे । ३३ चन्द्रमाः । ३४नारायणः । ३५ मृग- । ३६ सर्पकलेवरे । ३७ असौ इति भाग्यम् इति समस्तं च । ३८ नानावर्णरञ्जितं चित्रताशून्यं च । ३९ पृथूनि कार्तस्वरमयानि सुवर्णप्रचुराणि पात्रादीनि यत्र तादृशम् । पृथुकानां बालकानाम्, य आर्तस्वरस्तत्प्रचुरं च । ४० रलयोः सावर्ण्यमिति पल्यङ्के शय्यायाम् । तथा पल्ल्याः क्षुद्रग्रामस्य अङ्कः मध्यदेशस्तत्रेति च । ४१ कान्तया सह यद्रतं तद्रूपं रणम् । कान्तारस्य दुर्गमवनस्य तरणं पारगमनमिति च ।

समुद्रस्यापत्यं प्रीथतमहिमामुद्रितभुवः स्वसा प्रालेयांशो[1]स्त्रिनयनशिरोधामवसतेः । मुरारातेर्योषित्सरसिरुहकिञ्जल्कनिलया तथाऽपि श्रीः स्त्रीत्वात्[3]प्रकृतिचपलाऽऽलिङ्गति खलान् ॥३१॥ तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते मूर्खान्द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि । शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनपि श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ ३२ ॥ कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे । यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च तं नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ३३ ॥ पद्मे मूढजने ददासि विभवं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः । मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥३४॥तिर्यक्त्वं भजतु प्रतारयतु वा धर्मक्रियाकोविदं हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां वधूमुज्झतु । वेदान्निन्दतु वा हिनस्तु जनतां किं वाऽनया चिन्तया लक्ष्मीर्यस्य गृहे स एव भजति प्रायो जगद्वन्द्यताम् ॥ ३५ ॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम् । पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ ३६ ॥ हे लक्ष्मि क्षणिके स्वभावचपले मूढे च पापेऽधमे न त्वं चोत्तमपात्रमिच्छसि खले प्रायेण दुश्चारिणि । ये देवार्चनसत्यशौचनिरता ये चापि धर्मे रतास्तेभ्यो लज्जसि निर्दये गतमतिर्नीचो जनो वल्लभः ॥ ३७ ॥ नाहं दुश्चारिणी न चापि चपला मूर्खो न मे रोचते नो शूरो न च पण्डितो न च शठो हीनाक्षरो नैव च । पूर्वस्मिन्कृतपुण्ययोगविभवो भुङ्क्ते स मे सत्फलं लोकानां किमसह्यता सखि पुनर्दृष्ट्वा परां संपदम्॥३८॥हन्तुर्बन्धुजनान्धनार्थमनघान्गन्तुः परस्त्रीशतं रन्तुर्जन्तुविहिंसकैःसह जनैः संतुष्यतो वञ्चनैः । वक्तुस्तीक्ष्णमयुक्तमेव वचनं पक्तुर्मितं[11] चौदनं नित्यं नृत्यसि मन्दिरेषु कमले कैत्यं[12] तवैतन्मतम् ॥ ३९ ॥ यत्राभ्यागतदानमानचरणप्रक्षालनं भोजनं सत्सेवा पितृदेवतार्चनविधिः सत्यं गवां पालनम् । धान्यानामपि संग्रहो न कलहश्चित्तानुरूपा प्रिया हृष्टा प्राह हरिं वसामि कमला तस्मिन्गृहे निश्चला ॥ ४० ॥ येषामन्य[13]कलत्रदर्शनकलाव्युत्पत्तिशून्ये दृशौ मूढं हन्त परार्थचिन्तनविधौ मिथ्यानभिज्ञं मुखम् । अप्रज्ञातपशून्बुभुक्षितशिशूनश्रोदकैस्ताम्यै[14]तस्तेषां लक्ष्मि गृहान्दृशाऽपि भयभीतेवेह नो वीक्षसे ॥ ४१ ॥ नो जानाति कुलीनमुत्तमगुणं सत्त्वान्वितं धार्मिकं नाचारप्रवणं न कार्यकुशलं न प्रज्ञयाऽलंकृतम् । नीचं दूरमपेतसत्त्वै[15]ममदयं यस्मादियं सेवते तद्वंशानुगुणं पयोधिसुतया लक्ष्म्या प्रमाणीकृतम् ॥ ४२ ॥ पीतोऽगस्त्येन तात[16]श्चरणतलहतो वल्लभो[17]ऽन्येन[18] रोषादाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी[19] मे । गेहं[20] मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं तस्मात्खिन्ना सदाऽहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥ ४३ ॥ दुष्टं कामं मनो मे यदपि बत जरत्पूरुषानुप्रसक्तावन्तस्तृप्तेरभावात्तदपि न गुरवो ब्राह्मणा जातु भोग्याः । इत्येवान्तर्विचारा जलनिधितनया सर्वतोऽन्यत्र लोके नित्यं भावं निधत्ते न तु सुकृतिनि सा क्ष्मासुराणां कुलेऽपि ॥ ४४ ॥

---

१ हिमांशोः । २ केसर- ३ निसर्ग- । ४ वेश्या । ५ दुराराध्या । ६ जनैः बति पाठान्तरम् । ७ पक्षिभावम् । प्रतिकूलत्वं वा । ८ प्रीतिपात्रम् । ९ अनपराधिनः । १० हिंस्रैः । ११ मितं पक्तुः कृपणस्य । १२ कुत्र भवम् । १३ परस्त्री- । अर्थात् असदिङ्गितक्रियातो विरुद्धे । यद्वा अन्यकलत्रपदं सरस्वतीरूपसपत्नीपरम् । १४ अनावृततया मेघधारापातेन पीड्यमानान् । १५ गुणविशेष- । १६ पिता समुद्रः । १७ प्रियः विष्णुः । १८ भृगुमुनिना । १९ सरस्वती । २० कमलम्, बिल्वं वा ।

## द्रविणमाहिमप्रशंसनम् ।

अहो कनकमाहात्म्यं वक्तुं केनापि नेश्यते । नामसाम्यादहो चित्रं धत्तूरो[1]ऽपि मदप्रदः ॥ १ ॥ न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो । मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ २ ॥ धनमर्जय काकुत्स्थ धनमूलमिदं जगत् । अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ३ ॥ ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् । शशिना तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ४ ॥ कुत आगत्य घटते विघट्य क नु याति च । न लक्ष्यते गतिश्चित्रा वनस्य[2] च धनस्य च ॥५॥ स्त्रीरूपं मोहकं पुंसो यून एव भवेत्क्षणम् । कनकं बालवृद्धस्त्रीषण्ढानाम[3]पि सर्वदा ॥ ६ ॥ न नरस्य नरो दासो दासश्चार्थस्य भूपते । गौरवं लाघवं वापि धनाधननिबन्धनम् ॥७॥ विभवो हि यथा लोके न शरीराणि देहिनाम् ।चाण्डालोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ॥ ८ ॥ सुवर्णस्य[4] प्रसङ्गेन न चित्रं चेत्सुवर्णता[5] । किंतु कर्बुर[6]वैचित्र्यं सुमनस्त्वाय[7] कल्पते ॥९॥ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान्[8]गुणज्ञः। स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ १० ॥ त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च[9] सुहृज्जनाश्च । तमर्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ ११ ॥ बुभुक्षितैर्व्याकरणं न भुज्यते[10] पिपासितैः काव्यरसो न पीयते[11] । न च्छन्दसा[12] केनचिदुद्धृतं[13] कुलं हिरण्यमेवार्जय निष्फला गुणाः ॥ १२ ॥ धनैर्निष्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति । धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ १३ ॥ दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनं[14] धनं धनम् । इत्थमेव निनदः प्रवर्तते किं पुनर्यदि जनः सचेतनः ॥१४॥ त्यक्त्वा युवा स्वयुवतिं सुविलासयोग्यां दूरं विदेश[15]वसतौ निवसन्धनार्थी । रात्र्यागमे स्मरति तां न समेति तस्मात्कान्ताश्रमादपि वरः कनकश्रमोऽयम् ॥ १५ ॥ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु शीलं शैलतटात्पततत्वभिजनः[16] संदह्यतां वह्निना । शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं येनैकेन विना गुणास्तृणलवप्रायाः[17] समस्ता इमे ॥ १६ ॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते । अर्थप्रार्थनशङ्कया न कुरुते संभाषणं वै सुहृत्तस्माद्द्रव्यमुपार्जयस्व सुमते द्रव्येण सर्वे वशाः ॥ १७ ॥

## द्रविणगर्हणम् ।

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते । जनितार[18]मपि त्यक्त्वा निः[19]स्वं गच्छति दूरतः॥१॥ लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् । शेषे धराभरक्रान्ते शेते नारायणः सुखम् ॥ २ ॥ वरं हालाहलं पीतं सद्यः प्राणहरं विषम् । न तु दृष्टं धनान्धस्य भ्रूभङ्ग[20]कुटिलं मुखम् ॥३॥ भक्ते[21] द्वेषो जडे[22]

---

१ कनकपदस्य धत्तूरसुवर्णोभयवाचित्वात् । २ मेघस्य । ३ क्लीबानाम् । ४ हेम्नः, शोभनवर्णस्य च । ५ हेमाकारता– । उत्कृष्टब्राह्मणाद्यन्यतमवर्णत्वम्, प्रशंसनीयत्वं वा । ६ राक्षस–। सुवर्ण– । ७ देवभावाय, सुप्रसन्नत्वाय च । ८ शास्त्रवित् । ९ स्त्रियः । १० सेव्यते । खाद्यते च । ११ सादरं श्रूयते । आस्वाद्यते च । १२ वेदेन । १३ उन्नतिं नीतम्, विपत्तेर्निष्कासितं वा । १४ इदं शब्दानुकरणम् । द्रविणवाचकमिति तु स्पष्टमेव ।१५ परदेशस्थाने ।१६ बन्धुजनः । १७ सदृशाः । १८ पितरम् । १९ दरिद्रम् । २० भ्रुवोर्धनुराकारीकरम् । २१ सेवके ओदने च । २२ मूढे जले च ।

प्रीतिररुचिर्गुरुलङ्घनम् । मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥ ४ ॥ आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे पथि । अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ५ ॥ आजन्मानुगतेऽप्यस्मिन्नाले विमुखमम्बुजम् । प्रायेण गुणपूर्णेषु रीतिर्लक्ष्मीवतामियम् ॥ ६ ॥ धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते । लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ ७ ॥ जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु । मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः ॥८॥ यथाऽऽमिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि । आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ९ ॥ राजतः सलिलादग्नेश्चोरतः स्वजनादपि । भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १० ॥ धनाशया खलीकारः कस्य नाम न जायते । दूरादामिषलोभेन बध्यते खेचरः खगः ॥ ११ ॥ अर्थस्य पुरुषो दासः स च जातु न कस्यचित् । यदर्जनपरा लोके सर्वेऽपि भुवनत्रये ॥ १२ ॥ धनार्थं जीवितत्यागो धर्मत्यागश्च धावनम् । सहनं क्षुत्तृषोर्वैरं सुहृद्भिश्च सुतादिभिः ॥ १३ ॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति । विकृतयति गात्रयष्टिं संपद्रोगोऽयमद्भुतो राजन् ॥ १४ ॥ लक्ष्म्या परिपूर्णोऽहं न भयं मेऽस्तीति मोहनिद्रैषा । परिपूर्णस्यैवेन्दोर्भवति भयं सिंहिकासूनोः ॥ १५ ॥ अर्जुनीयति यदर्जने जनो वर्जनीयजनतर्जनादिभिः । मङ्क्षु नश्यति चिराय संचिता वञ्चिता जगति के न संपदा ॥ १६ ॥ वरमसिधारा तरुतलवासो वरमिह भिक्षा वरमुपवासः । वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥ १७ ॥ तानीन्द्रियाण्यविकलानि मनस्तदेव सा बुद्धिरप्रतिहता वचनं तदेव । अर्थोष्मणा विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥ १८ ॥ आपद्गतं हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् । एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ १९ ॥ धनमपि परदत्तं दुःखमौचित्यभाजां भवति हृदि तदेवानन्दकारीतरेषाम् । मलयजरसबिन्दुर्बाधते नेत्रमन्तर्जनयति च स एवाह्लादमन्यत्र गात्रे ॥ २० ॥ लभेद्यदयुतं धनं तदधनं धनं यद्यपि लभेत नियुतं धनं निधनमेव तज्जायते । तथा धनपरार्धकं तदपि भावहीनात्मकं यदक्षरपदद्वयान्तरगतं धनं तद्धनम् ॥ २१ ॥ दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो दूरेण च्छलमाकलय्य हुतभुग्भस्मीकरोति क्षणात् । अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ति ध्रुवं दुर्वृत्तास्तनया नयन्ति निधनं धिग्धिग्धनं तद्बहु ॥ २२ ॥

## इभ्यप्रशंसनम् ।

इभ्या यदि नृपद्वारे सम्मन्यन्ते किमद्भुतम् । इदानीं विबुधद्वारे तेषामेव पुरस्क्रिया ॥ १ ॥ बहूनामपराधानामपि हन्त विधायकः । निन्द्यते नैव केनापि प्रत्युत स्तूयते जनैः ॥ २ ॥ धनवान्बलवांल्लोके

---

१ अप्रीतिः । २ गुरूणां पित्राचार्यादीनां लङ्घनं तिरस्कारः, । गुरु अत्यन्तं लङ्घनम् उपवासश्च । ३ कटुभाषित्वम्, नीरसत्वं च । ४ निम्नोन्नतताशून्ये, सरले, न्याय्ये च । ५ व्याघ्रादिभिः । ६ तिरस्कारः । ७ मांस- । ८ आकाशचारी । ९ शरीरयष्टिम् । १० राहोः । ११ अर्जुनः सहस्रबाहुः । १२ झटिति । १३ समर्थानि । १४ अकुण्ठिता । १५ चन्दन- । १६सहस्रदशकम्, अकारेण युतं (धनाभावम्) च । १७लक्षसङ्ख्याकम्, निकारेण युतं (निधनम्) च । १८ धनस्य परार्द्ध सङ्ख्याविशेषम्, धनसम्बन्धि परमर्द्धं 'न' इति निषेधात्मकम् । १९ अक्षरः अविनाशी परमेश्वर इति यावत्, तस्य पदद्वयं तदन्तरगतम्, अक्षरयोः वर्णरूपयोः (पद) पकारदकारयोः यदन्तरं तत्र गतम् 'धन' इत्यात्मकाक्षरद्वयरूपमिति भावः । २० अपहरन्ति । २१ विचार्य । २२ क्रोधाग्निरिति भावः । २३ आक्रामति । २४ दुष्टाः । २५ मृत्युम् । २६ धनि- ।

सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ ३ ॥ वयोवृद्धास्तपोवृद्धा ज्ञानवृद्धाश्च ये परे । ते सर्वे धनवृद्धस्य द्वारे तिष्ठन्ति किंकराः ॥ ४ ॥ न सा विद्या न तच्छीलं न तद्दानं न सा कला । अर्थार्थिभिर्न तच्छौर्यं धनिनां यन्न कीर्त्यते ॥ ५ ॥ पतन्ति खड्गधारासु विशन्ति मकरालयम्[1] । किं न कुर्वन्ति सुभगे कष्टमर्थार्थिनो जनाः ॥ ६ ॥ एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर । एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ७ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ८ ॥ को नाम नानुवृत्तिं सुमहानपि धनवतः कुरुते । वित्तेशभवनभित्तेः समीपमुपसेवते शंभुः ॥ ९ ॥ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य । अप्यतिपरुषमसत्यं पूज्यं वाक्यं समृद्धस्य ॥ १० ॥ वैभवभाजां[3] भूषणमपि भूषणपक्ष एव निक्षिप्तम् । गुणमात्मनामधर्मं द्वेषं च गृणन्ति काणादाः[4] ॥ ११ ॥ वाणी दरिद्रस्य शुभा हिताऽपि ह्यर्थेन शब्देन च संप्रयुक्ता । न शोभते वित्तवतः समीपे भेरीनिनादोपहतेव वीणा ॥ १२ ॥ यादृशि तादृशि वित्तसेनाथे पञ्च पिशाचशतानि वसन्ति । यानि पुनर्निवसन्ति महीशे तानि न केनचिदाकलितानि ॥ १३ ॥ न विद्यया नैव कुलेन गौरवं जनानुरागो धनिकेषु सर्वदा । कपालिना[6] मौलिधृताऽपि जाह्नवी प्रयाति रत्नाकरमेव सत्वरम् ॥ १४ ॥ गङ्गां च धारयति मूर्ध्नि सदा कपाली सा तस्य चुम्बति मुखं न कदाचिदेव । रत्नाकरं प्रति चुचुम्ब सहस्रवक्त्रैर्गङ्गादयो युवतयः सधनानुकूलाः ॥ १५ ॥ धिगस्त्वेतां विद्यां धिगपि कवितां धिक्सुजनतां[11] वयो रूपं धिग्धिग्धिगपि च यशो निर्धनवतः । असौ जीयादेकः सकलगुणहीनोऽपि धनवान्बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ॥ १६ ॥ परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम् । अतश्चानैकान्त्याद्गुरुलघुतयाऽर्थेषु धनिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥ १७ ॥

## दुर्विधगर्हणम् ।

दुर्विधाः[14] परिभूयन्ते धर्मीयांसोऽपि सर्वतः । किं पुनः परतः किंतु स्वजनैरपि मुच्यते ॥ १ ॥ उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः । बालवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥ २ ॥ हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः । पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ ३ ॥ धनिनामिह भूलोके परोऽपि स्वजनायते । स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ॥ ४ ॥ परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम्[12] । विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ५ ॥ येनैवाम्बरखण्डेन[13] संवीतो निशि चन्द्रमाः । तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः[14] ॥ ६ ॥ चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह । चाण्डालस्य न गृह्णन्ति दरिद्रो न प्रयच्छति ॥ ७ ॥ अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः । क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो[16] यथा ॥ ८ ॥ द्वाविमावम्भसि क्षेप्यौ गाढं बद्ध्वा गले शिलाम् । धनी चेदप्रदाता स्याद्दरिद्रश्चाप्यतापसः ॥ ९ ॥ अत्यन्तविमुखे दैवे व्यर्थे यत्ने च पौरुषे । मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥ १० ॥ दूये[18] कान्ताकरं वीक्ष्य मणिकङ्कणवर्जितम् । अतः परं

---

१ समुद्रम् । २ धनाढ्य- । कुबेर- । ३ धनिनाम् । ४ कणादमतानुमन्तारः । कणादो वैशेषिकशास्त्रप्रणेता । ५ सहिते । ६ शङ्करेण, अत्यन्तदरिद्रेण च । ७ मस्तक- । ८ गङ्गा, तदाख्यानायिका च । ९ समुद्रम्, धनाढ्यं च । १० सज्जनताम् । ११ दरिद्राः । १२ सौन्दर्यम् । १३ व्योम- । वस्त्र- । १४ दरिद्रत्वम् । १५ मूढस्य । १६ क्षुद्रा नद्यः । १७ गृहस्थः । १८ खिद्यामि ।

परं दूये मणिकं[2] कणवर्जितम्[3] ॥ ११ ॥ रात्रौ जानुर्दिवा भानुः कृशानुः[4] संध्ययोर्द्वयोः । पश्य शीतं मया नीतं जानुभानुकृशानुभिः ॥ १२ ॥ किं करोमि क्व गच्छामि कमुपैमि दुरात्मना । दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः ॥ १३ ॥ दुःखं दुःखमिति ब्रूयान्मानवो नरकं प्रति । दारिद्र्यादधिकं दुःखं न भूतं न भविष्यति ॥ १४ ॥ किं चान्यैः सुकुलाचारैः सेव्यतामेति पूरुषः । धनहीनः स्वपत्न्याऽपि त्यज्यते किं पुनः परैः ॥१५॥ किं वाच्यं सूर्यशशिनोर्दारिद्र्यं महतां पुरः । दिनरात्रिविभागेन परिधत्तो यदम्बरम्[5] ॥ १६ ॥ मौख्य सर्वापदां निष्ठा का हि नापदजानतः । तस्मिन्नप्यविषण्णो[6] यः क्व सोऽन्यत्र विपत्स्यति ॥ १७ ॥ यदि नाम कुले जन्म तत्किमर्थं[7] दरिद्रता । दरिद्रत्वेऽपि मूर्खत्वमहो दुःखपरम्परा ॥ १८ ॥ कः स्वभावगभीराणां जानीयाद्बहिरापदम् । बालापत्येन भृत्येन यदि सा न प्रकाश्यते ॥ १९ ॥ सन्तोऽपि न विराजन्ते हीनार्थस्येतरे गुणाः । आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ २० ॥ वरं हि नरके वासो न तु दुश्चरिते[8] गृहे । नरकात्क्षीयते पापं कुगृहात्परिवर्धते ॥ २१ ॥ नातः पापीयसीं कांचिदवस्थां शम्बरो[9]ऽब्रवीत् । यस्यां नैवाद्य न प्रातर्भोजनं तात विद्यते ॥ २२ ॥ न तथा बाध्यते राजन्प्रकृत्या[10] निर्धनो जनः । यथा भद्राणि[11] संप्राप्य तैर्विहीनः सुखोचितः ॥ २३ ॥ कुब्जस्य कीटखातस्य दावनिष्कुषितत्वचः । तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः[12] ॥ २४ ॥ धर्मार्थकामहीनस्य परकीयान्नभोजिनः । काकस्येव दरिद्रस्य दीर्घमायुर्विडम्बना ॥ २५ ॥ शीतमध्वा कदन्नं[13] च वयोतीताश्च योषितः । मनसः प्रातिकूल्यं च जरायाः पञ्च हेतवः ॥ २६ ॥ सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् । प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥ २७ ॥ लज्जावतः कुलीनस्य याचितुं धनमिच्छतः । कण्ठे पारावतस्येव[14] वाक्करोति गतागतम् ॥ २८ ॥ कण्ठे गद्गदता स्वेदो मुखे वैवर्ण्यवेपथू । म्रियमाणस्य चिह्नानि यानि तान्येव याचतः ॥२९॥ धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् । परचित्तगतान्दारान्पुत्रं च व्यसनातुरम् ॥ ३० ॥ खशभाष्यं[15] तु काव्येन काव्यं गीतेन हन्यते । गीतं तु स्त्रीविलासेन स्त्रीविलासो बुभुक्षया ॥ ३१ ॥ जीवन्त्यर्थक्षये[16] नीचा याच्ञोपद्रववञ्चनैः[17] । कुलाभिमानमूर्खाणां[18] साधूनां नास्ति जीवनम् ॥ ३२ ॥ शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् । मूर्खस्य दिशः शून्याः सर्वं[19] शून्यं दरिद्रस्य ॥ ३३ ॥ पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् । सर्पश्चोद्धृतदंष्ट्रस्तुल्यं[20] लोके दरिद्रश्च ॥३४॥ अम्बा[21] तुष्यति न मया न स्नुषया साऽपि नाम्बया न मया । अहमपि न तया न तया वद राजन्कस्य[22] दोषोऽयम् ॥ ३५ ॥ पृथुकार्तस्वरपात्रं[23] भूषितनिःशेषपरिजनं[24] देव । विलसत्करेणुगहनं[25] संप्रति सममावयोः सदनम् ॥ ३६ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् । अल्पक्लेशं

---

१ अत्यन्तम् । २ मृत्पात्रम् । ३ धान्यकण- । ४ अग्निः । ५ वस्त्रम्, आकाशं च । ६ अखिन्नः । अनुरक्त इति यावत् । ७ सम्पत्तिः । ८ दारिद्र्यपूर्णे । ९ एतदाख्यो दैत्यः । १० स्वभावेन । ११ ऐश्वर्याणि । १२ दरिद्रतयायाचकस्य । १३ पर्युषितत्वादिना कुत्सितमन्नम् । १४ कपोतस्येव । १५ खशानां म्लेच्छानां भाष्यं-भाषणम् । खरभाष्यमिति पाठे तु खरसदृशपरुषभाषणमित्यभिप्रायः । १६ धने नष्टे । १७ प्रतारणैः । १८ कुलाभिमानेन प्रकटयितुमक्षमाणाम् । १९ गृहादि । २० निष्कासित- । २१ माता । २२ किंतु दारिद्र्यस्यैवेति भावः । २३ पृथूनि कार्तस्वर-(स्वर्ण) पात्राणि यत्र । पृथुकानाम्(बालानाम्)आर्तस्वरस्य पात्रम् आवासरूपम् । २४ भूषिताः निःशेषाः परिजना अनुचरा यत्रेति, भुवि उषिताः गृहकल्पनाद्यभावात् धरातले कृतवासा निश्शेषाः परिजनाः बन्धवो यत्रेति च । २५ विलसन्तीभिः करेणुभिः हस्तिनीभिर्गहनम् । वबयोरभेदात् बिले सीदन्तीति तेषां मूषकादीनां ये रेणवस्तैर्गहनम् । स्पष्टमन्यत् ।

मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ३७ ॥ तावत्सन्ति सहाया यावज्जन्तुर्न कृच्छ्रमाप्नोति । अभिपतति शिरसि मृत्यौ कः कः शक्तः परित्रातुम् ॥ ३८ ॥ विकसामि रवावुदिते संकोचमुपैमि चास्तमुपयाते । दारिद्र्यसरसि मग्नः पङ्कजलीलामनुभवामि ॥ ३९ ॥ घृतलवणतैलतण्डुलशाकेन्धनचिन्तयाऽनुदिनम् । विपुलमतेरपि पुंसो नश्यति धीर्मन्दविभवत्वात् ॥ ४० ॥ वीणा वंशश्चन्दनं चन्द्रभासः शय्या यानं यौवनस्थास्तरुण्यः । नैतद्रम्यं क्षुत्पिपासार्दितानां सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥ ४१ ॥ दारिद्र्य भोस्त्वं परमं विवेकि गुणाधिके पुंसि सदानुरक्तम् । विद्याविहीने गुणवर्जिते च मुहूर्तमात्रं न रतिं करोषि ॥ ४२ ॥ दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा । विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ ४३ ॥ एको हि दोषो गुणसंनिपाते निमज्जतीन्दोरिति यो बभाषे । न तेन दृष्टं कविना समस्तं दारिद्र्यमेकं गुणकोटिहारि ॥ ४४ ॥ धनैर्विमुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् । यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति ॥ ४५ ॥ अहो नु कष्टं सततं प्रवासस्ततोऽतिकष्टः परगेहवासः । कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ ४६ ॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् । तृणानि शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ ४७ ॥ यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते । तदाऽस्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥ ४८ ॥ दानं न दत्तं न तपश्च तप्तं नाराधितौ शंकरवासुदेवौ । अग्नौ रणे वा न हुतश्च कायः शरीर किं प्रार्थयसे सुखानि ॥ ४९ ॥ फलाशिनो मूलतृणाम्बुभक्षा विवाससो निस्तरशायिनश्च । गृहे विमूढा मुनिवच्चरन्ति तुल्यं तपः किंतु फलेन हीनम् ॥ ५० ॥ अर्था न सन्ति न च मुञ्चति मां दुराशा त्यागान्न संकुचति दुर्ललितं मनो मे । याच्ञा च लाघवकरी स्ववधे च पापं प्राणाः स्वयं व्रजत किं प्रविलम्बितेन ॥ ५१ ॥ भग्ना वयं परिभवासिभिरुग्रधारैर्दारिद्र्यचण्डदहनेन नितान्तदग्धाः । बन्धूपकारविषमित्थमपीह भुक्तं जीवाय एव रविजस्य किमस्ति निद्रा ॥ ५२ ॥ धनं यदि गतं गतं चरणयुग्मरेणूपमं धरा यदि गता गता कथय मे किमेतावता । इदं पुनररुंतुदं धनिगणैरिदानींतनैर्दरिद्रगणनाविधौ यदहमङ्कपाते धृतः ॥ ५३ ॥ गते सुहृदि शत्रुतां सततनिर्विवेके प्रभौ गृहे कुगृहिणीवचःक्रकचदारिते वा हृदि । महाजनविवर्जिते सदसि मानिनां श्रेयसे वरं मरणमेव वा शरणमन्यदेशान्तरम् ॥ ५४ ॥ अप्रस्तावस्तुतिमिरनिशं कर्णशूलं करोति स्वं दारिद्र्यं वदति वसनं दर्शयत्येव जीर्णम् । छायाभूतश्चलति न पुरः पार्श्वयोर्नैव पश्चान्निःस्वः खेदं दिशति धनिनां व्याधिवद्दुश्चिकित्स्यः ॥ ५५ ॥ निवासश्चिन्तायाः परपरिभवो वैरमपरं जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् । वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ ५६ ॥ अये लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी शिशोः कर्णौ यत्नात्सुपिहितवती दीनवदना । मयि क्षीणोपाये यदकृत दृशावश्रुशबले तदन्तःशल्यं मे

---

१ कष्टम्, दारिद्र्यदुःखमिति यावत् । २ महापण्डितस्य । ३ विवेचनक्षमम् । ४ अत्र पण्डितानां प्रायो दारिद्र्यं मूढानां सम्पन्नत्वं च सूचितम् । ५ निवासं कृत्वा । ६ मृत्युग्रस्त- । ७ कोटिगुणसंहारीति भावः । ८ जन्मारम्भादेव । यस्य जीविकाभावः सिद्धस्तस्येति शेषः । ९ वृक्षत्वक् । १० कः पवित्रः असौ अयः शुभावहो विधिः, तद्रूपं घृतादि शरीरं च । ११ दानात् । १२ उदारम् । १३ विलम्बनेन । १४ यमस्य । १५ मर्मपीडकम् । १६ काष्ठदारणशस्त्रविशेष- । 'करोत' इति भाषायाम् । १७ रक्षकम् । १८ दरिद्रः । १९ ददाति । २० अन्यथा लाजाशब्दं श्रुत्वा सोऽर्भको याचेतेति भावः । २१ पूर्ण ।

त्वमिव पुनरुद्वर्तुमुचितम् ॥५७॥ विधातुर्द्वे कन्ये सुगतिरपरा दुर्गतिरभूत्तयोराद्यां धाता गुणकुलविहीनाय स ददौ । ततः पश्चात्तापादिव सुगुणसज्जातेमधुना कुलीनं विद्वांसं वरमिह वरेण्यं मृगयते ॥ ५८ ॥ न भिक्षा दुर्भिक्षे मिलति दुरवस्थाः कथमृणं लभन्ते कर्माणि द्विजपरिवृढान्कारयतु कः । अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते क यामः किं कुर्मो गृहिणि गहनो जीवनविधिः ॥ ५९ ॥ पतत्प्रायस्थूणं क्षुदुपहतसीदत्परिजनं विना दीपालोकं तिमिरगहनं निष्परिकरम् । अनाक्रान्तद्वारं प्रणयिभिरष्टोत्सवमहो गृहं कारातुल्यं भवति खलु दुःखाय गृहिणः ॥ ६० ॥ सखे खेदं मा गाः कलय किल तास्ता निजकलाः स्वकीर्त्या वर्धस्व क नु खलु तवैतद्व्यवसितम् । न तन्मोघत्यत्र स्फुरितमिति चेन्नैतदुचितं विचित्रोत्साहानां किमिदमियदेव त्रिभुवनम् ॥ ६१ ॥ दधति न जनास्तन्नैराश्यादद‍ृष्टविभूतयो यदुचितसुखभ्रंशाद्दुःखं निजच्युतसंपदः । भवति हि तथा जात्यन्धानां कुतो हृदि वेदना नयनविषयं स्मृत्वा स्मृत्वा यथोद्धृतचक्षुषाम् ॥ ६२॥ मा रोदीश्चिरमेहि वत्सरुचिरान्दृष्ट्वाद्य बालानिमानायातस्तव वत्स दास्यति पिता ग्रैवेयकं वाससी । श्रुत्वैवं गृहिणीवचांसि निकटे कुड्यस्य निष्किंचनो निःश्वस्याश्रुजलप्लवप्लुतमुखः पान्थः पुनः प्रस्थितः ॥ ६३ ॥ वासःखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः । दंपत्योरिति जल्पितं निशि यदा चौरः प्रविष्टस्तदा लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥ ६४ ॥ वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्ताऽपि नो । यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति॥६५॥ नो सेवा विहिता गुरोरपि मनाङ्नो वा कृतं पूजनं देवानां विधिवन्न वा शिव शिव स्निग्धा जनाः सेविताः । किंतु त्वच्चरणौ सरस्वति रसादाजन्मनः सेवितौ तस्मान्मा विजहाति सा भगवती शङ्के सपत्नी तव ॥ ६६ ॥ क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा लिप्ता जर्जरकर्करी जतुलवैर्नो मां तथा बाधते । गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकुस्मितं कुप्यन्ती प्रतिवेशिलोकगृहिणी सूचीं यथा याचिता ॥ ६७ ॥ दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः । दग्धः पञ्चशरः पिनाकपतिना तेनाप्ययुक्तं कृतं दारिद्र्यं जनतापकारकमिदं केनापि दग्धं नहि ॥ ६८ ॥ उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं मम श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् । इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने शवो दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ६९ ॥ भद्रे वाणि ममानने कुरु दयां वर्णानुपूर्व्या चिरं चेतः स्वास्थ्यमुपेहि याहि करुणे प्रज्ञे स्थिरत्वं व्रज । लज्जे तिष्ठ पराङ्मुखी क्षणमहो तृष्णे पुरः स्थीयतां पापो यावदहं ब्रवीमि धनिनां देहीति दीनं वचः ॥ ७० ॥ यो गङ्गामतरत्तथैव यमुनां यो नर्मदां शर्मदां का वार्ता सरिदम्बुलङ्घनविधौ यश्चार्णवांस्तीर्णवान् । सोऽस्माकं सहजः सखाऽस्तधनता यस्य प्रभावात् सुखं त्यागित्वेन समं व्यनाशि कुहचित्सौख्यादिकं कुत्रचित् ॥ ७१ ॥ दारिद्र्याद्ध्रियमेति ह्रीपरिगतः सत्त्वात्परिभ्रश्यते निःसत्त्वः परि-

---

१ निर्गुणाय । २ सद्गुणसम्पन्नम् । ३-मुख्यान् । ४ सूर्यः । ५ बन्धनस्थान- । ६ मा गच्छ । ७ जन्मतोऽन्धानाम् । ८ कण्ठधार्यमाभूषणम् । ९ दरिद्रः । १० देहि । ११ धान्यतृणस्रस्तरः । १२ वस्त्रखण्डम् । १३ आसन्नप्रावृट्कः । १४ पुत्रभार्याम् । १५ लक्ष्मीः । १६ मृताः । १७ जीर्णचालनीसदृशच्छिद्रकुम्भः । १८ लाक्षा- । १९ सुखदात्रीम् ।

भूयते परिभवान्निर्वेदमापद्यते । निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते निर्बुद्धिः क्षयमेत्यहो निर्धनता सर्वापदामास्पदम् ॥ ७२ ॥ शीतेनाध्युषितस्य वेपथुमतश्चिन्तार्णवे मज्जतः शान्ताग्नेः स्फुटिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम । निद्रा क्वाप्यपमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥ ७३ ॥ दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः । सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥ ७४ ॥ सङ्गं नैव हि कश्चिदस्य कुरुते संभाष्यते नादरात्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते । दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ७५ ॥ पौरेभ्यो न भयं न दण्डपतनं त्रासो न वा भूपतेर्निःसङ्गं शयनं निशासु गमनं दुर्गेषु मार्गेषु च । दारिद्र्यं सुखमेव केवलमहो दोषद्वयं वर्तते जाया निन्दति चाङ्गभोगसमये मुञ्चन्ति वै याचकाः ॥ ७६ ॥ वासश्चर्म विभूषणं शवशिरो भस्माङ्गलेपः सदा ह्येको गौः स च लाङ्गलाद्यकुशलः संपत्तिरेतादृशी । इत्यालोच्य विमुच्य शंकरमगाद्रत्नाकरं जाह्नवी कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥ ७७ ॥ मद्देहे मशकीव मूषकवधूर्मूषीव मार्जारिका मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः । इत्यापन्नशिशूनसून्विजहतो दृष्ट्वा तु झिल्लीरवैर्लूतातन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥ ७८ ॥ पीठाः कच्छपवत्तरन्ति सलिले संमार्जनी मीनवद्दर्वी सर्पविचेष्टितानि कुरुते संत्रासयन्ती शिशून् । शूर्पार्धावृतमस्तका च गृहिणी भित्तिः प्रपातोन्मुखी रात्रौ पूर्णतडागसंनिभमभूद्राजन्मदीयं गृहम् ॥ ७९ ॥ शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्त्यादरं दैन्यं दीपयति क्षमां क्षपयति व्रीडामपि ह्रस्यति । तेजो जर्जरयत्यपास्यति मतिं विस्तारयत्यर्थितां पुंसः क्षीणधनस्य किं न कुरुते वैरं कुटुम्बग्रहः ॥ ८० ॥दारिद्र्येण समीरिताऽपि बहुशः कण्ठं समालम्बते कण्ठात्कष्टशतैः कथं कथमपि प्राप्नोति जिह्वातलम् । जिह्वाकीलककीलितेव सुदृढं तस्मान्न निर्यात्यसौ वाणी प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥ ८१ ॥ दृष्टं दुर्जनचेष्टितं परिभवो लब्धः समानाज्जनात्पिण्डार्थे धनिनां कृतं खेलडितं भुक्तं कपालेष्वपि । पद्भ्यामध्वनि संप्रयातमसकृत्सुप्तं तृणप्रस्तरे यच्चान्यन्न कृतं कृतान्त कुरु हे तत्रापि सज्जा वयम् ॥ ८२ ॥ आसे चेत्स्वगृहे कुटुम्बभरणं कर्तुं न शक्तोऽस्म्यहं सेवे चेत्सुखसाधनं मुनिवनं मुष्णन्ति मोहादयः । श्वभ्रे चेत्स्वतनुं त्यजामि नरकाद्वीरात्महत्यावशान्नो जाने करवाणि दैव किमहं मर्तुं न वा जीवितुम् ॥ ८३ ॥ मा भूज्जन्म महाकुले तदपि चेन्मा भूद्विपत्साऽपि चेन्मा भूद्भूरि कलत्रमस्ति यदि तन्मा भूद्दयार्द्रं मनः । तच्चेदस्ति तदस्तु मृत्युरथ चेत्तस्यापि नास्ति क्षणस्तज्जन्मान्तरनिर्विशेषसदसद्देशान्तरेऽस्तु स्थितिः ॥ ८४ ॥ यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति यैश्चात्यन्तदयापरैर्न विहिता वन्ध्याऽर्थिनां प्रार्थना । ये चासन्परदुःखदुःखितधियस्ते साधवोऽस्तं गताश्चक्षुः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ ८५॥ सक्तूञ्छोषयति प्लुतोन्प्रतिकरोत्याक्रन्दतो बालकान्प्रत्यासिञ्चति कर्परेण सलिलं शय्यातृणं रक्षति । धृत्वा मूर्ध्नि पुराणशूर्पशकलं शून्ये गृहे व्याकुला किं तद्यन्न करोति दुर्विधवधूर्देवे भृशं वर्षति ॥ ८६ ॥ दारिद्र्यक्षितिपः स मे निजपति-

---

१ वैराग्यम् । २ शोकम् । ३ निर्धनता । ४ रात्रिः ५ प्रवृद्धा जायन्ते । ६ धैर्यम् । ७ मृतशरीरमस्तकम् । ८ वृषभः । ९ अल्पीकरोति । १० दूरीकरोति । ११ प्रेरिता । १२ उदरपूर्तये । १३ कुक्कुरवदुदरदर्शनादिव्यापारम् । १४ दैव । 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मसु' इत्यमरः । १५ उद्यताः । १६ उपविशामि । १७ अपहरन्ति । १८ गर्ते । १९ भयम् । २० निष्फला । २१ परदुःखेन दुःखिता धीर्येषां ते । २२ जलाप्लुतान् । २३ रुदतः ।

स्तस्य प्रसादादभूद्याच्ञा जीवन[1]मम्बरं[2] दश दिशो वासश्च देवालये[3] । अस्मद्वैरिणि लब्धसंगतिरिति त्वय्यर्थाश्रये[4] कुप्यता मद्वृत्ति विनियोजितास्त्वदरयः का नाम वृत्तिर्मम ॥८७॥ आसीत्ताम्रमयं शरीरमधुना सौवर्णवर्णं गतं मुक्ताहारलताऽश्रुबिन्दुनिवहैर्निःश्वस्य मे कल्पिता । स्वल्पं स्वल्पमनल्पकल्पमधुना दीर्घं वयः कल्पितं स्वामिन्दुःख भवत्प्रसादवशतः किं किं न लब्धं मया ॥ ८८ ॥

## त्यागप्रशंसनम् ।

परैरादीयमानं यत् तस्यैव श्लाघनीयता । अगृहीतं हि कूपाम्बु न स्वादाय कदाचन ॥ १ ॥ यत्स्यादन्योपभोगाय तदेव सफलं मतम् । अन्यथा तु विनाशोऽस्य भाव्येवेति सुनिश्चितम ॥ २ ॥ अनुकूले विधौ[5] देयं यतः पूरयिता हरिः । प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥ ३ ॥ यद्ददाति यदश्नाति[6] तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ ४ ॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥ ५ ॥ त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणराशिभिः । त्यागा[7]ज्जगति पूज्यन्ते पशुपाषाणपादपाः[8] ॥ ६ ॥ भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ ७॥ ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न यच्छसि । इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥८ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात् । स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥ ९ ॥ दरिद्रान्भर कौन्तेय मा प्र[9]यच्छेश्वरे धनम् । व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ १० ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे[10] च तद्दानं सात्त्विकं विदुः ॥ ११ ॥ उपार्जितानां वित्तानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाह[11] इवाम्भसाम् ॥ १२ ॥ दानोपभोगवन्ध्या[12] या सुहृद्भिर्या न भुज्यते । पुंसां यदि हि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ॥ १३ ॥ किं तया क्रियते लक्ष्म्या या वधूरिव केवला । या न वेश्येव सामान्या[13] पथिकैरुपभुज्यते ॥ १४ ॥ आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १५ ॥ दानेन श्लाघ्यतां यान्ति पशुपाषाणपादपाः । दानमेव गुणः श्लाघ्यः किमन्यैर्गुणकोटिभिः ॥ १६ ॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया[14] गतिर्भवति ॥ १७ ॥ यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् । तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥ १८ ॥ दातव्यं भोक्तव्यं सति विभवे संचयो न कर्तव्यः । पश्येह मधुकरीणां[15] संचितमर्थं हरन्त्यन्ये ॥ १९ ॥ मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव । तं धिगस्तु कलयन्नपि[16] वाञ्छामर्थिवागवसरं सहते यः ॥ ॥ २० ॥ प्रापितेन चटुकाकुविडम्बं[17] लम्भितेन बहुयाचनलज्जाम् । अर्थिना यदघ[18]मर्जति दाता तन्न लुम्पति विलम्ब्य ददानः ॥ २१ ॥ यत्प्रदेयमुपनीय वदान्यै[19]र्दीयते सलिलमर्थिजनाय । याचनोक्तिविफलत्वविशङ्कात्रासमूर्च्छनचिकित्सितमेतत् ॥ २२ ॥ अर्थिने न तृणवद्धनमात्रं किंतु जीवनम्[20]अपि प्रतिपाद्यम् । एवमाह कुशवज्जलदायी द्रव्यदानविधिरुक्तिविदग्धः[21] ॥ २३ ॥ पङ्कसंकरविगर्हितमर्हं न श्रियः कमल-

---

१ जीवनोपायः । २ वस्त्रम् । नग्नत्वाद्दिशां वस्त्रत्वेन रूपणम् । ३ स्वगृहस्य भग्नत्वात् । ४ सम्बोध्योदाररूपस्याश्रयस्य दारिद्र्यक्षितिपवैरित्वमिति कोपः । ५ भाग्ये । ६ भुङ्क्ते । ७ दानात् । ८ पशुः कामधेनुः पाषाणः चिन्तामणिः पादपः–कल्पतरुः । ९ वितर । १० सज्जने । ११ प्रवाहः । १२ दानोपभोगाभ्यां सफलतामप्रापिता । १३ साधारणी कृता । १४ नाशरूपा । १५ भ्रमरीणाम् । १६ जानन्नपि । १७ चटु प्रिय–वाक्यम्, काकु–दीनवाक्यं ताभ्यां विडम्बः पराभवस्तम् । १८ पापम् । १९ उदारैः । २० प्राणाः, जलं च ।–२१ चतुरः ।

माश्रयणाय। आर्थिपाणिकमलं विमलं तद्वासवेश्म विदधीत सुधीस्तत् ॥ २४ ॥ दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि। साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत् ॥ २५ ॥ याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य। तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ २६ ॥ मा धनानि कृपणः खलु जीवंस्तृष्णयाऽर्पयतु जातु परस्मै। तत्र चैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥ २७ ॥ लोक एष परलोकमुपेता हा विहाय निधने धनमेकः। इत्यमुं खलु तदस्य निनीषत्यर्थिबन्धुरुदयद्दयचित्तः ॥ २८ ॥ अर्थो विनैवार्थनयोपसीदन्नाल्पोऽपि धीरैरवधीरणीयः। मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहुमन्तुमर्हः ॥ २९ ॥ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम्। परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्यसनानि हन्ति ॥ ३० ॥ जीवन्नदत्त्वाऽपि जनः कदर्य्यः करोति सर्वं स परोपभोग्यम्। अन्यस्तु सर्वं द्रविणं परत्र प्रापय्य भोगार्थमुपैति कामम् ॥ ३१ ॥ दत्ते परार्थं न कदाप्युदारः[1] किं त्वेष सर्वं नयते परत्र। कदर्य्य एव प्रददाति यत्स विरक्तवद्यात्यसहाय एव ॥ ३२ ॥ तुरगशतसहस्रं गोगजानां च लक्षं कनकरजतपात्रं मेदिनीं सागरान्ताम्। विमलकुलवधूनां कोटिकन्याश्च दद्यान्नहि नहि सममेतैरन्नदानं प्रधानम् ॥ ३३ ॥ कामं वाचः कतिचिदफलाः सन्तु लोके कवीनां सन्त्येवान्या मधुरिपुकथासंस्तवात्कामदोग्ध्र्यः। वित्तं कामं भवतु विफलं दत्तमश्रोत्रियेभ्यः पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः ॥ ३४ ॥ देयं भो अधने धनं सुकृतिभिर्नो संचितं सर्वदा श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिता। आश्चर्यं मधु दानभोगरहितं नष्टं चिरात्संचितं निर्वेदादिति पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः ॥ ३५ ॥

## लुब्धतागर्हणम्।

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च। द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥ १ ॥ लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते। लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ २ ॥ लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते। द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः ॥ ३ ॥ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम्। लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥ ४ ॥ लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्। तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥ ५ ॥ लोभाविष्टो नरो वित्तं वीक्षते न स चापदम्। दुग्धं पश्यति मार्जारो यथा न लगुडाहतिम् ॥ ६ ॥ प्रायेण धनिनामेव धनलोभो निरन्तरम्। पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ७ ॥ लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम्। कार्याकार्यविचारो लोभविमूढस्य नास्त्येव ॥ ८ ॥ सत्यप्रशमतपोभिः सत्यधनैः शास्त्रवेदिभिर्विजितः। लोभोऽवटं प्रविष्टः कुटिलं हृदयं किराटीनाम् ॥ ९ ॥ स्नेहोपपन्न इति पूर्णदशाविशेषशाली स्वमात्मनि बसुप्रकरं निधाय। लब्धोदये तमथ गृह्णति पद्मबन्धौ दीपा भवन्ति कलुषा बलवान्हि लोभः ॥ १० ॥ यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं गाहन्ते गहनं समुद्रमथनक्लेशं कृषिं कुर्वते। सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ ११ ॥

---

१ कदाचित्। २ अनुदारः। ३ उत्पत्तिः। ४ दण्डाघातम्। ५ धनपुञ्जम्, किरणसमूहं च। ६ सूर्ये। ७ वनम्। ८ संग्रामम्। ९ विलासः।

## दातृप्रशंसनम् ।

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥ अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति । दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ २ ॥ रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः । तदेव सततं सन्त उत्सृजन्ति यथा मलम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाऽप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात् ॥ ४ ॥ आकारमात्रविज्ञानसंपादितमनोरथाः । ते धन्या ये न शृण्वन्ति दीनाः प्रणयिनां गिरः ॥ ५ ॥ कर्णलङ्घिगुणोत्कर्षास्त्यागिनो धन्विनस्तथा । निष्फलान्न विमुञ्चन्ति मार्गणान्संमुखे स्थितान् ॥ ६ ॥ देहि देहीति जल्पन्ति त्यागिनोऽप्यर्थिनोऽपि च । आलोकयन्ति रभसादस्ति नास्तीति न क्वचित् ॥ ७ ॥ युध्यन्ते पक्षिपशवः पठन्ति शुकसारिकाः । दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥ ८ ॥ अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ९ ॥ लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः । धन्यो बलिः स येनास्य भिक्षापात्रीकृतः करः ॥ १० ॥ कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ ११ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ १२ ॥ पुंसामुन्नतचित्तानां सुखावहमिदं द्वयम् । सर्वसङ्गनिवृत्तिर्वा विभूतिर्वा सुविस्तरा ॥ १३ ॥ जरामरणदौर्गत्यव्याधयस्तावदासताम् । जन्मैव किं न धीरस्य भूयो भूयस्त्रपाकरम् ॥ १४ ॥ अपि नाम स दृश्येत पुरुषातिशयो भुवि । गर्वोच्छूनमुखा येन धनिनो नावलोकिताः ॥ १५ ॥ पृथ्वी पृथ्वी गुणा मान्याः सन्ति भूपा विवेकिनः । पराभवापदं यान्ति कस्मादुन्नतबुद्धयः ॥ १६ ॥ परिपूर्णगुणाभोगगरिमोद्गार एव सः । त्रिजगत्स्पृहणीयेऽस्मिन्न रुचिर्द्रविणेऽपि यत् ॥ १७ ॥ गुणो वित्तवतां त्यागो वित्तं त्यागवतां गुणः । परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ॥ १८ ॥ नृणां धुरि स एवैको यः कश्चित्त्यागपाणिना । निमार्ष्टि प्रार्थनापांसुधूसरं मुखमर्थिनाम् ॥ १९ ॥ बुद्धिर्या सत्त्वरहिता क्लीबत्वं तत्केवलं मतम् । सत्त्वं चानयसंपन्नं तत्पशुत्वं न पौरुषम् ॥ २० ॥ अत्यद्भुतमिमं मन्ये स्वभावममनस्विनः । यदुपक्रियमाणोऽपि प्रीयते न विलीयते ॥ २१ ॥ न परं सैव विनश्यति तनुरपि या श्रीर्निवेशिता सत्सु । अवशिष्यते हिमांशोः सैव कला या स्थिता शंभौ ॥ २२ ॥ कियती पञ्चसहस्री कियती लक्षाऽपि कोटिरपि कियती । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ २३ ॥ प्रत्युपकुर्वत्पूर्वं कृतोपकारमपि लज्जयति चेतः । यस्तु विहितोपकारादुपकारः सोऽधिको मृत्योः ॥ २४ ॥ जीवञ्जीवयति हि यो ज्ञातिजनं परिजनं च सुहृदश्च । सफला तस्य गृहश्रीर्धिगनुपजीव्यं धनप्रचयम् ॥ २५ ॥ यच्छञ्जलमपि जलदो वल्लभतामेति सर्वलोकस्य । नित्यं प्रसारितकरः सविताऽपि भवत्यचक्षुष्यः ॥ २६ ॥ नातं यत्केनचिदपि मनोरथा अपि यतो निवर्तन्ते । तद्यदि न लभ्यतेऽन्यन्मनस्विनः किमभिमानफलम् ॥ २७ ॥ घटनं विघटनमथवा कार्याणां भवति विधिनियोगेन । उचितेऽनुचिते कर्मणि वृत्तिनिवृत्ती समाधत्ते ॥ २८ ॥ कल्प-

---

१ मांसम् । २ किं पुनः साक्षाद्दाता । ३ दातारः । ४ सायकान्, अर्थिनश्च । ५ आत्मीयः । ६ क्षुद्राणाम् । ७ बन्धुवर्गः । ८ निकृष्टः, अप्राप्यजलश्च । ९ सम्पत् । १० दारिद्र्य- । ११ त्यागाभावे वित्तम्, वित्ताभावे त्यागश्च । १२ अनुचितम् । १३ निर्मलयति । १४ कृपणस्य । १५ अल्पा । १६ मरणात् । १७ वितरन् । १८ विस्तारितकिरणः, याचनमुद्रीकृतपाणिश्च । १९ अदृश्यः । २० उदारस्य । २१ दैववशात् ।

स्थायि न जीवितमैश्वर्यं नाप्यते च यदभिमतम्। लोकस्तथाऽप्यकार्यं कुरुते कार्यं किमुद्दिश्य ॥ २९ ॥ धनबाहुल्यमहेतुः कोऽपि निसर्गेण[1] मुक्तकरः। प्रावृषि कस्याम्बुमुचः संपत्तिः किमधिकाऽम्बुनिधेः ॥३०॥ द्रविणार्जनजः परिश्रमः फलितोऽप्यस्य जनस्य नीरसः। द्रविणार्जनमात्मतुष्टये परमावर्जयितुं गुणार्जनम् ॥ ३१ ॥ नाक्षराणि पठता किमपाठि पाठितोऽपि किमु विस्मृत एव। इत्थमर्थिजनसंशयदोलाखेलनां खलु चकार नकारः ॥ ३२ ॥ यः प्रशंसति नरो नरमन्यं देवतासु वरदासु सतीषु। मुग्धधीर्धनलवस्पृहयालुस्तं नृशंसमहमाद्यमवैमि ॥ ३३ ॥ यथा शरीरं किल जीवितेन विना कृतं काष्ठमिवावभाति। तथैव तज्जीवितमप्यवैमि लोकोत्तरेण स्फुरितेन शून्यम् ॥ ३४ ॥ जातश्च नाम न विनङ्क्ष्यति चेत्ययुक्तमुत्पाद एव नियमेन विनाशहेतुः। तुल्ये च नाम मरणव्यसनोपतापे मृत्युर्वरं परहितावहिताशयस्य ॥ ३५ ॥ उत्पादिता स्वयमियं यदि तत्तनूजा तातेन वा यदि तदा भगिनी खलु श्रीः। यद्यन्यसंगमवती च तदा परस्त्री तत्त्यागबद्धमनसः सुधियो भवन्ति ॥ ३६ ॥ त्वयि सति शिवदातर्यस्मदभ्यर्थितानामितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम्। चरमचरणपातैर्दुर्ग्रहं दोग्धुकामाः करभमनुसरामः कामधेनौ स्थितायाम् ॥ ३७ ॥ इयत्यप्येतस्मिन्निरवधिमहत्यध्वनि गुणास्त एवामी द्वित्रा जरठजरठा यान्ति गणनाम्। अहो ग्राम्यो लोकः स न परममीभिः कृतधृतिः स्मयस्तब्धो यावत्कलयति समग्रं तृणमिदम् ॥ ३८ ॥ स्वचित्तपरिचिन्तयैव परितापमात्मन्यमी न बिभ्रति मनस्विनो यदमुना न तावत्क्षतिः। अहर्निशमिहैव ये परमनोऽनुवृत्त्या पुनर्वहन्ति विजिगीषुतां किमिव तेऽनुकम्पास्पदम् ॥ ३९ ॥ भुज्यन्ते स्वगृहस्थिता इव सुखं यस्यार्थिभिः संपदः पट्वी यस्य मतिस्तमःप्रहतये द्वावेव तौ प्राणितः। यस्त्वात्मंभरिरुन्नतेऽपि विभवे हीनश्च विद्वत्तया तस्यालेख्यमणेरिवाकृतिधृतः सत्ताप्यसत्ता ननु ॥ ४० ॥ आधाराय धरावकाशविधयेऽप्याकाशमालोकने भास्वानात्ममहत्त्वसाधनविधायन्ये गुणाः केचन। इत्यस्मिन्नुपकारकारिणि सदा वर्गे परं दुस्त्यजे दैन्यव्रीडकलङ्कमुज्झतु कथं चेतो महाचेतसाम् ॥ ४१ ॥ नित्यं या गुरुभृत्यबन्धुसुजनैर्न स्वेच्छया भुज्यते पश्यन्ति स्पृहयालवो न रिपवो यां विक्रमासादिताम्। यस्याः साधुपरिक्षयेण सुहृदां नाशेन वा संभवो नो संपद्विपदेव सा गुणवतां प्रीतिस्तया कीदृशी ॥ ४२ ॥ न्याय्यं मार्गमनुज्झतः सुकृतिनो दैवाद्भवन्त्यापदो यास्ताः सन्तु बलेरिवादिपुरुषायोर्वीं[10] स्वयं यच्छतः। शक्रस्येव जुगुप्सितैः सुबहुभिर्निन्द्यैर्भृशं कर्मभिर्देवानामुपरि प्रभुत्वमपि मे मा भूत्त्रपाकारणम् ॥ ४३ ॥ रुद्रोऽद्रिं जलधिं हरिर्दिविषदो दूरं विहायः[11]श्रिता भोगीन्द्राः प्रबला अपि प्रथमतः पातालमूले स्थिताः। लीना पद्मवने सरोजनिलया मन्येऽर्थिसार्था[12]द्भिया दीनोद्धारपरायणाः कलियुगे सत्पूरुषाः केवलम् ॥ ४४ ॥

## अदातृगर्हणा।

कृपणेन समो दाता न भूतो न भविष्यति। अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति[13] ॥ १ ॥ [14]यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते। विभज्यते यदन्तेऽन्यैः कस्यचिन्माऽस्तु तद्धनम् ॥ २ ॥ यत्करो[15]त्यरतिं क्लेशं तृष्णां मोहं प्रजागरम्। न तद्धनं कदर्याणां हृदये व्याधिरेव सः ॥ ३ ॥ मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा। दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥ ४ ॥ त्यागभोगविहीनेन धनेन

---

१ स्वभावेन। २ क्रूरम्। ३ दानमहिम्ना। ४ हे महेश्वर, श्रेयोदातरि च। ५ पश्चाद्भाविपादप्रहारैः। ६ उष्ट्रम्। ७ अतीव जरठाः। ८ धारयन्ति। ९ दया-। १० पृथिवीम्। ११ आकाश-। १२ याचकगणात्। १३ धनस्यावश्यं विनाशात्। १४ सञ्चीयते। १५ पीडाम्।

धनिनो यदि । भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ५ ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ६ ॥ अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् । आत्मा¹ संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ ७ ॥ कृपणेन शवेनेव² मृतेनापि न दीयते । मांसं वर्धयता तेन काकस्योपकृतिः³ कृता ॥ ८ ॥ बोधयन्ति न याचन्ते भिक्षाद्वारा गृहे गृहे । दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥ ९ द्वारं द्वारं रटन्तीह भिक्षुकाः पात्रपाणयः । दर्शयन्त्येव लोकाना-मदातुः फलमीदृशम् ॥ १० ॥ न दातुं नोपभोक्तुं च शक्नोति कृपणः श्रियम् । किंतु स्पृशति हस्तेन नपुंसक इव स्त्रियम् ॥ ११ ॥ किंशुके किं शुकः कुर्यात्पुष्पितेऽपि बुभुक्षितः । अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥ १२ ॥ वरं विभवहीनेन प्राणैः संतर्पितोऽनलः । नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥ १३ ॥ उदारचरितस्त्यागी याचितः कृपणोऽधिकः । एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥ १४ नोपभोक्तुमपि क्लीबो जानात्युपचितां श्रियम् । ग्राम्यो विरागयत्येव रमयन्नपि कामिनीम् ॥ १५ ॥ कृपणः स्ववधूसङ्गं न करोति भयादिह । भविता यदि मे पुत्रः स मे वित्तं हरेदिति ॥ १६ ॥ यदधोऽधः क्षितौ वित्तं निचखान मितंपचः । तदधो निरयं गन्तुं चक्रे पन्थानमग्रतः ॥ १७ ॥ निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति । परार्थ भारवाहीव क्लेशस्यैव हि भाजनम् ॥ १८ ॥ असंभोगेन सामान्यं कृपणस्य धनं परैः । अस्येद-मिति संबन्धो हानौ दुःखेन गम्यते ॥ १९ ॥ सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे । अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥ २० ॥अदातुर्मानसं क्वापि न स्पृशन्ति कवेर्गिरः । दोषायैवातिवृद्धस्य विलासास्तरुणीकृताः ॥ २१ ॥ शरणं किं प्रपन्नानि विषवन्मारयन्ति किम् । न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ २२ ॥ धनं यदिह मे दत्से विधे मा देहि कर्हिचित् । औदार्यं धनिनो देहि यन्मदीये हृदि स्थितम् ॥ २३ ॥ वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः । व्यसोः कुसुममालेव श्रीः कदर्यस्य निष्फला ॥ २४ ॥ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया । दाताऽपि विसृजत्यर्थं तयैव ननु शङ्कया ॥ २५ ॥ या विपत्तिर्धनापाये नवा भोगिवदान्ययोः । प्रज्ञापकर्षा-त्प्रागेव प्राप्ता हि कृपणेन सा ॥ २६ ॥ गृहमध्यनिखातेन धनेन रमते यदि । स तु तेनानुसारेण रमते किं न मेरुणा ॥ २७ ॥ अतिसंचयकर्तॄणां वित्तमन्यस्य कारणात् । अन्यैः संचीयते यत्नादन्यैश्च मधु पीयते ॥ २८ ॥ विडम्बनैव पुंसि श्रीः परप्रणयपांसुले । कान्ति कामिह कुर्वीत कुणौ कटककल्पना ॥ २९ ॥ कृत्वोपकारं यस्तस्माद्वाञ्छति प्रत्युपक्रियाम् । दीनस्तृ-ष्णाविधेयत्वाद्वान्तमप्युपलेढि सः ॥ ३० ॥ दैववशादुत्पन्ने सति विभवे यस्य नास्ति भोगेच्छा । न च परलोकसमीहा स भवति धनपालको मूर्खः ॥ ३१ ॥ उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम् । कन्यामणिरिव सदने तिष्ठत्यर्थः परस्यार्थे ॥ ३२ ॥ यदि भवति धनेन धनी क्षितितलनिहितेन भोग-

---

१ शरीरम् । २ मृतशरीरेणेव । ३ का कस्येति च्छेदः, काकस्येति समस्तं च । ४ 'अदानफलमीदृशम् ।' इति पाठान्तरम् । ५ अरसिकः । ६ कृपणः । ७ नरकम् । ८ पात्रम् । ९ गर्भवती हि सर्वं परित्यज्य मृदं भुङ्क्ते । १० अन्धस्य । ११ मृतस्य । १२ दारिद्र्यशङ्कयैव । दानाभावे परत्र पुनस्तदलाभात् । १३ वदान्य उदारः । १४ परोपकारशून्यतया दूषिते । १५ कुत्सितकरे । १६ तृष्णावश्यतया । १७ कुक्कुरादिसमान इति भावः । १८ सुखेच्छेति पाठान्तरम् । १९ उपभोगपराङ्मुखानाम् । २० कन्यारूपं रत्नम् ।

रहितेन । तस्माद्वयमपि धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ ३३ ॥ नन्द[1]नरेन्द्रद्रविणैर्दुष्कृतमिव किमपि विहितमतिघोरम् । वसुधातलोष्मपाको विरमति नाद्यापि यत्तेभ्यः ॥ ३४ ॥ दृढतरनिबद्धमुष्टेः[2] कोश[3]-निषण्णस्य सहज[4]मलिनस्य । कृपणस्य कृपाणस्य च केवलमाकारतो[5] भेदः ॥ ३५ ॥ कृपणसमृद्धीनामपि भोक्तारः सन्ति केचिदतिनिपुणाः । जलसंपदोऽम्बुराशेर्यान्ति वशं सर्वदैव वडवाग्नेः ॥ ३६ ॥ प्राप्ता-नपि न लभन्ते भोगान्भोक्तुं स्वकर्मभिः कृपणाः । मुख[6]पाकः किल भवति द्राक्षापाके बलिभुजां[7] हि ॥ ३७ ॥ अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् । योऽपि ददाति शरीरं न ददाति स वित्त-लेशमपि ॥ ३८ ॥ केऽपि स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते । न तु संत्यजन्ति वित्तं मात्सर्य-मिवाधमाः सततम् ॥ ३९ ॥ और्वा[8] इवातिलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः । तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ४० ॥ अर्थिनि[9] कवयति[10] कवयति[11] पठति च पठति स्तवोद्यते स्तौति । पश्चाद्यामीत्युक्ते कृपणः प्रणतोऽञ्जलिं कुरुते ॥ ४१ ॥ दानं भोगं च विना धनसत्तामात्रकेण चेद्धनिनः । वयमपि किमिति न धनिनस्तिष्ठति न काञ्चनो मेरुः ॥ ४२ ॥ केचन वितरन्ति धनं केऽपि तु तत्सार्धमप्यसुभिः । आद्या वदान्यकीर्तिं हन्त लभन्ते परे कदर्यत्वम् ॥ ४३ ॥ जीवन् किञ्चिद्दत्वा लभतेऽत्र यशः श्रियं परत्रर्द्धाम् । धनमसुभिः सह दाता कुयशोऽत्र परत्र दौर्विध्यम् ॥ ४४ ॥ अपयायिनि स्वतोऽर्थे कथमिव सौहार्दधीः कदर्याणाम् । यस्यापयानसमये प्राणत्यागोऽपि हा सुकरः ॥ ४५ ॥ धनिनोऽप्यदानभोगा गण्यन्ते धुरि महादरिद्राणाम् । हन्ति न यतः पिपासामतः समुद्रोऽपि मेरुरेव[12] ॥ ४६ ॥ अभ्युपयुक्ताः सद्भिर्गतागतैरहरहः सुनिर्विण्णाः । कृपणजनसंनिकर्षं संप्राप्यार्थाः स्वपन्तीव ॥४७॥ ते मूर्खतरा लोके येषां धनमस्ति नास्ति च त्यागः[13] । केवलमर्जनरक्षणवियोगदुःखान्य-नुभवन्ति ॥ ४८ ॥ संचितं क्रतुषु[14] नोपयुज्यते याचितं गुणवते न दीयते । तत्कदर्यपरिरक्षितं धनं चौर-पार्थिवगृहेषु गच्छति ॥४९॥ वरममी तरवो वनगोचराः शकुनिसार्थविलुप्तफलश्रियः । न तु धनाढ्यगृहाः कृपणाः फणानिहितरत्नभुजंगमवृत्तयः ॥५०॥ न निर्यियासन्ति कदर्यहस्ताद्धनानि पांसोरिव[15] तैललेशाः । दैवात्कदाचिद्विनियोक्तुरेव निर्गन्तुमिच्छन्त्यसुभिः सहैव ॥ ५१ ॥ सुसंवृतैर्जीवितवत्सुरक्षितैर्निजेऽपि देहे कृतयन्त्रणस्य[16] च । तवानुमार्गं व्रजतो भवान्तरे शठैर्धनैः पञ्चपदी[17] न पूरिता ॥५२॥ अहो धनानां महती विदग्धता सुखोषितानां कृपणस्य वेश्मनि । व्रजन्ति न त्यागदशां न भोग्यतां परां च कांचित्प्रथयन्ति निर्वृतिर्मे[18] ॥ ५३ ॥ फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां[19] पयः स्थाने स्थाने शिशिरमधुरं पुण्य-सरिताम् । मृदुस्पर्शा शय्या सुललितलतापल्लवमयी सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ ५४ ॥ यदेते साधूनामुपरि विमुखाः सन्ति धनिनो न चैषाऽवज्ञैषामपि तु निजवित्तव्ययभयम् । अतः खेदो नास्मिन्परममनुकम्पैव[20] भवति स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः ॥ ५५ ॥ न शान्ताऽन्तस्तृष्णा धनलवणवारिव्यतिकरैः क्षतच्छायः[21] कायश्चिरविरसरूक्षाशनतया । अनिद्रा मन्दाग्निर्नृपसलिलचौरानल-

---

१ नन्दमहाराजेन नवनवतिकोटिसङ्ख्याका दीनाराः क्षितौ निहिता वर्तन्त इत्यादिजन-श्रुतिमुपलभ्येदं वचनम् । २ करमुद्राविशेषः खड्गोपरिभागश्च मुष्टिः। ३ निधि-। ( खड्ग ) पिधान-। ४ स्वभावतो दूषितवेषत्वात्, कृष्णवर्णत्वाच्च । ५ आकृतेः, वर्णविशेषाच्च । ६ रोग-विशेषः । ७ करटानाम् । ८ वाडवाग्नयः । ९ याचके । १० कवितां कुर्वति सति । ११ कवितां करोति एवं परत्रापि । १२ निर्जलः । १३ दानम् । १४ यज्ञेषु । १५ धूलेः । १६ यन्त्रणं सङ्कोचेन पीडनम् ।१७ पञ्च पदानि यावदपि मैत्री नेति भावः। १८ अनिर्वचनीयं मोक्षरूपं विरक्तिरूपं वा निर्वाणम् । १९ तरूणाम् । २० दया । २१ गलितसौन्दर्यः ।

भयात्कदर्याणां कष्टं स्फुटमधनकष्टादपि परम् ॥ ९६ ॥ जहाति सहसाऽऽसनं झटिति पृच्छति स्वागतं नमस्यति कृताञ्जलिः श्रतिमनोहरं भाषते । ददाति कुसुमं फलं शिथिलयत्यभीष्टां क्रियामहो न परिचीयते कृपणवञ्चनाचातुरी ॥ ९७ ॥ अयश्चणकचर्वणं फणिफणामणेः कर्षणं करेण गिरितोलनं जलनिधेः पदा लङ्घनम् । प्रसुप्तहरिबोधनं निशितखड्गसंस्पर्शनं कदाचिदखिलं भवेन्न च शठाद्धनस्यार्जनम् ॥ ९८ ॥ एकैकातिशयालवः परगुणज्ञानैकवैज्ञानिकाः सन्त्येते धनिकाः कलासु सकलास्वाचार्यचर्याचणाः । अप्येते सुमनोगिरां निशमनाद्बिभ्यत्यहो श्लाघया धूते मूर्धनि कुण्डले कर्षणतः क्षीणे भवेतामिति ॥ ९९ ॥ प्रीतिं न प्रकटीकरोति सुहृदि द्रव्यव्ययाशङ्कया भीतः प्रत्युपकारकारणभयान्नाकृष्यते सेवया । मिथ्या जल्पति वित्तमार्गणभयात्स्तुत्याऽपि न प्रीयते कीनाशो विभवव्ययव्यतिकरत्रस्तः कथं प्राणिति ॥ ६० ॥ मत्वा सारं गुणानां शिरसि यदि शशी स्थापितो दैवयोगादीशेन क्षीणबिम्बः सकलमुपचयं किं न नीतः क्षणेन । मिथ्यैवं ख्यापयन्तो गुणिनि सरलतां लोकभक्त्यर्थमुच्चैराढ्याः कुर्वन्ति वित्तव्ययचकितधियो मानमर्थेन शून्यम् ॥ ६१ ॥

## याचकगर्हणम् ।

वेपथुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः । मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ १ ॥ विद्यावतः कुलीनस्य धनं याचितुमिच्छतः । कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ २ ॥ दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च । तेजस्तेजस्विनोऽर्कस्य हीयतेऽन्यस्य का कथा ॥ ३ ॥ साधुरेवार्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा । शुष्कोऽपि हि नदीमार्गः खन्यते सलिलार्थिभिः ॥ ४ ॥ तृणादपि लघुस्तूलस्तूलादपि हि याचकः । वायुना किं न नीतोऽसौ प्रार्थयिष्यति मामिति ॥ ५ ॥ देहीति वचनं श्रुत्वा देहस्थाः पञ्च देवताः । मुखान्निर्गत्य गच्छन्ति श्रीह्रीधीधृतिकीर्तयः ॥ ६ ॥ नवीनदीनभावस्य याचकस्यातिमानिनः । वचोजीवितयोरासीत्पुरोनिःसरणे रणः ॥७॥ अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम् । अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥ ८ ॥ गतेर्भङ्गः स्वरो हीनो गात्रे स्वेदो महद्भयम् । मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ९ ॥ दारिद्र्यानलसंतापः शान्तः संतोषवारिणा । याचकाशाविघातान्तर्दाहः केनोपशाम्यति ॥ १० ॥ दरिद्रस्य परा मूर्तिस्तृष्णा न द्रविणाल्पता । जरद्गवधनः शंभुस्तथाऽपि परमेश्वरः ॥११॥ वचनाच्च बहिर्यान्ति प्राणा याच्ञाक्षरैः सह । ददामीत्यक्षरैर्दातुः पुनः कर्णाद्विशन्ति हि ॥ १२ ॥ देहीति वक्तुकामस्य यद्दुःखमुपजायते । दाता चेत्तद्विजानीयाद्द्यात्स्वपिशितान्यपि ॥ १३ ॥ काक आह्वयते काकान्याचको न तु याचकान् । काकयाचकयोर्मध्ये वरं काको न याचकः ॥ १४ ॥ तीक्ष्णधारेण खड्गेन वरं जिह्वा द्विधा कृता । न तु मानं परित्यज्य देहि देहीति भाषितम् ॥१५॥ पुरतः प्रेरयत्याशा लज्जा पृष्ठावलम्बिनी । ततो लज्जाशयो-

---

१ निर्धन— । २ प्रतारण— । ३ लोह— । ४ सिंह— । ५ कृपणात् । ६ श्रवणात् । ७ कम्पिते । ८ घर्षणात् । ९ याचक— । १० कृपणः । ११ कम्पनम् । १२ न तु बहिर्निःसरतीति भावः । १३ दक्षिणा आशा दिक्, तत्र प्रवृत्तस्य । प्रसारिताः कराः किरणा येन तादृशस्य स्वभावतः । तेजस्विनोऽर्कस्यापि तेजोमान्द्यं जायते । तथा दक्षिणायाः याऽऽशा इच्छा तदर्थं प्रवृत्तस्य । अत एव प्रसारितः करो हस्तो येन तस्य । 'ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।' इत्याद्युक्त्या स्वभावतस्तेजसा सम्पन्नस्य । अत एवार्कस्य तत्सदृशस्य महतोऽपि याचकस्येति लक्षणयाऽर्थः । १४ कार्पासः । १५ शोभा— । १६ वृद्धवृषभ— । १७ स्वमांसानि ।

मध्ये दोलायत्यर्थिनां मनः ॥१६॥ करान्[1]प्रसार्य रविणा दक्षिणा[2]शावलम्बिना । न केवलमनेनात्मा दिवसोऽपि लघूकृतः[3] ॥ १७ ॥ एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता । दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १८ ॥ हृदि लज्जोदरे वह्निः स्वभावादग्निरुच्छिखः[4] । तेन मे दग्धलज्जस्य पुनरागमनं नृप ॥ १९ ॥ सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम् । हरिहरकथेव दुरितं गुणशतमप्यर्थिता[5] हरति ॥ २० ॥ याचकवीरो धन्यः करदानग्राहकः स्वदातृभ्यः । कुरुते पराङ्मुखं वा ह्यतिनम्रं वा हरत्यसौ पुण्यम् ॥ २१ ॥ अनुसरति करिकपोलं भ्रमरः श्रवणेन[6] ताड्यमानोऽपि । गणयति न तिरस्कारं दानान्धविलोचनो नीचः ॥ २२ ॥ कतरत्पुरहर[7] परुषं हालाहलकवलयाचनावचसोः । एकैव तव रसज्ञा तदुभयरसतारतम्यज्ञा ॥ २३ ॥ अग्रे लघिमा पश्चान्महताऽपि पिधीयते नहि महिम्ना । वामन[8] इति त्रिविक्रम[9]मभिदधति दशावतारविदः ॥ २४ ॥ तावन्महतां महती यावत्किमपि हि न याचते लोकम् । बलिमखयाचनसमये श्रीपतिरपि[10] वामनो जातः ॥ २५ ॥ गुरुतामुपयाति यन्मृतः पुरुषस्तद्विदितं मयाऽधुना । ननु लाघवहेतुरर्थिता न मृते तिष्ठति सा मनागपि ॥ २६ ॥ याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमेव तथा हि । सद्य एव भगवानपि विष्णुर्वामनो भवति याचितुमिच्छन् ॥ २७ ॥ उत्तमर्णधनदानशङ्कया पावकोत्थशिखया हृदिस्थया । देव[11] दग्धवसना सरस्वती[12] नास्यतो बहिरुपैति लज्जया ॥ २८ ॥ नीचतामनवलम्ब्य जनः को याचनादवचिनोति फलानि । हन्त वामनपदं प्रतिपेदे भिक्षुतामुपगतो जगदीशः ॥ २९ ॥ लोकमूर्ध्नि विनिधाय पदं स्वं दातृतामुपगतो नदतीद्धः । सोऽप्यधोवदनतामुपयाति वारिदो जलनिधेर्जललिप्सुः ॥ ३० ॥ क्षारताऽऽदिभिरसेव्यतरोऽपि ग्राहभीषणतया कुटिलोऽपि । वारिधिर्बत रमादं[13] इतीव सेव्यते भगवता हरिणाऽसौ ॥ ३१ ॥ अन्यतो यदि निजोपचिकीर्षा मानहानिरिति भीतिरनीतिः । श्रीधरोऽपि हि बलेः श्रियमिच्छन्मानमातनुत वामनमेव ॥ ३२ ॥ संतापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् । आशावतां श्रद्दधतां च लोके किमर्थिनां वञ्चयितव्यमस्ति ॥ ३३ ॥ स्वार्थं धनानि धनिकात्प्रतिगृह्णतो यदास्यं भजेन्मलिनतां किमिदं विचित्रम् । गृह्णन्परार्थमपि वारिनिधेः पयोऽपि मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ३४ ॥ जन[14]स्थाने भ्रान्तं कनक[15]मृगतृष्णाकुलतया वचो वैदेहीति[16] प्रतिपदमुदश्रु प्रलपितम् । कृतालंकाभर्तु[17]र्वदनपरिपाटीषु घटना मयाऽऽप्तं रामत्वं कुशलवसुता[18] न त्वधिगता ॥ ३५ ॥ क्व गन्तासि भ्रातः कृतवसतयो[19] यत्र धनिनः किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि । धनैर्याच्ञालब्धैर्ननु परिभवोऽभ्यर्थनफलं निकारो[20]ऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम्[21] ॥ ३६ ॥

---

१ किरणान्, हस्तांश्च । २ दक्षिणदिक्- । दक्षिणालाभेच्छा-( च ) । ३ सूर्येणेवेति व्यज्यते । ४ उत्थितज्वालः । ५ याचकता । ६ कर्णेन । ७ महेश्वर । ८ खर्वः, क्षुद्रश्च । ९ त्रिषु लोकेष्वपि प्रथितपराक्रमम् । त्रीन् लोकान् पादेनाक्रान्तवन्तम् । १० का पुनरन्येषां चर्चेति भावः । ११ हे राजन् । १२ वाणी । १३ लक्ष्मीप्रदः । १४ जनानां लोकानां स्थानं तत्र, दण्डकारण्यदेशे च । १५ धनस्यालीकाशयाऽन्धीभूततया, सुवर्णाकारमृगलोभोद्रेकेण च । १६ वै निश्चितं देहीति, हे वैदेहि सीते इति च । १७ काभर्त्तुः निर्गुणस्य सेव्यस्य, वदनपरिपाट्यः वचनपरम्परास्तासु विषये घटना रचना अलंकृता, कुत्सितानां जनानां यानि वचनानि तेषां तथात्वेनैव समर्थने सर्वात्मना यतितमिति भावः । लङ्काभर्तू रावणस्य वदनपरिपाटीषु मस्तकेषु, इषूणां बाणानां ( प्रक्षेपात्मिका ) घटना कृतेति भावश्च । १८ कुशलं गृहपोषणादिसमर्थं वसु धनं यस्येति तस्य भवस्तत्ता, कुशलवौ सुतौ यस्याः सा, जानकीति च । १९ कृता वसतिः स्थानं यैस्तादृशाः । २० धिक्कारः । २१ मरणम् ।

पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि । श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः स्तोतव्यस्त्वं बधिर न गिरं यः खलानां शृणोषि ॥ ३७ ॥ भ्रातर्धातरशेषयाचकजने वैरायसे सर्वदा यस्माद्विक्रमशालिवाहनमहीभृन्मुञ्जभोजादयः । अत्यन्तं चिरजीविनो न विहितास्ते विश्वजीवातवो[1] मार्कण्डध्रुवलोमशप्रभृतयः सृष्टाः प्रभूतायुषः ॥ ३८ ॥ उड्डीना गुणपत्रिणः[2] सुखफलान्याराद्विकीर्णान्यधः पर्यस्ताः परितो यशःस्तबकिताः संपल्लतापल्लवाः । प्रागेवापसृतप्रमोदहरिणच्छाया कथान्तं गता दैन्यारण्यमतङ्गजेन[3] महता भग्नेऽभिमानद्रुमे ॥ ३९ ॥ शूराः केऽपि पुरः स्थितां रिपुनरश्रेणिं सहन्ते सुखं धीराः केचन कामबाणसदृशां कान्तादृगन्ताहतिम् । केचित्क्रूररवांश्च पञ्चवदनान्[4] वीरा गजानां हतीर्नैवार्थिप्रकरं प्रसारितकरं कश्चिद्विसोढुं क्षमः ॥ ४० ॥ दौर्गत्येन[5] समीरिता हृदयतः कण्ठं समालम्बते कण्ठात्कष्टतरं कथं कथमपि प्राप्नोति जिह्वाञ्चलम् । लज्जाकीलककीलितेव निबिडं तस्मान्न निर्यात्यहो वाचा प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥ ४१ ॥ वक्त्रादुद्व्रस मे हठादधिवस त्वं वाणि वक्त्रं मनागीशानां तदनु क्रुधा भजतु मां लक्ष्मीरिमानुज्झतु । पश्चात्तेषु पठत्सु मां प्रति यशोगाथावलीस्तृष्णया वक्त्रं मय्यथ वक्रयत्यनुभवन्त्वेतेऽपि तद्यातनाम् ॥ ४२ ॥ तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः शूरः सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः । दक्षो धर्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठान्वितो यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ ४३ ॥ आस्वाद्य स्वयमेव वच्मि महतीर्मर्मच्छिदो वेदना मा भूत्कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः । पश्य भ्रातरियं हि यौवनजराधिक्कारकेलिस्थली मानम्लानमषी गुणव्यतिकर[6]प्रागल्भ्यगर्वच्युतिः ॥ ४४ ॥ प्राणानां बत किं ब्रुवे कठिनतां तैरेव साऽऽविष्कृता निष्क्रामन्ति कथंचिदेव हि न ये याच्ञावचोभिः समम् । आत्मानं पुनराक्षिपामि विदितस्थैर्योऽपि येषामहो मिथ्याशङ्किततद्वियोगविधुरो यत्प्रार्थये सर्वशः[7] ॥ ४५ ॥ वासो वल्कलमास्तरः[8] किसलयान्योकः[9]स्तरूणां तलं मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये । क्रीडा मुग्धमृगैर्वयांसि[10] सुहृदो नक्तं[11] प्रदीपः शशी स्वाधीने विभवे तथाऽपि कृपणा याचन्त इत्यद्भुतम् ॥ ४६ ॥ सन्ति स्वादुफला वनेषु तरवः स्वच्छं पयो नैर्झरं वासो वल्कलमाश्रयो गिरिगुहा शय्या लतावल्लरी । आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह स्वाधीने विभवेऽप्यहो नरपतिं सेवन्त इत्यद्भुतम् ॥ ४७ ॥ निष्कन्दाः[12] किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः किं शुष्काः सरितः स्फुरद्गिरिगुरुग्रावस्खलद्वीचयः । प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्वद्भिरुद्वीविभिर्यद्द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते[13] ॥ ४८ ॥ कामं जीर्णपलाश[14]संहतिकृतां कन्थां वसानो[15] वने कुर्यामम्बुभिरप्ययाचितसुखैः प्राणानुबन्धस्थितिम् । साङ्गग्लानि सवेपितं सचकितं सान्तर्निदाघज्वरं वक्तुं न त्वहमुत्सहे सकृपणं देहीति दीनं वचः ॥ ४९ ॥ द्वारे द्वारे परेषामविरलमटति द्वारपालैः करालै[16]र्दष्टो योऽप्याहतः सन्रणति[17] गणयति स्वापमानं तु नैव । क्षन्तुं शक्नोति नान्यं स्वसदृशमितरागारम[18]प्याश्रयन्तं भ्राम्यत्यात्मोदरार्थे कथमहह शुना[19] नो समो याचकः स्यात् ॥ ५० ॥

---

१ सर्वेषां जीवनौषधरूपाः । २ गुणरूपाः पक्षिणः । ३ दारिद्र्यरूपवनगजेन । ४ सिंहान् । ५ दारिद्र्येण । ६ सम्बन्ध- । ७ सर्वान् । ८ आस्तरणम् । ९ गृहम् । १० पक्षिणः । ११ रात्रौ । १२ कन्दशून्याः । १३ उपास्यते । १४ पत्र- । १५ धारयन् । १६ निष्ठुरैः । १७ शब्दं करोति । १८ अन्यदीयगृहम् । १९ कुक्कुरेण ।

## परहितसाधनप्रशंसनम् ।

हितानुष्ठानमन्येषां विधिना येन केनचित् । ये कुर्वन्ति जनास्तेषां सत्त्वैव क्षमा क्षमा ॥ १ ॥ परोपकारः कर्तव्यः प्राणैरपि धनैरपि । परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ २ ॥ धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥ ३ ॥ रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः । एते परोपकाराय युगे दैवेन निर्मिताः ॥ ४ ॥ तृणं चाहं वरं मन्ये नरादनुपकारिणः । घासो भूत्वा पशून्पाति भीरून्पाति रणाङ्गणे ॥ ५ ॥ परोपकृतिकैवल्ये तोलयित्वा जनार्दनः। गुर्वीमुपकृतिं मत्वा ह्यवतारान्दशाग्रहीत् ॥ ६ ॥ आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः । परं परोपकारार्थं यो जीवति स जीवति ॥ ७ ॥ परोपकारशून्यस्य धिङ् मनुष्यस्य जीवितम् । जीवन्तु पशवो येषां चर्माप्युपकरिष्यति ॥ ८ ॥ रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् । अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ ९ ॥ कृच्छ्रानुवृत्ततोऽपि हि परोपकारं त्यजन्ति न महान्तः । तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥ १० ॥ परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः । परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥ ११ ॥ भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः । अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥१२॥ श्रोत्रं श्रुतेनैवं न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन । विभाति कायः खलु सज्जनानां परोपकारेण न चन्दनेन॥१३॥पद्माकरं दिनकरो विकचं करोति चन्द्रो विकासयति कैरवचक्रवालम् । नाभ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहितेषु कृताभियोगाः ॥ १४ ॥ दातुः परोपकृतिनिर्भरचित्तवृत्तेरासन्नदूरगणना नहि संश्रितेषु । भानुर्विकासयति हन्त सरोजखण्डं पाणिस्थपङ्कज समं भुवनान्तरेषु ॥ १५ ॥

## कृतघ्नगर्हणम् ।

जीवाम इति मन्वाना नोपकारं स्मरन्ति ये । हन्त तर्हि मृतास्तेभ्यः केऽन्ये जगति विश्रुताः ॥१॥ ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा । निष्कृतिर्विहिता लोके कृतघ्ने नास्ति निष्कृतिः ॥ २ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् । तं जनमसत्यसंधं भगवति वसुधे कथं वहसि ॥ ३ ॥ व्योमनि शम्बं कुरुते चित्रं[11] निर्माति यत्नतः सलिले । स्नपयति पवनं सलिलैर्यस्तु खले चरति सत्कारम् ॥ ४ ॥ शोकं मा कुरु कुक्कुर सत्त्वेष्वहमधम इति मुधा[12] साधो । कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ५ ॥ नीचतमोऽहमिति त्वं स्वात्मनि मा धा घृणां पुरीषघृष्टे । भवतोऽपि तात लोके पदे पदे यत् कृतघ्नजनाः ॥ ६ ॥ रे रे कृतघ्न चेतसि मा गाः खेदं गतिः कथं मे स्यात् । ग्रामवराहप्रमुखाः शरणं दास्यन्ति ते सुहृदे ॥ ७ ॥

## निःस्पृहप्रशंसनम् ।

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १ ॥ अकृत्वा परसंतापमगत्वा खलनम्रताम् । अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद्बहु ॥ २ ॥ आगमिष्यन्ति ते भावा[13] ये भावा मयि भाविताः। अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः॥३॥ यो मे गर्भगतस्यापि वृत्तिं

---

१ दानम् । २ परोपकारं मोक्षं च । ३ महतीम् । ४ शोभाम् । सम्पत्तिं च । ५ शास्त्रेण । ६ विकसितम् । ७ कुमुदगणमिति भावः । ८ अतिशय- । ९ असत्यभाषिणम् । १० सीरेण क्षेत्रं वारद्वयं कर्षति । ११ आलेख्यम् । १२ वृथा । १३ अभिप्रायाः । १४ आजीवनोपायम् ।

कल्पितवान्स्वयम् । शेषवृत्ति[1]विधाने च से[2] किं सुप्तोऽथवा मृतः[3] ॥ ४ ॥ अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते[4] ॥ ५ ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे । अनृणी चाप्रवासी च स सुखी स च मोदते ॥ ६ ॥ आत्माधीनशरीराणां स्वपतां निद्रया स्वया । कदन्नम[5]पि मर्त्यानाममृतत्वाय कल्पते ॥ ७ ॥ संपदस्तस्य सर्वत्र संतुष्टं यस्य मानसम् । उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ ८ ॥ ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः । जगत्संमोहजननी यैराशाशीविषी[6] जिता ॥ ९ ॥ अकिंचनस्य[7] दान्तस्य शान्तस्य समचेतसः । संतुष्टमनसः शश्वत् सुखमय्यो[8] दिशोऽखिलाः ॥ १० ॥ न योजनशतं दूरं बाध्यमानस्य तृष्णया । संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ ११ ॥ अर्थी करोति दैन्यं लब्धार्थो गर्वमपरितोषं च । नष्टधनश्च स शोकं सुखमास्ते निःस्पृहः पुरुषः ॥ १२ ॥ तन्मूलं गुरुतायास्तत्सौख्यं तद्यशस्तदौर्जित्यम्[9] । तत्सौभाग्यं पुंसां यदेतद[10]प्रार्थनं नाम ॥ १३ ॥ सर्पाः पिबन्ति पवनं न च दुर्बलास्ते शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति । कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं संतोष एव पुरुषस्य परं निधानम ॥ १४ ॥ लोभो न यस्य ननु भोग्यपदार्थजाते सर्वं विगर्ह्य विरतोऽस्ति च यः समन्तात् । सोऽसौ परं जगति निर्भयतां दधाति राजा स एव स च सूरिरसौ कृतार्थः ॥ १५ ॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैवाङ्घ्रिपाः[11] फलभृतः सरितोऽप्यशुष्यन् । रुद्धा गुहाः किम[12]जितोऽवति नोपपन्नान्कस्मा[13]द्व्रजन्ति कवयो धनदुर्मदान्धान् ॥ १६ ॥ मन्निन्दया यदि जनः [14]परितोषमेति नन्वप्रयत्न[15]सुलभोऽयमनुग्रहो[16] मे । श्रेयो[17]ऽर्थिनोऽपि पुरुषाः परतुष्टिहेतोर्दुः[18]खार्जितान्यपि धनानि परित्यजन्ति ॥ १७ ॥ वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या सम इह परितोषो निर्विशेषोवशेषः । स हि भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ १८ ॥ गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां तां दृष्ट्वाऽऽशु गतः स चन्दनवनं पश्चात्सरोजं गतः । बद्धस्तत्र निशाकरे[19]ण सहसा रोदित्यसौ मन्दधीः संतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः १९ ॥ मृत्युर्माद्यति मूर्ध्नि शश्वदुरगी घोरा जरारूपिणी त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद्ग्रस्यते । धूत्वा बोधजलैरबोधबहुलं तल्लोभजन्यं रजः संतोषामृतसागराम्भसि चिरं मग्नः सुखं स्थास्यसि ॥ २० ॥ राजानोऽनन्तवीर्या इह भुवनतले सम्प्रभूता अनन्ता देवेन्द्रा अप्यनेके न तु किमपि सुखं लब्धवन्तः कदाचित् । अन्योऽन्यं स्पर्धमाना अहमिति च ममेत्येव मूढा मृताश्च तत्स्वाराज्यस्पृहा चेदपमलमतिना सेवनीयः प्रतोषः ॥ २१ ॥

## लोभगर्हणम् ।

लज्जां तेजश्च गाम्भीर्यं वैदुष्यं च निरस्य यः । अन्तराविश्य विद्वेष्टि लोभ एव स नू रिपुः ॥ १ ॥
तृष्णा यस्य वृथा तस्य श्रुतानि च गुणाश्च ते । तृष्णया देवराजोऽपि सर्वतः परिभूयते ॥ २ ॥

---

१ अवशिष्टजीवनोपाय- । २ तादृशो निष्कारणकरुणः सर्वथा समर्थः परमात्मेति भावः । ३ अत्र काकुः तेन न सुप्तो, न वा मृत इति भावः । ४ विशिष्यते । ५ कुत्सितं भोज्यम् । ६ तृष्णारूपा सर्पिणी । ७ निर्धनस्य निष्परिग्रहस्य । ८ 'सुखप्रचुराः सुखमया' इति पाठान्तरं तु हेयमेव । ९ उन्नतत्वम् । १० याचनवैमुख्यम् । ११ तरवः । १२ न केनापि जितः। सर्वेश्वर इति भावः। १३ शरणमुपेतान् । १४ आमोदम् । १५ परिश्रममन्तरेणैव लब्धुं शक्यः । १६ कृपा । १७ शुभाभिलाषिणः । १८ इतरप्रमोदकारणात् । १९ निशाकरोदये सरोजं बद्धमुखं भवतीति तत्र मधुलुब्धोऽपि सरोजमुखे बध्यमाने मधुपो बद्ध इति निशाकरस्यैव मधुपबन्धकर्तृत्वमापन्नमिति बोध्यम् ।

तृष्णे देवि नमस्तुभ्यं धैर्यविप्लवकारिणि । विष्णुस्त्रैलोक्यनाथोऽपि यस्त्वया वामनीकृतः ॥ ३ ॥ तृष्णे कृष्णेऽपि ते शक्तिर्दृष्टा मर्त्येषु का कथा । त्रैलोक्यव्यापि यद्रूपं तद्रूपं वामनीकृतम् ॥ ४ ॥ तृष्णा यदि परित्यक्ता को दरिद्रः क ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ ५ ॥ वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ६ ॥ नास्त्यन्या तृष्णया तुल्या काऽपि स्त्री सुभगा क्वचित् । या प्राणानपि मुष्णन्ती भवत्येवाधिकं प्रिया ॥ ७ ॥ च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे । पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥ ८ ॥ तृष्णे त्वमपि तृष्णान्धा त्रिषु स्थानेषु वर्तसे । व्याधितेष्वनपत्येषु जरापरिणतेषु च ॥ ९ ॥ तृष्णे देवि नमस्तुभ्यं या त्वं सर्वस्य सर्वदा । उत्पादयस्ययत्नेन गोष्पदे सागरभ्रमम् ॥ १० ॥ अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् । तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ ११ ॥ आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥१२॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम्॥१३॥गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् । नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ १४ ॥ आशैव राक्षसी पुंसामाशैव विषमञ्जरी । आशैव मदिरा घोरा हन्ताशा सर्वदोषभूः ॥ १५ ॥ क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः । तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥ १६ ॥ यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् । जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ १७ ॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १८ ॥ दारिद्र्यस्य परा मूर्तिस्तृष्णा न द्रविणाल्पता । जरद्गवधनः शंभुस्तथाऽपि परमेश्वरः ॥ १९ ॥ ये तृष्णारूपसर्पिण्या दष्टा लोका धरातले । हाहेति गिरमुच्चैस्ते प्रलपन्ति मुमूर्षवः ॥ २० ॥ मनोरथरथारूढं युक्तमिन्द्रियवाजिभिः । भ्राम्यत्येव जगत्कृत्स्नं तृष्णासारथिचोदितम् ॥ २१ ॥ यथा हि शृङ्गं गोः काले वर्धमानस्य वर्धते । एवं तृष्णाऽपि वित्तेन वर्धमानेन वर्धते ॥ २२ ॥ अकर्तव्येष्वसाध्वीव तृष्णा प्रेरयते जनम् । तमेव सर्वपापेभ्यो लज्जा मातेव रक्षति ॥ २३ ॥ आशा बलवती कष्टं नैराश्यं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला ॥ २४ ॥ तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते । या महद्भिरपि क्षितैः पूरणैरेव खन्यते ॥ २५ ॥ आसन्नान्पुरतो भावान्दर्शयित्वा पुरः पुरः । छागो हरितमुष्टयेव दूरं नीतोऽस्मि तृष्णया ॥ २६ ॥ वर्तते न विना येन नरो वाञ्छतु नाम तत् । ततोऽधिकार्थप्रणयी पृष्टो दद्यात्किमुत्तरम् ॥ २७ ॥ तावद्गुणा गुरुत्वं च यावन्नार्थयते परम् । अर्थित्वे वर्तमानस्य न गुणा न च गौरवम् ॥ २८ ॥ विद्वत्तां चैव शौर्यं च सौजन्यं च कुलीनताम् । खलीकरोति याच्ञैका दुःशीलेवाङ्गना कुलम् ॥ २९॥ आशाया ये दासास्ते दासाः सर्वलोकस्य । आशा येषां दासी तेषां दासायते लोकः ॥ ३० ॥ दन्ता विश्लथदन्ताः केशाः काशप्रसूनसंकाशाः । नयनं तमसामयनं तथाऽपि चित्तं धनाङ्गनायत्तम् ॥ ३१ ॥ त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् । हतहृदयं

१ संहार- । २ तुच्छः, खर्वश्च कृतः । ३ नारायणे । ४ हरन्ती । ५ वृद्धेषु । ६ सुमेरुमिव सम्पन्नम् । ७ तृणमिवासारं करोति । ८ निःस्पृहत्वम् । ९ जरद्गवः वृद्धो वृषभ एव धनं यस्य सः । १० सर्वम् । ११ वृद्धिशीलेन वित्तेन समम्मित्यर्थः । १२ एतदाख्या काऽपि जनकपुरे वेश्याऽऽसीत् । सा हि धनेच्छया कदाचिद्द्वारे निषण्णा न कमपि दातारं जारं लब्धवती अथान्ते पुण्योदयवशात्तस्या वृत्तेर्विरज्य सुखं लेभ इति भागवतादौ स्पष्टम् । १३ गभीरेति पाठान्तरम् । १४ निष्फलयति । १५ सर्वः संसार इति भावः । १६ स्थानभूतम् ।

ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥ ३२ ॥ इच्छति शती[1] सहस्रं ससहस्रः कोटिमीहते कर्तुम् । कोटियुतोऽपि नृपत्वं नृपोऽपि बत चक्रवर्तित्वम् ॥ ३३ ॥ चक्रधरोऽपि सुरत्वं सुरोऽपि सुरराज्यमीहते कर्तुम् । सुरराजोऽप्यूर्ध्वगतिं तथाऽपि न निवर्तते तृष्णा[2] ॥ ३४ ॥ अङ्गं गलितं पलितं मुण्डं[3] दशन[4]विहीनं जातं तुण्डम्[5] । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम्[6] ॥ ३५ ॥ दिनयामिन्यौ[7] सायंप्रातः शिशिरवसन्तौ पुनरायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥ ३६ ॥ आशा[8]वलम्बोपचिता न कस्य तृष्णालताऽनर्थफलं प्रसूते । दिने दिने लब्धरुचि[9]र्विवस्वान्[10] मीनं[11] च मेषं च वृषं च भुङ्क्ते ॥ ३७ ॥ आशागृहीता विकला भवन्ति हतत्रपा न्यस्तगुणाभिमानाः । भ्राम्यन्ति मत्ता इव नष्टसंज्ञा देहीतिवाचस्तरलस्वभावाः ॥ ३८ ॥ विभूतिरर्थत्यपि याचकानां न दुर्गतं केचिदिहाद्रियन्ते । पीताम्बरोऽब्धेः समवाप लक्ष्मीं दिगम्बरस्योपनतोऽर्धचन्द्रैः[12] ॥ ३९ ॥ भिक्षाशनं तदपि नीरसमेकवारं शय्या च भूः परिजनो निजदेहमात्रम् । वस्त्रं सुजीर्णशतखण्डमयी च कन्था हा हा तथाऽपि विषयान्न जहाति चेतः ॥ ४० ॥ या सा जगत्परिभवस्य निमित्तभूता हेतुः स्वयं सुरपतेरपि लाघवस्य । सा मां विडम्बयति नाथ सदैव तृष्णा छिन्धि प्रसह्य भगवन्नपुनर्भवाय[13] ॥ ४१ ॥ दुग्धं च यत्तदनु यत्कथितं ततो नु माधुर्यमस्य हृतमुन्मथितं च वेगात् । जातं पुनर्घृतकृते नवनीतवृत्ति स्नेहो निबन्धनमनर्थपरम्पराणाम् ॥ ४२ ॥ गदोदन्तौ[14] दन्ताः पलितकलितः कुन्तलभरस्तमःक्षेत्रे नेत्रे विषयपटुनी नो श्रुतिपुटे । अभूदङ्गं रङ्गद्वलिवलयवल्ली[15]विलुलितं तथाऽप्येतच्चेतस्तरुण इव धावत्यनुदिनम् ॥ ४३ ॥ गतं तत्तारुण्यं युवतिहृदयानन्दजनकं विशीर्णा दन्तालिर्निजगतिरहो यष्टिशरणा[16] । जडीभूता दृष्टिः श्रवण[17]रहितं कर्णयुगलं मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ ४४ ॥ वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम् । शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ ४५ ॥ खलोल्लापाः[18] सोढाः कथमपि तदाराधनतया निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा । कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि[19] त्वमाशे प्रत्याशं[20] किमु परमितो नर्तयसि माम् ॥ ४६ ॥ निवृत्ता भोगेच्छा बहुपुरुषमानो[21] विगलितः समानाः स्वर्याताः[22] सपदि सुहृदो जीवितसमाः । शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने अहो दुष्टः कायस्तदपि मरणापायचकितः[23] ॥ ४७ ॥ अमीषां प्राणानां तुलितबिसिनीपत्र[24]पयसां कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् । यदाढ्यानाम[25]ग्रे द्रविणमदनिःसंज्ञमनसां कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ४८ ॥ समारम्भा[26] भग्नाः कति कति न वारांस्तव पशो पिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले । तथाऽपि प्रत्याशा विरमति न ते मूढ शतधा न दीर्णं यच्चेतो नियतमशनि[27]ग्रावघटितम् ॥ ४९ ॥ विवेकप्रध्वंसो भवति न शमः शाम्यति धृतिर्जहाति श्रीर्दूरं व्रजति महिमा याति विलयम् । प्रभुत्वं प्रच्छन्नं क्वचन गरिमा चास्तमयते तृषायाः साम्राज्ये नहि गुणलवस्याप्यवसरः ॥ ५० ॥ अहो तृष्णावेश्या सकलजनता-

---

१ रूप्यकशतकशाली । २ युग्मकमिदम् । ३मस्तकम् । ४दन्तहीनम् । ५ मुखम् । ६ शरीरम् । ७ यामिनी रात्रिः । ८ सम्भावनाविशेष- । ९ तेजोऽभिलाषश्च रुचिपदार्थः । १० सूर्यः । ११ मीनादयो राशिविशेषाः, प्राणिविशेषाश्च । १२ चन्द्रखण्डः, तदाकारा निष्कासनमुद्रा च । १३ मुक्तये । १४ रोगेण पिपतिषवः । १५ लता- । १६ यष्टिर्दण्ड एव शरणं यस्याः सा । १७ श्रवणशक्तिशून्यम् । १८ दुर्जनभाषणानि । १९ मूढानां पुरस्तादिति भावः । २० प्रतिदिशम् । 'मोघाशे' इति पाठान्तरम् । २१ 'गुरुपुरुषमानः' इति पाठान्तरम् । २२ स्वर्गं गताः । २३ मरणं मम किं भावीति विस्मयं प्राप्तः । २४ कमलपत्रस्थजलसदृशानाम् । २५ धनिनाम् । २६ उद्यमाः । २७ वज्रशिला- ।

मोहनकरी विदग्धा मुग्धानां हरति विवशानां शमधनम् । विपदीक्षादक्षासहतरलतारैः प्रणयिनीकटाक्षैः कूटाक्षैः कपटकुटिलः कामकितवः ॥ ९१ ॥ उत्खातं निधिशङ्कया[1] क्षितितलं ध्माता गिरेर्धातवो निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः । मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ९२ ॥ निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशतां[6] वाञ्छति । चक्रेशः सुरराजतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णावधिं को गतः ॥९३॥ माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते । तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ ९४ ॥ दन्तैरुच्चलितं धिया तरलितं पाण्यङ्घ्रिणा कम्पितं दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम् । प्राप्तायां यमभूपतेरिह महाधाट्यां धरायामियं तृष्णा केवलमेकि[11]कैव सुभटी धीरा पुरो नृत्यति ॥ ९५ ॥ भ्रान्तं याचनतत्परेण मनसा देहीति वाक्प्रेरिता भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत् । साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥ ९६ ॥ ॥ भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला । भुक्तं मानविर्जितं परगृहेष्वाशङ्कया काकवत्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ९७ ॥ आसिष्ये[12] सुखितो गृहीति विहितो मोहेन दारग्रहस्तत्सङ्गात्सुतदासबान्धवसुहृत्संबन्धिनामुद्भवः । तन्निर्वाहकदर्थनापरिभवानौचित्यचिन्ताजुषः किं सौख्यं कतमा गृहस्थितिरतोऽनर्थो मया स्वीकृतः ॥ ९८ ॥ शान्तेर्मातुर्विवेकात्पितुरपि कृपणं मङ्क्षु[13] कृत्वा पृथङ् मामाशा योषा स्वतन्त्रा व्रजति परगृहान्सर्वदा वीतलज्जा[14] । संधत्ते मत्कृशत्वं मम यमनियमौ भ्रातरौ भर्त्सयन्ती पुष्टा चैवात्मबन्धूस्तदपि पुनरहो हन्त वन्ध्यां[15] श्रयामः ॥ ९९ ॥ लज्जे त्वं मज्ज सिन्धौ गिरिवरशिखरे त्वं च तिष्ठ प्रतिष्ठे शान्ते प्रान्ते दिशान्ते कुरु वसतिमहो[16] गर्व खर्वो[17] भवाशु । तेजः पातालमूलं भज भुवि भगवन्मान मा नाम तेऽस्तु प्रेम्णैकामाश्रयन्तीं सततमहमिमां तूर्णमाशां श्रयिष्ये ॥ ६० ॥

## धृतिमत्प्रशंसनम् ।

स एव धन्यो विपदि स्वरूपं यो न मुञ्चति । त्यजत्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥ १ ॥ चलन्ति गिरयः कामं युगान्तपवनाहताः । कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥ २ ॥ कृतं[18] पुरुषशब्देन जातिमात्रावलम्बिना । योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः ॥ ३ ॥ ग्रसमानमिवौजांसि सहसा गौरवेरितम् । नाम यस्याभिनन्दन्ति द्विषोऽपि स मतः पुमान् ॥ ४ ॥ सह परिजनेन विलसति धीरो गहनानि तरति पुनरेकः । विषमेकेन निपीतं त्रिपुर[19]जिता सह सुरैरमृतम् ॥ ५ ॥ श्लाघ्या महतामुन्नतिरद्भुतमध्यवसितं च धीराणाम् । कनकगिरिरनतिलङ्घ्यो रविरनिशमनुज्झितारम्भः[21] ॥ ६ ॥ अङ्गणवेदी वसुधा कुल्या[22] जलधिः स्थली च पातालम् । वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥ ७ ॥

---

१ शङ्का सम्भावना । २ सुवर्णादिशोधनार्थम् । ३ सच्छिद्र- । ४ निर्धनः । ५ कामयते । ६ चक्रवर्तित्वम् । ७ पदं स्थानम् । ८ धरणीतलम् । ९ दूरं गमनं कृतम् । १० बलादाक्रमणे इत्यर्थः । ११ एकाकिनी । १२ उपस्थितो भविष्यामीत्यर्थः । १३ झटिति । १४ निस्त्रपा । १५ निष्फलाम् । १६ स्थानम् । १७ अल्पाकारः । १८ व्यर्थम् । १९ महेश्वरेण । २० निश्चितम् । २१ अत्यक्तोद्योगः । २२ कृत्रिमा नदी ।

कदर्थितस्यापि[1] हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्[2] । अधोमुखस्यापि कृतस्य वह्नेरधः शिखा यान्ति न वै कदाचित् ॥८॥ अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवास्तु तथाऽपि धीराः । निजप्रतिज्ञामनुरुध्यमाना महोद्यमाः कर्म समारभन्ते ॥ ९ ॥ रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् । सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ १० ॥ निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेच्छम् । अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्[3]पथः प्रविचलन्ति पदं न धीराः ॥ ११ ॥ कान्ताकटाक्षविशिखा न लुनन्ति[4] यस्य चित्तं न निर्दहति कोपकृशानु[5]तापः । कर्षन्ति भूरि विषयाश्च न लोभपाशा लोकत्रयं जयति कृत्स्नमिदं[6] स धीरः ॥ १२ ॥ आपत्समुद्धरणधीरधियः परेषां जाता महत्यपि कुले न भवन्ति सर्वे । विन्ध्याटवीषु विरलाः खलु पादपास्ते ये दन्तिदन्तमुसलोत्कर्षणं[7] सहन्ते ॥ १३ ॥ विरम विरसायासादस्माद्दुरध्यवसायतो विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे । अयि जड विधे कल्पापायव्यपेतनिजक्रमाः कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ १४ ॥

## उत्साहिप्रशंसनम् ।

एकेनापि हि शूरेण पदाक्रान्तं महीतलम् । क्रियते भास्करेणेव स्फारस्फुरिततेजसा[8] ॥ १ ॥ बहवः पण्डवोऽपीह नराः शस्त्राण्यधीयते । विरला रिपुखड्गाग्रधारापातसहिष्णवः ॥ २ ॥ अनन्तोद्भूतभूतौघसंकुले भूतलेऽखिले । शस्त्रे शास्त्रे त्रिचतुराश्चतुरा यदि मादृशाः ॥ ३ ॥ महिम्नामन्तरं पश्य शेषाहेः साब्धिभूधरा । फणासहस्रस्रग्दाम्नि भ्रमरीव विभाति भूः[9] ॥ ४ ॥ स्पृहयति भुजयोरन्तरमायतकरवालकररुह[10]विदीर्णम् । विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ ५ ॥ भुजे विशाले विमलेऽसिपत्रे कोऽन्यस्य तेजस्विकथां सहेत । गतासुरप्याहव[11]सीम्नि वीरो द्विधा विधत्ते रविमण्डलं यः ॥ ६ ॥ लोकोत्तरं चरितमर्पयति प्रतिष्ठां पुंसां कुलं नहि निमित्तमुदारतायाः । वातापितापनमुनेः कलशात्प्रसूतिर्लीलायितं पुनरमुद्रसमुद्रपानम् ॥ ७ ॥ नायाति वाडवशिखाक्वथनेन[12] तापं शैत्यं हिमाद्रिपयसा विशता च नाब्धिः । कश्चिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोऽनुभावः ॥ ८ ॥ संप्राप्नुवन्ति ननु मण्डलमेकमेव क्ष्मापा[13] जये समरसीम्नि वपुस्तु हित्वा[14] । चण्डांशुमण्डलमथाभिमतानि कामं प्रेमार्द्रनिर्जरवधू[15]स्तनमण्डलानि ॥ ९ ॥ विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं समायुक्तोऽप्यर्थैः परिभवपदं याति कृपणः। स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां द्युतिं सैंहीं[16] किं श्वा धृतकनकमालोऽपि लभते ॥ १० ॥ को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् । यद्दंष्ट्रानखलाङ्गूल[17]प्रहरणः सिंहो वनं गाहते[18] तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ ११ ॥ सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः शूराणां व्यवसाय एव हि परं संसिद्धये कारणम् । विस्फूर्जद्विकटाटवीगजघटापीठैकसंचूर्णनव्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः ॥ १२ ॥ काकुत्स्थस्य दशाननो न कृतवान्दारापहारं[19] यदि क्वाम्भोधिः क च सेतुबन्धघटना क्वोत्तीर्य लङ्काजयः । पार्थस्यापि पराभवं यदि रिपुर्नाधात्क्व तादृक्तपो नीयन्ते रिपुभिः समुन्नतिपदं प्रायः परं मानिनः ॥ १३ ॥ बर्हि

---

१ दरिद्रस्य । २ निवर्तयितुम् । ३ न्यायादनपेतात् । ४ छिन्दन्ति । ५ अग्नि- । ६ समस्तम् । ७ दन्तिदन्तमुसलोल्लिखनमिति पाठान्तरं त्वसाधु । गुणनिषेधशास्त्रानुपलम्भात् । ८ अप्रतिहतप्रभावेण, अत्युद्दीप्तप्रकाशेन च । ९ विश्वम्भरा । १० नख- । ११ खड्गाम- । १२ उत्तपनेन । १३ राजानः । १४ त्यक्त्वा । १५ देवाङ्गना- । १६ सिंहस्येयमिति ताम् । १७ प्रहरणं शस्त्रम् । १८ विलोडयति । क्षोभं नयतीति भावः । १९ स्त्रीचौर्यम् ।

शीतयितुं हिमं ज्वलयितुं वातं निरोद्धुं पयो मूर्तं व्योम विधातुमुन्नमयितुं नेतुं नतिं वा महीम् । उद्धर्तुं किल भूभृतः[1] स्थलयितुं सिन्धूंश्च संभाव्यते शक्तिर्यस्य जनैः स एव नृपतिः शेषाः परं पार्थिवाः[2] ॥ १४ ॥ नास्मिन्संततवेष्टनोल्बणतमैस्तल्पैरुदेति व्यथा ग्रन्थिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जायते । क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते न ह्येतन्मरणं सुखस्य सुभगा काप्येव संप्राप्तिभूः ॥ १५ ॥

## तेजःप्रशंसनम् ।

बालस्यापि रवेः पादाः[3] पतन्त्युपरि भूभृताम्[4] । तेजसा सह जातानां वयः[5] कुत्रोपयुज्यते ॥ १ ॥ एकः स एव तेजस्वी सैंहिकेयः[6] सुरद्विषाम् । शिरोमात्रावशेषेण जीयन्ते येन शत्रवः[7] ॥ २ ॥ मौनी पादप्रहारेऽपि न क्षमी नीच एव सः । आकृष्टशस्त्रो मित्रेऽपि न तेजस्वी खलो हि सः ॥ ३ ॥ तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः[10] स्फुटं फलम् ॥ ४ ॥ स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि । निदर्शनमसाराणां लघुर्बहुतृणं[11] नरः ॥ ५ ॥ तेजस्विमध्ये तेजस्वी दवीयान्[12]अपि गण्यते । पञ्चमः पञ्चतपसः[13]तपनो जातवेदसाम्[14] ॥ ६ ॥ अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् । कथंकारम्[15]अनालम्बा[16] कीर्तिर्द्यामधिरोहति ॥ ७ ॥ अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ ८ ॥ तेजस्विनि क्षमोपेते नातिकार्कश्यमाचरेत् । अतिनिर्मन्थनादग्निश्चन्दनादपि जायते ॥ ९ ॥ तेजोहीने महीपाले स्वे परे च विकुर्वते । निःशङ्को हि जनो धत्ते पदं भस्मन्यनूष्मणि ॥ १० ॥ एकचक्रो रथो यन्ता[17] विकलो[18] विषमा[19] हयाः । आक्रमत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ ११ ॥ साधनं[20] सुमहद्यस्य यन्नान्यस्य विलोक्यते । तस्य धीशालिनः कोऽन्यः सहेतारालितां[21] भ्रुवम् ॥ १२ ॥ येन पाषाणखण्डस्य मूल्यमल्पं वसुन्धरा । अनस्तमितसारस्य तेजसस्तद्विजृम्भितम् ॥ १३ ॥ सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु । प्रकृतिरियं सत्त्ववतां[22] न खलु वयस्तेजसो हेतुः ॥ १४ ॥ यदचेतनोऽपि पादैः स्पृष्टः प्रस्खलति सवितुरिनकान्तः[23] । तत्तेजस्वी पुरुषः परकृतविकृतिं[24] कथं सहते ॥ १५ ॥ दर्शिततापोच्छ्रायैस्तेजोवद्भिः सुगोत्रसंजातैः[25] । धीरैरप्स्विव धीरैरापत्स्वपि गम्यते नाधः ॥ १६ ॥ दीप्यन्तां ये दीप्त्यै घटिता मणयश्च वीरपुरुषाश्च । तेजः स्वविनाशाय तु भवति तृणानामिव लघूनाम् ॥ १७ ॥ मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं हतैः । लवयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १८ ॥ तीव्रोष्णदुर्विषयवीर्यभृतः परेषां तेजस्विनो न गणयन्ति वपुर्महत्त्वम् । यत्पद्मरागशकलाकृतिरद्रितुङ्गं[26] कार्त्स्न्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥ १९ ॥ न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः । मयूखैरश्रान्तं तपति यदि देवो दिनकरः किमाग्नेयग्रावा[27] निकृत इव तेजांसि वमति ॥ २० ॥ हस्ती स्थूलतनुः स चाङ्कुशवशः किंहस्तिमात्रोऽङ्कुशो वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रं पविः[28] । दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमस्तेजो यस्य विराजते स बलवान्स्थूलेषु कः प्रत्ययः[29] ॥ २१ ॥ स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधः शान्तये । सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं[30] सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः

---

१ पर्वतान् । २ मृन्मया इति भावः । ३ चरणाः, किरणाश्च । ४ पर्वतानाम्, राज्ञां च । ५ अवस्था । ६ राहुः । ७ सूर्यस्य चन्द्रस्य च द्वादशराशिभिन्नत्वेन भिन्नत्वमिति बहुवचनम् । ८ राहुः । ९ सूर्यम् । १० तेजःशून्यताया इति भावः । ११ तृणकल्पम् । १२ दूरस्थः । १३ पञ्चाग्निसाध्यं तपश्चरतः । १४ अग्नीनाम् । १५ केन प्रकारेण । १६ निराश्रया । १७ सारथिः । १८ अनूरुत्वात् । १९ सप्तत्वात् । २० सैन्यादि । २१ कुटिलाम् । २२ पराक्रमिणाम् २३ सूर्यकान्तमणिः । २४ विकृतिः क्षोभः । २५ सत्पर्वत- । सत्कुल- । २६ शकलं खण्डम् । २७ सूर्यकान्त- । २८ वज्रम् । २९ विश्वासः । ३० हस्तिनम् ।

सत्त्वानुरूपं[1] फलम् ॥ २२ ॥ शमयति गजानन्यान्गन्धद्विपः[2] कलभोऽपि[3] सन्भवति सुतरां वेगोदग्रं भुजङ्गशिशोर्विषम् । भुवमधिपतिर्[4] बालावस्थोऽप्यलं परिरक्षितुं न खलु वयसा जात्यैवायं स्वकार्यसहो भरः ॥ २३ ॥

## सहृदयप्रशंसनम् ।

आर्थिभ्यश्च द्विषद्भ्यश्च वैमुख्यं यस्य नास्त्यसौ । महोदारः सदा शान्तः कृतज्ञः कोऽपि दुर्लभः ॥ १ ॥ अर्पयन्त्यर्थिने प्रणान् न प्रणाममरातये । न नास्तीत्युत्तरं जातु सुहृदे सुमनोजनाः ॥ २ ॥ इदं विश्वं कुटुम्बो न इति येषां सुनिश्चयः । ते शान्ताः परमोदाराः केषां वन्द्या न साधवः ॥ ३ ॥ कामं प्रियानपि प्राणान्विमुञ्चन्ति मनस्विनः । इच्छन्ति न त्वमित्रेभ्यो महतीमपि सत्क्रियाम् ॥ ४ ॥ ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी । अङ्गुलीदर्शनाद्येन विलीयन्ते मनस्विनः ॥ ५ ॥ ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः । शफरीस्फुरितैर्[5]नाब्धेः क्षुब्धता जातु जायते ॥ ६ ॥ कुसुमस्तबकस्येव[6] द्वयी वृत्तिर्मनस्विनः । मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ७ ॥ पादाहतं यदुत्थाय मूर्धानमधिरोहति । स्वस्थादेवापमानेऽपि[7] देहिनस्तद्वरं रजः ॥ ८ ॥ समूलघातमघ्नन्तः[8] परान्नोद्यन्ति[9] मानिनः । प्रध्वंसितान्धतमसस्[10]तत्रोदाहरणं रविः ॥ ९ ॥ स पुमानर्थवज्जन्मा[11] यस्य नाम्नि पुरः स्थिते । नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः[12] ॥ १० ॥ स्थित्यतिक्रान्तिभीरूणि[13] स्वच्छान्याकुलितान्यपि[14] । तोयानि तोयराशीनां[15] मनांसि च मनस्विनाम् ॥ ११ ॥ शक्तिवैकल्यनम्रस्य[16] निःसारत्वाल्लघीयसः । जन्मिनो[17] मानहीनस्य[18] तृणस्य च समा गतिः ॥ १२ ॥ अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् । प्रियतां ज्यायसीं[19] मा गान्महतां केन तुङ्गता ॥ १३ ॥ तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः । पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ १४ ॥ दुरासदवनज्यायान्गम्यस्तुङ्गोऽपि भूधरः । न जहाति महौजस्कं[20] मानप्रांशुमलङ्घ्यता[21] ॥ १५ ॥ गुरून्कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुंधरा । येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम्[22] ॥ १६ ॥ उदाहरणमाशीःषु प्रथते मे मनस्विनाम् । शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥ १७ ॥ तुङ्गत्वमितरा[23] नाद्रौ नेदं[24] सिन्धावगाधता । अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ १८ ॥ न क्वचिच्च बहिर्यान्ति मानिनां प्रार्थनागिरः । यदि निर्यातुमिच्छन्ति तदा प्राणैःपुरःसराः[25] ॥ १९ ॥ असेवितेश्वरद्वारमदृष्टविरहव्यथम् । अनुक्तक्लीबवचनं धन्यं कस्यापि जीवितम् ॥ २० ॥ मानिनो हतमानस्य मानोऽपि न सुखप्रदः । जीवनं मानमूलं हि माने म्लाने कुतः सुखम् ॥ २१ ॥ मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति । अपि निर्वाणमायाति[26] नानलो याति शीतताम् ॥ २२ ॥ मनस्विहृदयं धत्ते रोषेणैव प्रसन्नताम् । भस्मना मुकुरः[27] प्रायः प्रसादं लभतेतराम् ॥ २३ ॥ मनस्विनो न मन्यन्ते परतः प्राप्य जीवनम् । बलिभुग्भ्यो न काकेभ्यः स्पृहयन्ति हि कोकिलाः ॥ २४ ॥ दूर्वाङ्कुरतृणाहारा धन्यास्ते वै वने मृगाः । विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥ २५ ॥ सुखं जीवन्ति हरिणा वनेष्वपरसेविनः । अर्थैरयत्न-

---

१ पराक्रमानुसारि । २ यस्य गन्धमाघ्रायान्ये वन्या गजाः पलायन्ते तादृशो गजः । ३ पञ्चवर्षीयः करिशावकः । ४ राजा । ५ मत्स्यी- । ६ पुष्पगुच्छस्य । ७ अक्षुब्धात् । ८ समूलं हत्वाऽनुन्मूलयन्तः । ९ रिपून् । १० गाढान्धकार- । ११ सार्थक- । १२ उत्तमगणनावसरे । १३ मर्यादोल्लङ्घनत्रस्तानि । १४ क्षुब्धानि । १५ समुद्राणाम् । १६ उत्साहादिशक्तिवैकल्येन उद्धतत्वशून्यतया च प्रणतस्य । १७ संसारिणः । १८ निरस्ताभिमानस्य । १९ अतिशयिताम् । २० प्रवृद्धप्रभावम् । २१ मानेनाभ्युन्नतम् । २२ त्रपयन्ते । २३ अगाधता । २४ तुङ्गत्वम् । २५ प्राणा निःसरन्ति, न तु दैन्यवचनानीति भावः । २६ सर्वात्मनाऽभावम् । २७ दर्पणः ।

सुलभैर्जलदर्भाङ्कुरादिभिः॥ २६॥उपकारेण दूयन्ते न सहन्तेऽनुकम्पिताम् । आपत्स्वपि दुराराध्या नित्यदुःखा मनस्विनः ॥ २७ ॥ जलसेकेन वर्धन्ते तरवो नाश्मसंचयाः । भव्यो हि द्रव्यतामेति क्रियां प्राप्य तथाविधाम् ॥२८॥ अवृत्तिभयमन्त्यानां मध्यानां मरणाद्भयम् । उत्तमानां तु सत्त्वानामवमानात्परं भयम् ॥ २९ ॥ न सदश्वाः कशाघातं न सिंहा घनगर्जितम् । परैरङ्गुलिनिर्दिष्टं न सहन्ते मनस्विनः ॥ ३० ॥ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन । धनिषु न दैन्यं विदधति ते खलु पशवो वयं सुधियः ॥३१ ॥ प्रत्युपकुर्वन्बह्वपि न भवति पूर्वोपकारिणा तुल्यः । एकोऽनुकरोति कृतं निष्कारणमेव कुरुतेऽन्यः ॥ ३२ ॥ न नटा न विटा न गायका न परद्रोहनिबद्धबुद्धयः । नृपसद्मनि नाम के वयं स्तनभारानमिता न योषितः ॥ ३३ ॥ अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः । अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ ३४ ॥ ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः । अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ ३५ ॥ पुरो वा पश्चाद्वा वयमुपविशामः क्षितिभुजां ततः किं नश्छिन्नं वचनरचनाक्रीतजगताम् । अगारे कान्तारे कुचकलशभारे मृगदृशां मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ॥ ३६ ॥ अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् । तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ३७ ॥ क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः । क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ३८ ॥ स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं कपालं यस्योच्चैर्विनिहितमलङ्कारविधये । नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ३९ ॥ विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा । इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः॥ ४० ॥वैरमहिमुखे क्रोधाध्माते करो विनिवेशितो विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने।गिरिवरतटान्मुक्तश्चात्मा वरं शतधा कृतो न तु खलजनायासैश्चाधः कृतं हितमात्मनः ॥ ४१ ॥नानीयन्ते मधुनि मधुपाः पारिजातप्ररोहैर्नाभ्यर्थ्यन्ते तुहिनरुचिना चन्द्रिकायां चकोराः । अस्मद्वाचां धुरि मधुरिमा यद्यपूर्वावतारः सोल्लासाः स्युः स्वयमिह बुधाः किं मुधाभ्यर्थनाभिः ॥ ४२ ॥ मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणूरङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते । तद्दद्युर्ददतेऽथवा न किमपि क्षुद्रा दरिद्रा भृशं धिग्धिक्तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योऽपि ये ॥४३॥ त्वं चेन्नीचजनानुरागरभसादस्मासु मन्दादरः का नो मानदमानहानिरियती भूः किं त्वमेकः प्रभुः। गुञ्जापुञ्जपरम्परापरिचयाद्भिल्लीजनैरुज्झितं मुक्तादाम न धारयन्ति किमहो कण्ठे कुरङ्गीदृशः ॥ ४४ ॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाऽभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ४५ ॥ ब्रह्माण्डं कियदस्ति तत्र वसुधापिण्डं किमाचक्ष्महे तत्राप्येकतरं तु खण्डममितास्तस्मिन्नृपाः केचन । तेभ्यो दैन्यशतोपनीतविभवा दृष्टानुकम्पास्तु ते धिङ् मूढाः

---

१ दुःखिता भवन्ति । उपकुर्यात्कश्चिदित्यभिलाषाभावात् । २ जघन्यानाम् । ३ प्राणिनाम् । ४ धूर्ताः । ५ कवितायाः सर्वान् वशंवदान् कृतवतां, कवीनामिति भावः । ६ महेश्वरेण । ७ ईषत्प्रियम् । ८ कोपेनोद्दीप्ते । ९ मृत्युस्थानभूते सिंहादिनिवासदेशे । १० सर्वोऽपि पृथिवी मृत्पिण्डरूपैव सर्वेऽपि समुद्राः पृथिव्या मेखलाभूता जलरेखारूपा एव चेति थथोक्तिः । ११ विस्तारयन्ति ।

स्पृहयन्ति हन्त किमपि स्वार्थेन तेभ्योऽपि ये ॥ ४६ ॥ पातालान्न विमोचितो बत बलिर्नीतो न मृत्युः क्षयं नोन्मृष्टं शशिलाञ्छनस्य मलिनं नोन्मूलिता व्याधयः । शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं चेतः सत्पुरुषाभिमानमनिशं मिथ्या वहन्खिद्यसे ॥ ४७ ॥ नास्माकं शिबिका न चास्ति कटकाद्यालङ्क्रियासत्क्रिया नोत्तुङ्गस्तुरगो न कश्चिदनुगो नाप्यम्बरं सुन्दरम् । किंतु क्ष्मातलवर्त्यशेषविदुषां साहित्यविद्याजुषां चेतस्तोषकरी शिरोनतिकरी विद्याऽनवद्याऽस्ति नः ॥ ४८ ॥ लक्ष्मीर्निर्वृतिमेति हीनचरितैर्यैरेव लच्छिक्षया किं नाद्यैव करोमि तामनुचरीं रामां सकामामिव । ब्रह्माण्डे निपतत्यपि स्खलति न प्रायेण येषां मनस्तेषामार्यमनस्विनामनुपदं गन्तास्मि नाहं यदि ॥ ४९ ॥ पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपालीमादाय न्यायगर्भं द्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् । द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो मानी प्राणी स्वदेशे न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ ५० ॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः । सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न चेत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥ ५१ ॥ तेजस्वी यत्र मानं व्रजति दुरितकृच्चापमानं मनुष्यैरज्ञयं यत्र दूतैः प्रभुमनु मनुजो नीयते चानपेक्षः । मृत्योर्गेहं वरं तन्न तु कुधनवतां यत्र सर्वापमानो लोकैर्विज्ञायमानः स्वयमतिथितया यत्र चार्थी प्रयाति ॥ ५२ ॥ सद्विद्या यैरुपास्ता धरणिसुमनसां यैश्च गोत्रे प्रभूतं ज्यायांसो यैरुपास्ता विमलगुणगणा यैर्गृहीता गुरुभ्यः । जिह्वाऽग्रे यैश्च , काव्यं भृतमथ मनसा निश्चितो यैः श्रुतार्थस्तेषां के प्रार्थनीयास्त्रिपुरजित ऋते सोऽपि वाऽस्मन्न भिन्नः ॥ ५३ ॥

## आलस्यगर्हणम् ।

माजीवन्यः परावज्ञादुःखदग्धोऽपि जीवति । तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ १ ॥ असंपादयतः कंचिदर्थं जातिक्रियागुणैः । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ २ ॥ किं युक्तमस्माभिरनुष्ठितं भवेत्संसारसिन्धुश्च कथं नु तीर्यताम् । इत्येष येषां हृदि नार्थ उल्लसेत्तेभ्यो गरिष्ठाः पशवोऽपि सर्वथा ॥ ३ ॥

## गुणप्रशंसनम् ।

दोषाः किं नाम कुर्वन्ति गुणापहृतचेतसाम् । केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते ॥ १ ॥ गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयमायान्ति षट्पदाः ॥ २ ॥ गुणवज्जनसंपर्काद्याति स्वल्पोऽपि गौरवम् । पुष्पाणामनुषङ्गेण सूत्रं शिरसि धार्यते ॥ ३ ॥ कलावतः कला सैव ययाऽधः क्रियते भवः ।

---

१ क्षालितम् । २ लक्ष्मीम् । ३ भिक्षापात्रम् । ४ धनानाम् । ५ प्रतिवादि- । ६ चातुर्यम् । ७ श्रद्धा तवेति शेषः । ८ शत्रुजनकर्तृकतिरस्कार- । ९ जन्माभावः । जन्मैवायुक्तमिति भावः । १० धनं, वाच्यादिं च । ११ब्राह्मणत्वादिः जातिः, व्यापाराः क्रियाः। गाम्भीर्यादयो गुणाश्चएतैः। जात्यनुकूला याः क्रियास्तासां योग्या गुणास्तैरिति वा । १२ द्रव्यवाचक- । १३ सम्बन्धेन । १४ चन्द्रमसः, चतुरस्य च । १५ शङ्करः ।

बह्वीभिश्च कलाभिः किं याभिरङ्कः प्रदर्श्यते ॥ ४ ॥ आस्तां ते गुणिनस्तावद्भूषिताशेषभूतलाः । येषां गुणरुचिर्भूयः साम्प्रतं तेऽपि दुर्लभाः ॥ ५ ॥ गुणा गौरवमायान्ति न महन्त्योऽपि सम्पदः । पूर्णेन्दुः किं तथा वन्द्यो निष्कलङ्को यथा शशी ॥६॥ न पुत्रत्वेन पूज्यन्ते गुणैरासाद्यते पदम् । रवेर्यापारमादत्ते प्रदीपो न पुनः शनिः ॥ ७ ॥ गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः । वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ॥८॥ यत्पयोधरभारेषु मौक्तिकैर्निहितं पदम् । तदाच्छादितरन्ध्राणां गुणानामेव जृम्भितम् ॥ ९ ॥ सन्दध्यात्सरला सूची वक्रा छेदाय कर्त्तरी । अतः संत्यज्य वक्रत्वं गुणानेव समाश्रय ॥ १० ॥ गुणेष्वेवादरः कार्यः किमाटोपैः प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ ११ ॥ गुणानां भो तिरस्कारं पूर्णश्रीरपि मा कृथाः । सम्पूर्णोऽपि घटः कूपे गुणच्छेदात्पतत्यधः ॥ १२ ॥ अन्तर्धृतगुणैरेव परेषां स्थीयते हृदि । अर्थं समर्थयन्त्येनं समग्रं कुसुमस्रजः ॥ १३ ॥ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । नहि कस्तूरिकामोदः शपथेन निवार्यते ॥ १४ ॥ किमाढ्यत्वगुरुत्वाभ्यां चरमोऽपि गुणैर्गुरुः । केतकीकुसुमे पश्य लघुपत्रेऽपि गौरवम् ॥ १५ ॥ केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते । दोषाः किं नाम कुर्वन्ति गुणापहृतचेतसः॥१६॥ शरीरस्य गुणानां च दूरमत्यन्तमन्तरम् । शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ १७ ॥ गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ १८ ॥ गुणैः सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः । अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते ॥ १९ ॥ गुणा यदि तदा कस्य स्यादपेक्षा विभूतये । नाभौ कस्तूरिकाऽऽस्ते चेद्यात्येव स्पृहणीयताम् ॥२०॥ दूरस्थानामपि गुणा न महत्त्वं जहत्यमी । समृद्ध्या हि सुधासिन्धोर्दृष्टाः कुवलयश्रियः ॥२१॥ स्वयं स्वगुणविस्ताराद्दूर्णनाभः पतत्यधः । तमेव संहरन्भूयः पदमुच्चैर्विगाहते॥२२॥ गुणो दूषणतां याति दूषणं गुणतां क्वचित् । तथा हि नम्रतादोषः स्तनयोः स्तब्धता गुणः ॥२३॥ गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः । प्रासादशिखरस्थोऽपि काकः किं गरुडायते ॥२४॥ अहो गुणानां प्राप्त्यर्थं यतन्ते बहुधा नराः । मुक्ता यदर्थं भग्नास्या इतरेषां च का कथा ॥ २५ ॥ गुणेन स्पृहणीयः स्यान्न रूपेण युतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥ २६ ॥ प्रभुभिः पूज्यते लोके कलैव न कुलीनता । कलावान्मान्यते मूर्ध्नि सत्सु देवेषु शंभुना ॥ २७ ॥ गुणयुक्तोऽपि पूर्णोऽपि कुम्भः कूपे निमज्जति । तस्य भारसहो नास्ति गुणकग्राहको यदि ॥ २८ ॥ अहो वैचित्र्यमेतस्य संसारस्य किमुच्यते । गुणोऽपि क्लेशहेतुः स्याद्विश्रान्तः कण्ठकन्दले ॥ २९ ॥ जात्युत्कृष्टस्य हि मणेर्नोचितं शाणघर्षणम् । आदर्शे चित्रकारैः किं लिख्यते प्रतिबिम्बितम् ॥ ३० ॥ गुणयुक्तोऽप्यधो याति रिक्तः कूपे घटो यथा । निर्गुणोऽपि भृतःपश्य जनैः शिरसि धार्यते ॥ ३१ ॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । सगुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥ ३२ ॥ गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे । स्वभावरम्यं लावण्यं तारुण्येन मनोहरम् ॥ ३३ ॥ गुणैः पूजा भवेत्पुंसां नैकस्माज्जायते कुलात् । चूडारत्नं शशी शंभोर्यानमुच्चैःश्रवा हरेः ॥ ३४ ॥ सर्वत्र गुणवानेव चकास्ति प्रथितो नरः । मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते

---

१ कलङ्कः । २ प्रकाशनक्रियाम् । ३ अन्त्यजः अविशिष्टः अन्ते सम्भूतत्वादप्ररूढो वा । ४ नृपतिभिः धनिभिर्वा । ५ सर्वज्ञ ( परमात्म ) समानः । ६ कुमुदानां शोभाः। कुः पृथिवी, सैव वलयं तस्य श्रियश्च । ७ 'प्रासादो देवभूभुजाम् ।' इत्यमरः । ८ मौक्तिकानि, मोक्षं प्राप्ताश्च । ९ चन्द्रमाः । विद्यावानिति तु प्रतीतिमात्रम् । १० रज्जु, नम्रत्वादि- । ११ पूर्णः । सम्पन्नश्च १२ विषादं लभन्ते । १३ पाण्डित्यादिस्पृही रज्जुग्रहीता च ।

॥ ३५ ॥ गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित्। स्फाटिकं भाजनं भग्नं काकिन्यांऽपि न गृह्यते ॥ ३६ ॥ नहि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुण उच्यते। गुणाद्गुरुत्वमायाति दधि दुग्धं घृतं यथा ॥३७॥ गुणवान्सुचिरस्थायी दैवेनापि न सह्यते। तिष्ठत्येकां निशां चन्द्रः श्रीमान्संपूर्णमण्डलः॥३८॥ गुण आकर्षणयोग्यो धनुष इवैकोऽपि लक्षलाभाय। द्युतातन्तुभिरिव किं गुणैर्विमर्दासहैर्बहुभिः ॥ ३९ ॥ अनवसरे गुणवानपि हृदयादवतार्यते हारः। पश्य शलाकावसरे तृणेऽपि भूपैः प्रसार्यते स्वकरः ॥ ४० ॥ गुणवन्तः क्लिश्यन्ते प्रायेण भवन्ति निर्गुणाः सुखिनः। बन्धनमायान्ति शुका यथेष्टसंचारिणः काकाः ॥ ४१ ॥ गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः। अलिरेति वनात्कमलं न दर्दुरस्त्वेकवासोऽपि ॥ ४२ ॥ अवलम्बितविष्णुपदैः कर्षितजनचक्षुरतुलगतिः। पत्रमयोऽपि पदार्थः पतङ्गतामेति गुणयोगात् ॥ ४३ ॥ अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति। निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ ४४ ॥ दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते। राकेशे हि कलङ्कः पतितोऽप्यमुदे न लोकस्य ॥ ४५ ॥ अन्तर्गतैर्गुणैः किं द्वित्रा अपि यत्र साक्षिणो विरलाः। स गुणो गीतेर्यदसौ वनेचरं हरिणमपि हरति ॥ ४६ ॥ गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः। सुस्वादुतोयाः प्रवहन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः॥४७॥विषमस्थितोऽपि गुणवान्स्फुटतरमाभाति निजगुणैरेव। जलनिधिजलमध्येऽपि हि दीप्यन्ते किं न रत्नानि ॥ ४८ ॥ गुणिनां स्वयमेव गुणा अविलम्बेन प्रकाशमादधति। भास्करतेजस्तमसि च्छन्ने परितोऽपि दीप्तिमाधत्ते॥४९॥गुणेषु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतमं गुणानाम्। गुणप्रकर्षादुडुपेन शंभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥५० ॥ गुणान् गुणज्ञोऽभिविलोक्य केवलं निषेवतेऽन्यं न तु दोषमीक्षते। उपेक्ष्य भीमत्वमधोऽक्षजोऽम्बुधिं समाश्रयद्रत्ननिधानमित्यसौ ॥ ५१ ॥ निष्कलङ्ककलयैकयाऽपि यः संयुतः स खलु पूज्यते जनैः। भद्र पश्य जलजोऽपि धार्यते शंकरेण शिरसा निशाकरः ॥ ५२ ॥ वक्रोऽपि पङ्कजनितोऽपि दुरासदोऽपि व्यालाश्रितोऽपि विफलोऽपि सकण्टकोऽपि। गन्धेन बन्धुरसि केतकपुष्पजेन ह्येको गुणः खलु निहन्ति समस्तदोषान् ॥ ५३ ॥ न खनति खुरैः क्षोणीपृष्ठं न नर्दति सादरं प्रकृतिपुरुषं प्रेक्ष्याप्यग्रे न कुप्यति गोचरम्। वहति च धुरं धुर्यो धैर्यादनुद्धतकन्धरो जगति गुणिनः कार्यौदार्यात्परानतिशेरते ॥ ५४ ॥ गुणानामज्ञाता प्रचुरधनदाताऽपि न मुदे मुदे विद्याज्ञाता भवति मितदाताऽपि गुणिनाम्। दृशौ ग्राम्यौ दत्ते न च सुमनसो मोदयति सा दृशः प्रान्तं दत्त्वा वशयति नितान्तं पुरवधूः ॥ ५५ ॥ उपादाता यावन्न भवति गुणानां गुणवतामसत्कल्पास्तावत्त्रिभुवन-

---

१ 'वराटिकानां दशकद्वयं यत् सा काकिनी' इति लीलावती। २ माधुर्यादिरूपात्। ३ एकामेव रात्रिं यावत्, न तु ततः परमपीति भावः। ४ प्रकृते यथाश्रुतोऽर्थः। पक्षान्तरे तु विवेचनक्षम इत्यर्थः। ५ वेध्यलाभाय, शतसहस्रधनलाभाय च। ६ सूत्रयुक्तः, औज्ज्वल्यशाली च। ७ शलाकाऽभिलाषसमये। ८ मण्डूकः। ९ विष्णुपदम् आकाशम्। १० पतङ्गः सूर्यः। 'पतङ्ग' इत्याख्यं पत्रमयमुड्डयनोचितं वस्तु च। ११ विषूचिकाऽऽदिरोगप्रशमनक्षमत्वरूपगुणशाली। १२ ताराऽधिपेन। १३ निरवद्यया विद्यया। १४ जलाज्जातो जडाज्जातश्च। १५ केतकतरुर्हि पङ्कात् जायते क्रकचाकारपत्रः दुःखेनासाद्यः सौरभलुब्धैः सर्पैश्च सन्निधापितः फलहीनः कण्टककीर्णोऽपि परं सौरभातिशयेन स्पृहणीयः। एवमन्योऽपि कामं कुटिलः कुकुलसम्भवः अस्पृश्यः दुर्जनान्तराश्रितः स्वयं फलादाता स्वद्विषद्भिराकीर्णोऽपि महनीयेन केनापि गुणान्तरेण सम्पन्नः स्पृहयत इति व्यज्यते। १६ अविदग्धाऽङ्गना। १७ 'न पुनरवधत्ते च चतुराः इति पाठान्तरम्। १८ मिथ्याभूताः।'

महार्घा अपि गुणाः । अपि प्राग्दैत्यारेर्हृदयवसतेः कौस्तुभमणिः स किं नासीदब्धौ श्रुतिरपि न यस्य क्वचिदभूत् ॥ ९६ ॥ विवादप्रारम्भः प्रथयति परं दम्भ¹मतुलं गुणानां गाम्भीर्ये तव भवति साक्षी कलकलः । पयःपूर्णः कुम्भो ध्वनति न तथा वातवलितो यथा रिक्तो भांभांध्वनिमनिभृतं मुञ्चति मुहुः ॥ ९७ ॥ कौशेयं कृमिजं सुवर्णमुपला²द्दूर्वापि गोरोम³तः पङ्कात्तामरसं⁴ शशी जलनिधेरिन्दीवरं गोम⁵-यात् । काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥ ९८ ॥

## गुणागुणज्ञप्रशंसनम् ।

गुणदोषसमाहारे गुणान् गृह्णन्ति साधवः । दुग्धवार्यविभागे हि हंसा दुग्धं न वार्यपि ॥ १ ॥ स्वगुणं परदोषं वा वक्तुं बोधयितुं परम् । अर्थिनं च निराकर्तुं सतां जिह्वा जडायते ॥ २ ॥ स्वश्लाघा परनिन्दा च मत्सरो महतां गुणे । असम्बद्धप्रलापित्वमात्मानं पातयत्यधः ॥ ३ ॥ असङ्ख्याः परदोषज्ञा गुणज्ञा अपि केचन । स्वयमेव स्वदोषज्ञा विद्यन्ते यदि पञ्चषाः ॥ ४ ॥ अङ्गनानामिवाङ्गानि गोप्यन्ते स्वगुणा यदा । तदा ते स्पृहणीयाः स्युरिमे ह्यत्यन्तदुर्लभाः ॥ ५ ॥ असतो वा सतो वाऽपि स्वयं स्वान् वर्णयन् गुणान् । हास्यतां याति शक्रोऽपि किं पुनः प्राकृतो जनः ॥ ६ ॥ परैः कीर्तित-माहात्म्यः सगुणो विगुणोऽपि सन् । गुणान् प्रख्यापयन् देवदेवोऽपि परिहस्यते ॥ ७॥ सर्वस्यात्मा गुण-वान् सर्वः परदोषदर्शने कुशलः । सर्वस्य चास्ति वाच्यं सुदुर्लभः स्वात्मदोषज्ञः ॥ ८ ॥ समीक्ष्य सूक्ष्माण्यपि दूषणानि स्वस्मादपाकर्तुमनाः सदैव । आधातुमात्मन्यमलान् गुणांश्च समीहमानो हि स देवदेवः ॥ ९ ॥ प्रच्छादयति दुरात्मा सुजनः प्रकटयति परगुणान् काले । तिरयति भुवनानि तमस्तान्येव रविः प्रकाशयते ॥ १० ॥ सर्वे स्तुवन्तु न च निन्दतु मां खलोऽपि पश्येयमात्मदुरितानि न चान्यदोषान् । इत्यन्तरात्मनि चिराय चमत्करोति सद्भावना जयति कश्चन काञ्चनश्रीः ॥ ११ ॥

## उद्यमप्रशंसनम् ।

उद्यमी लभते सिद्धिमयोग्योऽपि सुनिश्चितम् । अनूरुर्गगनस्यान्तं प्रयात्येव दिने दिने ॥ १ ॥ उद्यमी सिद्धिमाप्नोति साहाय्यविकलोऽपि चेत् । एकचक्ररथोऽनूरुसूतोऽर्को व्योम गाहते ॥ २ ॥ उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् । जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ ३ ॥ उद्यमं साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥ ४ ॥ उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः । नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ५ ॥ न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ ६ ॥ विहाय पौरुषं यो हि दैवमेवावलम्बते । प्रासाद⁶सिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ७ ॥ पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते । तस्मात्पुरुषकारेण विना दैवं न सिध्यति ॥ ८ ॥ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ९ ॥ यथा

---

१ धर्मध्वजत्वम् । २ सुवर्णखनेरपि पाषाणत्वानपायात् । ३ गोरोमभूता कुशापराख्या दूर्वेति केचित् । ४ यद्यपि नीलोत्पलमपि जलात्तत्रत्यपङ्कादेवोत्पद्यते, तथाऽपि पङ्के गोमय-सम्बन्धोऽपेक्ष्यत इति केषाञ्चिन्मतम् । ५ गोरोचना । ६ प्रासादोपरि कल्पिताकारः सिंहोऽपि भवति । स च्चाकिञ्चित्कर इति तथोक्तम् ।

मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति । एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ १० ॥ निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ॥ ११ ॥ दैवं पुरुषकारेण साध्यंसिद्धिनिबन्धनम् । योऽतिक्रमितुमिच्छेत्स लोके नैवावसीदति ॥ १२ ॥ योजनानां सहस्रं तु शनैर्गच्छेत्पिपीलिका । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ १३ ॥ कामपि श्रियमासाद्य यस्तद्वृद्धौ न चेष्टते । तस्यायतिषु न श्रेयो बीजभोजिकुटुम्बवत् ॥ १४ ॥ उद्योगिनः करालम्बं करोति कमलालया । अनुद्योगिकरालम्बं करोति कमलाग्रजा ॥ १५ ॥ काकतालीयवत्प्राप्तं दृष्ट्वाऽपि निधिमग्रतः । न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥१६॥ आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ १७ ॥ सम्पदा सुस्थिरंमन्यो भवति स्वल्पयाऽपि यः । कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ १८ ॥ न लभन्ते विनोद्योगं जन्तवः संपदां पदम् । सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥१९॥ नात्युच्चशिखरो मेरुर्नातिनीचं रसातलम् । व्यवसायद्वितीयानां नाप्यपारो महोदधिः ॥ २० ॥ बालोऽप्युद्यममाश्रित्य महतां मूर्ध्नि राजते । पञ्चवर्षो ध्रुवो लेभे परेषां दुर्लभं पदम् ॥ २१॥ उद्यमेन हि साध्यानि सिद्धतां यान्त्यसंशयम् । कृतार्थत्वं हि यल्लोके तत्सर्वं फलमौद्यमम् ॥२२॥ परमेश्वरता कोच्चैस्तत्पदं यदि लभ्यते । न वाङ् नैव मनो यस्य क्षमते सुनिरूपणे॥२३॥ पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥ २४ ॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति । दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥२५ ॥

## साहाय्यप्रशंसनम् ।

संहतिः श्रेयसी राजन्विगुणेष्वपि बन्धुषु । तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥ १ ॥ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ २ ॥ बहूनामल्पसाराणां समवायो दुरत्ययः । तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः ॥ ३ ॥ क्षुद्राणामपि साहाय्यमासाद्य लभते श्रियम् । लङ्केश्वरपदं रामो विजिग्ये कपिसङ्गतः ॥ ४ ॥ कुरुते कार्यमच्छिद्रं तृणानामपि संहतिः । तालच्छत्रिकयाऽऽदित्यः सप्रतापोऽपि वार्यते ॥ ५ ॥ बह्वीं प्रतिष्ठामाप्नोति पञ्चभिः सेवितो नरः । उत्तमाङ्गं शिरः प्रोक्तं पञ्चेन्द्रियसमन्वितम् ॥ ६ ॥ सर्वत्र साहाय्यमपेक्षणीयं तदन्तरा कापि न सिद्धिरिष्टा । सृष्टिर्हि सर्वा परमेश्वरस्य विजृम्भतेऽन्योन्यसमष्टिमूला ॥ ७ ॥

## क्षान्तिप्रशंसनम् ।

क्षमावतामयं लोकः परश्चैव क्षमावताम् । इह सम्मानमर्हन्ति परत्र च शुभां गतिम् ॥ १ ॥ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ २ ॥ क्षमाशस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ ३ ॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः । गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ ४ ॥ क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किं न सिद्ध्यति ॥ ५ ॥ ददतु ददतु गालीर्गालि-

---

१ क्षुद्रजलाशयम् । २ कार्य- । ३ उत्तरकालेषु । ४ लक्ष्मीः । ५ अलक्ष्मीः । ६ काकागमनतालपतनवत् । अतर्कितमिति शेषः । ७ सम्पदम् । ८ कुत्सिताः पुरुषाः । ९ समूहात्मनाऽवस्थानम् ।

मन्तो भवन्तो वयमिह तदभावाद्धालिदानेऽप्यशक्ताः । जगति विदितमेतद्दीयते विद्यमानं ददति खर-विषाणं किं महात्यागिनोऽपि ॥ ६ ॥

## नम्रताप्रशंसनम् ।

गुरवो नम्रतां यान्ति लघवश्च विनम्रताम् । गौरवेण तुलापात्रमन्यवन्नोन्मुखं स्मृतम् ॥ १ ॥ नमन्ति फलिनो वृक्षा गुरवश्च गुणश्रिया । तृणवन्न हिरण्यस्य सलिले तरणं मतम् ॥ २॥ तिष्ठतां तपसि पुण्य-मासजन्संपदोऽनुगुणयन्सुखैषिणाम् । योगिनां परिणमन्विमुक्तये केन नास्तु विषयः सतां प्रियः ॥ ३ ॥

## सत्यवचनप्रशंसनम् ।

सूनृतं सर्वशास्त्रार्थनिश्चितज्ञानशोभितम् । भूषणं सर्ववचसां लज्जेव कुलयोषिताम् ॥ १ ॥ अश्व-मेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २ ॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः । अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥ ३ ॥ कुर्वन्ति देवा अपि पक्ष-पातं न सज्जना वाचि कदाऽपि किञ्चित् । तथेत्यनुज्ञाय हि हन्त विन्ध्याचलोऽपि न ह्युन्नमतीति दृष्टम् ॥ ४ ॥ तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किङ्कराः कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः । पातालं बिलमस्त्रमुत्पलदलं व्यालः शृगालो विषं पीयूषं विषमं समं च वचनं यः सत्यमाभाषते ॥५ ॥ विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् । श्रेयःसंवननं समृद्धिजननं सौभाग्यसंजीवनं कीर्तेः केलिवनं प्रभावभवनं सत्यत्वपूतं वचः ॥ ६ ॥

## मिथ्यावचनगर्हणम् ।

लिङ्गिनां परमाधारो वेश्यानां परमो निधिः । वणिजां परमा नीवी मृषावादः परं मतः ॥ १ ॥ पारदारिकचौराणामस्ति काचित्प्रतिक्रिया । असत्यवादिनः पुंसः प्रतीकारो न विद्यते ॥ २ ॥ मिथ्यात्वं परमो रोगो मिथ्यात्वं परमं विषम् । मिथ्यात्वं परमः शत्रुर्नास्त्यस्मान्न परं तमः ॥ ३ ॥ नासत्यवा-दिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं कालकूटमिवाश्नतः ॥ ४ ॥ असत्यमं-प्रत्ययमूलकारणं कुवासनासद्मसमृद्धिवारणम् । विपन्निदानं परवञ्चनोर्जितं कृतापराधं कृतिभिर्विवर्जितम् ॥ ॥ ५ ॥ यशो यस्माद्भस्मीभवति वनवह्नेरिव वनं निदानं दुःखानां यदवनिरुहाणामिव जलम् । न यत्र स्याच्छायातप इव तपःसंयमकथा कथंचित्तन्मिथ्यावचनमभिधत्ते न मतिमान् ॥ ६ ॥ जिह्वैकैव सता-मुभे फणवतां स्रष्टुश्चतस्रश्च तास्ताः सप्तैव विभावसोर्नियमिताः षट्कार्तिकेयस्य च । पौलस्त्यस्य दशाभवन्फणिपतेर्जिह्वासहस्रद्वयं जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥ ७ ॥

## आत्मप्रशंसागर्हणम् ।

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् । इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥ १ ॥ न सुखं न च सौभाग्यं स्वयं स्वगुणवर्णने । यथैव च पुरंध्रीणां स्वहस्तकुचमर्दने ॥ २ ॥ यदि सन्ति गुणाः पुंसां प्रकाशन्ते तदा स्वयम् । अमी यदि च नो सन्ति शपथेऽपि न

---

१ सम्पादयन् । २ अनुकूलयन् । ३ सम्पद्यमानः । ४ भुञ्जानस्य । ५ अविश्वास- ६ चतुरः । ७ वृक्षाणाम् । ८ भुजगानाम् । ९ अग्नेः । १० शेषस्य । ११ गुणाः ।

तत्स्थितिः ॥ ३ ॥ अवज्ञातोऽपि दुष्टेन गुणो दोषो न मन्यते । नहि चम्पकसौगन्ध्यं पूतिर्भ्रङ्गावहेलया ॥ ४ ॥ स्वयं तथा न कर्तव्यं स्वगुणख्यापनं पुनः । स्वगुणख्यापनं युक्त्या परद्वारा प्रयोजयेत् ॥ ५ ॥ परैरावेद्यमानानां गुणानां महिमोज्ज्वलः । आत्मनाऽऽवेदनं व्यर्थं मेमेध्वनिरिवाविकः ॥ ६ ॥ न सौख्यसौभाग्यकरा गुणा नृणां स्वयं गृहीताः सुदृशां कुचा इव । परैर्गृहीता द्वितयं वितन्वते न तेन गृह्णन्ति निजं गुणं बुधाः ॥ ७ ॥ निजगुणगरिमा सुखाकरः स्यात्स्वयमनुवर्णयतां सतां न तावत् । निजकरकमलेन कामिनीनां कुचकलशाकलनेन को विनोदः ॥ ८ ॥

## प्रकृतिप्रशंसनम् ।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः । अतीत्य[१] हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १ ॥ किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् । भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ २ ॥ यः स्वभावो हि यस्यास्ते स नित्यं दुरतिक्रमः । श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम्[६] ॥ ३ ॥ परोपदेशकुशला दृश्यन्ते बहवो जनाः । स्वभावं येऽतिवन्ते ते सहस्रेषु दुर्लभाः ॥ ४ ॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ५ ॥ सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा । यौवने सदलंकाराः शोभां बिभ्रति सुभ्रुवः ॥ ६ ॥ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च दानं च शीलमेतद्विदुर्बुधाः ॥ ७ ॥ वृत्तं यत्नेन संरक्षेद्वित्तमायाति याति च । अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ८ ॥ यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते । एवं चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥ ९ ॥ न कुलं वृत्तहीनानां प्रमाणमिति मे मतिः । अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ १० ॥ अकुलीनः कुलीनश्च मर्यादां यो न लङ्घयेत् । धर्मापेक्षी मृदुर्दान्तः स कुलीनशतैर्वरः ॥ ११ ॥ शीलं रक्षतु मेधावी प्राप्तुमिच्छुः सुखत्रयम् । प्रशंसां वित्तलाभं च प्रेत्य स्वर्गे च मोदनम्॥ १२ ॥ विदेशेषु धनं विद्या व्यसनेषु धनं मतिः । परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ १३ ॥ रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ १४ ॥ यस्तु स्वदारसंतोषी विषयेषु विरागवान् । क्षमावान् वन्दमानेषु स एकः पुरुषोत्तमः ॥ १५ ॥ येषां शीलमहत्त्वं ते किल लोकेषु पूज्यतां यान्ति । कृष्णोऽपि सात्त्विकः श्रीपतिरीशस्तामसः स्मृतः शुक्लः ॥ १६ ॥ सीतया दुरपवादभीतया पावके स्वतनुराहुतीकृता । पावकस्तु जलतां जगाम यत्तत्र शीलमहिमा विजृम्भितः ॥ १७ ॥ शुद्धशीलमहितो हि मनुष्यः सर्वथोन्नतिमुपैति विशुद्धाम् । उज्ज्वलस्य मणिताऽप्युपलस्याभास्वरस्य पुनरस्य न यत्सा ॥ १८ ॥ वचो हि सत्यं परमं विभूषणं यथाऽङ्गनायाः कृशता कटौ तथा । द्विजस्य विद्यैव पुनस्तथा क्षमा शीलं हि सर्वस्य नरस्य भूषणम् ॥ १९ ॥ न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः । स्वभाव एवात्र तथाऽतिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ २० ॥ निम्नोन्नतं वक्ष्यति को जलानां विचित्रभावं मृगपक्षिणां च । माधुर्यमिक्षौ कटुतां च निम्बे स्वभावतः सर्वमिदं हि सिद्धम् ॥ २१ ॥

---

१ दुष्टो गन्धः । २ आकलनं स्पर्शः । ३ उल्लङ्घ्य । ४ अत्यन्तम् । ५ अतिप्रवृद्धाः । ६ पादवर्म । ७ दया । ८ सदाचारम् । ९ मतिमान् । १० मृत्वा । ११ आनन्दम् । १२ उपलस्य १३ मणिता । १४ विषमत्वम् ।

वरं विन्ध्याटव्यामनशनतृषार्तस्य[1] मरणं वरं सर्पाकीर्णे तृणपिहितकूपे[2] निपतनम् । वरं गर्तावर्ते[3] गहनजलमध्ये विलयनं न शीलाद्विभ्रंशो भवतु कुलजस्य श्रुतवतः ॥ २२ ॥ वह्निस्तस्य जलायते जलनिधिः कुल्यायते[4] तत्क्षणान्मेरुः स्वल्पशिलायते मृगपतिर्[5]व्रातः कुरङ्गायते । व्यालो[6] माल्यगुणायते विषरसः पीयूषवर्षायते यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ २३ ॥ ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ २४ ॥ काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके मूर्खः पण्डितसंगमे न रमते दासो न सिंहासने । कुस्त्री सज्जनसंगमे न रमते नीचं जनं सेवते या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ २५ ॥ शीलं सर्वगुणौघमस्तकमणिः शीलं विपक्षक्षणं शीलं भूषणमुज्ज्वलं मुनिजनैः सर्वैः समासेवितम् । दुर्वाराधिजदुःखवह्निशमने प्रावृट्पयोदोदकं शीलं सर्वसुखैककारणमतः स्यात् कस्य नो सम्मतम् ॥ २६ ॥ शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं शीलं ह्यप्रतिपाति वित्तमनघं शीलं सुगत्यावहम् ।शीलं दुर्गतिनाशनं सुविपुलं शीलं यशःपावनं शीलं निर्वृतिकारणं समुदितं शीलात् परं नेतरत् ॥ २७ ॥ व्यालव्याघ्रजलानलादिविपदस्तेषां व्रजन्ति क्षयं कल्याणानि समुल्लसन्ति विबुधाः सान्निध्यमध्यासते । कीर्तिः स्फूर्तिमियर्त्ति यात्युपचयं धर्म्मः प्रणश्यत्यघं स्वर्निर्वाणसुखानि सन्निदधते येषां स्वभावोऽमलः ॥ २८ ॥ व्याघ्रः काननमाश्रितः सुगहनं सिंहो गुहां सेवते हंसश्चाश्रयतेऽब्जिनीं कुसुमितां गृध्रः श्मशानस्थलीम् । साधुश्चार्चति साधुमेव सततं नीचोऽपि नीचं जनं या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ २९ ॥ पाण्डित्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्व्याजता सर्वस्यास्य पुनस्तथैव जगतः शीलं परं भूषणम् ॥ ३० ॥

## वाक्प्रभावः ।

तास्तु वाचः सभायोग्या याश्चित्ताकर्षणक्षमाः । स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १ ॥ यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा । परापवादसस्येभ्यश्चरन्तीं गां[7] निवारय ॥ २ ॥ वरं मौनेन नीयन्ते कोकिलैरिव वासराः । यावत्सर्वजनानन्ददायिनी गीः[8] प्रवर्त्तते ॥ ३ ॥ तुल्यवर्णच्छदैः[9] कृष्णः कोकिलैः सह संगतः । केन विज्ञायते काकः स्वयं यदि न भाषते ॥ ४ ॥ स्वजिह्वा नो वशे यस्य जल्पने भोजने तथा । स भवेद्दुःखितो नित्यमात्मनो दुष्टभाषणैः ॥ ५ ॥ हितं मितं प्रियं स्निग्धं मधुरं विमलं च यत् । भोजनं भाषणं तद्धि भुक्तमुक्तं प्रशस्यते ॥ ६ ॥ रे जिह्वे कटुकस्नेहे मधुरं किं न भाषसे । मधुरं वद कल्याणि लोको हि मधुरप्रियः ॥ ७ ॥ यदि तात धनं नास्ति पूर्वदुष्कृतकर्म्मणा । तथाऽपि ललिता वाणी सदा मोदाय योज्यताम्[10] ॥८॥ गानाब्धेस्तु[11] परं पारं नोपेयाय[12] सरस्वती । अतो निमज्जनभयात्तुम्बीं वहति[13] वक्षसि॥९॥मुखदोषेण बध्यन्ते शुकसारसतित्तिराः । बका न च निगृह्यन्ते मौनं तत्र शुभावहम् ॥१०॥ असम्भाष्यं न भाषेत भाषते यदि तत्तथा । परेषां हि समुद्वेगे नात्मनश्च शुभं

---

१ क्षुत्तृड्व्याकुलस्य । २ छन्न- । ३ सर्वथा विनाशः । ४ कृत्रिमनदीवाचरति । ५ सिंहयूथः । ६ सर्पः । ७ वाणीरूपां धेनुम् । ८ वाणी । ९ वर्णेन पक्षैश्च समः । १० प्रयुज्यताम् । ११ गान रूपसागरस्य । १२ प्राप । १३ वीणावयवभूतायास्तुम्ब्या जलतरणसाधनसाम्येनोत्प्रेक्षणम् ।

फलम् ॥ ११ ॥ नव भाग्यं विना विद्या विना विद्यां न भाषितम् । सुभाषितविहीनस्य जीवितान्मरणं वरम् ॥ १२ ॥ अर्द्धाङ्गुलपरीणाहजिह्वाग्रायासभीरवः । सर्वाङ्गीणं परिक्लेशं सहन्ते मूढबुद्धयः ॥ १३ ॥ प्रियवाक्यप्रसादेन सर्वे तुष्यन्ति जन्तवः । तस्मात्तस्यैव सेवाऽर्हा किं वृथा दुःखमर्ज्यते ॥ १४ ॥ युक्तमेव कृतं मौनं काले प्रावृषि कोकिलैः । वक्तारो दर्दुरा यत्र तत्र नष्टं सुभाषितैः ॥ १५ ॥ मांसखण्डं न सा जिह्वा या न वेत्ति सुभाषितम् । नूनं काकभयादेषा दन्तान्तार्विनिवेशिता ॥ १६ ॥ यशो धर्मो नयो दाक्ष्यं मधुरं सत्यभाषणम् । इत्यादिगुणरत्नानां सङ्ग्रही नावसीदति ॥ १७ ॥ प्रसन्नाः[1] कान्तिहारिण्यो[2] नानाश्लेष[3]विचक्षणाः । भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ १८ ॥ वर्णैः कतिपयैरेव[4] ग्रथितस्य स्वरैरिव[5] । अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥ १९ ॥ बह्वपि स्वेच्छया कामं प्रकीर्ण[6]मभिधीयते । अनुज्झितार्थसंबन्धः प्रबन्धो दुरुदाहरः ॥ २० ॥ म्रदीयसीमपि[7] घनाम[8]नल्पगुणकल्पिताम्[9] । प्रसारयन्ति कुशलाश्चित्रां[10] वाचं पटीमिव ॥ २१ ॥ सर्वालङ्कारयुक्ताऽपि[11] न श्लिष्टा[12] वनितेव सा । वाणी मनोजातसुखं[13] प्रौढानां[14] न तनोति हि ॥ २२ ॥ या कर्षति निजयोगादन्तर्गतजीवनानि[15] सरसानाम्[16] । वाणी सैव गुणवती[17] घटीव यद्वा वधूटीव[18] ॥ २३ ॥ रतिरीतिवीतवसना[19] प्रियेव शुद्धाऽपि[20] वाङ् मुदे सरसा[21] । अरसा सालङ्कृतिरपि न रोचते शालभञ्जीव[22] ॥ २४ ॥ सुखयतितरां न रक्षति परिचयलेशं गणाङ्गनेव[23] श्रीः । कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥ २५ ॥ वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नष्टः । किं तन्मन्ये कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥ २६ ॥ परपरिवादः पर्षदि न कथञ्चन धीमता प्रयोक्तव्यः । सत्यमपि न वाच्यं यदुदितमसुखावहं पुंसाम् ॥ २७ ॥ कामान्दुग्धे[24] विप्रकर्षत्य[25]लक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति । तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां[26] वाचमाहुः ॥ २८ ॥ विविक्त[27]वर्णाभरणा सुखश्रुतिः[28] प्रसादयन्ती हृदयान्यपि द्विषाम् । प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्न[29]गम्भीरपदा सरस्वती ॥ २९ ॥ मधुरभाषणतो हि शुकादयः सुमनसां रुचिरा भुवने मताः । अथ यदा सुधियोऽपि तथाविधाः कथमिवेति न वक्तुमलं वयम् ॥ ३० ॥ द्विषतामपि साधु भाषितं परिमोदं नयते कमप्यहो । सुहृदां मधुरं हितं वचः किमिवामोदयते सचेतसः ॥ ३१ ॥ केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः[30] । वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भषणम् ॥ ३२ ॥ अस्त्यद्यापि चतुः

---

१ मुदितमुखः, स्पष्टोऽर्थश्च । २ शोभया मधुरिम्णा वा रम्याः । ३ नानाश्लेष-(आलिङ्गन) विचक्षणा इति, नाना (विविध) श्लेषेत्यादि च । ४ परिगणितैः । ५ निषादादिभिः । ६ असम्बद्धम् । ७ मधुराक्षराम्, श्लक्ष्णतरां च । ८ विपुलार्थाम्, सान्द्रां च । ९ रसानुगुणमाधुर्यादियुक्ताम्, रुचिरतन्तुमयीं च । १० शब्दचित्रामर्थचित्रां च, पक्षान्तरे नानारङ्गरञ्जिताम् । ११ सर्वपदं नानापरम् । अलङ्कारपदमनुप्रासोपमाऽऽदिपरम्, कङ्कणादिपरं च । १२ श्लेषालङ्काररहिता, आलिङ्गनमप्राप्ता च । १३ मानसिकमानन्दम्, कामसुखं च । १४ सहृदयानाम्, यूनां च । १५ जीवनं प्राणः जलं च । १६ सचेतसाम्, जलपूर्णानां च । १७ प्रागल्भ्यादिशालिनी, रज्जुयुक्ता च । १८ अङ्गना । १९ रमणावसरे पतितवस्त्रा । २० अनुप्रासोपमादिहीना । २१ शृङ्गारादियुक्ता, अनुरक्ता च । २२ पुत्तली । २३ गणिका । २४ पूरयति । २५ निष्कासयति । २६ यथार्थाम् । २७ सुस्पष्टाक्षर- । शुद्धब्राह्मणादिवर्ण- । २८ सुश्रवा । २९ स्पष्टार्थत्वे सति गभीरभावा, प्रमुदिताऽलक्ष्यसञ्चारा च । ३० केशाः ।

समुद्रपरिखापर्यन्तमुर्वीतलं वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः । एकस्तत्र निरादरो भवति चेदन्यो भवेत्सादरो वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥ ३३ ॥ ये सूक्तीन्दुकलाकलङ्कजनका ये गाढगर्वज्वरा ये वा केवलतर्ककर्कशधियः साक्षाच्च ये श्रोत्रि[1]याः । ये वा द्वेषमषीमली[2]मसधियस्तान्प्राज्ञगोष्ठीरसप्रौढप्रावृड[3]वग्रहान्परिहरन्वाचां प्रसारं कुरु ॥ ३४ ॥ त[4]थ्यं पथ्यं स[5]हेतु प्रियमतिमृदुलं सारवद्दैन्यहीनं साभिप्रायं दुरा[6]पं सविनयमश[7]ठं चित्र[8]मल्पाक्षरं च । बह्वर्थं कोपशून्यं स्मितयुतघनदाक्षिण्यसंदेहहीनं वाक्यं ब्रूयाद्रसज्ञः परिषदि समये सप्रमेयाप्रमत्तम् ॥ ३५ ॥

## वाग्मिप्रशंसनम् ।

विरोधिवचसो मूकान्वागीशानपि कुर्वते । जडानप्य[9]नुलोमार्थान्प्रवाचः कृतिनां गिरः ॥ १ ॥ तीक्ष्णा नारुंतुदा बुद्धिः कर्म शान्तं प्रतापवत् । नोपतापि मनः सो[10]ष्म वागेका वाग्मि[11]नः सतः ॥ २ ॥ प्र[12]सादरम्यमोज[13]स्वि ग[14]रीयो ला[15]घवान्वितम् । सा[16]काङ्क्ष[17]मनुपस्कारं वि[18]ष्वग्गति निरा[19]कुलम् ॥ ३ ॥ न्या[20]यनिर्णीतसारत्वान्निरपेक्षमिवागमे । अ[21]प्रकम्प्यतयाऽन्येषामा[22]म्नायवचनोपमम् ॥ ४ ॥ अलङ्घ्यत्वाज्जनैरन्यैः क्षु[23]भितोदन्वदूर्जितम् । औदा[24]र्यादर्थसंपत्तेः शान्तं चित्तमृषेरिव ॥ ५ ॥ इदमीदृग्गुणोपेतं लब्धावसरसाधनम् । व्या[25]कुर्यात्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥ ६ ॥ श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः । व[26]ल्गितं वा[27]वदूकस्य कृतिनः किं न शोभते ॥ ७ ॥ अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी । बहुवचनमल्पसारं यः कथयति विप्रलापी सः ॥ ८ ॥ शुद्धकांस्यरचिताऽपि लालिता जि[28]ह्वया यदि न योजिता भवेत् । किं तया करणमस्ति घण्टया जिह्वया जनि[29]मतां हि पूज्यया ॥ ९ ॥ भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये । नयन्ति तेष्वप्युपप[30]न्ननैपुणा गभीरमर्थं कतिचित्प्रकाशताम् ॥ १० ॥ स्तुवन्ति गुर्वीमभिधे[31]यसंपदं विशुद्धिमुक्तेरपरे विपश्चितः । इति स्थितायां प्रतिपूरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः ॥ ११ ॥ पिकः[32] स्तावत्कृष्णः परमरुणया पश्यति दृशा परापत्यद्वेषी स्वसुतमपि नो पालयति यः । तथाऽप्येषोऽमीषां सकलजगतां वल्लभतमो न दोषा गण्यन्ते खलु मधुरवाचां कचिदपि ॥ १२ ॥ आस्वाद्यैष कषायमङ्कुरमुरुप्रेमानुबद्धाशयो माकन्द[33]स्य यशांसि कोकिलयुवा निर्माति दिग्भित्तिषु । मा[34]ध्वीकानि निपीय तस्य मधुपास्तत्रैव गुञ्जन्त्यमी को ब्रूतामसतां सतां च वचसां वर्त्मा[35]तिगं चेष्टितम् ॥ १३ ॥ श्रोतॄन्मूकयति ब्रुवन्स्थिरतमं कुर्वन्नमीषां मनो निर्बाष्पः परबाष्पकृत्परदशामेकाश्रयो नान्यदृक् । यस्त्यक्ताङ्गविकम्पनः प्रचलयन्नित्थं सतां मस्तकं क्षीरं श्रोतृषु मुख्यमात्मनि गुणं धत्ते स वक्तोत्तमः ॥ ॥ १४ ॥ तद्वक्ता सदसि ब्रवीतु वचनं यच्छृण्वतां चेतसः प्रोल्लासं रसपूरणं श्रवणयोरक्ष्णोर्विकासश्रियम् । क्षुन्निद्राश्रमदुःखकालगतिहृत्कार्यान्तरप्रस्मृतिं प्रोत्कण्ठामनिशं श्रुतौ वितनुते शोकं विरामादपि ॥ १५ ॥

---

१ मीमांसकाः। २ मलिन-। ३ अवग्रहः वृष्टिप्रतिबन्धको दोषविशेषः। ४ सत्यम् । ५ युक्तियुक्तम् । ६ दुर्लभम् । ७ धृष्टत्वाप्रत्यायकम् । ८ शब्दचित्रमर्थचित्रं वा । ९ अनुकूलार्थान् । १० अभिमानोष्मपूर्णम् । ११ मधुरभाषणपटोः। १२प्रसिद्धार्थपदरम्यम् ।१३ दीनताऽप्रत्यायकम् । १४ सार्थकम् । १५परिमितम् । १६ अपेक्षितार्थम् । १७ पदान्तरापेक्षाशून्यम् । १८अनेकतात्पर्यकम् । १९ निराक्षेपम् ।२० युक्ति-।.२१ हेत्वाभासाद्यदूष्यतया । २२-वेद-। २३ क्षुब्ध-।२४ अलुब्धत्वात्, अग्राम्यार्थत्वाच्च । २५ व्याहरेत् । २६ भाषणम् । २७ प्रतिवादिनः । २८ घण्टाजिह्वया । २९ जन्मवतां, प्राणिनामिति भावः । ३० अवसरे प्रस्फुरद्बुद्धयः । ३१ अभिधेयो वाच्योऽर्थः । ३२ कोकिलः । ३३ आम्रस्य । ३४ मधूकपुष्पाणि, लक्षणया तद्रसान् । ३५ वक्तुमशक्यम् ।

## बुद्धिप्रशंसनम् ।

न धनं न च शास्त्रं च न सैन्यं न सुहृद्बलम् । तथाऽपि महती येषां बुद्धिस्ते बलवत्तराः ॥ १ ॥ येषां बुद्धिबलं नास्ति नास्ति विद्याबलं तथा । वपुषैव मताः स्थूलास्ते धराभारधायकाः ॥ २ ॥ बुद्धिर्येषां संप्रभूतप्रकर्षा तेऽमी धन्याः सिद्धिभाजश्च कार्ये । अन्ये भूयो हन्त पाषाणकल्पाः किञ्चित् कार्यं नैव कर्त्तुं समर्थाः ॥ ३ ॥ चाणक्यविप्रो नवनन्दवंशं प्रवृद्धसाम्राज्यमहाप्रभावम् । समूलघातं सहसा जघान बुद्धिप्रभावो यदि दुष्करं किम् ॥ ४ ॥ बध्नन्ति सिंहान् रमयन्ति सर्पान् दन्तावलान्निर्मदयन्ति कामम् । श्रयन्ति साम्राज्यपदप्रभुत्वं बुद्धिप्रभावैकसमेधितार्थाः ॥ ५ ॥

## मौनप्रशंसनम् ।

वाचालस्य हि बन्धाय गुणोऽपि प्रभवत्यहो । कीरा रटन्तो बध्यन्ते न तु मौनव्रता बकाः ॥ १ ॥ स्वर्गमप्यधिकुर्वन्ति येषां मौनव्रतं दृढम् । अन्ये तु पटहायन्ते ताडनेनेव नादिनः ॥ २ ॥ रूपवांश्चापि मूर्खोऽपि गत्वा च विपुलां सभाम् । संरक्षेच्च स्वकां जिह्वां भार्यां दुश्चारिणीं यथा ॥ ३ ॥ स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः । विशेषतः सर्वविदा समाजे विभूषणं मौनमपण्डितानाम् ॥ ४ ॥ कोलाहले काककुलस्य जाते विराजते कोकिलकूजितं किम् । परस्परं संवदतां खलानां मौनं विधेयं सततं सुधीभिः ॥ ५ ॥

## आवासप्रभावः ।

नक्रः[1] स्वस्थानमासाद्य गजेन्द्रमपि कर्षति । स एव प्रच्युतः स्थानाच्छुनाऽपि परिभूयते ॥ १ ॥ किंचिदाश्रयसंयोगाद्धत्ते शोभामसाध्वपि । कान्ताविलोचने न्यस्तं मलीमसमिवाञ्जनम् ॥ २ ॥ कुस्थानस्य प्रवेशेन गुणवानपि पीड्यते । वैश्वानरोऽपि लोहस्थः कारुकैर्[3]अभिहन्यते ॥ ३ ॥ पदस्थितस्य[4] पद्मस्य मित्रे वरुणभास्करौ । पदच्युतस्य तस्यैव क्लेशदाहकरावुभौ ॥ ४ ॥ राजा कुलवधूर्विप्रा मन्त्रिणश्च पयोधराः । स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नरा नखाः ॥ ५ ॥ स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः । इति विज्ञाय मतिमान्स्वस्थानं न परित्यजेत् ॥ ६ ॥ निसर्गमधुरं क्षीरं विषायितमहिं गतम् । तदेव मुनिमासाद्य सुधारूपं विराजते ॥ ७ ॥ पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः । जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ८ ॥ अतिमात्रभास्वरत्वं पुष्यति भानोः परिग्रहादनलः । अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ ९ ॥ प्रायो यत्किंचिदपि प्राप्नोत्युत्कर्षमाश्रयान्महतः । मत्तेभकुम्भतटगतमेति शृङ्गारतां भस्म ॥ १० ॥ अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ ११ ॥ आश्रयवशेन सततं गुरुता लघुता च जायते जन्तोः । विन्ध्ये[6] विन्ध्यसमानाः करिणो बत दर्पणे लघवः ॥ १२ जानामि नागेन्द्र तव प्रभावं कण्ठे स्थितो गर्जसि शङ्करस्य । स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि शूरः ॥ १३ ॥ उभौ श्वेतौ पक्षौ चरति गगनेऽवारितगतिः सदा मीनं[7] भुङ्क्ते वसति सकलः स्थाणुशिरसि । बके चान्द्रः सर्वो गुणसमुदयः किंचिदधिको गुणाः स्थाने मान्या नरवर न तु स्थानरहिताः ॥

---

१ ग्राहः । २ कुक्कुरेण । ३ लोहकारैः । ४ जलरूपस्थान- । ५ कौशलम् । ६ एतदाख्ये पर्वते । ७ मत्स्यम्, राशिविशेषं च । ८ शैलादि- । शङ्कर- ।

॥ १४ ॥ सिंहक्षुण्णकरीन्द्रकुम्भगलितं रक्ताक्तमुक्ताफलं कान्तारे बदरीधिया द्रुतमगाद्भिल्लस्य पत्नी मुदा । पाणिभ्यामवगुह्य शुक्लकठिनं तद्वीक्ष्य दूरे जहावस्थाने पततामतीव महतामेतादृशी स्याद्गतिः ॥ १५ ॥

## साधुसङ्गप्रशंसनम् ।

अनुरूपेण संसर्गं प्राप्य सर्वोऽपि मोदते । दिनं तेजोनिधिर्यद्वद्रात्रिं दोषाकरस्तथा ॥ १ ॥ साधुसङ्गमवाप्तानां सर्वेषां महिमैधते । ग्रामीणां प्राप्य हीरश्रीरपि काचायते बत ॥ २ ॥ महानुभावसंसर्गः कस्य नोन्नतिकारकः । रथ्याम्बु जाह्नवीसङ्गात्त्रिदशैरपि वन्द्यते ॥ ३ ॥ महाजनस्य संसर्गः कस्य नोन्नतिकारकः । पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ ४ ॥ महानुभावसंसर्गः कस्य नोन्नतिकारकः । हरिहस्तगतः शङ्खः पवित्रः प्रथितो भुवि ॥ ५ ॥ मलयाचलगन्धेन त्विन्धनं चन्दनायते । तथा सज्जनसङ्गेन दुर्जनः सज्जनायते ॥ ६ ॥ वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियाः । पिबत्यनार्यसंयोगाद्रक्तं नक्तंचरी यथा॥ ७ ॥चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः । चन्द्रमश्चन्दनाभ्यां च शीतला साधुसंगतिः ॥ ८ ॥ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः । कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ ९ ॥ करोति निर्मलाधारस्तुच्छस्यापि महार्घताम् । अम्बुनो बिन्दुरब्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ १० ॥ हीयते हि मतिस्तात हीनैः सह समागमात् । समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ११ ॥ मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः । पङ्कच्छिदः फलस्येव निकर्षेणाविलं पयः ॥१२॥ कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः । अश्माऽपि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ १३ ॥ काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः । तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ १४ ॥ यथोदयगिरौ द्रव्यं संनिकर्षेण दीप्यते । तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते ॥ १५ ॥ भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः । कस्य नानन्दनिष्यन्दं विदधाति सदागमः ॥ १६ ॥ यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि । अथ दुर्जनसंसर्गे पतिष्यसि पतिष्यसि ॥ १७ ॥ अलब्ध्वाऽपि धनं राज्ञः संश्रिता यान्ति संपदम् । महाह्रदसमीपस्थं पश्य नीलं वनस्पतिम् ॥ १८ ॥ यमजन्मप्रदे सूर्ये तापकत्त्वं हि साम्प्रतम् ।द्विजराजे कलासिन्धौ सुधावर्षित्वमिष्यते॥ १९॥ पादगाऽपि सुधा पेया द्विजेन्द्रस्य कलानिधेः । भुजगादो द्विजेन्द्रस्य सुमनोभिर्न सा करे ॥ २० ॥ पतत्येव शिरःस्थाऽपि गङ्गा हन्त कपालिनः । सा विश्वम्भरपादाभ्यां प्रभावं प्रतिपद्यते ॥ २१ ॥ गुणा अपि न मोदाय यदा दुर्जनसङ्गताः । मणिमत्ताऽपि सर्पस्था मुमूर्षूनान्तरेष्यते॥२२॥आलस्यमपि पारीन्द्रं प्रतिपद्य विजृम्भते । हतभाग्ये प्रयत्नोऽपि प्रतिहन्यत एव हा॥२३॥सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स सद्भिः

---

१ कतकस्य । २ कलुषितम् । ३ जलम् । ४ पुष्प- । सहृदय- । ५ पाषाणः । ६ मरकतमणिसम्बन्धिनीः । ७ भोगमोक्षप्रदः । ८ सिद्धान्त- । रहःस्थल- । ९ सन् आगमो वेदः, सतः साधुजनस्य आगमश्च । १० युक्तम् । ११ विप्रवर्ये, चन्द्रे च । १२ कलानां विद्यानां श्रुतिविच्छेदविशेषाणां च सिन्धौ । १३ चरण- । किरण- । १४ चन्द्रस्य, पक्षिराजस्य च । १५ भुजगग्राहिणः, भुजगभक्षकस्य च । १६ सज्जनैः, देवैश्च । १७ सुधा । देवान् विजित्य गरुडेन सुधाकुम्भः प्रहृत्य गृहीत इति पौराणिकाः । १८ कपालभृत्त्वेनापवित्रस्य शङ्करस्य च । १९ उत्कर्षं जन्म च । २० सिंहम् ।

सह कर्तव्यः सन्तः सङ्गस्य भेषजम् ॥ २४ ॥ क्षुद्रोऽपि तनुते तात तेजस्तेजस्विसङ्गतः । अर्कसंपर्कतः पश्य दर्पणे दहनद्युतिम् ॥ २५ ॥ संसारावासखिन्नानां तिस्रो विश्रमभूमयः । सत्पुत्रश्च सती भार्या सतां सङ्गम एव वा ॥ २६ ॥ विद्यासङ्गाद्भोगमोक्षौ सर्वेषां सुलभौ नृणाम् । सत्प्रसङ्गाद्यथा मोहहानिबोधोदयौ भुवि ॥ २७ ॥ बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति । संभूयाम्भोधिमभ्येति महानद्या नगापगाः ॥ २८ ॥ सुमनःसङ्गमासाद्य पाषाणोऽप्यमरायते । असत्तां द्वत्ते दुष्टं धर्मो दिव्योऽपि संगतः ॥ २९ ॥ भूमिष्ठा अपि मोदन्ते कलानिध्यमृतश्रिया । जलध्यमृतसम्पत्त्या विषण्णा देवता अपि ॥ ३० ॥ सङ्गतिर्यादृशी तादृक्ख्यातिरायाति वस्तुनः । रजनिर्ज्योत्स्नया ज्यौत्स्नी तमसा च तमस्विनी ॥३१॥ लोकरूढिरिह प्रौढिरस्तु वस्तु यथा तथा । दधि मङ्गलधौरेयं न पुनर्दुग्धमप्यधुः ॥ ३२ ॥ क्षणादसारं सारञ्च वस्तु लोकैः परीक्ष्यते । निश्चिनोति मरुत्तूर्णं तुलोच्चयशिलोच्चयौ ॥३३॥ सज्जनसङ्गो मा भूद्यदि सङ्गो मास्तु तत्पुनः स्नेहः । स्नेहो यदि मा विरहो यदि विरहो माऽस्तु जीवितस्याशा ॥ ३४॥ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ ३५ ॥ गुरुरपि लघूपनीतो न निमज्जति नियतमाश्रये निहितः । वानरकरोपनीतः शैलो मकरालयस्येव ॥ ३६ ॥ नीचोऽपि परिगृहीतो महात्मभिः परमुपैति परभागम् । स्फटिकोऽपि रक्तकुसुमैः कुशलैर्माणिक्यमनुकुरुते॥३७॥उन्नतघनमध्यगतं निर्गुणमपि सुरधनुः शोभाम् । तेन महद्भिः साकं संवासः प्रार्थ्यते विज्ञैः ॥ ३८ ॥ महिमानं महीयांसं सूते सङ्गो महात्मनाम् । मन्दाकिन्या मृदो वन्द्यास्त्रिवेदीवेदिनामपि ॥ ३९ ॥ इह भुवि कलयति लघुरपि महतां सङ्गेन कमपि महिमानम् । लङ्घयति चन्द्रलीनो नभस्तलं हेलया हरिणः ॥ ४० ॥ गवाशनानां स शृणोति वाक्यमहं हि राजन् वचनं मुनीनाम् । न चास्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्ति ॥ ४१ ॥ कल्पद्रुमः कल्पितमेव सूते सा कामधुक्कामितमेव दोग्धि । चिन्तामणिश्चिन्तितमेव दत्ते सतां हि सङ्गः सकलं प्रसूते ॥ ४२ ॥ असज्जनः सज्जनसङ्गिसङ्गात्करोति दुःसाध्यमपीह साध्यम् । पुष्पाश्रयाच्छंभुशिरोऽधिरूढा पिपीलिका चुम्बति चन्द्रबिम्बम् ॥ ४३ ॥ शाखोटकैश्चन्दनसंगतोऽपि वक्षोजयोः क्रीडितमायताक्ष्याः । पयोऽपि मद्यं श्वपचे हि मन्यते संसर्गजा दोषगुणा भवन्ति ॥ ४४ ॥ सत्सङ्गाद्भवति हि साधुता खलानां साधूनां नहि खलसंगमात्खलत्वम् ।आमोदं कुसुमभवं मृदेव धत्ते मृद्गन्धं नहि कुसुमानि धारयन्ति ॥ ४५ ॥ किं वाऽपरेण बहुना परिजल्पितेन संसर्ग एव महतां महते फलाय । अम्भोनिधेस्तटरुहास्तरवोऽपि येन वेलाजलोच्छलितरत्नकृतालवालाः ॥ ४६ ॥ जाड्यं धियो हरति सिञ्चति वाचि सत्यं मानोन्नतिं दिशति पापमपाकरोति । चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्संगतिः कथय किं न करोति पुंसाम् ॥ ४७ ॥ दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरंतनमघं चुलुकीकरोति । भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥ ४८ ॥ एकं हि चक्षुरमलं सहजो विवेकस्तद्वद्भिरेव सह संवसतिर्द्वितीयम् । एतद्द्वयं भुवि न यस्य स तत्त्वतोऽन्धस्तस्येतरत्र चलते बत कः सहायः ॥ ४९ ॥ कान्तारभूमिरुहमौलिनिवासशीलाः प्रायः पलायनपरा जन-

---

१ अतितुच्छोऽपि । २ पुष्प- । मन्त्रज्ञ- । ३ देववदाचरति । ४ दुष्टं सङ्गतः ( प्राप्तः ) इत्यन्वयः । ५ जलधेः जडधियश्चामृतसम्पत्त्या । ६ अन्तःकरणे । मध्ये च । ७ सहवासः सङ्ग इति यावत् । ८ यवनानाम् । यवनगृहगं शुकं प्रति साधुगृहस्थस्य शुकस्येयमुक्तिः । ९ कामधेनुः १० चाण्डाले । ११ सौरभम् । १२ वितरति । १३ पापम् । १४ विवेकवद्भिः । १५ पक्षिणः

वीक्षणेन । कूजन्ति तेऽपि हि शुकाः खलु रामनाम सङ्गः स्वभावपरिवर्तविधौ निदानम् ॥ ९० ॥ विदलयति कुबोधं बोधयत्यागमार्थं सुगतिकुगतिहेतू पुण्यपापे व्यनक्ति । अवगमयति कृत्याकृत्यभेदं च शीघ्रं स जयति परमेकः सज्जनानां प्रसङ्गः ॥ ९१ ॥ एके केचिद्यतिकरगताः पात्रसंज्ञां लभन्ते गायन्त्यन्ये सरसमधुरं वीणया संप्रयुक्ताः । एके तेषां सहगतिवशाद्दुस्तरं तारयन्ति केचित्तेषां ज्वलितहृदया रक्तमेवापिबन्ति ॥ ९२ ॥ संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ९३ ॥ गङ्गेवाघविनाशिनी जनमनःसंतोषसच्चन्द्रिका तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानान्धकारावहा । छायेवाखिलतापनाशनकरी स्वर्धेनुवत्कामदा पुण्यैरेव हि लभ्यते सुकृतिभिः सत्संगतिर्दुर्लभा ॥ ९४ ॥ कीर्तिर्नृत्यति नर्तकीव भुवने विद्योतते साधुता ज्योत्स्नेव प्रतिभा सभासु सरसा गङ्गेव संमीलति । चित्तं रञ्जयति प्रियेव सततं संपत्प्रसादोचिता संगत्या न भवेत्सतां किल भवेत्किं किं न लोकोत्तरम् ॥ ९५ ॥ बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् । विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कलाकौशलं किं किं नारभते हरेरिव कथाऽजय्यं सतां संगतम् ॥ ९६ ॥ आस्तां तावद्दिगन्तप्रथितसुयशसां सङ्गमः सज्जनानां तैः साकं वैरयोगोऽप्यतिशयमहितामुन्नतिं सन्निधत्ते । लोके कस्यागमिष्यच्छ्रुतिपथमवपुर्वक्त्रशेषोऽपि राहुस्त्रैलोक्यख्यातधाम्नोर्यदि रविशशिनोर्वैरितां नाकरिष्यत् ॥ ९७ ॥

## असाधुसङ्गगर्हणम् ।

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे । पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ १ ॥ स्पृशन्ति भर्तुः प्रायेण स्वभावमनुजीविनः । लवणोदन्वतस्तीरभुवोऽपि क्षारकुक्षयः ॥ २ ॥ कुसङ्गेन मतिह्रासः प्रमादस्तत्प्रभावतः । प्रवृद्धे तु प्रमादेऽत्र पातित्यं सर्वतोमुखम् ॥ ३ ॥ कुसङ्गतेः कुबुद्धिः स्यात्कुबुद्धेश्च कुचेष्टितम् । कुचेष्टातो भवेत्प्राणी विपदां भाजनं पुनः ॥ ४ ॥ तेजोमयोऽपि पूज्योऽपि घातिना नीचधातुना । लोहेनोपासितो वह्निः सहते घनताडनम् ॥ ५ ॥ सर्वथा नष्टनैकट्यं विपदे वृत्तशालिनाम् । वारिहारिघटीपार्श्वे ताड्यते [1]पश्य झल्लरी ॥ ६ ॥ वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः समम् । न तु दुष्टाश्रयो [2]रक्षोदोषाद्बद्धो महोदधिः ॥ ७ ॥ महतामपि दुःसङ्गात् कालुष्यमुपपद्यते । दहनस्य प्रसङ्गेन घनसारस्य[3] भस्मता ॥ ८ ॥ सतां सेव्योऽपि दुष्टस्य प्रसङ्गेन न शस्यते । यमस्य धर्मराजत्वमपि कस्यास्तु वाञ्छितम् ॥ ९ ॥ स्वच्छसङ्गो विशेषेण दोषाय कलुषात्मनाम् । किं न पानीयसंसर्गादयः कालुष्यसङ्कुलम् ॥ १० ॥ गुणोऽपि प्राणघाताय दुष्टसङ्गप्रभावतः । सुरम्यत्वमपि प्राप्य खड्गसङ्गं निहन्ति यत् ॥ ११ ॥ अन्तर्मलिनसंसर्गाच्छ्रुतवानपि दुष्यति । यच्चक्षुःसंनिकर्षेण कर्णोऽभूत्कुटिलाश्रयः ॥ १२ ॥ दुष्टतां दुष्टसंसर्गाददुष्टमपि गच्छति । सुराबिन्दुनिपातेन पञ्चगव्यघटी यथा ॥ १३ ॥ अणुरप्यसतां सङ्गः सद्गुणं हन्ति विस्तृतम् । गुणरूपान्तरं याति तक्रयोगाद्यथा पयः ॥ १४ ॥ दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये । किं नाम खलसंसर्गः कुरुते माशहेतुकम् । १५ ॥ आनन्दमृगदावाग्निः शीलशाखिमदद्विपः । ज्ञानदीपमहावायुरयं खलसमागमः ॥ १६ ॥ असत्सङ्गाद्गुणज्ञोऽपि विषयासक्तमानसः ।

---

[1] तुम्बीविशेषाः । [2] कामधेनु- । [3] रावण- । [4] कर्पूरस्य, अतिघनस्य च । [5] गोमूत्रगोमयगोघृतगोपयोगो पदधिपूर्णं पात्रम् । [6] दुग्धम् ।

अकस्मात्प्रलयं याति गीतरक्तो मृगो यथा ॥ १७ ॥ आहत्य रक्ष्यमाणाऽपि यत्नेनान्तर्विरागिणी । असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा ॥ १८ ॥ पात्रमपात्रीकुरुते दहति गुणं स्नेहमाशु नाशयति । अमले मलं नियच्छति दीपज्वालेव खलमैत्री ॥ १९ ॥ दुर्जनजनसंसर्गात्सज्जनपुरुषोऽत्र दोषमायाति । रावणकृतापराधाज्जलधेरपि बन्धनं प्राप्तम् ॥ २० ॥ संगतिं स्वविपरीतगुणैस्त्वं मा कृथाः खलु सखे समयेऽस्मिन् । पश्य पूर्वमपि कृष्णरूपतामर्जुनोऽपि समवाप निश्चितम् ॥२१॥ दुर्वृत्तसंगतिरनर्थपरम्पराया हेतुः सतां भवति किं वचनीयमत्र । लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥ २२ ॥ हंसोऽध्वगः श्रममपोहयितुं दिनान्ते कारण्डकाकबककोककुलं प्रविष्टः । मूकोऽयमित्युपहसन्ति लुनन्ति पक्षान्नीचाश्रयो हि महतामपमानहेतुः ॥ २३ ॥ धर्मस्नेहमपाकरोति तनुते पापस्पृहां मानसे मूढत्वं प्रथयत्यनर्थलतिकामूलं नयत्यास्थितिम् । विद्यां नाशयते सुखं च हरते सम्मानमस्यत्ययं वैमुख्यं नयते मतिं क्षपयते सङ्गः खलानां नृणाम् ॥ २४ ॥

## प्रेमप्रशंसनम् ।

सखि सौहजिकं प्रेम दूरादपि विराजते । चकोरीनयनद्वन्द्वमानन्दयति चन्द्रमाः ॥ १ ॥ तन्मयत्वं न यावत्स्यात्तावत्प्रेमविडम्बना । न ह्यग्निमयताऽलाभे लोहदाहकतेष्यते ॥ २ ॥ चित्तं यावन्न लीयेत वस्तुनीष्टे तदात्मना । प्रेमाख्या कृत्रिमा तावद्गणिकादारयोरिव ॥ ३ ॥ ग्रसति चकोरोऽङ्गारं सुहृदिन्दोर्दर्शनप्रमत्तोऽयम् । सोऽपि स्वहस्तसुधया लिम्पति रक्षति च तं सुमनाः ॥ ४ ॥ जागरणे शयने वा शोके हर्षे गतौ स्थितौ वाऽपि । येषामेकाऽवस्था ते धन्याः प्रेम चाप्येषाम् ॥ ५ ॥केन्दोर्मण्डलमम्बुधिः क च रविः पद्माकरः क स्थितः काभ्राः सन्ति मयूरपङ्क्तिरमला काऽलिः क वा मालती । केदं प्रस्थितहंसवृन्दकमथो क्वादः सरो मानसं यो यस्याभिमतः स तस्य निकटे दूरेऽपि सन्वल्लभः ॥ ६ ॥

## सुहृत्प्रशंसनम् ।

किं गुणैस्तस्य कर्त्तव्यं चेतसे योऽभिरोचते । किं गुणैस्तस्य कर्त्तव्यं चेतसे यो न रोचते ॥ १ ॥ अलुब्धैः सह सौहार्दं पण्डितैः सह सङ्कथा । उत्तमैः सह सङ्गश्च विधेयाः सुखमिच्छता ॥ २ ॥ प्रत्यक्षे च परोऽक्षे च हितानुष्ठानतत्परः । नान्यथा जातु कोपेऽपि स सखा स्वजनश्च सः ॥ ३ ॥ कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥ ४ ॥ यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुङ्क्ते ततो नास्तीह पुण्यवान् ॥ ५ ॥ शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः । दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ६ ॥ अन्यथैव हि सौहार्दं भवेत्स्वच्छान्तरात्मनः । प्रवर्ततेऽन्यथा वाणी शाठ्योपहतचेतसः ॥ ७ ॥ उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ८ ॥ स बन्धुर्यो विपन्नानामापदुद्धरणे क्षमः । न तु भीतपरित्राणवस्तूपालम्भपण्डितः ॥ ९ ॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ १० ॥ याचते कार्यकाले यः स किंभृत्यः स किंसुहृत् ।

---

१ सूत्रम्, विनयादिं च । २ तैलादिम्, प्रीतिं च । ३ कज्जलरूपम्, दोषं च । ४ गाण्डवीः, श्वेतवर्णश्च । ५ जन्मतः सिद्धम् । ६ अन्योन्यनालापः । ७ शुद्धान्तःकरणत्वम् । ८ दातृत्वम् । ९ समत्वम् । १० ऋजुत्वम् । ११ अनुरागः । १२ प्रेम ।

अकार्यकार्यकर्ता यस्त्वनादिष्टोऽप्यसौ सुहृत् ॥ ११ ॥ तदेवास्य परं मित्रं यत्र संक्रामति द्वयम् । दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ १२ ॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्य च । नरस्य शोकदग्धस्य सुहृद्दर्शनमौषधम् ॥ १३ ॥ दर्शने स्पर्शने वाऽपि श्रवणे भाषणेऽपि वा । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥ १४ ॥ दूरस्थोऽपि न दूरस्थो यो वै मनसि वर्तते । हृदयादथ निष्क्रान्तः समीपस्थोऽपि दूरगः ॥ १५ ॥ अमृतं शिशिरे वह्निरमृतं क्षीरभोजनम् । अमृतं राजसम्मानममृतं प्रियसङ्गमः ॥ १६ ॥ ययोर्मनसि चेत्स्नेहस्तयोर्दूरस्थयोरपि । स न मन्दायते जातु रविराजीवयोरिव ॥ १७ ॥ स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते । तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ १८ ॥ न मातरि न दारेषु न सोदर्ये न चात्मनि । विश्वासस्तादृशः पुंसो यादृङ् मित्रे स्वभावजे ॥ १९ ॥ शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २० ॥ उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयन्समृद्धीनां फलं सुहृदनुग्रहम् ॥ २१ ॥ नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् । कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥२२॥ प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम् । आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतम् ॥ २३ ॥ ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं मित्रलक्षणम् ॥ २४ ॥ नयने च करौ कर्म हृदयं चापि भाषणम् । ययोरेकार्थरूपाणि तयोरेवास्ति मित्रता ॥ २५ ॥ पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति । आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ २६ ॥ मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् । ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलास्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥ २७ ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ २८ ॥ अस्माभिश्चतुरम्बुराशिरशनाविच्छेदिनीं मेदिनीं भ्राम्यद्भिर्न स कोऽपि निस्तुषगुणो दृष्टो विशिष्टो जनः । यस्याग्रे चिरसंहृतानि हृदये दुःखानि सौख्यानि च व्याख्याय प्रियमन्तरेण पुरुषो मोदेत जातु क्षणम् ॥२९॥ मृगा मृगैः सङ्गमुपाश्रयन्ते गावश्च गोभिस्तुरगास्तुरङ्गैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ ३० ॥ प्रकटयति हृदयदाहं पुरुषः प्रायेण सङ्गते सुहृदि । ग्रावा दग्धः सलिले पतिते पुनरुद्वमत्यनलम् ॥ ३१ ॥ क्व सरसि वनखण्डे पङ्कजानां क्व सूर्यः क्व च कुमुदवनानां कौमुदीबन्धुरेषः चिरपरिचयबद्धा प्रायशः सज्जनानां नहि विचलति मैत्री दूरतोऽपि स्थितानाम् ॥ ३२ ॥ सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियाजने रक्ते । स्वामिनि च प्रेमभृते निवेद्य दुःखं निराक्रियते ॥ ३३ ॥

## दुर्हृद्गर्हणम् ।

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् । वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १ ॥ रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता । क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥ २ ॥ खलयोः सङ्गमे ज्वाला हन्त चण्डायतेतराम् । दर्पणस्य च सूर्यस्य साम्मुख्ये हि न शान्तता ॥ ३ ॥

---

१ निष्कारणहितसम्पादकः । २ अन्तःकरणम् । ३ विश्वास- । ४ अग्नौ ।

## विश्वनिदर्शनम् ।

विश्वेऽस्मिन्स्वमिति भ्रान्तिरित्येतां दूरतस्त्यजेत् । वैचित्र्यं नात्र किमपि प्रकृतेर्विकृतिं विना ॥ १ ॥ संसार तव निस्तारपदवी न दवीयसी । अन्तरा दुस्तरा न स्युर्यदि ते मदिरेक्षणाः ॥ २ ॥ संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे । काव्यामृतरसास्वाद आलापः सज्जनैः सह ॥ ३ ॥ दुःखाङ्गारकतीव्रः संसारोऽयं महानसो गहनः । इह विषयामृतलालस मानसमार्जार मा निपत ॥ ४ ॥ अयमविचारितचारुतया संसारो भाति रमणीयः । अत्र पुनः परमार्थदृशा न किमपि सारमणीयः ॥ ५ ॥ क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः क्वचिद्वीणानादः क्वचिदपि च हाहेति रुदितम् । क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनुर्न जाने संसारः किममृतमयः किं विषमयः ॥ ६ ॥ कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भगर्ते कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः । नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं स्तोकमप्यस्ति किंचित् ॥ ७ ॥

## सद्गृहस्थाश्रमप्रशंसनम् ।

ऋणमाद्यं निराकृत्य निराकर्तुमृणान्तरम् । प्रतिष्ठा राजते यस्य गृहस्थाश्रम एव सः ॥ १ ॥ गृहस्थाश्रममाश्रित्य कल्पद्रुममिवाखिलाः । ऐहिकामुष्मिकान् सर्वान्भुञ्जतेऽर्थान् महाधियः ॥ २ ॥ न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ ३ ॥ यदि रामा[५] यदि च रमा[६] यदि तनयो विनयधीगुणोपेतः । तनयात्तनयोत्पत्तिः सुरवरनगरे[७] किमाधिक्यम् ॥ ४ ॥ सविप्रपादोदककर्दमानि सवेदशास्त्रध्वनिगर्जितानि । स्वाहास्वधाकारनिरन्तराणि स्वानन्दतुल्यानि गृहाणि तानि ॥ ५ ॥ सानन्दं सदनं[८] सुताश्च सुधियः कान्ता न दुर्भाषिणी सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः । आतिथ्यं शिवपूजनं प्रतिदिनं मृष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ ६ ॥ मानुष्यं वरवंशजन्म विभवो दीर्घायुरारोग्यकं सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे । विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रतिस्ते पुण्येन विना त्रयोदश गुणाः संसारिणां दुर्लभाः ॥७॥ वंशो विश्वावतंसो जनुरनुपहतं[९] स्वान्तमौन्नत्यकान्तं[१०] लीलाशीलानुकूला क्षपितकलिमला काऽपि विद्याऽनवद्या[११] । वाणी वेणी गुणानां समधिकयशसां सौधिका[१२] साधिका[१३] श्रीः श्रीमद्गौरीमयूरीमुदिर पुरहर त्वत्कृपाया विपाकः[१४] ॥ ८ ॥

## असद्गृहस्थाश्रमगर्हणम् ।

अस्फुरद्गुणमाहात्म्यं कलिसाम्राज्यसम्भृतम् । दारिद्र्यायतनं धिग्धिग्गृहस्थाश्रमिणां स्थितम् ॥ १ ॥ अतिथीनां न सत्कारो न च सज्जनसङ्गमः । न यत्र स्वात्मवर्णास्था सा गृहाश्रमवञ्चना ॥ २ ॥ दुष्करेष्वपि कार्येषु विषीदन्ति प्रवृत्य ये । तादृशां नष्टबुद्धीनां धिग्गार्हस्थ्यं हतश्रियाम् ॥ ३ ॥ यत्र नास्ति दधिमन्थनघोषो यत्र नो लघुलघूनि शिशूनि । यत्र नास्ति गुरुगौरवपूजा तानि किं बत

---

१ अतिदूरेस्थिता । २पाचनस्थानम् ।३अपवित्रविष्ठादि- ।४तिरस्कारः।५ सुन्दरी ।६लक्ष्मीः। ७ स्वर्गे । ८ गृहम् । ९ जन्म । १० चित्तम् । ११ निर्दोषा । १२ सप्रमाणा । १३ सम्पादनकर्त्री । १४ फलम्

गृहाणि वनानि ॥ ४ ॥ न विप्रपादोदकपङ्किलानि न वेदशास्त्रध्वनिगर्जितानि । स्वाहास्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ॥ ५ ॥ क्रोशन्तः शिशवः सवारि सदनं पङ्कावृतं चाङ्गणं शय्या दंशवती च रूक्षमशनं धूमेन पूर्णं गृहम् । भार्या निष्ठुरभाषिणी प्रभुरपि क्रोधेन पूर्णः सदा स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम् ॥ ६ ॥ तावद्विद्याऽनवद्या गुणगणमहिमा रूपसंपत्तिशौर्य स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव । यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्राद्धे बाबा नास्ति तैलं न च लवणमपीत्यादिवाचां प्रचारः ॥ ७ ॥

## पुत्रप्रशंसनम् ।

विद्यावान्नीतिमान्वाग्मी सदाचारी महामतिः । विधेयः सुभगः पुत्रो यस्य तेन जितं जगत् ॥ १ ॥ विद्यया सम्पदा वाऽपि महिम्ना धर्म्मनिष्ठया । प्रवृद्धोऽप्यप्रवृद्धाभिमानः पुत्रो न कैर्नुतः ॥ २ ॥ इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः । अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ ३ ॥ गृहे जानुचरः केल्यां मुग्धस्मितमुखाम्बुजः । पुत्रः पुण्यवतामेव पात्रीभवति नेत्रयोः ॥ ४ ॥ स्वगर्भशुक्तिनिर्भिन्नं सुवृत्तं सुतमौक्तिकम् । वंशश्रीतिलकीभूतं मन्दभाग्यस्य दुर्लभम् ॥ ५ ॥ वर्धते न चिरं लोके वंशलक्ष्मीरसंततिः । स्वल्पावशेषितस्नेहवर्तिमालेव दीपिका ॥ ६ ॥ अन्तःकरणतत्त्वस्य दंपत्योः स्नेहसंश्रयात् । आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ ७ ॥ दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम् । पुण्याधिका हि पश्यन्ति गङ्गाधरमिवात्मजम् ॥ ८ ॥ धूलिधूसरसर्वाङ्गो विकसद्दन्तकेसरः । आस्ते कस्यापि धन्यस्य द्वारि दन्ती गृहेऽर्भकः ॥ ९ ॥ निन्द्यते पितृभिस्तैस्तैर्निरपत्यधनः पुमान् । अर्ध्वनीनैरतिश्रान्तैरवकेशीव पादपः ॥ १० ॥ किं मृष्टं सुतवचनं मृष्टतरं किं तदेव सुतवचनम् । मृष्टान्मृष्टतमं किं श्रुतिपरिपक्वं तदेव सुतवचनम् ॥ ११ ॥ सकलाः स्वजनाः सुहृदः सुधियोऽतिथयः सुरा महान्तश्च । नीता येन प्रमुदं कश्चन सुतमीदृशं लभते ॥ १२ ॥ प्रमोद्य बन्धून् सुहृदश्च सर्वान् संतापिता येन खला द्विषश्च । प्रशस्यते यश्च सुरैरपीत्थम्भूतः सुतो यस्य स एव धन्यः ॥ १३ ॥ उरोरुहाद्गुद्गमितैः पयोभिरापूर्य केल्या निजमास्यगर्भम् । फूत्कृत्य मातुर्वदने हसन्तं तनूभवं पश्यति कोऽपि धन्यः ॥ १४ ॥ कृतचङ्क्रमणं गणेषु किंचित्क्वणत्किङ्किणिरिङ्गदङ्घ्रिपद्मम् । यदि सन्महितं सुतं श्रितं स्यात्तदिदं सद्म हितं भवेत्तदानीम् ॥ १५ ॥ अहं किमम्बा किमभीष्टतापदे तवेति मातुर्धुरि तातपृच्छया । प्रलोभ्यतुल्यं प्रवदन्तमर्भकं मुदा हसञ्जिघ्रति मूर्ध्नि पुण्यभाक् ॥ १६ ॥ आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन् । अङ्काश्रयप्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥ आनन्दश्रुतिरात्मनो नयनयोरन्तःसुधाभ्यञ्जनं प्रस्तारः प्रणयस्य मन्मथतरोः पुष्पं प्रसादो रतेः । आलानं हृदयद्विपस्य विषयारण्येषु संचारिणो दंपत्योरिह लभ्यते सुकृततः संसारसारः सुतः ॥ १८ ॥

## पुत्रीगर्हणम् ।

जाता पुत्री तवेत्येतदक्षरद्वितये श्रुते । वज्रपातसमो घातो जायते हृदये पितुः ॥ १ ॥ जातेति कन्या महती हि चिन्ता कस्मै प्रदेयेति महान्वितर्कः । दत्ता सुखं यास्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टम् ॥ २ ॥

---

१ जलपूर्णम् । २ मत्कुणयुक्ता मशकयुक्ता वा । ३ अस्निग्धं भोजनम् । ४ जानुभ्यां चरति चलतीति तथोक्तः । ५ नग्नम् । ६ पथिकैः । ७ वन्ध्य इव । ८ कुचात् । ९ उत्पन्नैः । १० माता । ११ बन्धनम् । १२ जायापत्योः । १३ पुण्योदयात् ।

## सत्पुत्रप्रशंसनम्।

एकोऽपि गुणवान्पुत्रो निर्गुणैः किं शतैरपि। एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् ॥ १ ॥ एकेन हि सुवृक्षेण पुष्पितेन सुगन्धिना। वासितं[1] तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ २ ॥ प्रज्ञया वा विसारिण्या[2] यो बलेन धनेन वा। धुरं[3] वहति गोत्रस्य[4] जननी तेन पुत्रिणी ॥ ३ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन भासते। कुलं पुरुषसिंहेन चन्द्रेणेव हि शर्वरी[5] ॥ ४ ॥ को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः। वरमेकः कुलालम्बी यत्र विश्रूयते पिता ॥ ५ ॥ पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम्। तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ ६ ॥ वरमेको गुणी पुत्रो न च मूर्खशतान्यपि। एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥ ७ ॥ एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्। सहैव दशभिः पुत्रैर्भारं वहति रासभी[6] ॥ ८ ॥ एकेनापि सुपुत्रेण जायमानेन सत्कुलम्। शशिना चैव गगनं सर्वदैवोज्ज्वलीकृतम् ॥९॥ किं जातैर्बहुभिः पुत्रैः शोकसंतापकारकैः। वरमेकः कुलालम्बी यत्र विश्राम्यते कुलम् ॥ १० ॥ कुम्भः परिमितमम्भः पिबत्यसौ कुम्भसंभवोऽम्भोधिम्[7]। अतिरिच्यते सुजन्मा कश्चिज्जनकं निजेन चरितेन ॥ ११ ॥ विद्याविहीना बहवोऽपि पुत्राः कल्पायुषः सन्तु पितुः किमेतैः। क्षयिष्णुना[8] वाऽपि कलावता[9] वा तस्य प्रमोदः शशिनेव सिन्धोः ॥ १२ ॥ पात्रं न तापयति नैव मलं प्रसूते स्नेहं न संहरति नैव गुणान्क्षिणोति। द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एष कुलसद्मनि[10] कोऽपि दीपः ॥ १३ ॥

## असत्पुत्रगर्हणम्।

किं तेन जातु[11] जातेन मातृयौवनहारिणा। आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ १ ॥ किं तया क्रियते धेन्वा या न दोग्ध्री[12] न गर्भिणी। कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥ २ ॥ एकेन शुष्कवृक्षेण दह्यमानेन वह्निना। दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं यथा ॥ ३ ॥ कोटरान्तः स्थितो वह्निस्तरुमेकं दहेत्खलु। कुपुत्रस्तु कुले जातः स्वकुलं नाशयत्यहो ॥ ४ ॥ अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः। सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ ५ ॥ अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरौ। यतस्तावल्पदुःखाय यावज्जीवं जडो[13] दहेत् ॥ ६ ॥ यस्य पुत्रो न वै विद्वान् न शूरो न च धार्मिकः। अप्रकाशं[14] कुलं तस्य नष्टचन्द्रेव शर्वरी ॥ ७ ॥ अविनीतः[15] सुतो जातः कथं न दहनात्मकः[16]। विनीतस्तु[17] सुतो जातः कथं न पुरुषोत्तमः[18] ॥ ८ ॥ दाने तपसि शौर्ये च यस्य न प्रथितं यशः। विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ ९॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम्[19]। मा स्म सीमन्तिनी[20] काचिज्जनयेत्पुत्रमीदृशम्॥१०॥वरं गर्भस्रावो वरमपि च नैवाभिगमनं वरं जातप्रेतो[21] वरमपि च

---

१ सुरभितम्। २ प्रसरणशीलया। ३ कार्यभारम्। ४ कुलस्य कुटुम्बस्येति भावः। ५ रात्रिः। ६ गर्दभी। ७ अगस्त्यमुनिः, कलशखण्डश्च। ८ क्षयशीलेन। ९ कलासम्पन्नेन। कलाश्च विद्याः षोडशभागविशेषाश्च। १० कुलरूपे गृहे। ११ कदापि। १२ दुग्धपूर्तिकारिणी। १३ मूढः। १४ अप्रसिद्धम्, अन्धकारच्छन्नं च। १५ विनयशून्यः, अविना मेषेण नीत इति च। अग्नेर्हि मेषो वाहनम्। १६ अग्निरूपः, दाहकारी च। १७ विनयशाली, विना गरुडरूपेण पक्षिणा नीत इति च। असौ च विष्णुः। १८ पुरुषेषूत्तमः, विष्णुश्च। १९ शत्रूणां प्रसन्नताहेतुः। शत्रवो हि परस्यानभ्युदयात्प्रसीदन्तीति तथा वचनम्। २० भार्या। २१ उत्पन्नः किंतु मृतः।

कन्यैव जनिता। वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिर्न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः॥ ११॥ पित्रोर्नैव वचः श्रृणोति दिवसत्यागे व्रजत्यालयं यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति। बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः साधून्निन्दति दुर्जनं च मनुते मित्रं कुपुत्रो जनः ॥ १२ ॥

## प्रारब्धप्रभावप्रशंसनम्।

दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत्। सरोम्भश्चातकेनात्तं गलरन्ध्रेण गच्छति ॥ १ ॥ भाग्यवन्तं प्रसूयेथा मा शूरं मा च पंडितम् । शूराश्च कृतविद्याश्च वने सीदन्ति पाण्डवाः ॥ २ ॥ न केवलं मनुष्येषु दैवं देवेष्वपि प्रभु। सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः ॥३॥ सच्छिद्रो मध्यकुटिलः कर्णः स्वर्णस्य भाजनम्। धिग्दैवं निर्मलं चक्षुः पात्रं कज्जलभस्मनः॥ ४ ॥ भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि । पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥ ५ ॥ किं करोति नरः प्राज्ञः शूरो वाऽप्यथ पण्डितः। दैवं यस्य फलान्वेषि करोति विफलाः क्रियाः ॥ ६ ॥ दैवे विमुखतां याते न कोऽप्यस्ति सहायवान्। पिता माता तथा भार्या भ्राता वाऽथ सहोदरः ॥ ७ ॥ पिबन्ति मधु पद्मेषु भृङ्गाः केसरधूसराः । हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम्॥८॥ करोतु नाम नीतिज्ञो व्यवसायमितस्ततः। फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ ९ ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम्। समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥ १० ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम् । पाषाणस्य कुतो विद्या येन देवत्वमागतः ॥ ११ ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्। तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १२॥ अचोद्यमानानि यथा पुष्पाणि च फलानि च। स्वं कालं नातिवर्तन्ते तथा कर्म पुरा कृतम् ॥ १३ ॥ विपत्तौ किं विषादेन संपत्तौ हर्षणेन किम्। भवितव्यं भवत्येव कर्मणामीदृशी गतिः ॥ १४ ॥ हरिणाऽपि हरेणापि ब्रह्मणा त्रिदे[12]शैरपि। ललाटलिखिता रेखा न शक्या परिमार्जितुम् ॥ १५ ॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि । नानुस्मरन्ति तं किञ्चिद्यस्य दैवम[13]दक्षिणम् ॥ १६ ॥ अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्। सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ १७ ॥ अयाचितः सुखं दत्ते याचितश्च न यच्छति। सर्वे[15]स्वं चापि हरते विधि[16]रुच्छृङ्खलो नृणाम् ॥ १८ ॥ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि । तत्र सिद्धिः सुदूराऽऽस्ते संगताः पुनरापदः ॥ १९ ॥ सम्पदे क्रियतां यत्नः साग्रहेण न भूयताम्। सिद्ध्यसिद्धी हि साध्यानां दैवतन्त्रतया स्थिते ॥२०॥ उद्यतेत यथाशक्ति न प्रसज्येत जातुचित्। साध्यानां सिद्ध्यसिद्धी यन्नियत्या नियते कृते॥२१॥ अप्रार्थितं यथा दुःखं तथा सुखमपि स्वयम्। प्राणिनं प्रतिपद्येत सर्वं नियतियन्त्रितम् ॥ २२ ॥ पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी। शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः ॥ २३ ॥ तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः । सहायास्तादृशाश्चैव यादृशी भवितव्यता ॥२४॥ भवितव्यं भवत्येव नारिकेलफलाम्बुवत्। गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत् ॥२५॥महतामाश्रयः पुंसां फलं भाग्यानुसारतः। ईशस्य कण्ठलग्नोऽपि वासुकिर्वायुभक्षकः ॥२६॥कर्मणा बाध्यते बुद्धिर्न बुद्ध्या कर्म बाध्यते।

---

१ असन्ताना। २ मूढः। ३ गृहीतम्। ४ भाग्यम्। ५ साक्षाद्भ्राता । ६ किञ्जल्क-। ७ पराक्रमः। ८ मन्त्रादिना प्रतिष्ठापितप्राणादेः ( देवविशेषमूर्त्यात्मकस्य )। ९ लभते। १०अप्रेर्यमाणानि। ११ चिन्तया। १२ देवैः। १३ प्रतिकूलम्। १४ प्राणिनाम् । १५ सर्वं धनम्। १६ दैवम्। १७ नारिकेलफले यथा जलं न जनेन पूर्यते किंतु स्वयं पूर्यते, तथेति भावः। अत्र प्रभुर्विधिः। १८ सर्पत्वात्। सर्पा हि वायुभक्षकाः।

सुबुद्धिरपि यद्रामो हैमं हरिणमन्वगात्॥२७ ॥ गुणोऽपि दोषतां याति वक्रीभूते विधातरि । अनुकूले पुनस्तस्मिन्दोषोऽपि च गुणायते॥ २८॥अवश्यं भाविनो भावा भवन्ति महतामपि । नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः॥२९॥पुरुषः पौरुषं तावद्यावद्दैवं तु सम्मुखम् । विपरीतगते दैवे पुरुषो न च पौरुषम् ॥३०॥सिद्ध्यसिद्ध्योः समो भूत्वोद्यतेत विगतज्वरः । न हृष्येन्न विषीदेद्वा सर्वं दैवेन यन्त्रितम्॥३१॥ न देवसेवया याति कर्मबन्धः परिक्षयम्। जग्धास ग्रासमेवासौ बलीवर्दः कपर्दिनः ॥ ३२ ॥ अवश्यं-भाविभावानां प्रतीकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ ३३ ॥ भवितव्यं यथा येन नासौ भवति चान्यथा । नीयते तेन मार्गेण स्वयं वा तत्र गच्छति॥ ३३ ॥ किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मणा । प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥ ३४ ॥ लिखिता चित्रगुप्तेन ललाटेऽक्षरमालिका । तां देवोऽपि न शक्नोति उल्लिख्य लिखितुं पुनः ॥ ३५ ॥ येन यत्रैव भोक्तव्यं सुखं वा दुःखमेव वा । स तत्र बद्ध्वा रज्ज्वेव बलाद्दैवेन नीयते ॥ ३६ ॥ महतां चरणावेव पूज्येते पुरुषैर्ननु । किंतु लिङ्गं महेशस्य प्रभुता तत्र दैवतः ॥ ३७ ॥ सा सा संपद्यते बुद्धिः सा मतिः सा च भावना । सहायास्तादृशा एव यादृशी भवितव्यता ॥ ३८ ॥ अनुरागवती संध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथाऽपि न समागमः॥ ३९॥ भक्तो यस्य धनेशः सिद्धे ऋद्धेश्च यत्सुतोऽधिपतिः । तस्य कुमारोऽनूढः स्वयं च नग्नो नमो विधये॥४०॥मत्स्यवराहपुरन्ध्रीकच्छपवामनशरभादिरूपता विष्णोः । हन्त विधातर्भवतः प्रभुता कं न खेदयते ॥ ४१ ॥ अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते । विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥ ४२ ॥ विकटाटव्यामटनं शैलारोहणमपां निधेस्तरणम् । निगडं गुहाप्रवेशो विधिपरिपाकः कथं न संधार्यः ॥ ४३ ॥ किं त्वं न वेत्सि जगति प्रख्यातं लाभकारणे मूलम् । विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ४४ ॥ द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् । आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ४५ ॥ अनुकूले सति धातरि भवत्यनिष्टादपीष्टमविलम्बम् । पीत्वा विषमपि शंभुर्मृत्युंजयतामवाप तत्कालम् ॥ ४६ ॥ अनुचितमेवाचरितं पशुपतिना यद्विधेः शिरश्छिन्नम् । छिन्नो न चास्य हस्तो येनायं दुर्लिपिं लिखति ॥ ४७ ॥ नहि भवति यन्न भाव्यं भवति च भाव्यं विनाऽपि यत्नेन । करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ ४८ ॥ सर्वाङ्गमर्पयन्ती लोला सुप्तं क्रमेण शय्यायाम् । अलसमपि भाग्यवन्तं भजते पुरुषायितेव श्रीः ॥ ४९ ॥ आरोहतु गिरिशिखरं तरतु समुद्रं प्रयातु पातालम् । विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ५० ॥ सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् । अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ५१ ॥ यन्मनोरथशतैरगोचरं न स्पृशन्ति च गिरः कवेरपि । स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः ॥५२॥ परमेश्वरमपि नग्नं वैदैवं च निर्गुणं विकलम् । तरुगोप्रस्तररूपान्वरदान् विदधद्विधिर्जयति॥ ५३ ॥ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथो विपिनेऽप्यरक्षितः कृतप्रयत्नोऽपि

---

१ शङ्करस्य । २ शेषशय्या । ३ भक्षयते स्म । ४ तृणम् । ५ नन्दिकेश्वरः । ६ महेश्वरस्य । ७ अत्र चित्रगुप्तपदं विधातृपरम् । जगतां धात्रा इति पाठस्तु साधीयान् । ८ रक्तवर्णा, स्निग्धा च । ९ अग्रवर्ती, विधेयश्च । १० अत्र समासोक्तिरलङ्कारः । ११ सङ्गमयति । १२ भीषणे वने । १३ भ्रमणम् । १४ दैवभोगः । १५ विधाता । १६ दरिद्रो भावीत्यादिलेखम् । १७ राजा । १८ मत्स्यः । १९ महादेवम् । २० परब्रह्म । अस्य निर्विकारत्वात् । २१ पारिजातसुरभिचिन्तामणीन् ।

गृहे विनश्यति ॥ ५४ ॥ दाता बलिः प्रार्थयिता च विष्णुर्दानं भुवो वा[1]जिमखस्य कालः । नमोऽस्तु तस्यै भवितव्यतायै यस्याः फलं बन्धनमेव जातम् ॥ ५५ ॥ प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः । तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं नहि तत्परेषाम् ॥ ५६ ॥ मा धाव मा धाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः । चेद्धावनं साधनमस्ति लक्ष्म्या लभेत लक्ष्मीं शुनकोऽपि धावन् ॥ ५७ ॥ ईशः करस्थीकृतका[2]ञ्चनाद्रिः कुबेरमित्रं रजताचलस्थः । तथाऽपि भिक्षाटनमस्य जातं विधौ[3] शिरःस्थे कु[4]टिले कुतः श्रीः ॥ ५८ ॥ स्वयं महेशः श्वशुरो नगेशः सखा धनेशस्तनयो गणेशः । तथाऽपि भिक्षाटनमेव शंभोर्बलीयसी केवलमीश्वरे[5]च्छा ॥ ५९ ॥ असंभवं हेममृगस्य जन्म तथाऽपि रामो लुलुभे मृगाय । प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति ॥ ६० ॥ न भूतपूर्वो न च केन दृष्टो हेम्नः कुरङ्गो न कदाऽपि वार्ता । तथाऽपि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ ६१ ॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने । देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥ ६२ ॥ वने जने शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥ ६३ ॥ सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा । अहं करोमीति वृथाऽभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥ ६४ ॥ यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना । यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि ॥ ६५ ॥ भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो गन्धफ[6]लीमजिघ्रत् । सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥ ६६ ॥ विधौ[7] विरुद्धे न पयः पयोनिधौ सुधौघ[8]सिन्धौ न सुधा सुधाकरे । न वाञ्छितं सिध्यति कल्पपादपे न हेम हेम[9]प्रभवे गिरावपि ॥ ६७ ॥ अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा । तृणेन वात्येव तयाऽनुगम्यते जनस्य चित्तेन भृशावशात्मना ॥ ६८ ॥ निपतति किल दुर्बलेषु दैवं तदवितथं ननु येन कारणेन । बलवति न तथा यथाऽबलानां प्रभवति कृष्टशरासनो मनोभूः ॥ ६९ ॥ त्रिदशपतिपदेशतां दधानो गुरुपरिदर्शितनीतिगः स्वयं च । तदपि सरसिजे विलीयते स्म भवति हि जन्तुषु कर्म्मणां विपाकः ॥ ७० ॥ क्व च ननु जनकाधिराजपुत्री क्व च दशकंधरमन्दिरे निवासः । अयि खलु विषमः पुरा कृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ७१ ॥ क्व नु कुलमकलङ्कमा[10]यताक्ष्याः क्व नु रजनीचरसंगमापवा[11]दः । अयि खलु विषमः पुरा कृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ७२ ॥ त्रिभुवनविलयोदयौ विधातुं प्रभवति यस्य निमेषकेलिरेव । अपि स बत हतः कुरङ्गहन्त्रा भवति हि जन्तुषु कर्मणां विपाकः ॥ ७३ ॥ क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता । नियतं प्रतिकूलवर्तिनो बत धातुश्चरितं सुदुःसहम् ॥ ७४ ॥ सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः । तदपि तत्क्षणभङ्गि करोति चेदहह कष्टम[12]पण्डितता विधेः ॥ ७५ ॥ गजभुजंगमयोरपि बन्धनं शशिदिवाकरयोर्ग्रहपीडनम् । मतिमतां च समीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥ ७६ ॥ यदपि जन्म बभूव पयोनिधौ निव[13]सनं जगतीपतिमस्तके । तदपि नाम पुराकृतकर्मणा पतति राहुमुखे खलु चन्द्रमाः ॥ ७७ ॥ प्रतिकूलतामुपगते हि विधौ[14] विफलत्वमेति बहुसाधनता । अवलम्बनाय दिन-

---

१ अश्वमेधस्य यज्ञस्य । २ काञ्चनाद्रिः सुमेरुः । कैलासस्यापि सुमेरुतोऽपृथक्त्वात् । ३ भाग्ये, चन्द्रमसि च । ४ अनृजौ, विपरीते च । ५ अत्रेश्वरपदं भाग्याक्षरलेखकपरम् । ६ चम्पककलिकाम् । ७ दैवे । ८ अमृतप्रवाहाधारभूते । ९ सुवर्णोत्पत्तिस्थानभूते । १० सीतायाः । ११ अपवादो दोषारोपः । १२ मूढता । १३ निवासः । १४ चन्द्रे. दैवे च ।

भर्तुरभून्न पतिष्यतः कर[1]सहस्रमपि ॥ ७८ ॥ यस्माच्च येन च यथा च यदा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म । तस्माच्च तेन च तथा च तदा च तच्च तावच्च तत्र च विधातृवशादुपैति ॥ ७९ ॥ नैवाकृतिः फलति नैव कुलं न शीलं विद्यापि नैव न च यत्नकृताऽपि सेवा । भाग्यानि पूर्वतपसा किल संचितानि काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ८० ॥ आकाशमुत्पततु गच्छतु वा दिगन्तमम्भोनिधिं विशतु तिष्ठतु वा यथेच्छम् । जन्मान्तरार्जितशुभाशुभकृन्नराणां छायेव न त्यजति कर्मफलानुबन्धः ॥ ८१ ॥ भीमं वनं भवति तस्य पुरं प्रधानं सर्वो जनः सुजनतामुपयाति तस्य । कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ८२ ॥ कैवर्त[2]कर्कशकरग्रहणच्युतोऽपि जालान्तरे निपतितः शफरो[3] वराकः । दैवात्ततो विगलितो गिलितो बकेन वक्रे विधौ वद कथं व्यवसायसिद्धिः ॥ ८३ ॥ दैवे समर्प्य चिरसंचितकर्मजालं सुस्थाः सुखं वसत किं परयाचनाभिः । मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ ८४ ॥ येनाञ्चलेन सरसीरुहलोचनायास्त्रातः प्रभूतपवनादुदये प्रदीपः । तेनैव सोऽस्तसमयेऽस्तमयं विनीतः क्रुद्धे विधौ भजति मित्रममित्रभावम् ॥ ८५ ॥ आधोरणाङ्कुशभयात्करिकुम्भयुग्मं जातं पयोधरयुगं हृदयेऽङ्गनानाम् । तत्रापि वल्लभ[4]नखक्षतभेदभिन्नं नैवान्यथा भवति यल्लिखितं विधात्रा ॥ ८६ ॥ संजातसान्द्रमकरन्दरसां क्रमेण पातुं गतश्च कलिकां कमलस्य भृङ्गः । दग्धा निपत्य सहसैव हिमेन सैषा वामे[5] विधौ नहि फलन्त्यभिवाञ्छितानि ॥ ८७ ॥ सिंहो बली गिरिगुहागहनप्रवासी वासोदरे[6] वसति भूमिभृतां बिडालः । नो पौरुषं कुलमपि प्रचुरा न वाणी दैवं बलीय इति मुञ्च सखे विषादम् ॥ ८८ ॥ सदसि[7] विदुरभीष्मद्रोणशारद्वतानां[8] पतिभिरमरकल्पैः[9] पञ्चभिः पालिताऽपि । अहह परिभवस्य[10] द्रौपदी पात्रमासीद्बलवति सति दैवे बन्धुभिः किं विधेयम् ॥ ८९ ॥ गुणवदगुणवद्वा कुर्वता कार्यमादौ परिणति[11]रवधार्या[12] यत्नतः पण्डितेन । अतिरभसकृतानां[13] कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो[14] विपाकः ॥ ९० ॥ स हि गगनविहारी कल्मष[15]ध्वंसकारी दशशतकर[16]धारी ज्योतिषां[17] मध्यचारी । विधुरपि विधियोगाद्ग्रस्यते राहुणाऽसौ लिखितमिह ललाटे प्रोज्झितुं कः समर्थः ॥ ९१ ॥ अयममृतनिधानं नायकोऽप्योषधीनां शतभिषग[18]नुयातः शंभुमूर्ध्नोऽवतंसः[19] । विरहयति न चैनं राजयक्ष्मा[20] शशाङ्कं हत[21]विधिपरिपाकः केन वा लङ्घनीयः ॥ ९२ ॥ शशिनि खलु कलङ्कः कण्टकं पद्मनाले युवतिकुचनिपातः पक्वता केशजाले । जलधिजलमपेयं पण्डिते निर्धनत्वं वयसि धनविवेको निर्विवेको विधाता ॥ ९३ ॥ प्रियसखि विपद्दण्डप्रान्तप्रपातपरम्परापरिचयचले चिन्तां चक्रे निधाय विधिः खलः । मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्भ्रमयति मनो नो जानीमः किमत्र करिष्यति ॥ ९४ ॥ क्वचित्पाणिप्राप्तं घटितमपि कार्यं विघटयत्यशक्यं केनापि क्वचिदघटमानं घटयति । तदेवं सर्वेषामुपरि परितो जाग्रति विधावुपालम्भः कोऽयं जनतनुधनोपार्जनविधौ ॥ ९५ ॥ नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः । फलं कर्मायत्तं यदि किममरैः किंच विधिना नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥९६॥ त्रिलोकेशः शार्ङ्गी[22] शबर[23]शरलक्ष्यत्वमगमद्विधाता लोकाना-

१ किरण- । हस्त- । २ मत्स्यजीवि- । ३ क्षुद्रो मीनः । ४ प्राणप्रिय- । ५ प्रतिकूले ६ प्रासादाभ्यन्तरे । ७ सभायाम् । ८ शारद्वतः कृपाचार्यः । ९ देवसमानैः । १० तिरस्कारस्य । ११ फलम् । १२ बोद्धव्याम् । १३ परिणाममविचार्य कृतानाम् । १४ शङ्काद्याघातसदृशः । १५ अन्धकार- । १६ सहस्रकिरणः । १७ नक्षत्राणाम् । १८ नक्षत्रविशेष- । शतसङ्ख्याकवैद्य- १९ अलङ्कारविशेषसमः । २० क्षयरोगः । २१ नष्ट- । २२ नारायणः । २३ व्याधविशेष- ।

मलभत शिरःकृन्तनविधिम्[1] । प्रयातौ तौ राहोर्दिनकरशशाङ्कौ कवलतां[2] प्रभुर्नग्नः शंभुः शिरसि लिखितं लङ्घयति कः ॥ ९७ ॥ महेशे नग्नत्वं सकलसृजि पूजाक्षपणता कलङ्कित्वं भूयो द्विजपरिवृढे निर्मलरुचौ । समायत्वं ब्रह्मण्यवनिभृति चात्युग्रविषता ततो मन्ये दैवं परमखिलशिक्षावितरणम् ॥ ९८ ॥ सुधांशोर्जातेयं कथमपि कलङ्कस्य कणिका विधातुर्दोषोऽयं न च गुणनिधेस्तस्य किमपि । स किं नात्रेः पुत्रो न किमु हरचूडाऽर्चनमणिर्न वा हन्ति ध्वान्तं जगदुपरि किं वा न वसति ॥ ९९ ॥ लुलाये[3] गोमायौ[4] मृगपरिषदि श्वापदकुले[5] करिष्यन्कार्पण्यं किमिह महिमानं गमयसि । निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिप दशा[6]मभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ॥ १०० ॥ धुनोति[7] ध्वान्तानि व्यपनयति नीहारपटलं कुलं राजीवानां[8] दलयति रथाङ्गं[9] रमयति । जगद्व्यापी देवः सुखयति जनानां च नयनं न याति स्थेमानं[10] यदि तदिह दैवं जयतु कः ॥ १०१ ॥ त एवामी बाणास्तदपि हरलब्धं धनुरिदं स एवाहं पार्थः[11] प्रमथितसुरारातिनिचयः । इमास्तास्ता गोप्यो[12] हरिचरणचित्तैकशरणा ह्रियन्ते गोपालैर्विधिरिह बलीयान्न तु नरः ॥ १०२ ॥ अलंकारः शङ्काकरनरकपालं परिजनो विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः । अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ[13] वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ १०३ ॥ पिता रत्नाधारः शुचिसहचरास्ते च मणयः स्वसा स्निग्धा लक्ष्मीरयमवरजः कल्पविटपी । अहो काम्यं धातुस्तदपि खलु शङ्खः प्रतिपदं रुदित्वा यदीयं दिशि दिशि वराटं मृगयते ॥ १०४ ॥ पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं नोलूकेन विलोक्यते यदि दिवा सूर्यस्य किं दूषणम् । धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः ॥ १०५ ॥ या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् । तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥ १०६ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तः सदा संकटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ १०७ ॥ यद्धात्रा निजभालपट्टलिखितं स्तोकं[14] महद्वा धनं तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् । तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ १०८ ॥ नेता यस्य बृहस्पतिः प्रहरणं[16] वज्रं सुराः सैनिकाः स्वर्गो दुर्गमनुग्रहः किल हरेरैरावणो वारणः । इत्याश्चर्यबलान्वितोऽपि बलभि[17]द्भग्नः परैः संगरे तद्युक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥ १०९ ॥ जातः सूर्यकुले पिता दशरथः क्षोणीभुजामग्रणीः सीता सत्यपरायणा प्रणयिनी यस्यानुजो लक्ष्मणः । दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्षविष्णुः स्वयं रामो येन विडम्बितोऽपि विधिना चान्ये जने का कथा ॥ ११० ॥ जामाता[18] पुरुषोत्तमो भगवती लक्ष्मीः स्वयं कन्यका दूतो यस्य बभूव कौशिकमुनिर्यष्टा वसिष्ठः स्वयम् । दाता श्रीजनकः प्रदानसमये चैकादशस्था ग्रहाः किं ब्रूमो भवितव्यतां हतविधे रामोऽपि यातो वनम् ॥ १११ ॥ आसाद्यापि महोदधिं न वितृषो जातो जलैर्वाडवो मेघं प्राप्य न चातकोऽपि चरणौ भानुं न लेभेऽरुणः । चन्द्रः शंकरशेखरेऽपि निवस-

---

१ रुद्रेण विधातुरपि शिरश्छिन्नमिति भागवते । २ ग्रासरूपताम् । ३ महिषे । ४ शृगाले । ५ हिंस्रसमूहे । ६ दशाऽवस्थाताम् । ७ क्षपयति । ८ कमलानाम् । ९ चक्रवाकम् । १० एकत्रावस्थानम् । ११ अर्जुनः । १२ अत्र गोपीपदं भगवत्प्रियापरम् । गाः इन्द्रियाणि प्रेरकत्वेन पातीति तस्येमा इति वा अत एव भगवतो हृषीकेशेत्यभिख्याऽपि सङ्गच्छते । धियो यो नः प्रचोदयादिति प्रार्थना च । १३ चन्द्रे, दैवे च । १४ अल्पम् । १५ याचकरूपाम् । १६ शस्त्रम् । १७ देवराजः । १८ यस्मिन् परिणये इति शेषः ।

न्पक्षक्षये क्षीयते प्रायः सज्जनसंगतोऽपि लभते दैवानुरूपं फलम् ॥ ११२ ॥ आहारे शुचिता ध्वनौ मधुरता वाचालता माधवे[1] बन्धौ निर्ममता जनेषु निरता नीडे[2] पराधीनता । एतैरेव गुणैर्युताः पैरभृता-स्त्यक्त्वा किमेते जना वन्दन्ते खलु खञ्जनं कृमिभुजं चित्रा गतिः कर्मणाम् ॥ ११३ ॥ गीतं कोकिल ते मुदा रसविदः शृण्वन्ति कर्णामृतं नो किंचिद्वितरन्ति ते तरुदलैरेव स्वयं जीवसि । कर्णायुर्हरमुद्गिरन्ति विरुतं काकास्तु तेभ्यो बलिं प्राज्ञा एव दिशन्ति हन्त धिगिदं वक्रं विधेः क्रीडितम् ॥ ११४ ॥ छित्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां पर्यन्ताग्निशिखाकलापजटिलान्निःसृत्य दूरं वनात् । व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः कूपान्तः पतितः करोति विमुखे किं वा विधौ पौरुषम् ॥ ११५॥ लब्धं जन्म सह श्रिया स्वयमपि त्रैलोक्यभूषाकरः स्थित्यर्थं परमेश्वराभ्युपगतस्तेनाऽपि मूर्ध्ना धृतः । वृद्धिं शीतकरस्तथाऽपि न गतः क्षीणः परं प्रत्युत प्रायः प्राक्तनमेव कर्म बलवत्कः कस्य कर्तुं क्षमः ॥ ११६॥ रामे प्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् । कारा-गारनिषेवणं च मरणं संचिन्त्य लङ्केश्वरे सर्वः कालवशेन नश्यति नरः को वा परित्रायते ॥ ११७॥भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः । तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ ११८ ॥ माता यस्य धैराधरेन्द्रदुहिता तातो महेशस्तथा भ्राता विघ्नकुलान्तकः पितृसखो देवो धनानां पतिः । ख्यातः क्रौञ्चविदारणे सुरपतेः सेनाग्रगः षण्मुखस्तद्दुर्दैवबलेन कुत्र घटते नाद्यापि पाणिग्रहः ॥ ११९ ॥ कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् । अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधयन्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः॥ १२०॥ तुल्यं भूर्भृति जन्म तुल्यमुभयोर्मूल्यं च तुल्यं वपुस्तुल्यं दौर्दण्ड्यमुदग्रटङ्कदलनं तुल्यं च पाषाणयोः । एकस्याखिलवन्दनाय विधिना देवत्वमारोपितं तद्द्वारे विहिता परस्य तु पदाघातास्पदं देहली ॥ १२१ ॥ यद्भग्नं धनुरीश्वरस्य समरे यज्जामदग्न्यो जितस्त्यक्ता येन गुरोर्गिरा वसुमती सेतुः पयोधौ कृतः । एकैकं दशकंधरक्षयकृतो रामस्य किं वर्ण्यते दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषताम् ॥ १२२ ॥ खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः । तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् ॥ १२३ ॥ भूयिष्ठं द्रविणात्मजं जनयितुं लिप्सावता चेतसा नार्यः पञ्च मया क्रमेण कुलजाः काले समुद्वाहिताः । सद्विद्या कविता विदेशवसतिः सेवा तथाऽभ्यर्थना दैवेन प्रतिबन्धकेन युगपद्वन्ध्याः समस्ताः कृताः ॥ १२४ ॥ मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु । आकाशं सकलं प्रयातु खगवत्कृत्वा प्रयत्नं परं नोऽभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ १२५ ॥ लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाम्भोनिधेर्देवेन प्रणयप्रसादविधिना मूर्ध्ना धृतः शंभुना । अद्याप्युज्झति नैव दैवविहितं क्षैण्यं क्षपावल्लभः केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी ॥ १२६ ॥ अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् । वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया लीलादुर्ललिता-

---

१ वसन्ततौ । २ कुलाये । ३ कोकिलाः । ४ मृगबन्धनीम् । ५ पार्वती । ६ कुबेरः । ७ विवाहः । ८ पर्वते । ९ दृढत्वम् । १० उदग्रा ये टङ्काः पाषाणदारणसाधनभूतानि शस्त्राणि तैर्दलनम् । ११ द्रविणं धनं तदेव पुत्रस्तम् । १२ कृतविवाहाः । १३ व्यर्थाः । १४ सङ्ग्रामे । १५ वज्ररूपताम् ।

द्भुतव्यसनिने दैवाय तस्मै नमः ॥ १२७ ॥ जन्म ब्रह्मकुलेऽग्रजो धनपतिर्यः कुम्भकर्णाग्रजः सूनुर्वासवजित्स्वयं दशशिरा दोर्दण्डका विंशतिः । अस्त्रं कामगमं विमानमजयं मध्येसमुद्रं पुरी सर्वं निष्फलमेतदेव नियतं दैवं परं दुर्जयम् ॥ १२८ ॥ यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे धारा यत्र पिनाकपाणिपरशोराकुण्ठितामागताः । तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते साम्प्रतं दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते ॥ १२९ ॥ दोःसंन्दोहवशंवदत्रिभुवनश्रीगर्वसर्वंकषः कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः । यत्रायं स्वयमस्ति सेयममरावत्याऽपि वन्द्या पुरी नीता मर्कटकेन कामपि दशां धिग्दैवमावश्यकम् ॥ १३० ॥ येनाकारि मृणालपत्रमशनं क्रीडा करिण्या सह स्वच्छन्दं भ्रमणं च कन्दरगणे पीतं पयो नैर्झरम् । सोऽयं वन्यकरी नरेषु पतितः पुष्णाति देहं तृणैर्यद्दैवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ॥१३१ ॥ दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् । सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ १३२ ॥ कान्तं वक्ति कपोतिकाऽऽकुलतया नाथान्तकालोऽधुना व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्रामति । इत्थं सत्यहिना स दष्ट इषुणा श्येनोऽपि तेनाहतस्तूर्णं तौ तु यमालयं प्रतिगतौ दैवी विचित्रा गतिः ॥ १३३ ॥ रेवावारिणि वारणेन विपुले राजीवराजीरजःपुञ्जैः पिञ्जरितोर्मिणि प्रविगलद्दानाम्बुगन्धोत्कटे । धौतं येन मृगारिरक्तमसकृद्दन्तान्तरालस्थितं कोष्णं सोऽपि पयः पपौ हतविधेः को गोचरे नागतः ॥ १३४ ॥ केषांचिन्निजवेश्मनि स्थितवतामालस्यनिद्रावतां दृश्यन्ते फलिता लता इव फलैराचूलमूलं श्रियः । अद्रिं लङ्घयतां गिरिं प्रयततां पृथ्वीतले धावतामुद्योगव्यवसायसाहसधियां तन्नास्ति यत्पच्यते ॥ १३५ ॥ कश्चिद्भ्राम्यति काकिणीं न लभते कश्चित्सुखं क्रीडति क्रन्दत्यन्य उपास्यते च मुदितैरन्यः सदा किङ्करैः । कश्चिद्राजति कोऽपि बन्धमयते कश्चित्पुनर्मुच्यते दृष्ट्वैवं धृतजन्मनां बत दशां को नैव चित्रायते ॥ १३६ ॥ पञ्चैते पाण्डुपुत्राः क्षितिपतितनया धर्मभीमार्जुनाद्याः शूराः सत्यप्रतिज्ञा दृढतरवपुषः केशवेनापि गूढाः । ते वीराः पाणिपात्रे कृपणजनगृहे भिक्षुचर्यां प्रवृत्ताः को वा कार्ये समर्थो भवति विधिवशाद्भाविनी कर्मरेखा ॥१३७॥ यत्र श्यामाकबीजान्यपि चटकवधूचञ्चुकोटिच्युतानि प्रोच्चीयन्ते स्ववेश्मन्यशनविरहिते निर्धनश्रोत्रियाणाम् । दैवे दातर्यकस्माच्चटुलशिशुकराकृष्टहारावलीतो भ्रष्टास्तत्रैव दृष्टा युवतिभिरलसं चूर्णिता मौक्तिकौघाः ॥१३८॥ संतोषं येन नीतस्त्रिपुरारिपुरपि द्वन्द्वयुद्धे च जेतुं देवानामप्यशक्या रणशिरसि हता येन देवेन्द्रतुष्ट्यै । सेनां नारायणीयां यमपुरपथिकां योऽकरोदप्रयासं सोऽयं गोपालबालैर्हृतसकलधनोऽकारि दैवेन भूयः ॥ १३९ ॥ क्वायोध्या क्व रामो दशरथवचनाद्दण्डकारण्यमागात्क्वासौ मारीचनामा कनकमयमृगः कुत्र सीतापहारः । सुग्रीवे राममैत्री क्व जनकतनयान्वेषणे प्रेषितोऽहं योऽर्थोऽसंभावनीयस्तमपि घटयते क्रूरकर्मा विधाता ॥ १४० ॥

---

१ इन्द्रजित् । २ रावणः । ३ भुजदण्डाः । ४ अस्त्रमजयं विमानं कामगमं स्वेच्छाऽनुसारं संचारीत्यर्थः। ५ मुसलसदृशानैरावतहस्तिदन्तान् । ६ सङ्ग्रामे । ७ महेश्वर- । ८ करजा नखाः, तैः । ९ भुजसमूह- । १० वानरेण, हनुमतेत्यर्थः । ११ सर्पेण । १२ नर्मदाजले । १३ हस्तिना । १४ कमल- । १५ भोजनार्थमिति शेषः । १६ अर्जुनस्येदं वृत्तम् । १७ हनुमत इदं वचनम् ।

## वार्धक्यवचनम् ।

पालिता लालिता वृद्धिं नीताश्चात्मवदादृताः ।तानेव बत वार्धक्यं विदधाति पराङ्मुखान् ॥ १ ॥ आत्मजाऽऽदिपरिक्लेशमात्मन्यारोप्य मूढधीः । प्रतिकर्त्तुमशक्तोऽपि वार्धक्ये शोचते परम् ॥ २ ॥ अलंकरोति हि जरा राजामात्यभिषग्यतीन् । बिडम्बयति पण्य[1]स्त्रीमल्लगायनसेवकान् ॥ ३ ॥ क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः । निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ ४ ॥ शशिनीव हिमार्तानां घर्मार्तानां रवाविव । मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये पतौ ॥ ५ ॥ मलिनैरलकैरेतैः शुक्लत्वं प्रकटीकृतम् । तद्रोषादिव निर्याता वदनाद्रदनावलिः ॥ ६ ॥ वृद्धत्वानलदग्धस्य सारयौवनवस्तुनः । दृश्यते देहगेहेषु भस्मैव पलितच्छलात् ॥७॥ वीक्ष्यते पलितश्रेणिर्नैव वृद्धस्य मूर्धनि । मृषैव नीतं जन्मेति किं तु भस्म विधिर्न्यधात् ॥ ८ ॥ इयत्यामपि सामग्र्यां सुकृतं न कृतं त्वया । इतीव कुपितो दन्तानन्तकः पातयत्यलम् ॥ ९ ॥ यममिव करधृतदण्डं हरिमिव स[2]गदं शशाङ्कमिव वक्रम् । शिवमिव च [3]विरूपाक्षं जरा करोत्यकृतपुण्यमपि ॥ १० ॥ वदनं दशनविहीनं वाचो न परिस्फुटा गता शक्तिः । अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥ ११ ॥ पटुरटति पलितदूतो मस्तकमासाद्य सर्वलोकस्य । परिभवति जरा मरणं कुरु धर्मं विरम पापेभ्यः ॥ १२ ॥ [4]शतमन्युं [5]दण्डधरं [6]कुबेरमपि [7]शूलिनं तथा [8]गदिनम् ।कुरुते जरा न सा किं कुर्यान्नीरूपनामकं मनुजम् ॥ १३ ॥ [9]कृष्णवर्त्मनि गुणान्गणयन्ती [10]जीवनेऽपि [11]जरयन्त्यनुरागम् । आगता बत जरेव [12]हिमानी सेव्यतां [13]सुरतरङ्गवतीयम् ॥ १४ ॥ कृतान्तस्य दूती जरा कर्णमूले समागत्य वक्तीति लोकाः शृणुध्वम् । परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं भजध्वं रमानाथपादारविन्दम् ॥ १५ ॥ वर्णं सितं समभिवीक्ष्य [14]शिरोरुहाणां स्थानं जरा परिभवस्य यदेव पुंसाम् । [15]आरोपितास्थिशकलं [16]परिहृत्य यान्ति चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १६ ॥ [17]श्रुतिः शिथिलतां गता [18]स्मृतिरपि प्रनष्टाऽधुना [19]गतिर्विपथमागता गलिततां गता [20]द्विजानां ततिः । [21]गवामपि च संहतिः समुचितक्रियातश्च्युता कृता नु जरया तया कलियुगस्य [22]चाभिन्नता ॥ १७ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते । वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्य[23]मित्रायते ॥ १८॥ स्थूलप्रावरणोऽति[24]वृत्तकथकः कासाश्रुलालाविलो भग्नोरःकटिपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् । शृण्वन्धृष्टवधूवचांसि धनुषा संत्रासयन्वा[25]यसान्नाशापाशनिबद्धजीवविभवो वृद्धो गृहे ग्लायति ॥ १९ ॥ पादौ संस्तम्भयन्ती मुखमपि नमयन्त्यङ्गमाकुञ्चयन्ती

---

१ वेश्या- । २ गदेन-रोगेण, गदया च सह वर्त्तमानम् । ३ विकृतनेत्रम् । ४ देवराजम् । अनेकक्रोध ( शोक ) युक्तं च । ५ यमराजं यष्टिसहायं च । ६ धनदं कुत्सितशरीरं च । ७ शङ्करम्, शूलरोगपीडितं च । ८ कौमोदकीगदाधरं, गदरोगयुक्तं च । ९ अनले कृष्णस्य वर्त्मनि च । १० जले जीविते च । ११ अपनयन्ती । १२ हिमराशिः । १३ सुरते-रमणविषये रङ्गवती, सुराणां देवानां तरङ्गवती- नदी ( गङ्गा ) च । १४ केशानाम् । १५ आरोपितम् अस्थ्नः शकलं खण्डं यत्र तत् । १६ दूरं कृत्वा । १७ श्रवणेन्द्रियं वेदश्च । १८ स्मरणशक्तिः, धर्म्मशास्त्रं च । १९ आचरणम्, प्रयाणं च । २० रदानां ब्राह्मणादीनां च । २१ इन्द्रियाणां, सुरभीणां च । २२ साधर्म्यतेति पाठान्तरं तु हेयमेवश्च, भावप्रत्ययाद्भावप्रत्ययानुत्पत्तेः । २३ शत्रुसमो जायते । २४ अतिक्रान्तवृत्तान्तकथयिता । २५ काकान् ।

हस्तावुत्कम्पयन्ती प्रणयिजनवचो न श्रुतीः श्रावयन्ती । रथ्यामुद्वेजयन्ती वलिततनुमती नूतनोढा जरा वा तुल्या पूर्वा तु पुंसस्त्रसति बत परा भीतिहेतुर्नरस्य ॥ २० ॥

## क्षुधाप्रभाववर्णनम् ।

नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः । नास्त्याहारसमं सौख्यं नास्ति क्रोधसमो रिपुः ॥ १ ॥ शय्या वस्त्रं चन्दनं चारु हास्यं वीणा वाणी सुन्दरी या च नारी । न भ्राजन्ते क्षुत्पिपासातुराणां सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥ २॥ न रत्नानि न तैर्भूषा न वस्त्रादि सुतादि च । न धर्मो न श्रुतार्थेहा क्षुधितस्य प्रवर्तते ॥ ३ ॥

## याचकदशावर्णनम् ।

प्रतिदिनमयत्नसुलभे भिक्षुकजननि साधुजनकल्पलते । नृपनमननरकतारिणि भगवति भिक्षे नमस्तुभ्यम् ॥ १ ॥ अगस्तितुल्याश्च घृताब्धिशोषणे दम्भोलितुल्या वटकाद्रिभेदने । शाकावलीकाननवह्निरूपास्त एव भट्टा इतरे भटाश्च ॥ २ ॥ अग्र्यो भुक्तिमतां प्रयोगसमये मन्त्रेषु पृष्ठे गतः पाकागारगतस्तु पाचकमनस्तोषाय वाचस्पतिः । उच्चायां निरतो रतोऽर्भकगणे पिण्डेषु दत्तादरो नानाश्राद्धगणैकचालितमना भट्टोत्तमो राजते ॥ ३ ॥ उच्चैरध्ययनं पुरातनकथा स्त्रीभिः सहालापनं तासामर्भकलालनं पतिनुतिस्तत्पाकमिथ्यास्तुतिः । आदेशस्य करावलम्बनविधिः पाण्डित्यलेखक्रिया होरागारुडमन्त्रतन्त्रकविधिर्भिक्षोर्गुणा द्वादश ॥ ४ ॥ प्रातः क्षालितलोचनाः करतले चञ्चत्पवित्राङ्कुरास्तत्तत्स्थाननिवेशितोर्ध्वतिलकाश्चैलान्तबद्धाक्षताः । को जातश्च मृतोऽथवा मृततिथिः कस्यालये वर्तते चेत्थं हर्षशतैर्युताः प्रतिदिनं धावन्त्यहो भिक्षुकाः ॥ ५ ॥

## इतरालयाश्रयगर्हणम् ।

शिरसा धार्यमाणोऽपि सोमः सोमेन शम्भुना । तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥ १ ॥ विना कार्येण ये मूढा गच्छन्ति परमन्दिरम् । अवश्यं लघुतां यान्ति कृष्णपक्षे यथा शशी ॥ २ ॥ कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् । कष्टादपि कष्टतरं परगृहवासः परान्नं च ॥ ३ ॥ उडुगणपरिवारो नायकोऽप्योषधीनाममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः । भवति विगतरश्मिर्मण्डलं प्राप्य भानोः परसदननिविष्टः को लघुत्वं न याति ॥ ४ ॥

## उदरभरणस्य गर्हणम् ।

अस्य दग्धोदरस्यार्थे किं न कुर्वन्ति पण्डिताः। वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे ॥१॥ उदरदरीयं गहना यद्गतमखिलं विलीयते क्वचन । एका तत्र च भुजगी विलापयति कं न सा दुष्टा ॥ २ ॥ किमकारि न कार्पण्यं कस्यालङ्घि न देहली । अस्य पापोदरस्यार्थे किमनाटि न नाटकम् ॥३॥ एकः स

---

१ बलियुक्तशरीरा वक्रतया वर्तमाना च । २ जरा । ३ वीराः । ४ अग्रगण्यः । ५ सुरगुरुः । ६ दक्षिणस्याम्, अयं श्रोत्रियाणां साङ्केतिकः शब्दः । ७ बालक- । ८ प्रशंसा । ९ आज्ञायाः। १० होरा=जन्मपत्र्यङ्कम्, गारुडो मन्त्रो विषापहरः । ११ उमासहितेन । १२ नक्षत्र-।

एव जीवति हृदयविहीनोऽपि सहृदयो राहुः । यः सकललविमकारणमुदरं न बिभर्ति दुष्पूरम् ॥ ४ ॥ कंधरां समपहाय कं धरां प्राप्य संयति जहास कस्यचित् । मां किलानमयतः स्वपूर्तये दुर्भरात्किमुदराद्वियोगतः ॥ ५ ॥ अहितहितविचारशून्यबुद्धेः श्रुतिसमयैर्बहुभिस्तिरस्कृतस्य । उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः ॥ ६ ॥ इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्गभूमिः । क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥ ७ ॥ अपहरति महत्त्वं प्रार्थना किं न जाने जनयति गुरुलज्जामित्यहं किं न वेद्मि । तदपि वद वदान्यं तं सदा प्रत्यहं मां जठरपिठरवर्ती वह्निरर्थीकरोति ॥ ८ ॥ गङ्गातरङ्गकणशीकरशीतलानि विद्याधराध्युषितचारुशिलातलानि । स्थानानि किं हिमवतः प्रलयं गतानि यत्सावमानपरपिण्डरतो मनुष्यः ॥ ९ ॥ अभिमतमहामानग्रन्थिप्रभेदपटीयसी गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका । विपुलविलसल्लज्जावल्लीवितानकुठारिका जठरपिठरी दुष्पूरेयं करोति विडम्बनम् ॥ १० ॥ ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः । तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ ११ ॥ मातर्नातः परमनुचितं यत्खलानां पुरस्तादस्ताशङ्कं जठरपिठरीपूर्तये नर्तिताऽसि । तत्क्षन्तव्यं सहजसरले वत्सले वाणि कुर्यां प्रायश्चित्तं गुणगणनया गोपवेषस्य विष्णोः ॥ १२ ॥ दीनां दीनमुखैस्तथैव शिशुकैराकृष्टजीर्णाम्बरां क्रोशद्भिः क्षुधितैर्निरन्नविधुरां पश्येन्न चेद्गेहिनीम् । याच्ञाभङ्गभयेन गद्गदगलत्रुटयद्विलीनाक्षरं को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ १३ ॥ हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः । संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १४ ॥ किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः । वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां दुःखोपात्ताल्पवित्तस्मयपवनवशान्नर्तितभ्रूलतानि ॥ १५ ॥

## किङ्करतागर्हणम् ।

स्वाभिप्रायपरोक्षस्य परचित्तानुवर्तिनः । स्वयं विक्रीतदेहस्य सेवकस्य कुतः सुखम् ॥ १ ॥ चलेषु स्वामिचित्तेषु सुलभे पिशुने जने । यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥ २ ॥ सेवा श्ववृत्तिर्यैरुक्ता न तैः सम्यगुदाहृतम् । स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क सेवकः ॥ ३ ॥ सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् । स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ ४ ॥ वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् । पुंसां विवेकहीनानां सेवया न धनार्जनम् ॥ ५ ॥ या प्रकृत्यैव चपला निपतत्यशुचावपि । स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ ६ ॥ मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् । प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ ७ ॥ तावज्जन्मातिदुःखाय ततो दुर्गतता सदा । तत्रापि सेवया वृत्तिरहो दुःखपरम्परा ॥ ८ ॥ नाश्नाति सेवयौत्सुक्याद्विनिद्रो न प्रबुध्यते । न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ ९ ॥ भूः शय्या ब्रह्मचर्यं च कृशत्वं लघु भोजनम् । सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥ १० ॥ शीतातपादिकष्टानि सहते यानि सेवकः । धनाय तानि

---

१ चतुरः । अत्र विरोधाभासः । २ ग्रीवाम् । ३ मस्तकम् । ४ सङ्ग्रामे । ५ श्रुतीनां वेदानां समयाः सिद्धान्तास्तैः, कर्णेन्द्रियाणां शब्दग्रहणव्यापारास्तैश्च । ६ उदरभाण्डम् । ७ पर्वत- । ८ अम्बरं वस्त्रम् । ९ अभुक्तवतीम् । १० महाचेताः । ११ अविनीतानाम् । १२ गर्व- । १३ असवः प्राणाः ।

चाल्पानि यदि धर्माय मुच्यते ॥ ११ ॥ मृदुनाऽतिसुवृत्तेन सुमृष्टेनातिहारिणा । मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥ १२ ॥ स्वयं जहाति सेवकः सुखं च मानमेव च । यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १३ ॥ प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ १४ ॥ मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा धृष्टः पार्श्वे वसति च सदा दूरतस्त्वप्रगल्भः । क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १५ ॥ विज्ञैः स्निग्धैरुपकृतमपि द्वेषितामेति कश्चित्साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति । चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १६ ॥ भक्तानामुपकारिणां परहितव्यापारमुक्तात्मनां सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि । व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ १७ ॥ आहारे वडवानलश्च शयने यः कुम्भकर्णायते संदेशे बधिरः पलायनविधौ सिंहः शृगालो रणे । अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥ १८ ॥

## सुजीवनप्रशंसनम् ।

दाने त्राणे च गाम्भीर्ये क्षमायां च पराक्रमे । धैर्ये सम्पदि दाक्ष्ये च धुर्याणामेव जीवनम् ॥ १ ॥ कीर्तिरेका प्रिया भार्या सर्वदा यान्निषेवते । जीवनं जीवनं तेषां परेषां मरणार्थकम् ॥ २ ॥ यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः । सफलं जीवितं तस्य नात्मार्थे को हि जीवति ॥ ३ ॥ यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा । अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ ४ ॥ वाणी रसवती यस्य भार्या पुत्रवती सती । लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥ ५ ॥ स जीवति यशो यस्य कीर्तिर्यस्य स जीवति । अयशोऽकीर्तिसंयुक्तो जीवन्नपि मृतोपमः ॥ ६ ॥ चलं वित्तं चलं चित्तं चले जीवितयौवने । चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ॥ ७ ॥ यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति । कुरुते किं न काकोऽपि चञ्च्वा स्वोदरपूरणम् ॥ ८ ॥ स जातो येन जातेन याति वंशः समुन्नतिम् । परिवर्तिनि संसारे मृतः को वा न जायते ॥ ९ ॥ अञ्जलिरकारि लोकैर्गलनिमनातैव रञ्जिता जगती । संध्याया इव वसतिः स्वल्पापि सखे सुखायैव ॥ १० ॥ यज्जीवति क्षणमपि प्रथितं मनुष्यैर्विज्ञानविक्रमयशोभिरभज्यमानम् । तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ११ यो नात्मजे न च गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च बन्धुवर्गे । किं तस्य जीवितफलं हि मनुष्यलोके काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ १२ ॥ जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् । संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न बाधो ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ १३ ॥

## ऋणगर्हणम् ।

उत्तमर्णमुखं पश्यन्नधमर्णो ह्रिया नमन् । मृत्युजीवितयोर्युद्धसम्भ्रमं परिलोकते ॥१॥ ऋणत्रयं द्विजातीनां जन्मनः प्रभृति स्थितम् । ऋणान्तरभृतां पुंसां जीवनं जीवनं विना ॥२॥ ऋणत्रयमपाकर्तुं शास्त्रा-

---

१ चेष्टते । २ बहुभाषणकारी । ३ सागरस्य । ४ वृत्तान्तग्रहणे । ५ नष्टपादः । ६ रोदने । ७ कीर्तिर्दानादेः, यशस्तु शौर्यादेः प्रभवतीति भेद इत्याहुः । ८ भ्रमणशीले । ९ अर्घं प्रदातुम् । १० तेजोहीनत्वम् पराक्रमशून्यत्वं च । ११ अत्यन्तं रक्ततां नीता अनुरक्ता कृता च । १२ प्रसिद्धम् । १३ उदुम्बरफले जन्तव इवात्रापि नरास्तिष्ठन्ति ।

ज्ञाभङ्गभीः पुरः । चतुर्थर्णनिराकारे प्रत्यक्षं नृपतेर्भयम् ॥ ३ ॥ ऋणत्रयं निराकारि नूनं चाकारि येन नो । स एकः सुकृती लोकः सर्वत्र सुखमेधते ॥ ४ ॥ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रिकम् ॥ ५ ॥ पापं कर्तुमृणं कर्तुं मन्यन्ते मानवाः सुखम् । परिमाणोऽतिगहनो महतामपि नाशकृत् ॥ ६ ॥ लोकद्वयप्रतिभैयैकनिदानमेतद्धिक्प्राणिनामृणमहो परिणामघोरम् । एकः स एव हि पुमान्परमस्ति लोके क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ ७ ॥

## देशान्तरनिषेवणम् ।

यो न संचरते देशान्यो न सेवेत पण्डितान् । तस्य संकुचिता बुद्धिर्घटबिन्दुरिवाम्भसि ॥ १ ॥ यस्तु संचरते देशान्यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥ २ ॥ स्वदेशं परिहायान्यं देशं यः सेवते जनः । सुरभिं स निराकृत्य रासभीं भजते जडः ॥ ३ ॥ व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् । यो गृहेष्वेव निद्राति दरिद्राति स दुर्मतिः ॥ ४ ॥ देशे देशे किमपि कुतुकादद्भुतं लोकमानाः संपाद्यैव द्रविणमतुलं सद्म भूयोऽप्यवाप्य । संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः सतीभिः सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ॥ ५ ॥ आकिञ्चन्यादतिपरिचयाज्जाययोपेक्ष्यमाणो भूपालानामननुसरणाद्बिभ्यदेवाखिलेभ्यः । गेहे तिष्ठन्कुमतिरलसः कूपकूर्मैः सधर्मा किं जानीते भुवनचरितं किं सुखं चोपभुङ्क्ते ॥ ६ ॥ तीर्थानामवलोकनं परिचयः सर्वत्र वित्तार्जनं नानाऽऽश्चर्यनिरीक्षणं चतुरता बुद्धेः प्रशस्ता गिरः । एते सन्ति गुणाः प्रवासविषये दोषोऽस्ति चैको महान्यन्मुग्धामधुराधराधरसुधापानं विना स्थीयते ॥ ७ ॥

## व्यापारिप्रभावप्रशंसनम् ।

कौशलस्य च भाग्यस्य व्यापारो निकषोपलः । अव्यापृण्वानलोकस्य कथं प्रस्फुटता भवेत् ॥ १ ॥ व्यापारे वर्धते लक्ष्मीर्व्यापारे चैव कौशलम् । हन्त व्यापारहीनानामकर्मण्यत्वमूर्जितम् ॥ २ ॥ आसीत्सत्ययुगे बलिस्तदनु च त्रेतायुगे भार्गवो रामः सत्यपराक्रमोऽथ भगवान्धर्मस्तथा द्वापरे । दाता कोऽपि न चास्ति संप्रति कलौ जीवन्ति केनार्थिनश्चेत्यवं कृतनिश्चयेन विधिना व्यापारिणो निर्मिताः ॥ ३ ॥ शक्रोद्याननिवासितामधिगतो दाता स कल्पद्रुमः पाताले किल कामधेनुरपि सा कामप्रसूरन्वगात् । इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिरक्षणार्थमधुना व्यापारिणो निर्मिताः ॥ ४ ॥ कौपीनं धृतवान्हरोऽपि भगवान्विष्णुः प्रविष्टो जलं वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः । इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिजीवनार्थमधुना व्यापारिणो निर्मिताः ॥ ५ ॥

## कलिप्रभाववर्णनम् ।

कलिभूपे समायाते धर्मोऽधर्मायते भुवि । अधर्म्मः सर्वतः पुंसां हन्त धर्मवदर्थ्यते ॥ १ ॥ कलिमायान्तमुत्प्रेक्ष्य विलीयन्ते सुरा अपि । तदाश्रितस्य धर्म्मादेः का कथा जीवने पुनः ॥ २ ॥ कलिसाम्राज्यमासाद्य न भेतव्यं भवान्तरात । धर्म्मानुष्ठानमूढानां भीतिरेकाऽवशिष्यते ॥ ३ ॥ यवनैरवनिः क्रान्ता हिन्दवो विन्ध्यमाविशन् । बलिना वेदमार्गोऽयं कलिना कवलीकृतः ॥ ४ ॥ सीदन्ति चाग्निहोत्राणि

---

१ ब्राह्मणधनम् । २ भयङ्कर- । ३ मुख्यकारणम् । ४ स्थानम् । ५ दरिद्रत्वात । ६ समानः । ७ जमदग्निनन्दनः । ८ कामधेनुः ।

गुरुपूजा प्रणश्यति। कुमार्यश्च[1] प्रसूयन्ते प्राप्ते कलियुगे सदा ॥ ५ ॥ परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात्[2]। परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे ॥ ६ ॥ राक्षसाः कलिमाश्रित्य जायन्ते ब्रह्मयोनिषु । ब्राह्मणानेव बाधन्ते तत्रापि श्रोत्रियान्कृशान् ॥ ७ ॥ कुशलाः शब्दवार्तायां वृत्तिहीनाः सुरागिणः। कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ८ ॥ वागुच्चारोत्सवंमन्यास्तत्क्रियां कर्तुमक्षमाः। कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ९ ॥ कृते च रेणुका कृत्या त्रेतायां जानकी तथा । द्वापरे द्रौपदी कृत्या कलौ कृत्या गृहे गृहे ॥ १० ॥ मद्युगमध्योत्पन्नाः कृतयुगधर्मानुसारिणः किमिति। इति रोषादिव कलिना पीड्यन्ते साधवो वलिना ॥ ११ ॥ नाधीतेऽत्र जनो यदि कश्चिदधीते शते सहस्रे वा । दुस्तर्केषु भ्राम्यति दूरीकुरुते श्रुतिस्मृतिसुतर्कान् ॥ १२ ॥ सीदन्ति सन्तो विलसन्त्यसन्तः पुत्रा म्रियन्ते जनकश्चिरायुः। परेषु मैत्री स्वजनेषु वैरं पश्यन्तु लोकाः कलिकौतुकानि ॥ १३ ॥ एतादृशे कलियुगेऽपि शतेषु कश्चिज्जातादरो जगति यः श्रुतिमार्ग एव । यत्किञ्चिदाचरतु पात्रमसौ स्तुतीनां श्लाघ्यं मितोपमपि किं न मरौ सरश्चेत्[4] ॥ १४ ॥ उपनयनविवाहावुत्सवैकप्रधानौ कलिविभवत एषां कालभेदानभिज्ञाः। विजहति न कदाचिद्वेदपाठैकयोग्ये वयसि च यवनानीवाचनाभ्यासमेते ॥ १५ ॥ न देवे देवत्वं कपटपटवस्तापसजना जनो मिथ्यावादी विरलतरवृष्टिर्जलधरः। प्रसङ्गो नीचानामवनिपतयो दुष्टमनसो जना भ्रष्टा नष्टा अहह कलिकालः प्रभवति ॥ १६ ॥ गता गीता नाशं क्वचिदपि पुराणं व्यपगतं विलीनाः स्मृत्यर्था निगमनिचयो दूरमगमत्। इदानीं रैदासप्रभृतिवचनैर्मोक्षपदवी तदेवं जानीमो कलियुग तवैवैष महिमा ॥ १७ ॥ अपारैर्व्यापारैरहरिह नयन्तोऽशनदशास्वथ स्नाताः संध्यां विदधति न जातु स्वसमये । त्यजन्तः स्वां वृत्तिं द्विजकुलभवग्रामगणकीभवन्तो हन्तामी कथमपि च जीवन्ति बहवः ॥ १८ ॥ कुक्षेः पूर्त्यै यवनविततेर्भृत्यकृत्यानि कर्तुं विक्रीणीते वपुरपि निजं वेतनैरेतदास्ताम् । विप्रो भूत्वाप्यहह गणनानैपुणैर्वञ्चयित्वा स्वर्णस्तेयं रचयति जनः स्वामिनां पोषकाणाम् ॥ १९ ॥ वेदव्यासः स नव दश यो वेद वेदाक्षराणि श्लोकं त्वेकं परिपठति यः स स्वयं जीव एव । आपस्तम्बः स इह कलयत्सम्यगौपासनं यः कष्टं शिष्टक्षितिकृति कलौ कार्श्यमृच्छन्ति विद्याः ॥ २० ॥ ये कायस्थजनाश्च ये नृपसुता ये च द्विजाः शास्त्रिणस्ते यत्नादनुसृत्य निर्दयतया शुष्कांस्तुरुष्कांविपान्[10]। देवान्भूमिसुरांश्च पान्ति कृतिनस्ते चेन्मुधोदासते[11] ब्राह्मण्याय जलाञ्जलिः किल भुवि प्राज्ञैः प्रदेयो भवेत् ॥ २१ ॥ आक्रान्तासु वसुन्धरासु यवनैरासेतुहेमाचलं विद्राणे[12] क्षितिभृद्गणे विकरुणे निद्राति नारायणे। निर्विघ्नप्रसरे कलावपि बलान्निष्कण्टकं वैदिकं पन्थानं किल तत्र तत्र परिपाल्येको हि लोकोत्तरः ॥ २२ ॥ अज्ञानामविरामलौकिकवचोभाजाममीषां पुनर्मन्त्रोच्चारण एव पर्यवसितं मौनव्रतं कर्मसु। ग्रामायव्ययलेखनेन नयतां कालानशेषानहो पारम्पर्यत ईदृशामिह नृणां ब्राह्मण्यमन्यादृशम् ॥२३॥ ये मुष्णन्ति निशि प्रविश्य भवनं यो वा बलात्कानन नैते स्वामिधनं हरन्ति ननु तान्निन्दन्ति चोरा इति। सद्यो हन्त हरन्ति पोषकधनं संख्यां विपर्यस्य ये कष्टं तानपि वञ्चकानिह पुरस्कुर्वन्ति सर्वे जनाः ॥ २४ ॥ सौहार्दं शशशृङ्गवत्सुजनता वन्ध्यासुतस्पर्धिनी[13] किं ब्रूमो गुणिनां गुणग्रहिलता व्योमप्रसूनोपमा । दृष्टिः शीलसुधाहलाहलमयी राज्ञां

---

१ अनूढा बालिकाः। २ दानग्रहणात्। ३ स्वाध्यायपरो न भवति । ४ स्वल्पजलम्। ५ निर्जलदेशे। ६ पृथिवी-। ७ सुरगुरुः । ८ स्मार्तविधिना स्थापितं पावकम्। ९ लभन्ते । १० म्लेच्छविशेषान्। ११ उदासीना भवन्ति। १२ नष्टे। १३ वन्ध्यासुतसदृशी।

सुधामण्डले लोके संप्रति यत्कले स जयति त्वद्दृष्टिलीलारसः ॥ २५ ॥ निर्वीर्या पृथिवी निरोषधिरसा नीचा महत्त्वं गता भूपाला निजकर्मधर्मरहिता विप्राः कुमार्गे रताः । भार्या भर्तृविरोधिनी पररता पुत्राः पितुर्द्वेषिणो हा कष्टं खलु वर्तते कलियुगे धन्या नरा ये मृताः ॥ २६ ॥ दूरादर्थिनमाकलय्य भजते सद्यो विरूपाक्षतां सङ्गे किं च विरोचनत्वमथ संस्थाने नृसिंहाकृतिम् । पाण्डित्योक्तिषु वैक्रतुण्डरचनां दाने त्वपर्णात्मतामेकः पञ्चसुरात्मकः प्रभुरहो भाग्यैः कलौ लभ्यते ॥२७॥ धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरे गतं पृथ्वी मन्दफला नराः कपटिनश्चित्तं च शाठ्योर्जितम् । राजानोऽर्थपरा न रक्षणपराः पुत्राः पितुर्द्वेषिणः साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ॥ २८ ॥ सन्तः क्वापि न सन्ति सन्ति यदि वा दुःखेन जीवन्ति ते विद्वांसोऽपि न सन्ति सन्ति यदि वा मात्सर्ययुक्ताश्च ते । राजानोऽपि न सन्ति सन्ति यदि वा लोभाद्धनग्राहिणो दातारोऽपि न सन्ति सन्ति यदि वा सेवानुकूलाः कलौ ॥ २९ ॥ हर्म्यस्थानमधर्मकर्मविततेर्दुर्मानभर्मासनं शास्त्रस्तोमललाटभूलिपिलयः शान्तिः सर्वानामपि । सर्वाम्नायवचःसमापनदिनं संस्था सदर्चाविधेरर्थाशाजनिभूरभूदिह महानर्थावहोऽयं कलिः॥ ३०॥ प्रातर्हन्त कृताप्लवोऽपि रजकस्पृष्टाम्बुजडो रासभैः रूढान्धारयते पटाननुदिनं धृत्वा बहिर्गच्छति । गत्वा म्लेच्छमुखाशुचीन्स्पृशति च स्पृष्ट्वापि न स्नात्यहो न स्नातोऽप्यथ भुङ्क्ते एव चपलो भुक्त्वापि न व्रीडति ॥ ३१ ॥ शस्त्रैर्जीवति शास्त्रमुज्झति परं शूद्राहृतैरम्बुभिः स्नात्वाऽऽचामति देवताः स्नपयति स्वैरं पचत्योदनम् । उच्छिष्टान्न बिभेति याति यवनैरुच्चावचैः संगतिं मातङ्गैर्निकटं गतानगणयन्मार्गान्मुहुर्गाहते[15] ॥ ३२ ॥ नीचैर्दुर्यवनैः शुनीभिरपि वा निःशङ्कमालोकितं भुङ्क्ते पङ्क्तिविदूषकैः सह नरैरज्ञातवेदाक्षरैः । मद्यास्वादनमत्तचित्तजनताम्मोहाय भीहानितः कर्माण्यारभते श्रुतिस्मृतिवचोदूराण्यसाराण्यहो ॥ ३३ ॥ विद्वत्ता वसुधातले विगलिता पाण्डित्यधर्मो गतः श्रोतॄणां हृदयेष्वबुद्धिरधिका ज्ञानं गतं चारणे । गाथागीतविनोदवाक्यरचनायुक्त्या जगद्रञ्जितं ज्योतिर्वैद्यकशास्त्रसारमखिलं क्षुद्रेषु जातं कलौ ॥ ३४ ॥ धिक्त्वां रे कलिकाल याहि विलयं केयं विपर्यस्तता हा कष्टं श्रुतिशालिनां व्यवहृतिर्म्लेच्छोचिता दृश्यते । एकैर्वाङ्मयदेवता भगवती विक्रेतुमानीयते निःशङ्करपरैः परीक्षणविधौ सर्वाङ्गमुद्घाट्यते ॥ ३५ ॥ कन्यां काममुद्वह्य प्रविजहदुदयद्यौवनामज्ञ एनां द्रव्याशापाशकृष्टो भ्रमति चिरतरं हन्त देशान्तरेषु । अन्योन्याश्लेषवाञ्छाविगलितवयसोरात्तमालिन्यमत्योर्दम्पत्योर्व्याकृतं वै हतविधिरुभयोर्लोकयोः शोकयोगम् ॥ ३६ ॥

## मदिरागर्हणम्।

वैकल्यं धरणीपातमयथोचितजल्पनम् । संनिपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ १ ॥ एकतश्चतुरो वेदा ब्रह्मचर्यं तथैकतः । एकतः सर्वपापानि मद्यपानं तथैकतः ॥ २ ॥ मद्यपस्य कुतः सत्यं

---

१ विकृतनयनत्वम् । शङ्करत्वं च । २ रुचिशून्यत्वं, भास्करत्वं च । ३ नृसिंहस्येव भयावहाकृतिम् नृसिंहस्याकृतिं च । ४ कुटिलमुखत्वम्, गणेशरूपत्वं च । ५ पत्रहीनतां भगवतीं च । ६ विषण्णो भवति । ७ सुवर्णस्यासनम् । ८ यज्ञानाम् । ९ वेदगीः । १० मरणम् । ११ कृतस्नानः । १२ गर्दभैः । १३ म्लेच्छविशेषैः । १४ चण्डालान् । १५ प्रविशति । १६ यस्यां पङ्क्तौ भुञ्जते अवतिष्ठन्ते वा तस्यां स्थितान् सर्वान् साधूनपि ये पतितानिव कुर्वन्ति तादृशैः । १७ विकलतम् । १८ भुवि पतनम् । १९ जल्पनं वचनम् । २० वातादिदोषत्रयस्य ।

दया मांसाशिनः कुतः । कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥ ३ ॥ अयुक्तं बहु भाषन्ते यत्र कुत्रापि शेरते । नग्ना विक्षिप्य गात्राणि बालका इव मद्यपाः ॥ ४ ॥ मत्तो हिनस्ति सर्वं मिथ्या प्रलपति हि विकलया बुद्ध्या । मातरमपि कामयते सावज्ञं मद्यपानमत्तः सन् ॥ ५ ॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्यामुपैति । पापं कृत्वा दुर्गतिं यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम् ॥ ६ ॥

## तमाखुः ।

तमाखुपत्रं[2] राजेन्द्र भज माज्ञा[3]नदायकम् । तमाखु[4]पत्रं राजेन्द्र भज माज्ञानदा[5]यकम् ॥ १ ॥ दारिद्र्यशीलोऽपि नरस्तमाखुं नैव मुञ्चति । निवारितोऽपि मार्जारस्तमाखुं नैव मुञ्चति ॥ २ ॥ बिडौजाः[6] पुरा पृष्टवान्पद्मयो[7]निं धरित्रीतले सारभूतं किमस्ति । चतुर्भिर्मुखैरित्यवोचद्विरिञ्चिस्तमाखुस्तमाखुस्तमाखुस्तमाखुः ॥३॥ न स्वादु नौषधमिदं न च वा सुगन्धि नाक्षिप्रियं किमपि शुष्कतमाखुचूर्णम् । किं चाक्षिरोगजनकं च तदस्य भोगे बीजं नृणां नहि नहि व्यसनं विनाऽन्यत् ॥ ४ ॥ सुपर्ण[8]परिसेवितस्तदनु साधुपू[9]गान्वितो द्विजा[10]वनमहापटुस्तदनु सारसं[11]धानभाक् । सदैव सुधया[12]ऽशनं भवति यस्य विष्णोः समस्तमाखुरिति सेव्यतां भवति वै यतो (ऽ)[13]रागिता ॥ ९ ॥ श्रीकृष्णः पूतनायाः स्तनमलमपिबत्कालकूटेन पूर्णं प्रस्कन्नं भूप्रदेशे किमपि च पिबतो यत्तदा तस्य वक्त्रात् । तस्मादेषा तमाखुः सुरवरपरमोच्छिष्टमेतद्दुरापं स्तुत्वा नत्वा मिलित्वा ह्यनिशमतिमुदा सेव्यते वैष्णवाग्र्यैः ॥ ६ ॥ भ्रातः कस्त्वं तमाखुर्गमनमिह कुतो वारिधेः पूर्वपारात्कस्य त्वं दण्डधारी नहि तव विदितं श्रीकलेरेव राज्ञः । चातुर्वर्ण्यं विधात्रा विविधविरचितं ब्रह्मणा धर्महेतोरेकीकर्तुं बलात्तन्निखिलजगति रे शासनादागतोऽस्मि ॥ ७ ॥

इति सुभाषितसुधारत्नभाण्डागारे तृतीयं भाण्डं समाप्तम् ।

---

१ नाशयति । २ आखुः पत्रं वाहनं यस्य, 'तं' गणपतिम् । ३ मा लक्ष्मीः ज्ञानं तयोर्दातारमिति भावः । ४ तमाखुपत्रं प्रसिद्धम् । मा नैव भजेति पूर्वेणान्वयः । ५ अज्ञानदायकमिति तमाखुपत्रमित्यस्य विशेषणम् । ६ इन्द्रः । ७ ब्रह्माणम् । ८ गरुड- । सुन्दरनागवल्लीपत्रेति च । ९ साधूनां पूगाः समूहास्तैः अन्वितम्, सुन्दरक्रमुकफलयुक्तं च । १० ब्राह्मणरक्षणे पटीयान्, दन्तदार्ढ्यकरश्च । ११ सारस्य मोक्षरूपस्य सत्पुरुषार्थस्य सन्धानं प्राप्तिस्तं भजतीति । सारस्य खदिरतत्त्वस्य सन्धानं सम्मेलनं भजतीति तथोक्तः । १२ अमृतेन, श्वेतेन चूर्णविशेषेण च । १३ अरागिता-अननुरक्तत्वमिति भावः । रागिता-रक्तवर्णत्वं चेति ।

श्रीः ।

# चतुर्थं भाण्डम् ।

## विद्वत्सभाप्रशंसनम् ।

सभाकल्पतरुं वन्दे वेदशाशाखोपशोभितम् । शास्त्रपुष्पसमाकीर्णं विद्वद्भ्रमरमण्डितम् ॥ १ ॥ विद्वांसः कवयो भट्टा गायकाः परिहासकाः । इतिहासपुराणज्ञाः सभा सप्ताङ्गसंयुता ॥ २ ॥ धनदैर्धर्मराजैश्च कविभिर्गुरुभिर्वृता । सभा केषां न मोदाय दुर्जनेन विना यदि ॥ ३ ॥ द्विजराजैस्तथा मित्रैः कविभिश्च बुधैस्तथा । उल्लसन्मङ्गला(ऽ)मन्दा जीवश्रीश्शोभते सभा ॥ ४ ॥ अनन्तब्रह्मदीप्तश्रीर्विलसत्पुरुषोत्तमा । सशिवा सेश्वरा कस्य न मुदे परिषन्मता ॥ ५ ॥ सुमनोराजगुरुश्रीः सुनन्दना प्रस्फुरन्मरुत्सुरभिः । विमला नित्यविलासा जयति सुधर्मा समा सभा काचित् ॥ ६ ॥ विबुधसभा सत्कविगुरुरागमतत्त्वार्थनिर्णये नियता । कमनीयविभूतिभृता चेतसि महतां मुदं दधती ॥ ७ ॥

## राजसभाप्रशंसनम् ।

शक्तिमद्भिर्गणेशैश्च धनाध्यक्षैश्च भास्करैः । इतरैरीश्वरैर्जीवैः सौम्यै राजसभा युता ॥ १ ॥ धर्मराजाज्ञया दण्ड्यादण्ड्यत्वावधृतावपि । अर्थं निर्णयते यस्यामात्मना पुरुषोत्तमः ॥ २ ॥ दिव्यादिव्यव्यवस्थाऽऽस्ते यत्राधर्मश्च नेष्यते । राजन्नेवंविधा नित्यं शुभा जयतु ते सभा ॥ ३ ॥ पक्षपातो न यत्रास्ति न च शास्त्रविलङ्घनम् । नासत्यं न च वैषम्यं सभा राजंस्तवेदृशी ॥ ४ ॥ बुधवाचस्पतिप्राज्या

---

१ ब्राह्मणवर्यैः, चन्द्रैश्च । मित्रैः सुहृद्भिः, सूर्यैश्च । कविभिः काव्यनिर्मातृभिः, भृगुभिश्च । बुधैः पण्डितैः चन्द्रपुत्रैश्च । उल्लसन्मङ्गलं यत्र तादृशी, उल्लसन् मङ्गलः-भूमिपुत्रो यस्यां च । अमन्दजीवानां श्रीः शोभा यत्र तादृशी । मन्दः शनिः जीवः बृहस्पतिस्तयोः श्रीर्यत्र तादृशी च । अन्यत्स्पष्टम् । २ अनन्ता ये ब्रह्माणो ब्राह्मणा, विधातारश्च, तैर्दीप्ता श्रीर्यस्यास्तादृशी । विलसन्तः पुरुषोत्तमाः उत्तमाः पुरुषाः,नारायणाश्च यत्रेति, शिवेन श्रेयसा महेश्वरेण च सह वर्त्तमाना । ईश्वरेण- शासनकर्त्रा महेश्वरेण च सह वर्त्तत इत्येवम्भूता च । ३ सुमनसाम् उदाराणां सचेतसां वा ये राजानः मुख्यास्तैर्गुर्वी श्रीर्यस्याः सा, सुमनसां देवानां राजा इन्द्रः गुरुर्बृहस्पतिश्चेत्येताभ्यां दीप्ता श्रीर्यस्यां सेति च । शोभना नन्दना बटवो यत्र सेति, शोभननन्दनाख्यवनयुक्ता च । प्रस्फुरन् संचरन् मरुतः-पवनस्य सुरभिः सौगन्ध्यं यत्र, प्रस्फुरन्तो मरुतो दैत्यत्वेऽपि देवत्वं प्राप्ताः सुरभिः कामधेनुश्च यत्र सेति । सुधर्मा-शोभनधर्माढ्या, तदाख्या च । अन्यत्स्पष्टम् । ४ विशिष्टा ये बुधास्तेषां देवानां च सभा । सन्तः वर्त्तमानाः कवीनां गुरवो यत्र, सन्तौ कविः भृगुः गुरुर्बृहस्पतिश्च यत्र तौ । अन्यत्स्पष्टम् । ५ शक्तिमद्भिः पराक्रमिभिः, कार्तिकेयैश्च । गणानां सेनानामीशास्तैः, हेरम्बैश्च । धनाध्यक्षैः कोशाध्यक्षैः, कुबेरैश्च । भास्करैः भास्वरैः, सूर्यैश्च । ईश्वरैः समर्थैः शङ्करैश्च । जीवैः प्राणिभिः सुरगुरुभिश्च । सौम्यैः सुस्वभावैः चन्द्रपुत्रैश्च । स्पष्टमन्यत् । ६ धर्मराजो न्यायालयाध्यक्षो, यमश्च । ७ तत्त्वम् युक्तायुक्तत्वमिति भावः । ८ स्वयम् । ९ राजा, भगवांश्च । १० अभिलष्यते । ११ अत्रापि बुधादयः शब्दाः पूर्ववद् द्व्यर्थाः । तथाहि- बुधा विद्वांसः, सौम्यग्रहाश्च । वाचस्पतयो वाग्मीन्द्रा बृहस्पतयश्च, तैः प्राज्याऽतिशयितेति दिक् । व्यतिरेकालङ्कारश्चाप्येवंविधस्थलेषु स्वयमूह्यः ।

द्विजराजशताकुला । सभा ते भाति भूमीन्द्र सुधर्मातोऽधिका क्षितौ ॥५॥ सुवर्णवर्णललितपदविन्यासशालिनी । वाणीव भाति ललिता सभा ते जगतीपते ॥६॥ विबुधावलिसंपूर्णा सुखपूर्णा दिगीश्वरा । चतुराननसंपूर्णा स्वर्गादपि सभाऽधिका॥७॥गुरुरेकः कविरेकः सदसि मघोनेः[1] कलाधरो[2]ऽप्येकः । अद्भुतमत्र सभायां गुरवः[3] कवयः[4] कलाधराः[5] सर्वे ॥ ८ ॥ अनेकविद्वज्जनरत्नपूर्णं वेदोदकन्यायतरङ्गरम्यम् । अलङ्घनीयं गुरुतीर्थमेकं सभासमुद्रं शिरसा नमामि॥९॥सारस्वते[6] स्रोतसि दूरमग्नैः सुधीवरै[7]रुद्धृतसूक्तिरत्ने । न तत्किमप्युर्वरितं यदेषामुपायनीकृत्य पुरो भवेयम ॥ १० ॥ सद्वेदिमध्योत्तमहेमकुम्भस्तना सुवर्णाधिकृता प्रसन्ना । सद्रत्नभूषा विमला त्वयाऽसौ कान्तेव संसन्[8]नृप भाति रम्या ॥ ११ ॥ पद्मानना पद्मपलाशनेत्रा पद्मच्छविः पद्मकरामलांशुका । पद्मीशनाथैः[9] परिशीलनीया लक्ष्मीरिवाभाति नरेन्द्र ते सभा ॥१२॥ साग्नयो[10]ऽपि किल शीतलशीला विश्रुता[11] अपि बहुश्रुतवन्तः[12] । पण्डिता अपि जडाः[13] परवादे श्रोत्रिया इह सदा निवसन्ति ॥ १३ ॥ क्वचिच्चारुचामीकरा[14]रम्भरम्या क्वचिद्रत्नविद्योतितध्वान्तदक्षा । क्वचिद्धीरकश्रेणिकैलासहासा क्वचित्प्रस्फुरन्ती च हेम्ना समन्तात् ॥ १४ ॥ नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठात्पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते । वैवर्ण्यं स्वरभङ्गमञ्चति बलान्मन्दाक्षमन्दानना कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी[15] नवोढायते ॥ १५ ॥ चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुलं पर्यन्तस्थितचारनक्रमकरं नागाश्वहिंस्राश्रयम् । नानावाशक[16]कङ्कपक्षिरुचिरं कायस्थसर्पास्पदं नीतिक्षुण्णतटं च राजकरणं हिंस्रैः समुद्रायते ॥ १६ ॥

## राजमेलनम् ।

वयं द्विजा भवान् राजा समासविधया[17] ततः । स्थाने कुवलया[18]मोद इत्यस्मदनुषञ्जनम् ॥ १ ॥ कुमुद[19]मपि वर्धयसे कमल[20]मपि निराकरोषि राजंस्त्वम् । निधिरव्ययः कलानां दिवानिशं ते स्थिती रुचिरा ॥ २ ॥ क्षुत्क्षामार्भकसंभ्रमोक्तिनिगडैः किर्मीरिता नर्मतो भार्याक्रन्दितकुन्तकीलितहृदो गर्वाद्गुरुत्वं गताः । प्रभ्रष्टाः पदतः कदापि नहि ये तेऽद्य त्वदीयैर्गुणैराकृष्टा विदुषां वरा वयमहो त्वां द्रष्टुमभ्यागताः ॥३॥

## राजप्रशंसनम् ।

नरेन्द्र[21] त्वत्प्रभावेण भुजङ्गा[22] निर्गताः क्वचित् । कुमुदाभा कथं सूर्ये वर्धेत ननु राजति ॥ १ ॥ त्वत्प्रभाववशाद्राजन्नरयोऽपि दिवं गताः । रमन्तेऽद्य विमानेषु सममप्सरसां गणैः ॥ २ ॥ राजन्यशसि शुद्धांशौ वृथैव शशिनः स्थितिः । इति हन्त क्षयं भूयो नीयमानोऽपि वर्धते ॥ ३ ॥ तपनस्तापना नैव दीप्ते ते नृप तेजसि । इतीवामुं मुहुर्हन्त स्वर्भानुः[23] परिभावुकः ॥ ४ ॥ राजंस्त्वद्दर्शनेनैव गलन्ति त्रीणि

---

१ इन्द्रस्य । २ चन्द्रः । ३ शिक्षका बृहस्पतयश्च । ४ काव्यनिर्मातारः शुक्राचार्याश्च । ५ विद्याविशेषज्ञाः, चन्द्राश्च । ६ सरस्वत्या वाग्देव्याः, तदाख्याया नद्याश्चेदं तत्र । ७ सुधीषु विद्वत्सु वराः श्रेष्ठास्तैः । शोभना धीवराः कैवर्तास्तैरिति च । ८ सभा । ९ गजेन्द्रैः । १० आहुताग्नयः,अग्नियुक्ताश्च । ११ विख्याताः । अनधीतशास्त्राश्च । १२ श्रुतं प्रसिद्धिः, शास्त्रं च । १३ मूढाः, पराङ्मुखवृत्तयश्च । १४ सुवर्ण- । १५ वर्णयितुमशक्येति वक्तव्यम् । १६ विविधभाषणशीला नानावाशकाः, पिशुना इति भावः । १७ समासः एकत्र स्थितिः, पदैक्यकरणं च । १८ कुवलयस्य--भूमण्डलस्य, कुमुदस्य च,आमोदं प्रसन्नतां विकासं च । १९ कोः पृथिव्या मुदं, कुवलयं च । २० कस्यात्मनो मलं दोषं, पङ्कजं च । २१ हे राजन् ! गारुडमन्त्रज्ञ ! च । २२ खलाः जारा वा भुजङ्गाः । पक्षान्तरे सर्पा इति स्पष्टोऽर्थः । २३ राहुः । स्वर्गस्थोऽन्यः सूर्यश्च ।

तत्क्षणात्। रिपोः शस्त्रं कवेर्दैन्यं नीवीबन्धो मृगीदृशाम्॥ ५॥ चिरायत्कौतुकाविष्टं कल्पवृक्षमुदीक्षितुम्। तन्मे सफलमद्यासीन्नेत्रं त्वय्यवलोकिते॥ ६॥ सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे जनैः। नारयो लेभिरे पृष्ठं न वक्षः परयोषितः॥ ७॥ त्वया वीर गुणाकृष्टा ऋजुदृष्ट्या विलोकिताः। लक्ष्यं लब्ध्वै गच्छन्ति मार्गणा इव मार्गणाः॥८॥कल्पद्रुमो न जानाति न ददाति बृहस्पतिः। अयं तु जगतीजानिर्जानाति च ददाति च॥९॥रविः करसहस्रेण दशाशापरिपूरकः। त्वमेकेन करेणैव सहस्राशाप्रपूरकः॥ १०॥ बलिः पातालनिलयोऽधः कृतश्चित्रमत्र किम्। अधःकृतो दिविस्थोऽपि चित्रं कल्पद्रुमस्त्वया॥ ११॥आर्तानामिह जन्तूनामार्तिच्छेदं करोति यः। शङ्खचक्रगदाहीनो द्विभुजः परमेश्वरः॥ १२॥बहुधाराज्यलाभेन यस्तोषस्तव भूपते। बहुधाराज्यलाभेन स तोषो मम भूपते॥ १३॥भुजङ्गभोगसंक्रान्ता कलत्रं तव मेदिनी। अहंकारः परां कोटिमारोहति कुतस्तव॥ १४॥तुलामारुह्य रविणा वृश्चिके निहितं पदम्। भवता शिरसि न्यस्तमयत्नेनैव भोगिनाम्॥ १५॥ किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः। कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम्॥ १६॥ असिधारापथे नाथ शत्रुशोणितपिच्छले। आजगाम कथं लक्ष्मीर्निर्जगाम कथं यशः॥ १७॥ कोप्यऽन्यः कल्पवृक्षोऽयमेकोऽस्ति क्षितिमण्डले। यत्पाणिपल्लवोऽप्येकः कुरुतेऽधः सुरद्रुमम्॥ १८॥ अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः। मार्गणौघः समायाति गुणो याति दिगन्तरम्॥ १९॥ युधिष्ठिरोऽसि भीमोऽसि चरितैरर्जुनो भवान्। प्रज्ञया सहदेवोऽसि वाच्यता न कुलस्य ते॥ २०॥ बलिकर्णदधीचाद्याः पुरा पञ्चत्वमागताः। पञ्चत्वं न गताश्चित्रं त्वयि जीवति पञ्चमे॥ २१॥ एक एव महान्दोषो भवतां विमले कुले। लुम्पन्ति पूर्वजां कीर्तिं जाता जाता गुणाधिकाः॥ २२॥ मग्नासु रिपुसेनासु नरेन्द्र त्वं महामहाः। खड्गान्तर्निजमेवैकमद्राक्षीः संमुखं मुखम्॥२३॥ किं वर्ण्यतां कुचद्वन्द्वमस्याः कमलचक्षुषः। आसमुद्रकरग्राही भवान्यत्र करप्रदः॥ २४॥ वेधा वेदनयाश्लिष्टो गोविन्दोऽपि गदान्वितः। शम्भुः शूली विषादी च देव केनोपमीयसे॥२५॥तृष्णाऽपहारी विमलो द्विजावासो जनप्रियः। ह्रदः पद्माकरः किंतु बुधस्त्वं स जलौ (डा) श्रयः॥ २६॥ सदाहंसालसं बिभ्रन्मानसं प्रचलज्जलम्। भूभृन्नाथोऽपि नायाति यस्य साम्यं हिमालयः॥ २७॥ मीमांसको महीपोऽयमन्यथा शक्तिमान्कथम्। नैयायिकोऽपि स्यादेव परशक्तेस्तु खण्डनात्

---

१ गुणो मौर्वी, उदारत्वादि च। २ शरव्यं, तन्मितं द्रव्यं च। ३ अर्थिनः। ४ शराः। ५ जगती पृथिवी जाया यस्य सः। जायेव भोग्या यस्य पृथिवी तादृशः। ६ करा रश्मयः पाणयश्च। ७ आशा दिशो मनोरथाश्च। ८ बहुधारं यद्राज्यं धृतं तल्लाभेन। ९ भुजङ्गभोगः शेषफणा जारोपभोगश्च। १० तुलावृश्चिकौ राशिविशेषौ। ११ लम्पटानां सर्पाणां च। १२ सत्ययुगेन। १३मार्गणा अर्थिनः शराश्च। १४उदारत्वादि,लक्षणया तद्यशः,मौर्वी च। १५युधि सङ्ग्रामे तिष्ठतीत्येवम्भूतः,अजातशत्रुश्च। १६ भयङ्करः,भीमसेनश्च। १७ निर्मलः,गाण्डीवी च। १८ प्रज्ञया बुद्ध्या सह वर्त्तत इत्येवम्भूतो देवः—भवानस्तीत्यर्थः। माद्रीपुत्रः सहदेवः प्रज्ञयाऽसीति च। १९ कुलस्य वंशस्य वाच्यता निन्दनीयता नेति, नकुलस्य वाच्यता नकुलपदप्रतिपाद्यत्वं च। २० आद्यपदेन शिबेर्ग्रहणम्। २१ मृत्युम्। २२ पूर्वजापेक्षयाऽवरजानां गुणमहिम्ना महितत्वादिति वक्तव्यम्। २३ वेदस्य नय उपदिष्टो मार्गस्तेनाश्लिष्टोऽनुगतः, वेदनया पीडयाऽश्लिष्टश्च। २४ गदया गदेन चान्वितः। २५ त्रिशूलधारी, शूलरोगपीडितश्च। २६ विषभक्षकः विषण्णश्च। २७ तृष्णा कामना पिपासा च। २८ द्विजाः पक्षिणो ब्राह्मणाश्च। २९ पद्मा लक्ष्मीः, पद्मानि कमलानि च। ३० बुद्धिमान्। ३१ जलस्याश्रयः, जडानामाश्रयश्च। ३२ एको यथाश्रुतोऽर्थः, द्वितीयस्तु सालसं सदाहं प्रचलत् क्षुब्धं, जलं जडं, कर्त्तव्यमूढमिति यावत् मानसं चित्तम्। ३३ भूभृतः पर्वताः, राजानश्च इत्यादि—।

॥ २८ ॥ राजान्दौवारिकादेव प्राप्तवानस्मि वारणम्[1] । मदेवारणमिच्छामि[2] त्वत्तोऽहं जगतीपते
॥ २९ ॥ राजन्कनकधाराभिस्त्वयि सर्वत्र वर्षति । अभाग्यच्छत्रसंच्छन्ने मयि नायान्ति बिन्दवः
॥ ३० ॥ सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा । परमेकं न जानासि वक्तुं नास्तीति
याचके ॥ ३१ ॥ आश्वासस्नेहभक्तीनामेकमालम्बनं महत् । प्रकृष्टस्येव धर्मस्य प्रसादो
मूर्तिसंचयः ॥ ३२ ॥ सत्यभामासमाश्लिष्टः[3] साधुवृन्दावने रतः । यशोदयासमायुक्तस्त्वां पायात्त्वादृशो
हरिः॥३३॥भवान्हि भगवानेव गतो भेदः परस्परम् । महत्यागदयायुक्तः[4] सत्यभामासमाश्रितः[5] ॥ ३४ ॥
एकमेव गुणं प्राप्य नम्रतामगमद्धनुः । तवाशेषगुणा राज्ञः स्तब्धतेति सुविस्मयः ॥ ३५ ॥ भूषणाद्युप-
भोगेन प्रभुर्न भवति प्रभुः । परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ ३६ ॥ कस्ते शौर्यमदो योद्धुं त्वय्येकं
सप्तिमास्थिते[6] । सप्तसप्तिसमारूढा[7] भवन्ति परिपन्थिनः[8] ॥ ३७ ॥ हुतमिष्टं च तप्तं च धर्मश्चायं
कुलस्य ते । गृहात्प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः ॥ ३८ ॥ फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहया-
धिपः[9] । द्रष्टुमाखण्डलैः[10] शक्तः काहमेष क्व ते गुणाः ॥ ३९ ॥ अमितैः[11] समितैः[12] प्राप्तैरुत्कर्षैर्हर्षदैः[13]
प्रभो । अहितैः[14] सहितैः[15] साधुर्यशोभिरसतामसि ॥ ४० ॥ स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ४१ ॥ पश्यन्त्यसंख्यपथगां[16] त्वद्दानजलवाहिनीम् । देव
त्रिपथगाऽऽत्मानं गोपयत्युग्रमूर्धनि ॥ ४२ ॥ यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः । पृथिव्या रक्षणे
राजन्नेकत्र त्वयि तत्स्थितम् ॥ ४३ ॥ त्वयि सङ्ग्रामाङ्गणं प्राप्ते धनुषाऽऽसादिताः शराः । शरैर-
रिशिरस्तेन भूस्तया त्वं त्वया यशः ॥ ४४ ॥ ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः । निधीयन्ते तयोः
स्थूलाः स्तनयोरश्रुबिन्दवः ॥ ४५ ॥ मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः । श्रुत्वा कुतोऽपि त्वन्नाम
लेभिरे विषमां दशाम् ॥ ४६ ॥ यस्य चेतसि निर्व्याजं द्वयं तृणकणायते । क्रोधे विरोधिनां सैन्यं
प्रसादे कनकाचलः ॥ ४७ ॥ देव त्वद्दानपाथोधौ[17] दारिद्र्यस्य निमज्जतः । न कोऽपि हि करालम्बं दत्ते
मत्तेभदायक॥४८॥राजचन्द्रं समालोक्य त्वां तु भूतलमागतम् । रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यप्युपागमन्
॥४९॥ धारयित्वा त्वयाऽऽत्मानं महात्यागधना[18] विभो । मोचिता बलिकर्णाद्याः स्वयशोगुप्तकर्मणः ॥५०॥
क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी । ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र दरिद्रता ॥ ५१ ॥ योऽसकृ-
त्परगोत्राणां[19] पक्षच्छेदक्षणक्षमः[20] । शतकोटिदतां[21] बिभ्रद्विबुधेन्द्रः स राजते ॥ ५२ ॥ विपदो यान्ति
वैमुख्यं साम्मुख्यं सम्पदः सताम् । सम्मुखे त्वयि राजेन्द्र द्विषतां पुनरन्यथा ॥ ५३ ॥ न क्षमो वक्तुम-
न्तःस्थां कीर्तिं किमितरां पुनः । इत्येव त्यक्तकर्णत्वं मन्ये शेषस्य भूपते ॥ ५४ ॥ राजंस्तव प्रतापेन

---

१ निवारणं हस्तिनं च । २ मम अवारणं प्रवेशनिषेधाभावः। मदेन युक्तं वारणं च । ३ सत्येन भया च मया लक्ष्म्या समाश्लिष्टः। सत्यभामया समाश्लिष्टश्च। उत्तमे वृन्दावने साधुवृन्दस्यावने रक्षणे च । यशोदयाभ्यां यशोदया यशोदाऽऽख्यया देव्या च समायुक्तः। ४ महत्या गुर्व्या गदया, महः उत्सवः, त्यागो दानं, दया चेति ताभिर्युक्तः। ५ सत्येन भया तेजसा मया-लक्ष्म्या चेति सत्यभामया समायुक्तश्च। ६ तुरगम् । ७ सूर्यमण्डलद्वारोर्ध्वपदं गन्तारः। ८ शत्रवः । ९ सहस्रभुजः । १० इन्द्रः । ११ अमितः अपरिच्छेद्यः । १२ सङ्ग्रामात् परिमितश्च। १३ सद्भ्यो मित्रेभ्यो वा हर्षं ददातीति असतां शत्रूणां च हर्षं द्यतीति तत्सम्बुद्धौ च। १४ असतामहितः। हितायुक्तश्च। १५ साधुयशोभिः सहितः। १६ भवान् विविधरीत्या प्रदान-परः। गङ्गाप्रवाहस्तु मार्गत्रयेण एव प्रवृत्तः इति लज्जयोग्रस्य महेश्वरस्य शिरसि गुप्त-तयाऽवतिष्ठत इति भावः। १७ पाथोधिः समुद्रः। १८ त्यागो दानम्। १९ प्रकृष्टानां पर्वतानाम्, शत्रुवंशानां च। २० गरुत्- । सहायक- । २१ शतकोटिर्वज्रम्। कोटिशतमितं द्रव्यं च ।

निस्तापाः सज्जनाः कृताः । संतप्ता दुर्जना भूयो निखिले धरणीतले ॥ ५५ ॥ ताम्बूलेन विना राजजडीभूता सरस्वती । न निःसरेन्मुखाद्वाणी गृहात्कुलवधूरिव ॥ ५६ ॥ अर्थिप्रत्यर्थिलक्षैरप्यपराङ्मुखचेतसम् । त्वां पराङ्मुखतां निन्युः केवलं पर[1]योषितः ॥५७॥ तव निर्वर्णयद्वर्णं स्वर्णं वर्णय तादृशे । त्वत्कोशाद्गत निर्गत्य तीर्थेषु वसति ध्रुवम् ॥ ५८॥ न समासैः[2] समर्थस्य वसु[3]व्याकरणस्य ते । विग्रहो[4] नैव केनापि न परः सर्वनामभाक् ॥ ५९ ॥ अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् । तदवस्था पुनर्दैव नान्यस्य मुखमीक्षते ॥ ६० ॥ धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः । गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥ ६१ ॥ अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते देव सद्वंशमुक्तारत्नं न कैर्[5]भवान् ॥ ६२ ॥ शासति त्वयि हे राजन्नखण्डावनिमण्डलम् । न मनागपि निश्चिन्ते मण्डले शत्रुमित्र[6]योः ॥ ६३ ॥ मत्वा लोकमदातारं संतोषे यैः कृता मतिः । त्वयि राजनि ते राजन्न तथा व्यवसायिनः ॥ ६४ ॥ पद्मोदय[7]दिनाधीशः सदागतिसमीरणः । भूभृदावलिदम्भोलिरेक एव भवान्भुवि ॥ ६५ ॥ [8]सन्नारीभरणोमायमाराध्य विधुशेखरम् । सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥ ६६ ॥ देवं[9] त्वमेव पातालमाशानां त्वं निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ ६७ ॥ जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ॥ अतिगाढगुणस्यास्य नब्जवद्भङ्गुरा गुणाः ॥ ६८ ॥ अखण्डमण्डलः[10] श्रीमान्पश्यैष पृथिवीपतिः । न निशाकरवज्जातु कला[11]वैकल्यमागतः ॥ ६९ ॥ अरातिविक्रमालोकविकस्वरविलोचनः । कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ७० ॥ कानने सरिदुद्देशे गिरीणामपि कन्दरे । पश्यन्त्यन्तकसंकाशं त्वामेकं रिपवः पुरः ॥ ७१ ॥ उद्दण्डे भुजदण्डे तव कोदण्डे परिस्फुरति । अरिमण्डलरविमण्डलरम्भाकुचमण्डलानि वेपन्ते ॥ ७२ ॥ भवतामहमिव बहवो मम तु भवानिव भवानेव । कुमुदिन्यः कति न विधोर्विधुरिव विधुरेव कुमुदिन्याः ॥ ७३ ॥ लब्धार्ध[12]चन्द्र ईशः कृतकंसभयं च पौरुषं विष्णोः । ब्रह्माऽपि नाभि[13]जातः केनोपमिमीमहे नृप भवन्तम् ॥ ७४ ॥ सरल[14]प्रियं गुणाढ्यं लम्बितमालं विचित्रतिलकं च । वनमिव वपुस्तवैतत्कथमवनं नृप जनस्यास्य ॥ ७५ ॥ बाणकरवीरदमनकशतपत्रकबन्धुजीवकुसुमानि । नृप विविधविटपरूपस्तथापि विटपैः[15] कथं नासि ॥ ७६ ॥ स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः । चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ७७ ॥ कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्खा[16]नाम् । रचितो रजोभरपयस्तेजःश्वासान्तराम्बरै[17]रेषः ॥ ७८ ॥

---

१ शत्रु- २ सङ्कोचः । पदैक्यसङ्घटनाविशेषश्च । ३ धन- । अष्ट- । ४ युद्धं, समासकलनात्प्रागवस्था च । ५ वेणु- । कुल- । ६ मित्रः सूर्यः । ७ पद्मायाः उदय एव पद्मानामुदयस्तत्र दिनाधीशः । सतामागतिरागमनं, सैव सदागतिः पवनः, तस्य समीरणः प्रवर्तकः । भूभृदावली राजगण एव पर्वतसङ्घस्तत्र दम्भोलिः वज्ररूपः । ८ सत्यो या नार्यस्ताः सौभाग्यादिदानद्वारा बिभर्ति पालयतीति सन्नारीभरणा तादृशी योमा पार्वती तां याति तया सह सङ्गच्छते इत्येवम्भूतं विधुशेखरमाराध्य सन्ना विषादं गता अरीणां शत्रूणामिभा हस्तिनो यत्र तादृशो रणो यस्य सः, अमायो निष्कपटः त्वं ततः सर्वत्र प्रभाववशाद् व्याप्तः सन् पृथिवीं जय । ९ अलं पाता रक्षकः पातालरूपश्च आशानां मनोरथानां दिशां च । चामरयोर्या मरुत्तस्य भूमिः अमराश्च मरुतश्च तेषां भूमिराश्रयरूपश्च । स्पष्टमन्यत् । १० राज्यं बिम्बं च मण्डलम् । ११ कला कौशलविशेषः, प्रकाशावच्छेदविशेषश्च, तद्वैकल्यम् । १२ शशिखण्डशेखरः, गलहस्तपरिभवं प्राप्तश्च । १३ नाभिकमलजातत्वात् । अभिजातः कुलीनो नेति च । १४ सरलानां प्रियम् गुणैराढ्यं, सरलप्रियङ्गुणा वृक्षविशेषेणाढ्यं च । लम्बिता माला यस्य तं, लम्बितस्तमाला यत्र तम्, विचित्राणां लोकोत्तरप्रभावाणां तिलकं, विचित्रास्तिलकाः-वृक्षविशेषाश्चेत्येवम्भूतं च । १५ विटाः शृङ्गारसहाया अनुचरविशेषास्तान् पातीति तथोक्तः, स्कन्धश्च । १६ शङ्खः कोशः । १७ अयं राजा क्रमेण कल्पतर्वादेः रजोभरादिभिर्विहित इति यथातथमूह्यम् ।

शत्रून् प्रति बत पृष्ठं परस्त्रियः प्रति च मानसामोदम् । पिशुनान्प्रति संवासं न ददासि कुतो विभो दाता ॥७९॥ तिग्मरुचिरप्रतापो[1] विधुरनिशाकृद्विभो मधुरलीलः । मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ८० ॥ शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदति पुनः स भात्युदारोऽनुदारश्च[2] ॥ ८१ ॥ क्षणदासावक्षणदा[3] वनमवनं व्यसनमव्यसनम्[4][5] । बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥ ८२ ॥ प्रधनाध्वनि[6] धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्[7][8] । दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ ८३ ॥ गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः । विश्वंभराप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ८४ ॥ समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षितितिलक त्वयि तटभुवि शंकरचूडापगाऽपि कालिन्दी ॥ ८५ ॥ विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च । प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ८६ ॥ पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर । भूषयति कर्णमेकः परस्तु कर्णं[9] तिरस्कुरुते ॥ ८७ ॥ हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः[10] । रविवन्न चातिदुःसहकरतापितभूः[11] कदाचिदसि ॥ ८८ ॥ स्तनयुगमुक्ताभरणाः[12] कण्टककलिताङ्गयष्टयो[13] देव । त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः ॥ ८९ ॥ सन्ततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते । द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥ ९० ॥ कमलेव[14] मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः । धरणीव धृतिर्धृतिरिव धरणी सततं विभाति यस्य तव ॥ ९१ ॥ रत्नसानुशिखराङ्गणफुल्लत्कल्पपादपतलेषु निषण्णाः । उद्गृणन्ति नृपहंस सुवर्णं त्वद्यशः प्रवरकिन्नररामाः ॥ ९२ ॥ गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः । ओष्ठविद्रुमदलान्यमोचयन्निर्दिशन्युधि रुषा निजाधरम्[15] ॥ ९३ ॥ बलमार्तभयोपशान्तये विदुषां सम्मतये बहुश्रुतम् । वसु तस्य न केवलं विभोर्गुणवत्ताऽपि परप्रयोजनम् ॥ ९४ ॥ तावका कति न सन्ति मादृशा मादृशस्तु भवदेकजीवनः । अम्बुदस्य कति वा न चातकाश्चातकस्य पुनरेक एव सः ॥ ९५ ॥ निखिलेषु गुणेषु चित्रता ते मनसो वैभवमद्भुतं तवैव । न च ते परतः प्रमाणभावस्तदपि न्यायनिविष्टताऽतिचित्रम् ॥ ९६ ॥ स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम् । विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च॥ ९७ ॥ कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः । पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ९८ ॥ ॥ गुणभेदविदग्रिमप्रसङ्गे व्यवधानादनुपस्थितं पुरस्तात् । अपि वाजिनमात्रशेषमिष्टौ घटयन्वाजिभिरर्थ्यसे विधिज्ञैः ॥९९॥ यदि वै मनसि प्रशान्तिरुच्चैः कुरु कल्पद्रुमदानकौशलम् । न भवेदिति वा वद स्फुटं कलिकर्ण प्रतियामि मन्दिरम् ॥ १०० ॥ नानन्वयस्ते न च ते विरोधोऽलङ्कारकोटौ तव नोपमाऽपि । क्षितीश नो ते विषमं न किंचित्साहित्यसौहित्यनिधिस्तथाऽपि ॥१०१॥

---

१ तिग्मरुचिरः प्रतापो यस्य, विधुराणां शत्रूणां निशां करोतीति । तिग्मरुचिः, प्रतापश्चेत्यादिश्चार्थः । स्पष्टमन्यत् । २ अनुगता दारा यस्य स, नोदार इति च । ३ रात्रिः, आह्लाददात्री च । ४ व्यसनं द्यूतादि । ५ अवीनां मेषाणामसनं प्रेरणं कालक्षेपसाधनमिति यावत् । ६ सङ्गाममार्गे । ७ नैरन्तर्येऽत्र द्वितीया । ८ अपवर्गेऽत्र तृतीया । एवं चात्रारीणां विजयलाभाभावः, सम्बोध्यस्य च विजयलाभः सूच्यते । अत्र विशेषस्त्वस्माकं काव्यप्रकाशादिव्याख्यायां द्रष्टव्यः । ९ कर्णोऽङ्गदेशाधीशः । १० वृषो वृषभासुरो, धर्मश्च । ११ किरण- । राजग्राह्यद्रव्यविशेष- । १२स्तनयुगयोर्मुक्ताभरणं यासां ताः, स्तनयुगेन मुक्तमाभरणं यासां ता इति च । १३ रोमाञ्च- । शूलविशेष- । १४ लक्ष्मीरिव । १५ ओष्ठदशनमात्रानुभावके कोपे कृते एव सर्वे शत्रवो मृता इति व्यङ्ग्यम् । विशेषस्त्वत्रास्माकं काव्यप्रकाशादिव्याख्यासु ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥१०२॥ तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥ १०३ ॥ विशांपते विस्तरतो न वक्तुं जानामि जानन्नपि ते गुणौघान । यस्यैव योऽस्ति प्रथमानकीर्ते स एव तद्वानिति निर्निरूढि ॥ १०४ ॥ यशोदयामण्डितकान्तदेहो बाल्येऽपि गोपालजनस्य नेता । गोमण्डलं पासि बलेन युक्तः कथं न राजन्पुरुषोत्तमोऽसि ॥ १०५ ॥ नक्षत्रभूक्षत्रकुलप्रसूतेर्युक्तो नभोगैः खलु भोगभाजः । सुजातरूपोऽपि न याति यस्य समानतां काचन काञ्चनाद्रिः ॥ १०६ ॥ अखण्डिता शक्तिरथोपमानं न स्वीकृतं न च्छलरीतिरस्ति । अस्पृष्टसंदेहविपर्ययस्य कोऽयं तव न्यायनये निवेशः ॥ १०७ ॥ स्वतः प्रकाशो मनसो महत्त्वं धर्मेषु शक्तिर्न तथाऽन्यथाधीः । भूपालगोपालपदैकभक्तेरन्यैव नैयायिकता तवेयम् ॥ १०८ ॥ यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः । गृहीतदीपा इव भिन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥ १०९ ॥ लब्ध्वा यदन्तःपुरसुन्दरीणां लावण्यनिःस्यन्दमुपान्तभाजाम् । गृहीतसारस्त्रिदशैः पयोधिः पीयूषसंदर्शनसौख्यमाप ॥ ११० ॥ यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारेपरार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात् ॥ १११ ॥ सर्वे विधेया मम भूतलेऽस्मिन्नित्येष राजन्वितथोऽभिमानः । समुज्ज्वलाः तेऽभिमताऽपि कीर्तिः सर्वत्र कामं रमते स्वतन्त्रा ॥ ११२ ॥ विश्वम्भरः कोऽपि सुरोत्तमानामिति श्रुतं किंतु भवन्तमद्य । विलोक्य राजेन्द्र वदान्यभावात्प्रत्येमि सत्यं नहि ते त्वदन्यम् ॥ ११३ ॥ एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् ॥ एतद्गुणानां गणनाऽङ्कपातः प्रत्यर्थिकीर्तीः खटिकाः क्षिणोति ॥ ११४ ॥ देवाधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्यात् । संदर्शनं ते गुणकीर्तनं ते सेवाऽञ्जलिं ते तदहं विदध्याम् ॥ ११५ ॥ अल्पादरादध्ययनं द्विजानामर्थोपलब्ध्या फलवद्विधाय । क्रतूनतुच्छानवितुं तवैषा मीमांसकाद्याधिकृतिः प्रसिद्धा ॥ ११६ ॥ तुच्छान्तराध्यासमसंनिकृष्टमध्यक्षमत्यन्तमनिच्छतस्ते । अख्यातिसख्यानुगतद्विषश्च ख्यातिस्थितानिर्वचनीयरूपा ॥ ११७ ॥अन्यार्थमङ्गीकृतवारिपाणौ विशङ्कमानास्तव दाननीरम् । परस्परं दीनमुखा न के वा देवाः सुमेरुं शुशुचुः स्वभूमिम् ॥ ११८ ॥ तवाग्रतो वीर महीमहेन्द्र मन्दं गजाः शृङ्खलिनो विभान्ति । आवासदानादरिभूपतीनामाशाऽन्तशैलाँ इव सापराधाः ॥ ११९ ॥ कामं नृपाः सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् । नक्षत्रताराग्रहसंकुलाऽपि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ १२० ॥ दारिद्र्यदायादगणाधमेन दीनो द्विजोऽर्थणपदतिसात्कृतः । जागर्ति नाथे त्वयि भो द्विजानां विधेहि तयेन सुखं भजे नृप ॥१२१ ॥ कमलभूतनया वदनाम्बुजे वसतु ते कमला करपल्लवे । वपुषि ते रमतां कमलाङ्गजः प्रतिदिनं हृदये कमलापतिः ॥ १२२ ॥ उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः । निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः ॥ १२३ ॥ अनेन सर्वार्थिकृतार्थताकृता हतार्थिनौ कामगवीसुरद्रुमौ । मिथः पयःसेचनपल्लवाशने प्रदाय

---

१ यैः कैरपीति शेषः । अस्माभिरिति शेषः । इति नागेशभट्टादीनां व्याख्यानं तु हेयमेव, परोक्षत्वानुपपत्तेः । २ नत्वानीतवतः । ३ इतस्ततो विलीनत्वम् । ४ हे राजन् । ५ विपरीता बुद्धिः । ६ राज- । ७ परार्द्धसङ्ख्यातोऽधिका संख्या नास्ति, अथ यदि ततोऽपि पारे स्यादिति भावः । ८ शत्रु- । ९ सहस्रबाहुः । १० दिग्गजाः । ११ दारिद्र्यस्य दायादगण ऋणादिरूपो नानाविपत्तिरूपः । १२ सरस्वती । १३ लक्ष्मीः । १४ मदनः । १५ विष्णुः । १६ प्रसन्नतायाः । इदं च प्रसादस्य महत्त्वातिशयं सम्भावयितुम् । १७ कामगवी कामधेनुः ।

दानव्यसनं समाप्नुतः ॥ १२४ ॥ मयि[1] स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते । इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद्द्विषाम् ॥ १२५ ॥ नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान्पततः पदद्वये । तदीयचूडाकुरुबिन्दर[2]श्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥ १२६ ॥ इदं नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृध्य रोहणः[3]। कियद्दिनैरम्बरमावरिष्यते मुधा मुनि[4]र्विन्ध्यमरुद्ध भूधरम् ॥ १२७ ॥ कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः । तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥ १२८ ॥ अनेन पर्यासयताऽश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु । प्रत्यर्पिताः[6] शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥ १२९ ॥ अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः । चतुर्दशत्वं कृतवान्कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ १३० ॥ अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताऽङ्गगुणेन[11] विस्तरम् । अगाहताऽष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ १३१ ॥ दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसरावरोधिनीम् । बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ १३२ ॥ पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे । भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्दधावधर्मो[12]ऽपि कृशस्तपस्विताम् ॥ १३३ ॥ स्फुरद्धनुर्निस्वनतद्ध[13]नाशुगप्रगल्भवृष्टिव्ययितस्य संगरे । निजस्य तेजःशिखिनः परःशता वितेनुरङ्गारमिवायशः परे[14] ॥ १३४ ॥ अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद्भुवः । प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघः ॥ १३५ ॥ सितांशुवर्णैर्वयति स्म तद्गुणै[15]र्महाऽसिवेमभिः[16] सहकृत्वरी बहुम् । दिगङ्गनाङ्गाभरणं रणाङ्गणे यशःपटं तद्भटचातुरी तुरी[17] ॥ १३६ ॥ प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि मेत्तृतोज्झिता । अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥ १३७ ॥ अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् । मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्य[18]दरिद्रतां नृपः ॥ १३८ ॥ विभज्य मेरुर्न यदर्थिसात्कृतो[19] न सिन्धुरुत्सर्गजलव्ययैर्मरुः । अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम् ॥ १३९ ॥ अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन[21] च । दधौ पटीयान्समयं नयन्नयं दिनेश्वरश्रीरु[22]दयं दिने दिने ॥ १४० ॥ सर्वस्य लोकस्य मनोरथांस्त्वं पूर्णान्करोष्येव यदि क्षितीश । तत्किं हताशाः पिशुना रुदन्ति किं नो लभन्ते च जयं द्विषस्त्वत् ॥ १४१ ॥ कीर्तिं मृषैवाव्यभिचारिणीं ते समुज्ज्वलां चाहुरिमे नरेश । दिगन्तरालेषु च कन्दरासु बालांश्च यूनश्च करोति तुष्टान् ॥ १४२ ॥ अधोविधानात्कमलप्रवालयोः शिरःसु दानादखिलक्षमाभुजाम् । पुरेदमूर्ध्वं भवतीति वेधसा पदं किमस्याङ्कितमूर्ध्वरेखया ॥ १४३ ॥ सदुत्तंस दैवादयं कोऽपि दीन ऋणाब्धौ विलीनो विहीनो

---

१ यथा धनुः सन्निहितं नमदेव, शरास्तु स्तब्धा दिगन्तरेष्वेवेतीव पुरः स्थितौ नम्रतया, अन्यथा दिगन्तरेष्विति द्विषः प्रति बोधनमिति भावः । २ माणिक्य- । ३ सुमेरुः । ४ अगस्त्यः । ५ यावन्न प्रत्यागच्छेयं तावन्नोत्थातव्यमिति प्रतिज्ञाबद्धं कृतवान् । सुमेरुणा सूर्यमार्गनिरोधे करिष्यमाणे तस्य प्रयासस्य निष्फलत्वात् । ६ पुनः सन्निधापिताः । ७ चतस्रोऽधीत्यादयो दशा यासां तासां भावस्तत्त्वम्, चतुर्दशानां भाव इति तु प्रत्यायनमात्रम् । ८ अत्र काकुरिति बद्ध्येवेत्यर्थः । ९ प्रस्फुरन्ती १० वेदत्रयीव । ११ व्याकरणादिभिः, ग्रीवादिभिः, मधुराम्लादिभिर्वेति दिक् । १२ कलिः । इदं च सर्वेषां सर्वथा विलयासम्भवावधारणेन वचनम् । १३ प्रकृत-(नल) क्षितिप- । १४ शत्रवः । १५ गुणैः उदारत्वादिभिः, सूत्रैश्च । १६ वेमा वयनकाष्ठम् । १७ निष्पन्नवस्त्रवेष्टनदण्डः । १८ दारिद्र्याभावम् । १९ याचकेभ्यो दत्तः । २० काव्यनिर्माता भृगुणा च । २१ पण्डितेन सौम्येन च । २२ दिनेश्वरस्य श्रीरिव श्रीर्यस्य सः ।

गुणेन। भवत्संनिधिं सन्निधिं प्राप्य पीनो बभूवाशु मीनो यथा नीरपूरम्॥ १४४॥ कति नो विषया निभालिताः कति वा भूमिभुजो न शीलिताः। धरणीधर तावकान्गुणानवधार्याजगणं गुरुं लघुम्॥ १४५॥ तत्र नित्यमुत्सवपरम्परा भवत्वनिशं त्वमित्थमुपकारसादरः। निजकीर्तिकान्तिकलितोज्ज्वले जगत्यथ सत्सुतादिभिरलं सुखं भज॥ १४६॥ अभ्युद्धृता[1] वसुमती दलितं रिपूरः[2] क्रोडीकृता बलवता बलि[3]राजलक्ष्मीः। एकत्र जन्मनि कृतं यदनेन राज्ञा जन्मत्रये तदकरोत्पुरुषः पुराणः॥ १४७॥ एकत्रिधा वससि चेतसि चित्रमत्र देव द्विषां च विदुषां च मृगीदृशां च। तापं च संमदरसं च रतिं च पुष्णञ्शौर्योष्मणा च विनयेन च लीलया च॥ १४८॥ शक्तिं प्रमापयति वीर तवोपमानं प्रामाण्यमाप्तवचनेषु परैव जातिः। जातौ गुणा गुणगणाश्रयिणो विशेषा वैशेषिकं किमपि दर्शनमद्भुतं ते॥ १४९॥ किं कारणं सुकविराज मृगा यदेते व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः। देव त्वदस्त्रचकिताः श्रयितुं स्वजातिमेके मृगाङ्कमृगमादिवराहमन्ये॥ १५०॥ संभाव्यमिष्टभुवनाभयदानपुण्यसंभारमस्य वपुरत्र हि विस्फुरन्ति। लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो धर्मश्च मानविजयौ च पराक्रमश्च॥ १५१॥ प्रत्यक्षरस्रुतसुधारसनिर्विशेषाभिराशीभिरभ्यधिकभूषितभोगभाजः। गायन्ति कञ्चुकविनिह्नुतरोमहर्षस्वेदोर्मयस्तव गुणानुरगेन्द्रकन्याः॥ १५२॥ भद्रा[5]त्मनो दुरधिरोहतनोर्विशालवंशो[6]न्नतेः कृतशिलीमुख[7]संग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य[8] दानाम्बुसेकसुभगः सततं करो[9]ऽभूत्॥ १५३॥ साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते। अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम्॥ १५४॥ अत्या[10]यतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभो[11]भिरनपायमयैरुपायैः। शौरिर्भुजैरिव चतु[12]र्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार॥ १५५॥ नानाविधप्रहरणैर्नृप संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान्। दत्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिलम्भविधिर्वितीर्णा॥ १५६॥ अन्तःपुरीयसि रणेषु सुतीयसि[15] त्वं पौरं जनं तव सदा रम[16]णीयते श्रीः। दृष्टः प्रियाभिरमृतद्युति[17]दर्शमिन्द्र[18]संचारमत्र भुवि संचरसि क्षितीश॥ १५७॥ राजन्विभान्ति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः। धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसंपदमेत्य भातः॥ १५८॥ पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचञ्चुः[19]। नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना॥ १५९॥ लक्ष्मीं भवान् प्रतिदिनं निधिवद्वरेभ्यः सर्वात्मना वितरतीति न नः परोक्षम्। दिव्या अमी सदसि केलिपरास्तथाऽपि तस्मात्तदाश्रयपदं नृपते मतो मे॥ १६०॥ दोर्भ्यां तितीर्षति तरङ्गवतीं भुजंगमादातुमिच्छति करे हरिणाङ्कबिम्बम्। मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान्गदितुमुद्यममादधाति॥ १६१॥ हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु स्तनतपनवनाम्भोहर्म्यगोक्षीरपानैः। सुखमनुभव राजं-

---

१ एतेन वराहावतारसाम्यं सूचितम्। २ एतेन नृसिंहसाम्यं सूचितम्। ३ बलिनो ये राजानस्तेषां, बलिराजस्य दैत्यस्य च लक्ष्मीः। एतेन वामनावतारसमत्वं सूचितम्। ४ अन्यत्र शरणासम्भवात्। ५ भद्रः पवित्रः, तदाख्यं जातिविशेषो गजश्च। ६ वंशः कुलं, वेणुश्च। ७ शिलीमुखाः, बाणाः, शराश्च। ८ परेषां वारणे क्षमस्य, उत्कृष्टस्य गजस्य च। ९ उत्सर्गजल-। मदजल-। १० दक्षिणहस्तः, शुण्डादण्डश्च। ११ असङ्कुचितैः, आजानुलम्बमानैश्च। १२ प्रभाभिः प्रस्फुरद्भिः। क्विबन्तोऽयं शब्दो विश्वपादिवत्। १३ सामदानदण्डभेदरूपैः चतुःसङ्ख्याकैश्च। १४ एतेन निर्भयसञ्चारित्वं सूचितम्। १५ एतेन रक्षकत्वं सूचितम्। १६ उपभोगास्पदत्वं सूचितम्। १७ चन्द्रवत्। एतेन सन्तापहर्तृत्वादि सूचितम्। १८ इन्द्रवत् एतेनाप्रतिहताज्ञत्वं सूचितम्। १९ प्रथितलोकोत्तरचरित इति भावः। २० अत्रापि अन्तःपुरीयतीत्यादिवद्व्यङ्ग्यम्।

स्त्वद्विषो यान्तु नाशं दिवसकमललज्जाशर्वरीरेणुपङ्कैः ॥ १६२ ॥ विदधतु धरणीशा दानमुच्चैर्धरायां प्रभवतु सुजनस्तत्प्रेरकः पुण्यशीलः । निजपरमतहीनः केवलं सत्स्वदीनस्त्वमिह नृप कुलीनः कार्यकर्ता विभासि ॥ १६३ ॥ कवीनां संतापो भ्रमणमभितो दुर्गतिरिति त्रयाणां[1] पञ्चत्वं[2] रचयसि न तच्चित्रमधिकम् । चतुर्णां वेदानां व्यरचि नवतां[3] वीर भवता द्विषत्सेनालीनामयुतम्[4]अपि लक्षं[5] त्वमकृथाः ॥ १६४॥ समाजे सम्राजां[6] सदसि विदुषां धाम्नि धनिनां निकाये[7] नीचानामपि च तरुणीनां परिषदि । वयं यत्रैव स्मः क्षणमतिथयस्तत्र शृणुमः स्फुरद्रोमोद्भेदाः सुभग भवतः पौरुषकथाः ॥ १६५ ॥ न लोपो वर्णानां[8] न खलु परतः[9] प्रत्ययविधि[10]र्निपातो[11] नास्त्येव क्वचिदपि न भग्नाः प्रकृतयः[12] । गुणो वा वृद्धिर्वा सततमुपकाराय जगतां मुनिर्दाक्षीपुत्रा[13]दपि तव समर्थः पदविधिः ॥ १६६ ॥ न मिथ्यावादस्ते न च विगुणचर्चास्वभिरतिर्न वा वाच्यं किंचिद्वचसि न मनाङ्[14] मायिनि मतिः । तथाप्येतच्चित्रं यदसि जगतीजानि[15]रधुना त्वमेवैको लोके निगमपरभागार्थनिपुणः ॥ १६७ ॥ चकोराणां चन्द्रः कुसुमसमयः काननभुवां सरोजानां भानुः कुवलयकदम्बं मधुलिहाम् । मयूराणां मेघः प्रथयति यथा चेतसि सुखं तथाऽस्माकं प्रीतिं जनयति तवालोकनमिदम् ॥ १६८ ॥ विपत्सिन्धोः पारं तरणिरसि दीनान् गमयितुं विधातुं सम्पूर्णो द्विजपतिरुचिं चासि दिनकृत् । गुणानां सम्पत्तिं बहुविधतया नेतुमुदयं त्वमेको राजेन्द्र स्फुरसि नृपते न त्वदितरः ॥ १६९ ॥ अदातारं दातृप्रवरमनयं विश्वविनयं विरूपं रूपाढ्यं विगतजयिनं विश्वजयिनम् । अकुल्यं[16] कुल्यं[17] त्वामहमवदमाशापरवशान्मृषावादेत्युक्तिस्त्वयि खलु मृषावादिनि मयि ॥ १७० ॥ यशःस्तोमानुच्चैरुपचिनु चकोरप्रणयिनीरसज्ञापाण्डित्यच्छिदुरशशिधामभ्रमकरान् । अपि त्वत्तेजोभिस्तमसि शमिते रक्षति दिशामसौ यात्रामैत्रीं नभसि नितरामम्बरमणिः ॥ १७१ ॥ सुराणां[18] पाता[19]ऽसौ स पुनरतिपुण्यैकहृदयो ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः । करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां स सर्वस्वं दाता तृणमिव सुरेश विजयते ॥ १७२ ॥ मनोभूर्मुग्धासु क्षिपति यदि बाणावलिमसौ कथं ताभिः क्षिप्तास्त्वयि नयनविक्षेपविशिखाः । अथ ज्ञातं ब्रूमः शृणु सुभग शृङ्गारनलिनीवनक्रीडाहंसं स्मरमिव विदुस्त्वां मृगदृशः ॥ १७३ ॥ यशश्चन्द्रैरुद्यत्सुकृतनरकल्पद्रुमकरैः परं लक्ष्मीगर्भैर्द्विरदहयरत्नादिफलदैः । निजैर्दानाम्भोभिर्नियततुलितक्षीरजलधिश्चिरं जीयाज्जीयादधिधरणि सोऽयं नरपतिः ॥ १७४ ॥ अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् । कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ १७५ ॥ तुलाधारो धाता वहति वसुधा शूर्प[20]पदवीं फणीशः स्यात्सूत्रं कनकशिखरो मानपलिका[21] । तुलादण्डः सत्यं यदि भवति दामोदरगदा तथाप्येषोऽशक्यस्तव गुणसमूहस्तुलयितुम् ॥ १७६॥ न तूणादुद्धारे न गुणैर्[22]घटने नाश्रुतिशिखं[23] समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि । नृणां पश्यत्यस्य क्वचन विशिखान्किन्तु पतितद्विषद्वक्षःश्वभ्रै[24]रनुमितिरमून्गोचरयति ॥ १७७ ॥ अमुष्योर्वीभर्तुः[25] प्रसृमर[26]चमू-

१ संतापादीनां त्रयाणाम् । २ क्षयम् । ३ नवसङ्ख्याकत्वम्, नवीनत्वं सर्वतस्तेषां प्रचारसम्पादनात् । ४ दशसहस्रम् । ५ शरव्यं, लक्षसङ्ख्याकश्च । ६ उत्तमानां राज्ञाम् । ७ समुदाये । ८ अकारादीनां, ब्राह्मणदीनां च । ९ अग्रतः,अन्यस्माद्वा । १० सुबादि-। विश्वास-। ११ स्वतः सिद्धत्वम् । निपतनं च । १२ प्रातिपादिकादिरूपाः। अमात्यादिरूपाश्च । १३ दाक्षीपुत्रः पाणिनिः । १४ मायाविनि । १५ जगती पृथ्वी जाया यस्य सः । १६ अकुलीनम् । १७ कुलीनम् । १८ मद्यानाम् देवानां च । १९ पानस्य, रक्षायाश्च कर्ता । २० तोलनीयाधारफलकरूपत्वम् । २१ 'मण' इति प्रसिद्धः तोलनसाधनविशेषः । २२ आरोपणेन । २३ कर्णावधिः । २४ श्वभ्राणि छिद्राणि । २५ राज्ञः । २६ प्रसरणशील- ।

सिन्धुरभवैरवैमि प्रारब्धे वर्मथुमिरवश्यायसमये । न कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न तद्वधूवक्त्राम्भोजं भवतु न स तेषां कुदिवसः ॥ १७८ ॥ यशःपूरं दूरं तनु सुतनुनेत्रोत्पल- वनीतमस्तन्द्राचन्द्रातप तप सहस्राणि शरदाम् । इयं चास्तां युष्मद्गुणकथनपीयूषण्टलश्रितोत्सङ्गानन्दत्सुर- नरभुजङ्गा त्रिजगती ॥ १७९ ॥ स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः प्रतिदिनमथवा ते वृत्तिरेवंविधैव । अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् ॥ १८० ॥ नियमयसि कुमार्गप्रस्थितानात्तदण्डः प्रशमयसि विवादं कल्पसे रक्षणाय । अतनुषु विभवेषु ज्ञातयः सन्तु नाम त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ १८१ ॥ महति महसि तेजोधाम्नि ते भासमाने स्फुरति बत सुकीर्तिश्चन्द्रमःश्रीस्त्वदीया । इति तपनसुधांशुस्पर्धिताऽन्योऽन्यमस्तं क्षितिपवर गतेति ब्रूहि मन्येत को नो ॥ १८२ ॥ अभिमतफलदाता त्वं च कल्पद्रुमश्च प्रकटमिह विशेषं कञ्चनोदाहरामः । कथमिव मधुरोक्तिप्रेमसंमानमिश्रं तुलयति सुरशाखी देव दानं त्वदीयम् ॥ १८३ ॥ अकाण्डधृतमानसव्यवसितोत्सवैः सारसैरकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः । दिशः समवलोकिताः सरसनिर्भर- प्रोल्लसद्भवत्पृथुवरूथिनीरजनिभूरजःश्यामलाः ॥ १८४ ॥ सहस्रकरपूरणान्निखिलजन्तुवक्त्राम्बुजप्रकाशकरणादथ प्रबलवैरितेजोवधात् । दरिद्रतिमिरोद्धृतेरखिलभूपचूडामणिर्जगन्मणिरहर्मणिर्जगदिदं च धत्तः समम् ॥ १८५ ॥ यशःकरणधोरणीतुलितरोहिणीवल्लभ त्वया क्षणमुदीक्ष्यते जगति यो दरिद्रो जनः । पयोधरमहीधरे नटति तस्य वामभ्रुवां रणत्कनककिङ्किणीकलरवेण देव स्मरः ॥ १८६ ॥ यमः प्रतिमहीभृतां हुतवहोऽसि तन्नीर्वृतां सतां खलु युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् । गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥ १८७ ॥ आलोकान्तप्रतिहततमोवृत्तिरासां प्रजानां तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः । तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः ॥ १८८ ॥ अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं संचिनोति । अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १८९ ॥ नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति । आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैरस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १९० ॥ त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै । सामर्थ्यानामिव समुदयः संचयो वा गुणानामाविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ १९१ ॥ हेषन्ते यज्जितजलधरध्वानमेते तुरङ्गा भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति । यानौत्सुक्यं यदपि चलनाद्वालधैर्व्यञ्जयन्ति त्वद्दोर्दण्डद्वितयवशगा तत्समग्रा जयश्रीः ॥ १९२ ॥ दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्ती मात्स्यो न्यायः कथयति यथा वारुणीदण्डनीतेः । पातालेन्द्रादहिभयमथास्त्येव नित्यानुषक्तं तन्नः पुण्यैरजनि भवता वीर राजन्वती भूः ॥ १९३ ॥ राजा चेद्बलिनां त्वमेव नृपते दैत्यस्तु नाम्ना परं त्वं चैवं पुरुषोत्तमस्त्वदपरस्त्वन्यत्र लीनः कचित् । दीप्तां वीक्ष्य महेशतां च भवतो नम्रोऽभवल्लज्जया तत्त्वां हन्त विहाय नास्ति शरणं नोऽन्यत्र लोकत्रये ॥ १९४ ॥ यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं भक्त्येशः परितोषितः सुचरितैरानन्दिताः सज्जनाः । पूर्णाशा बहवः कृता

---

१ गज- । २ करशीकरैः । ३ नीहारवर्षणसमये । ४ शत्रुसैनिकाः । ५ कल्पवृक्षः । ६ अनवसर- । ७ शत्रूणाम् । ८ तज्जनपदानाम् । ९ लोकालोकावधि- । १० इन्द्रसम्बन्धिनि । ११ मूर्तिमान् । १२ शब्दं कुर्वन्ति । १३ पुच्छस्य । १४ स्वर्गस्थानाम् । १५ मत्स्यसम्बन्धी ।

वितरणैर्येन त्वया याचकास्तस्मै सर्वगुणाश्रयाय भवते दीर्घायुराशास्महे ॥ १९५ ॥ दाने कल्पतरुर्नये सुरगुरुः काव्ये कविस्तेजसि प्रौढग्रीष्मरविर्धने धनपतिः सत्यं दयायां शिविः । गाम्भीर्ये सरितांपतिर्निरुपमे शौर्ये सुभद्रापतिः श्रीमान्धर्मरतिर्महीपतिरयं जीयात्सहस्रं समाः ॥ १९६ ॥ विद्वन्मानसहंसवैरिकमलासंकोचचन्द्रद्युते दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर । सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ १९७ ॥ हस्तन्यस्तकुशोदके त्वयि न भूः सर्वसहा वेपते देवागारतया स काञ्चनगिरिश्चित्ते न धत्ते भयम् । अज्ञातद्विपभिक्षभिक्षुककुलावस्थानदुस्थाशया वेपन्ते मददन्तिनः परममी भूमीपते तावकाः ॥ १९८ ॥ अर्थिभ्रंशबहूभवत्फलभरव्याजेन कुब्जायितः सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः । आस्ते निर्व्ययरत्नसंम्पदुदयोदग्रः कथं याचकश्रेणीवर्जनदुर्यशोनिबिडितव्रीडस्तु रत्नाचलः ॥ १९९ ॥ देव त्वत्करनीरदे दिशि दिशि प्रारब्धपुण्योन्नतौ चञ्चत्कङ्कणरत्नकान्तितडिति स्वर्णामृतं वर्षति । स्फीता कीर्तितरङ्गिणी समभवत्तृप्ता गुणग्रामभूः पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥ २००॥ देव त्वामसमानदाननिहितैरर्थैः कृतार्थीकृतत्रैलोक्यं फलभारभङ्गुरशिराः कल्पद्रुमो निन्दति । टङ्कच्छेदनवेदनाविरमणात्संजातसौख्यस्थितिः प्राचीनव्रणिताङ्गरोहणतया श्रीरोहणः स्तौति च ॥ २०१ ॥ गण्डौ पाण्डिमसात्तनूस्तनिमसात्पक्षावली बाष्पसात्कीरः पञ्जरसान्मनोऽपि हरसात्कण्ठोऽपि कैवल्यसात् । आसन्देव चमूवरेण्य भवतः प्रत्यर्थिवामभ्रुवां कोदण्डे परिवेषभाजि विजयश्रीसाधने योधने ॥ २०२ ॥ देव त्वं मलयाचलोऽपि भवतः श्रीखण्डशाखी भुजस्तस्मिन्कालभुजङ्गमो निवसति स्फूर्जत्कृपाणच्छलात् । एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संघट्टयन्दीर्घव्योमविसारि निर्मलयशोनिर्मोकमुन्मुञ्चति ॥२०३॥ कर्पूरप्रतिपन्थिनो हिमगिरिग्रावाग्रसंघर्षिणः क्षीराम्भोनिधिमध्यगर्भजयिनो गङ्गौघसर्वंकषाः । स्वच्छन्दं हरिचन्दनद्युतितुदः कुन्देन्दुसंवादिनस्तस्यासन्नरविन्दकन्दरुचयोऽनेके गुणाः केचन ॥ २०४ ॥ मन्ये स्पर्शमणिं तवैनमतुलं पाणिं द्विजाभ्यर्चने दुर्वर्णान्यपि भिक्षुभालफलकान्यासन्सुवर्णानि यत् । तच्चित्रं परमत्र मित्र भवता दत्ताः स्वहस्तादिना दुर्वर्णा न सुवर्णतामुपगताः क्षुद्रास्तु मुद्राः कथम् ॥ २०५ ॥ संतप्तश्रमहारिशीतलतले पुण्याश्रमालंकृतावुच्चैर्दैवदवानलेन कलिते विद्वत्तरूणां चये । सद्यो वर्ष सुवर्णवारिद विभो स्वर्णाम्बुधारास्ततो विश्वव्यापियशाः शिरोऽवनिभृतामाक्रम्य नन्दानिशम् ॥ २०६ ॥ इन्दुस्त्वद्यशसा जितोऽवनिपते भीमांनिधिस्तेजसा कन्दर्पो वपुषा सुधाजलनिधिर्वाचो विलासेन च । तथ्यं ते जयशीलमेतदधुना त्वद्दानमर्दैन्ययोर्मध्ये कं ननु जेष्यतीति विषये दोलायते मे मनः ॥ २०७ ॥ यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रतामस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः । दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं विख्यातः परमेष एव नृपतिः सीमा गुणग्राहिणाम् ॥ २०८ ॥ देव त्वं जय यस्य राजति महाराष्ट्रीकुचोच्चं कुलं लाटीवाङ्मृदु नर्म चेदिवनितानाभीगभीरं मनः । आभीरीकटिविस्तृता मतिरसिर्गौडीकचश्यामलः कर्णाटीरतिनिष्ठुरो रणरसः कीरीमुखाभं यशः ॥ २०९ ॥ ते [15]कौपीनधनास्त एव हि परं [16]धात्रीफलं भुञ्जते तेषां द्वारि नदन्ति-

---

१ कुरु । २ अतिसहनशीला, पृथ्वी च । ३ देवाश्रितत्वेन, देवतानां स्थानभूतत्वेन च । ४ सुमेरुः । ५ अमृतं जलम् । ६ ग्रामः समूहः । ७ सुमेरुपर्वतः । ८ हे सेनापते । ९ शत्रुवनितानाम् । १० परिवेषो धनुषो मण्डलीकरणम् । ११ सङ्ग्रामे । १२ चन्दनतरुः । १३ निर्मोकः सर्पत्वक् । १४ सूर्यः । १५ कौपीनधना इति कौ ( पृथिव्यां ) पीन ( अतिशयित ) धना इति च च्छेदः । १६ धात्री वृक्षविशेषः, पृथिवी च । १७ नेति पृथक् पदमपि ।

वाजिनिवहास्तैरेव लब्धा क्षितिः। तैरेतत्समलंकृतं निजकुलं किंवा बहु ब्रूमहे ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥ २१० ॥ साशङ्कस्य समाकुलीकृतमतेरत्यन्तनिस्तेजसश्छिन्नाङ्गस्य विकम्पमानहृदयस्यारूढमन्योर्भृशम्। लज्जां संत्यजतः क्रमं विमृशतो विघ्नान्बहूनपश्यतः क्लेशो योऽर्थिजनस्य वक्तुमनसो मा भूत्स ते विद्विषाम् ॥ २११ ॥ नो कामः प्रतिहन्यते प्रणयिषु स्वप्नेऽपि नाथ त्वया नैवाधः कुरुषे वृषं द्विरसनां व्यालां न ते वल्लभाः। नो बह्वयस्तव मूर्तयो न च तनुर्नित्यं जडानुग्रहव्यग्रा नो विषमां च दक्त्वमथ च ख्यातः क्षितावीश्वरः ॥ २१२ ॥ संग्रामाङ्गणमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम्। कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ २१३ ॥ हारानाहर देव चन्द्रधवलान्नो चेत्पयोधिस्तटीं संप्राप्ते त्वयि सैन्यवारणगणैर्मज्जद्भिरक्षोभितम्। सिन्दूरारुणमम्बु मेघपटलीपीतोज्झितं शुक्तिषु स्वल्पैरेव दिनैः करिष्यसि महीमाताम्रमुक्ताफलम् ॥ २१४ ॥ कृष्णत्वं घनमण्डलस्य गलितं लग्नं मुखे त्वद्द्विषां विद्युद्दाम जगाम तावकमतिं गर्जिर्भवद्दुन्दुभिम् । वृष्टिस्त्वत्परिपन्थिपार्थिववधूनेत्रेषु चक्रे स्थितिं चापं ते वसुधाधिनाथ वैलभित्कोदण्डकान्तिः श्रिता ॥ २१५ ॥ नालिङ्गन्ति कुचद्वयं भवदिभप्रोत्तुङ्गकुम्भद्वयत्रासाद्वैणिलतासु नैव दधति प्रीतिं तवासिभ्रमात्। भ्रूभङ्गान्भवदीयदुर्धरधनुर्भ्रान्त्या भजन्ते न ते वैरिक्षोणिभुजो निजाम्बुजदृशां भूमण्डलाखण्डल ॥ २१६ ॥ अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः। गीयन्ते स्वरमष्टमं कलयता जातेन वध्न्योदरान्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि[13] ॥ २१७ ॥ द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजैरन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः। आक्रान्तं [16]महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे राजन्सैव चिरंतनप्रणयिनीशून्येऽपि राज्यस्थितिः ॥ २१८ ॥ शौर्यं केसरिणा परोपकरणं कल्पद्रुमेणार्पितं लावण्यं मकरध्वजेन च शरच्चन्द्रेण शुभ्रं यशः। धैर्यं ते कमठाधिपेन विपुलं गाम्भीर्यमम्भोधिना सौभाग्यं तु तवैव केवलमिदं तत्केन नो विद्महे ॥२१९॥ शैलेन्द्रो निजभारपीडिततरामेवावनिं कुर्वते ख्याता दिक्षु गजाधिपा अपि तथाभूताः स्थविष्ठाः परम्। इत्यस्माद्यदि निर्भरा वसुमती राजंस्त्वदेवास्थिता त्वं चैवैक इमां बिभर्षि न जडे भूत्वं पशौ वा मतम् ॥ २२० ॥ कामं कामसमस्त्वमत्र जगति ख्यातोऽसि यत्सर्वदा रूपेणैव महीपते तव धनुःपाण्डित्यमन्यादृशम्। त्वं यस्मिन्विशिखं विमुञ्चसि तमेवोद्दिश्य मुक्तत्रपं त्रुट्यत्कञ्चुकमुद्धतस्पृहमहो धावन्ति देवाङ्गनाः ॥ २२१ ॥ सर्वं लुण्ठितमुद्भटैस्तव भटैस्तेन द्विषत्सुभ्रुवस्त्राणाय त्वयि योजिताञ्जलिपुटं काकूक्तिमातन्वते। त्राणं दूरत एव तिष्ठतु मनस्तासां त्वया लुण्ठितं तद्गम्भीर वदामि कुप्यसि न चेत्साधोरयं कः क्रमः ॥ २२२ ॥ कोदण्डस्तव

---

१ हानिः, पृथिवी च। २ समलं (मलिनं) कृतमिति समलङ्कृतमिति च। ३ धर्मं, वृषभं च। ४ द्विभाषिणः, द्विजिह्वाश्च। ५ दुर्जनाः, सर्पाश्च। ६ मूढेषु कृपापराः, जलरूपाया गङ्गाया शिरसि धारणपरा च। ७ अनुरक्तत्वाननुरक्तत्वाभ्यामेकरूपत्वाद्भूष्टा पक्षपातिनीति यावत्। त्रिसङ्ख्याकत्वेन समसङ्ख्याकत्वमदधानेति च। ८ हे राजन्। ९ इन्द्र-१० परार्धेति अन्तिमसङ्ख्यायाः सङ्केतः। ११ अन्धः। १२ समुदायेन। १३ तटे। १४ खड्गधारिभिः, गण्डकैश्च। १५ वृद्धैः किङ्करविशेषैः, सर्पैश्च। १६ महाराज्ञीभिः, पशुविशेषस्त्रीभिश्च। १७ निर्लज्जं यथा स्यात्तथा। १८ अप्सरसः, सूर्यमण्डलं विभिद्य स्वर्गं तेषां गतत्वात्।

हस्तगो हृदि बलत्यर्ति[1]स्तव द्वेषिणां त्वं दाता[2] रभसेन मार्गणगणै[3]स्ताने[4]व संसेवते । देव त्वं तु जयस्यमित्रनिवहं ते यान्ति वैकुण्ठतां[5] संग्रामे तव भूपते महदिदं चित्रं समालोक्यते ॥ २२३ ॥ मेदिन्यां विषमेषु[6]रित्यनुदिनं शृङ्गारवीरोद्भटाचार्यः श्रीजगतीपतिः कमलदृक्कैर्नाम नो गीयते । शय्यायां च रणाङ्गणे च पतिताः सीदन्ति निश्चेतनाः कामिन्यश्च विरोधिनश्च शतशो येनामुना खण्डिताः ॥ २२४ ॥ दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डांशुगध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येर्णम् । वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डवभ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥ २२५ ॥ को दण्डं न ददाति देव भवते कोदण्डमातन्वते को नारातिरुपैति पारमुदधेः कोणारुणे लोचने । का कुञ्चान्तरमेत्य वैरितरुणी काकुं न वा भाषते राजन्गर्जति वारणे तव पुरः को वा रणे वर्तताम् ॥ २२६ ॥ दृष्ट्वा मण्डलमध्यलग्नमधुलिड्वेतण्डलक्षस्फुरत्तत्कोदण्डलसल्लुतेषु लहरीः को न क्षमाखण्डल । स्वारात्ताण्डवभागकाण्डवनभुग्धाराज्वलत्खाण्डवक्रुध्यत्पाण्डवकाण्डवर्षमतुलं ब्रह्माण्डवर्त्म स्मरेत् ॥ २२७ ॥ आलानं[10] जयकुञ्जरस्य दृषदां सेतु[11]र्विपद्वारिधेः पूर्वाद्रिः[12] करवालचण्डमहसो[13] लीलोपधानं[14] श्रियः । संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो राजन्राजति वैरिराजवनितावैधव्यदस्ते भुजः ॥ २२८ ॥ लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां[15] देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा । इन्दुः किं घटितः किमेष विहितः पूषा[16] किमुत्पादितं चिन्ता[17]रत्नमहो मुधैव किममी सृष्टाः कुल[18]क्ष्माभृतः ॥ २२९ ॥ नानाभूषणभूषितः प्रतिभया[19]पात्रं प्रभूता स्थितिर्भारासक्तकरो भवाधिकरुचिर्भूरीकृताश्वद्विपः । शश्वत्संगतभासमानमुकुटो दिक्षु प्रवृद्धादरस्त्वं राजेन्द्र रिपुस्तवापि नितरां भेदः परं भेदकृत् ॥ २३० ॥ प्रत्यावासकसज्जतां प्रथमतस्त्वां योद्धुमुत्कण्ठिता योधास्तेऽभिसृता मनागरिचमूः[20] स्वाधीननाथा[21] स्थिता । भीत्या[22] प्रोषितभर्तृका[23] सममभ्यत्वत्सायकैः खण्डिता[24] दूरादन्तरिता[25] विधाय कलहं हा विप्रलब्धा[26] विधेः ॥ २३१ ॥ प्रामाण्यं[27] स्वत एव नैव परतो विज्ञायते मानता शब्दस्यापि यथार्थता स्तुतिवचोराशेर्मनोवृत्तयः । विश्वव्यापकतां गतो न च महानन्यो भ्रमः क्वापि ते नास्ते देवमतं किमस्ति भवतः शास्त्रेषु न ज्ञायते ॥ २३२ ॥ प्रामाण्यं परतः स्वतोऽपि भवतो विज्ञायते सन्मते भूमीन्द्र प्रचुरक्षणस्थिरतया वर्णा[28]श्चिरं स्थापिताः । सर्वज्ञैकसदीश्वरोऽपि न परं[29] ब्रूते भवानीश्वरं तन्नैयायिकनायकस्य भवतो मीमांसकत्वं कुतः ॥ २३३ ॥ एकं वस्तु यदस्ति विश्वजनताऽऽनन्दप्रमोदात्मकं सत्यं तत्त्वमसी[30]ति वाक्यमखिलं

---

१ पीडा । २ उदारः, छेत्ता च । ३ याचकगणः, बाणपुञ्जश्च । ४ तवद्वेषिणः । ५ योगिनामिव सङ्ग्रामे मृतानां दिव्यपदभाक्त्वात् । ६ कामदेवः । ७ सपत्नीसम्भोगचिह्नितप्रियदर्शनतो म्लानाः, हताङ्गाश्च । ८ सङ्ग्राममध्ये । ९ गजे । १० बन्धनसाधनम् । ११ पाषाणानां पारगमनाय कल्पितो मार्गः । १२ उदयाचलः । १३ खड्गरूपसूर्यस्य । १४ 'तकिया' इति भाषायाम् । १५ दानकारिणाम् । १६ सूर्यः । १७ चिन्तामणिः । १८ मर्यादागिरयः । १९ भयङ्करत्वाविषयः । २० शत्रुसेना । २१ स्वाधीनपतिका नायिका, अनुकूलाधिपतिका च । २२ आघातभयात् । २३ यस्याः पतिर्देशान्तरं प्रयातः । सेनाध्यक्षाज्ञां परिभूयान्यत्र पलायिता च । २४ यया स्वस्याः प्रियः सपत्नीसम्भोगचिह्नं दधानो दृष्टःस्यात्तादृशी, विच्छिन्ना च । २५ कलहान्तरिता नायिका यस्या नायकेन समं केनापि कलहेन सम्बन्धो व्यवहितः। आज्ञाभङ्गादिकलहद्वारा व्यवहिता च । २६ नायकेन प्रतारिता, अधिपतिना सङ्कटावसरेऽरक्षिता च । २७ वेदानां स्वतः प्रामाण्यं, धर्मशास्त्रादीनां तु वेदमूलत्वेनैवेति स्वतः परतश्च प्रामाण्यद्वैविध्यम् । शब्दप्रामाण्यं चाप्तसम्बन्धित्वे नियतं, परसम्बन्धित्वे तु व्यभिचरितम् । २८ अकारादयो ब्राह्मणादयश्च । २९ अन्यं कर्त्तारं शत्रुं च । ३० 'तत्' 'त्वम्' 'असि' इति पदत्रयम् । अत्र जहदजहत्स्वार्थया लक्षणया ब्रह्मजीवयोरैक्यं प्रतिपाद्यते चेतनानन्दसद्भावेऽप्यभेदात्, अल्पानल्पत्वविवेकोपेक्षणाच्च ।

त्वय्येव विश्राम्यति । त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गार भो मन्यते त्वय्याते जनकादिकीर्तिजनके किं ज्ञानमीमांसया ॥ २३४ ॥ त्वद्व्राणेषु यमो[1] जयेषु नियमः[2] पाते स्थिरं[3] चासनं[4] भ्रान्तौ[5] श्वासविनिग्रहो[6] गुणगणे प्रत्याहृतिः[7] श्रीमतः । ध्यानं शूलिनि धारणा च धरणेर्धर्मे समाधिर्यतस्तन्निर्विण्णहृदः किमीश्वरपरे वाञ्छन्ति पातञ्जले[8] ॥ २३५ ॥ दृष्टान्तो न तवास्ति वाचि न च ते संदेहलेशः क्वचिद्यथाजोक्तिर्न कदापि शास्त्रकलने नैवानुमाने रुचिः । सामान्यं च विशेषवन्न मनुषे नाक्षेपबुद्धिर्मनाग्व्याघातोऽपि न वा मुखेऽप्यथ कथं साहित्यतर्कज्ञता ॥ २३६ ॥ मेघो भाति जलेन गौस्तु पयसा विद्वन्मुखं भाषया तारुण्येन च कामिनी मधुरया वाण्याऽपिकः खं जलात् । मालिन्यान्नयनं श्रिया च सदनं ताम्बूलरागान्मुखं ब्रह्माण्ड सकलं त्वया नरपते भाति स्म चित्रं महत् ॥ २३७ ॥ दारिद्र्योपहतो तथा घनघनं चान्द्रीं चकोरः प्रभां कामार्तस्तरुणीं क्षुधापरिगतः सद्व्यञ्जनं भोजनम् । सच्छिष्यः सुगुरुं वियोगविधुरो वत्सो यथा मातरं तद्वद्वः सततं स्मरामि मनसा मद्वत्सलाञ्श्रीमतः ॥ २३८ ॥ आं ज्ञातं नृपते त्वमेव निखिलां नित्यं बिभर्षि क्षितिं शैलेन्द्राः स्वयमेव दुर्भरभरास्तैः प्रत्युताधो व्रजेत् । अस्याश्चोद्धरणे क्षमोऽपि न परस्त्वत्तो वराहादिकः पश्चादेर्भरणक्रियानिपुणता नैव प्रभागोचरः (नामास्या वसुधेति चापि नियतं त्वत्सङ्गतो नान्यथा) ॥ २३९ ॥ लक्ष्मीस्ते सदने सदा विहरतां वित्ते च चिन्तामणिः स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव । वाणी ते वदने दया नयनयोर्दानं करे चान्वहं विष्णुश्चेतसि ते मतिश्च वसतां कीर्तिश्च लोकत्रये ॥ २४० ॥ गङ्गायत्यसितापगा[11] फणिगणैः[12] शेषीयति श्रीपतिः श्रीण्कंठीयति[13] कैरवीयति[14] कुलं नीलोत्पलानां च वै । कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति स्वः कुंभीयति[15] कुम्भिनामपि[16] घटा त्वत्कीर्तिसंघट्टतः॥२४१॥लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशवश्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थितिः[17] । चित्तं नाथ तवास्तु धर्मसदने[18] दानप्रसङ्गः करे सर्वास्ते विपदः प्रयान्तु विपिने त्वं दीर्घजीवी भव ॥ २४२ ॥ आयुर्वृद्धिमुपैतु ते नरपते हेमन्तरात्रिर्यथा लोकानां प्रियवर्धनो भव सदा हेमन्तसूर्यो यथा । लोकानां भयवर्धनो भव सदा हेमन्ततोयं यथा नाशं यान्तु तवारयोऽपि सततं हेमन्तपद्मं यथा ॥ २४३ ॥ यद्बाहू वहतः पराक्रमहतप्रत्यर्थिसीमन्तिनीचक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् । यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलैर्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥२४४॥ सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं पुरां भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् । मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते मूर्तैस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥२४५॥ आदाय प्रतिपक्षि[19]कीर्तिनिवहान्ब्रह्माण्डभूषान्तरे निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोऽग्निभिः । तत्ताहक्पुटपाकशोधितमिव प्राप्तं गुणोत्कर्षिणां पिण्डस्थं च महत्तरं च भवता निःक्षारतारं यशः ॥ २४६ ॥ व्यास्थं नैकतया स्थितं श्रुतिगणं जैन्मी[21] न वल्मीकतो नाभौ नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषम् । चित्रार्थां न बृहत्कथामचकथं सुत्रा[22]म्णि नासं गुरु-

---

१ कालः । २ नियतत्वं, धर्मविशेषश्च । ३ विपत्तौ शत्रूणामाक्रमणे च । ४ धैर्यस्याक्षुण्णत्वात् । ५ भ्रमणे मिथ्याज्ञाने च । ६ प्राणायामः । ७ प्रत्याहारः सङ्ग्रहणपरत्वम् । ८ पतञ्जलिप्रोक्ते । ९ कज्जलापादितत्वात् । १० गङ्गेवाचरति । ११ यमुना । १२ कृष्णसर्पगणः । १३ महेश्वर इवाचरति । १४ कुमुदं श्वेतमेव भवतीति तथोक्तिः । १५ स्वः कुम्भी ऐरावतः, स (श्वेतिम्ना) इवाचरति । १६ गजानाम् । एषां प्रायोऽसितत्वात् । १७ सम्पदया धनाधिपगृहप्रतिस्पर्धित्वात् । १८ सदनमासादनं,ग्रहणमिति भावः । १९ शत्रुश्री- । २० शत्रु- । २१ जातः । २२ इन्द्रे ।

देव त्वद्गुणवृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥ २४७ ॥ एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली
जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली । लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥ २४८ ॥ येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः । ये क्ष्माशक्र पुनः पराक्रम[1]नयस्वीकारकान्तक्रमास्ते
स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ २४९ ॥ अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारा[2]-
स्तथाऽम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति
प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ २५० ॥ येषां कण्ठपरिग्रहप्रण-
यितां संप्राप्य धाराधर[3]स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं[4] पराप्नोति च । तेषां संगररङ्गसक्तमनसां
राज्ञां त्वया भूपते पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ २५१ ॥ द्वेष्याकीर्तिकलिन्दशै-
लसुतया नद्याऽस्य यद्दोर्द्वयीकीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तस्मिन्विनिमज्य बाहुजभटै[5]-
रारम्भि रम्भा[6]परीरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ २५२ ॥ अस्मिन्दिग्विजयोद्यते पतिरयं
मे स्तादिति ध्यायति कम्पं सात्त्विकभावम[7]ञ्चति रिपुक्षोणीन्द्रदारा धरा । अस्यैवाभिमुखं निपत्य समरे
यास्यद्भिरूर्ध्वं[8] निजः पन्था भास्वति दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥ २५३ ॥ विद्राणे रणच-
त्वरादरिगणे त्रस्ते समस्ते पुनः कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या जगत्युद्भटः । आगच्छन्नपि
संमुखं विमुखतां[9]मेवाधिगच्छत्यसौ द्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिराः ॥ २५४ ॥ हित्वा
दैत्यारि[10]पोरुरः स्वभवनं शून्यत्वदोषस्फुटासीदन्मर्कट[11]कीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम् । उज्झित्वा निज-
सद्म पद्ममपि तद्व्यक्ताव[12]नद्धीकृतं लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति ॥ २५५ ॥ सिन्धोर्जै-
त्रम[13]यं पवित्रमसृजत्तत्कीर्तिपूर्ताद्भुतं यत्र स्नान्ति जगन्ति सन्ति कवयः[14] के वा न वाचंयमाः[15] ।
यद्बिन्दुश्रियमिन्दुरञ्चति जलं चाविश्य दृश्येतरो[16] यस्यासौ जलदेवतास्फटिक[17]भूर्जागर्ति योगेश्वरः[18]॥२५६॥
युद्धा चाभिमुखं रणस्य चरणस्यैवादसीयस्य[19] वा बुद्धाऽन्तः स्वपरान्तरं[20] निपततामुन्मुच्य बाणावलीः । छिन्नं
वावनतीभवन्निजभियः खिन्नं भरेणाथवा राज्ञाऽनेन हठाद्विलोठितमभूद्भूमावरीणां शिरः ॥ २५७ ॥
राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नी[21] कृतं[22] लक्षै[23]र्लक्षभिदो दशैव जयतः पद्मा[24]नि
पक्षैरलम् । कर्तुं सर्वपरच्छिदः किमपि नो शक्यं परार्धेन[25] वा तत्संख्यापगमं विनाऽस्ति
न गतिः काचिद्बतैतद्द्विषाम् ॥ २५८ ॥ क्षीरोदन्वदपः प्रमथ्य मथितादेशेऽमरैर्निर्मिते
स्वाक्रम्यं सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् । केषां नाजनि वा जनेन जगतामेतत्कवित्वामृत-
स्रोतःप्रोतपिपासुकर्णकलसीभाजाऽभिषेकोत्सवः ॥ २५९ ॥ निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटा-
वटस्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायं करः। उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुरक्षुण्णासु क्षितिषु
क्षिपन्निव यशः क्षोणीज[26]बीजव्रजम् ॥ २६० ॥ यत्कस्यामपि भानुमान्[27] ककुभि[28] स्थेमान[29]मालम्बते

---

१ नयापेक्षया पराक्रमस्याभ्यर्हितत्वद्योतनायैव पूर्वपश्चाद्भावः । २ विस्तृताः । ३ खड्गः । ४ तैलं, मित्रतां च । ५ क्षत्रियवीरैः । ६ अप्सरोविशेष- । इदमप्यन्यासामुपलक्षणम् । ७प्राप्नोति । ८ स्वर्गलोकम् । ९ पराङ्मुखत्वम् । १० नारायणस्य । ११'मकड़ी' इति भाषायाम् । १२ बद्धम् । १३ 'नापर्वणि स्पृशेत्सिन्धुम्' इति सिन्धोरपेक्षया कीर्त्तेः सर्वदा पवित्रत्वात्तज्जेतृत्वम् । १४काव्य-निर्मातारः । के-जले वयः, पक्षिणश्च । १५मौनिनः । १६ नेत्राविषयः । १७ स्फाटिकः । १८ लिङ्गाकारो महेश्वरः । १९ अमुष्यायमिति तस्य । २० निजापरयोस्तारतम्यम् । २१ अस्त्रम् । २२ पर्याप्तम् । २३ शरव्यं, लक्षसङ्ख्याकं च । २४ पद्मसङ्ख्यकानि, कमलानि च । २५ परार्द्धसङ्ख्यया, परेषामर्द्धेन च । २६ वृक्षः । २७ सूर्यः । २८ दिशि । २९ स्थिरत्वम् ।

जातं यद्वनकाननैकशरणप्राप्तेन दावाग्निना । एवैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती धिक्क वाडवमम्भसि द्विषि भियै येन प्रविष्टं पुनः ॥ २६१ ॥ आत्मन्यस्य समुचितीकृतगुणस्याहोतरामौचिती यद्वात्रान्तरवर्जनादजनयद्भूजानिरेष द्विषाम् । भूयोऽहंक्रियते स्म येन च हृदा स्कन्धो न यश्चानमत्तन्मर्माणि दलदलं समिदलंकर्मीणबाणव्रजः ॥२६२ ॥ यद्भर्तुः कुरुतेऽभिषेर्णनमयं शक्रो भुवः सा ध्रुवं दिग्दाहैरिव भस्मभिर्मघवता स्रष्टृधृतोद्धूलना । शंभोर्मा बत सान्ध्यवेलनटनं भाजि व्रतं द्रागिति क्षोणी नृत्यति मूर्तिरष्टवपुषोऽसृग्वृष्टिसन्ध्याधिया॥२६३॥प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्विषां कोषः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः । निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ २६४ ॥ अस्यारिप्रकरैः शरश्च नृपतेः संख्ये पतन्तावुभौ सीत्कारं च न संमुखौ रचयतः कम्पं च न प्राप्नुतः । तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयोरेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ २६५ ॥ एतस्योन्नतसर्वकर्मकृतिनस्त्रैलोक्यचूडामणेः शंभुब्रह्मपुरंदरप्रभृतयः स्तुत्यै न शक्ता यदि । देवः पन्नगनायको भगवती वाणी स्वयं चेज्जडा सौन्दर्यस्य निरूपणे वद कथं शक्तो भवेन्मानवः ॥ २६६ ॥ अर्धं दानववैरिणा गिरिजयाऽप्यर्धं हरस्याहृतं देवेत्थं भुवनत्रये स्मरहराभावे समुन्मीलति । गङ्गा सागरमम्बरं शशिकला शेषश्च पृथ्वीतलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ २६७ ॥ अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा संभाराः खलु तेऽन्य एव विधिना यैरेव सृष्टो युवा । श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २६८ ॥ यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान्दारयन् । तेषां दुःसहकामदेहदहनप्रोद्भूतनेत्राञ्चलज्वालालीभरभासुरे पुररिपावस्तं गतं कौतुकम् ॥ २६९ ॥ येऽणुत्वं मनसि स्वके विवृणुते रीत्या कयाऽपि स्फुटं काणादाचरणस्य तत्समुचितं मन्ये प्रतिक्ष्माभृताम् । न्यायाभिज्ञतमोऽपि यत्प्रथयसे चित्ते महत्त्वं निजे भीमांसामतपक्षपातत इदं मन्ये त्वयाऽङ्गीकृतम् ॥२७०॥ये लब्धाश्रयमायतेः फलभृतं कुर्वन्ति किंचिद्गुणं बौधौ वारिमुचो न कस्य विदितास्ते कर्ममीमांसकाः । आलोच्यैव निराश्रयान्फलभरैः संबन्धतः सद्गुणाञ्श्रीभूमीन्द्र तवाद्भुतं पुनरिदं मीमांसकत्वं स्तुमः ॥ २७१ ॥ त्रैलोक्याभयलग्नकेन भवता वीरेण विस्मारितः सज्जीभूतमुहुर्तमण्डलधनुःपाण्डित्यमाखण्डलैः । किं चार्जवसमवार्पितेन हविषा संफुल्लमांसोल्लसत्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते ॥ २७२ ॥ कल्पक्षोणिरुहोऽयमित्यनुदिनं भूमीसुरैर्भाव्यसे कामोऽसाविति कामिनीभिरभितश्चित्ते चिरं चिन्त्यसे । श्रीनारायण एव केवलमिति प्रेम्णा श्रिया ध्यायसे त्वं कालोऽयमिति प्रतिक्षितिधरैरेकोऽप्यनेकात्मभृत् ॥ २७३ ॥ नीतिस्त्रीमुकुरो जयध्व-

---

१ भयेन । २ अहोतराम् अत्याश्चर्यम् । ३ भूपतिः । ४ दलयित्वा । ५ समितः सङ्ग्रामस्य, अलङ्कर्मीणः सर्वशत्रुसंहारकारितया सम्पूर्तिकारो बाणानां व्रजो यस्य सः । ६ सेनायाः सम्मुखं धावनम् । ७ धृतमुद्धूलनार्हं भस्म यया सा । ८ मा भाजीत्यन्वयः । ९ पृथ्व्याद्यष्टशरीरस्य महेश्वरस्य । १० कान्तीनाम् । ११ सुलभैः । १२ प्रकरः-समूहः । १३ सङ्ग्रामे । १४ भास्करम् । १५ शेषः सहस्रमुखत्वात् । १६ सम्पद्यमाने । १७ आकाशम् । १८ उत्पत्तिदेशाः । १९ याः ( गुणरत्नरोहणभुवः ) च, या ( मृत् ) च, ये ( सम्भाराः ) चेतितैर्यैरित्येकशेषे रूपम् । २० श्रीमत्यः श्रीमन्तश्चेति श्रीमन्तोऽमीकान्तिजुषस्तेषाम्, कान्तिजुष इत्यत्राप्येकशेषः, श्लेषो वा । अतोऽयमतीव वीरः सुन्दरश्चेति द्योतितम् । २१ लोकोत्तरत्वबुद्धिः २२ समुद्रे । २३ इन्द्रः । २४ निरन्तरम् । २५ कल्पवृक्षः । २६ मुकुरो दर्पणः ।

जनवस्तम्भः प्रतापांशुमत्पूर्वा दिक्परिपन्थिभूपतिमहासंपन्मृगीवागुरा। उद्यत्पुण्यलताऽऽलवालमतनूनमत्तद्विपालनकं यः श्रीकेलिनिकेतनं गुणमणिश्रेणीनवीनाकरः ॥ २७४ ॥ रत्नान्यम्बुधितोयगर्भमगमन्मेरुः सुराञ्शिश्रिये स्वीयाङ्के कमलां निधाय विदधे निद्रां हरिर्नीरधौ । यस्मिन्दित्सति भूरि दातरि नृणां भालस्थले दुर्लिपिं व्रीडानम्रशिराः कमण्डलुमयं जग्राह मार्ष्टुं विधिः ॥ २७५ ॥ लक्ष्मीश्चेन्न सरस्वती तदुभयं यद्यस्ति नोदारता सा चैतत्त्रितयं भवेच्च कुहचित्पुण्यैरगण्यैरपि । सौजन्यं न विजृम्भते तदपि चेन्नास्तेऽवैक्लव्या मतिस्तत्सर्वं परमेश्वरस्य कृपया त्वय्येव संभाव्यते ॥ २७६ ॥ शत्रूणां यमदण्डतां मृगदृशां कन्दर्पकोदण्डतां गीर्वाणद्रुमभावमर्थिविदुषां मध्ये त्रयाणामिति । आश्चर्यं मनुजेन्द्ररत्न भवतो यद्बाहुदण्डद्वयं नानात्वं गतमेकमेव जगतां मध्ये त्रयाणामिति ॥ २७७ ॥ रक्तेनैव विलोचनेन करुणारत्नाकरेण त्वया दृश्यन्ते नरदेवरत्न सुहृदां विद्वेषिणो नो नृपाः । किं सिक्ताः प्रथमं सुधाभिरभवन्दावानलैः किं परैः पूर्वं पल्लविताः कुतः किमपरे भस्मत्वमासादितम् ॥ २७८ ॥ या लाक्षावलयानि बाहुयुगले कण्ठे च काचस्रजं मन्यन्ते बहुभूषणानि वनिता दीनद्विजानां पुरा । ता माणिक्यचितानि हेमवलयान्युज्झन्ति मुक्तास्रजं यद्द्वाराद्गृहदानशीलनृपते त्वत्त्यागलीलायितम् ॥ २७९ ॥ मेरुर्दूरगतो हिमालयगिरिः प्रालेयरूपोऽभवच्चन्द्रे श्रीसहजेऽपि याचकभयात्क्षीणत्वमुन्मुमीलति । कौपीनं कृतवान्हरोऽपि भगवान्विष्णुर्जलं सेवते वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः ॥ २८० ॥ कल्याणं भवतां यशः प्रसरतां धर्मः सदा वर्धतां संपत्तिः प्रथतां प्रजा प्रणमतां शत्रुक्षयो जायताम् । वाक्यं संवदतां वपुः प्रभवतां लक्ष्मीपतिः प्रीयतामायुस्ते शरदां शतं विजयतां दानाय दीर्घायुषे ॥ २८१ ॥ दृष्ट्वैवाङ्कुशमुद्रया निगडितो दारिद्र्यदन्तावलो वाचा सुन्दरयाऽर्चया मम कृतो गङ्गाऽवगाहोत्सवः । अभ्युत्थाननमस्क्रियाऽर्वघटनैर्मानोऽपि दानोत्तरो लीलेयं भवता वयं तु विदुषां मूर्धानमध्यासिताः ॥ २८२ ॥ पद्मासद्मनि केशवस्य गहने रत्नानि रत्नाकरे हेमाद्रिर्हिमसानुना व्यवहितः स्वर्गे सुराणां तरुः । जम्बुद्वीपधरासु भूमिपतयो जाम्बूनदैर्दुर्मदास्त्वं तावत्सकलात्तयेऽसि सुलभो भाग्यैर्द्विजानामिह ॥ २८३ ॥ राजन्नभ्युदयोऽस्तु जीव शरदां साग्रं शतं तेऽरयो रोगैर्यान्तु लयं यशःशशधरः काष्ठांसु देदीप्यताम् । शिष्टान्पाहि बुधान्नय प्रणतिभिर्देह्यर्थिनां स्वं सदा वाणी ते वदने रमा प्रतिदिनं गेहे भुजे स्ताज्जयः ॥ २८४ ॥ प्रभ्रश्यच्छ्रुतिमस्तकः प्रविगलत्सद्वर्णविप्रस्थितिर्निश्यत्स्वाङ्गबलः प्रनष्टवचनप्राग्भावपूर्णस्मृतिः। वृद्धोऽत्यन्तमयं स्वयं कलिमहाम्लेच्छेन निर्मूलितो धर्मः संप्रति चाल्यते तव करालम्बेन भूमीपते ॥ २८५ ॥ दातृत्वं तव वीक्ष्य भूपतिमणे कश्चित्तरुत्वं गतः पाषाणत्वमगात्परः पशुतया कश्चिद्विलीनः कचित् । तस्मादद्य धरातले त्वदितरो दाता न सम्पद्यते कं चामी शरणं प्रपद्य कृतिनः स्युर्मादृशा याचकाः ॥ २८६ ॥ बन्दीकृत्य नृप द्विषां मृगदृशस्ताः प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥ २८७ ॥ हित्वा त्वामुपरोधशून्यमनसां मन्ये न मौलिः परो लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते । यस्त्यागं तनुतेतरां मुखैः शतैरेत्याश्रितायाः श्रियः प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ २८८ ॥ धर्मं पालय नन्दय द्विजगणान्रामं समाराधय प्रत्यर्थिक्षितिपालभूरुहवनं निर्मू-

---

१ शत्रु- । २ बन्धनपाशः । ३ कस्मिंश्चित् । ४ शुद्धा । ५ कल्पवृक्षत्वम् । ६ दान- । ७ संवत्सराणाम् । ८ हिमालयेन । ९ सुवर्णैः । १० दिक्षु । ११ अत्रानादरे षष्ठीति पश्यतः प्रेयसोऽनादृत्येत्यर्थः । १२ गृह्णन्ति । १३ अत्र शृङ्गाराभासः कविगतराजविषयकरतिभावाङ्गमिति काव्यप्रकाशादिकाराः । १४ अनन्तैर्द्वारैः ( उपायैः ) इति भावः ।

लमुन्मूलय । कान्ताचित्तसरोजसौभगवने भृङ्गत्वमासाद्य स्फीतां कीर्तिमशेषलोकजयिनीमाकल्पमाकल्पय ॥ २८९ ॥ ऐश्वर्यं नहुषस्य शंभुविषयश्रद्धा दशास्यस्य सा शौर्यं श्रीरघुनायकस्य सहजं गाम्भीर्यमम्भोनिधेः । दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा क्षोणीन्द्रव्रजवन्द्यमानचरण स्याच्वत्समत्वं प्रभो ॥ २९० ॥ भिक्षुद्वारि सदानवारिमधुपश्रेणीमिमां न्दूभ्रमाद्धत्ते यन्तृवधूर्वधूकरतलं शोणाम्बुजाशङ्कया । सैवान्वेति पलायितेति चकिता हस्ताग्रमाधुन्वती मुग्धा वीरमहीपते तदखिलं त्वद्दानलीलायितम् ॥ २९१ ॥ वीरेन्द्र क्षितिपाल ते सुललितं दानोद्यमे यद्वचः क्वास्ते सर्वहिरण्यमित्युदभवत्तत्कालमाकर्ण्य तत् । तापः प्राप हिरण्यरेतसि जनिं जाड्यं हिरण्याचले स्वेदाम्भोऽपि हिरण्यगर्भवपुषि स्वापाय संत्रासतः ॥ २९२ ॥ राजानः शशिभास्करान्वयभुवः के के न संजज्ञिरे भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे । येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्यां करः प्रापितः ॥ २९३ ॥ स्वान्ते वैभवमस्ति नैव परतः प्रामाण्यनिर्धारणं नैवातद्वति तत्प्रकारकमतिर्नैवोपमानं तव । त्वद्देशेषु विभाति न च्छलकथा नो वा क्वचित्संशयः श्रीवीर प्रथिता कथं पुनरियं नैयायिकत्वप्रथा ॥ २९४ ॥वीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां मृगाङ्कमलिनो धत्तां कथं चन्द्रमाः । स्यादेतत्त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥२९५॥ त्वत्प्रारब्धप्रचण्डप्रधननिधनिताराति वीरातिरेकक्रीडत्कीलालकुल्यावलिभिरलभत स्यन्दमाकन्दमुर्वी । दम्भोलिस्तम्भभास्वद्भुजभुजगजद्वर्तुराभर्तुरेनां तेनायं मूर्ध्नि रत्नद्युतिततिमिषतः शोभते शोणभावः ॥ २९६ ॥ आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूयश्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखेन्दुः ॥२९७॥ एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि । अश्वैरश्वैरवेगैः कृतखुरखुरलीमङ्क्षुसंक्षुद्यमानक्ष्मापृष्ठोत्तिष्ठदन्धंकरणरणधुरारेणुधारान्धकारात् ॥२९८॥ मन्दोद्भूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्डस्फायन्निर्मोकसंधिप्रसरदविगलत्संमदस्वेदपूराः । जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ २९९ ॥ आ शैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीतादा तीरान्निकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य । आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्ते चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ ३०० ॥ श्रावंश्रावं त्वदीयं गुणगणमखिलं सर्वदा याचकेभ्यस्त्वत्प्राप्ताभीप्सितेभ्यः सकलविषयजं भूपवर्गं विहाय । त्वत्तोऽहं प्राप्तुमिच्छुर्विबुधतिलकतां त्वत्समीपेऽतिदूरादायातस्त्वं शतायुर्भव कुरु च तथा येन नान्यं भजेऽहम् ॥ ३०१ ॥ पाथोधेर्नगभीरिमाऽतिशयितः कुम्भोद्भवोऽप्यञ्जलौ यत्तं हन्त निवेश्य पानविषयं चक्रे क्षणाद्भूपते । दानस्यातिशयश्च कुञ्जरपतेर्नैवोर्जितो यत्स्थितिर्यावत्सिंहनिरीक्षणं न तदिति त्वय्येव तत्स्थायिता ॥३०२ ॥ राजन् कस्य न विस्मयं वितनुते कीर्तिस्त्वदीयैर्दृढं यत्सा सद्गुणपुञ्जबन्धनमिताऽप्येकत्र नो तिष्ठते । स्वच्छन्दं भुवनत्रये सुमनसां नृणां गुरूणां तथा चित्तं मोदयितुं सदैवमभितोऽन्येषां परिभ्राम्यति ॥ ३०३ ॥ विद्यावन्तो विनीताः प्रसभमभिसमं वाक्प्रपञ्चेषु जीवाः के वा नैवारभन्ते त्रिजगति

---

१ निर्मलाम् । २ प्रलयावधि । ३ गजानां पादबन्धनशृङ्खला- । ४ अग्नौ । ५ उत्पत्तिम् । ६ ब्रह्म- । ७ परित्यज्य । ८ अरातिः-शत्रुः । ९ मृगाङ्कस्य । १० सङ्ग्रामनिहतशत्रु- । ११ रुधिरनदी- । १२ वज्र- । १३ भुजंगराजस्य, शेषस्य । १४ समुद्र- । १५ छिन्न- । १६ सङ्ग्राम- ।

विततां कीर्तिवल्लीमतल्लीम् । तेषामाधारभावं भुवनभरभृतो बिभ्रतो ये लसन्ते ते तु त्रैलोक्यतुङ्गा विमलफलजुषः स्वःपतिं[1] स्वल्पयन्ति ॥ ३०४ ॥ वक्त्राम्भोजं सरस्वत्यधिवसति[2] सदा शोण एवाधरस्ते[3] बाहुः काकुत्स्थ[4]वीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः[5] । वाहिन्यः[6] पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं[7] स्वच्छेऽन्तर्मानसे[8]ऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ ३०५ ॥ केचिद्बद्धाः सहेलं निजभवनगता मोचिताः केऽपि केचिद्देहाद्देहान्तराणि क्षणमपि गमिताः केऽपि नीता निबन्धम् । हत्वा हत्वा च केचित्प्रतिपदमदयं प्रापिता व्यर्थभावं क्षोणीनाथस्य तस्योन्नतभुजपरिवेनारयः सारयश्च[9] ॥ ३०६ ॥ उच्चैः कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या न च वचसि कटुश्चित्रपाकानुभावी । कोषापेक्षी परस्मादुचितबहुकथस्तत्परः पुण्यलोके चित्रं राजाधिराज त्वमिव तव रिपुस्तत्र कंपं[10] प्रतीमः ॥ ३०७ ॥ उत्पत्त्युत्पन्नशिष्टा विविधगुणगणा यत्र यान्ति प्रतिष्ठां बाधेन प्राक्तनानां न च नियमविधिर्नापि संख्यार्थदाने । ऊहः सर्वत्र यस्य स्फुरति च सकलः सत्य एवार्थवादो मीमांसाभावमञ्चत्यभिनवमधुना मूर्तिरेषा त्वदीया ॥ ३०८ ॥ हेलि[11]प्रस्थानवेलाहतपृथुपृतनादुन्दुभिध्वानधाराधारावाहिप्रसङ्गादसमनृपसक्तसंभ्रमभ्रान्तचित्ताः । दैवादाकुञ्चिताङ्ग विगलितनयनस्पन्दमिन्दीवराक्ष्यो लीयन्ते त्वद्रिपूणां निजगृहवलभी चारुचित्राङ्गनासु ॥ ३०९ ॥ कीर्तिस्ते पूर्णचन्द्रं क्षितितलतिलक न्यक्करोतीति मन्ये यत्सोऽसौ लाञ्छनाढ्यस्तदिति समुचिता क्षीणता तस्य चापि । उद्दीप्तश्च प्रतापः परिभवति बलाद्भास्करं तेन नाकच्छिद्रं तत्रापि जातं रणभुवि निहतास्तेऽन्यथोर्ध्वं व्रजेयुः ॥ ३१० ॥

## राजविशेषप्रशंसनम् ।

### वीरप्रशंसनम् ।

लोकानां मानमात्रं मनुजजनरतिस्त्वं ससूदाङ्घ्रिरक्षो राज्ञामासत्त्वदक्षः कृतसमयरुचिर्मण्डितो वीरवर्गैः । कायत्वङ्मीनकेतुः करकलितयवः कोषमानैर्विहीनः श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र [12]मन्दं प्रतीमः ॥ १ ॥ वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रान्तदेहः संग्रामप्राप्तधैर्यो न विदलितरुची राजलक्ष्म्याऽतिहीनः । नित्यं दारासभस्थः प्रखरतनुनिभो यः सुभिक्षानुवर्ती श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र [13]मुक्तादिवर्णः ॥ २ ॥ श्रीवीर त्वद्रिपूणां रणशिरसि शरैर्भिन्नशीर्षाङ्ककाणां वीरावेशाद्भुतानां दिवमधिकरुषाऽन्योन्यशौण्डीर्यभाजाम् । श्लेषे दिव्याङ्गनानां भुवि कचनिचयो द्राक्कटाक्षे शरासासीषुभ्रान्त्यारिवीरभ्रमकुटिलहृदामाजिरावर्तते स्म ॥ ३ ॥ श्रीमद्वीर महीमहेन्द्र भवतः प्रस्थानकालोद्भवद्वादित्रध्वनिभीतभानुहरयो द्रागम्बरं प्रागमन् । तस्मिन्नेवमुपद्रवे किल विपर्यस्तं समस्तं रवेर्युग्या :सप्त रथाङ्गमेकमपदः

---

१ इन्द्रम् । २ वाग्देवी, तदाख्या नदी च । ३ रक्तवर्णः, तदाख्यो नदविशेषश्च । एवकारेणात्र नियमो न वाच्य इति काव्यप्रकाशादौ अस्माकं तत्तद्व्याख्यासु च स्पष्टीकृतम् । निपातानामनेकार्थत्वमिति चार्थे एवेति, 'शोण ओष्ठस्त्वदीय' इति वा पाठः परिवर्तनीय इत्यूह्यम् । ४ राम- । ५ मुद्रया सह वर्त्तत इति, सागरश्च । ६ सेनाः, सरितश्च । ७ निरन्तरम्, अत्यन्तं वा । ८ चित्ते, तदाख्ये सरोवरे च । ९ अष्टापदक्रीडनकस्य साधनभूता गुटिकाः । 'सार' इति भाषायाम् । १० कं ककारं, पं पकारमित्यर्थः । तथा च,कल्याणादिशब्दाःपल्याणाद्यात्मान ऊह्याः । ११ अवज्ञा- । १२ मं मकारं दं दकारमित्यर्थः । तथा च, अत्र सर्वेऽपि मकारा दकारा अवधेयाः । १३ अत्राद्यवर्णो हेयः । तथा च पदानामाद्या 'वा' इत्यादयो वर्णा यदि परित्यज्यन्ते तदा दानाशेत्यादीनि पदानि भवन्ति ।

सूतश्चिरादुद्गमः॥४॥ गर्वग्रन्थिलगुर्जरज्वरकरः कर्णाटकर्णाटवीदावाग्निर्द्रविडेन्द्रवीर्यदलनो गौडेन्द्रनिद्राहरः हम्मीर प्रमदाजनालसलसद्भूनर्त्तनस्तम्भन प्रस्थाने तव वीर डिण्डिमचमत्कारः समुज्जृम्भते ॥ ५ ॥ चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्टव्याकृष्टं निःश्वसन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तभारम् । नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेता वीर त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति ॥ ६ ॥ लावण्यासक्तहस्तोऽधिगतमणिगणः शैशवाभ्यस्तविद्यो लावण्यध्वस्तकामः कविजनमिलिते यौवनात्तप्रकामः । आदत्तक्षोणिदण्डो द्विजवशकृतधीः कङ्कणाहारयुक्तः स श्रीमान् वीरवीर त्वमिव बत रिपुस्तत्र मुक्तादिर्वर्णः ॥ ७ ॥

## अकबरप्रशंसनम् ।

हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीचिस्तेजोऽग्नेर्धूमधारा वितरणकारिणो गण्डदानप्रणाली । वैरिश्रीवेणिदण्डो लवणिमसरसीबालशैवालवल्ली वेल्लत्यम्भोधरश्रीरकबरधरणीपालपाणौ कृपाणः ॥ १ ॥ वीर त्वं कार्मुकं चेदकबर कलयस्युग्रटङ्कारघोषं दूरे सद्यः कलङ्का इव धरणिभृतो यान्ति कङ्कालशेषाः । शङ्कापन्नश्च किं कारणमिति मनसा भ्रान्तिपङ्कायितेन त्यक्त्वाहंकारमङ्काद्विसृजति गृहिणीं किं च लङ्काधिनाथः ॥ २ ॥ कर्णाटं देहि कर्णाधिकविधिविहितत्याग लाटं ललाटप्रोत्तुङ्ग द्राविडं वा प्रचलभुजबलप्रौढिमागाढराढम् । प्रस्फूर्जद्गुर्जरं वा दलितरिपुवधूगर्भ वैदर्भकं वा गाजी राजीवदृष्टे कुशशतमथवा शाहजल्लालुदीन ॥ ३ ॥ गाजीजल्लालुदीन क्षितिपकुलमणे द्राक्प्रयाणे प्रतीते प्रेयस्यः प्रारभन्ते तरलतरगतिव्याकुला मङ्गलानि । नेत्राम्भःपूरपूर्णस्तनकलशमुखन्यस्तबालप्रवालास्त्रुट्यन्मुक्ताकलापच्युतकुचकुसुमच्छन्नाकीर्णलाजाः ॥ ४ ॥

## अनङ्गभीमप्रशंसनम् ।

पृथ्वी श्रीमदनङ्गभीम महती तद्वेष्टनं वारिधिः पीतोऽसौ कलशोद्भवेन मुनिना स व्योम्नि खद्योतवत् । तद्विष्णोर्दनुजाधिनाथजयिनः पूर्णं पदं नाभवद्देवश्चेतसि वर्तते तव सदा त्वत्तो महान्नापरः ॥ १ ॥

## अर्जुनेन्द्रप्रशंसनम् ।

आयातस्ते समीपं तव गुणविमलान्पण्डितो वादकर्ता काव्ये भव्ये हि रेवाभवविगतरसे रुग्युगे रोगहर्ता । नाहं जाने चिकित्सां सकलगुणनिधे दुर्दरिद्रत्वरोगे श्रीमद्राजार्जुनेन्द्र प्रबलमपि यते कल्पिता सा चिकित्सा ॥ १ ॥

## भृगुनन्दनप्रशंसनम् ।

आदर्शाय शशाङ्कमण्डलमिदं हाराय हेमाचलं दीपाय द्युमणिं महीमिव कथं नो भिक्षये दत्तवान् । दित्सापल्लवितप्रमोदसलिलव्याकीर्णमन्त्राम्बुजो जानीमो भृगुनन्दनस्तदखिलं न प्रायशो दृष्टवान् ॥ १ ॥ गोत्राचार विचारपारगतया वृद्धा निरादृष्टया मात्रा वस्तुषु तेषु तेषु पुरतः प्रस्तारितेषु क्रमात् । अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा येनात्तं धनुरीक्षिताश्च सपदि क्षत्रावतंसा दिशः॥२॥

---

१ अत्रापि पुदादिवर्णत्यागोऽपेक्षितस्तेन लाकारादिवर्णत्यागे रिपुवर्णनमन्यथा प्रकृतवर्णनमेवेति दिक् । २ एतदप्यकबरस्यैवाभिधानम् ।

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुर्वीर्यं तत्र नमद्गिरामनुपमं व्यक्तं हि तत्कर्म्मभिः । त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः सत्यब्रह्म तपोनिधेर्भगवतः किं किं न लोकोत्तरम् ॥ ३ ॥

## कर्णप्रशंसनम् ।

मुखे हारावातिर्नयनयुगले कङ्कणभरो नितम्बे पत्राली सतिलकमभूत्पाणियुगलम् । अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशादपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥ १ ॥ त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विषस्त्वं बाणान्दश पञ्च मुञ्चसि परे सर्वाणि शस्त्राण्यपि । ते देवीर्पतयस्त्वदस्त्रनिहतास्त्वं मानुषीणां पतिर्निन्दा तेषु कथं स्तुतिस्तव कथं श्रीकर्ण निर्णीयताम् ॥ २ ॥ लोकेशः कर्णराजाद्रुतकनकमयस्तावकीनप्रतापाद्ब्रह्माण्डानां समूहो द्रव इव भवितेत्येव संभाव्य यत्नात् । तस्यापि प्लावनार्थं जलनिधिनिकरे व्यर्थतामत्र याते देव त्वद्वैरिनारीनयननलिनजैर्निर्ममे नीरधिर्नै ॥ ३ ॥ श्रीकर्ण प्रौढतेजाः प्रबलरिपुबलासह्यसंतापदक्षो नायं श्रीमत्प्रतापो जगति विलसति श्रीमहाराज किन्तु । मन्येऽहं कौशिकेनानुपमितमहसा नूतनस्वर्गसृष्टावुत्कृष्टः सृष्ट एष प्रखरतरकरो भास्करोऽसौ द्वितीयः ॥ ४ ॥

## कर्णाटवसुन्धराधिपप्रशंसनम् ।

मागाः प्रत्युपकारकातरधिया वैवर्ण्यमाकर्णय श्रीकर्णाटवसुन्धराधिपसुधासिक्तानि सूक्तानि नः । वर्ण्यन्ते कति नाम नार्णवनदीदावाग्निविन्ध्याटवीसन्ध्यामारुतनिर्झरप्रभृतयस्तेभ्यः किमात्तं मया ॥ १ ॥

## कलिङ्गेश्वरप्रशंसनम् ।

आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमान्विश्वासो नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः परः । आनन्दः कलिताकृतिः सुमनसां वीरश्रियो जीवितं धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः ॥ १ ॥ धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः । एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्तिराशिर्ययौ नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे ॥ २ ॥

## कल्याणदासप्रशंसनम् ।

कीर्तिस्वर्गतरङ्गिणीहिमगिरिर्विद्यानटीरङ्गभूर्लावण्यामृतभाजनं रसिकतावल्लीरसालद्रुमः । कान्तापाङ्गमरुस्थली तरुणतालक्ष्मीविलासाम्बुजं जीयाद्विश्वविभूषणं नरपतिः कल्याणदासाभिधः ॥ १ ॥

## काबिलेन्द्रप्रशंसनम् ।

विस्फार्य व्योमगङ्गावलदुरुलहरीकैतवात्केसरालीरुच्चैर्मस्तिष्कदेशे हिमकरकपटान्मण्डलीकृत्य पुच्छम् । दिङ्नागौरब्धलम्बस्तव विशदयशःकेसरी काबिलेन्द्र ब्रह्माण्डारण्यवीथीगिरिगहनदरीसंभ्रमी बंभ्रमीति ॥ १ ॥ वेलामुल्लङ्घ्य हेलादलितधरणिभृद्वाहिनीकोटिपूरैरुद्वेलत्काबिलेन्द्र प्रबलजलनिधिः

---

१ हारावः दुःखा वेदकः शब्दः । २ कं जलं, कणभरः शीकरौघः । ३ तिलकेति वृक्षविशेषस्य सङ्केतः । ४ देवा इति भावः । ५ गृहीताकारः । ६ स्वर्गस्य सुन्दरीणाम् । ७ गङ्गा- । ८ चन्द्र- । ९ दिग्गजः ।

प्लावनायोज्जृम्भे । स्यान्मग्ना मेदिनीयं प्रबलभुजबलप्रौढतच्चन्द्रहासज्वालाभिः संततं चेन्न दहति बडवावीतिहोत्रः प्रवृद्धः ॥ २ ॥

## कार्तवीर्यप्रशंसनम् ।

काष्ठानुषङ्गात्परिवर्धमाने जाग्रत्प्रतापज्वलने त्वदीये । श्री**कार्तवीर्य** प्रसभं पतन्ति प्रत्यार्थिपृथ्वीपतयः पतङ्गाः ॥ १ ॥

## श्रीमुकुन्दसिंहप्रशंसनम् ।

श्रीमत्तोमरवंशमौलिमुकुटालङ्काररत्नं सदा विष्वग्भास्वरनिर्मलद्युतियशःस्तोमाभिभूतोडुपः । चण्डोद्दीप्ततरप्रतापविजिताशीतांशुरव्याहतौदार्यध्वस्तसुरद्रुमाद्यभिमतिः श्री **श्रीमुकुन्द**प्रभुः ॥ १ ॥ विश्वोद्धारपरायणो न तु कदाचिद्यो वराहात्मना क्षोणीभृन्नतु पर्वतादिरिवयो जाड्यं कदाचिद्दधन् । दानीन्द्रो न च यः कदाऽपि पशुतां गत्वा यथा कामधुक् सोऽयं तोमरवंशभूषणमणिः श्रीमान्**मुकुन्दो** नृपः ॥ २ ॥ मुकुन्ददेवेन मुकुन्ददेवो मुकुन्दकोशेन मुकुन्दकोशः । उदारतायां परिपूर्णतायां गभीरतायां च न दृष्टपूर्वः ॥ ३ ॥ पाटनपत्तनपाता प्रथितयशाः प्रस्फुरत्प्रतापश्च । श्रीमन्मुकुन्दसिंहस्तोमरचूडामणी राजा ॥ ४ ॥

## उदयसिंहप्रशंसनम् ।

**उदयसिंह** धराऽधिपतौ त्वयि स्फुरति किं रविणा विधुनापि वा । स्वमहसा हि विकाशयसे जगत्स्वयशसा च सुशीतलयस्यपि ॥ १ ॥ मूर्ध्ना सहस्रेण बिभर्त्ति शेषः कूर्म्मश्च पृष्ठेन कथञ्चिदार्त्तः । श्रीमान्नरेन्द्रोदयसिंहवर्म्मा भूयो दधैवाविरतं प्रसन्नः ॥ २ ॥ गाम्भीर्ये पयसां निधिः सुरतरुः सर्वार्थसम्पूरणे सोढृत्वे वसुधा तथैव विभवे राजाधिराजोऽपरः । सौन्दर्ये मदनो बले च पविभृन्नीतौ च धर्म्मः स्वयं भूमीन्द्रोदयसिंह एव परितः ख्यातो गुणै राजते ॥ ३ ॥ नीतौ वाचस्पतिर्यः सुकृतितति विधौ दातृतायां च चिन्तारत्नं सिन्धुर्महत्त्वे यशसि च पयसां सागरस्तेजसीनः । विद्यायां भार्गवेन्द्रो द्रढिमनि नियतिः सत्यवाक्त्वे च धर्मो भव्यानां जन्मभूमिर्विलसतु सततं तोमरेन्द्रो नरेन्द्रः ॥४॥ क्रोधे रुद्रः प्रसादे जयति सुरतरुर्वाचि पीयूषपूरो दृष्टौ लक्ष्मीः पुरस्तात्सुकृतपरिणतिर्मानसेऽनुग्रहश्च । सोऽयं गाम्भीर्यधामा प्रथितपृथुगुणस्तेजसोद्दीप्यमानो मान्यो धन्यो वदान्यो विशदनयबलः श्रीयुतस्तोमरेन्द्रः ॥ ५ ॥ श्रीमान् धीमान् क्षमावान् सकलसुमनसां यत्नवान् रक्षणे च प्रोद्यत्तेजा विजेता जनपदजनताश्रेयसां संविधाता । ओजस्वी सद्यशस्वी निजविमलगुणैर्जेतुमिन्दुं मनस्वी धीरो वीरो महोरोरुचिरमलरुचिः पाटनेशो नरेशः ॥ ६ ॥ भव्यं सोहनलालदर्शितनयं संश्रित्य लब्धोदयो दृप्यद्दुर्जनवैरिगर्वशमने जाग्रत्प्रतिज्ञः सदा दाने वाऽपि बले बलेरपि बलं धिक्कृत्य राजंस्तरां भूमीन्द्रोदयसिंहतोमरवरः केषां न वन्द्यो गुणैः ॥ ७ ॥ मन्त्री यस्य सुधीवरो नयचणः श्रीशोभनः सोहनो गाम्भीर्येण च यो महाजलनिधिं निक्षिप्य दूरं स्थितः। भूभृन्मौलिभिरर्च्यमानचरणो यश्चैव लक्ष्म्यावृतःस श्रीलोदयभूपतिर्विजयतां विश्वं चिरं रञ्जयन् ॥ ८ ॥ विष्वक्तेजसि भास्करे किमपरः श्लोके विधावस्य वा विष्वग्दीप्तिरनुष्णता च नितरामाम्यां परं सङ्गते इत्येवं सुविचार्य चेतसि विधिस्तल्लक्षणार्थं व्यधात्स्वर्भानुं ध्रुवमित्यवैमि नृपते श्रीतोमराधीशितः ॥ ९ ॥ भूभृद्वृन्दनिषेव्यमानगमनो लोकोपकारोद्यतः श्रीश्रीसोहनलालमन्त्रिमतिमत्सम्भाबितोपक्रमः । गम्भीरो महिमप्रतापमहितो दातावदातो गुणैः श्रीयुक्तोदयसिंहवर्म्मनृपतिर्भव्योदयो वर्धताम् ॥ १० ॥

## कुसुमेन्द्रसाहिप्रशंसनम्।

वीर श्रीकुसुमेन्द्रसाहिनृपतेः प्रौढप्रतापो वरः कन्या काचन मालवक्षितिपतेः साम्राज्यलक्ष्मी-रियम्। तस्या वेषकरग्रहस्य समये तत्कुम्भसंस्थापनं कर्तुं मण्डपबन्धनं विरचितुं विप्रा वयं प्रेषिताः॥ १ ॥

## कृष्णप्रशंसनम्।

श्रीकृष्ण त्वत्प्रतापेन प्रतप्ताङ्गीर्दिगङ्गनाः। दिग्गजा वीजयन्त्येव कर्णतालैः पुनः पुनः ॥१॥ मन्ये ऽरण्ये कुलगिरिगुहागह्वरे पर्यटन्ती विद्धा दर्भैः कमलचरणे वासुदेवस्य कीर्तिः। इन्दौ कुन्दे कुमुदमुकुले चामरे चन्दने वा दत्त्वा दत्त्वा मृदुनि पुरतः पादमेषा प्रयाति ॥ २ ॥ क्षीरक्षालितपाञ्चजन्यकिरणश्रीगर्व-सर्वङ्कषाः श्रीकृष्णार्जुनसारथेऽसुरारिपो त्वत्कीर्तिविस्फूर्तयः। कैलासन्ति हिमाचलन्ति विकसत्कुन्दन्ति कन्दन्ति च क्षीरोदन्ति हलायुधन्ति विबुधाहारिन्ति हीरन्ति च ॥ ३ ॥ त्वद्वाहोद्धूतधूल्यः करिकरनिकरैः सीकराश्च प्रयुक्ता व्योम व्यापुः समन्ताद्यदुमुकुटमणे तत्र पङ्कोऽद्भुतोऽभूत्। आगच्छद्भिः सुरैः क्ष्मां तव भजनकृते स्फाटिकीभिः शिलाभिर्बद्धः पन्थास्तदानीं सुरसरिदिति तं मानवा मानयन्ति ॥ ४ ॥

## गुर्जराधीशप्रशंसनम्।

कालिन्दि ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णासि कस्माच्छत्रोर्मे नर्मदाहं त्वमपि कथमहो मत्सप-त्न्याश्च नाम। मालिन्यं ब्रूहि किं ते प्रविरलविगलत्कज्जलैर्मालवीनां नेत्राम्भोभिः किमासां समजनि कुपितो गुर्जराणामधीशः ॥ १ ॥

## चोलेन्द्रप्रशंसनम्।

त्वत्खड्गखण्डितसपत्नविलासिनीनां भूषा भवन्त्यभिनवा भुवनैकवीर। नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली चोलेन्द्रसिंह तिलकं करपल्लवेषु ॥ १ ॥ सिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकैस्तत्रासोल्लास-लीलाकिसलयमनसा पाणयः कीरदष्टाः। तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैरित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥ २ ॥

## जगद्देवप्रशंसनम्।

चक्रः पप्रच्छ पान्थं कथय मम सखे नास्ति स क्वापि देशो वस्तु नो यत्र रात्रिर्भवति भुवि खगायेति स प्रत्युवाच। नीते मेरौ समाप्तिं कनकवितरणैः श्रीजगद्देवनाम्ना सूर्येऽनन्तर्हितेऽस्मिन्कतिपयदिवसैर्वा-सराद्वैतसृष्टिः ॥ १ ॥

## जनकप्रशंसनम्।

ज्याघातः कार्मुकस्य श्रयति करतलं कण्ठमोंकारनादस्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मी-यमन्तः। राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्रीर्येषां ते यूयमेते निमिकुलकुमुदानन्दच-न्द्रा नरेन्द्राः ॥ १ ॥

---

१ नर्मदायाः समुद्रस्य च संवादोऽयम्। २ यमुनाभ्रान्त्या समुद्रेण कालिन्दीत्युक्ते कोपात्साकूतं नर्मदाया उत्तरम् 'हे कुम्भोद्भव अगस्त्यमुने' ब्रूहि इति। ३ शत्रु-। ४ जलकणम्; (पक्षे) वलयम्। ५ पत्रलता; (पक्षे) पत्रिकारचना। ६ तिलयुक्तं कज्जलम्; (पक्षे) ललाट-भूषणम्।

## दलपतिरायप्रशंसनम् ।

चन्द्रं चन्द्रार्धचूडं चतुरुदधिचयं चन्द्रिकां चन्द्रकान्तं चार्वङ्गीलोचनान्तं चमरसहचरीबालभारोच्चयं च । खर्वीकुर्वन्ति दर्वीकरतिलकमपि ध्वस्तगुर्वीति भाति स्वर्वीथीप्रस्थितास्ते दलपति[1]गृहिणि त्वद्यशस्तोमसोमाः ॥ १ ॥

## दशरथप्रशंसनम् ।

चिरादक्ष्णोर्जाड्यं शमयति समस्तासुरवधूकचाकृष्टिक्रीडाप्रसमसुभगम्भावुकभुजः । त्रिलोकीजङ्गालोज्ज्वलसहजतेजाःमनुकुलप्रसूतिः सुत्राम्णो विजयसहकृत्वा दशरथः॥ १ ॥ यस्योद्यद्भुजदण्डचण्डिमवलत्कोदण्डलीलायितैर्निष्पीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे । लक्ष्मीमस्तविपाटलक्षतमयीमालम्बते केवलं पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं[2] वपुः ॥ २ ॥

## दिल्लीन्द्रचूडामणिप्रशंसनम् ।

राजेति क्षणदाकरं विजयते दानोरुलक्ष्मीरिति स्वर्नागं बहुवाहिनीपतिरिति क्षीरोदमास्कन्दति । दुर्गाधीश इति स्फुटं पुररिपुं विद्वेष्टि भोगोद्भटश्रीरित्यर्हति वासुकिं स्वयशसा दिल्लीन्द्रचूडामणिः॥१॥

## नानाप्रशंसनम् ।

जयश्रियः कृपाणीयं वेणी नानाख्यभूपतेः । अस्यां करगृहीतायामसावभिमुखी तव ॥ १ ॥

## निजामशाहप्रशंसनम् ।

नृपतिनिजाम तवाद्भुतचरणार्पणबहलपीडाभिः । रचयति बहिरिव रसनामरुणध्वजकैतवादवनिः ॥ १ ॥ धरणिधर निजामशाह युष्मत्करकरवालकरालकालसर्पः । द्विषदसुपवनं निपीय पीनो दिशि दिशि मुञ्चति कञ्चुकं यशस्ते ॥ २ ॥ अटत्कटकघोटकप्रकटटापटङ्कारवच्चटचटदिति स्फुटं स्फुटति मेदनी कर्परम् । निजामधरणीपतौ वलति कौतुकाडम्बरादिदं भुवनमण्डलं दरदरीदरीदर्यहो ॥ ३ ॥ क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलैर्द्रागेव द्रवरूपतामुपगते चामीकराणां चये । अस्यद्वासवधामघोरणि मुहुर्मज्जद्ग्रहग्रामणि त्रस्यत्कामिनि निःपतद्वनितलं मेरोः समुन्मीलति ॥ ४ ॥ क्षोणीकाम निजाम तावकभुजं लब्ध्वा भुजंगीश्वरं जानीमः करवालकालभुजगी किं नाम गर्भिण्यभूत् । मत्तेभेन्द्रविभिन्नकुम्भविदलन्मुक्ताकलापच्छलादच्छामण्डपरम्परामधिरणं सूते स्फुरन्ती मुहुः ॥ ५ ॥ वाहव्यूहखुरक्षतां वसुमतीं संवीक्ष्य मूर्च्छावतीं भेरीझाङ्कृतिचञ्चलेन पयसा वारांनिधिः सिञ्चति । दिग्बाला तनुते निजामनृपतेर्वातं पताकांशुकैर्धूलीधोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति ॥ ६ ॥ विद्वद्गोष्ठीगरिष्ठ प्रतिभटदमन श्रीनिजाम प्रतीमः कृत्वा त्वत्कीर्तिगाथां वहति गणविधिं पद्मयोनिः कठिन्या । वक्रा लेखा गुरूणाममृतकरकलां कञ्चुमल्लीमरालाः शुद्धा लेखा लघूनां बिसभुजगनभो निम्नगादन्तिदन्ताः ॥ ७ ॥ अङ्गाः संजातभङ्गाद्यनवनवसतिप्राप्तरङ्गाः कलिङ्गास्तैलङ्गाः स्वर्गगङ्गाभिषवणमतयः शीर्यदङ्गाश्च वङ्गाः । लाटाः स्विद्यल्ललाटाः पदगमनदृढ श्वासलोलाश्च चोला जायन्ते श्रीनिजाम पृथुरण भवतः प्रौढनिसाणनादात् ॥ ८ ॥

---

१ दलपतिरायः कश्चिन्नृपस्तत्पत्नीसंबोधनम् । २ इन्द्रस्य ।

## नृसिंहप्रशंसनम् ।

आहवे जगदुद्दण्डराजमण्डलराहवे । श्रीनृसिंह महीपाल स्वस्त्यस्तु तव बाहवे ॥ १ ॥ त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते । अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः॥२॥ कौमुदीव तुहिनांशुमण्डलं जाह्नवीव शशिखण्डमण्डनम् । पश्य कीर्तिरनुरूपमाश्रिता त्वां विभाति नरसिंहभूपते ॥ ३ ॥ गण्डाभोगे विहरति मदैः पिच्छिले दिग्गजानां वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि । यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितीन्द्र ॥ ४ ॥ विद्यारत्नं सरसकविता यानरत्नं तुरङ्गो वाञ्छारत्नं परमपदवी भोगरत्नं मृगाक्षी । स्रोतोरत्नं विबुधतटिनी मासरत्नं वसन्तो भूभृद्रत्नं कनकशिखरी भूपरत्नं नृसिंहः ॥ ५ ॥ निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी सभारत्नं विद्वाञ्श्रवणपुटरत्नं हरिकथा । कलारत्नं गानं दिविगमनरत्नं दिनकरो महीरत्नं मन्ये सपदि नरसिंहः क्षितिपतिः ॥ ६ ॥ श्रीलक्ष्मीनरसिंहसान्द्रजलदे चञ्चन्नखालीतडिद्दाम्नि च्छन्नरिपुप्रतापतपने कोपावलिं वर्षति । पूर्णा शोणितवाहिनी सुरमनःसंतापदावानलः शान्तोऽभूद्विरराम वैरिवनितासीमन्तमार्गोदयः॥७॥ निर्यच्छोणितपूरताम्रवपुषः स्वैरं रुदन्तो मुहुर्देव श्रीनरसिंह ते रिपुजना दिग्वाससो निस्त्रपाः । उद्गच्छज्जठरान्त्रनालसहितास्ते नूनमासन्पुनर्जन्मानो रणभूमिमातुरुदरात्तत्कालमेव च्युताः ॥८॥ देव त्वत्तरुणप्रतापशिखिनो निःशेषमेधायते शत्रूणां पटलं तदीयमयशो जानामि धूमायते । मार्तण्डांशुलसन्नखावलिरसौ ज्वालाकलापायते दुःखानां निकरस्तथा सुमनसां सङ्घः पतङ्गायते ॥ ९ ॥ किं मध्याह्नदिवाकरोऽयमपरः किं वायमौर्वानलः किं वासौ चपलाचयः पशुपतेः किं भालनेत्रामलः किं वासौ प्रलयानलः किमथवा सर्वोऽपि भौमानलः श्रीमत्सिंह भवत्प्रतापमहिमा नोदेति केषां मतिः ॥ १० ॥ काठिन्यं कुचकुम्भयोर्नयनयोश्चाञ्चल्यमेतद्द्वयं भो ब्रह्मन्भवता कथं न पदयोरस्माकमासादितम् । इत्थं श्रीनरसिंह ते त्रिभुवनाधीशस्य धाटीभिया कान्तारेषु मिथः पलायनपरा जल्पन्ति वैरिस्त्रियः ॥ ११ ॥ एताः संप्रति गर्भगौरवभराद्राज्ञोऽवरोधाङ्गनाः कान्तारेषु पलायितुं बत कथं पद्भ्यां भवेयुः क्षमाः । इत्थं चेतसि संविभाव्य सदयं वैकुण्ठकण्ठीरव त्वन्नादावलिभिः सखीभिरिव किं तद्गर्भपातः कृतः॥१२॥ स्नातस्त्वद्रिपुरक्तपाथसि यशो धौताम्बरं धारयल्लँक्ष्मीश त्वदरातिवक्त्रकमलैर्भूदेवतां पूजयन् । जुह्वच्चैतदसून्प्रकोपदहने युष्मत्प्रतापोदयः शत्रुच्छत्रधरार्थदर्पयशसां प्राणाहुतीराददे ॥ १३ ॥ कीर्तिः श्रीनरसिंह ते त्रिपथगा तत्रोदितं कैरवं चान्द्रं मण्डलमत्र नीलमिव यत्तद्भृङ्गवृन्दं किमु । यद्वा त्वद्दलितारिवृन्दतरुणीचित्तेन्धनाग्नेः स्थलं चन्द्रस्तत्र विभाति नीलमिव यद्धूमः स मन्यामहे ॥ १४ ॥ अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार । धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंहे क्षितीन्द्र त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ १५ ॥ नृत्यद्भर्गाट्टहासप्रचयसहचरैस्तावकीनैर्यशोभिर्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंह क्षितीन्द्र । नेदं यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्यद्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ॥ १६ ॥ श्रीमद्वैकुण्ठकण्ठीरव तव निनदाकर्णनत्रासधावच्छक्रेभोद्भिन्नगण्डस्थलविगलदतिस्वच्छमुक्तामणीनाम् । माला तारावलीयं विलसति च पतद्दानपाथः पयोधिर्नो चेत्कत्यानु तारावलिरथ लवणः सागरोऽसौ कुतस्त्यः ॥ १७ ॥ द्विर्भावः

१ चन्द्रकलाभूषणम् । २ गण्डप्रदेशे । ३ पङ्किले । ४ प्रोञ्छति । ५ स्वस्तीत्याहेत्यर्थः अतिशुभ्रेत्यर्थः । ६ इन्धनायते । ७ विष्णोरुदरे । ८ शेवे । ९ ज्योतिरिङ्गण- । १० विस्तारसदृक्षः । ११ कीर्तिवच्छुक्ल इत्यर्थः ।

पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः । द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहः क्षितीन्द्रः ॥ ८ ॥

## पाण्ड्यप्रशंसनम् ।

तवाङ्गणे सुन्दर वीर **पाण्ड्य** मतङ्गजाः शृङ्खलिनो विभान्ति । आवासदानादरिभूपतीनामाशान्तशैला इव सापराधाः ॥ १ ॥ विन्ध्याद्रिः करसाधनी निरुपमो रत्नाकरः कोशभृत्सौगन्धी मलयाचलः परिचराः सर्वेऽपि विद्याधराः । विश्वाशापरिपूरणं वितरणं देशोऽप्यहो दक्षिणः पाण्डवाखण्डल वीरपाण्ड्य भवतः किं किं न लोकोत्तरम् ॥ २ ॥ एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः । पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपेनम्रामरश्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियम् ॥ ३ ॥

## पारसीकक्षितीशप्रशंसनम् ।

यदपि कटकयात्रारोधि पाथोधिना ते दिशिदिशि मम पत्या **पारसीक**क्षितीश । तदपि कुरु मुधा नो जीवितान्तं नितान्तं कथयति बहुभार्यं नैकनारीवियोगः ॥ १ ॥

## पृथ्वीराजप्रशंसनम् ।

मन्दश्चन्द्रकिरीटपूजनरसे तृष्णा न कृष्णार्चने स्तम्भः शम्भुनितम्बिनीप्रणतिषु व्यग्रो न धातुर्गृहे । अस्माकं परमर्दनोऽस्ति वदने न्यस्तेन संरक्षितः **पृथ्वीराज**नरेश्वरादिति तृणं तत्पत्तने पूज्यते ॥ १ ॥

## बङ्गालिदासप्रशंसनम् ।

**बङ्गालिदास** भवतः शुभनामवर्णाः पञ्चेषुपञ्चविशिखन्ति नितम्बिनीषु । प्राणन्ति बन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलीषु ॥ १ ॥

## बल्लालप्रशंसनम् ।

**बल्लाल**क्षोणिपाल त्वदहितनगरे संचरन्ती कीराती कीर्णान्यालोक्य रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी। मुक्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्ति ॥ १॥

## बाङ्गालक्षोणिपालप्रशंसनम् ।

आग्नेयास्त्रप्रवीणप्रबलमृगभटाः शत्रुसंक्षोभदक्षा यस्य प्रौढप्रतापानलबहलशिखास्विन्धनत्वं प्रयान्ति । सोऽयं प्राचीपयोधिप्रहितकरततीतूर्णसंपूर्णकोपो **बाङ्गाल**क्षोणिपालस्त्रिभुवनजनतागीतकीर्तिप्ररोहः॥ १॥

## बीसलप्रशंसनम् ।

आ विन्ध्यादा हिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गादुद्ग्रीवेषु प्रहर्षान्नृपतिषु विनमत्कन्धरेषु प्रपन्नः । आर्यावर्तं यथार्थं पुनरपि कृतवान्म्लेच्छविच्छेदनाभिर्देवः शाकम्भरीन्द्रो जगति विजयते **बीसलः** क्षोणिपालः ॥ १ ॥

---

१ उपगतानाम् । २ अतिशयित- ।

## भावसिंहप्रशंसनम् ।

यस्याग्निः कोपपुञ्जे वसति खुरपुटे वाजिनां गन्धवाहो लक्ष्मीः सस्नेहदृष्टौ कमठकुलमणेर्वीचि वाचामधीशा । रौक्षे कौक्षेयकाग्रे क्षपितरिपुगणे कोपनोऽसौ कृतान्तः कस्तं श्रीभावसिंहं प्रबलमखभुजामाश्रयं नाश्रयेत ॥ १ ॥

## भीमप्रशंसनम् ।

रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः । झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ॥ १ ॥

## भैरवप्रशंसनम् ।

धनानि विद्वत्कविमण्डलीषु पञ्चेषुबाणानपि कामिनीषु । वर्षन्ति वज्राण्यरिधोरणीषु श्रीभैरवक्षोणिमणेः कटाक्षाः ॥ १ ॥

## भोजप्रशंसनम् ।

त्वच्चित्ते भोज निर्व्याजं द्वयं तृणकणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥ १ ॥ भोज त्वद्दानपाथोधौ दरिद्रस्य निमज्जतः । न कोऽपि हि भुजालम्बं दत्ते मेऽभयदायकम् ॥ २ ॥ निजानपि गजान्भोजं ददानं प्रेक्ष्य पार्वती । गजेन्द्रवदनं पुत्रं रक्षत्यथ पुनः पुनः ॥ ३ ॥ प्रतापभीत्या भोजस्य तपनो मित्रतामगात् । और्वो वाडवतां धत्ते तडित्क्षणिकतां श्रिता ॥ ४ ॥ भोज त्वत्कीर्तिकान्ताया नभोभालस्थितं महत् । कस्तूरीतिलकं राजन्गुणागारं विराजते ॥ ५ ॥ अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम् । शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥ ६ ॥ धारेश त्वत्प्रतापेन पराभूतस्त्विषां पतिः[1] । सुवर्णपात्रव्याजेन देव त्वामेव सेवते ॥ ७ ॥ त्वद्यशोजलधौ भोज निमज्जनभयादिव । सूर्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः ॥ ८ ॥ शुक्तिद्वयपुटे भोज यशोऽब्धौ तव रोदसी । मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ ९ ॥ अद्य धारा सदाधारा सदालम्बा सरस्वती । पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते ॥ १० ॥ श्रीभोज साम्यं तव कल्पवृक्षः सदा वदान्योऽपि कथं प्रयाति । यतो भवद्दानसुपुष्टविप्रहव्येन कुक्षिंभरिरस्य भर्ता[2] ॥ ११ ॥ भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम् । हरेः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥ १२ ॥ भोजप्रतापाग्निरपूर्व एष जागर्ति भूभृत्कटकस्थलीषु । यस्मिन्प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥ १३ ॥ यथा यथा भोजयशो विवर्धते सितां त्रिलोकीमिव कर्तुमुद्यतम् । तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया ॥ १४ ॥ पन्थाः संहर दीर्घतां त्यज निजं तेजः कठोरं रवे श्रीमन्विन्ध्यगिरे प्रसीद सदयं सद्यः समीपे भव । इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं श्रीमद्भोज तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च ॥ १५ ॥ धाराधीश धरामहेन्द्रगणनाकौतूहली[3] यामयं वेधास्त्वद्गणने चकार खटिकाखण्डेन[4] रेखां दिवि । सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधराभावात्तु त्यजति स्म सोऽयमवनीपृष्ठे तुषाराचलः ॥ १६ ॥ राजन्मुञ्जकुलप्रदीप सकलक्ष्मापालचूडामणे युक्तं संचरणं तवाद्भुतमणिच्छत्रेण रात्रावपि । मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाभिनम्रः शशी मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम् ॥ १७ ॥ छन्नं सैन्यरजोभरेण भवतः श्रीभोजदेव क्षमारक्षादक्षिण दक्षिणक्षितिपतिः प्रेक्ष्या-

---

१ सूर्यः । २ इन्द्रः । ३ कुतूहलविशिष्टः । ४ कठिनीशकलेन ।

न्तरिक्षं क्षणात् । निःशङ्को निरपत्रपो निरनुगो निर्बान्धवो निःसुहृन्निःस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः ॥ १८ ॥ मुक्ताः केलिविसूत्रहारगलिताः¹ संमार्जनीभिर्हृताः² प्राप्ताः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूरादाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ १९ ॥ विद्वद्वृन्दगुणानुरूपविभवत्यागैकफकल्पद्रुमे स्वर्गे वासिनि भोजराजनृपतौ विधानवद्यात्मनि । दातारो भुवि नैव भूमिवलये मा सन्तु किं तावता ज्ञातारोऽपि न सन्ति हन्त नितरामेतावता दूयते ॥ २० ॥ स्पृष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटावटान्तार्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरटत्कोणपादाट्टहासः । भोजेन्द्रत्वद्रणक्ष्माक्षतभटविकटोरस्तलत्रोटकुप्यद्भ्रूघत्रोटकोटिप्रकटचटचटाशब्दरौद्रोऽभवद्द्राक् ॥ २१ ॥ भो भोः श्रीभोजदेवं श्रयत विनयतः शत्रवः क्षत्रवर्गाः प्राणत्राणाय नौका न भवति भवतां काप्यरण्यं शरण्यम् । मत्वा मातङ्गकुम्भद्वितयमिति पुरा क्रूरवृत्तिर्भिनत्ति क्रुद्धः शुद्धान्तकान्ताकुचकलशयुगं रंहसा सिंहशावः ॥ २२ ॥ नीरक्षीरे गृहीत्वा सकलखगपतीन्याति नालैकजन्मा³ चक्रं धृत्वा कराब्जे सकलजलनिधींश्चक्रपाणिर्मुकुन्दः । सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भालनेत्रेण पश्यन्व्याप्ता त्वत्कीर्तिकान्ता सकलवसुमतीं भोजराज क्षितीन्द्र ॥ २३ ॥ स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनोर्वत्सस्यानेतुकामस्तृणचयमधुना मुग्धदुग्धं न तस्याः । श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमुर्व्याम् ॥ २४ ॥ कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्तामादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः । दिङ्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ २५ ॥

## मणिपालप्रशंसनम् ।

प्रामाण्यं परतो न शक्तिगणना सादृश्यलोपः सदा कार्यञ्चेश्वरकर्तृ नन्वनुमितौ ज्ञानं विशिष्टात्मकम् । सर्वं न्यायनयानुसारिविबुधे चैतन्यनाशोपमान्नश्येत्तन्म**णिपाल** भूप भवतो नैयायिकत्वं कुतः ॥ १ ॥

## मल्लशाहप्रशंसनम् ।

मृगः प्रमीललोचनः पिकः कृतोक्तिमोचनः श्रितानतिः कृताततिर्मरालिकास्खलद्गतिः । निरीक्ष्यते लसन्मते **सुमल्लशाह** भूपते तवारिकामिनी वृथाद्भुतं हुताटवी यथा ॥ १ ॥ पलायिता तवारिवामलोचना यदा यदा पुलीन्दनायकैः सुलिप्तकालकूटसायकैः । विहाय नासिकासु मौक्तिकं स्रजं च मौक्तिकीं विलुण्ठिताः पुमर्थपञ्चमेह मल्लभूपते ॥ २ ॥ आदायादाय मुक्तास्तदनु शिखिधियादाय माणिक्यवर्गं धूमभ्रान्तिं वहन्त्यः स्ववदनकमलामोदलुब्धालिवृन्दे । पङ्क्तुं भिल्लयः प्रवृत्ताः सरभसमसकृद्यद्विषत्पत्तनेषु ब्रूमः किं कीर्तिपूरं धवलितवसुधं मल्लशाहस्य तस्य ॥ ३ ॥

## माणिकप्रशंसनम् ।

यशःशशाङ्काभ्युदये प्रवृद्धो द्विषद्वधूनेत्रजलाम्बुराशिः । नष्टं हि दारिद्र्यतमो बुधानां तव क्षितौ माणिक भूमिपाल ॥ १ ॥ सदग्रहारैर्भवता प्रदत्तैर्मदङ्गना कण्ठतटाग्रहारैः । श्रीमाणिकक्षोणिपते प्रतुष्टा यथा यशो गायति तद्विधेहि ॥ २ ॥ संजाते द्रवरूपतां हि रजताद्रौ स्वर्णशैले

---

१ सुरतक्रीडायां विच्छिन्नसूत्राद्धाराद्गलिताः । २ समाहृताः । ३ ब्रह्मा ।

द्रुतं भूमीपालललाम माणिकविभो प्रौढैः प्रतापानलैः। योगेऽभूदनयोः सुपाण्डुररुचिः सा तेऽरि-कान्ताजनैर्नीता स्वीयकपोलयोश्च विरहव्याजेन गोपायते ॥ ३ ॥ भोगासक्तैकचेता भयबशसु-खकृद्दीतिहा स्वाश्रितानां भोगान्भव्याय यच्छञ्जगति भवनतः साधु भण्डारतिश्च । भूपानां ग्लानिकर्ता मदनगजभयध्वंसदेहो हि भल्लाकीर्णः श्रीमाणिकेन्द्रस्त्वमिव तव रिपुस्तत्र [1]भं रं प्रतीमः ॥ ४ ॥ सङ्ग्रामक्षोणिदृप्यच्चपलरिपुचमूसिन्धुकीलालमालां पीत्वा कालः कृपाणोऽम्बुद उपसमरं गर्जते वीर-घोषैः ॥ वर्षत्युद्दामगौरं दिशि दिशि तव भोः कीर्तिवारीभकुम्भप्रोद्यन्मुक्ताहिमाश्मच्छुरितमरिततेर्माणिक-क्षोणिपालः ॥ ५ ॥

## माधवप्रशंसनम् ।

सत्यासक्तमना गुणाकरलताकीर्णो न दीनाश्रयोऽरिष्टध्वंसपराजयश्च सुमनोवृन्दैरलं वन्दितः । नाना-स्थानकलाप्रधानमहिमा नित्यं सदानन्दकः श्रीमान्**माधव** एव माधवसमः क्षोणीतले राजते ॥ १ ॥

## मानसिंह प्रशंसनम् ।

काञ्चीं काञ्ची न धत्ते कलयति न दशा केलितल्पं कलिङ्गी सिन्दूरं दूर एव क्षिपति करतलन्यस्तमा-न्ध्री पुरन्ध्री । सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्ततां रक्तिमानं कार्णाटी कर्णिकायां मलिनयति मनो **मानसिंह**प्रयाणे ॥ १ ॥

## मालवाखण्डलप्रशंसनम् ।

पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गः सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बु-वाहः । भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्नानदानाम्बुपट्टः खड्गः क्ष्मासौविदल्लः समिति विजयते **मालवाखण्डलस्य** ॥ १ ॥

## मुकुन्ददेवप्रशंसनम् ।

करवारिरुहेण संधुनाने तरवारिं नृपतौ **मुकुन्ददेवे** । वरयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपा-रिजातमालाः ॥ १ ॥

## मुञ्जप्रशंसनम् ।

लक्ष्मीर्यास्यति गोविन्दे वीरश्रीर्वीरमेष्यति । गते **मुञ्जे** यशःपुञ्जे निरालम्बा सरस्वती ॥ १ ॥

## मुदाफरशाहप्रशंसनम् ।

आकाश प्रसर प्रसर्पत दिशस्त्वं पृथ्वि पृथ्वी भव प्रत्यक्षीकृतमादिराजयशसां युष्माभिरुज्जृम्भितम् । **श्रीमुदाफरशाह**पार्थिवयशोराशेः समुज्जृम्भणाद्बीजोच्छ्वासविदीर्णदाडिमदशां ब्रह्माण्डमारोक्ष्यति॥१॥

## राजबहादुरप्रशंसनम् ।

नित्यं वृद्धिमुपैषि संकलयसे सर्वाः कलाः सर्वदा सानन्दं कुमुदाकरं वितनुषे नास्ते कलङ्कस्तव। सर्वा-शाः परिपूरयन्समुदयं धत्सेऽनिशं सर्वतो न **श्रीराजबहादुरेन्द्र**नृपते चन्द्राधिकस्त्वं कथम् ॥ १ ॥

---

[1] भकारं रकारं प्रतीमः । तथा च भकाराः रकारा बोध्याः ।

## राजेन्द्रसिंहप्रशंसनम् ।

मूर्ध्ना कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या वचसि न च पटुश्चित्रपाकानुभावी । कोषापेक्षी परस्मादुचितबहुकथः सर्वदा पूर्णलोक इत्थं **राजेन्द्रसिंह** त्वमिव तव रिपुस्तत्र कंम्पं प्रतीमः ॥ १ ॥

## रामचन्द्रप्रशंसनम् ।

एकादशरुद्राणामेका गौरीत्यनौचितीं मत्वा । राघव नृप तव यशसा दशापि गौरीकृता हरितः ॥ १ ॥ त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य । कपिकौणपमण्डलयोः शिवशिव भूयो भवन्ति संरम्भाः ॥ २ ॥ शरासने सायकमादधाने श्रीरामभद्रक्षितिपालमौलौ । सुराङ्गनानां वरलालसानां वामानि नेत्राणि परिस्फुरन्ति ॥ ३ ॥ गायन्तु किन्नरगणाः सह किन्नरीभिः श्री**रामचन्द्र** शिखरेषु हिमाचलस्य । शेषेन्दुकुन्ददलबालमृणालनालनीहारहारहरहाससितं यशस्ते ॥ ४ ॥ नालीकभङ्गकृदतीव नदीनबन्धुर्नक्षत्रपो नवसुधाविभवैकहेतुः । राजा किमिन्दुरपि नार्यभिमानहारी राजा परं जयति राघवसार्वभौमः ॥५॥ नृपतिमुकुटरत्न त्वत्प्रयाणप्रशस्तिं प्लवगपदनमद्भूनिर्भराक्रान्तभोगैः । लिखति दशनटङ्कैरुल्लमद्भिर्नमद्भिर्जरठकमठभर्तुः कर्परे सर्पराजः॥६॥ रघुतिलक नृपाल त्वद्विषत्क्षोणिपालप्रतिलसदपकीर्तिश्यामले विश्वजाले । भगवति भजमाने कृष्णतां शूलपाणौ किमुदधिगिरिपुत्र्यौ चक्रतुस्तत्र विद्मः ॥ ७ ॥ अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्विशल्यं सौमित्रेरयमुपनिनायौषधिवनम् । इति स्मारंस्मारं त्वदरिनगरीभित्तिलिखितं हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ ८ ॥ यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः । स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुरस्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ॥ ९ ॥ झगिति जगतीमागच्छन्त्याः पितामहविष्टपान्महति पथि यो देव्या वाचः श्रमः समजायत । अथ कथमसौ मुञ्चेदेनं न चेदवगाहते रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ १० ॥ लज्जाकीर्तिर्जनकतनया शैवकोदण्डभङ्गे तिस्रः कन्या निरुपमतया भेजिरे रामचन्द्रम् । अन्त्या पाणिग्रहणसमये ज्यायसी जातकोपा भूपैः सार्धं खलु गतवती मध्यमाथो दिगन्तान् ॥ ११ ॥ गेहे गेहे सुभग भवतो रामचन्द्र क्षितीश त्वामालिख्य स्वमपि सविधे सस्पृहं भावयन्त्यः । तस्मिन्नाकस्मिकमुपगते वल्लभे भीतिभाजः पौष्पं चापं तव करतले वेपमाना लिखन्ति ॥ १२ ॥ अहो रघुशिरोमणेरभिनवप्रतापावलिप्रचण्डकिरणप्रथाप्रसरसाध्वसादाश्रयम् । सुराधिपतिरम्बुदान्कमलमिन्दिरा सेवते हिमांशुरपि चन्द्रमाः सततमम्बुधौ मज्जति ॥ १३ ॥ कीर्तिः श्रीरघुवंशरत्न भवतः स्वर्वाहिनीगाहिनी दिक्पालानखिलान्परीत्य दधती पाण्योः प्रतापानलम् । सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रतख्यात्यै विष्णुपदं स्पृशत्यनु-

---

१ ककारं पकारम् । २ अलीकभङ्गकृत्; (पक्षे) कमलविकासकृत् । ३ अनाथबन्धुः; (पक्षे) नदीनः समुद्रस्तद्बन्धुः । ४ क्षत्रियश्रेष्ठः; (पक्षे) नक्षत्रनायकः । ५ वसुधैश्वर्यस्य कारणम्; (पक्षे) नवीनायाः सुधाया यो विभवस्तस्य मुख्यकारणम् । ६ शत्रुमानहारी; (पक्षे) नारीणां मानहारकः । ७ शरीरम् । ८ कपाले । ९ भुवनात् । १० श्रव इति पाठान्तरम् । ११ महेश्वर धनुषो भञ्जने । १२ चित्रितं विधाय । १३ समीपे । १४ लक्ष्मीः । १५ एकः पतिर्यस्याः । तस्या यद्व्रतं तत्ख्यात्यै अयं निष्कर्षः दिव्यं कर्तुमभिलषितवत्या गङ्गाऽवगाहनं देवताप्रदक्षिणीकरणं हस्तयोरग्निधारणं, सप्तमङ्गलातिक्रमणं भगवच्चरणस्पर्शनं सर्पाहरणं च क्रमेण क्रियन्त इति तव कीर्त्याऽपि पानीयाग्निनृपतिपदभगवत्पादस्पर्शनानि कृतानीति यथोक्तम् ।

दिनं शेषस्य शीर्षाण्यपि ॥ १४ ॥ कीर्तौ व्याप्तिमवेत्य वैरिवनिताबाष्पोदधेः साधनादुत्तुङ्गे पृथिवीभुजां परिवृढे शश्वद्विपक्षे स्थितम् । सर्वक्ष्मापतिमौलिमण्डनमणे श्रीरामचन्द्र प्रभो चित्रं पश्य तव प्रतापदहनं जानन्ति सत्तार्किकाः ॥ १५ ॥ श्रीराम त्वदनेकचित्रचरितप्रोद्दाम[1]कीर्तिश्रुतिप्रा[2]गल्भ्यादवधूतमूर्ध्नि सकलत्रैलोक्यलोकेऽपि यत् । अश्रोत्राः फणिनस्तदेतदुचितं नो चेदहिस्वामिना [3]व्याधूते शिरसि क भूः क गिरयः कामी दिशामीश्वराः ॥ १६ ॥ भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी[4] दिवं याता ब्रह्ममरा[5]लसंगमवशात्सा तत्र गर्भिण्यभूत् । पश्य स्वर्गतरङ्गिणीपरिसरे [6]कुन्दावदातं तया मुक्तं भाति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ १७ ॥ ज्ञाते तत्पुरुषे तु तत्पुरुषं[7]ति त्वन्नाम्नि शैवाग्रणीरल्पः कोऽपि समाश्रयन्निह बहुव्रीहिं बहुव्रीहिभाक् श्रीरामेश्वर कर्म्मधारय इति स्तुन्वन् कविर्भास्करस्तस्मादण्वपि कर्म्म धारयतु न द्वन्द्वे तु निर्द्वन्द्वति॥१८॥ अब्दैर्वारिजिघृक्षयाऽर्णवगणैः साकं व्रजन्ती मुहुः संसर्गाद्वडवानलस्य समभूदापन्नसत्त्वा तडित् । मन्ये राम तया क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोचनजलैः सिक्तोऽपि संवर्धते ॥ १९ ॥ ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे वार्धौ वीर तरन्ति वानरभटान् संतारयन्तेऽपि च । नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ २० ॥ कीर्तिः श्रीरघुवंशदीप भवतो दूती मुरारेः प्रियां[11] यस्मात्तुभ्यमदात्त[12]दादि गिरिशोऽभूदर्धना[13]रीश्वरः । ब्रह्माभूच्चतुरान[14]नः सुरपतिश्च[15]क्षुःसहस्रं दधौ स्कन्दो म[16]न्दमतिश्चकार न करस्पर्शं स्त्रियाः शङ्कि[17]तः ॥ २१ ॥ एकं [18]काञ्चनभूधरं सुवलयं वासः [19]सुधावारिधिं [20]तारं [21]तारकराजमण्डलमिदं संप्राप्य सत्कुण्डलम् । [22]दूरस्थापि च तेन तेन सदृशं त्वां भूषणं चापरं स्त्री [23]मानग्रहिलेव या[24]चेततितरां श्रीराम कीर्तिस्तव ॥ २२ ॥ संग्रामो दिवसा[25]यते तव भुजः पूर्वाचलेन्द्रा[26]यते त्वत्क्रोधोऽप्यरुणा[27]यते तव लसच्छौर्यं प्रका[28]शायते । त्वद्वैरी तिमिरा[29]यते तदबलाहृत्सूर्यकान्ता[30]यते त्वत्कीर्तिः [31]कमलायते रघुपते त्वत्ख[32]ड्गचण्डद्युतेः ॥ २३ ॥

---

१ उत्कट- । २ श्रवणातिशयात् । ३ कम्पिते सति । व्याधूते हि अहिस्वामिना शिरसि तत्र स्थिता क्षितिरपि निपतेत् निपतितायां च तस्यां गिर्यादीनामपि निपतनमेवेति तथोक्तम् । ४ हंस- । ५ गङ्गातटे । ६ कुन्दकुसुमवदुज्ज्वलम् । ७ तत्पुरुष इवाचरतीति तस्मिन् । ८ प्रसवोन्मुखा । ९ सागरे । १० समुल्लसति । ११ लक्ष्मीम् । १२ ततः प्रारभ्य । १३ गौरीशङ्करनामा । कीर्तिदूती लक्ष्मीमिवेमामपि न जातुचिद्रामं प्रति समर्पयेदितीवैतस्याः संरक्षायै अर्द्धाङ्गतयैव स्थापितवान् भूतेश इति कवेरुद्भावनम् । १४ सरस्वतीं कदाचिन्नापहरेदिति तां सर्वतो द्रष्टुं चतुराननो जातः, चतसृषु दिक्षु नेत्रप्रसारित्वस्यैवमेव सम्भवात् । १५ इन्द्रोऽप्येवं पौलोम्या अपहारणभिया रक्षाकामः सहस्राक्षो जातः । १६ मन्दा सालसा परिणय विषये मतिर्यस्य तादृक् स्कन्दः । १७ परिणीतामप्यवश्यं हरिष्यतीतित्रस्तः । १८ सुमेरुम् । द्वितीये करे तद्रूपस्य सुवलयस्याभावात् प्रार्थनम् । १९ सुधावारिधिरूपं वासोऽप्येकमित्यपरार्थं प्रार्थनम् । नह्येकेनाद्य स्तनमुपरितनं चाङ्गं भूषयितुं शक्ये इति । २० उज्ज्वलम् । २१ चन्द्रमण्डलरूपं कुण्डलमप्येकमेवेति । द्वितीयकर्णाभरणार्थं प्रार्थनम् । २२दिगन्तं गताऽपि । २३ मानिनीव । २४ अत्र परस्मैपदनिर्देशश्चिन्त्यः २५ दिवसवदाचरति । २६ पूर्वाचलेन्द्रः-उदयगिरिरिवाचरति । २७ अरुणः-सूर्यसूतः, स इवाचरति । २८ प्रकाशः-सूर्यदीप्तिः, स इवाचरति । २९ तिमिरं-रात्रितमः, तदिवाचरति । ३० सूर्यकान्त इवाचरति । ३१ कमलमिवाचरति । ३२ त्वत्खड्ग एव चण्डद्युतिः-सूर्यस्तस्य ।

अस्माकं पर[1]मन्दिरस्य चरितं यद्यप्यवाच्यं भवेत्स्वामी त्वं कथ[2]यामि तेन भवतः किंचित्प्रियादूषणम् । श्रीमद्राम नृप त्वया रणमुखे पाणिग्रहः सादरं यस्याः सासिलता परस्य हृदये दृष्टा लुठन्ती[3] मया ॥ २४ ॥ सत्यं सा बहुरूपिणी[4] समभवत्सिद्धि[5]स्वरूपा भवत्कीर्तिः[6] श्रीरघुवंशरत्न विमला जागर्ति विश्वोदरे[7] । क्ष्मापारे[8] रिपुमन्दिरे[9] नृपपुरे[10] रत्नाकरे निर्झरे कान्तारे गिरिशेखरे विषधरागारे[11] तथैवाम्बरे[12] ॥ २५ ॥ गर्वावेशविशालरावणभुजप्रोद्यत्प्रतापानलज्वालाजालैन[13]वाम्बुदः कथमसौ सीतापतिर्वर्ण्यते । यस्यारातिनृपाः कृपाणजलधौ मग्नाः पुरो गौरवादत्युच्चैर्गतयो[14] भवन्ति च पुनर्भित्त्वा रवेर्मण्डलम् ॥ २६ ॥ भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो यच्चाशोकमहावनं दलितवानक्षं[15] च यत्क्षुण्णवान्[16] । सीतोपायनमौलिरत्नसहितः प्राप्तश्च यस्त्वामसौ तत्राप्येष भवत्प्रतापमहिमा निर्यन्त्रणैः[17] कारणम् ॥ २७ ॥ धत्ते नायक राम तावकयशो रामे[18] शशाङ्के मरुद्वाहे[19] स्वर्गगजे[20] हरे फणिपतौ वाण्यां वृषे[21] भे[22] रुचिम् । अन्येषां तु तदम्बरे[23] तदहिते[24] तद्यञ्जने तन्मदे तत्कण्ठे च तदीक्षणे तदलके तत्प्रोथके[25] तत्पथे[26] ॥ २८ ॥ श्रीमन्नायक रामभद्र भवतः पाणौ कृपाणं रणे दृष्ट्वा यद्यदभूदरिक्षितिभुजां तत्तत्समाकर्णय । अङ्गे वेपथुरन्धता नयनयोर्वक्त्रे तृणं[27] भूयसी भीतिश्चेतसि वाचि संस्तुतिकथा हस्तद्वयं[28] मस्तके ॥ २९ ॥ आकृष्टे कवचादहीन्द्ररसनाकल्पे[29] कृपाणे त्वया श्रीमन्नायक रामचन्द्र भवतः प्रत्यर्थिनां वेश्मसु । गाहन्ते सहसा लुलाय[30]चमरीशार्दूलशाखा[31]चरीयक्षोरक्षशृगालकोल[32]शलभल्लूक[33]भिल्लादयः ॥ ३० ॥ रेफ व्यञ्जन[34]राजता तव तवाकार[35] प्रकर्षः स्वरेष्वन्त्यस्यापि[36] मकार विस्फुरति ते वर्गाक्षरेष्वा[37]दिता । यैः संभूय निगद्यते रघुकुलालङ्कारहीराङ्कुरो देवः क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥ ३१ ॥ स्वेदाम्भःकणमण्डलानि खुरलीखेलोद्भवान्यन्वहं तद्वाहो रसयन्[38]महाबल इति ख्यातिं गतो मारुतः । तं चास्वाद्य मुहुः सहस्रफणिताशाली बलीयानहि[39]र्धत्ते कोमलकोमलैरपि फणैः श्रीरामचन्द्र स्थिरां[40]॥ ३२॥ श्रीरामे मृगयां गतेऽपि धनुषा बाणे समारोपितेऽप्याकर्णान्तगतेऽथ मुष्टिगलितेऽप्येणाङ्घ्रिलग्नेऽपि च । न त्रस्तं न पलायितं न चकितं नोत्कम्पितं न द्रुतं मृग्या मद्वशगं करोति दयितं कामोऽयमित्याशया ॥ ३३ ॥ गाम्भीर्येण महोदयेन शरण[41]त्राणेन मर्यादया सर्वाशापरिपूरणेन महता स्थैर्येण धैर्येण च । राम त्वामनुकर्तुमिच्छतितरां वारांनिधिः किं त्वसौ पीतो वानरलङ्घितः प्रमथितो बद्धः श्रिया त्याजितः ॥ ३४ ॥ देव श्रीनृप रामचन्द्र भवतो दिग्जै-

---

१ परोढायाः । २ नहि भक्ताः किङ्करा अपि स्वाधीश्वरस्य क्षतिं सहन्ते, किं पुनः स्त्रियः; अथ यदि ताः स्त्रियः परत्र स्निग्धा एव स्युस्तदा किमिव नायकसह्यमिति द्योतयितुमिदमभिधानम् । ३ पुंश्चलीव नहीदं त्वत्प्रियायास्तस्या योग्यम् । ४ अणिमाऽऽदिभेदाद्बहुरूपा । ५ सिद्धीनां स्वरूपमिव स्वरूपं यस्याः सा । सिद्धा हि स्वतो भ्राम्यतीति तथोक्तम् । ६ भवतो रामस्य कीर्तिः । ७ विश्वस्योदरं मध्यभागस्तत्र । ८ क्ष्मायाः पृथिव्याः पारे, लोकालोकाचलगिरेरपि परत्रेति भावः । ९ रिपूणां स्थाने विशेष्येदमभिधानं तत्र रिपूणां प्रभावार्पणासम्भवद्योतनार्थम् । १० नृपाणां पुरे राजधान्याम् । ११ पाताले । १२ आकाशे । १३ पुञ्जप्रशमने मेघ अग्निर्हि जलेनैव शाम्यतीति तथोद्भावितम् । १४ स्वर्गं प्रति गन्तारः । १५ एतन्नामानं रावणपुत्रम् । १६ भग्नवान् । १७ अप्रतिहतः । १८ बलभद्रे । १९ मेघे । २० ऐरावते । २१ धर्मे । २२ नक्षत्रे । २३ बलरामवाससो नीलत्वात् । २४ चन्द्रशत्रौ राहौ । २५ वृषनासायाम् । २६ नक्षत्रमार्गे । २७ मुखे तृणे निहिते शत्रोर्दैन्यं व्यज्यते । २८ प्रणामार्थम् । २९ शेषजिह्वासमाने । ३० महिष- । ३१ वानरी- । ३२ वराह- । ३३ शल्यक- । ३४ ककारादिषु वर्णेषु रकारो हि स्वरानन्तरितो मूर्ध्नि राजत इति तथोक्तम् । ३५ अकारस्य दीर्घत्वात् । ३६ वर्गान्ते वर्त्तमानस्यापि । ३७ परसवर्णत्वेन स्ववर्गाक्षरेषु । ३८ आस्वादयन् । ३९ शेषः । ४० वसुधाम् । ४१ शरणागतरक्षणेन ।

त्वयात्रोत्सवे धावद्वीरतुरंगचञ्चलखुरक्षुण्णक्ष्मा[1]मण्डलात् । वातोद्भूतरजोमिलत्सुरनदीसंजातपङ्कस्थलीदूर्वा-चुम्बनचञ्चवो हरि[2]हयास्तेनैव वृद्धं दिनैः ॥ ३९ ॥ साधर्म्येण कथं गृणन्तु[3] यमुनावेणीं कृपाणीं च ते श्रीमद्राम चमूवरेण्य भवतो वाग्ब्रह्मसिद्धान्तिनः । नाकृष्टां हलिना[4] न कालियवशात्क्रूरां न धाराजडां न च्छाया[5]जनितां न वक्र[6]बहुलां न प्राप्तभङ्गां क्वचित् ॥ ३६ ॥ आबाल्यं पतिरेष मे जगदिदं जानाति तत्त्वं पुनर्भूमध्ये समुपागता तदपि ते विख्यायते यः पतिः । वृद्धा नास्य गृहे वसामि सुचिरं तिष्ठन्स्थिरात्रेति तन्मात्सर्यादिव राम भूप भवतः कीर्तिर्दिगन्तं गता ॥ ३७ ॥ का शृङ्गारकथा कुतूहलकथा गीतादिकानां कथा माद्यद्दन्तिकथा तुरङ्गमकथा कोदण्डदीक्षाकथा । एकैवास्ति परं पलायनकथा त्वद्वैरिभूमीभुजां देवश्रीरघुनाथनाथ जगति स्वप्नेऽपि नान्या कथा ॥ ३८ ॥ त्वं चेत्कल्पतरुर्वयं सुमनस[7]स्त्वं चेत्सुधात्मा कला[8]: संपूर्णा वयमीश्वरो यदि भवान्स्वच्छा विभूतिर्वयम् । संपूर्णः कमलाकरो यदि भवाञ्श्रीराजहंसा वयं स्वामिंस्त्वं शृणु रामचन्द्र नृपते किं किं न तेऽङ्गं वयम् ॥ ३९ ॥ बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रह्वता[9] ताते काननसेवनावधि कृपा सुग्रीवसख्यावधि आज्ञा वारिधिबन्धनावधि यशो लङ्केशनाशावधि श्रीरामस्य पुनातु लोकवशता जानक्युपेक्षावधि ॥ ४० ॥ त्वत्कीर्तिर्धनिका धनं मधुरिमा तस्याधमर्णा सुधा शीतांशुः प्रतिभूः[10] स्तदर्थनकृते सैषा दिवं धावति । सालीना तव वाचि राम नृपते चन्द्रो निरस्तध्वनिः शङ्कातङ्क[11]भृदंशुकावृततनुर्नक्तं समुत्सर्पति ॥ ४१ ॥ अस्त्रामास[12] तृणं प्रियाद्रुहि[13] तृणामास[14] स्मरारेर्धनुर्दारामास[15] मुनेः शिला[16]ऽपि नृपरामास[17] स्वयं पादुका । कुल्या[18]मास महार्णवोऽपि कपयो योधाम्बभूवुस्तदा पौलस्त्यो[19] मशकां[20]बभूव भगवंस्त्वं मानुषामा[21]सिथाः ॥ ४२ ॥ उप्ता कीर्तिलता गुणैस्तव विभो सिक्ता च दानोदकैर्मेरुस्तम्भमवाप्य दिक्षु वितता प्राप्ता नभोमण्डलम् । धूपैस्त्वत्प्रतिपक्षलक्षवनितानिःश्वासजैर्धूपिता ऋक्षैः कोरकितेन्दुना कुसुमिता श्रीरामचन्द्र प्रभो ॥ ४३ ॥ यद्बीजानि च मौक्तिकानि करिणां दन्ता यदीयाङ्कुरा यत्पत्राणि शरद्घना हिमगिरिर्यस्याः प्रकाण्डो महान् । यत्पुष्पाणि च तारका हिमरुचिर्यस्याः फलं सुन्दरं सेयं राजति रामकीर्तिलतिका ब्रह्माण्डभाण्डोदरे ॥ ४४ ॥ नो ग्लानिं भजते दिने न च सुराधीशैः समापीयते नो राहुर्ग्रसते न वा मृगदृशां वक्त्रैः पराजीयते । नो मेघैश्च पिधीयते न च कुहू[22]कालेऽपि संक्षीयते श्रीरामक्षितिपाल भाति जगति त्वत्कीर्तिचन्द्रः सदा ॥ ४५ ॥ आकृष्टे युधि कार्मुके रघुपते वामोऽब्रवीद्दक्षिणं पुण्ये कर्मणि भोजने च भवतः प्रागल्भ्यमस्मिन्न किम् । वामान्यः पुनरब्रवीन्न मम भीः पृच्छाम्यहं स्वामिनं छिन्द्यां रावणवक्त्रपङ्क्तिमथवेत्येकैकमादिश्यताम् ॥ ४६ ॥ अम्भः कर्दमतामुपैति सहसा पङ्कः पुनः पांसुतां रेणुर्वारणकर्णतालयुगलैर्दिक्प्रान्तनीहारताम् । निम्नत्वं गिरयः समं विषमतां शून्यं जनाकीर्णतां निर्याते त्वयि रामचन्द्र नृपते त्यक्तस्वरूपं जगत् ॥ ४७ ॥ पाताले मञ्जु[23] मूलं फणिपतिरभितः कीर्तिवल्लेस्तवैषा स्थूणा कैलासशैलो गगनमिह महामण्डपः पाण्डुदण्डाः । दन्ती[24]न्द्रस्थूलदन्ता दलततिरतुला शारदाभ्राणि सारास्ताराः पुष्पाणि चन्द्रः फलमिदममलं राम राजेन्द्र मन्ये ॥ ४८ ॥ कूर्मः पादो[25]ऽस्य यष्टिर्भुजगप-

---

१ पृथिवी- । २ सूर्याश्वाः । ३ कथयन्तु । ४ बलभद्रेण । ५ सूर्यपत्न्याः प्रतिनिधिश्छाया तस्या जनिरुत्पत्तिर्यस्यास्तस्याभावस्तस्त्तता ताम् । ६ अत्र वक्रपदं लक्षणया प्रवाहपरम् । ७ पुष्पाणि । ८ चन्द्रसम्बन्धिन्यो विशेषाः । ९ नम्रता । १० प्रतिनिधिः । ११ भय- । १२ ( तृणम् अपि ) अस्त्रामास अस्त्रमिव कृतवान् । १३ जयन्ते । १४ तृणमिव च्छिन्नवानिति भावः । १५ दारानिव कृतवान् । १६ शिलारूपाऽहल्यानाम्नी पत्नी । १७ राजानमिव कृतवान् । भरतो हि पादुकां पृष्ट्वैव सर्वं शशास । १८ कृत्रिमां नदीमिवोल्लङ्घितवान् । सेतुना नियम्येति शेषः १९ रावणः । २० मशकमिव ( क्षणमरुन्तुदं ) पिष्टवान् । २१ देवोत्तमत्वेऽपि मनुष्य इवाचरः । २२ अमावस्यासमये । २३ रम्यम् । २४ ऐरावत - । २५ अवष्टम्भः ।

तिरसौ भाजनं भूतधात्री तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः । ज्योतिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना शत्रुश्रेणी पतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ ८९ ॥ शक्तिः सर्वातिरिक्ता विलसति न च ते पीलुपाकप्रियत्वं वाक्यं धर्मे प्रमाणं स्वयमपि चरितं नान्य ईशोऽस्ति कश्चित् । नो वाऽयं भेद आस्ते कचिदपि विषये नैव मिथ्याप्रवादश्चित्रं पाण्डित्यमेतद्वहसि रघुपते गौतमाचैरतर्क्यम् ॥ ९० ॥ पूर्वत्रासिद्धबुद्धिर्द्विगुणितकरणेऽप्यस्ति तेऽल्पप्रयत्नो यः कश्चिन्नैव लोपं भजति बहुतरापेक्षिणोऽप्यन्तरङ्गाः । नो वा बाधः परेण कचिदपि विषये नापवादो गुणानां वृद्धीनां वर्णमात्रं सदनमिति नवो राम साधुत्वमार्गः ॥ ९१ ॥ प्रौढिं धत्तां कलासु प्रथयतु कुमुदं सत्पथे संचरेद्वा नेत्रानन्दं विधत्तां भवतु च विबुधा नस्तु राजा तथाऽपि । दोषान्वेषी[३] कलङ्की सहजजडतनुः सक्षयैः[४] पक्षपाती[५] नक्षत्रेशः[६] कथं वा कलयतु तुलनां रामचन्द्रेण चन्द्रः ॥ ९२ ॥ माद्यद्दैतण्डगण्डच्युतमदमदिरासंचरच्चञ्चरीकीझाङ्कारानन्दगीताः कविभवनभुवस्ताः पुरस्ताद्भवन्ति । पश्चादञ्चन्ति येषामुपरि करुणया रामभूपालमौलेरुद्वेलदुग्धवीचीबहलधवलिमाबद्धकक्षाः कटाक्षाः ॥ ९३ ॥ बीजं चिन्तामणिश्चेत्कनकगिरितटीजन्मभूमिर्भवेचेत्सेक्त्री चेत्कामधेनुर्विधिकुलमखिलं मूलसंस्कारभृच्चेत् । वित्तेशो रक्षिता चेत्सरसिजनिलया मञ्जरी चेत्तदा स्याद्राम क्ष्मापालमौले तव भुजलतया कल्पवृक्षः सदृक्षः ॥ ९४ ॥ मन्ये मृत्योः सपत्नी जगति सुविदिता कालकूटस्य कन्या धात्री कर्कोटकस्य स्मरणभयकरी किं च वज्रस्य माता । कल्पान्ताग्नेः पुरन्ध्री प्रभवति भगिनी भीषणा कालरात्रेर्दूतीयं ते कृपाणी सुररिपुसुदृशां रामचन्द्र क्षितीश ॥ ९९ ॥

## रामजामप्रशंसनम् ।

क्षुभ्यत्प्रत्यर्थिपृथ्वीपतिहृदयसरस्तोषशोषं दधाने त्वद्दोष्णां सुप्रतापे तपति बहुगुणे रामजाम क्षितीन्द्र । सूर्यो मित्रत्वमायात्समजनि दहनः कृष्णवर्त्मा निमज्जन्पारावारम्बुपूरे निवसति वडवावह्निरन्यत्किमु धाम् ॥ १ ॥

## रामनाथप्रशंसनम् ।

करकम्पितखड्गयष्टिभीमे रणसंनाहितरामनाथवीरे । अरिभूभृदमर्त्यसुन्दरीणामचलन्दक्षिणवामलोचनानि ॥ १ ॥

## रुद्रदेवप्रशंसनम् ।

कतिपयदिवसैः क्षयं प्रयायात्कनकगिरिः कृतवासरावसानः । इति मुदमुपयाति चक्रवाकी वितरणशालिनि **वीररुद्रदेवे** ॥ १ ॥ कवीन्द्राणामासन्प्रथमतरमेवाङ्गणभुवश्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुराः । अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥ २ ॥ भूयो भूयस्त्व-

१ पात्रम् । २ चरित- । ३ दोषा रात्रिः, दूषणानि च । ४ क्षीणधर्म्मा । ५ कृष्णपक्षे पतनशीलः । ६ तारापतिः । ७ हस्ति- । ८ भ्रमरी- । ९ एतन्नाम्नो नागराजस्य । इदमपि नागराजोपलक्षणम् । १० प्रतिद्वन्द्विनृप- । ११ अग्निः । १२ पारावारः सागरः । १३ धृतवर्म्म- । १४ शत्रूणां मर्त्यलोकत्यागोत्तरं दिव्यलोकप्राप्तावसरस्य लप्स्यमानत्वात् देवाङ्गनानां च नवयुवरमणानन्दस्य प्राप्स्यमाणत्वात् । एतेनावश्यं शत्रुक्षयं कृत्वैव निवर्तमानत्वं सूचितम् । १५ अवसानं क्षयः । १६ दान- । वितरणं च सुवर्णस्यैव तदुत्पत्तिस्थलं सुमेरुरेवेति सम्भाव्यैवेदं वचनम् ।

दरिदलनाद्वासनाशासकाशाद्यातैर्वातैरहह तैरणेरुल्बणेषु व्रणेषु । सायं सायं लवणसलिलस्पर्शबाधासमाधावस्यालस्याकलितवपुषो रुद्र कः स्यादुपायः ॥ ३ ॥ चन्द्रोऽनेन कलङ्कितो बत वने रामोऽमुना वञ्चितैः किं चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता । सस्यानामभिलाषुकस्य भवतः श्रीरुद्रचन्द्र प्रभो तन्मन्ये हरिणस्य हन्त हननायाखेटैकोपक्रमः ॥ ४ ॥ रुद्रस्यापि दिगम्बरस्य कृपया स्वर्गेऽमराः कोटिशो याचन्ते न कदापि काञ्चनमहो शश्वत्सदा भुञ्जते । एकोऽहं वसुधातले न च पुनः स्नेहस्य पात्रं सदा याचिष्ये कथमन्यभूपतिमतः श्रीरुद्रभूमीपते ॥ ५ ॥

## रूपनारायणप्रशंसनम् ।

अये यदि समीहसे परपुरावरोधं सदा समाकलय मद्वचः किमपि **रूपनारायण** । प्रतीप नृपनागरीनयननीरकल्लोलिनीसमुत्तरणचातुरीं तुरगराजमध्यापय ॥ १ ॥

## रूपमणिप्रशंसनम् ।

**श्रीमद्रूपमणे** गुणेन यदयं हीनोऽपि नीतो गुरुर्गाढं गौरवमादरेण भवता तेनास्ति शंभुर्भवान् । यत्तेनाप्यनृजुः कलङ्कविकलो दोषाकरोऽपि स्फुटं विप्राधीशपदे विधाय विधृतश्चन्द्रोऽनिशं मस्तके॥ १ ॥

## विक्रमार्कप्रशंसनम् ।

तत्कृतं यन्न केनापि तद्दत्तं यन्न केनचित् । तत्साधितमसाध्यं **यद्विक्रमार्केण** भूभुजा ॥ १ ॥ सारसवत्ता विहता नवका विलसन्ति चरति नो कङ्कः । सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये ॥ २ ॥ हस्ती वन्यः स्फटिकघटिते भित्तिभागे स्वबिम्बं दृष्ट्वा दृष्ट्वा प्रतिगज इति त्वद्विषां मन्दिरेषु । दन्ताघातादलितदशनस्तं पुनर्वीक्ष्य सद्यो मन्दं मन्दं स्पृशति करिणीशङ्कया विक्रमार्क ॥ ३ ॥ कीर्तिस्ते दयिता तदीयजठरे लोकत्रयं वर्तते तस्मात्त्वं जगतः पिता पितृधनं येनार्थिनां त्वद्धनम् । वीर श्रीवर विक्रमार्क भवतस्त्यागेन मन्यामहे कस्त्यागः स्वकुटुम्बपोषणविधावर्थव्ययं कुर्वतः॥ ४॥

## विग्रहराजप्रशंसनम् ।

ब्रूते संप्रति चाहुवाणतिलकः शाकम्भरीभूपतिः **श्रीमान्विग्रहराज** एष विजयी संतानजानात्मनः। अस्माभिः करदं व्यधायि हिमवद्विन्ध्यान्तरालं भुवः शेषस्वीकरणाय मास्तु भवतामुद्योगशून्यं मनः ॥ १॥

## वीरमानप्रशंसनम् ।

लङ्काधामनि **वीरमाननृपतेः** प्रेक्ष्य प्रतापोदयं प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् । क्षुभ्यद्वाणि विधूतपाणि विगलन्मुक्तामणि प्रस्खलद्बाष्पश्रेणि विलोलवेणि दयितं कण्ठस्थले बिभ्रति ॥ १॥ भेरीझाङ्कृतिभिस्तुरङ्गनिनदैः कुम्भीन्द्रकोलाहलैः प्रस्थाने तव वीरमान दलितं ब्रह्माण्डभाण्डोदरम् । आधाय ज्वलति प्रतापदहने रङ्कैः पुनर्वेधसा तारानायकतारकासुरसरिद्व्याजादिवायोजितम् ॥ २ ॥

## वीरवरप्रशंसनम् ।

कामो वामदृशां निधिर्नयजुषां कालानलो विद्विषां स्वःशाखी विदुषां गुरुर्गुणवतां पार्थो धनुर्धारिणाम् । लीलावासगृहं कलाकुलजुषां कर्णः[10] सुवर्णार्थिनां श्रीमान्वीरवरः क्षितीश्वरवरो वर्वर्ति सर्वोपरि ॥ १ ॥

---

१ सूर्यस्य । २ प्रतारितः । ३ मृगया- । ४ लोकत्रयमप्यतिक्रम्यावस्थितत्वात् । ५ दानम् । ६ गजराज- । ७ ब्रह्मणा । ८ कल्पतरुः । ९ अर्जुनः । १० अङ्गराजः ।

जम्बूद्वीपगृहप्रकाशनकरी स्नेहक्षमाधायिनी नीत्योद्गीर्णमषीततिः खलजनश्रेणीपतङ्गान्तकृत । गाजीन्द्राकबरक्षितीश्वरमनश्चिन्तान्धकारापहा यस्य क्षोणिपतेरराजदखिलं दीपोपमा लेखनी ॥ २ ॥

## वीरसिंहप्रशंसनम् ।

वीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दवः । उरोजे पतिता रेजुः सरोजे मधुपा इव ॥ १ ॥ यस्योच्छिन्ना न वेदा मनसि सदयता दूषणानामभावो दक्षो दूरेऽणुदृष्ट्या जहति कठिनतां दानशक्तिर्गरिष्ठा । आधत्ते यश्च कुन्दं शिरसि दरवतां यश्च दूरीकृतार्तिः स श्रीमान्वीरसिंह त्वमिव तव रिपुस्तत्र दंभं प्रतीमः ॥ २ ॥ वैकुण्ठाभप्रकामः कमलयुतशिराः कुञ्जराकृष्टदृष्टिः कोदण्डोदारनामाप्यमितपरिजनो विश्वविख्यातकीर्तिः। सुन्दर्यासक्तचित्तः समरणविजयी कङ्कणाहारयुक्तो वीर श्रीवीरसिंह त्वमिव तव रिपुः किंतु मुक्तादिवर्णैः ॥ ३ ॥

## वेङ्कटपतिप्रशंसनम् ।

अत्र मन्मथमिवातिसुन्दरं दानवारिमिव दिव्यतेजसम् । शैलराजमिव धैर्यशालिनं वेद्मि **वेङ्कटपतिं** महीपतिम् ॥ १ ॥

## शाहिजहानप्रशंसनम् ।

भूभृन्मौलितटीषु वर्षति महाधाराधरेऽस्मिन्नसौ जाता भूप सरस्वती विजयिनी कल्लोलिनी पावनी । श्रीमच्**छाहिजहां** ब्रवीमि तदिदं माहात्म्यमस्याः कथं यस्यां मज्जति पङ्कजीयति शिवस्तन्मूर्धजोऽलीयति ॥ १ ॥

## सिन्धुराधीश्वरप्रशंसनम् ।

अशर्मदहनज्वलत्कटुकटाक्षरूक्षेक्षणक्षणक्षपितशात्रवे जयति **सिन्धुराधीश्वरे** । वयं न बहु मन्महे निजभुजानमद्गाण्डिवच्युतास्त्रशिखिताण्डवज्वलितखाण्डवं पाण्डवम् ॥ १ ॥

## हम्मीरप्रशंसनम् ।

मुञ्चति मुञ्चति कोषं भजति च भजति प्रकम्पमरिवर्गः । हम्मीरवीरखड्गे त्यजति त्यजति क्ष्मामाशु ॥ १ ॥ मा चक्र चक्रिविरहज्वरकातरो भूः संकोचमम्बुज न याहि न यामिनीयम् । हम्मीरभूपहयपादविदीर्णभूमीरेणूत्करैरयमकारि दिवान्धकारः ॥ २ ॥ हम्मीरः किल वैभवोचितविधिर्दित्सुः सहस्रं गवामित्याकर्ण्य सहस्रगू रविशचीनाथौ भयं जग्मतुः । शश्वत्तद्रहसि स्थितान् मुरारिपोः श्रुत्वा सहस्रं पुनर्धेनूनां समुपागताविति मुदा तद्दानमेवेक्षितुम् ॥ ३ ॥ सङ्ग्रामग्रामभूमौ सदिदमसिलता सङ्गता पञ्चशाखे सच्छाये श्यामलाङ्गी क्षतजजलवलत्पुष्टिरिष्टप्रचारा । चित्रं सूते विकोशा कुसुममतिमहत्कीर्तनीयं दिगन्ते धाम्ना(ऽ)म्नाता नितान्तं दलयति नियतं वारणाङ्गे पतन्ती ॥ ४ ॥ कुर्वन्पद्मे जनुः स्वं विधिरिति विधि-

---

१ अनेनास्यामात्यवरत्वं प्रतीयते । २ भीतानाम् । ३ कपटम् । दकारं भकारं च । तथा च अत्र दकारा भकारा अवसेयाः, तथा नवेभाः (युवानो गजाः) इत्यादयः शब्दा निष्पद्यन्ते । ४ पदानामादिमो वर्णोऽपनेयः, तथा च कुण्ठाभप्रकाम इत्यादयः शब्दाः सम्पद्यन्ते । ५ हिमालयमिव । ६ दुःख- । ७ शात्रवः-शत्रुगणः । ८ त्यजति । त्यजति ददाति च । एवं परत्रा । ९ पिधानं निधिं च । १० कम्पनम् । ११ सोढृत्वं, भूमिं च ।

दृष्टदृष्टप्रदिष्टो नो पङ्के जन्मदोषं व्यजगणदतुलं तस्य रक्ततरस्य । भूत्वा हम्मीरदेवक्षितिपतियशसः स्वर्णवर्णोपमेयो गन्ता पुण्योपमानं दिशि दिशि सुचिरं सत्कवीनां सुखेषु ॥५॥ उद्यत्प्रौढप्रतापानलमुषित-महाविम्बशेषो विवस्वान्पश्चादुद्दामकीर्तिच्छुरिततरतनुः शीतरश्मित्वमेति । शङ्के रूपान्तरं स्वं कलयति स वपुर्भेदभीतो रणक्ष्माधीरे हम्मीरवीरे घ्नति परसुभटान्सङ्गरे सम्मुखस्थान् ॥ ६ ॥ हम्मीरस्यासिलेखा द्विषदसुपवनाहारतोषं दधाना कालाकारोरगीव स्फुरति सचकितं वीक्षिता भीतिहेतुः । नाधःकाये कथञ्चि-द्दशति बहुमता नो बिभीते विपक्षात्स्वर्गे वासं क्षतानां वितरति रमते न द्विजिह्वेन चित्रम् ॥ ७ ॥

## राजराजप्रशंसनम् ।

आसीद्रङ्गाऽन्वयायक्षितिपतितिलको राजराजक्षितीशः क्ष्मापालप्रौढमौलिप्रकरमणिरुचि-प्रस्फुरत्पादपीठः । योऽरातिक्षत्रचक्रक्रथनकरभुजापालिताशेषपृथ्वीचक्रश्चक्रायुधाभो दधदुरसिरमां वाचि वाचामधीशः ॥ १ ॥

## वनपतिप्रशंसनम् ।

वनपति[1]रिति नाम्ना तस्य गाम्भीर्यशौर्याखिलजगदुपकारैर्न्यग्बभूव प्रचेताः । अधिकमभिमतस्त-द्दानमालोक्य चिन्ता मतिरिह न विदध्रे यत्तदस्मत्वहेतोः ॥ १ ॥ आजावसौ[3] चोडनृपस्य सेना महावन-स्याश्वमृगाकुलस्य । मत्तेभसारद्रुमपूर्णतस्य दावानलोऽभूच्चलमूर्तिचण्डः ॥२॥ तेनाजौ चोडसेनावनदवद-हनेनाशुभप्राशशास्त्री निस्त्रिंशज्वालकेनोत्कलगजतुरगानीकिनीनाथभूजा । निर्दग्धा भग्नमूला निपतित-शिरसश्छिन्नबाहूरुशाखा दृश्यन्तेऽद्यापि भूतेश्वय इव धवलैरस्थिभिर्जीर्णमांसैः ॥ ३ ॥

## वेमराजप्रशंसनम् ।

श्रीवेमपृथिवीपालो जयेद्विबुधरञ्जकः । पयोधाविव शीतांशू राजरत्नोद्भवाकरे ॥ १ ॥ श्रीमा-न्वेममहीपतिर्व्यरचयत्पातालगङ्गातटे श्रीशैले जगनोव्वगण्डविरुदः सोपानवीथीं शुभाम् । याऽसौ दीव्यति दिव्यसोमनगरारोहोद्यतानां नृणां निश्रेणिः परिकल्पितेव नितरामाब्रह्मकल्पस्थिरा ॥ २ ॥

## अनवोतप्रशंसनम् ।

अनवोतमहीपतौ धरित्रीं परितो बिभ्रति पन्नगेन्द्रमुख्या । चिरमुच्छ्वसिता लघूकृते स्वे भरणे जीवनमस्य संस्तुवन्ति ॥ १ ॥

## अनवेमप्रशंसनम् ।

धीराग्रणीर्विजयते स वसन्तरायो वीरानवेमनृपतिः क्षुरिकासहायः । यस्मिन् मही भवति सार्थ-मभूचिराय नामावनौ सुमनसां बहुशो वदान्ये ॥ १ ॥ हेमादिदाननिरते यस्मिन्ननवेमभूपतौ मुदितान् । अवलोक्य भूमिदेवान्देवाः स्पृहयन्ति भूमिवासाय ॥ २ ॥ यस्मिन्किरति वसन्ते दिशिदिशि कामोत्स-वेषु कर्पूरम् । अधिवासितपरिधानानुभवन्नोऽभूच्चिराय गिरिशोऽपि[6] ॥ ३ ॥

---

१ जलपतिरित्यप्यर्थः । २ गोकर्णसूनोः । एतेनास्य गोकर्णे राजपुत्रत्वं सम्भाव्यते । ३ वनपतिः । ४ चोडनामास्य कश्चित्प्रत्यर्थ्यासीदित्यनुमीयते । ५ इदमुपनाम प्रतीयते । ६ युग्मकमिदम् ।

## कुमारगिरिप्रशंसनम् ।

कुमारगिरिभूपोऽसौ वनवोतनृपात्मजः । जयन्तो वासवस्येव प्रद्युम्न इव शार्ङ्गिणः ॥ १ ॥
कोण्डुवीडुरिति ख्याते पुरे वजन्सदोत्सवे । कुमारगिरिभूमीन्द्रः कामामोदयते द्विजान् ॥ २ ॥

## नरहरिप्रशंसनम् ।

वीरश्चविरभुक्कभूपतनयः क्ष्मापालचूडामणिः प्रेङ्खत्कीर्तिविभूषितत्रिभुवनः स्फूर्जत्प्रतापोदयः । आचन्द्रार्कमगारवद्वसुमतीमाचक्रवालाकुलं श्रीमानाहवराघवो नरहरिः क्ष्मां पालयन् राजताम् ॥ १ ॥

## रामराजप्रशंसनम् ।

सकलभुवनकण्टकानसतीन्समिति निहत्य स रामराजवीरः । भरतमनुभगीरथादिराजप्रथितयशाः प्रशशास चक्रमुर्व्याः ॥ १ ॥

## तिरुमलप्रशंसनम् ।

त्रिषु श्रीरङ्गक्ष्मापरिवृढकुमारेष्वधिरणं विजित्यारिक्ष्मापांस्तिरुमलमहाराजतिलकः । महौजाः साम्राज्ये सुमतिरभिषिक्तो निरुपमे प्रशास्त्युर्वीं सर्वामपि तिसृषु मूर्तिष्विव हरिः ॥ १ ॥

## मल्लिदेवप्रशंसनम् ।

यः प्रौढक्षितिपालमौलिमुकुटालङ्कारसिंहासनः प्रोद्वृत्तादिपुरापरत्रिपुरहा भूधूर्धरः श्रीधरः । यश्चाशेषकलाकलापविभवः क्ष्माभारतीवल्लभः सम्पद्भोगपुरन्दरः स जयति श्रीमल्लिदेवो नृपः ॥ १ ॥

## इन्द्रराजप्रशंसनम् ।

श्रीमान् वदान्यमहितो जयतीन्द्रराजो यद्रूपसम्भवपराभवभीरुवर्णे । मानात्पुरैव मदनेन पिनाकपाणिकोपाग्निना निजतनुः क्रियते स्म भस्म ॥ १ ॥

## अमोघवर्षप्रशंसनम् ।

सामन्तैर्बहुभिः समर्च्यचरणः श्रीरट्टराज्याधिपो गाण्डीवीव धनुर्धरो धरणिवत्सर्वंसहो धीमताम् । सर्वाम्नायगणप्रचारनिपुणः श्रीशङ्कराभ्यर्चकः श्रीचन्द्रोऽयममोघवर्षनृपतिः केषां मुदं नावहेत् ॥ १ ॥

## सुन्दरपाण्ड्यप्रशंसनम् ।

मूर्तं यशः स्वमिव सुन्दरपाण्ड्यदेवो मुक्तामयं व्यधित रङ्गपतेर्वितानम् । यस्य प्रभाभिरनुयाति तदीयमौलिर्भागीरथीपरिगतं मुकुटं पुरारेः ॥ १ ॥ इच्छां सुन्दरपाण्ड्य उन्नतिमतिं विभ्रत्स्वया सञ्ज्ञया निष्पाद्याभ्यवहारवारयुगलं निष्कम्पसम्पत्तिकम् । सम्पूर्णं विदधे गभीरमुदरं रङ्गेशितुः शार्ङ्गिणो यस्याभूद्भुवनैश्चतुर्दशभिरप्यापूरणं दुर्लभम् ॥ २ ॥

## सङ्गमेन्द्रप्रशंसनम् ।

भाति प्रस्तूयमानप्रबलनिजभुजाखर्वगर्वातुरोधिस्वाधीनोदारसारस्थगितरिपुनृपोद्दामसङ्ग्रामशक्तिः । राजा राजन्यकोटिप्रणतिपरिलुठन्मौलिमाणिक्यरोचीराजीनीराजमानस्फुरदुरुचरणाम्भोरुहः सङ्गमेन्द्रः[1] ॥

---

१ अस्य सहोदरद्वयमन्यदप्यभूदिति प्रतीयते ।

## माधवसिंहप्रशंसनम् ।

श्रीगोवर्धनधारणादृतमना[1] नित्यं भुजङ्ग[2] द्विषन्धर्म[3]लम्बनकारणं कुवलयापीडा[4]पहन्ता किल । अक्रूर[5]-प्रियकृत्सदोद्धव[6]सखो दत्तोग्रसेना[7]दरः श्रीमन्माधवसिंह[8]भूपतिरसौ श्रीकृष्णवद्राजते ॥ १ ॥ भाद्रे मास्यसिते दले शिवतिथौ[9] यस्यार्द्धरात्रे जनिर्येन क्रीडनकैरनायि बहुभिर्वृन्दावने शैशवम् । तारुण्ये हत-कण्टकं[10] नृपपदं भार्याश्च यो लब्धवांस्तं श्रीमाधवसिंहभूपतिममुं कृष्णं न मन्येत कः ॥ २ ॥ शृङ्गारो[11]-महिलाजनेष्वधिसभं हास्यो विपद्दर्शने प्रत्यक्षः करुणो विपक्षदलने रौद्रोऽथ वीरो युधि । पापौघे च भया-नकोऽनयकृतौ बीभत्सकः सद्गुणैराश्चर्यो रसमूर्तिरेष जयति श्रीमाधवेशः प्रभुः ॥ ३ ॥ दुष्टग्राहनिपी-डितं च दयया मातङ्ग[12]मप्यात्मनो नाम ग्राहिणमुक्तितान्यकरणो यो मोचयत्यञ्जसा । तस्मिन्माधवसिंहवीरनृपतौ सद्धर्मरक्षाकरे ना विष्णुः पृथिवीपतिः श्रुतिरियं प्रत्यक्षमालक्ष्यते ॥ ४ ॥ अष्टाभिः किल दण्डनीति-निपुणैः[13] सत्प्राड्विवपाकैः[14] समं मध्येसौध[15]मनुत्तमासनगतः कार्याणि[16] कुर्वन्नृणाम् । विष्णुर्भूपवपुर्विधाय किमसौ दिक्पालयुक् पालयत्येवं भ्रान्तिमतो मनाङ्न कुरुते कास्कानयं माधवः ॥ ५ ॥ दिक्पाला इव दिग्गजा इव तथा वस्वाख्यदेवा इव शृङ्गारादिरसा[17] इव प्रविलसद्योग[18]प्रतीका इव राजन्ते रमणीयविष्टरगताः श्रीकान्ति[19]चन्द्रादयः श्रीमन्माधवसिंहवीरनृपतेरष्टौ महामन्त्रिणः ॥ ६ ॥ रक्तः[20] सर्वजनेषु शत्रुनिकरे कालो[21] यशोमण्डले शुक्लः कान्तहरित्[22]प्रतापविभवैर्गौरः शरीरेण च । विद्वन्मण्डनमण्डने च कपिश[23]श्चित्रश्च-रित्रव्रजैः श्रीमन्माधवसिंहवीरनृपते त्वं सर्ववर्णा[24]श्रयः ॥ ७ ॥ प्रक्षिप्तैरितरेतरेण बहुभिः पौष्टान्तगै[25] रेणु-भिर्मध्येवीथि रजस्वलामिव महीं कुर्वन् करीन्द्रे स्थितः । क्रीडत्येष पुरोगतैश्च गुरुभिः पार्श्वद्वये बान्धवैः श्रीमन्माधवसिंहभूपतिलको वासन्तिके वासरे[26] ॥ ८ ॥ यज्ञैर्देवगणान्धनैर्द्विजगणान्मानैस्तथा बान्धवान् न्यायैः पौरगणान्वधूगणमथ स्नेहेन सम्मानयन् । पुत्रैः पौत्रगणैः सुखान्यनुभवञ्शृण्वन् कवीनां कृतीः श्रीमन्माधवसिंह वर्मनृपते जीयाः समानां[27] शतम् ॥ ९ ॥

## रामसिंहप्रशंसनम् ।

पश्याधुनाऽम्बरतले समुदेति चन्द्रश्चन्द्रो न चन्द्रमुखि तर्हि कवे क एषः । श्रीरामकीर्तिललना-पदपद्मकिट्टप्रक्षालनार्थमुपलो घटितो विधात्रा ॥ १ ॥ श्रीरामसिंहनृपतेस्तुलयन्ति कीर्तिं चन्द्रेण किं च सुधया कमलास्मितेन । मूढा हि ते जनयिताऽपि यतो ययैषामुल्लङ्घितः प्रथितया सकलासु दिक्षु ॥ २ ॥

---

१ श्रीः लक्ष्मीः, गौः–सरस्वती, तयोर्वर्धनधारणयोरादृतं मनो यस्य सः । पक्षान्तरे यथा-श्रुतोऽर्थः । २ विटं कालियं च । ३ धर्मः पवित्रं कर्म, युधिष्ठिरश्च । ४ कुः पृथिवी तस्या वलयं मण्डलं तस्य आपीडा तस्या अपहन्ता कुवलयापीडो नाम गजस्तदपहन्ता च । ५ अक्रूराः सौम्या अक्रूरो यादवविशेषश्च । ६ उद्धव उत्सवः, यादवविशेषश्च । ७ दत्त उग्रा या सेना तस्यै आदरो येन सः । दत्त उग्रसेनाय तदाख्याय यदुवराय आदरो येन सः । ८ 'नित्यं वन्द्यपदाम्बुजः सुमनसां श्री माधवो राजते' इति पाठे तु अत्रोपमाऽलङ्कारो ध्वन्यते । ९ उत्तमतिथौ । १० कण्टकाः शत्रवः कंसादयश्च । ११ अत्र रूपकमुल्लेखश्चालङ्कारौ । १२ चाण्डालं, गजं च । १३ दण्डनीतिश्च । 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।' १४ 'द्रष्टरि व्यवहाराणां प्राड्विपाकाक्षदर्शकौ ।' इत्यमरः । १५ सौधस्य मध्ये । १६ अपराधादिविवेचनादीनि कार्याणि । १७ येषां मते शान्तो रसो नास्ति तन्मतेनेदं वचनम् । १८ योगाङ्गानामष्टत्वं प्रसिद्धम् । १९ कान्तिचन्द्रेति मन्त्रि-नाम । २० अनुरक्तः शोणश्च । २१ यमः । कृष्णवर्णश्च । २२ हरितो दिशः २३ खिड्काख्य सुगन्धिद्रव्यविशेषः कपिशः । श्यामवर्णश्च । २४ वर्णा ब्राह्मणादयो रक्तादयश्च । २५ 'गुलाल' इत्याख्येः । २६ वसन्तपञ्चम्यां होलिकान्त्यदिनोत्सवादौ च । २७ अब्दानाम् ।

## विजयसिंहप्रशंसनम् ।

श्रीमन्माधवसख्यमेषि तनुषे त्वं भीमसेनादरं विख्यातो युधि साभिमन्युरधिकप्रीतिः सुभद्राश्रये । द्रोणाधीतसमस्तशास्त्रनिगमो दीनद्विजोद्धारको धत्से भो **विजय**प्रभो विजयतां सर्वप्रकारैः स्फुटम्॥ १॥

## गोविन्दसिंहप्रशंसनम् ।

विशुद्ध**नाथावत**वंशकेतुर्हेतुः स्थितेः क्षत्रियधर्मसेतुः । चमूपुरीराज्यपदप्रतिष्ठो **गोविन्दसिंहो** भुजभग्नसिंहः ॥ १ ॥

## रावलफतेसिंहप्रशंसनम् ।

विनीतबुद्धिः क्रमवीतशैशवः कटीतटीचञ्चदसिर्महाबलः । समृद्ध**सामोद**पुरीपतिर्महामतिः **फते-सिंह** इति स्म **रावलः** ॥ १ ॥

## राजावतनारसिंहप्रशंसनम् ।

अनन्द्रचन्द्रोज्ज्वलकीर्तिचञ्चुरो रत्नस्फुरद्भूषणभूषितच्छविः । प्रचण्डदोर्दण्डधुतारिमण्डलो **राजा-वतो** राजति **नारसिंहकः** ॥ १ ॥

## गोतावतलक्ष्मणसिंहप्रशंसनम् ।

उदग्र**गोतावत**गोत्रगौरवो महारजःपूतभटोत्कटच्छटः । स्वरूपसम्पत्तिपरास्तमन्मथः स **लक्ष्मणो** लक्षितलक्षणोज्ज्वलः ॥ १ ॥

## श्रीशोभनप्रशंसनम् ।

धात्रीश्रीतिलकः कलाऽव्ययनिधी रत्नं सुनीतेः श्रियः पात्रं दिव्यविचारसन्ततिपदं कीर्तेः प्रति-ष्ठास्थलम् । सर्वेषां हृदयङ्गमः सुमनसां श्रद्धानिधानं कलौ श्रीमान्**शोभनलालवीर** शरदां भव्यं शतं वर्धताम् ॥ १ ॥ गेहे यस्य विराजते भगवती साक्षात्सरोजासना जिह्वाऽग्रे च सरस्वती विजयते शैलेन्द्रभूः पादयोः । ऋद्धिर्यस्य समन्ततश्च सततं सिद्धिश्च साध्यान्वये स श्रीशोभनलाल राजतु भवान् सम्मोदयन्सज्जनान् ॥ २ ॥ यस्य प्रभवमहसोदयराज्यशोभा योऽनेकनूतननिबन्धनिबन्धनेद्धः । सर्वोपका-रपरतापरिदर्शितात्मभावोऽऽसकौ जयतु शोभनलालबीरः ॥ ३ ॥ राज्यश्रीर्यं प्रपद्य प्रहसति मुदिता चन्द्रिकाकैतवेन सूर्यव्याजेन तेजः प्रतपति भुवनं यस्य नित्यं समन्तात् । औदार्यं यस्य दृष्ट्वा स्ववित-रणभयादैत्सुदूरं सुमेरुः धन्यश्रीशोभनेन्द्रः प्रकृतिसुचरितः सेष्टमित्रः स जीव्यात् ॥ ४ ॥ वीराणामग्र-गण्यः प्रथितमतिमतां माननीयः प्रभावप्रौढानां भूषणश्रीरिपुखलजनताभाग्यभङ्गोग्रशक्तिः । सर्वं कर्तुं स्वतन्त्रः परिणतिसमये जातु संलक्ष्यकर्म्मा सत्याज्ञो न्यायदीक्षः स शतमुदयतां शोभनो वत्स-राणाम् ॥ ५ ॥

## पुलिन्दसेनप्रशंसनम् ।

प्रांशुर्महेभकरपीवरचारुबाहुः पद्मान्ननः पृथुलपीनकपाटवक्षाः । पञ्चास्यगर्वपरिभञ्जनविश्रुतौजा जीया-त्कलिङ्गजनभाग्य**पुलिन्दसेनः** ॥ १ ॥

## महताबसिंहप्रशंसनम् ।

संतप्तस्तपनस्त्वदीयमहसा शीतश्च कीर्त्या विधुर्ज्वालाऽऽलीढतनुस्तथैव दहनस्त्वत्कोपहेतेर्वशात् । पीयू-षाम्बुनिधित्वमाप करुणा क्षान्तिः क्षमाऽभूत्स्वयं भूप श्री**महताबसिंह** परितः स्फूर्तिस्तवैव स्थिता॥ १॥

कच्छान्वयायजलधेरमृतांशुरन्यः प्रत्यर्थिवंशदहनः सुमना गुणज्ञः । विद्याप्रियो नयपरो मतिमान्वदान्यः सीवारभूपतिरुदेतु यशो वितन्वन् ॥ २ ॥ यत्कौशलेन सकला जनताश्चिराय सम्मोदिता अतनुनिर्वृतिमापुरद्धा सोऽयं विशुद्धचरितः प्रथितप्रभावः सीवारराजतिलकः प्रचकास्तु शश्वत् ॥ ३ ॥

## प्रतापसिंहप्रशंसनम् ।

गुणैरुदारैर्वशमेत्य यस्य स्वयं मुकुन्दस्तनयत्वमागात् । भ्राजत्प्रतापः कलितारितापः **प्रतापसिंहः** स नकस्य नव्यः ॥१ ॥ दृगन्तपातेन सदा प्रमोदं दाता समानं ह्यसतां सतां च । उद्दण्डदण्डो हतशत्रुकाण्डः **प्रतापसिंहः**प्रथितो न कुत्र ॥ २ ॥

## किसनसिंहप्रशंसनम् ।

दलितदस्युदलः प्रबलः खिलीकृतखलः कमलाकलयाऽऽदृतः । परबलासहनेद्धबलः प्रभुः किसनसिंहनृपः प्रथितः क्षितौ ॥ १ ॥ प्रेम्णा मुकुन्दमनुरञ्जयतां जयिष्णू रोचिष्णुरुत्तमगुणोदितयाऽऽत्मकीर्त्या भ्राजिष्णुरुग्रमहसा महतारिजेता प्रद्योतते किसनसिंहनृपः पृथिव्याम् ॥ २ ॥

## लक्ष्मणसिंहप्रशंसनम् ।

भूभृन्मौलिनिषेव्यमाणचरणः प्रोद्यत्प्रतापोज्ज्वलः कान्त्या निर्जितमन्मथः प्रभुतया देवाधिपं निर्जयन् । नीत्या भार्जितभार्गवः समिति च स्थैर्येण पार्थायितः श्रीमांस्तोमरवंशरत्नमनघः श्री**लक्ष्मणो** लक्ष्यते ॥ १ ॥

## जवाहरसिंहप्रशंसनम् ।

यत्तेजस्तपने तथैव दहने यत्कोपहेतिस्तथा यत्कारुण्यमहत्त्वमिन्दुगतमाविश्वप्रमोदावहम् । क्षान्तिर्यस्य धरातले भरणकृत्प्रौढत्वमालोक्यते शेषे भूपवरो **जवाहरविभुः** स द्योततां सर्वदा ॥ १ ॥

## परन्तपप्रशंसनम् ।

असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः । राजा प्रभारञ्जनलब्धवर्णैः **परन्तपो** नाम यथार्थनामा ॥ १ ॥

## अवन्तिनाथप्रशंसनम् ।

**अवन्तिनाथो**ऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः । आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ १ ॥

## नैषधराजप्रशंसनम् ।

पुण्यश्लोकशिखामणिर्मनसिजश्रीगर्वसर्वङ्कषः प्रत्यर्थिव्रततिच्छिदाकृतिपटुः पूर्णः समस्तैर्गुणैः।सर्वाभिश्च वृतः कलाभिरनघः प्रोद्यत्प्रतापानलः कारुण्यैकनिकेतनं विजयते श्रीमान्नलो भूपतिः ॥ १ ॥ कीर्त्या पूर्णसुधाकरायितरुचिः सूर्यायितस्तेजसा गाम्भीर्येण महार्णवः सुरतरुश्चोदारभावेन यः । क्षान्त्या चैव धरायितः सदसतां नित्यं प्रजाकर्म्मणां निष्पक्षग्रहमीक्षणेन भगवान्धर्म्मो नलोऽसौ स्वयम् ॥ २ ॥ गङ्गौघा इव निर्म्मलाः कृततमोध्वंसा दिनेशा इवोद्दण्डा दण्डधरा इवोन्नतियुजः सत्पुण्यपूगा इव। अक्षुण्णाश्च जगद्विधातृलिपिगा वर्णा इवोच्चैर्गुणा यस्यासौ विमलः प्रगे सुमनसा ध्येयाभिधानो नलः ॥ ३ ॥

---

१ खण्डयिता, प्रदाता च । २ पण्डितः । ३ शत्रूणां चेतसि सन्तापाधायकत्वात् । ४ दीर्घबाहुः । ५ पुण्यः-पवित्रः श्लोको यशो येषामिति तेषां शिरोमणिरिव शिरोमणिः । 'श्लोको' यशसि पद्ये च' इत्यमरः । ६ शोभा- । ७ न्यायालयेऽवस्थाय विवेचनेनेति भावः । ८ प्रारब्धकर्मलेखाक्षराणीवेति भावः ।

## राजनारायणप्रशंसनम् ।

हस्तभ्राजितशङ्खचक्रजलजं नागाधिपस्थायिनं नित्यं देवैर्वरैरुपासितपदद्वन्द्वं श्रियालिङ्गितम् । भ्राजिष्णुं जगतश्च पालनविधौ गाढानुरागं कलापूर्णं वेद न कः पुराणपुरुषं श्रीराजनारायणम् ॥ १ ॥ आज्ञा मौलिषु भूभुजां भयरुजा चित्तेषु दुर्मेधसां प्रीतिः सत्सु दिशासु कीर्तिरतुला येनार्पिता सर्वतः । सर्वं राज्यमकण्टकं च विहितं ध्वस्ता द्विषां सम्पदः सोऽसौ सम्मतवैभवो विजयते श्रीराजनारायणः ॥ २ ॥

## तोमरसिंहप्रशंसनम् ।

दूरपाता दृढाघाता भीषणा रुक्ममण्डिताः । अमोघा यस्य बाणौघाः पतन्ति समराजिरे ॥ १ ॥ विक्रमादक्रियन्तोच्चैर्येन नानाधराधराः । त्रस्तशत्रुधरित्रीशकुलाकुलगुहागृहाः ॥ २ ॥ कृताः पुण्यवता येन सर्वे सम्पत्समन्विताः । विहिता विबुधाःसोऽयं तोमरो यादवेश्वरः ॥ ३ ॥

## राजराजप्रशंसनम् ।

योऽरातिक्षत्रचक्रक्रथनकरभुजा पालिताशेषपृथ्वीचक्रश्चक्रायुधाभो दधदुरसि रमां वाचि वाचामधीशः । क्ष्मापालप्रौढमौलिप्रकरमणिरुचिप्रस्फुरत्पादपीठः सोऽयं गङ्गाऽन्वयायः प्रथितपृथुबलो राजते राजराजः ॥ १ ॥ यस्मिञ्शासति नेतयो न च खलाः शान्तिं लभन्ते कचिन्न त्रस्ताश्च कुतोऽपि साधुजनता नाप्यात्मभूः शोकगीः पापानां स्मरणं च कुत्रचन नो केनाप्युपस्थाप्यते सोऽयं भूपतिमौलिवन्दितपदः श्रीराजराजो नृपः ॥ २ ॥

## नृपार्होपकरणप्रशंसनम् ।

यशःपटोऽयमद्भुतो न ते महीप कञ्चुकः । सुपुण्यकर्म भात्यदो जयप्रदं सुरक्षणम् ॥ १ ॥ प्रज्ञा तृतीयोग्रविलोचनस्य भूत्योज्ज्वलस्येश्वरकामदातुः । कामारिमुत्सृज्य मुदा सकामा उष्णीषगङ्गा तव भाति मूर्ध्नि ॥ २ ॥ चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः । अनेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारि ॥ ३ ॥ तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् । बंहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसन्ती ॥ ४ ॥ शिरोवेष्टनव्याजतस्ते मुखेन्दोः परं पक्षपाताद्ग्रसत्येव राहुम् । रुषा मूर्ध्नि बद्धं कचच्छद्मनालं शशाङ्कोऽङ्गहीनो विभात्येष राजन् ॥ ५ ॥ ताराधिनाथमभिजित्य मुखश्रियाद्धा राजंस्त्वया पदककैतवतो व्यलम्बि । बन्दीकृता इव तदीयवधूसमूहा हारच्छलेन तव वक्षसि भान्ति नूनम् ॥ ६ ॥ धवलकुसुमभास्वत्कञ्चुकस्योपरिष्टात्कनकपरिकरेण भ्राजसे राजराज । शरदि घनगणोद्यद्विद्युदुद्दामरेखाकलित इव धरेन्द्रः प्रोन्नतो विन्ध्यशैलः ॥ ७ ॥ स्वभावारक्तश्रीनखरसुषमानद्धकनकस्फुरद्विद्युद्भ्राजत्कटकयुगलाभ्यां तव करौ । विभातः काश्मीरद्रवविलुलिताविन्द्रविजये हृते स्वर्गद्वारार्गल इव विभो द्विट्स्थितिकृते ॥ ८ ॥

## नागप्रशंसनम् ।

नीता कुम्भस्थलकठिनता कामिनीनामुरोजैः स्तेयं धृत्वा धृतमणिगणैः कञ्चुकैरावृतैव । इत्याख्यातुं नरपतिगृहद्वारि कुम्भेन्द्रडिम्भाः शुण्डादण्डैर्वपुषि बहुलां धूलिमुद्धूलयन्ति ॥ १ ॥ सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धावधिश्यामिके व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति । जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसंध्याधियेवास्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥ २ ॥ एतद्गन्धगजस्तृषाम्भसि

---

१ शङ्खचक्रकमलचिह्नवान् हि राजा भवतीति राजपक्षे, भगवत्पक्षे, तु स्पष्टम् । २ देववर्यैः, राजेन्द्रैश्च । ३ सुवर्ण- । ४ महतीभिः । ५ क्षत्रिय- ।

भृशं कण्ठान्तमज्जत्तनुः फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्धिभिः । दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमिव्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥ ३ ॥ स्वीयोदानप्रगन्धप्रकुपितहृदयोत्तारितोद्दण्डशुण्डैरुद्गच्छत्पुच्छगुच्छप्रतिकरटिधिया सिन्धुरैर्धावमानैः । तत्पादन्यासनम्रीभवदचलभरोद्भ्रान्तिधारावघूर्णत्पारावाराम्बुपूर्णा धरणिरतितरां शङ्कमाना चकम्पे ॥ ४ ॥

## अश्वप्रशंसनम् ।

धावन्तमनुधावन्ति हरिणं तव वाजिनः । नाभिनिर्मुक्तकस्तूरीलुब्धा इव समीरणाः ॥ १ ॥ मेखलीयति मेदिन्याः ककुभः कङ्कणीयति । मण्डलीस्तुरगः कुर्वञ्जगतः कुण्डलीयति ॥ २ ॥ अनूनवेगाद्दयमद्वितीयश्छायातुरङ्गादपि लज्जमानः । खुरोद्धतैर्वीर तुरङ्गमस्ते रजोभिरह्नांपतिमावृणोति ॥ ३ ॥ अलक्षितगतागतैः कुलवधूकटाक्षैरिव क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव । सुवृत्तमसृणोन्नतैर्मृगदृशामुरोजैरिव त्वदीयतुरगैरिदं धरणिचक्रमाक्रम्यते ॥ ४ ॥ निर्मांसं मुखमण्डले परिमितं मध्ये लघु कर्णयोः स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे । पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥ ५ ॥ प्रयातुमस्माकमिदं कियत्पदं धरा तदम्भोधिरपि स्थलायताम् । इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुद्धतं रजः ॥ ६ ॥ इयती जगती कियती भविता नमिता न न यामिति याति हयः । वियदङ्गणरिङ्गणरङ्गणभूर्विमृशन्निव नर्तनमातनुते ॥ ७ ॥ किमङ्गारवद्गां खुरैः स्पर्शयन्तः कुरङ्गा इवाङ्गानि संकोचयन्तः । अटन्तो नटन्तो भटं तोषयन्तस्तुरङ्गाः सुरङ्गाः पुरं गाहयन्ति ॥ ८ ॥ धूलीभिर्दिवमन्धयन्बधिरयन्नाशाः खुराणां रवैर्वातं संयति खञ्जयञ्जवजयैः स्तोतॄन्गुणैर्मूकयन् । धर्माराधनसंनियुक्तजगता राज्ञामुनाधिष्ठितः सान्द्रोत्फालमिषाद्दिगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम् ॥ ९ ॥ वातं स्थावरयन्नभः पुटकयन्स्रोतस्वतीं सूत्रयन्सिधुं पल्वलयन्वनं विटपयन्भूमण्डलं लोष्टयन् । शैलं सर्षपयन्दिशं चपलयँल्लोकत्रयं क्रोडयन्हेलारब्धरयो हयस्तव कथंकारं गिरां गोचरः ॥ १० ॥ तत्तां गामिव संस्पृशन्ति गतिभिर्यामुत्पतन्तो मुहुरन्तेवासिनं आजवश्रुतगतीवाध्यापयन्तोऽनिलात् । देवस्वीयखुराग्रदीर्णवसुधाधूलीवितानं बलारात्यश्वो नटनं पठिष्यति हि वस्तन्वन्ति वाहास्तव ॥ ११ ॥

## कृपाणप्रशंसनम् ।

वर्णयामि विमलत्वमम्भसः किं त्वदीयकरवालवर्तिनः । एति यत्प्रभवमैन्दवीं द्युतिं विश्वशुक्तिपुटमौक्तिकं यशः ॥१॥ खड्गवारि भवतः किमुच्यते लोलशैवलमिवारिकुन्तलैः । यत्र राजति निवेशितं त्वया राजहंसनिवहोपमं यशः॥२॥न पक्षवृत्तिर्न सपक्षवृत्तिर्विपक्षवृत्तिः करवालधूमः । तथापि ते भूमिपते जगत्यां प्रतापवह्निप्रमितिं करोति ॥ ३ ॥ रिपुश्रियः किं कचसंचयोऽयं प्रतापवह्नेः किमु धूमराजिः । विलोक्य यत्पाणिगतं कृपाणमेवं जनस्तर्कयते रणेषु॥४॥सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा । तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥५॥ दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तनिघ्नघनशोणितशोणशोचिः । वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः॥६॥ धाराधरस्त्वदसिरेष नरेन्द्र चित्रं वर्षन्ति वैरिवनिताजनलोचनानि । कोशेन संततमसंगतिराहवेऽस्य दारिद्र्यमभ्युदयति प्रतिपार्थिवानाम् ॥ ७ ॥ कुरङ्गाक्ष्यामेणीं सुभगविपरीते रतिविधावधिस्कन्धं दृष्ट्वा किमपि

---

१ प्रतिद्वन्द्विगज- । २ अश्वाः । ३ स्निग्ध- । ४ आकाशं वा स्वर्गम् । ५ वेगातिशय- । ६ भूमिं धेनुं च । ७ नदीम् । ८ विद्यार्थिनः । ९ इन्द्रसम्बन्धिनीम् । १० पृथिव्याम् ।

निपतन्तीमरिभटः । अधिग्रीवं युष्मत्प्रचलकरवालव्यतिकरं स्मरन्नेव स्तब्धो विरमति परीरम्भरभसात्॥८॥ कृपाणीयं काली तव रिपुयशःक्षीरमनिशं पिबन्ती व्यालीव प्रथयति तथा दुर्विषहताम् । यथा दूरादस्याः स्फुरणमपि संभाव्य सहसा विमुञ्चन्ति प्रौढप्रहरणभृतोऽपि प्रतिभटाः॥९॥राजन्वीर विपक्षलक्षसुवधूवैधव्यदीक्षागुरुः सङ्ग्रामाध्वरकर्ममर्मकुशलः प्रत्यर्थिपृथ्वीभुजाम् । प्राणानर्घ्यमणेर्मया पहरणं नाकारि किंतु प्रभो भ्रूभङ्गेन तवेति दिव्यमपिबत्कोशं स खड्गः परः ॥१०॥ अस्यासिर्भुजगः स्वकोशविवराकृष्टः स्फुरत्कृष्णिमा कम्पोन्मीलदरालनीलवलनैस्तेषां भिये भूभुजाम् । सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः पर्यास्ये विनिवेश्य जाङ्गुलिकता कैर्नाम नालम्बिता ॥११॥भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधरस्त्वत्खड्गः प्रतिपक्षपङ्कपटलं प्रक्षालयन्धारया । युद्धक्रुद्धविरुद्धसिन्धुरगलद्गण्डस्थलप्रस्खलन्मुक्ताभिः करकाभिराशु समरे क्षोणीतले वर्षति ॥१२॥ आश्चर्यं समराम्बरे रिपुयशश्चन्द्रप्रतापार्कयोः सर्वग्रासमयं सहैव तनुते त्वत्खड्गराहुः कथम् । किं चान्यत्परलोकनिर्भयमवांस्तस्मिन्महत्युत्सवे गृह्णाति त्यजतामकम्प हृदयो राज्ञां समस्ता भुवः॥ १३ ॥ देव त्वत्करपद्मकोशविगलन्मत्तालिमालामसिं वैधव्योद्भटधूमकेतुमपरे त्वद्वैरिवामभ्रुवाम् । कालस्त्रीकबरीं प्रतापहुतभुग्धूमं च केचिज्जगुर्मन्ये कालभुजङ्गलोलरसना हालाहलव्यापृता ॥ १४ ॥ सिक्तायां वीरकण्ठस्थलवहलगलद्रक्तधाराम्बुवर्षैर्मांद्यन्मातङ्गकुम्भोद्दलनविलुलितैर्मौक्तिकैः पुष्पितायाम् । संग्रामोद्यानभूमौ तुरगखुरपुटोत्खातकृष्टस्थलायां जातं ते खड्गवल्ल्याः फलमतुलरसास्वादहृद्यं जयश्रीः ॥ १५ ॥ सर्पीविषा कृपाणी तव भुजभुजगासङ्गतः संगरादौ सद्यः कृत्तारिखण्डच्युतरुधिररजोयोगमभ्यावहन्ती । दृप्यद्दानाम्बुपूरोत्कटकरिघटनागण्डशैलेषु लीना सूते सद्यः किलाण्डान्यतिविमलगलद्भूरिमुक्ताच्छलेन ॥ १६ ॥ लेखन्ती व्योमगर्भे दिशि विदिशि मुहुर्निष्पतन्ती हरन्ती शश्वत्प्रौढान्धकारानखिलजनमनोविस्मयं वर्धयन्ती । यस्य स्फारासिधारा तडिदिव तरला वैरिकण्ठोपकण्ठं प्राप्ता सद्यो नटीव प्रणयकुतुकिनी मोहमाविष्करोति ॥ १७ ॥ चूडापीडाभिरामः स्फुरदुरुमणिभिर्मुद्रिकाकल्पभूतैर्दोर्दण्डः कुण्डलीन्द्रस्तव जयति जगन्मण्डलाधार एषः । क्षीरभ्रान्त्यारिकीर्तिं सपदि समुदितां पातुकामः प्रसर्पज्जिह्वामुच्चैः किमेनां चपलयति चमत्कारिणीं खड्गधाराम् ॥ १८ ॥

## नृपतिप्रयाणप्रशंसनम् ।

प्रयाणे तव राजेन्द्र मुक्ता वैरिमृगीदृशाम् । राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥ १ ॥ दिङ्नारीणां स्पृशत्यर्को रजःसंदूषिताम्बरम् । प्रस्थाने नृपतेऽसन्तोऽर्पथैर्यान्ति रजोवृताः ॥ २ ॥ त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥३॥ यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री । आद्रव्रणाधिष्ठितपृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ ४ ॥ अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि । कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ॥ ५ ॥ यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जितम् । तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ ६ ॥ त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति । द्वीपान्तरेऽपि नहि तेऽस्त्यवशंवदोऽद्य त्वां राजपुंगव निषेवत एव लक्ष्मीः ॥ ७ ॥ त्वयि प्रचलति प्रभो तुरगवल्गनासु स्फुरद्धरावलयधूलिभिः

---

१ पिधानम् । निधानं च । २ वक्र- । ३ चञ्चलः । ४ विषचिकित्सकत्वम् । ५ युद्धारम्भे । ६ छिन्न— । ७ सर्पः- । ८ विमार्गैः, पलायने मार्गानुसन्धानानपेक्षितत्वात् । ९ सेना- । १० सेतुमन्थनयोः कर्ता ।

सकलमेव कीर्णं नभः । दिवाकरहयावली निरवलम्बसंचारतः श्रमापनयनाय किं वसुमतीयमूर्ध्वं गता ॥ ८ ॥ चोली चोलीं न तु कलयते गुर्जरा जर्जराङ्गी भूर्जाक्रान्तं विशति विपिनं मालवी सालवीथीम् । नो संगीतं रचयति मनागङ्ग वङ्गी कृशाङ्गी नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥ ९ ॥ देव त्वद्विजयप्रयाणविलसत्सद्वाजिराजिव्रजक्षुण्णक्ष्मातललीनपांशुपटलव्याप्तोऽनिमेषेक्षणः । सुत्रामा बहु मन्यते फणिपतिं पातालमूलस्थितं सोऽप्युद्दामकरीन्द्रदुर्वरमरक्रान्तः सहस्रेक्षणम् ॥ १० ॥ देवे दिग्विजयोद्यते धृतधनुःप्रत्यर्थिसीमन्तिनीवैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति । आस्तामन्यनितम्बिनी रतिरपि प्रायो न पौष्पं करे भर्तुर्धर्तुमदान्मदान्धमधुपीनीलीनिचोलं धनुः ॥ ११ ॥ देव त्वद्विजयोद्यमे हरिखुरत्रातक्षतक्ष्मातलात्प्रोद्भूते रजसः परागपटले दिक्चक्रमाक्रामति । अक्ष्णां पङ्क्तिशतानि निन्दति निजं हस्तद्वयं निन्दति स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥ १२ ॥ युष्मद्वाजिजिताजिराजिचरणक्षेपक्षतैर्मोहिनी मङ्क्षु क्षोणिमवेक्ष्य सिञ्चति धनैर्भर्ता नदीनां जलैः । आशामण्डलमुत्कटध्वजपटैर्वातं तनोति द्रुतं चञ्चच्चलरेणुरश्विनमिवानेतुं दिवं गच्छति ॥ १३ ॥ धूर्ताधोरण देव वासवकरी पङ्केन लिप्तः कथं नीतः स्वर्गतरङ्गिणीजलमसौ तत्रास्ति पङ्कः कुतः । सर्वाशाविजयोत्सवं प्रति कृतोद्योगे धराधीश्वरे स्फायन्ते करिकर्णतालपवनो द्भूताश्च भूरेणवः ॥ १४ ॥ देव त्वद्रुजवाजिपत्रपटलप्रोद्भूतधूलीभरैराकाशं वसुधीयते खरकरः सोमायते निष्प्रभः । किं चायो भरकुञ्चितः फणवतां नाथः स कूर्मायते कूर्मो भोगपतीयते किमपरं रात्रीयते वासरः ॥ १५ ॥ वेल्लत्पक्षतिराजहंसयुवतित्रुटयन्मृणालावलिभ्राम्यत्षट्पदभूरिझाङ्कृतिपतच्चक्रीकृतक्रेङ्कृति । पर्यस्यन्नवपद्मसंहतिपतद्विग्वर्तिवेगस्थिति प्रस्थानध्वजवाततलोलमजनि स्वर्गापगायाः पयः ॥ १६ ॥ सत्यं त्वं पुरुषोत्तमोऽसि नियतं तत्रापि रामो भवान्प्रस्थाने तव लज्जयेव नमति व्यक्तं यतो मेदिनी । द्राक्पूर्वाचलपश्चिमाचलकुचावावृण्वती प्रोच्छलत्त्काराबचलत्पयोधिलहरीचैलाञ्चलैश्चञ्चलैः ॥ १७ ॥ प्रस्थाने तव भूमिपाल वसुधा जाता रजोदोषला त्वद्विड्दारपयोधरोऽञ्जनवृतं वर्षत्यधोऽश्रूदकम् । झञ्झाश्वासहिमापमौक्तिकगणान्वामाः किरन्ति द्विषस्तच्चोत्पात इति प्रतापदहने यास्यन्ति ते शत्रवः ॥ १८ ॥ एतद्दत्तासिघातस्रवदसृगसुहृद्दशसान्द्रेन्धनैतद्दोरुद्दामप्रतापज्वलदनलमिलद्धूमभूमभ्रमाय । एतद्दिग्जैत्रयात्रासमसमरभरं पश्यतः कस्य नासीदेतन्नासीरवाजिव्रजखुरजरजोराजिराजिस्थलीषु ॥ १९ ॥ तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकारं निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः । भूगोलच्छायमायामयगणितविदुल्येकायो मिय भूदेतत्कीर्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमानः ॥ २० ॥ गान्धारा गुप्तदारास्त्वयि चलति गलद्बाष्पधारा विहारा गारात्त्रासान्बगाराः क्षितिपकुलमणे गुर्जरा जर्जराशाः । तैलङ्गास्त्यक्तलिङ्गास्त्रिभुवनतिलक क्लिश्यदङ्गाः कलिङ्गा मोरङ्गा मुक्तरङ्गा सपदि समभवन्वीर गङ्गाविहङ्गाः ॥ २१ ॥ काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्रेन्दुशोभा निःश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः । भ्रेमुर्वात्या इवान्या प्रतिपदमपरा भूमिवत्कम्पमापुः प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः ॥ २२ ॥ जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा दिग्योषाः स्नान्ति सद्यस्त्वदरिनृपवधूनेत्रनीरापगासु । संगम्य त्वत्प्रतापैस्तदनु किमु दधुर्दो-

---

१ समुदाय- । २ शत्रुस्त्री- । ३ भ्रमरी । ४ तुरगखुरसमूह- । ५ दशशतानि । ६ इन्द्रः । ७ दिक्- । ८ अश्विनीकुमारं वैद्यम् । ९ ऐरावतः । १० सुरगङ्गा- । ११ वाहनसमूह- । १२ भूमिरिवाचरति । १३ सूर्यः । १४ चन्द्र इवाचरति । १५ शेषः ।

हनं देव तासां प्राची प्रातः प्रसूते यदिदमुरुमहोऽखण्डमार्तण्डबिम्बम् ॥ २३ ॥ घूर्णन्ते तूर्णमेतत्कुलधरणिभृतो दिग्द्विपा दिग्द्विदिक्षु क्षुभ्यन्ति क्षोभयन्ति क्षितिमतिमृदितो मर्मणा कूर्मराजः । प्रस्थाने यस्य गर्जत्करटिघनघटासंभ्रमन्यञ्चदुर्वीमुर्वीं दर्वीकरेन्द्रः कलयितुमुदितश्रायमार्तिं बिभर्ति ॥ २४ ॥ नृत्यत्त्वद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते । विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोकाः कोकाः क्रन्दन्ति शोकानलविकलतया किं च नन्दन्त्युलूकाः ॥ २५ ॥ इन्द्रः प्रक्षुब्धचित्तो दिशि दिशि सकलान्दिक्पतीन्सावधानान्कुर्वन्वज्राच्छपाणिः सुरवरवलितां देवसेनां निगृह्य । स्वर्गद्वारे यदीयोद्धतबलनिहतप्रौढढक्कानिनादं श्रुत्वा तिष्ठन्प्रकम्पत्कुचकलशतटीकिंनरीगीयमानः ॥ २६ ॥ आजौ त्वद्वाजिराजिप्रखरखुरतरन्यासलीलाभिरुर्व्यां दीर्णायां देव निर्यन्नविरलभवनीपाल पातालवह्निः । अश्नीयाद्विश्वमेव प्रतिनृपतिवधूनेत्रधाराम्बुधारावारा यद्येनमारादरिकुलदमन द्राङ्न निर्वापयेयुः ॥ २७ ॥

## पताकावर्णनम् ।

भयेन कृष्णान्यरुणानि रागात्पाण्डूनि कान्तादिवियोगभाजाम् । द्विषां मनांसि ध्वजकैतवेन लोलानि भोस्त्वां नृप संश्रयन्ति ॥ १ ॥

## दुन्दुभिवर्णनम् ।

गङ्गाम्भसि सुरत्राण तव निःसाणनिःस्वनः । स्नान्तीवारिवधूवर्गगर्भपातनपातकी ॥ १ ॥ ब्रह्माण्डं प्रविखण्ड्य भूधरगुहासुप्तान्हरीन्बोधयन्गर्भान्वैरिवधूव्रजस्य नृपते निष्पात्य हा पातकी । कीलालं परिशोष्य च प्रतिभटानां तेजसा तेऽद्भुतं शोद्धुं विष्णपदं स्पृशत्यधिपयोराशिप्लुतो दुन्दुभिः ॥ २ ॥ पारीन्द्राणां धुरीणैरवनिधरगुहागर्ततः प्रोच्छलद्भिः स्वापभ्रंशापराधप्रचलितनयनप्रान्तमाकर्ण्यमानः । त्वत्प्रस्थानान्तरुद्यत्प्रलयजलधरध्वानधिक्कारधीरो धृष्टक्षीराम्बुतीरो जगति विजयते दुन्दुभिद्रन्द्वनादः ॥ ३ ॥

## वातायनवर्णनम् ।

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः । बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥ १ ॥ प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव । उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान ॥ २ ॥ विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा । तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ३ ॥ जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् । नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ४ ॥ अर्धाञ्चिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती । कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ५ ॥ स्तनं धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती । संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ॥ ६ ॥ अभिवीक्ष्य सामिकृतमण्डनं यतीः कररुद्धनीविगलदंशुकाः स्त्रियः । दधिरेऽधिभित्ति पटहप्रतिस्वनैः स्फुटमट्टहासमिव सौधपङ्क्तयः ॥ ७ ॥ रभसेन हारपददत्तकाञ्चयः प्रतिमूर्धजं निहितकर्णपूरकाः । परिवर्तिताम्बरयुगाः समापतन्वलयीकृतश्रवणपूरकाः स्त्रियः ॥ ८ ॥ व्यतनोदपास्य चरणं प्रसाधिकाकरपल्लवाद्रसवशेन काचन । द्रुतयावकैकपदचित्रितावनिं पदवीं गतेन गिरिजा हरार्धताम् ॥ ९ ॥ व्यचलन्विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाकुलाः । भवनानि तुङ्गतपनीयसंक्रमक्रमणकणत्कनकनूपुराः स्त्रियः ॥ १० ॥ करयुग्मपद्ममुकुलापवर्जितैः प्रतिवेश्म लाजकुसुमैरवाकिरन् । अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥ ११ ॥ नलिनान्तिकोपहितपल्लवश्रिया व्यवधाय चारु मुखमेकपाणिना । स्फुरिताङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥ १२ ॥

## सङ्ग्रामोपकरणवर्णनम् ।

अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति । बलैश्चलच्चरणविधूतमुच्चरद्घनावलीरुदचरतः क्षमारजः ॥ १ ॥ विषङ्गिभिर्भृशमितरेतरं क्वचित्तुरङ्गमैरुपरि निरुद्धनिर्गमाः । चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलयः ॥ २ ॥ गरीयसः प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम् । सितसक्षतः सरसिजजन्मनो जगद्बलस्य तु क्षयमपनेतुमिच्छतः ॥ ३ ॥ पुरा शरक्षतिजनितानि संयुगे नयन्ति नः प्रसभमसृञ्जि पङ्कताम् । इति ध्रुवं व्यलविधुरात्तभीतयः खमुच्चकैरनलसखस्य केतवः ॥ ४ ॥ क्वचिल्लसद्घननिकुरम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः । क्वचिच्छरच्छशधर-खण्डपाण्डुरः खुरक्षतक्षितितलरेणुरुद्ययौ ॥ ५ ॥ महीयसां महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि । विसारितामजिहत कोकिलावलीं मलीमसां जलदमदाम्बुराजयः ॥ ६ ॥ शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत युवान एव मा । बलोद्धतं धवलितमूर्ध-जानिति ध्रुवं जनाञ्जरत इवाकगोद्रजः ॥ ७ ॥ सुमहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिर-संशयं परैः । यतः क्षितेरवयवमपदोऽणवस्त्विषांनिधेरपि वपुरावरीषत ॥ ८ ॥ द्रुतद्रवदथचर-णक्षतक्षमातलोल्लसद्बहुलरजोवगुण्ठितम् । युगशयक्षणनिरवग्रहे जगत्पयोनिधेर्जल इव मग्नमाबभौ ॥ ९ ॥ समुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिताम्बरश्रियः । दिगङ्गनाः क्षणमविलोक-नक्षमाः शरीरिणां परिहरणीयतां ययुः ॥ १० ॥ निरीक्षितुं वियति समेत्य कौतुकात्पराक्रमं समरमुखे महीभृताम् । रजस्तताविनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणैः पलाय्यत ॥ ११ ॥ विषङ्गिणि प्रतिपदमापिबत्यपो हतार्चिरद्युतिनि समीरलक्ष्मणि । शनैःशनैरुपचितपङ्कभारिकाः पयोमुचः प्रययुरुपेतवृष्टयः ॥ १२ ॥ नभोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनधिगतानि लेभिरे । चलच्चमूतु-रगखुराहतोत्पतन्महीरजःस्नपनसुखानि दिग्गजैः ॥ १३ ॥ गजव्रजाक्रमणभरावनम्रया रसातलं यद-खिलमानशे भुवा । नभस्तलं बहुलतरेण रेणुना ततोऽगमत्त्रिजगदिवैकतां स्फुटम् ॥ १४ ॥ समस्थली-कृतविवरेण पूरिता महीभृतां बलरजसा महागुहाः । रहस्त्रपाविधुरवधूरपार्थिनां नभःसदामुपकरणीयतां ययुः ॥ १५ गते मुखच्छदपटसादृशीं दृशः पथस्तिरोदधति घने रजस्यपि । मदानिलैरधिमधुचू-तगन्धिभिर्द्विपा द्विपानभिययुरेव रंहसा ॥ १६ ॥ मदाम्भसा परिगलितेन सप्तधा गजाञ्जनः क्षमित-रजश्चयानधः । उपर्यवस्थितघनपांशुमण्डलानलोकयत्ततपटमण्डपानिव ॥ १७ ॥ तूणीरबन्धपरि-णद्धभुजान्तरालमाकर्णलम्बिशिखिपिच्छकलापधारि । कोदण्डपाणिनिनदत्प्रतिरोधकानामापातदुष्प्रसह-माविरभूदनीकम् ॥ १८ ॥ आदावेव गजेन्द्रमौलिविलसद्दण्डा पताकावली पश्चाद्वारणराजधोरणिर-तिप्रोद्दामयोधाश्रिता । उद्दण्डध्वजलाञ्छिताप्यथ घनीभूता रथानां तती तत्पश्चात्तुरगावली विजयते योधैः समं सर्वतः ॥ १९ ॥ योधैरेव वशीकृताः कथमपि प्रोद्दामरोषान्धिता गाढध्वान्तधरावरा इव रणक्षोणीं समालम्बिताः । ईषन्मीलितघूर्णितं प्रतिदिशं प्रक्षिप्तनेत्राञ्चला मन्दान्दोलितमौलयो मदजलैरा-भान्ति दन्तावलाः ॥ २० ॥ आरूढक्षितिपालभालविगलत्स्वेदाम्बुमेकोद्गता भेरीझाङ्कृतिचापटङ्कृति-चमत्कारोल्लसन्मानसाः । क्षुभ्यत्क्षोणितलं स्फुरत्खुरपुटं चञ्चच्चलत्केशरं मन्दभ्रान्तविलोचनं प्रतिदिशं नृत्यन्ति वाजिव्रजाः ॥ २१ ॥ सज्जन्तां कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गाः करीन्द्रा युज्यन्तां स्यन्दनेषु प्रसभजितमरुच्चण्डवेगास्तुरङ्गाः । कुन्तैर्नीलोत्पलानां वनमिव ककुभामन्तराले सृजन्तः पादाताः संचरन्तु

१ गजराजाः । २ रथेषु ।

प्रसभमसिलसत्पाणयः पत्तयोऽपि ॥ २२ ॥ अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृतस्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः। वर्षन्तः शममानयन्नुपलसच्छृङ्गारलेखायुधाः काले कालियकाय-कालवपुषः[1] पांशून्गजाम्भोमुचः ॥ २३ ॥ हेषाघोषैर्हरीणां जितघननिनदैर्बृंहितैः कुञ्जराणां ज्यावातोत्थैर्निनादैः पटुपटहरवैर्मर्दलोद्दामशब्दैः । प्राप्तैः कर्णोपकण्ठं मदगजनिवहस्कन्धघण्टाप्रणादैः श्रृङ्गाराय त्वरन्ते त्रिदशमृगदृशो वीरवर्गानुरक्ताः ॥ २४ ॥

## युद्धस्थलप्रशंसनम् ।

पत्तिः पत्तिमभीयाय रणाय रथिनं रथी । तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः ॥ १ ॥ तनुत्रात्रं[2] तनुत्रात्रं शस्त्रं शस्त्रं रथो रथः । इति शुश्रुविरे विष्वग्[3]उद्भटाः सुभटोक्तयः ॥२॥ सङ्ग्रामानन्दवर्षिष्णौ विग्रहे पुलकाङ्किते । आसीत्कवचविच्छेदो वीराणां मिलतां मिथः ॥ ३ ॥ निर्दयं खड्गभिन्नेभ्यः कवचेभ्यः समुच्छ्रितैः । आसन्व्योमदिशस्तूलैः पलितैरिव पाण्डुराः ॥ ४ ॥ शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधुः । आहवक्षेत्रमभ्युप्तकीर्तिबीजोत्करश्रियम् ॥ ५ ॥ वीराणां विषमैर्घोषैर्विद्रुता वारणा रणे । शास्यमाना अपि त्रासाद्वेजुर्धूताङ्कुशा दिशः ॥ ६ ॥ रणे बाणगणैर्भिन्ना भ्रमन्तो भिन्नयोधिनः । निममज्जुर्गलद्रक्तनिमग्नासु महागजाः ॥ ७ ॥ खड्गनिर्लूनमूर्धानो निपतन्तोऽपि वाजिनः । प्रथमं पातयामासुरसिना दारितानरीन् ॥ ८ ॥ खड्गा रुधिरसंलिप्ताश्चण्डांशुकरभासुराः। इतस्ततोऽपि वीराणां वैद्युतं[4] वैभवं दधुः ॥ ९ ॥ गृहीताः पाणिभिर्वीरैर्विकोशाः खड्गराजयः । कान्तिजालच्छलादाजौ व्यहसन्समदा इव ॥ १० ॥ खड्गाः शोणितसंदिग्धा नृत्यन्तो वीरपाणिषु । रजोघने रणेऽनन्ते विद्युतां विभ्रमं दधुः ॥ ११ ॥ वीराणां शस्त्रभिन्नानां शिरांसि निपतन्त्यपि । अधावन्दन्तदष्टोष्ठभीषणान्यारिषु क्रुधा॥१२॥ शिरांसि वरयोधानामर्धचन्द्राहतान्यपि । आददाना भृशं पादैः श्येना व्यानशिरे दिशः ॥ १३ ॥ उत्क्षिप्ता अपि हस्तीन्द्रैः कोपनैः पत्तयः करैः । ते रिपूनहनन्खड्गपातैः स्वस्य पुरः प्रभोः ॥ १४ ॥ उत्क्षिप्य करिभिर्दूरं मुक्तानां योधिनां दिवि । प्रापि जीवात्मभिर्दिव्याङ्गनाकण्ठपरिग्रहः ॥ १५ ॥ क्रुद्धस्य दन्तिनः पत्तिर्जिघृक्षोरसिना करम् । निर्भिद्य दन्तमुसलान्यारुरोह जिघृक्षया ॥ १६ ॥ खड्गेनामूलतो हत्वा दन्तिनोऽङ्घ्रिचतुष्टयम् । प्रपतिष्णोः प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥ १७ ॥ करेण करिणा वीरः सुगृहीतोऽपि कोपिना । असिनाऽऽसूक्ष्महाराशु तस्यैव स्वयमक्षतः ॥ १८ ॥ तुरङ्गी तुरगारूढं प्रासेनाहत्य वक्षसि । पततस्तस्य नाज्ञासीत्प्रासघातं स्वके हृदि ॥ १९ ॥ तुरङ्गसादिनं शस्त्रहतप्राणं गतं भुवि । अत्याढ्योऽपि महावाजी[6] नात्रस्तनयनोऽत्यजत् ॥ २० ॥ द्विषा प्रासहतप्राणो वाजिपृष्ठदृढासनः । हस्तोद्धृतमहाप्रासो भटो जीवन्निवाभ्रमत् ॥ २१ ॥ खड्गेन शितधारेण भिन्नोऽपि रिपुणाऽश्वगः । नामूर्च्छत्कोपतो हन्तुमियेष च पतन्नपि ॥ २२ ॥ रथिनो रथिभिर्बाणैर्हृतप्राणा दृढासनाः । कृतकार्मुकसंधानाः सप्राणा इव मेनिरे ॥ २३ ॥ मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ रुषितौ रुषा । खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम्[5] ॥ २४ ॥ पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम् । यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ २५ ॥ आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य । शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिर-

---

१ कालियनागस्य दुःसहविषधरराजसदृशकृष्णशरीरस्य। २ कवचाभावे रक्षणासम्भवात्। ३ सर्वतः । ४ विद्युत्सम्बन्धि- । ५ उत्साहावेशहता हि कबन्धतां प्राप्यापि मुहूर्त्तं तथैव संचरन्तीति दृष्टचरम् । ६ वेगवानश्वः । ७ हस्ति- ।

प्रवाहः ॥ २६ ॥ स छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे ॥ २७ ॥ आधोरणानां गजसंनिपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः । हृतान्यतिश्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ २८ ॥ तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः । उद्यन्तमग्निं शमयांबभूवुर्गजा विविग्नाः करशीकरेण ॥ २९ ॥ शिलीमुखोत्कृत्तशिरःफलाढ्या-श्च्युतैः शिरस्त्रैश्चषकोत्तरेव । रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः॥ ३० ॥ केचिद्गदाः केऽपि सचापबाणानन्ये कृपाणीरपरे च शूलम् । शक्त्यृष्टिमन्ये मुसलं परे च प्रोत्तानहस्ताः परिनर्तयन्ति ॥ ३१ ॥ सरोषयुद्धाङ्गणमध्यधावन्मत्तद्विपानामधिकोत्सुकानाम् । पादाभिघाताभिहताः पतन्ति रथाश्च योधाश्च तुरङ्गमाश्च॥ ३२॥ रम्भातरूनुद्धतवातपूरा यथा तथा वारणयूथनाथाः । सङ्ग्रामभूमौ विनिपातयन्ति रथांश्च योधांश्च तुरङ्गमांश्च ॥ ३३॥ उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः। विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम्॥ ३४॥ रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः । स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ ३५ ॥ परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव । अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ३६ ॥ महास्वनः सैन्यविमर्दसंभवः कर्णान्तमूलंकषतामुपेयिवान् । पयोनिधेः क्षुब्धतरस्य मन्थनो बभूव भूम्ना भुवनोदरम्भरिः॥ ३७॥ दन्तीन्द्रदानाम्बुधिवारिवीचिभिः सद्योऽपि नद्यो बहु ताः पुपूरिरे । धरारजोभिस्तुरगक्षतैर्भृतं वैः पङ्कतामेत्य रजस्वलीकृतम् ॥ ३८ ॥ निम्नप्रदेशाः स्थलतामुपागमन्निम्नत्वमुच्चैरपि सर्वतः स्थलम् । तुरङ्गमाणां व्रजतां खुरैः क्षिती रथैर्गजेन्द्रैः परितः समीकृता ॥ ३९ ॥ महागजानां गुरुबृंहितैः शतैः सुहेषितैर्घोरतरैश्च वाजिनाम् । घनै रथानां चलचण्डचीत्कृतैस्तिरोहितोऽभूत्पटहस्य निःस्वनः ॥ ४० ॥ घनैर्विलोक्य स्थगितार्कमण्डलैश्चमूरजोभिर्निचितं नभस्तलम् । अयायि हंसैरभिमानसं घनभ्रमेण सानन्दमनर्ति केकिभिः ॥ ४१ ॥ विलोक्य धूलीपटलैर्भृशं भृतं द्यावापृथिव्योरलमन्तरं महत् । किमूर्ध्वतोऽधः किमधस्त ऊर्ध्वतो रजोऽभ्युपैतीति जनैरतर्क्यत ॥ ४२ ॥ नोर्ध्वं न चाधो न पुरो न पृष्ठतो न पार्श्वतोऽभूत्खलु चक्षुषो गतिः । सूच्यग्रभेद्यैः पृतनारजोभरैः सुनिर्भरं प्राणिगणस्य सर्वतः ॥ ४३ ॥ उद्दामदानद्विपबृंहितैः शतैर्नितान्तमुत्तुङ्गतुरङ्गहेषितैः । चलद्ध्वजस्यन्दननेमिनिःस्वनैरभून्निरुच्छ्वासमथाकुलं नभः ॥ ४४ ॥ महागजानां गुरुभिस्तु गर्जितैर्विलोलघण्टारणितै रणोज्ज्वलैः । वीरप्रभेदैः प्रमदप्रमेदुरैर्वाचालतामादधिरेतरां दिशः ॥ ४५ ॥ नभोदिगन्तप्रतिबोधभीषणैर्महामहीभृत्तटदारणोल्बणैः । पयोधिनिर्धूननकेलिभिर्जगद्बभूव भेरीस्वनितैः समाकुलम् ॥ ४६ ॥ इतस्ततो वातविधूतचञ्चलैरारोधिताशागमनैर्ध्वजांशुकैः । लघुक्वणत्काञ्चनकिङ्किणीकुलैरमज्जि धूलीजलधौ नभोगतैः ॥४७॥ घण्टारवै रौद्रतरैर्निरन्तरैर्विसत्वरैर्गर्जरवैः सुभैरवैः । मदद्विपानां प्रथयांबभूविरे न वाहिनीनां पटहस्य निःस्वनाः ॥ ४८ ॥ करालवाचालमुखैश्चमूरवैः स्रस्ताम्बरा वीक्ष्य रजस्वला दिशः । तिरोबभूवे गगने दिनेश्वरो रजोऽन्धकारे परितः कुतोऽप्यसौ ॥ ४९ ॥ आक्रान्तपूर्वा रभसेन सैनिकैर्दिगङ्गनाव्योमरजोऽभिदूषिताः । भेरीरवाणां प्रतिशब्दितैर्घनैर्जगर्ज गाढं गुरुमत्सरादिव ॥ ५० ॥ गुरुसमीरसमीरितभूधरा इव गजा गगनं विजगाहिरे । गुरुतरा बहुवारिभराद्घना भुवमतीव नमन्त इवाभवन् ॥ ५१ ॥ संजग्माते तावपायानपेक्षौ सेनाऽम्भोधी धीरनादौ रयेण । पक्षच्छेदात्पूर्वमेकत्र देशे

---

१ बाणोच्छिन्न- । २ गजखड्ग- । ३ जलम्- । ४ गच्छताम् । ५ व्याप्तम् । ६ सेना- । ७ आकाशचारिभिः । ८ सेनानाम् । ९ वेगेन ।

वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम् ॥ ९२ ॥ पत्तिः पत्तिं वाहसेयाय[1] वाजी नागं नागः स्यन्दनस्थो रथस्थम् । इत्थं सेना वल्लभस्येव[2] रागादङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥ ९३ ॥ रथ्याघोषैर्बृंहणैर्[3]वारणानामैक्यं गच्छन्वाजिनां ह्रेषया[4] च । व्योमव्यापि संततं दुन्दुभीनामव्यक्तोऽभूदीशितेव प्रणादः ॥ ९४ ॥ रोषावेशाद्गच्छतां प्रत्यमित्रमूरुत्क्षिप्तस्थूलबाहुध्वजानाम् । दीर्घास्तिर्यग्वैजयन्तीसदृश्यः पादातानां भेजिरे खड्गलेखाः ॥ ९५ ॥ उद्यन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति । आस्फाल्यन्ते[5] कार्मुकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि ॥ ९६ ॥ घण्टानादो निःस्वनो डिण्डिमानां ग्रैवेयाणामारवो बृंहितानि । ओमित्येवं प्रत्यवोचन्गजानामुत्साहार्थं वाचमाधोरणस्य ॥ ९७ ॥ रोषावेशादाभिमुख्येन कौचित्पाणिग्राहं रंहसैवोपयातौ । हित्वा हेतीर्[6]मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासजेताम् ॥ ९८ ॥ शुद्धा सङ्गं न कचित्प्राप्तवन्तो दूरान्मुक्ताः शीघ्रतां दर्शयन्तः । अन्तःसेनं विद्विषामाविशन्तो युक्तं चक्रुः सायका वाजितायाः[7] ॥ ९९ ॥ आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथो वीतशङ्कं शिरश्च। हेलालोला वर्त्म गत्वातिमर्त्यं[8] द्यामारोहन्[9]मानभाजः सुखेन ॥ ६० ॥ रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्यान्तर्मापितैः स्थावराणि । केचिद्दुर्वीमेत्य संयन्निवद्धां[10] क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥ ६१ ॥ वीर्योत्साहश्लाघि कृत्वावदानं संग्रामाग्रे मानिनां लज्जितानाम् । अज्ञातानां शत्रुभिर्युक्तमुच्चैः श्रीमन्नाम श्रावयन्ति स्म नग्नाः[11] ॥ ६२ ॥ सद्वंशत्वादङ्गसंसङ्गिनीत्वं नीत्वा कामं गौरवेणावबद्धा । नीता हस्तं वञ्चयित्वा परेण द्रोहं चक्रे कस्यचित्स्वा कृपाणी[12] ॥ ६३ ॥ नीते भेदं धौतधाराभिघातादम्भोदाभे शात्रवेणापरस्य । सास्रग्राजिस्[13]तीक्ष्णमार्गस्य मार्गो विद्युद्दीप्तः कङ्कटे[14] लक्ष्यते स्म ॥ ६४ ॥ मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणायं व्यक्तमासीद्विशेषः।आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्ती संमुखो यः परोऽसौ॥ ६५ ॥आमूलान्तात्सायकेनायतेन स्यूते बाहौ मण्डुकश्लिष्टमुष्टेः । प्राप्यासह्यां वेदनामस्तधैर्यादप्यभ्रश्यच्चर्म नान्यस्य पाणेः॥ ६६ ॥भित्त्वा घोणाम्[15]आयसेना[16]धिवक्षः[17] स्थूरीपृष्ठो[18]गार्ध्रपक्षेण[19] विद्धः । शिक्षाहेतोर्गाढरज्ज्वेव बद्धो हर्तुं वक्रं नाशकद्दुर्मुखोऽपि ॥ ६७ ॥ विष्वद्रीचीर्[20]विक्षिपन्सैन्यवीचीराजावन्तः[21] क्वापि दूरं प्रयातम् । बभ्रामैको बन्धुमिष्टं दिदृक्षुः सिन्धौ बाद्यो मण्डलं गोर्[22]वराहः ॥ ६८ ॥ यावच्चक्रे नाञ्जनं बोधनाय व्युत्थानज्ञो हस्तिचारी मदस्य । सेनास्वानाद्दन्तिनामात्मनैव स्थूलास्तावत्प्रावहन्दानकुल्याः ॥ ६९ ॥ प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रा नागः प्रास्तवक्त्रच्छदोऽपि । क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः प्रेक्षाञ्चक्रे नैव किंचिन्मदान्धः ॥ ७० ॥ अन्योऽन्येषां पुष्करैर्[23]आमृशन्तो दानोद्भेदानुच्चकैर्भुग्नवालाः । उन्मूर्धानः संनिपत्यापरान्तैः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥ ७१ ॥ द्राघीयांसः संहताः स्थेमभाजश्चारूदग्रास्तीक्ष्णतामत्यजन्तः । दन्ता दन्तैराहताः सामजानां[24] भङ्गं जग्मुर्न स्वयं सामजाताः ॥ ७२ ॥ मातङ्गानां दन्तसंघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः । लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥ ७३ ॥ ओषामास[25]

---

१ तुरगम् । २ प्रियस्य । ३ बृंहणबृंहितादयो हि गजशब्दे रूढाः । ४ हेषाऽऽदयो हि शब्दास्तुरगशब्दे रूढाः । ५ ज्याकर्षणेन सशब्दानि । ६ आयुधानि । ७ पक्षशालितायाः । ८ मर्त्यलोकमतिक्रम्यस्थितम् । ९ स्वर्गम् । १० सङ्ग्रामरूपापणम् । ११ स्तुतिपाठकाः । १२ खड्गः । १३ सरुधिरपुञ्जा । १४ कवचे । १५ नासिकाम् । १६ लोहमयेन । १७ वक्षसि । १८ तदानीमेवारूढः । १९ गृध्रपक्षयुक्तेन, गृध्रपक्षाकारपक्षयुक्तेन वा बाणेन । २० सर्वतोव्यापिनीः । २१ सङ्ग्रामे । २२ पृथिव्याः । २३ शुण्डादण्डैः । २४ हस्तिनाम् । २५ ददाह ।

मत्सरोत्पातवाताश्लिष्यद्दन्तक्ष्मारुहां घर्षणोत्थैः । यौगान्तैर्वा वह्निभिर्वारणानामुच्चैमूर्धन्व्योम्नि नक्षत्रमाला ॥ ७४ ॥ सान्द्राम्भोदश्यामले सामजानां वृन्दे नीताः शोणितैः शोणिमानम् । दन्ताः शोभामापुरम्भोनिधीनां कन्दोद्भेदा वैद्रुमा वारिणीव ॥ ७५ ॥ उत्क्षिप्योच्चैः प्रस्फुरन्तं रदाभ्यामीषादन्तः कुञ्जरं शात्रवीयम् । शृङ्गप्रोतप्रावृषेण्याम्बुदस्य स्पष्टं प्रापत्साम्यमुर्वीधरस्य ॥ ७६ ॥ व्यात्तं लोकैर्दुःखलभ्यापसारं संरम्भित्वादेत्य धीरो महीयः । सेनामध्यं गाहते वारणः स्म ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ७७ ॥ भृङ्गश्रेणीश्यामभासां समूहैर्नाराचानां विद्धनीरन्ध्रदेहः । निर्भीकत्वादाहवेनाहतेच्छो हृष्यन्हस्ती हृष्टरोमेव रेजे ॥ ७८ ॥ आताम्राभा रोषभाजः कटान्तादाशूत्खाते मार्गणे धूर्गतेन । निश्च्योतन्ती नागराजस्य जज्ञे दानस्याहो लोहितस्येव धारा ॥ ७९ ॥ कुर्वञ्ज्योत्स्नाविप्रुषां तुल्यरूपस्तारस्ताराजालसारामिव द्याम् । खड्गाघातैर्दारितादन्तिकुम्भादाभाति स्म प्रोच्छलन्मौक्तिकौघः ॥ ८० ॥ दूरोत्क्षिप्तक्षिप्रचक्रेण कृत्तं मत्तो हस्तं हस्तिराजः स्वमेव । भीमं भूमौ लोलमानं सरोषः पादेनासृक्पङ्कपेषं पिपेष ॥ ८१ ॥ आपस्कारोल्लूनगात्रस्य भूमिं निःसाधारं गच्छतोऽवाङ्मुखस्य । लब्धायामं दन्तयोर्युग्ममेव स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ ८२ ॥ हस्तेनाग्रे वीतभीतिं गृहीत्वा कंचिद्व्यालः क्षिप्तवानूर्ध्वमुच्चैः । आसीनानां व्योम्नि तस्यैव हेतोर्दिव्यस्त्रीणामर्पयामास नूनम् ॥ ८३ ॥ आक्रम्यैकामग्रपादेन जङ्घामन्यामुच्चैराददानः करेण । सोऽस्थिस्वानं दारुवद्दारुणात्मा कंचिन्मध्यात्पाटयामास दन्ती ॥ ८४ ॥ उत्प्लुत्यारादर्धचन्द्रेण लूने वक्रेऽन्यस्य क्रोधदष्टोष्ठदन्ते । सैन्यैः कण्ठच्छेदलीने कबन्धाद्भूयो बिभ्ये वल्गतः सासिपाणेः ॥ ८५ ॥ प्रत्यावृत्तं भग्नभाजि स्वसैन्ये तुल्यं मुक्तैराकिरन्ति स्म कंचित् । एकौघेन स्वर्णपुङ्खैर्द्विषन्तः सिद्धा मान्यैः साधुवादैर्द्वयेऽपि ॥ ८६ ॥ बाणाक्षिप्तारोहशून्यासनानां प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् । संरब्धानां भ्राम्यतामाजिभूमौ वैरी वैरैः सस्मरे वारणानाम् ॥ ८७ ॥ कश्चिन्मूर्च्छामेत्य गाढप्रहारः सिक्तः शीतैः शीकरैर्वारणस्य । उच्छ्वासः प्रस्थिता तं जिघृक्षुर्व्यर्थाकूता नाकनारी मुमूर्च्छ ॥ ८८ ॥ लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः । त्रेसे मुग्धैः सैंहिकेयानुकाराद्रौद्राकारादप्सरोवक्त्रचन्द्रैः ॥ ८९ ॥ वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुञ्जं जगाम । त्यक्त्वा नाग्नौ देहमेति स्म यावत्पत्नी सद्यस्तद्वियोगासमर्था ॥ ९० ॥ त्यक्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः । प्राप्याखण्डं देवभूयं सतीत्वादाशिश्लेष स्वैव कंचित्पुरन्ध्री ॥ ९१ ॥ स्वर्गे वासं कारयन्त्या चिराय प्रत्यग्रत्वं प्रत्यहं धारयन्त्या । कश्चिद्रेजे दिव्यनार्या परस्मिँल्लोके लोकं प्रीणयन्त्येव कीर्त्या ॥ ९२ ॥ गत्वा नूनं वैबुधं सद्म रम्यं मूर्च्छाभाजामाजगामान्तरात्मा । भूयो दृष्टप्रत्ययाः प्राप्तसंज्ञाः साधीयस्ते यद्रणायाद्रियन्ते ॥ ९३ ॥ कश्चिच्छस्त्रापातमूढोऽपबोधुर्लब्ध्वा भूयश्चेतनामाहवाय । व्यावर्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तश्चात्मा का च लोकानुवृत्तिः ॥ ९४ ॥ भिन्नोरस्कौ शत्रुणाकृष्य दूरादासन्नत्वात्कौचिदेकेषुणैव । अन्योन्यावष्टम्भसामर्थ्ययोगादूर्ध्वावेव स्वर्गतावप्यभूताम् ॥ ९५ ॥ भग्नैर्दण्डैरातपत्राणि भूमौ पर्यस्तानि प्रौढचन्द्रद्युतीनि । आहाराय प्रेतराजस्य रौप्यस्थालीनीव स्थापितानि स्म भान्ति ॥ ९६ ॥ रेजुर्भ्रष्टा वक्षसः कुङ्कुमाङ्का मुक्ताहाराः पार्थिवानां व्यसूनाम् । हासालक्ष्म्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पङ्क्ति-

---

१ युगान्तसम्बन्धिभिः । २ ईषावत् रदनः । ३ वर्षाकालिक- । ४ मदस्य । ५ मूलमारभ्य । ६ आयतम् । ७ उन्नतत्वम् । ८ हृष्टो गजः । ९ आहन्यमानास्थिशब्दसहितम् । १० एतदाकारेण बाणविशेषेण । ११ बन्धनस्थानम् । १२ समूहैः । १३ सङ्ग्रामे मर्त्यशरीरं परित्यज्य दिव्यशरीरत्वेनोपस्थितम् । १४ नवीनत्वम् । १५ मृतानाम् ।

रक्तासवस्य ॥ ९७ ॥ निम्नेष्वोघीभूतमस्त्रक्षतानामसृं भूमौ यच्चकासांचकार । रागार्थं तत्किं नु कौसुम्भमम्भः संव्यानानाम्[1]न्तकान्तःपुरस्य ॥ ९८ ॥ रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियास्रैः । रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्संख्येऽसंख्याः प्रावहन्द्वीपवत्यः[2] ॥ ९९ ॥ संदानान्ताद्[3]स्त्रिभिः शिक्षितास्त्रैराविश्याधः शातशस्त्रावलूनाः । कूर्मौपम्यं व्यक्तमन्तर्नदीनामैभैर्भाः[4] प्रापन्नङ्घ्रयोऽसृङ्मयीणाम्[5] ॥ १०० ॥ पद्माकारैर्योधवक्त्रैरिभानां कर्णभ्रष्टैश्चामरैरेव हंसैः । सोपस्कारैः[6] प्रावहन्नस्रतोयाः स्रोतस्विन्यो वीचिपूरैस्तरद्भिः ॥ १०१ ॥ उत्क्रान्तानामामिषायोपरिष्टादध्याकाशं बभ्रमुः पत्रवाहाः । मूर्ताः प्राणा नूनमद्याप्यवेक्षामासुः कायं त्याजिता दारुणास्त्रैः ॥ १०२ ॥ आतन्वद्भिर्दिक्षु पत्राग्रनादं प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखाग्रैः । आदौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात्पत्त्रिपूगैरपायि ॥ १०३ ॥ ओजोभाजां यद्रणे संस्थितानामादत्तीव्रं सार्थमङ्गेन नूनम् । ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा ववाशे ॥ १०४ ॥ नैरन्तर्यच्छिन्नदेहान्तरालं दुर्भक्ष्यस्य ज्वालिना वाशितेन । योद्धुर्बाणप्रोतमादीप्य मांसं पाकापूर्वस्वादमादे शिवाभिः ॥ १०५ ॥ ग्लानिच्छेदि क्षुत्प्रबोधाय पीत्वा रक्तारिष्टं शोषिताजीर्णशेषम् । स्वादुंकारं कालखण्डोपदंशं क्रोष्टा डि[10]म्बं व्य[11]ष्वणद्व्यस्वनच्च ॥ १०६ ॥ क्रव्यात्पूगैः[12] पुष्कराण्यान[13]कानां[14] प्रत्याशाभिर्मेदसो दारितानि । ओभीलानि[15] प्राणिनः प्रत्यवश्यन्[16]कालो नूनं व्याददावाननानि ॥ १०७ ॥ कीर्णा रेजे साजिभूमिः समन्तादप्राणद्भिः प्राणभाजां प्रतीकैः[17] । बह्वारम्भैरर्थसंयोजितैर्वा रूपैः स्रष्टुः सृष्टिकर्मान्तशाला ॥ १०८ ॥ त्वत्पत्रमुक्तविशिखैरशनिप्रकाशैरामूललूनवकेतककान्तदन्ताः । त्रासावसन्नमदधारकपोलभागाः संपादयन्ति करिणः करिणीभ्रमं नः ॥ १०९ ॥ मिलितमिहिर[18]भासं मौलिमेतस्य दृष्ट्वा परवरतनुपादालक्तकं तर्कयन्त्या । त्वदरिधरणिजो[19]निर्भानुबिम्बेन गच्छन्सुरनगरमृगाक्ष्या वीक्ष्यते साभ्यसूयम् ॥ ११० ॥ भवत्तुरगनिष्ठुरक्षुरदृढव्रणैराचिता क्षणत्समरविच्युतप्रतिनृपालचेलाञ्चिता । इयं रणधरा भवद्द्विरददानधाराजलैः किमु व्रणतलेऽर्पितं वसनपट्टमासिञ्चति ॥ १११ ॥ कृपाणकिरणानलं रुधिरनीरपूरच्छटाजटाव्रततिसंकुलं भटति [20]मिङ्गिलैराकुलम् । प्रमथ्य समरार्णवं वरमकर्षि लक्ष्मीस्त्वया विधाय मदमन्थरं मथनमन्दरं सिन्धुरम् ॥ ११२ ॥ झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनुर्ध्वनदुरुगुणाट[21]नीकृतकरालकोलाहलम् । वितत्य किरतोः शरानविरतस्फुरच्चूडयोर्विचित्रमभिवर्धते भुवनभीममायोधनम् ॥ ११३ ॥ प्रतीक्ष्यन्ते वीराः प्रतिमुखमुरोभिः सरभसं विपक्षाणां हेतीः[22] प्रतिनियतधैर्यानुभवतः । विदीर्णत्वग्भारादलितपिशिताच्छिन्नधमनिप्रकाण्डास्थिस्नायुस्फुटतरविलक्ष्यान्त्रनिवहाः ॥ ११४ ॥ शितैर्बाणैरेके मूर्धभुवि[23] परे तीक्ष्णनखरैः क्रियासातत्येनाप्यहमहमिकाक्रान्तमनसः । मिथो विध्यन्ति स्म प्रबलतमसंमर्दविदलत्क्षितिक्षोदैः पिष्टातकसुरभिवक्षस्तटभृतः ॥ ११५ ॥ भल्लैर्भिन्नाः प्रतिनृपतयः शङ्खनादानुदाराञ्श्रुत्वा राजन्पुनरपि भुजादण्डकण्डूतिभाजः । आलिङ्गन्त्यास्त्रिदशसुदृशो[24] भ्रूलतां वीक्ष्य भुग्नां चापभ्रान्त्या चपलमनसो हस्त-

---

१ उत्तरीयाणम् । २ सरितः । ३ गुल्फदेशमारभ्य । ४ हस्तिसम्बन्धिनः । ५ रुधिरपूर्णानाम् । ६ परिकरयुक्ताः । ७ मृतानाम् । ८ पक्षिगणैः, बाणसङ्घैश्च । ९ शब्दं चक्रे । १० देहम् । ११ भुक्तवान् । १२ मांसभक्षिसमुदायैः । १३ मुखानि । १४ वाद्यविशेषाणाम् । १५ भयावहानि । १६ अभक्षयन् । १७ अङ्गैः । १८ सूर्य- । १९ तव शत्रुभूतो राजा । २० महाकायजलजन्तुविशेषास्तिमिङ्गिलाः । २१ धनुकोटिः । २२ शस्त्राणि । २३ सङ्ग्रामदेशे । २४ देवाङ्गनायाः ।

मावर्तयन्ति ॥ ११६ ॥ मुञ्चद्भिर्मदवारि वारणगणैर्मेघायितं कार्मुकैरेतैः शक्रशरासनायतमथच्छत्रैः शिलीन्ध्रायितम् । खद्योतासितमस्त्रघट्टनसमुद्भूतस्फुलिङ्गैः स्फुरत्ताराचैश्चपलायितं रणभुवा सैन्यैर्नभस्यायितम् ॥ ११७ ॥ भुग्नभ्रूयुगलैः क्रुधा समधिकस्फारारुणाक्षैः क्षणात्स्वेदाम्भःपटलप्रकृष्टतिलकैर्दष्टाधरोष्ठैरपि । दष्टश्मश्रुभिरुत्पतद्भिरभितः संकीर्णमालक्ष्यते त्वद्धस्तास्त्रनिकृत्तवैरिभटसुश्रेणीशिरोभिर्वियत् ॥ ११८ ॥ क्ष्वेडाभिः ककुभः पृषत्कनिकरैर्व्योम द्विधा खण्डितैर्देहैर्विद्विषतां धरातलमपि प्रच्छादयन्तौ चिरम् । कुर्वाते सलिलाविलेक्षणपथान्येतावकाण्डोच्चरद्रोमाञ्चानि सवेपथून्यपि मुहुर्वर्ष्माणि[3] नः पश्यताम् ॥ ११९ ॥ आगुञ्जद्भिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् । वेल्लद्भैरवभूरिरुण्डनिकरैर्वीरो विधत्ते भुवस्तृप्यत्कालकरालवक्त्रविवरैसव्याकीर्यमाणा इव ॥ १२० ॥ नो चापाकलनं न पत्रिधरणं न ज्यासमाकर्षणं नो बाहुस्फुरणं न बाणगमनं संलक्ष्यते ते रणम् । किं तु प्रौढकरीन्द्रकुम्भविगलन्मुक्तागणप्रस्फुरत्प्रत्यार्थिक्षितिपालमौलिमणिभिर्विद्योतते भूरियम् ॥ १२१ ॥ वीराणां रुण्डतुण्डप्रविघटनपटुस्फारदोर्दण्डखण्डव्यापारक्षिप्यमाणप्रतिभटविकटाटोपवर्ष्मप्ररूढः । कूटः कोऽप्येष युद्धाजिरभुवि जरठश्चित्रकूटानुकारी लीयन्ते यत्र शत्रुप्रपतनविवशाः कोटिशः शूरकीटाः ॥ १२२ ॥ प्रासप्रोतप्रवीरोल्बणरुधिरपरामृष्टबुक्कोजिघत्साधावद्गृध्राधिराजाप्रतिमतनुरुहच्छायया वारितोष्णाः । विश्राम्यन्ति क्षणार्धं प्रधनपरिसरेष्वेव मुक्ताभियोगा वीराः शस्त्रप्रहारव्रणभररुधिरोद्गारदिग्धाखिलाङ्गाः ॥ १२३ ॥ जीवाकृष्टिं स चक्रे मृधभुवि धनुषः शत्रुरासीद्गतासुर्लक्षाप्तिर्मार्गणौनामभवदरिबले तद्यशस्तेन लब्धम् । मुक्ता तेन क्षमेति त्वरितमरिगणैरुत्तमाङ्गैः प्रतिष्ठा पञ्चत्वं द्वेषिसैन्ये स्थितमवनिपतिर्नाप संख्यान्तरं सः ॥ १२४ ॥ युष्मदोर्दण्डमण्डल्यवनमितरणच्चण्डकोदण्डदण्डोन्मुक्तेषुच्छिन्नमूर्छत्प्रतिनृपतिभुजाखण्डमुण्डावकीर्णा । गायन्नृत्यत्प्रबलद्रिजनिचरवधूदत्ततालैः करालैर्वेतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥ १२५ ॥

## रणात्पलायितानां भटानां वर्णनम् ।

सालकाननयुक्ताऽपि सालकाननवर्जिता[12] । हारावै[13]रुद्धकण्ठापि विहारा[14]रिवधूस्तव ॥ १ ॥ विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः । वृके[15]काकशिवास्तत्र धावन्त्यरिपुरे तव ॥ २ ॥ स्वकान्तदवकान्तारो यद्वैरिसुदशामभूत् । जघनस्तनमुच्चैर्यो व्यलिखत्कण्टकैर्नखैः ॥ ३ ॥ काठिन्यं कुचयोः स्रष्टु वाञ्छन्त्यः पादपद्मयोः । निन्दन्ति विश्वधातारं त्वद्धाटीष्वरियोषितः ॥ ४ ॥ वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः । त्वद्वैरिवनितावृन्दे पुलिन्दा[16]ः कुर्वते रतिम् ॥ ५ ॥ वीर त्वद्रिपुरमणी परिधातुं पल्लवानि संस्पृश्य । न हरति वनभुवि निजकररुहरुचिखचितानि पाण्डुपत्रधिया ॥ ६ ॥ त्वद्वैरिणो वीर पलायितस्य प्रकाशयन्नक्तमरण्यमार्गान् । कृशानुरा[17]सीदभिनन्दनीयस्तुङ्गेषु लग्नो रिपुमन्दिरेषु ॥ ७ ॥ राजन्द्विषस्ते भयविद्रुतस्य भालस्थलं कण्टकिनो वनान्ताः । अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवा-

---

१ वक्र-। २ सिंहनादैः। ३ शरीराणि । ४ ग्रास-। ५ मांसपिण्ड-। ६ सङ्ग्रामसविधदेशेषु । ७ लिप्त-। ८ सङ्ग्रामदेशे । ९ बाणानाम् । १० अन्यं सङ्ग्रामम् । ११ चलत्पिशाचिनी-। १२ सालकं केशशोभाशालि आननं मुखं तेन वार्जितारहिता। १३ 'हा' इति रावः क्रन्दनशब्दस्तेन रुद्धः कण्ठो यस्याः सा । १४ विगतो हारो मुक्ताभरणं यस्याः सा । १५ वृको वन्यः पशुविशेषः । काकः प्रसिद्धः । शिवा शृगाली । १६ भिल्लाः । १७ अग्निः ।

क्षराणि ॥८॥ इतस्त्रसद्विद्रुतवैरिभूभृत्प्रियाऽथ दृष्ट्वा वनमानवीजनैः। शशंस पृष्टाद्भुतमात्मदेशेऽशीतद्विषः शीतलशीलतां किल ॥ ९ ॥ समस्तावनीनाथमौले भवत्तः परास्ता द्विषः पद्मविस्तारिनेत्रा। नितान्तं विहस्ता स्वहस्तारविन्दैर्विधत्ते पुरस्तादुरस्ताडनानि ॥ १० ॥ अलसभुजलताभिर्नाहतो नागरीभिर्भवनदमनकानां नातिथिर्वा बभूव। त्वदरिनगरमध्ये संचरंश्चैत्रजन्मा जरदजगरपीतः क्षीयते गन्धवाहः ॥ ११ ॥ त्वदरिनृपतिमाशावाससंधूलिधाराधवलमहह भिक्षुं वीक्ष्यमर्गभ्रमेण। मुरभिदुदधिवेलाकाननं गाहमानो दिशति कुसुमबाणं दूरतो निर्गमाय ॥ १२ ॥ त्वदरिनृपतिकेलीसौधसंरूढदूर्वाङ्कुरकवलविलोलं वीक्ष्य रङ्कुं सुधांशोः। उपवनहरिणीनामुन्नतो भ्रूलतानां प्रसरति रतिजानिग्लानिजन्मा विवर्तः ॥ १३ ॥वर्षासु भीतमवशाङ्घ्रिभुजं भुजंगमेकं निगृह्य शिरसि स्थितमञ्जनाभम्। शून्ये तवारिनगरे शबरी सशङ्कमादित्सते कनकमुष्टिकृपाणलोभात् ॥ १४ ॥ स्फुटतरमटवीनां प्रान्तरे पर्यटन्ती हरिहतगजकुम्भोन्मुक्तमुक्ताफलानि। परिकरयति हस्ताम्भोजशोणप्रभाभिः परिहरति च दूरान्मञ्जु गुञ्जाभ्रमेण ॥ १५ ॥ ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते। अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥ १६ ॥ कुरुबक कुचाघातक्रीडासुखेन वियुज्यसे बकुलविटपिन्स्मर्तव्यं ते मुखासवसेचनम्। चरणघटनावन्ध्यो यास्यस्यशोक सशोकतामिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥१७॥ अनारतपरिस्खलन्नयनवारिधाराशतप्रवृद्धपथनिम्नगासलिलरुद्धयानोद्यमा। त्वदीयरिपुकामिनी बहुविदेशयानैषिणी विनिन्दति वलद्दृशा गुरुरुपाश्रुषं प्रावृषम्॥१८॥ इतश्चेतश्चाद्रिर्विघटिततटःसेतुरुदरे धरित्री दुर्लङ्घ्या बहुलहिमपङ्को गिरिरयम्।इदानीं निर्वृत्ते करितुरगनीराजननिधौ न जाने यातारस्तव च रिपवः केन च पथा॥१९॥क्षणं कान्तागारप्रसरविलसन्मानसरतिः क्षणं शैलोत्सङ्गे द्विजकुलरवाकृष्टहृदयः। क्षणं पत्रध्वानश्रुतिपुलकितो यद्भयभराद्वसन्प्राप्तोऽरण्ये रिपुरवनिपालस्थितिमिव॥२०॥अये मातस्तातः क गत इति यद्वैरिशिशुना दरीगेहे लीना निभृतमिह पृष्टा स्वजननी। करेणास्यं तस्य द्रुतमथ निरुद्धाश्रुभृतया विनिश्वस्य स्फारं शिव शिव दृशैवोत्तरयति ॥ २१ ॥ अपर्णेयं भूभृद्वनमटति वल्काम्बरधरा जटालो दिग्वासाः शिखरिणि शिवोऽयं निवसति। इति भ्रान्त्यान्योन्यं क्षणमिलितयोः क्षोणितिलक द्विषद्दंपत्योस्ते शिव शिव शिवन्ति प्रणतयः॥२२॥पश्येत्कश्चिच्चलचपल रे का त्वराहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि। इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥ २३ ॥ स्वल्पं ब्रूमः किमपि चरितं वीरवर्य त्वदीयं मिथ्यावादाः कवय इति नो दुष्प्रवादो रुणद्धि। मुक्ता मुक्ता मलयशिखरे त्वद्विपक्षावरोधैरण्डभ्रान्त्या भुजगललनाः सादरं पालयन्ति ॥ २४ ॥ क्षोणीपाल त्वदरिहरिणीलोचना शोचमाना गुञ्जाहारं कुचकलशयोर्निःश्वसन्ती करोति। क्षुभ्यत्क्षीराम्बुधिलहरिसंक्षोभिभिस्त्वद्यशोभिर्गौरं मुक्ताफलमयमिवाविन्दते नन्दतन्वा ॥ २५ ॥ विमुञ्चति पदे पदे रुचिरचीरहारादिकं शुकं गृहसमुत्सुकं त्यजति चैव जीवाधिकम्। पलायनपरायणा तव विभो रिपोरङ्गना मुहुर्वलितकंधरं मिहिरमण्डलं वीक्षते ॥ २६ ॥ धराधर तव द्विषां वनजुषां विहीनत्विषां दधे गुणनिधे धनुर्विगुणमप्यनेकं गुणम्। फलाहरणयष्टिकाकरणकन्दरान्तःशिवानिवारणविहंगिकाकरणचुल्लिकाकर्षणैः ॥ २७ ॥ राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं

---

१ सूर्यस्य। पतिवियोगदशायां चन्द्रे सूर्यत्वमतीतिरिति तथाऽभिधानम्। २ व्याकुला।

भुज्यते । इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जराच्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ २८॥ क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः। भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ २९ ॥ तन्वीमुज्झितभूषणां कलगिरं रोमोद्गमं बिभ्रतीं वेपन्तीं व्रणिताधरां विवसनां सीत्कारमातन्वतीम्। दोर्भ्यां चण्डतुषारपातसभयामालिङ्ग्य कण्ठे भृशं स्वां मूर्तिं दयितामिवातिरसिकां त्वद्विद्विषः शेरते ॥ ३० ॥ भूसंपर्करजोनिपातमलिनाः स्वस्माद्गृहात्प्रच्युताः सामान्यैरपि जन्तुभिः करतलैर्निःशङ्कमालिङ्गिताः। संलग्नाः क्वचिदेकतामुपगताः क्वापि प्रबुद्धाः क्वचित्सुप्ताः क्वापि च सारिवत्प्रतिगृहं भ्रान्तास्तवारिस्त्रियः ॥ ३१ ॥ कर्षद्भिः सिचयाञ्चलान्यतिरसात्कुर्वद्भिरालिङ्गनं गृह्णानैः कचमालिहद्भिरधरं विश्रामयद्भिः करौ। प्रत्यक्षेऽपि भवद्विरोधिनृपतेरन्तःपुराणामहो धिक्कष्टं विटपैर्विटैरिव वने किं नाम नो चेष्टितम् ॥ ३२ ॥ स्नाताः प्रावृषि वारिवाहपटलैः प्रोद्भूतदूर्वाङ्कुरव्याजेनात्तकुशाः प्रणालसलिलैर्दत्त्वा निवापाञ्जलीन्। प्रासादास्तव विद्विषां परिपतत्कुड्यस्थपिण्डच्छलात्कुर्वन्ति प्रतिवासरं निजपतिप्रेताय पिण्डक्रियाः ॥ ३३ ॥ मौलिं मानविधिं विना नमयितुं हारं स्वयं गुम्फितुं निर्यातुं दयितस्य पाणिकमलच्छायां विना वर्त्मनि । निद्रातुं च विनाङ्कपालिशयनं द्रष्टुं च शून्या दिशः सख्या त्वत्प्रतिवीरनीरजमुखी साकूतमभ्याप्यते ॥ ३४ ॥ घ्रातं तालफलाशया स्तनतटं बिम्बभ्रमेणाधरो दष्टः पाकविदीर्णदाडिमधिया लीढाः स्फुरन्तो रदाः । श्राम्यन्ती भ्रमनिस्पृहानुविपिनं त्वद्वैरिसीमन्तिनी निद्राणा मुहुराहता मुहुरपि क्षिप्ता च शाखामृगैः ॥ ३५ ॥स्वप्रत्यर्थिवसुन्धरेशतरुणीः संत्रासतः सत्वरं यान्तीर्वीर विलुण्ठितुं सरभसं याताः किराता वने । तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्तृतोपक्रमास्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि ॥ ३६ ॥ एतस्मिन्विजने वनेऽतनुतरुच्छन्नावकाशे सुखं तिष्ठामीति तव द्विषामधिपतिर्यावद्विधत्ते मतिम्। तावत्तत्र निपातितं भुवि भवन्नामाङ्कसेल्लाहतं दृष्ट्वा केसरिणः करङ्कमसमत्रासो मुहुर्मूर्च्छति ॥ ३७ ॥ का त्वं पुत्रि नरेन्द्र लुब्धकवधूर्हस्ते किमेतत्पलं क्षामं किं सहजं ब्रवीमि नृपते यद्यस्ति ते कौतुकम्। गायन्ति त्वदरिप्रियाश्रुतटिनीतीरेषु सिद्धाङ्गना गीतान्धा न तृणं चरन्ति हरिणास्तेनामिषं दुर्बलम् ॥ ३८ ॥ स्वप्नेऽपि क्षितिपावतंस भवतो भीत्या व्रजन्ती वनं निर्मग्ना प्रतिपक्षवैरिरमणी कल्लोलिनीपाथसि । उत्क्षिप्ताननमुन्नतभ्रुचरणन्यासक्तमुक्ताफलं भूयः स्फारितबाहुवल्लिशयनादुद्भ्रान्तमुत्तिष्ठति ॥ ३९ ॥ तादृग्दण्डविवर्तनर्तितममी चक्रादपक्रामिताः क्वापि क्वापि च कण्टकैरुपगता रेखोपरेखाभ्रमम् । यस्य प्रौढतरप्रतापदहनज्वालाभिरन्ते दिशामापाके निपतन्ति पार्थिवघटाः शीर्यन्ति दीर्यन्ति च ॥ ४० ॥ आगच्छागच्छ सज्जं कुरु वरतुरगं संनिधेहि द्रुतं मे खड्गः क्वासौ कृपाणीमुपनय धनुषा किं किमङ्गप्रविष्टम्। संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योऽन्यमेवं प्रतीच्छन्वादः स्वप्नाभिदृष्टे त्वयि चकितदृशां विद्विषामाविरासीत् ॥४१ ॥ यातीतः पान्थ पन्था व्रजति ननु कथं स्थावरं वर्त्म मुग्धे मार्गं पृच्छामि पृच्छ स्थितमिदमिह ते विस्मितं वीक्ष्य नेत्रे । अध्वानं ब्रूह्यपेतध्वनि भवति वचश्चित्रमुद्दामनेत्रा दृश्यन्ते दावमूढाः पथि पथिकविटैस्त्वद्विषां नाथ नार्यः ॥ ४२ ॥ आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे लुप्तायां मेखलायां कनकमणितुलाकोटियुग्मे गृहीते । शोणं बिम्बौष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥ ४३ ॥ प्राप्तास्त्रासात्पिपासातिशयमुपगताः पातुमारण्यमम्भो युष्मद्विद्वेषियोषाः श्वसितसमुदयैस्तत्तदीयैरशोषि । एतत्संवीक्ष्य मूर्च्छानिपतिततनवो नैव जीवेयुरेताश्चिन्तोपेताः शबर्यो निजनयनजलैः पल्वलं पूरयेयुः ॥ ४४ ॥ वीर त्वद्वैरिदारा गहनगिरिगुहागह्वर-

न्तस्तमिस्रं त्वत्त्रासाद्बुद्धवासा दरकलितहृदो यद्यदेव प्रपन्नाः । तत्तज्ज्योत्स्नायमानं धरणिपरिवृढ प्रेक्ष्य युष्मद्यशोभिः सद्यो मोहान्धकारानुसरणशरणा वासरान्वाहयन्ति ॥ ४५ ॥ एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसरन्ती स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा । आक्रन्दद्भूरि यत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्बप्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीन्न्यश्वसीच्च ॥ ४६ ॥ धूलीधाराभिरन्धास्तदनु बधिरतामागताः स्फारभेरीभूयोझाङ्काररावैरमृतकरकुलापीडे यत्सैन्ययाने । धावन्तो विन्ध्यभूभृद्गहनघनकुहरे कण्टकाकृष्टकेशास्त्रायध्वं मुञ्चतेति प्रतिहतविकला वैरिणः संगिरन्ते ॥ ४७ ॥

## तेजःप्रशंसनम् ।

चित्रं तपति राजेन्द्र प्रतापतपनस्तव । अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ॥ १ ॥ राजन्सताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः । पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥ २ ॥ दीपयन्रोदसीरन्ध्रमेष ज्वलति सर्वतः । प्रतापस्तव राजेन्द्र वैरिवंशदवानलः ॥ ३ ॥ त्वत्प्रतापाभिधे हैमसंपुटेऽतिमनोहरे । ब्रह्माण्डशालिग्रामोऽसौ धराधीश विराजते ॥ ४ ॥ तवारिनारीनयनाम्बुपूरं निपीय राजन्भ्रमति प्रतापः । रिङ्गत्तरङ्गावलिनीरतुङ्गं यथा समुद्रं वडवाहुताशः ॥ ५ ॥ त्वत्प्रतापतपनातपतप्तस्तीक्ष्णरश्मिरपि दिक्षु नितान्तम् । धावति प्रतिदिनं मुकुटेश त्वद्यशोऽद्य पतितस्तुहिनांशुः ॥ ६ ॥ उदितेऽपि तवावनीन्द्र तेजस्तपने स्फारगभस्तिभारभाजि । तव वैरिनृपायशस्तमांसि स्फुरदुज्जृम्भितमाचरन्ति चित्रम् ॥ ७ ॥ प्रत्यर्थिवामनयनानयनाम्बुपूरैः सद्यः स्खलद्बहलकज्जलजालनीलैः । युष्मत्प्रतापतपनस्तपनाद्यवीयानारभ्यते यदमुना यमुनासहस्रम् ॥ ८ ॥ मार्तण्डमण्डलसमं भवतः प्रताये वर्णयन्ति नहि ते कवयः प्रवीणाः । अम्भोनिधौ विलयमेति परं पतङ्गः पारं प्रयाति जलधेस्तु तव प्रतापः॥ ९ ॥ उल्लास्य कालकरवालमहाम्बुवाहं देवेन[६] येन जरठोर्जितगर्जितेन[७] । निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ १० ॥ वदन्तु देव तावकं प्रतापमेव पावकं महातुषारशीतलं वदाम हे वयं यतः । सुमेरुकन्दरोदरस्थितो गृहीतकम्बलस्तवारिवर्गपङ्कजः प्रकम्पते मुहुर्मुहुः ॥ ११ ॥ अये नृपतिमण्डलीमुकुटरत्न युष्मद्भुजामहोष्मततिसंजुर्षा बत भवत्प्रतापार्चिषा । द्विषामतिभृशं यशःप्रकटपारदो ध्मापनादुदस्फुटत तारकाकपटतो विहायस्तले ॥ १२ ॥ अत्युक्तौ यदि न प्रकुप्यसि मृषावादं न चेन्मन्यसे तद्ब्रूमोऽद्भुतदर्शनेन रसना केषां न कण्डूयते । देव त्वत्तरुणप्रतापदहनज्वालावलीशोषिताः सर्वे वारिधयस्तवारिवनितानेत्राम्बुभिः पूरिताः ॥ १३ ॥ देव त्वत्तरुणप्रतापतपनत्रासादिव त्र्यम्बको नो गङ्गां विजहाति निःसरति न क्षीराम्बुधेर्माधवः । ताम्यंस्तामरसान्तरालवसतिर्देवः स्वयम्भूरभूत्पातालावधिपङ्कमग्नवपुषस्तिष्ठन्ति कूर्मादयः ॥ १४ ॥ श्रीमन्सोहनलालवीर भवतो विष्वक् प्रतापानलो दुष्टान्दस्युजनान्परं दहति न त्वन्याननागस्कृतः । चित्रं प्रत्युत सोऽति शीतलयते तान् भास्वरान्स्वैर्गुणैर्यद्वाऽमी तडितोऽम्बुदा इव सदा सर्वात्मना तन्मयाः ॥ १५ ॥ देवत्वद्भुजदण्डदर्पगरिमोद्गीर्णप्रतापानलज्वालापङ्क्तिमकीर्तिपारदघटीविस्फारिता बिन्दवः । शेषाहिः कति तारकाः कति कति क्षीरोदधिः कत्यपि प्रालेयाचलशङ्खशुक्तिकरकाः कर्पूरकुन्देन्दवः ॥ १६ ॥

---

१ चन्द्रवंशावतंसभूत । २ क्षुद्रं दीनमिति भावः । ३ चक्रवर्तित्वाभिमानिनमिति भावः । ४ समुद्राः । ५ द्यावापृथिव्योरन्तरालदेशम् । ६ राज्ञा । ७ उद्धतोर्जस्वलेन गर्जनेन । ८ धारिणेति भावः । ९ आकाशे ।

भङ्गाकीर्तिमषीमलीमसतया[1] प्रत्यर्थिसेनाभटश्रेणीतिन्दुककानने[2]षु विलसत्य[3]स्य प्रतापानलः । अस्मा-
दुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं भालोद्भूत[4]भवाक्षिभानुहुतभुग्जम्भारिदम्भा[5]लयः ॥ १७ ॥
तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे बाडवः ।
व्योमव्यापिविपक्षराजकयशस्तारापराभावुकः कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥ १८ ॥
शम्भुर्मानससंनिधौ सुर[6]धुनीं मूर्ध्ना दधानः स्थितः श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ ।
मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभूर्मन्ये वीर तव प्रतापदहनं ज्वालोल्बणं भाविनम् ॥ १९ ॥
युष्मत्प्रौढतरप्रतापतपनज्वालाऽवलीव्याकुले ब्रह्माण्डे मधुसूदनोऽहिशयने शेते पयःसागरे । शंभुर्जह्नुसुतां
दधाति शिरसा भूमिस्तुषाराचलं तापव्याकुलितः पतत्यतितरां भानुः समुद्रे मुहुः ॥ २० ॥ नार्यः
कुङ्कुमशङ्कया निटिलगं[7] प्रोञ्छन्त्यपास्तद्विषां सान्ध्यं रागममुं विभाव्य गगने गच्छन्ति केलीगृहम् ।
मुग्धा दाव[8]धियोऽरयस्तव विभो यान्ति द्रुतं कानने लाक्षाराग इति प्रकुप्यति धवे कान्ता प्रतापोदये
॥ २१ ॥ यो नास्ताचलमस्तकं प्रति गतो दीनत्वमालम्बते यो नायाति निशासु संशयपदं नोदेति
गिर्याश्रयात् । यो राहोरपि कर्कशस्य दशनेष्वासीन्न वा गोचरः सोऽयं भूप तव प्रतापतपनो वर्वर्ति
सर्वोपरि ॥ २२ ॥ कान्तारे जलवृक्षवैरिणि मुहुस्त्वद्वैरिवामभ्रुवो बालैराकुललोचनैः प्रतिपदं रुद्ध-
क्रमाश्चङ्क्रमे । पृथ्वीचण्डरुचे पटच्चर[9]दशासंघट्टदीप्तप्रभं सिञ्चन्त्यञ्जलिसंचिताश्रुभिरलं युष्मत्प्रतापानलम्
॥ २३ ॥ अध्यायोधन[10]वेदि मार्गण[11]कुशानास्तीर्य खड्गस्रुचा हुत्वाऽरेः पललं[12] चरुं हविरसृक्तन्मस्तकस्व-
स्तिकैः । संवेष्ट्याहवनीयमानसदसिर्ज्योऽसौ प्रतापानलोऽस्थापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना
श्रीमता ॥ २४ ॥ देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानलज्वालाजालभयादिवाभिविशति क्षीरा-
म्बुधिं माधवः । भर्गः स्वर्गधुनीं[13] दधाति शिरसा त्यक्तत्रिलोकीकृतिर्वेधा किंतु मुहुः कमण्डलुजलै-
रात्मानमासिञ्चति ॥ २५ ॥ श्रीमद्वीराधिवीर प्रसमरमहसस्त्वत्प्रतापाग्निकीला[14]च्छ्रुत्वाऽब्धेः शोषवार्तां
शरणमनुगतः कुत्रचित्कश्चिदेव । चन्द्रः कीर्त्यां सुधास्ये त्रिदशतरुवरः पाणिपद्मे च कोशे लक्ष्मीः
[15]क्ष्वेडं च कोपे जलधरकुसुमं वैरिकान्तादृगन्ते ॥ २६ ॥ द्रागाक्रम्योदयाद्रिं चरमगिरिमतिस्पर्धया
तिग्मरश्मेर्मेरुं पर्यटय लङ्कानगरमुपगतः कौतुकात्त्वत्प्रतापः । वीक्ष्यामुं [16]वीतिहोत्रं पुनरपि विपदं देव
निश्चिन्वतीनां यः क्षोभो राक्षसीनां क्षणमजनि स हि त्वद्विषां सर्वदास्ताम् ॥ २७ ॥ त्वत्खड्गाघात-
जातव्यथरिपुवनितामुक्तबाष्पाम्बुधारासारादारादुदारादिशि दिशि सरितामुद्भवाश्चेद्भवेयुः । कल्पान्तक्रूर-
केलिप्रकरविजयिनो विस्फुरत्त्वत्प्रतापात्पारावारा[17]नपारानपि सपदि पराञ्शुष्यतः पूरयेत्कः ॥ २८ ॥
दुर्वारारातिवाजीवनदवदहनः कौङ्कुमो दिग्वधूनां सर्वाङ्गीणोऽङ्गरागस्त्रिभुवनभवनध्वान्तविध्वंसदीपः ।
त्वद्दोरुद्दामदर्वीकरमुखहुतभुग्भूतधात्रीपुरन्ध्या वासो माञ्जिष्ठमुर्वीरमणकुलमणे जागरीति प्रतापः ॥ २९ ॥
भूजाने किं न जाने भवदतुलभुजभ्राजमानप्रतापज्योतिर्ज्वालावलीभिर्जलनिधिवलयं निर्जलं किं न भूयात् ।
युष्मत्प्रत्यर्थिपृथ्वीपरिवृढवनितानीरनेत्रस्रवन्तीसूतस्रोतःसहस्रैरयमिह परितश्चेन्न पूर्येत सद्यः ॥ ३० ॥

---

१ पराभवजनितायशः- । २ तिन्दुककाननं कलस्कन्धवनम् । ३ प्रज्वलति । ४ रुद्रनेत्र- । ५ जम्भारिरिन्द्रः, तस्य दम्भोलिर्वज्रः । ६ गङ्गाम् । ७ ललाटस्थम् । ८ वनाग्नि- । ९ जीर्णवस्त्र- । १० सङ्ग्राममध्ये । ११ बाणरूप- । १२ मांसम् । १३ गङ्गाम् । १४ ज्वालायाः । १५ विषम् । १६ अग्निम् । १७ सागरान् ।

## यशःप्रशंसनम् ।

सरस्वती स्थिता वक्त्रे लक्ष्मीर्वेश्मनि ते स्थिता । कीर्तिः किं कुपिता राजन्येन देशान्तरं गता ॥ १ ॥ यद्गुणैर्ग्रथितैः शुद्धैरमितैर्ब्रह्मगोलकः । विधत्ते कीर्तिकन्यायाः क्रीडाकन्दुककौशलम् ॥ २ ॥ राजंस्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमाः कृताः । मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥ ३ ॥ अस्थिवद्दधिवच्चैव कुष्ठवत्पिष्टवत्तथा । राजंस्तवर यशो भाति शरच्चन्द्रमरीचिवत् ॥ ४ ॥ सिक्तं स्फटिककुम्भान्तः स्थितं श्वेतीकृतैर्जलैः । मौक्तिकं चेल्लता सूते तत्पुष्पैस्ते समं यशः ॥ ५ ॥ अहो विशालं भूपाल भुवनत्रितयोदरम् । माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ६ ॥ त्वत्कीर्तिराजहंस्या वैरिवधूवदनभाजनस्थमपि । पीतं हासक्षीरं व्यक्तीकृतमश्रुनीरं च ॥ ७ ॥ कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने । क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥ ८ ॥ रजनीषु विमलभानोः करजालेन प्रकाशितं वीर । धवलयति भुवनमण्डलमखिलं तव कीर्तिसन्ततिः सततम् ॥ ९ ॥ दूरेऽपि श्रुत्वा भवदीयकीर्तिं कर्णौ हि तृप्तौ न च चक्षुषी मे । तयोर्विवादं परिहर्तुकामः समागतोऽहं तव दर्शनाय ॥ १० ॥ आकर्ण्य भूपाल यशस्त्वदीयं विधूनयन्तीह न के शिरांसि । विश्वम्भराभङ्गभयेन धात्रा नाकारि कर्णौ भुजगेश्वरस्य ॥ ११ ॥ यस्याञ्जनश्यामलखड्गपट्टजातानि जाने धवलत्वमापुः । अरातिनारीशरकाण्डपाण्डुगण्डस्थलीनिर्लुठनाद्यशांसि ॥ १२ ॥ यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि । तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः ॥ १३ ॥ इयं यशांसि द्विषतः सुधारुचः किमङ्कमेतद्विषतः किमाननम् । यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसी मसी ॥ १४ ॥ अदः समित्संमुखवीरयौवतत्रुटद्दुकूलाकम्बुमृणालहारिणी । द्विषद्गणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ १५ ॥ अनिःसरन्तीमपि देहगर्भात्कीर्तिः परेषामसतीं वदन्ति । स्वैरं चरन्तीमपि च त्रिलोक्यां त्वत्कीर्तिमाहुः कवयः सतीं नु ॥ १६ ॥ करवालकरालवारिधारा यमुना दिव्यतरङ्गिणी च कीर्तिः । तव कामद तीर्थराज दूरादनुबध्नाति सरस्वती कवीनाम् ॥ १७ ॥ त्रिजगदङ्गनङ्गनलभजाङ्किकैस्तव यशोभिरतीव पवित्रिताः । प्रथमपार्थिवपुङ्गवकीर्तयो विबुधसिन्धुजलैरिव सिन्धवः ॥ १८ ॥ त्वत्कीर्तिमौक्तिकफलानि गुणैस्त्वदीयैः संदर्भितुं विबुधवामदृशः प्रवृत्ताः । नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो हारो न जात इति ताश्च मिथो हसन्ति ॥ १९ पृथ्वीपते शुभमते भवतो भवस्य ब्रूमो वयं सुयशसा कियदन्तरं वा । गौरीं चकार गिरिशो निजमर्द्धमङ्गं गौरीकृतं च भवता भुवनं समस्तम् ॥ २० ॥ कीर्तिस्तव क्षितिप याति भुजङ्गगेहं मातङ्गसङ्गमकरी च दिगन्तकेषु । त्यक्त्वाऽम्बरं भजति नन्दनमप्यगम्यं किं किं करोति न निरर्गलतां गता स्त्री ॥ २१ ॥ निर्मुक्तशेषधवलैरचलेन्द्रमन्थसंक्षुब्धदुग्धमयसागरगर्भगौरैः । राजन्निदं बहुलपक्षदलन्मृगाङ्कच्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ २२ ॥ प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती

---

१ मम सर्वेऽपि जना निरन्नाः सन्तीति द्योतनम् । २ अपरिमितः । ३ कम्पयन्ति । ४ पृथिवी- । ५ शेषस्य । ६ नारीगण- । ७ औदार्यादिरूपैस्तन्तुविशेषैः । ८ देवानां सुन्दर्यः । ९ सर्वत्र घनतयैव व्याप्तत्वात् निर्दोषत्वाच्च । १० पातालम्, जार ( वेश्याप्रिय ) स्थानं च । ११ हस्ति- । चाण्डाल- । १२ दिक्पर्यन्तेषु, निर्जनस्थलेषु च । १३ गगनं, वस्त्रं च । १४ इन्द्रोद्यानं, पुत्रं च । १५ गन्तुमशक्यम्, अयोग्यं च । १६ अप्रतिबन्धताम् । १७ कृष्णपक्ष-- ।

प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती । गिरिगरिमनितम्बाच्छादने सावधाना तदपि च तव कीर्तिर्निर्मलैवेति चित्रम् ॥ २३ ॥ त्यजसि यदपि लक्ष्मीं कीर्तिमासाद्य दानैर्व्रजति तदपि कीर्तिः सिन्धुपारं न लक्ष्मीः । कथय क इव हेतुस्तो[1]मरेश त्वदीये वसति हृदयपद्मे नन्दसूनुर्मुरारिः ॥२४॥ अनुक्षणमनुक्षणं क्षितिप रक्ष्यमाणा त्वया प्रयाति विदिशो दश प्रबलकीर्तिरेकाकानी । इयं नियतमर्थिषु प्रतिदिनं वितीर्णा रमा जहाति न तवान्तिकं द्वितयमेतदत्यद्भुतम् ॥ २५ ॥ समुन्नतघनस्तनस्तबकचुम्बितुम्बीफलकणन्मधुरवीणया विबुधलोकवामभ्रुवा । त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥ २६ ॥ वनेषु वनदेवता दिवि दिवौकसां वल्लभा भुजङ्गकुलकन्यका भुजगलोकलीलावने । यशः समरसंचितं नरमृगेन्द्र गायन्ति ते प्रभाविजितकौमुदीकुमुदपाण्डुताडऽऽम्बरम् ॥ २७ ॥ [2]अपायि मुनि[3]ना पुरा पुनरमायि मर्यादया स्व[4]तारि कपिना पुरा हनु[5]मता यथा गोष्पदम् । अमन्थि मुरवैरि[6]णा पुनरबन्धि लङ्काऽरि[7]णा क नाम वसुधापते तव यशोऽम्बुधिः काम्बुधिः ॥ २८ ॥ महाराज श्रीमज्जगति यशसा ते धवलिते पयःपारावारं परमपुरुषोऽयं [8]मृगयते । कपर्दी कैलासं सुरपतिरपि स्वं करिवरं कलानाथं राहुः कमल[9]भवनो हंसमधुना ॥ २९ ॥ कुविन्दै[10]स्त्वं तावत्प[11]टयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च न[12]ग्नास्तव विभो । शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथाऽपि त्वत्कीर्तिर्भ्रमति विगताच्[13]छादनमिह ॥ ३० ॥ पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा पत[14]ङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः । यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना कथंचित्क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ३१ ॥ इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिर्दिङ्नागानां मदजलमषी-[15]भाञ्जि गण्डस्थलानि । अद्याप्युर्वीवलयतिलक श्यामलिम्नाऽनुलिप्तान्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥ ३२ ॥ किं वृत्तान्तैः परगृहगतैः किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः । गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः ॥ ३३ ॥ कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् । स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ३४ ॥ अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयः फणसमुचितः काययष्टीनिर्मो[16]कः । दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः कायव्यूहः क जगति न जागर्त्यदः कीर्तिपूरः ॥ ३५ ॥ कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ ३६॥ समिति पतिनिपाताकर्णनद्रागुदीर्णप्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु । लिखितलिपिरिवोरस्ताडनन्यस्तहस्तप्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः ॥ ३७ ॥ सुसितवसनालंकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः । तदनु भवत कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्कं[17] क नासि शुभप्रदः ॥३८॥

---

१ तोमरवंशस्तवँरनाम्ना प्रसिद्धः क्षत्रियाणानां । २ वंशः पीतः । ३ अगस्त्येन । ४ तीर्णः । ५ 'कपिना पुनरदाहि लङ्कारिणा' इति पाठान्तरं तु न युक्तम्, कथितपदत्वादिजुष्टत्वात् । ६ विष्णुना, तदनुमोदितेन देवगणेनेत्यर्थः । ७ रामचन्द्रेण । ८ तथ्यस्यापि क्षीरोदे सर्वश्वेतिम्नि विशेषावधारणाशक्यत्वात्, एवं कैलासादेरपीत्यूह्यम् । ९ ब्रह्मा । १० तन्तुवायः, भूपश्च । पृथिवीं विन्दति लभत इति सः । ११ पटं, पटुं वा करोषि । १२ दिगम्बराः, वन्दिनश्च । १३ निरावरणं यथा स्यात्तथा । १४ सूर्याभिन्नो ज्योतिरिङ्गणः । १५ मषीं भजन्तीति तथोक्तानि । १६ समूहः । १७ अन्धकारे चन्द्रिकाऽभिसारिकायाः संचारासम्भवः, कीर्त्या च चन्द्रिकयेव तस्मिन् संहृते स्थान एव सञ्चारास्तस्या निशङ्कम् ।

देव त्वद्यशसि प्रसर्पति जगल्लक्ष्मीसुधोच्चैःश्रवश्चन्द्रैरावणकौस्तुभाः स्थितिमिवामन्यन्त दुग्धाम्बुधौ। किंत्वेकः पुनरस्ति दूषणकणो यन्नोपयाति भ्रमात्क्षण्णं[1] श्रीः शितिकण्ठमद्रितनया नीलाम्बरं रेवती॥ ३९॥ इन्दुं निन्दति चन्दनं न सहते मल्लीस्रजं[3] नेक्षते हारं द्वेष्टि सिताब्जमुज्झति बिसस्तोमं[4] विगृह्णाति च। श्रीभूपाल महीधरेषु विपिनेष्वम्भोधितीरेषु च त्वत्कीर्तिस्त्वदरिप्रिया च विलसत्युच्चैः स्फुरत्पाण्डिमा॥ ४०॥ इन्दुं निन्दति चन्दनं न सहते विद्वेष्टि पङ्केरुहं हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः। स्वर्गङ्गामवगाहते[6] हिमगिरिं गाढं समालिङ्गते त्वत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति॥ ४१॥ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते। चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयोबुद्ध्या व्योम्नि नियोजयन्ति कलशीमानीय वामभ्रुवः॥ ४२॥ कर्पूरादपि केतकादपि दलत्कुन्दादपि स्वर्णदीकल्लोलादपि कैरवादपि चलत्कान्तादृगन्तादपि दूरोन्मुक्तकलङ्कशंकरशिरः शीतांशुखण्डादपि श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी॥ ४३॥ देव त्वद्यशसा सदा क्षुमहसा गीर्वाणवृन्देऽखिले शम्भोर्भावमवापिते तु सहसा यत्कौतुकं तच्छृणु। साकूताः सकुतूहलाः सचकिताः सोत्कण्ठिताः साद्भुताः साशङ्काश्च मुहुर्मुहुर्मधुरिपौ लक्ष्म्या दृशः पातिताः॥ ४४॥ किं शीतांशुमरीचयः किमु सरस्रोतस्विनीवीचयः किंवा केतकसूचयः किमथवा चन्द्रोपलानां चयः। इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्तयः॥ ४५॥ श्रीमद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान्पूर्तये। उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं तस्याग्रे फणिपुंगवं तदुपरि स्फारं सुधादीधितिम्॥ ४६॥ भारत्या वदनं श्रिया च सदनं श्रीकण्ठभक्त्या मनो धर्मेण श्रवणौ परैश्च चरणौ शौर्येण बाहुद्वयम्। दानेनापि करौ समीक्ष्य सकलं यस्याज्ञया भूतलं स्थातुं चानवकाशतः कथयितुं कीर्तिस्तु दूरं गता॥४७॥अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसंज्ञं[11] यशः सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत्।तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु॥४८॥ कर्पूरन्ति सुधाद्रवन्ति कमलाहासन्ति हंसन्ति च। प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च। त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविताः शीतांशोः किरणच्छटा इव जयन्त्येतर्हि तत्कीर्तयः॥ ४९॥ किं चित्रं भुवनानि पावयति यद्यद्वाहितानां यशोहंसान्मज्जयति प्रतापदहनं निर्वापयत्याशु यत्। आश्चर्यं नृपनायकस्य भवतो यत्कीर्तिमन्दाकिनी तानारोहति भूधराञ्चलनिधीनुल्लङ्घ्य गच्छत्यपि॥ ५०॥ अर्धाङ्गाहितपौर्वकीर्तिवनितादीव्यत्सितांशुप्रभं कैलासीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम्। विश्वव्याप्यविनाशि शंकरपदं यायात्त्वदीयं यशो न स्यादस्य यदि क्षितीश भवतो दानादिकेभ्यो जनिः॥ ५१॥ कृत्वा मेरुमुदूखलं प्रहसता वृन्देन दिग्योषितां स्वर्गङ्गामुशलेन शालय इव त्वत्कीर्तयः कण्डिताः। तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः किं चान्यच्छशिखण्डशूर्पविसरज्ज्योत्स्नाश्च तत्पांशवः॥ ५२॥ निर्दोषेण गुणोर्जितेन जयता कान्त्या सुधासागरं राजेन्द्रोदय-

---

१ बलरामम्। २ एतदाख्या तत्पत्नी। ३ मल्लिकापुष्पमालाम्। ४ मृणालपुञ्जम्। ५ आकाशगङ्गां, स्वर्गं गां पृथिवीं च। ६ अन्तः प्रविशति अधिगच्छति वा। ७ सज्जयन्ति। ८ 'मुग्धाऽङ्गनाः' इति पाठान्तरम्। ९ विकसत्-। १० स्थानम्। ११ राज्ञः। १२ पूर्णस्य चन्द्रस्येव ममापि दीप्तिः स्यादिति प्रतिस्पर्धित्वप्रकटन उद्युतम्। १३ शर्वः शङ्करः तस्य पर्वतः कैलासः। १४ पुनरुक्तिः। अभिन्नत्वाध्यवसायात्। १५ हिमकणसम्पातविशेषा इव प्रतीयन्त इति भावः। १६ पवित्रयति। १७ हिमालयः।

सिंहवीर यशसा लोकत्रयं श्वेतितम्।इत्येवं कवयन्ति हन्त वितथं यत्त्वत्सपत्नाः पुनः स्वाकीर्त्या दुरितादिकं मलिनतामानीय पूर्णोद्यमाः ॥ ९३ ॥ कीर्त्या ते तँवरान्वयाम्बुधिमणे श्रीपाटनेश प्रभो त्रैलोक्यं सकलं त्वदीययशसाऽश्वेतीति नो मन्महे। यत्त्वद्वैरिजनस्य नाम वदनच्छाया च भाग्यं च दुष्कीर्तिः कल्मषवर्णतां न जहतीत्येतत्स्फुटं सर्वतः ॥ ९४ ॥ पूर्णेन्दुः करकन्दुको हिमगिरिः क्रीडाविहारस्थली क्षीराब्धिर्गृहदीर्घिका प्रियसखी वाचां पतिर्देवता। शय्या दिग्गजराजदन्तवलभी त्वत्कीर्तिकन्याकृते पाञ्चालीमिथुनं व्यधायि विधिना गौरीगिरीशावपि ॥ ९५ ॥ शत्रुक्षत्रकलत्रनेत्रसलिलैर्जम्बालजालस्पृशि भ्रान्त्वा भूपतिभालभूषण भवत्कीर्तिर्भुवो मण्डले। यद्यान्ती विबुधालयं प्रति सुधाकुण्डे सुधांशोर्व्यधादङ्घ्रिक्षालनमित्ययं किल मलस्तस्मिन्गतः स्मेरताम् ॥ ९६ ॥ एतत्कीर्तिविवर्तधौतनिखिलत्रैलोक्यनिर्वासितैर्विश्रान्तिः कलिता कथासु जरँतां श्यामैः समग्रैरपि। जज्ञे कीर्तिभयादहोभयभरैरस्मादकीर्तिः पुनः सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥ ९७ ॥ त्वत्तेजःप्रतिभाभयादपसृताः प्रत्यर्थिभूभृत्स्त्रियः कान्तारे घनकण्टकिद्रुमवनव्यस्तप्रयुक्ताम्बराः। आर्याणां पुरतस्त्रपापरवशागच्छेयुरेताः कथं क्षौमाकारतया न चेत्परिणमेत्तत्तावकीनं यशः ॥ ९८ ॥ चन्द्रश्चन्दनमिन्दुरिन्दुरमणं पीयूषमीशादयो विश्वस्योपकृतावनेन महता ते तेऽवतारा धृताः। एतद्यत्र न विद्यते त्रिभुवने न स्थानमेवंविधं जाने जङ्गमपारिजातसगुणं ब्रह्मेव पूर्वं यशः ॥ ९९ ॥ चन्द्राद्रूप्यकमण्डलोः समुदयद्गौरांशुगङ्गाजलैर्ज्योत्स्नाचन्दनचर्चनैर्विकसितैस्ताराप्रसूनैरपि। एतद्विष्णुपदं किमञ्चति भवत्कीर्तिर्महायोगिनी पूजामूर्तिविधायि लक्ष्म तुलसीदाम्ना कदान्विष्यति ॥ ६० ॥ गङ्गासागरसंगमे कृतशतस्नाना बदर्याश्रमे स्थित्वासौ परिधाय तद्गुणमयं श्वेतं दुकूलं पुनः। ब्राह्मं वैष्णवमैन्द्रमैश्वरमपि स्थानं स्पृशन्ती मुहुः कीर्तिस्ते पतिदेवता युगशतं दीर्घायुराकाङ्क्षति ॥ ६१ ॥ अर्वायाम्बुधिरिन्दुमण्डलमपि श्रीचन्दनं तण्डुलास्तारा बिल्वदलं नभःसुरधुनी धूपः प्रदीपो रविः। खेटाः पञ्चफलानि किंच ककुभस्ताम्बूलमारार्तिकां मेरुः श्रीजगतीपते तव यशोयामेश्वरस्यार्चने ॥ ६२ ॥ देव क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः। स्यादेवं त्वदरातिसौधवलभीप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ ६३ ॥ भोगीन्द्रः प्रमदोत्तरङ्गभुरगीसंगीतगोष्ठीषु ते कीर्तिं देव शृणोतु विंशतिशतीं यच्चक्षुषां वर्तते। रक्ताभिः सुरसुन्दरीभिरभितो गीतं च कर्णद्वयीदुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ॥ ६४ ॥ गीयन्ते यदि पन्नगीभिरनिशं त्वत्कीर्तयस्तद्वयं तुष्टा एव परंतु चेतसि चमत्कारोऽयमारोहति। तासां तादृशभावभङ्गचलनासंस्थानसंदर्शिनि व्यालेन्द्रेऽप्यवधूतमूर्धनि महीचक्रं पुनर्भ्राम्यति ॥ ६५ ॥ यद्गन्धद्विपदानवारिभिरभूत्सङ्ग्रामभूः पङ्किला तस्यां वैरिकरीन्द्रमौक्तिकमयं बीजं च येनाहितम्। तस्मात्प्रादुरभूद्यशस्तरुरयं तस्योद्गताः कोरकास्तारास्तेषु च पूर्णचन्द्रकपटादेकैक उज्जृम्भते ॥ ६६ ॥ यत्कीर्तिर्वलयं भुवः सुविमलं संपाद्य संचारतः क्रान्त्वा मेरुगिरिं विधाय सरितां नाथस्य सख्यं दृढम्। आराध्यामृतभानुशेखरमलं संपाद्य तद्रूपतां गच्छन्ती त्रिदशालयं द्रुतगतिः शीतांशुना स्पर्धते ॥ ६७ ॥ शैलूँषी तव कीर्तिरद्भुतकरी दृष्ट्वा समस्ता दिशो मेरुं वंशवरं परीत्य परितस्तूर्णं समारुह्य तम्। भ्राम्यन्ती परितः प्रनर्तिततनुर्मुक्तावलीमौक्तिकैस्ताराभिस्तरलीकरोति गगनं भूमण्डलाखण्डल ॥ ६८ ॥ त्वत्कीर्तिः शशिनः समीप-

---

१ कर्दम-। २ विलास-। ३ वृद्धानाम्। ४ गङ्गा। ५ जगती पृथ्वी। ६ नागवनिताभिः ७ नटी। ८ दृढं वेणुविशेषम्। ९ चक्रवर्तिन्।

मगमत्कान्तिप्रतिस्पर्धया दृष्ट्वा तं च कलङ्किनं पुनरसौ स्नातुं जगामाम्बुधिम् । श्रुत्वा तं च घटोद्भवेन मुनिना पीतोज्झितं तत्पयः पुण्यं ब्रह्मकमण्डलुं कलयितुं ब्रह्माण्डमन्यं ययौ ॥ ६९ ॥ कैलासीयति केतकीयति हसत्कुन्दीयति प्रोच्छलत्क्षीरोदीयति चन्दनीयति लसत्कर्पूरपूरीयति । पीयूषीयति शर्करीयति शरच्चन्द्रीयति क्ष्मापते स्वर्गङ्गीयति शंकरीयति भवत्कीर्तिः करीन्द्रीयति ॥ ७० ॥ विश्वासो भवता यशस्यपि निजे कार्यो न शौर्याधिके मा कोशादिवशान्नपुंसकमिति ज्ञात्वावहेलां कृथाः । यज्जङ्घालधुरन्धरेण धरणीनाथ द्विधा कुर्वता ब्रह्माण्डं विदधेऽमुना भवदरिक्षोणीभुजां निर्गमः ॥ ७१ ॥ रिङ्गत्तुङ्गतरङ्गसुन्दरसुधासिन्धुं तरत्युज्ज्वला रागाच्छर्वपुरःसरानभिसभं देवान्मुदालिङ्गति । क्रूराहीश्वरमाक्षिपत्यधिगृहं याति ध्रुवं भूपते साध्वीशब्दरता तथापि कुतुकं कीर्तिः प्रमत्ता क्षितौ ॥ ७२ ॥ कस्तूरी सितिमानमागतवती शौक्ल्यं गताः कुन्तला नीलं चोलमभूत्सितं धवलिमा जातो मणीनां गणे । ध्वान्तं शान्तमभूत्समं नरपते त्वत्कीर्तिचन्द्रोदये त्रैलोक्येऽप्यभिसारसाहसरसः शान्तः कुरङ्गीदृशाम् ॥ ७३ ॥ स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदपूरोदरच्छायाहारिणि वारिणि धुसरितो दिक्पूरविस्तारिणि । आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा कीर्तिः संनिहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी ॥ ७४ ॥ पाताले भुजगेश्वरावधि तथा यावन्नदीं स्वर्भुवि प्रालेयान्तमुदेति तत्तदखिलं नीत्वाऽभितः श्वेतताम् । राजेन्द्रोदयसिंहवीर तदपि त्वद्वैरिणां दुर्यशः कालं तस्य च वाहनं परिजनं कार्ष्ण्यं नयत्येव तत् ॥ ७५ ॥ क्षोणीन्द्रोदयसिंह कीर्तिविततिर्नैर्मल्यमभ्युन्नयन्त्यद्येयं परितस्तनोति सिततां ब्रह्माण्डगेहाजिरे । तेनैव त्रिजगत्सु नागपतयः शैलास्तथा पक्षिणो देवेशा मनुजास्तथैव पशवः श्वैत्यं चिरायागमन् ॥ ७६ ॥ क्षीरोदीयन्ति सद्यः सकलजलधयो वासुकीयन्ति नागाः कैलासीयन्ति शैला दिवि च दिविषदः शङ्करीयन्ति सर्वे । यौष्माकीणे समन्तात्प्रचलति धवले चारुकीर्तिप्रताने मद्योषाकाचभूषाः किमिति न सहसा मौक्तिकीयन्ति देव ॥ ७७ ॥ उद्यद्वालाङ्कुरश्रीर्दिशि दिशि दशनैरेभिराशागजानां रोहन्मूला सुगौरैरुरगपतिफणैरत्र पातालकुक्षौ । अस्मिन्नाकाशदेशे विकसितकुसुमा राशिभिस्तारकाणां नाथ त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोः सुधाब्धिम् ॥ ७८ ॥ वापी पातालमूलं जलमुरगनदी कच्छपः स्वच्छकन्दः शेषो नालं दलानां विततिरपि फणाः कर्णिका शैवशैलः । तारास्ताराः परागा मधु च मधुमती केसरा दन्तिदन्तास्तस्मिंस्त्वत्कीर्तिपद्मे भ्रमति मधुकरः शर्वरीसार्वभौमः ॥ ७९ ॥ नेपालीनामलीके विरचयति कचे केतकीपत्त्रकृत्यं कण्ठे मुक्ताकलापान्द्विगुणयति सितान्पाण्ड्यसीमन्तिनीनाम् । कर्णे कर्णाटिकानां प्रकटयतितमां दन्तताटङ्कलक्ष्मीं कार्पूरी पत्त्रवल्ली भवति तव यशो गण्डयोः केरलीनाम् ॥८०॥लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं

१ अगस्त्येन । २ चलत्- । ३ श्वेतिमानम् । ४ गङ्गायाः । ५ युष्मत्सम्बन्धिनि । ६ कैलासः । ७राशिपतिः चन्द्रमाः । ८कुटिले । ९ रुधिरदिग्धया अनुरक्तया च । १० खड्गेन । ११हस्तिनां चाण्डालानां च । १२ शत्रुभिः उदासीनैराप्तैर्वेति पक्षान्तरे । १३ आहन्तुं, क्रीडितुं प्रवर्तमाना च । १४ तस्यामसियष्ट्यां तादृश्यामसियष्टिरूपेण द्योतितायां दुष्टायां नायिकायां चासक्तः । १५ अहं लक्ष्मीः । १६ वितीर्णा, सम्प्रत्ता च । १७ किङ्करेभ्यः, न तु तवापि महद्भय इति च । १८ लक्ष्म्या हि समुद्रः पिता । अत्र लक्ष्म्या प्रधाननायिकात्वं कीर्त्यास्तद्दूतीत्वं कल्पयित्वा व्याजेन च कविना कीर्तेः समुद्रावधि प्रसृतत्वं द्योतयित्वा राज्ञः शूरत्वं दातृत्वं चापि द्योतितम् । अत्र दोषविवेचनं त्वस्माकं काव्यप्रकाशादिव्याख्यासु स्थितम् ।

यस्य कीर्तिः ॥ ८१ ॥ शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्रीर्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः । आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥ ८२ ॥ अन्तः संतोषबाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्यन्नङ्गेनानस्थिलोमा रचयति पुलकश्रेणिमानन्दकन्दाम् । न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ ८३ ॥ यावत्पौलस्त्यवास्तूभवदुभयहरिल्लोमरेखोत्तरीये सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्तिः । यावत्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रावद्री संध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥ ८४ ॥ आस्ते दामोदरीयामियमुदरदरीं याऽधिशय्य त्रिलोकी संमातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि । तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्मछद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ८५ ॥ देव ब्रह्माण्डभाण्डे सदसि विकसितन्यायनान्दीनिनादैर्भूतेशप्रीतिहेतोर्भुवनधवलनं नाटकं नाटयन्त्याः । त्वत्कीर्तेर्मूर्तयोऽमी कुमुदकुमुदिनीकान्तकर्पूरकुन्दक्षीराब्धिक्षीरमुक्तामणिविबुधसरित्तारकाशेषशङ्काः ॥ ८६ ॥ बीजं चेदिन्द्रदन्तिस्फुरितगलतटीमुक्तमुक्तामणिः स्याच्चन्द्रश्चेदालवालं यदि भवति सुधावारिसेकीन्दुमौलिः । तत्रोत्पन्ना लता काप्यमृतकरनिभं चेत्प्रसूनं प्रसूते मन्ये तत्स्यात्तदानीमवनिधव भवत्कीर्तिलेशोपमार्थम् ॥ ८७ ॥ दुग्धाम्भोधावगाधे विहरति सुधया क्षालयत्यङ्घ्रियुग्मं कृत्स्नां ज्योत्स्नादुकूलं कलयति मलयोद्भूतचर्चां तनोति । स्वच्छन्दं नृत्यति द्रागभुजगपतिशिरस्येव निद्राति चन्द्रे त्वत्कीर्तिः स्वामिनीव त्रिजगति विहरत्येवमुर्वीश गुर्वी ॥ ८८ ॥ स्वर्गे कल्पद्रुमाधस्तव जयति यशःपुञ्जयागेश्वरोऽयं यं नित्यं देवराजः स्नपयति नियतः कामधुग्दुग्धपूरैः । यन्मौलौ बिल्वपत्रद्युतिमिदममलं व्योम धत्तेऽतिनीलं चन्द्रः पाटीरपङ्कं तदुपरि ललितास्तारकास्तण्डुलानि ॥ ८९ ॥ यत्कीर्तिः कापि गङ्गाखिलमलनिचयं नाशयन्ती गभीरं क्षीराब्धिं यत्प्रतापज्वलनकरगणैः शोषितं पूरयन्ती । भूलोकस्यान्तरालस्फुरदतुलमहादुःखपापौघपङ्कं भूयः प्रक्षालयन्ती त्रिजगति महिता सौख्यमाविष्करोति ॥ ९० ॥ तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यास्य नित्यन्यञ्चद्वियत्स्रवन्तीमितचमरचयं लालयन्दिग्वधूभिः । राकाचन्द्रातपत्रं दिनकरमुकुटं ग्राहयल्लोकपालान्निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्ती नरेन्द्र ॥ ९१ ॥ कालिन्दीनर्मदाम्भःसुतमदसलिलोत्सङ्गिनौ पुष्पवन्तौ बिभ्राणः कुम्भयुग्मं गगनतलगतः स्वर्धुनीपूरशुण्डः । घण्टालः साधुवादैरनभिमतयशोमृन्मलं संदधानः कीर्तिस्तोमाभ्रकुम्भी जगदुदरसरःसंभ्रमी बम्भ्रमीति ॥ ९२ ॥ स्फूर्जद्ब्रह्माण्डशुक्तौ तव भुजजलदोद्दामदानौघवर्षप्रोद्यत्त्वत्कीर्तिमुक्ताफलममलमहो वामकर्णे निधाय । अन्यं तेनैव तुल्यं धरणिधरसुतां प्रार्थयामास पत्यौ तस्यालाभेन मन्ये प्रभुरपि जगतामर्धनारीश्वरोऽभूत् ॥ ९३ ॥

---

१ खड्गप्रहारेणोत्पादिता । २ चन्द्रशोभरूपा, दूषिततरसम्पत्तिरूपा, दूषणास्पदरूपा वा । ३ महतां राज्ञां छेदिका, परस्त्रीपुरुषसम्मेलनकारिणी च । ४ अप्रतिहता गणिकेव सर्वोपभोग्या कुटिला । ५ अव्यभिचारिण्या च कीर्त्या । कुलीनया स्त्रिया च । ६ सर्वतो व्याप्तया जरत्या च ७ सर्वत्र पर्यटनशीलया परत्रगामि च । ८ रोमहीनः । ९ विष्णोरिति भावः । १० श्वेत- । ११ छविति । १२ चन्दन- । १३ उन्नत- । १४ पूर्णिमा- । १५ सूर्यश्चन्द्रश्च । १६ कीर्तिपुञ्जरूप ऐरावतः । १७ पार्वती ।

## यशस्तेजसोः प्रशंसनम्।

रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः। भूमौ प्रतापयशसी सृष्टवान्सततोदिते ॥ १ ॥ मलिनयितुं खलवदनं विमलयति जगन्ति देव कीर्तिस्ते। मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥ २ ॥ सिन्दूरं सीमन्तात्स्मितं मुखाद्वैरिराजवनितानाम्। यस्य प्रतापयशसी हरतः स्म सदृग्गुणासहने ॥ ३ ॥ तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा। तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि॥ ४ ॥ कीर्त्यास्य चन्द्रकरकोमलयातिशुभ्रं शोणं नवार्ककिरणप्रतिमप्रतापैः। श्याम-द्युतिद्विषदकीर्तिमषीभिरित्थं चित्रं तदाम्बरमराजत दिग्वधूनाम् ॥ ५ ॥ क्षितिप किमपि चित्रं जागरूकेऽपि युष्मद्यशसि शशिकदम्बे त्वत्प्रतापेऽर्कबिम्बे। नयनकुवलयानि त्वद्विषत्कामिनीनामपि च वदनपद्मान्याशु यत्संकुचन्ति ॥ ६ ॥ कीर्तिस्वर्गतरङ्गिणीभिरभितो वैकुण्ठमाप्लावितं क्षोणीनाथ तव प्रतापतपनैः संतापितः क्षीरधिः। इत्येवं दयितायुगेन हरिणा त्वं याचितः स्वाश्रयं हृत्पद्मं हरये श्रिये स्वभवनं कण्ठं गिरे दत्तवान् ॥ ७ ॥ गुणागारे गौरे यशसि परिपूर्णे विलसति प्रतापो वा भिन्नान्दहति तव भूमीन्द्रतिलक। नवैव द्रव्याणीत्यकथयदहो मूढतमधीश्चतुर्थां तेजोऽपि व्यभजत कणादः कथमसौ ॥८॥ भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमादेतस्य स्तुमहे महेभदशनस्पर्धीनि कैरक्षरैः। लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदैरस्य स्वर्णगिरिः प्रताप-दहनैः स्वर्णं पुनर्निर्मितः ॥ ९ ॥ वीरेशोदयसिंह तापयति ते तेजः समस्तान्खलान्साधून् शीतलयत्यतीव च यशः सर्वत्र लब्धास्पदम्। एवं यर्हि जगत्त्रये विहरतस्ते एव सर्वात्मना शास्तुं तर्हि सुनिर्वृतो जलनिधौ निद्राति सर्वेश्वरः॥ १० ॥

## शासनदोषनिदर्शनम्।

परैः संभुज्यते राज्यं स्वयं पापस्य भाजनम्। धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ १ ॥ औत्सुक्यमात्रमवसादयति प्रतिष्ठां क्लिश्नाति लब्धपरिपालनवृत्तिरेव। नातिश्रमापनयनाय यथ श्रमाय राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ २ ॥ परार्थानुष्ठाने जडयति नृपं स्वार्थपरता परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः। परार्थश्चेत्स्वार्थादभिमततरो हन्त परवान्परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ॥ ३ ॥ भयं तावत्सेव्यादभिनिविशते सेवकजनं ततः प्रत्यासन्नाद्भवति हृदयेष्वेव निहितम्। अतोऽध्यारूढानां पदमसुजनद्वेषजननं मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥ ४॥ छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम्। तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ५ ॥

---

१ सुहृज्जनानामाह्लादम्। २ सूर्याय। ३ तस्य तेजसः। ४ परिवेषः परिधिः। ५ निरर्थकत्वसूचिका रेखा वेष्टनम्। ६ सदृश-। ७ प्रस्फुरति सति। ८ चन्द्रसमूहे। ९ राज्ञः। १० ऐरावतदन्तसमानानि। ११ रञ्जयद्भिः। १२ कृत्रिमम्। १३ सम्पूरयति। १४ सम्मानरक्षणार्थं सर्वदा सचिन्तत्वात्। १५ छत्रम्। १६ निरर्थकाभिधानः, सर्वेषामन्येषामनुरञ्जनपरतयैव सदा भवनात्। १७ सन्निहितात्। १८ प्रतिष्ठितानाम्। १९ स्थानम्, अधिकार इति यावत्। २० दुर्जन-। २१ उन्नतानाम्। २२ अनुगतम्, नियतमिति यावत्। २३ गुप्तम्, अन्यथाप्रत्यायितम्।

## राजपुरुषवर्णनम् ।

राजसेवा मनुष्याणामसिधारावलेहनम् । व्याघ्रीगात्रपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥ १ ॥ संपत्तयः पराधीनाः सदा चित्तमनिर्वृतम् । स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥ २ ॥ अन्तःपुराणां विहितव्यवस्थः पदे पदेऽहं स्खलितानि रक्षन् । जरातुरः संप्रति दण्डनीत्या सर्वं नृपस्यानुकरोमि वृत्तम् ॥ ३ ॥ अशुभपुषि कलावप्यप्रमत्ताः स्वधर्मादनुदिनमुपकारानाचरन्ते बुधानाम् । बहुजनपरिपुष्टौ बद्धदीक्षास्त एते तनुसुखमपि हित्वा तन्वते राजसेवाम् ॥ ४ ॥ नैषां सन्ध्याविधिरविकलो नाच्युतार्चाविसाङ्गा न स्वे काले हवननियमो नापि वेदार्थचिन्ता । न क्षुद्वेलानियतमशनं नापि निद्रावकाशो न द्वौ लोकावपि तनुभृतां राजसेवापराणाम् ॥ ५ ॥ सर्वः कल्ये वयसि यतते लब्धुमर्थान्कुटुम्बी पश्चात्पुत्रैरुपहितभरः कल्पते विश्रमाय । अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां सेवाकाकुः परिणतिरभूत्स्त्रीषु कष्टोऽधिकारः ॥ ६ ॥ नोच्चैः सत्यपि चक्षुषीक्षितुमलं श्रुत्वाऽपि नाकर्णितं शक्तेनाप्यधिकार इत्यविकृता यष्टिः समालम्ब्यते । सर्वत्र स्खलितेषु दत्तमनसा यातं मया नोद्धतं सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ॥ ७ ॥ भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभादन्येभ्यश्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः । दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥ ८ ॥ अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः प्रज्ञाविक्रमशालिनोऽपि हि भवेत्किं भक्तिहीनात्फलम् । प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये ते भृत्या नृपयेः कलत्रमितरे संपत्सु चापत्सु च ॥ ९ ॥

## स्यन्दनवेगप्रशंसनम् ।

आलिङ्गन्तो वसुधां निजखुरदलितामिवानुनेतुममी । वदनविनिर्गतचरणा इव लक्ष्यन्ते जवादश्वाः ॥ १ ॥ उद्धूतपांशुपटलानुमितप्रबन्धधावत्खुराग्रचयचुम्बितभूमिभागाः । निर्मथ्यमानजलधिध्वनिघोरघोषमेते रथं गगनसीम्नि वहन्ति वाहाः ॥ २ ॥ मुक्तेषु रश्मिषु निरायतपूर्वकार्या निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः । वातोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ३ ॥ यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां यदन्तर्विच्छिन्नं भवति कृतसन्धानमिव तत् । प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोर्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ४ ॥ विच्छिन्ना रथचक्रपद्धतिरियं हेलाप्लुतैर्वाजिनामायान्तीव जवेन संमुखममी मार्गस्थिताः शाखिनः । खेदं पादतलाहतेरिव पुरो गन्तुं गतो नेहते पादानामनुकूलमारुतभरोद्भूतोऽपि धूलिव्रजः ॥ ५ ॥ अग्रे यान्ति रथस्य रेणुवदमी चूर्णीभवन्तो घनाश्चक्रभ्रान्तिररान्तरेषु जनयन्त्यन्यामिवारावलिम् । चित्रन्यस्तमिवाचलं हयशिरस्यायामवच्चामरं यष्ट्यग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात् ॥ ६ ॥ पृथ्वीपालशिरोमणे तव रथं वोढुं प्रवृत्ता अमी युग्या यर्हि भवन्ति यद्यपि तदा वातः प्रतिस्पर्धया । धत्ते वेगबलं क्षणोत्तरमसौ श्रान्तस्त्वजन्स्पर्धितां तत्स्वागःपरिमार्जनार्थ्यनुचरो भूत्वेव संसेवते ॥ ७ ॥

## सागरप्रशंसनम् ।

साक्षात्किलाष्टमूर्तेस्तस्यैषा मूर्तिरम्मयी प्रथमा । गीतः सागर इति नृभिरपरिच्छेद्यात्मगाम्भीर्यः ॥ १ ॥ लक्ष्मीरस्य हि यादः कृष्णोरःस्थापि सुभटभुजवसतिः । इन्दुः स च मृडचूडामणिरपि

---

१ सार्विणी-। २ भोजनम् । ३ प्रातःकाले । ४ युज्यते । ५ सम्पदे । ६ सङ्कुचित-। ७ अश्वाः । ८ स्वभावेन । ९ मार्गः । १० जलजातत्वसाधारण्याज्जलजन्तुरूपेति भावः ।

जगतामलंकारः ॥ २ ॥ आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् । फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ३ ॥ नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा । अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥ ४ ॥ स्यादेव तोयममृतप्रकृतिर्यदि स्यान्नैकान्तमद्भुतमिदं पुनरद्भुतं नः । लक्ष्मीतुषारकरकौस्तुभपारिजातधन्वन्तरिप्रभृतयो यदपां विवर्तः ॥ ५ ॥ आकण्ठदष्टशिरसाऽप्यभिमाव्यपृष्ठपार्श्वोदरेण चिरमृम्भिरुपास्यमानः । नाभीसरोरुहजुषा चतुराननेन शेते किलात्र भगवानरविन्दनाभः ॥ ६ ॥ पाथोनिधे तव महत्त्वमतीव दीर्घं वक्तुं क्षमेय बत तस्य कथं वराकः । अज्ञात एव भगवानपि यस्य कुक्षौ कुक्षीकृतत्रिभुवनोऽस्ति परैरलक्ष्यः ॥ ७ ॥

## गिरिशोभानिदर्शनम् ।

[1]आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य संस्थितमुदग्रविशालशृङ्गम् । मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेनमुद्वीक्ष्य को न भुवि विस्मयते नगेशम् ॥ १ ॥ वहति यः परितः कनकस्थलीः सहरितालसमाननवांशुकैः । अचल एष भवानिव राजते सहरितालसमानेनवांशुकः ॥ २ ॥ पाश्चात्यभागमिह सानुषु सन्निषण्णाः पश्यन्ति शान्तमलसान्द्रतरांशुजालम् । सम्पूर्णलब्धललनाऽऽलपनोपमानमुत्सङ्गसङ्गहरिणस्य शशाङ्कमूर्तेः ॥ ३ ॥ कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः । कुर्वन्ति द्यामुत्पतन्तः स्मरार्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥ ४ ॥ स्थगयन्त्यमूः शमितचातकार्तस्वरा जलदास्तडित्तुलितकान्तकार्तस्वराः । जगतीरिह स्फुरितचारुचामीकराः सवितुः क्वचित्कपिशयन्ति चामीकराः ॥ ५ ॥ उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बैरुत्तम्भितोडुभिरतीवतरां शिरोभिः । श्रद्धेयनिर्झरजलव्यपदेशमस्य विष्वक्तटेषु पतति स्फुटमन्तरिक्षम् ॥ ६ ॥ एकत्र स्फटिकतटांशुभिन्ननीरा नीलाश्मद्युतिभिदुराम्भसोऽपरत्र । कालिन्दीजलजनितश्रियः श्रयन्ते वैदग्धीमिह सरितः सुरापगायाः ॥ ७ ॥ इतस्ततोऽस्मिन्विलसन्ति मेरोः समानवप्रे मणिसानुरागाः । स्त्रियश्च पत्यौ सुरसुन्दरीभिः समा नवप्रेमणि सानुरागाः ॥ ८ ॥ उच्चैर्महारजतराजिविराजितासौ दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा । अभ्येति भस्मपरिपाण्डुरितस्मरारेरुद्वह्निलोचनललामललाटलीलाम् ॥ ९ ॥ धूमाकारं दधति पुरः सौवर्णे वर्णेनाग्नेः सदृशि तटे पश्यामी । श्यामीभूताः कुसुमसमूहेऽलीनां लीनामालीमिह तरवो बिभ्राणाः ॥ १० ॥ रुचिरचित्रतनूरुहशालिभिर्विचलितैः परितः प्रियकव्रजः । विविधरत्नमयैरभिभात्यसाववयवैरिव जङ्गमतां गतैः ॥ ११ ॥ कुशेशयैरत्र जलाशयोषिता मुदा रमन्ते कलमा विकस्वरैः । प्रगीयते सिद्धगणैश्च योषितामुदारमन्ते कलमाविकस्वरैः ॥ १२ ॥ आसादितस्य तमसा नियतेर्नियोगादाकाङ्क्षतः पुनरपक्र-

---

१ आच्छादितानि आयतानि दिशोऽम्बरं व्योम चेति आच्छादितं वस्त्रितम् आयतं दिगेवाम्बरं वस्त्रमिति च येन । उच्चकैरुन्नताम् । गां भुवं, धेनुं च । आक्रम्य व्याप्य अधिष्ठाय च । शृङ्गं शिखरं विषाणं च । मूर्धा–शिखरं मस्तकं च कोटिः रश्मिः, कला च । अन्यत्स्पष्टम् । अत्र समासोक्तिः, नगस्य गवाक्रमणपरवृषभव्याहारस्फूर्तेः । समासोक्तेर्व्यङ्ग्योपजीव्यत्वं तु स्थान एवेति । २ दूर्वायुक्ताः । दूर्वा अत्र श्यामाः । ३ नवा अंशवो यस्य सः । ४ श्रीपतिरिव । ५ पीताम्बरः । ६ आलपनं मुखम् । ७ अतटेभ्यः । ८ शिलानाम् । ९ शमितश्चातकानामार्तस्वरो यैस्ते । १० कार्तस्वरं स्वर्णम् । ११ चामीकरं सुवर्णम् । १२ कपिशः श्यामवर्णः । १३ अमी कराश्चेत्यन्वयः । १४ नक्षत्राण्यवष्टभ्य धृतम् । १५ मिश्र–। १६ भिदुरं मिश्रितम् । १७ नवं प्रेम यस्य तस्मिन् । १८ महारजतं सुवर्णम् । १९ दुर्वर्णं रजतम् । २० प्रियका रोमविशेषरम्या मृगाः । २१ कमलैः । २२ उदारम् अन्त इति च्छेदः । अन्ते समीपे । २३ अधिगतस्य । २४ विधातुः ।

मणेन कालम् । पत्युस्त्विषामिह[1] महौषधयः[2] कलत्रस्थानं परैरनभिभूतममूर्वहन्ति ॥ १३ ॥ वनस्पतिस्कन्धनिषण्णबालप्रवालहस्ताः प्रमदा इवात्र । पुष्पेक्षणैर्लम्भितलोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः ॥ १४ ॥ विहगाः कदम्बसुरभाविहगैः[3]। कलयन्त्यनुक्षणमनेकलयम् । भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपैर्वनः[4] ॥ १५ ॥ यदेतदस्यानुतटं विभाति वनं ततानेक[5]तमालतालम् । न पुष्पिताऽत्र स्थगितार्करश्मावनन्तताने[6] कतमा लताऽलम् ॥ १६ ॥ वर्जयन्त्या जनैः सङ्गमेकान्ततस्तर्कयन्त्या सुखं सङ्गमेकान्ततः । योषयैष स्मरासन्नतापाङ्ग्या[7] सेव्यतेऽनेकया सन्नतापाङ्ग्या[8] ॥ १७ ॥ अनतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् । विरलविकीर्णवज्रशकला[9] सकलामिह विदधाति धौतकल[10]धौतमही ॥ १८ ॥ सङ्कीर्णकीचक[11]वनस्खलितैकवालविच्छेदकातरधियश्चलितुं चमर्यः । अस्मिन्मृदुश्वसन[12]गर्भतदीय[13]रन्ध्रनिर्यत्स्वनश्रुतिसुखादिव नोत्सहन्ते ॥ १९ ॥ दधति च विकसद्विचित्रकल्पद्रुमकुसुमैरभिगुम्फितानिवैताः । क्षणमलघुविलम्बिपिच्छदाम्नः शिखरशिखाः शिखिशेखरानमुष्य ॥ २० ॥ प्राग्भागतः[14] पतदिहेदमुपत्यकासु[15] शृङ्गारितायतमहेभकराभमम्भः । संलक्ष्यते विविधरत्नकरानुविद्धमूर्ध्वप्रसारितसुराधिपचापचारु ॥ २१ ॥ आच्छाद्य पुष्पपटमेष महान्तमन्तरावर्त्तिभिर्गृहकपोतशिरोधराभः । स्वाङ्गानि धूमरुचिमागुर्वीं[16] दधानैर्धूपायतीव पटलैः[17]र्नवनीरदानाम् ॥ २२ ॥ इह मुहुर्मुदितैः कलभैः[18] रवः प्रतिदिशं क्रियते कलभैरवः[19] । स्फुरति चानुवनं चमरीचयः[20] कनकरत्नभुवां च मरीचयः ॥ २३ ॥ नवनग[21]वनलेखाश्याममध्याभिराभिः स्फटिककटकभूमिर्नाटयत्येष शैलः । अहिपरिकर[22]भाजो भास्मनैरङ्गरागैरधिगतधवलिम्नः शूलपाणेरभिख्याम्[23] ॥ २४ ॥ सायं शशाङ्ककिरणाहतचन्द्रकान्तनिस्यन्दिनीरनिकरेण कृताभिषेकाः । अर्कोपलोल्लसितवह्निभिरह्नि तप्तास्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥ २५ ॥ एतस्मिन्नधिकपयः[24] श्रियं वहन्त्यः सक्षोभं पवनभुवा जवेन नीताः । वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः ॥ २६ ॥ भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दोरुच्चावचैरुपगतेषु सहस्रसङ्ख्याम् । दोषाऽपि[25] नूनमहिमांशुरसौ किलेति व्याकोशकोकनदतां[26] दधते नलिन्यः ॥ २७ ॥ मधुकरविटपान[27]मिता[28]स्तरुपङ्क्तीर्बिभ्रतोऽस्य विटपानमिताः[29]। परिपाकपिशङ्गलतारजसा[30] रोधश्चकास्ति कपिशं गलता[31] ॥ २८ ॥ या न ययौ प्रियमन्यवधूभ्यः

---

१ सूर्यस्य । २ ओषधीनां हि पतिश्चन्द्रः । ओषधीशत्वात् । ३ गाः वाचः । ४ नीपाः कदम्बाः । ५ तता अनेके तमालास्तालाश्च यत्र । ६ अतिविस्तृते । ७ स्मरेणासन्नतापानि ज्वरशालीन्यङ्गानि यस्यास्तया । ८ सन्नतौ कूणितावपाङ्गौ यस्या इति, तया । ९ वज्रशकला हीरखण्डानि । १० रजतस्थलम् । ११ 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । १२ श्वसनः पवनः । १३ कीचकीय- । १४ ऊर्ध्वदेशतः । १५ अधःप्रदेशेषु । १६ अगुरुसम्बन्धिनीम् । १७ समूहैः । १८ हस्तिशावकैः । १९ कलो मधुरश्चासौ भैरवो मधुर इति । २० चमरीमृगीसमूहः । २१ वृक्ष- । २२ सर्पसम्बन्धविशेष- । २३ शोभाम् । २४ अधिका या पयसो जलस्य श्रीस्ताम् वहन्त्यः, अधिकाः कपयो वर्ण्यमाना यत्रेति च । श्रियं काव्यचारुत्वं वहन्त्यश्च । ( पवनभूः पवनसम्बन्धी, हनुमांश्च । अरहितौ रामलक्ष्मणौ यत्रेति, अरहिता रामलक्ष्मणा सारसा यत्रेति च रमणीया लक्ष्मणा येषां ते'सारसस्य तु लक्ष्मणा'इत्यमरः । अन्यत्स्पष्टम् । २५ रात्रिः । २६ विकसितरक्तकमलताम् । २७ भ्रमररूपविटकृतपानम् । २८ इताः प्राप्ताः । २९ विटपैः शाखाविस्तारैरानमिताः । ३० परिपाकेन पिशङ्ग्यो या लतास्तासां रजस्तेन । ३१ गलता पतता ।

सारत[1]रागमना यतमानम् । तेन सहेह बिभर्त्ति रहः स्त्री सा रत[2]रागमनायत[3]मानम् ॥ २९ ॥ दन्तो[4]ज्ज्वलासु विमलोपलमेखलाऽन्ताः सद्रत्नचित्रकटकासु बृहन्नितम्बाः । अस्मिन्भजन्ति घनकोमलगण्डशैला नार्योऽनुरूपमधिवासमधित्यकासु ॥ ३० ॥ अपशङ्कमङ्कपरिवर्तनोचिताश्चलिताः पुरः पतिमुपेतुमात्म[5]जाः । अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैव निम्नगाः ॥ ३१ ॥ अयमतिजर[6]ठाः प्रकामगुर्वीरलघुविलम्बिप[7]योधरोपरुद्धाः । सततमसुमतामगम्यरूपाः [8]परिणतदिक्करिकास्तटी[9]र्बिभर्ति ॥ ३२ ॥ अयमभिनवमेघश्यामलोत्तुङ्गसानुर्मदमुखरमयूरीमुक्तसंसक्तकेकः । शकुनिशब[10]लैर्नीडानोकहस्निग्धव[11]र्ष्मा वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ ३३ ॥ दधति [12]कुहरभाजामत्र भल्लूकयूनामनुरसितगुरूणि [13]स्त्यानम[14]म्बूकृतानि । शिशिरकटुकषायः स्त्यायते [15]सल्लकीनामिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ ३४ ॥ इह समदशकुन्ताक्रान्तवानीरवीरु[16]त्प्रसवसुरभिशीतस्वच्छतोया वहन्ति । फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ ३५ ॥ एते ते गिरिकूटसंघटशिलासंघट्टशीर्णाम्भसः प्रेङ्खच्चामरचारुसीकरकणस्मेरा दरीनिर्झराः । यत्पातेषु निकुञ्जकुञ्जरमुखभ्रश्यन्मृणालाङ्कुरग्रासोद्ग्रन्थितटं रटन्ति परितः कण्ठीरवा भैरवम् ॥ ३६ ॥

## वनश्रीवर्णनम् ।

नीपस्कन्धे निवसति लसद्बर्हभारो मयूरो दीर्घापाङ्गश्चरति च तृणं शाद्वलेऽयं कुरङ्गः । कुम्भेनोच्चैःस्पृशति विटपे सल्लकीं कुञ्जरोऽसौ कस्मै नायं कमलनयने रोचतेऽरण्यभागः ॥ १ ॥ हरिणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः कुसुमललितैर्विष्वग्वातैस्तरङ्गितपादपाः । विविधविहगश्रेणीचित्रध्वनिप्रतिनादिता मनसि न मुदं केषां दध्युः शिवा वनभूमयः ॥ २ ॥ वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः । उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानायते ॥ ३ ॥ जृम्भाजर्जरडिम्बडम्बरघनश्रीमत्कदम्बद्रुमाः शैला भोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः । उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसामाविर्भूतशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥ ४ ॥ निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः । सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं तृष्यद्भिः प्रति[17]सूर्यकैरजगरस्वेदद्रवः पीयते ॥ ५ ॥ वृन्तैः क्षुद्रप्रवालस्थगितमिव तलं भाति शेफालिकानां गन्धः सप्तच्छदानां सपदि गजमदामोदमोहं करोति । एते चोन्निद्रपद्मच्युतबहलरजःकाणपिङ्गाङ्गरागा गायन्त्यत्राप्यवाचः किमपि मधुलिहो वारुणीपानमत्ताः ॥ ६ ॥ श्रोत्रं हंसस्वनोऽयं सुखयति दयितानूपुराह्लादकारी दृष्टिप्रीतिं विधत्ते तटतरुविवरालक्षिता सौधमाला । गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यं गात्राणां ह्लादमेते विदधति

---

१ सारतरमुत्कृष्टमागमनं लाभो यस्याः सा । २ रते रागोऽनुरागस्तम् । ३ नायतो मानो यत्र तद्यथा तथा । ४ दन्तैः कुञ्जैः रदनैश्चोज्ज्वलास्तासु । 'दन्तो निकुञ्जे दशने ।' इति विश्वः । मेखला काञ्ची समीपभूमिश्च । गण्डशैलो गण्डस्थलं, स्थूलो ग्रावा च । अधित्यकोर्ध्वभूमिः स्पष्टमितरत् । ५ पुत्रीः, आत्मनः प्रवृत्ताश्च । ६ अतिकठोरा अतिवृद्धाश्च । ७ पयोधरो मेघः कुचश्च । ८ परिणतास्तिर्यग्दन्तप्रहारिणो दिक्करिणो दिग्गजा यत्र । परिणताः किणीभूता दिशो दन्तक्षतविशेषाः करिका नखव्रणाश्च यासां ता इति च । ९ सम्मिलित- । १० नानावर्ण- । ११ वर्ष्म शरीरम् । १२ गुहा- । १३ घनम् । १४ अम्बूकरणं सकफथूत्कारध्वनिः । १५ वृक्षविशेषाणाम् । १६ वेतसलता-पुष्प- । १७ कृकलासैः ।

मरुतो वारिसंपर्कशीताः ॥ ७ ॥ छत्रच्छन्नेव विष्वक्सुरभितकुसुमा पक्वनानाफलाढ्या कुञ्जश्रीरेकदेशे जयति गृहिगृहोत्कर्षगर्वं हरन्ती । भ्राम्यद्भिश्चोन्नदद्भिर्निशितनखरदैर्दर्शनेनापि भीमैः सङ्कीर्णाऽरण्यभूमिः शमनभवमपि न्यक्करोतीतरत्र ॥ ८ ॥

## तडाकवर्णनम् ।

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥ १ ॥ अथ स्वमादाय भयेन मन्थनाचिरत्नरत्नाधिकमुच्चितं चिरात् । निलीय तस्मिन्निवसन्नपाम्पतिर्वने तडाको ददृशेऽवनीभुजा ॥ २ ॥ विकसितकमलालि स्वच्छपानीयपूर्णं रुचिरलघुतरङ्गं सेवितं राजहंसैः । पथिकजनतृषार्त्तैः शान्तये मुक्तहस्तं तरुवनवृतमेतद्भाति रम्यं तडाकम् ॥ ३ ॥

## आखेटक्रीडावर्णनम् ।

मृगाः क्वापि क्वचित्सिंहा महिषाः सूकरास्तथा । धावन्तः क्वापि गर्जन्तो लक्ष्यन्ते भूभृतां पुरः ॥ १ ॥ निहत निहत तूर्णं धत्त धत्त त्वराभिर्मिलत मिलत के के कुत्र कुत्र प्रयान्ति । इत इत इत एते यान्ति यान्तीत्यरण्यादतुलकलकलश्रीः सर्वतः प्रादुरासीत् ॥ २ ॥ अनवरतधनुर्ज्यास्फालनक्रूरवकर्मा रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः । उपचितमपि गात्रं व्यायतत्वादलक्ष्यं गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ३ ॥ मार्गं देहि पदं निधेहि निभृतं तं शब्दमाकर्णय श्वानं वारय कन्दलात्कलकलः कोऽयं सखे तावकः । इत्यन्योऽन्यमनेकधा मृगवधव्यापारपारङ्गतैर्व्याधैः कोऽप्यधिको रसः प्रतिपदं जल्पद्भिरुत्पाद्यते ॥ ४ ॥ क्ष्वेलातर्जितसिंहगर्जितभयभ्राम्यद्व्रजग्रामणीभीत्कारद्रवदक्षदर्शनकृतभ्रूभङ्गशाखामृगम् । कुन्तक्षुण्णतरक्षुवक्रगलितक्षोणीनिषण्णार्भकघ्राणं व्यापृतरोहिताहितबहूकारं वनाभ्यन्तरम् ॥ ५ ॥ एष क्षुभ्नाति पङ्कं दलति कमलिनीमत्ति गुन्द्राप्ररोहानारान्मुस्तास्थलानि स्थपुटयति जलान्युत्कसेतूनि याति । प्रातः प्रातः प्रविष्टो वनगहनमयं याति यातीति सैन्यैः पश्चादन्विष्यमाणः प्रविशति विषमान्काननान्तान्वराहः ॥ ६ ॥ आस्तीर्यन्तामुपान्ते वनैर्वृतिनिपुणैर्जालिकैर्जालबन्धा मुच्यन्तां शृङ्खलाभ्यः श्वगणिभिरटवीगह्वरे सारमेयाः । आकीर्यन्तां स्थलानि श्रमशिथिलहयैः सादिभिः पाशहस्तैर्व्याधूयन्तां कृतान्तैरिव महिषचरैर्दण्डिभिः काननानि ॥ ७ ॥ शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षुव्याघोषक्षुब्धकण्ठीरवैरवचकितव्यस्तमातङ्गयूथम् । खड्गव्यालूनकण्ठं तुमुलकलकलप्रान्तकूजच्छकुन्तं भल्लुध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥ ८ ॥

## आखेटाद्युपरामः ।

स्वेच्छं चरन्तु हरिणा महिषा भ्रमन्तः क्रीडन्तु सूकरवराश्च भुवं खनन्तः । गर्जन्तु नाम हरयोऽपि यथाऽभिमानं चापः करोत्यभयदानमयं पशुभ्यः ॥ १ ॥ गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ २ ॥

---

१ विलोडयति । २ परिमर्दयति । ३ विषमोन्नतानि विधत्ते । ४ उत्काः नश्यमानावस्थामापन्नाः सेतवो येषां तानि । ५ विपिनपरिवेष्टन- । ६ शुनकगणपालनादिषु नियुक्तैः । कुक्कुरैर्वन्यान्निहन्तुं निपुणैर्वर्णसङ्करविशेषैरिति यावत् । ७ शुनकाः । ८ मृगविशेष- । ९ व्याघ्रविशेष- । १० 'सिंह- । ११ विश्रब्धा रचयन्तु सूकरवरा मुस्ताक्षतिम्' इति पाठस्तु भग्नप्रक्रमत्वाद्नाक्रान्त इति काव्यप्रकाशादिव्याख्यासु स्पष्टीकृतम् ।

## आखेटगुणवर्णनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः। उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥१॥ स्थाणोर्लक्ष्यस्य वेधः शिशुभिरपि सखे पार्यते हन्त कर्तुं किंत्वस्यास्थाणुतायां युवजनपटुता प्रेक्ष्यते युक्तमेव । लक्ष्यस्तत्रापि भीमो यदि समुपगतस्तस्य भूयोऽप्यशङ्कमाखेटान्नेतरत्र प्रहतिरवगता कुत्रचित्सङ्गरेऽपि ॥ २ ॥

## आश्रमप्रशंसनम् ।

विष्वक्तपोवनकुमारसमर्प्यमाणश्यामाकतण्डुलहृतां च पिपीलिकानाम् । श्रेणीभिराश्रमपथाः प्रथमानचित्रपत्रावलीवलयिनो मुदमुद्वहन्ति ॥ १ ॥ व्याजृम्भमाणवदनस्य हरेः[1] करेण कर्षन्ति केसरसटाः कलभाः किलैके । अन्ये च केसरिकिशोरकपीतमुक्तं दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥ २ ॥ मधुरमिव वदन्ति स्वागतं भृङ्गनादैर्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः । ननु ददत इवार्घं पुष्पवृष्टिं किरन्तः कथमतिथिसपर्यां शिक्षिताः शाखिनोऽपि ॥ ३ ॥ नीपस्कन्धे कुहरिणि शुकाः स्वागतं व्याहरन्ति घ्राणग्राही हरति हृदयं हव्यगन्धः समीरः । एता मृग्यः सलिलपुलिनोपान्तसंसक्तदर्भं पश्यन्त्योऽस्मान्सचकितदृशो निर्झराम्भः पिबन्ति ॥ ४ ॥ कुल्याम्भोभिः[2] पवनचपलैः शाखिनो धौतमूला भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन[3] । एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां नष्टातङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥ ५ ॥ रसालानाम्[4]न्तर्मदकलरणत्कोकिलकुलं समन्तादुन्मीलद्बकुलमुकुलामोदभरितम् । घनस्निग्धच्छायं क्रमुक[5]कदलीशीतलतलं ननु प्रीतिं धत्ते नवमिदमृषेराश्रमपदम् ॥ ६ ॥ नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः[6] । विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगास्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ ७ ॥ तत्तादृक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभिर्मेध्या वत्सतरी विहस्य बटुभिः सोल्लुण्ठमालभ्यते[7] । अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटैरापीतो[8] मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः ॥ ८ ॥ प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरीकल्पाभिर्मखधूमवल्लिभिरमी संमीलितव्यञ्जनाः । श्वः संचीवरयिष्यमाणबटुकव्याधौतशुष्यत्त्वचो निद्राणातिथयस्तपोवनगृहाः कुर्वन्ति नः कौतुकम् ॥ ९ ॥ नीवारौदनमण्डमुष्णमधुरं[9] सद्यःप्रसूताप्रियापीतादप्यधिकं तपोवनमृगः पर्याप्तमाचामति । गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः[10] कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १० ॥ आमूलं क्वचिदुद्धृता क्वचिदपि च्छिन्ना स्थली बर्हिषामानम्रा कुसुमोच्चयाच्च सदयाकृष्टाप्रशाखा लता । एते पूर्वविलूनवल्कलतया रूढव्रणाः शाखिनः सद्यश्छेदममी वदन्ति समिधां प्रस्यन्दिनः पादपाः ॥ ११ ॥ वासोऽर्थं दययैव नातिपृथवः कृत्तास्तरूणां त्वचो भग्नानेकजरत्कमण्डलुनभःस्वच्छं पयो नैर्झरम् । दृश्यन्ते त्रुटितोज्झिताश्च बटुभिर्मौञ्ज्यः क्वचिन्मेखला नित्याकर्णनया शुकेन च पदं साम्नामिदं[11] गीयते ॥१२॥ क्रीडन्माणवकाङ्घ्रिताडनशतैरुज्जागरस्य क्षणं शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः । चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकभिर्मोचितः किं चायं पिबति प्रसुप्तनकुलश्वासानिलं

---

१ सिंहस्य । २ कृत्रिमसरिज्जलैः । ३ घृत – । ४ आम्राणाम् । ५ पूगतरु – । ६ पाषाणाः । ७ हन्यते । ८ पिबति । ९ ओदनस्य । १० सर्पिर्घृतम् । ११ सामवेदीयमन्त्राणाम् ।

प्लगः ॥ १३ ॥ एकत्र प्रपठन्ति साम च यजुश्चान्यत्र वेदान्तरं हिंस्राश्चापि मृगायिताश्च परतो यागोत्थधूमः शिवः । आतिथ्यादिविधिः परत्र विधिवत्पाद्यादिनाऽऽपाद्यते नानाशास्त्रविवेचनं च वटुभिः संतन्यते सङ्गतैः ॥ १४ ॥ पक्वानि प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रितानां फलानि स्पन्दन्ते राजरम्भाः फलभरनमिता वाति मन्दानिलोऽपि । संदृश्यन्ते विपाकच्युतमधुरफलव्यातमूला रसाला भारेणामी फलानां युवतिकुचभरस्पर्धिनो नालिकेराः ॥ १५ ॥

## राजप्रशंसनम् ।

राजाऽस्य जगतो वृद्धेर्हेतुर्वृद्धाभिसंगतः । नयनानन्दजननः शशाङ्क इव वारिधेः ॥ १ ॥ राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् । राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ २ ॥ अष्टानां लोकपालानामेकत्र यदि वैभवम् । तदा राज्ञेव सम्भाव्यमित्यसाविव नेतरे ॥ ३ ॥ सर्वदेवमयो राजा सर्वदेवीमयी धरा । अतोऽस्या वल्लभो राजा मन्दैरेवावमन्यते ॥ ४ ॥ यस्य भ्रूक्षेपमात्रेण निग्रहानुग्रहौ नृणाम् । स शासनपदे तिष्ठन्बालोऽपि बहु मन्यताम् ॥ ५ ॥ धार्मिकं पालनपरं सम्यक्परपुरंजयम् । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥ ६ ॥ पर्जन्य इव भूतानामाधारः पृथिवीपतिः । विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ ७ ॥ सदानुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥ ८ ॥ सर्वदेवमयो राजा मनुना संप्रकीर्तितः । तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ ९ ॥ सर्वदेवमयस्यापि विशेषो भूपतेरयम् । शुभाशुभफलं सद्यो नृपादेवाद्भवान्तरे ॥ १० ॥ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ११ ॥ यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ १२ ॥ अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः । शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥ १३ ॥ निकटस्थं दहत्यग्निर्न तु दूरापसर्पितम् । कुलं दहति राजाग्निः सपशुद्रव्यबान्धवम् ॥ १४ ॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह । भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् ॥ १५ ॥ आक्षेपवचनं तस्य न वक्तव्यं कदाचन । अनुकूलं प्रियं चास्य वक्तव्यं जनसंसदि ॥ १६ ॥ इन्द्रात्प्रभुत्वं ज्वलनात्प्रतापं क्रोधो यमाद्वैश्रवणाच्च वित्तम् । पराक्रमं रामजनार्दनाभ्यामादाय राज्ञः क्रियते शरीरम् ॥ १७ ॥ उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वँल्लघून्वर्धयन्नत्युच्चान्नमयन्नतान्समुदयन्विश्लेषयन्संहतान् । क्षुद्रान्कण्टकिनो बहिर्निरसयन्म्लानान्पुनः सेचयन्मालाकार इव प्रयोगनिपुणो राजा चिरं नन्दति॥१८॥

## सभ्योत्कर्षप्रशंसनम् ।

सभ्यास्ते साम्प्रतं येषां विवेचनपरा मतिः । येषां न द्वेषरागौ च स एकः सभ्यनामभृत् ॥ १ ॥ धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः । समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥ २ ॥ श्रुत्यध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ ३ ॥

## पुरोधःप्रशंसनम् ।

अथर्वाम्नायतत्त्वज्ञस्तन्त्रज्ञः क्रतुकर्मठः । धनुर्वेदस्य वेत्ता च पुरोधा राजसम्मतः ॥ १ ॥ वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादपरो नित्यमेष राजपुरोहितः ॥ २ ॥

---

१ लक्ष्मीः । २ योग्ये । ३ दाता । ४ कुबेरात् । ५ विजितान् उन्मूलितांश्च । धान्यानां हि उत्खातप्रतिरोपणं भवत्येवेति ।

## दानादिकर्माध्यक्षप्रशंसनम् ।

कुलशीलगुणोपेतः सर्वधर्मपरायणः । प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥ १ ॥ पुराणन्यायमीमांसाप्रभृत्यागमकोविदः । कुलीनः करुणः शान्तो दानाध्यक्षः प्रशस्यते ॥ २ ॥

## भिषक्प्रशंसनम् ।

भिषक् पीयूषपाणिः स्यादस्त्राघातचिकित्सकः । धीरोऽलुब्धः श्रुतार्थज्ञः यशस्वी प्रेमभृत्स्वतः ॥ १ ॥ आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः । आर्यशीलगुणोपेत एष वैद्यो विधीयते ॥ २ ॥

## अमात्यप्रशंसनम् ।

मन्त्रतन्त्रार्पितप्रीतिर्देशकालोचितस्थितिः । यश्च राज्ञि भवेद्भक्तः सोऽमात्यः पृथिवीपतेः ॥ १ ॥ स ह्यमात्यः सदा श्रेयान्काकिणीं यः प्रवर्धयेत् । कोशः कोशवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ २ ॥ कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः । नृपतिः किंक्षणो मूर्खो दरिद्रः किंवराटकः ॥ ३ ॥ प्राप्तार्थग्रहणं द्रव्यपरिवर्तोऽनुरोधनम् । उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम् ॥ ४ ॥ गभीरश्च कुलीनश्च स्थिरप्रज्ञो विवेचकः । सर्वथाऽनुगतो दूरं त्यक्तलोभो जितेन्द्रियः॥५॥ प्राणान्तावसरेऽप्याप्ते यस्य बुद्धिर्न हीयते । शास्त्रज्ञः शस्त्रनिष्णातो मर्मज्ञो व्यवहारवित् ॥ ६ ॥ समयं प्राप्य भीमः स्यादनुरक्तश्च यः सुधीः । वाग्मीच प्रतिभाभास्वानमात्योऽसौ प्रशस्यते ॥ ७ ॥ स्वदेशजं कुलाचारं विशुद्धमथवा शुचिम् । मन्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम् ॥ ८ ॥ अधीतव्यवहाराङ्गं मौलं[1] ख्यातं विपश्चितम् । अर्थस्य[2]ोत्पादकं चैव विदध्यान्मन्त्रिणं नृपः ॥ ९ ॥ अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः । मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ १० ॥ संग्रहं नाकुलीनस्य[3] सर्पस्येव करोति यः । स एव श्लाघ्यते मन्त्री सम्यग्गारुडिको यथा ॥ ११ ॥ पृष्टो ब्रूते न सत्यं यः परिणामे सुखावहम् । मन्त्री चेत्प्रियवक्ता स्यात्केवलं स रिपुः स्मृतः ॥ १२ ॥ मूर्खं व्यसनिनं लुब्धमप्रगल्भं भयाकुलम् । क्रूरमन्यायकर्तारं नाधिपत्ये नियोजयेत् ॥ १३ ॥ दूरादर्थं घटयति नवं दूरतश्चापशब्दं त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु । मन्दं मन्दं रचयति पदं[4] लोकचित्तानुवृत्त्या कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ १४ ॥ शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधनस्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः । क्लीबान्पालयिता[5] शठान्व्यथयिता धर्म्येऽतिलोमान्वितो द्विर्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः ॥ १५ ॥

## सेनानीप्रशंसनम् ।

वीरो धीरो भटोत्साहवर्धनः करुणः क्षमी । व्यूहतन्त्रादितन्त्रज्ञः सेनानीर्नृपसम्मतः ॥ १ ॥ समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः । शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ २ ॥ शूरोऽर्थशास्त्रनिपुणः कृतशास्त्रकर्मा सङ्ग्रामकेलिचतुरश्च तुरङ्गयुक्तः । भर्तुर्निदेशवशगोऽभिमतश्च[6] तन्त्रे सेनापतिर्नरपतेर्विजयागमाय ॥ ३ ॥

---

१ परम्परया सिद्धमन्त्रिपदम् । २ धनस्य, कार्यसिद्धेश्च । ३ न अकुलीनस्येति नाकौ वल्मीके लीनस्येति च । ४ अधिकारं सुबन्ततिङन्तान्यतररूपं शब्दं च । ५ सङ्कटे पराङ्मुखान् । ६ आज्ञावर्ती ।

## हस्तिप्रशंसनम्।

यस्य सेना गजैर्हीना तस्य स्याद् विजयः कुतः। यस्य सेना गजैराढ्या तस्य चाविजयः कुतः॥ १॥ अश्वा दूरं पलायन्ते चूर्ण्यन्ते च रथा लघु। पत्तयश्च विमर्द्यन्ते यैस्तैर्हि पृतना गजैः॥ २॥ यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम्। यतो रूपं ततः शीलं यतो नागास्ततो जयः॥ ३॥ यतो गजैर्विना राज्ञां राज्यशोभा न जायते। जयप्रतापो सैन्यस्य रक्षा तस्मादिहोच्यते॥ ४॥ यद्वद्वनमसिंहं च यद्वद्राष्ट्रमपार्थिवम्। यद्वच्छौर्यमशस्त्रं तु तद्वत्सैन्यमकुञ्जरम्॥ ५॥ प्राकारगोपुराट्टालकपाटोद्घाटनादिषु। भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः॥ ६॥ शरजालाञ्चितमुखः कोऽन्यः शक्तः परं गजात्। हन्तुं प्राकारमुन्मथ्य रथांश्च नरकुञ्जरान्॥ ७॥ एकशक्तिप्रहारेण म्रियतेऽश्वो नरोऽपि च। सहेच्छतं प्रहाराणां महायुद्धेषु वारणः॥ ८॥ क्रीडासु च नरेन्द्राणां जले पुष्पितपङ्कजे। स्नपयन्ति गजा हस्तैर्लग्नपुष्करपुष्करैः॥९॥ स्त्रियोऽवतारगन्त्येते मृन्मया इव निश्चलाः। नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमः सखा॥ १०॥ चलन्ति येषां न शतं गजेन्द्राः पुरः प्रयाणे बत शैलतुल्याः। वाञ्छन्ति चैवं विजयं कथं ते राजेति शब्दं च कथं लभन्ते॥ ११॥ रक्षन्ति पक्षं मुदिताः स्वकीयं मथ्नन्ति सैन्यं कुपिताः परेषाम्[३]। प्राणैरपीच्छन्ति हितं प्रभूणां गजैः समानं क्व बलं बलीयः॥ १२॥ सैन्योत्तारणतो धुनीषु[४] सततं यो वारिबन्धायते यो मथ्नन्परितः परोद्धतबलं युद्धेषु योधायते। यः स्वीयक्षितिनाथरक्षणविधौ प्रोच्चैकदुर्गायते स प्राज्ञैर्विजिगीषुभिर्गजगणः कैः पार्थिवैर्नोऽर्थ्यते॥ १३॥ मातङ्गैरथ यैर्महेन्द्रभवनं पुण्याधिकं जन्यते यैः श्यामैरपि सर्वलोकमहिता कीर्तिः सिता तन्यते। यैर्मत्तैरपि संगरे रिपुमदः शोषं समानीयते तेऽमी भाग्यवतः प्रयान्ति पुरतः स्तम्बेरमा भूपतेः॥ १४॥ चीत्कारैर्नाशयन्तः स्वपतिभटमनो मोदयन्तो मदाढ्याः प्रौढाः सङ्ग्रामसीम्नि स्वबलबहलतां बाढमाढौकमानाः। शुण्डादण्डप्रहारैः परममपि बलं कम्पयन्तः परेषां येषां सर्वे गजेन्द्रा भुवि विजयविधौ ते मता भूमिपालाः॥ १५॥ सेतुं संभेदयन्तो बलविकटभटप्रोन्नतिं त्रोटयन्तः प्राकारं दारयन्तः परमनसि परां भीतिमुत्पादयन्तः। व्यूहं विद्रावयन्तः सुघनमपि वनं हेलयोत्पाटयन्तो येषामाजौ गजेन्द्राः खलु धरणिभुजां तज्जयः सिद्ध एव॥ १६॥ तावद्गर्जन्ति वीर्यात्परनिधनविधौ युद्धमध्येऽपि धीरास्तावद्धावन्ति वेगं परमपि दधतः सम्मुखीनास्तुरङ्गाः। शूरारूढः सुसज्जो मदमुदितमना मानिमानं विधुन्वन्यावन्नायाति कोपात्कृतविविधरवाटोप एकोऽपि नागः॥ १७॥

## अश्वप्रशंसनम्।

अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी। अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम्॥ १॥ निपत्य युधि वेगेन मिषतां सर्वधन्विनाम्। शत्रुं निहत्य यात्येकः शूरो वाजिप्रभावतः॥२॥ तरलास्तुरगा यस्य तस्य सत्यतरङ्गिणी। यत्साहाय्यमुपादाय क्षमो द्यामपि गाहितुम्॥३॥ स्यन्दनेनैकचक्रेण यद्व्योमोल्लङ्घते रविः-हयानामेव साहाय्यं तत्र साधनमिष्यते॥ ४॥ शस्त्रास्त्रैर्भिन्नदेहोऽपि श्रान्तोऽपि गुरुभारतः। न मुञ्चति रणे नाथमतः कोऽन्यो हयात्सुहृत्॥ ५॥ दूरस्थोऽपि बली शत्रुर्न शेते रजनीष्वपि। तस्य भीत्या गृहे यस्य हयो वेगवत्तराः॥ ६॥ न गजैर्न नरैः कार्यं सिद्धिमभ्येति भूभृताम्[१०]। तथा निमेषमात्रेण यथा

---

१ प्रतिबन्धमम् शालं वा। २ हस्ती। ३ शत्रूणाम्। ४ नदीषु। ५ खेतुरिवाचरति। ६ वीर इवाचरति। ७ हस्तिभिः। ८ अनायासेन। ९ सङ्ग्रामे। १० राज्ञाम्।

वाहैः सुसाधितैः ॥ ७ ॥ राज्यं शतक्रतुसमृद्धिसमानमश्वैरश्वैः श्रियः सकलकामदुघा भवन्ति । अश्वैर्यशांसि विपुलानि समुल्लसन्ति नाश्वै प्रयान्ति सदृशत्वमिभादयोऽपि ॥ ८ ॥ तीक्ष्णाग्रहेतिहतिभिः क्षतलोलदन्तं चञ्चत्कारालकरवालविघट्टिताङ्घ्रिम् । कोऽन्यो विहाय हयमावहजातमूर्छप्राणप्रयाणसमयेऽवितुमीशमीशः ॥ ९ ॥ पादाः कन्दुकवत्स्थितिश्च गिरिवद्धेषारवो मेघवन्नेत्रे नीरजवज्जवः पवनवच्चास्फालनं सिंहवत् । विन्यासो नटवन्मुखं कुलवधूवक्रेन्दुवद्वाजिनो यस्य क्षोणिभुजो विशस्तदितरे साम्राज्यमुर्वीतले ॥ १० ॥

## कृपाणप्रशंसनम् ।

खड्गाल्लक्ष्मीस्तथा राज्यं यशः खड्गादवाप्यते । खड्गाद्वैरिविनाशश्च यत्नात्तमभिदध्महे ॥ १ ॥ वीरेणापि कृपाणस्य साहाय्यं समपेक्षितम् । तीक्ष्णत्वं हि द्विषो हन्ति कालिमाऽस्यद्विषां श्रियम् ॥ २ ॥ यस्मिन्खड्गे शरीरं प्रतिफलति यथा खड्गराजोऽभिवन्द्यो वन्द्योऽयं देववृन्दैरपि यदि स भवेदर्धचन्द्रोपपन्नः । नानावर्णैर्युतश्चेत्स भवति नृपतेः शत्रुनाशैकहेतुः सेतुर्लक्ष्मीप्रवाहे निखिलरिपुकुलध्वंसने धूमकेतुः ॥ ३ ॥

## सेनाप्रशंसनम् ।

प्रथमं युद्धकारित्वं समस्तबलपालनम् । दिङ्मार्गयोधशोधित्वं पत्तिकर्म प्रचक्षते ॥ १ ॥ सेना यस्य सदोद्युक्ता तस्य तेजः परन्तपम् । सेना विजयलक्ष्म्या हि वरणस्रङ्महीभृताम ॥ २ ॥ अवीरोऽपि चमूवीरसाहाय्येन द्विषो जयेत् । चमूसाहाय्यशून्यानां जयश्रीर्व्याकुलायते ॥ ३ ॥ स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम् । प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥ ४ ॥ वरमल्पबलं सारं न बह्वी मुण्डमालिका । कुर्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥ ५ ॥

## दुर्गाश्रयप्रशंसनम् ।

गजानां च हयानां च भटानां चापि संहतिः । निर्मूलेव विना दुर्गसंश्रयं परिभूयते ॥ १ ॥ दुर्गाश्रयमुपेतानां ननु दुर्गाश्रयः स्वतः । दुर्गाश्रयमुपेतानां पशूनामपि सिंहता ॥ २ ॥ न गजानां सहस्रेण न लक्षेण च वाजिनाम् । तथा सिध्यन्ति कार्याणि यथा दुर्गप्रभावतः ॥ ३ ॥ अदुर्गो विषयः कस्य नारेः परिभवास्पदम् । अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत् ॥ ४ ॥ विषहीनो यथा नागो मदहीनो यथा गजः । सर्वेषां वश्यतां याति दुर्गहीनस्तथा नृपः ॥ ५ ॥ शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः । तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥ ६ ॥ एकः शतं योधयते प्राकारस्थो धनुर्धरः । शतं सहस्राणि तथा सहस्रं लक्षमेव च ॥ ७ ॥ दुर्गाणि राज्ञा कार्याणि सजलानि दृढानि च । द्रव्यमन्नं च तेष्वेव स्थापनीयं प्रयत्नतः ॥ ८ ॥

## सन्देशहरप्रशंसनम् ।

मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतो विधीयते ॥ १ ॥ उद्यतेष्वपिशस्त्रेषु दूतो वदति नान्यथा । सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥ २ ॥ गुणी

---

१ सुशिक्षितैः । २ इन्द्र- । ३ सम्पदः । ४ सर्वमनोरथपूरिकाः । ५ गजादयः । ६ सङ्ग्राम- । ७ स्वपृष्ठारोहिणम् । ८ दुर्गायाः कालीदेव्याः । दुर्गस्यैति तु प्रतीतिमात्रम् । ९ बुद्धिमान् ।

भक्तो शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी । ब्राह्मणः परमर्मज्ञो दूतः स्यात्प्रतिभानवान् ॥ ३ ॥ साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः । परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ४ ॥ [२]नियोगिभिर्विना राज्यं नास्ति भूपे हि केवले । तस्मादमी विधातव्या रक्षितव्याः प्रयत्नतः ॥ ५ ॥

## धनाध्यक्षप्रशंसनम् ।

प्रवीणो वाक्पटुर्धीमान्स्वामिभक्तश्च नित्यशः । अलुब्धः सत्यवादी च भाण्डागारी स इष्यते ॥ १ ॥

## लेखकप्रशंसनम् ।

सकृदुक्तगृहीतार्थो लघुहस्तो जितेन्द्रियः । शब्दशास्त्रपरिज्ञाता एष लेखक इष्यते ॥ १ ॥

## प्रतिहारीप्रशंसनम् ।

इङ्गिताकारतत्त्वज्ञो बलवान्प्रियदर्शनः । समयज्ञः स्वामिभक्तः प्रतीहारी स इष्यते ॥ १ ॥

## सूपकारप्रशंसनम् ।

पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मृष्टपाचकः । शूरश्च कठिनश्चैव सूपकारः स इष्यते ॥ १ ॥

## चारप्रशंसनम् ।

भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने । चारश्चक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः ॥ १ ॥

## अन्तःपुरनियोजनम् ।

काणाः कुब्जाश्च षण्ढाश्च तथा वृद्धाश्च पङ्गवः । ऐते चान्तःपुरे नित्यं नियोक्तव्याः क्षमाभृता ॥१॥

## वनितावर्णनम् ।

पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रियः । परोक्षे च समक्षे च रक्षितव्याः प्रयत्नतः ॥ १ ॥ सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो रक्ष्या नार्यो हि सर्वदा । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ २ ॥

## महिषीनिर्देशः ।

महिष्या हृष्टया भाव्यं गृहकार्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ १ ॥

## भृत्यनिर्देशः ।

बहूनामप्यसाराणां समुदायो हि दारुणः । राज्ञा भृत्याः प्रकर्तव्यास्ते हि सर्वक्रियाक्षमाः ॥ १ ॥ तृणैरावेष्टयते रज्जुस्तया नागो हि बध्यते । एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ॥ २ ॥ न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना । तेषां च व्यवहारोऽयं परस्परनिबन्धनः ॥ ३ ॥ भृत्यैर्विना स्वयं राजा लोकानुग्रहकार्यपि । मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते ॥४॥ अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं [११]वृत्तिचक्रं प्रवर्तते ॥५॥ शिरसा विधृता नित्यं तथा स्नेहेन[१२] पालिताः । केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ६ ॥ ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि

---

१ समयं निरीक्ष्य वक्ता स्वयं हनुमदादिवत्कार्यान्तरसाधकश्च । २ दूतैः । ३ धनाध्यक्षः ४ दृढाङ्गः । ५ राज्ञा । ६ पितुः पत्युश्च । ७ हस्ती । ८ सूर्यः एष हि सायं निर्मयूखो न शोभत इति दृष्टचरम् । ९ दण्डविशेषैः । १० मध्यभागः । ११ व्यवहाररूपरथचक्रम् । १२ प्रेम्णा तैलेन च ।

महीभुजा। न चिन्तयति यः पापं स भृत्योऽर्हो महीभुजाम् ॥ ७ ॥ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा। पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ८ ॥ अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरं च यः। यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥ ९ ॥ न क्षुधा पीड्यते यस्तु निद्रया न कदाचन। न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ १० ॥ श्रुत्वा साङ्ग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति। प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ११ ॥ सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट्। नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥ १२ ॥ सीमा संकोचमायाति वह्नौ चर्म इवाहितम्। स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समिच्छता ॥ १३ ॥ स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च। मन्यते न स सन्धार्यो भूभुजा भूतिमिच्छता ॥ १४ ॥ स्वाम्यादेशात्सुभृत्यस्य न भीः संजायते क्वचित्। प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम् ॥ १५ ॥ सालसं मुखरं क्रूरं स्तब्धं व्यसनिनं शठम्। असंतुष्टमभक्तं च त्यजेद्भृत्यं नराधिपः ॥ १६ ॥ स्वाम्युक्ते यो न यतते स भृत्यो भृत्यपाशकः। तज्जीवनमपि व्यर्थमजागलकुचाविव ॥ १७ ॥ द्विजाश्चापि न गच्छन्ति यां गतिं नैव योगिनः। स्वाम्यर्थं संत्यजन्प्राणांस्तां गतिं याति सेवकः ॥ १८ ॥ राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति। तेऽपि संमानमात्रेण प्राणैः प्रत्युपकुर्वते ॥ १९ ॥ सारासारपरिच्छेत्ता स्वामी भृत्यस्य दुर्लभः। अनुकूलः शुचिर्दक्षः प्रभोर्भृत्यो हि दुर्लभः ॥ २० ॥

## स्नानवर्णनम्।

स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं शौचस्यायतनं मलापहरणं संवर्धनं तेजसः। रूपोद्द्योतकरं गदप्रशमनं कामाग्निसंदीपनं नारीणां च मनोहरं श्रमहरं स्नाने दशैते गुणाः ॥ १ ॥

## ताम्बूलगुणनिर्देशः।

ताम्बूलं मुखरोगनाशि निपुणं संवर्धनं तेजसो नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहम्। वक्त्रालङ्करणं प्रहर्षजननं विद्वन्नृपाग्रे रणे कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम् ॥ १ ॥

## आयुधवर्णनम्।

दुष्टाविनीतशत्रूणां भयकृद्बन्धुसंनिभम्। शस्त्रधारणमौजस्यं रक्षोविद्युद्भहापहम् ॥ १ ॥

## आतपत्रनिदर्शनम्।

वर्षानिलरजोघर्महिमादीनां निवारणम्। राज्यलक्ष्म्या गृहं धन्यं चक्षुष्यं छत्रधारणम् ॥ १ ॥

## चामरम्।

चामरं श्रीकरं दिव्यं राज्यशोभाकरं परम्। निषेवितुमिव स्वच्छं यशः समुपतिष्ठते ॥ १ ॥

## सिंहासनप्रशंसनम्।

सिंहासनं सुखैश्वर्यकरं लोकानुरञ्जनम्। यत्रासीनः सुराधीशपदम्भूषयते नृपः ॥ १ ॥

---

१ सम्पदम्। २ भयम्। ३ सर्पसम्बन्धि। ४ कुत्सितः किङ्करः। ५ रोग-। ६ बुभुक्षा-। ७ समुन्नतिकारकम्। ८ तेजसो विक्रमस्य च वर्धकम्।

## चन्दनलेपप्रशंसनम् ।

पापालक्ष्मीप्रशमनं चन्दनाद्यनुलेपनम् । कस्तूरीकेसराभ्यां तत्प्रमोदयति निर्भरम् ॥ १ ॥

## मालाप्रशंसनम् ।

उल्लसत्सौरभैः पुष्पैर्बिभ्रन्मालां सुगुम्फिताम् । पर्यन्तस्थायिनोऽप्यन्यानामोदयति भूपतिः ॥ १ ॥
गुणैर्वाऽऽत्मयशोबीजाङ्कुरैरिव सुमैर्वृताम् । बिभ्रन्मालां महीजानिः परिमोदयते न कम् ॥ २ ॥

## राजप्रयाणवर्णनम् ।

अग्रे यान्ति पथां विशोधनपराः केचिच्च केचिज्जनाः कूपादेः खनने च निर्मितिविधौ दक्षा महोत्साहिनः । भूपे गच्छति पृष्ठतः कतिपये धावन्ति पार्श्वोभये नागेन्द्रांश्च रथांस्तथैव तुरगांश्चारुह्य केचित्समम् ॥ १ ॥ धिक्तं धिक्तमितिप्रघोषणपरः सूचैस्तदीयानको वीरेन्द्रोदयसिंह याति भवति स्थाने पुरो भाव्यते । श्रीमांस्तोमरवंशभूषणमणे चन्द्रोऽयमित्यास्थया त्वत्कीर्तिः परितः स्फुरन्त्यपि न येनामानि धिक्तं यतः ॥ २ ॥ वाजी चारुगतिः शशाङ्कधवलं छत्रं प्रिया पृष्ठतः प्रोत्तुङ्गस्तनमण्डला विजयिनो भृत्याः पुरः पञ्चषाः । ताम्बूलं मधुरं सखा सुचतुरः संपद्यते चेत्पथि प्राहुस्तत्कटकप्रयाणमितरत्प्राणप्रयाणं बुधाः ॥ ३ ॥

## उपवनप्रशंसनम् ।

नवं वयो हारि वपुर्वराङ्गनाः सखा कलावित्कलवल्लकीस्वनः । धनं हि सर्वं विफलं सुखैषिणो विना विहारोपवनानि भूपतेः ॥ १ ॥ पुंसां सर्वसुखैकसाधनफलाः सौन्दर्यगर्वोद्धुरक्रीडालोलविलासिनीजनमनःस्फीतप्रमोदावहाः । गुञ्जद्भृङ्गविनिद्रपङ्कजभरस्फारोल्लसद्दीर्घिकायुक्ताः सन्ति गृहेषु यस्य विपुलारामाः स पृथ्वीपतिः ॥ २ ॥

## तरुप्रशंसनम् ।

बहुभिर्बत किं जातैः पुत्रैर्धर्मार्थवर्जितैः । वरमेकः पथि तरुर्यत्र विश्रमते जनः ॥ १ ॥ दशकूपसमा वापी दशवापीसमो ह्रदः । दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ॥ २ ॥

## हितोक्तिनिदर्शनम् ।

सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १ ॥ यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान् । धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ २ ॥ प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम् । वर्धनाद्रक्षणं श्रेयस्तन्नाशेऽन्यत्सदप्यसत् ॥ ३ ॥ आत्मानं प्रथमं राजा विनयेनोपपादयेत् । ततोऽमात्यांस्ततो भृत्यांस्ततः पुत्रांस्ततः प्रजाः ॥ ४ ॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ ५ ॥ नृपाणां च नराणां च केवलं तुल्यमूर्तिता । आधिक्यं तु क्षमा धैर्यमाज्ञा दानं पराक्रमः ॥ ६ ॥ प्रजां न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ७ ॥ अजामिव प्रजां हन्याद्यो मोहात्पृथिवीपतिः । तस्यैका जायते तृप्तिर्द्वितीया न कथंचन ॥ ८ ॥ प्रजापीडनसंतापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ॥ ९ ॥ यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभि-

---

१ अश्वः । २ हितस्य । ३ किं तु दग्ध्वैव शाम्यतीति भावः ।

वर्धितः । फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥ १० ॥ निजवर्षहितस्नेहा बहुभक्तजनान्विताः सुकाला इव जायन्ते प्रजापुण्येन भूभृतः ॥ ११ ॥ यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा । अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ १२ ॥ प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति । अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ १३ ॥ नरेशे जीवलोकोऽयं निमीलति निमीलति । उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १४ हिरण्यधान्यरत्नानि गजेन्द्राश्चापि वाजिनः । तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्महीपतेः ॥ १५ ॥ राजा जानपदान्सर्वान्मोदयेता- खिलात्मना । तेऽपि सम्मोदयेरंस्तं प्राणैरपि धनैरपि ॥ १६ ॥ मा तात साहसं कार्षीर्विभवैर्गर्वमागतः । स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये ॥ १७ ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् । नहि दुर्बलदग्धानां काले किंचित्प्ररोहति ॥ १८ ॥ यानि मिथ्याभिभूतानां पतन्त्य- श्रूणि रोदताम् । तानि संतापकान्घ्नन्ति सपुत्रपशुबान्धवान् ॥ १९ ॥ मा तात संपदामग्रमारू- ढोऽस्मीति विश्वसीः । दूरारोहपरिभ्रंशविनिपातो हि दारुणः ॥ २० ॥ कितवा यं प्रशंसन्ति यं प्रशंसन्ति चारणाः । यं प्रशंसन्ति बन्धक्यः स पार्थ पुरुषाधमः ॥ २१ ॥ राजानो यं प्रशंसन्ति यं प्रशंसन्ति वै द्विजाः । साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥ २२ ॥ प्रज्ञा- गुप्तशरीरस्य किं करिष्यन्ति संहताः । गृहीतहस्तच्छत्रस्य वारिधारा इवारयः ॥ २३ ॥ कोऽत्र त्यहमिति ब्रूयात्सम्यगादेशयेति च । आज्ञामवितथां कुर्याद्यथाशक्ति महीपतेः ॥ २४ ॥ अल्पे- च्छुर्धृतिमान्प्राज्ञश्छायेवानुगतः सदा । आदिष्टो न विकल्पेत स राजवसतिं वसेत् ॥ २५ ॥ अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् । प्राप्नुयाद् बुद्ध्यवज्ञानमपमानं च शाश्वतम् ॥ २६ ॥ किं भक्तेनासमर्थेन किं शक्तेनापकारिणा । भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥ २७ ॥ जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् । नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ २८ ॥ नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम् । कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥ २९ ॥ अतिव्ययोऽनवेक्षा च तथार्जनमधर्मतः । मोक्षणं दूरसंस्थानं कोषव्यसनमुच्यते ॥ ३० ॥ क्षिप्रमा- यमनालोच्य व्ययानश्च स्ववाञ्छया । परिक्षीयत एवासौ धनी वैश्रवणोपमः ॥ ३१ ॥ यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत् । कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥ ३२ ॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं सनायकम् ॥ ३३ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ ३४ ॥ दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः । राज्यमेकश्चकारोच्चैः सुमन्त्री चन्द्रगुप्तकः ॥ ३५ ॥ अक्षुण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः । यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ ३६ ॥ न्यायासन मधिष्ठाय पक्षपाते न पद्यताम् । पद्यमानो हि तं मोहात् सर्वथा परिहीयते ॥ ३७ ॥ सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ ३८ ॥ तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः । वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत् ॥ ३९ ॥ माता पिता

---

१ नायकः, सदाचारप्रवर्तक इति यावत् । २ भाग्यस्य प्रजाया वेति शेषः । ३ अपरा- धमन्तरैव पीडितानाम् । ४ रुदतामिति तु सुवचम् । रोदशब्दात् क्विपि ततस्तस्य धातुत्वे शतेति समाधिः । ५ विष्णुरूपः । ६ सत्याम् । अनवज्ञातामिति भावः । ७ लाभम् । ८ अपव्ययं कुर्वाणः । ९ कुबेरसमः । १० सम्पादितम् ।

गुरुर्भ्राता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति स्वधर्मे यो न तिष्ठति ॥ ४० ॥ वि-शोधयेन्महीपालो मन्त्रिशालामशेषतः । अयुक्तो नार्हति स्थातुमस्यां मन्त्ररहस्यवित् ॥ ४१ ॥ षट्कर्णो[1] भिद्यते मन्त्रश्चतुःकर्णः स्थिरो भवेत् । द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥ ४२ ॥ त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः । नियोजयेत्तथैवैतांस्त्रिविधेष्वपि कर्मसु ॥ ४३ ॥ तुल्यार्थं तुल्यसामर्थ्यं सर्वज्ञं व्यवसायिनम् । अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ ४४ ॥ निर्विशेषो यदा राजा समं भृत्येषु तिष्ठति । तत्रोद्यमसमर्थानामुत्साहः परिहीयते[2] ॥ ४५ ॥ प्रसादो निष्फलो यस्य यस्य क्रोधो निरर्थकः । न तं राजानमिच्छन्ति षण्ढं पतिमिवाङ्गना ॥ ४६ ॥ अविवेकिनि भूपाले नश्यन्ति गुणिनां गुणाः । प्रवासरसिके कान्ते यथा साध्व्याः स्तनोन्नतिः ॥ ४७ ॥ न कश्चि-च्चण्डकोपानामात्मीयो नाम भूभृताम् । होतारमपि जुह्वन्तं दहत्येव हुताशनः ॥ ४८ ॥ चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः । पश्य चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतः ॥ ४९ ॥ यस्मि-न्नेवाधिकं चक्षुरारोपयति पार्थिवः । कुलीनो वाकुलीनो वा स श्रियो भाजनं भवेत् ॥ ५० ॥ राज्ञि मातरि देव्यां च कुमारे मुख्यमन्त्रिणि । पुरोहिते प्रतीहारे समं वर्तेत राजवत् ॥ ५१ ॥ पानमक्षा-स्तथा नार्यो मृगया गीतवादिते । एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ ५२ ॥ आयाच्चतु-र्थभागेन व्ययकर्म प्रवर्तयेत् । प्रभूततैलदीपो हि चिरं भद्राणि पश्यति ॥ ५३ ॥ कर्मणा मनसा वाचा चक्षुषापि चतुर्विधम् । प्रसादयति[3] लोकं यस्तं लोको नु प्रसीदति ॥ ५४ ॥ संभोजनं संक-थनं संप्रश्नोऽथ समागमः । ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ ५५ ॥ मृदोः[4] परिभवो नित्यं वैरं तीक्ष्णस्य[5] नित्यशः । उत्सृज्य तद्द्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥ ५६ ॥ अबुद्धिमाश्रितानां[6] च क्षन्तव्यमपराधिनाम् । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥ ५७ ॥ किमप्यसाध्यं[7] महतां सिद्धिमेति लघीयसाम् । प्रदीपो भूमिगेहान्तर्ध्वान्तं हन्ति न भानुमान् ॥ ५८ ॥ अरावप्युचितं कार्यमातिथ्यं गृहमागते । छेत्तुमप्यागते च्छायां नोपसंहरते द्रुमः ॥ ५९ ॥ अगाधहृदया[8] भूपाः कूपा इव दुरासदाः । घटका[9] गुणिनो[10] नो चेत्कथं लभ्येत जीवनम्[11] ॥ ६० ॥ कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः । अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ ६१ ॥ भोगिनः[12] कञ्चुकासक्ताः[13] क्रूराः कुटिलगामिनः । सुदुष्टा मन्त्रसाध्याश्च[14] राजानः पन्नगा इव ॥ ६२ ॥ अकस्माद्द्वेष्टि यो भक्तमाजन्मपरिसेवितम् । न[15] व्यंजने रुचिर्यस्य त्याज्यो नृप इवातुरः ॥ ६३ ॥ सुगन्धं केतकीपुष्पं कण्टकैः परिवेष्टितम् । यथा पुष्पं तथा राजा दुर्जनैः परि-वेष्टितः ॥ ६४ ॥ असत्प्रलापः पारुष्यं पैशुन्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्नैव चिन्तयेत् ॥ ६५ ॥ प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः । यशः स्वर्गनिवासश्च विपुलश्च

---

१ मन्त्रिभिन्नस्तृतीयः षिड्भिः पूर्वन्नकश्चिन्मन्त्रितमर्थमवधारयेदिति मन्त्रणावसरे प्रबन्धः कार्यः यदि तु मन्त्री स्वयमेव वा राजा रहसि मन्त्रयन्निव मनसाऽवधारयेन्न पुनः प्रकाशये त्तस्य समन्त्रोऽतीव सुरक्षितो भवतीति भावः । २ क्षीयते । ३ प्रसाधयतीति पाठान्तरेऽपि अल-ङ्करोति, कृतार्थयतीति भावः । ४ अतिशान्तस्य स्वामिनः । ५ उग्रस्वभावस्य । ६ अज्ञानि-नाम् । ७ यन्महतामप्यसाध्यं तल्लघुतरोऽपि कदाचित्कर्तुं शक्यते । इत्यस्यैवार्थस्य परार्धेन सम-र्थनम् । ८ अज्ञेयचेष्टितत्वात् । ९ कार्यसाधकाः, कलशाश्च । १० उत्साहादिगुणयुक्ताः, रज्जु-युक्ताश्च । ११ उपयोगावहं द्रव्यं, जलं च । १२ विलासिनः, फणिनश्च । १३ कवचिनः, त्वग्विशेषवन्तश्च । १४ प्रसादनोपायेन प्रसाद्याः गारुडमन्त्रेण निरोध्यवेगाश्च । १५ व्यञ्जने शुद्धे भोज्ये च यस्य रुचिर्नेत्यन्वयः ।

धनागमः ॥ ६६ ॥ मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः । अयशश्चार्थनाशश्च नरके गमनं तथा ॥ ६७ ॥ इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् । यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ ६८ ॥ मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि । चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ ६९ ॥ आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती । तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥ ७० ॥ तृप्तियोगः परेणापि महिम्ना न महात्मनाम् । पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ ७१ ॥ बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतकञ्चुकः । चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ ७२ ॥ तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः । नैकमोजः प्रसादो वा रसभावविदः कवेः ॥ ७३ ॥ कृतापचारोऽपि परैरनाविष्कृतविक्रियः । असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ ७४ ॥ मृदुव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पते । प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥ ७५ ॥ नालम्बते दैष्टिकतां न निषीदति पौरुषे । शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ ७६ ॥ षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः । ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥ ७७ ॥ सर्वकार्यशरीरेषु मुक्त्वाऽङ्गस्कन्धपञ्चकम् । सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम् ॥ ७८ ॥ सखा गरीयाञ्छत्रुश्च कृत्रिमस्तौ हि कार्यतः । स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ ७९ ॥ उपकर्त्राऽरिणा सन्धिर्न मित्रेणापकारिणा । उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ८० ॥ स्थायिनोऽर्थे प्रवर्त्तन्ते भावाः सञ्चारिणो यथा । रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥ ८१ ॥ तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता । सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥ ८२ ॥ करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम् । प्रज्ञाबलबृहन्मूलफलत्युत्साहपादपः ॥ ८३ ॥ स दोषः सचिवस्यैव यदसत्कुरुते नृपः । याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ ८४ ॥ न सर्पस्य मुखे रक्तं न दष्टस्य कलेवरे । न प्रजासु न भूपाले धनं दुरधिकारिणि ॥ ८५ ॥ यद्यपि क्षितिपालानामाज्ञा सर्वत्रगा स्वयम् । तथापि शास्त्रदीपेन चरत्येव मतिः सताम् ॥ ८६ ॥ असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणाम् । यथा वैद्यस्तथा राजा शस्त्रपाणिर्विषह्यति ॥ ८७ ॥ जातमात्रं न यः शत्रुं व्याधिं वा प्रशमं नयेत् । अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥ ८८ ॥ पातकानां समस्तानां द्वे परे तात पातके । एकं दुःसचिवो राजा द्वितीयं च तदाश्रयः ॥ ८९ ॥ राजा सम्पत्तिहीनोऽपि सेव्यः सेव्यगुणाश्रयः । भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ ९० ॥ स जयी वरमातङ्गः यस्य तस्यास्ति मेदिनी । कोशो यस्य सुदुर्धर्षो दुर्गस्तस्य सुदुर्जयः ॥ ९१ ॥ सुवर्णैः पट्टचेलैश्च शोभा स्याद्वारयोषिताम् । पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥ ९२ ॥ यं यं नृपोऽनुरागेण संमानयति संसदि । तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥ ९३ ॥ ब्राह्मणः क्षत्रियो बन्धु-

---

१ 'सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते ॥' इत्युक्ताङ्गैः । २ इत्येव कीर्तिरलमिति महतां न भावना सम्पद्यते किंतु तद्वृद्ध्य एवोद्यतन्त इति भावः । ३ अमात्यादयः प्रकृतयः । ४ प्रारब्धमात्रापेक्षित्वम् । ५ 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ॥' इत्युक्त्या सन्ध्यादयः षड्गुणाः, प्रभावादयस्तिस्रः शक्तयः, उदयवृद्धिक्षयावस्थानान्युदया इत्यूह्यम् । ६ सर्वाणि कार्याणि शरीराणीव तत्र अङ्गानि स्कन्धा इव तेषां पञ्चकम् । सौगता बौद्धाः । तत्र 'सहायः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥' इति कामन्दकोक्तान्यङ्गानि, सौगतानां तु रूपवेदनाविज्ञानसन्तानसञ्ज्ञानसंस्काराः पञ्च स्कन्धाः । ७ शत्रुमित्रयोः ।

नोधिकारे प्रशस्यते । ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥ ९४ ॥ नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम् । सर्वस्वं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ ९५ ॥ अपराधेऽपि निःशङ्को नियोगी चिरसेवकः । स्वस्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥ ९६ ॥ नव्यैर्वस्त्रादिभिर्भव्यः स्वकृत्यैरपि यो भवेत् । मह्यते कृतिभिः सोऽय पुरुषोत्तमतां गतः ॥ ९७ ॥ सतां सुदर्शनो भूत्वा द्विषां दुर्दर्शनो भवेत् । तत्राऽपीष्टाः प्रभावेण नत्वाकृत्यैव धीमताम् ॥ ९८ ॥ दुर्वर्णोऽपि महीयान्स्याद्गुणैर्न यदि हीयते । सुवर्णोऽपि गुणैर्हीनो हीयते पिककह्वैवत् ॥ ९९ ॥ सत्यं ब्रूयात्प्रियं ब्रूयात्सत्यमप्यप्रियं तु न । विदुरो ह्यप्रियं सत्यं ब्रुवन्राज्ञो निराकृतः ॥१००॥ प्रियं नित्यं ब्रुवाणो यः परेषामपि स प्रियः । स्पृह्यते हीनवर्णोऽपि कोकिलः प्रियकाकलिः ॥ १०१ ॥ चक्रं येन भृतं तत्र सौवर्ण्यमपि चेद्भवेत् । स्वर्च्यत्वं तस्य नान्यस्य शालग्रामोऽत्र दर्शनम् ॥ १०२ ॥ नरत्वेवाऽमरत्वे वा समानत्वेऽपि सर्वथा । चक्रसम्पत्तिमासाद्य महीय्यते हि सर्वथा ॥१०३॥ विना चक्रेण सम्मानो विधातुरपि न श्रुतः । शिलाऽपि बिभ्रती चक्रं महद्भिः परिपूज्यते ॥ १०४ ॥ स्वतन्त्रोऽपि नरो न्यायपारतन्त्र्यं वहेन्नरः । अपि तेजोनिधिः सायं प्रकाशं निह्नुते स्वयम् ॥ १०५ ॥ शान्तः पूर्वं ततस्तेजो दध्यान्न स्यात्क्षती यदि । तमसामविनाशे ह्युदतते तेजसां निधिः ॥ १०६ ॥ ऋजुत्वं च परित्यज्य कलां दर्शयतोऽर्चना । द्विजराजोऽनृजुत्वेन महेशेनापि मह्यते ॥ १०७ ॥ मृदुत्वं न सदा दध्यान्नोग्रत्वमपि सर्वदा । मृदुत्वेनार्द्यते चन्द्रो द्विजराजोऽपि नेतरः ॥ १०८ ॥ उग्रत्वं च मृदुत्वं च समयं वीक्ष्य संश्रयेत् । अन्धकारमसंहृत्य नोग्रो भवति भास्करः ॥१०९॥ न लोकं निर्दहेत्तीव्रं प्रतापोऽपि नहि स्थिरः । अपि तेजोनिधिर्ह्यन्ते निस्तेजाः के पुनः परे ॥ ११० ॥ उपकर्ताधिकारस्थः स्वापराधं न मन्यते । उपकारं ध्वजीकृत्य सर्वमेवावलुम्पति ॥ १११ ॥ आज्ञाभङ्गकरान्राजा न क्षाम्येत्स्वसुतानपि । विशेषः कोऽनुरागस्य राजचित्तगतस्य च ॥ ११२ ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् । नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥ ११३ ॥ भोगस्य भाजनं राजा न राजा कार्यभाजनम् । राजकार्यपरिध्वंसान्मन्त्री दोषेण लिप्यते ॥ ११४ ॥ वरं प्राणपरित्यागः शिरसो वापि कर्तनम् । न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम् ॥ ११५ ॥ विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च । अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ ११६ ॥ यः कुर्यात्सचिवायत्तां श्रियं तद्व्यसने सति । सोऽन्धवज्जगतीपालः सीदेत्संचारकैर्विना ॥ ११७ ॥ सदामात्यो न सिद्धः स्यात्समृद्धः सर्व एव हि । सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी ॥ ११८ ॥ मूलैर्भृत्यान्परित्यज्य नागन्तून्प्रतिमानयेत् । नातः परतरो दोषो राज्यभेदकरो यतः ॥ ११९ ॥ मन्त्रबीजमिदं गुप्तं रक्षणीयं यथा तथा । मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥ १२० ॥ मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् । वलयं स्फटिकस्येव को हि संधातुमीश्वरः ॥ १२१ ॥ वज्रं च राजतेजश्च द्वयमेवातिभीषणम् । एकमेकत्र पतति पतत्यन्यत्समन्ततः ॥ १२२ ॥ मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा । उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ १२३ ॥ यत्रायुद्धे ध्रुवं मृत्युर्युद्धे जीवितसं-

---

१ कह्वः काकः । २ दुर्योधनेन । ३ असितवर्णत्वात् । ४ राज्याद्यधिकारः तदाकारं चिह्नं च । ब्राह्मणाद्युत्कृष्टवर्णत्वं, हेमरेखाभृत्त्वं च । ५ शालग्रामस्य हि चक्रस्वर्णाकारसत्त्वे पूज्यत्वातिशयः । ६ निदर्शनम् । ७ चक्रं राज्यं शस्त्रविशेषश्च । ८ शालग्रामशिला । ९ रात्रौ चन्द्रस्यैवाधिकारात् । पिधत्ते । १० शेखरेण धार्यते । ११ पारम्पर्येण भृत्यत्वेन सम्पद्यमानान् ।

शयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥ १२४ ॥ अयुद्धे हि यदा पश्येन्न किंचिद्धितमात्मनः । युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ १२५ ॥ जये च लभते लक्ष्मीं मृते चापि सुराङ्गनाम् । क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ॥ १२६ ॥ पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् । प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥१२७॥ राज्यलोभादहंकारादिच्छतः स्वामिनः पदम् । प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरम् ॥ १२८ ॥ आत्मनश्च परेषां च यः समीक्ष्य बलाबलम् । अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ १२९ ॥ राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः । अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यतेऽपि यत् ॥ १३० ॥ वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः । अभ्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत् ॥ १३१ ॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मनः ॥ १३२ ॥ षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया । इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता ॥ १३३ ॥ मन्त्रभेदेऽपि ये दोषा भवन्ति पृथिवीपतेः । न शक्यास्ते समाधातुमिति नीतिविदां मतम् ॥ १३४ ॥ न तथोत्थाप्यते ग्रावा प्राणिभिर्दारुणा यथा । अल्पोपायान्महासिद्धिरेतन्मन्त्रफलं महत् ॥ १३५ ॥ विजेतुं प्रयतेतारीन्न युद्धेन कदाचन । अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ॥ १३६ ॥ साम्ना दानेन भेदेन समस्तैरथवा पृथक् । साधितुं प्रयतेतारीन्न युद्धेन कदाचन ॥ १३७ ॥ बलिना सह योद्धव्यमिति नास्ति निदर्शनम् । यद्युद्धं हस्तिना सार्धं नराणां मृत्युमावहेत् ॥ १३८ ॥ स मूर्खः कालमप्राप्य योऽपकर्तरि वर्तते । कलिर्बलवता सार्धं कीटपक्षोद्गमो यथा ॥ १३९ ॥ महत्यल्पेऽप्युपायज्ञः सममेव भवेत्क्षमः । समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः ॥ १४० ॥ धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् । निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ १४१ ॥ यथा प्रभुकृतान्मानाद्युध्यन्ते भुवि मानवाः । न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते ॥ १४२ ॥ अविद्वानपि भूपालो विद्यावृद्धोपसेवया । परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ १४३ ॥ पानं स्त्री मृगया द्यूतमर्थदूषणमेव च । वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ १४४ ॥ शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनायकः । त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मम्भरिर्नरः ॥ १४५ ॥ सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः । एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ १४६ ॥ यो येन प्रतिबद्धः स्यात्सह तेनोदयी व्ययी । स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १४७ ॥ धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः । अनीतिपवनक्षिप्तः कार्याब्धौ स निमज्जति ॥ १४८ ॥ हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययः सदा । नित्यं भृत्यानपेक्षा च तस्य स्याद्धनदा धरा ॥ १४९ ॥ दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते । शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः ॥ १५० ॥ आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः । भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १५१ ॥ कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् । फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ १५२ ॥ कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः । आरोहन्ति शनैः पश्चाद्धुन्वन्तमपि पार्थिवम् ॥ १५३ ॥ विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम् । सेवावृत्तिविदां चैव नाश्रयः पार्थिवं विना ॥ १५४ ॥ ये जात्यादिमहागर्वान्नरेन्द्रा-

---

१ युद्धविधानं विना। २ यदि सर्वथा शत्रून्निहन्तुं न शक्तस्तदाऽपि प्रथमं शत्रून्यथासम्भवं हत्वैव न त्वन्यथेति भावः । ३ चेष्टाविशेषैः । ४ पाषाणः । ५ कलहः, वैरमिति यावत् । ६ कीटा हि पक्षोद्गमेऽनले पतित्वा स्वयं नश्यन्तीति दृष्टचरम् । ७ ज्ञानज्येष्ठ- । ८ मदिरापानम् ।

न्नोपयान्ति च। तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ १५५ ॥ ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः। प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ १५६ ॥ सर्पान्व्याघ्रान्गजान्सिंहान्दृष्टोपायैर्वशीकृतान्। राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ १५७ ॥ राजानमेव संश्रित्य विद्वान्याति परां गतिम्। विना मलयमन्यत्र चन्दनो न प्ररोहति ॥ १५८ ॥ धवलान्यातपत्राणि वाजिनश्च मनोरमाः। सदा मत्ताश्च नागेन्द्राः प्रसन्ने सति भूपतौ ॥ १५९ ॥ सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ १६० ॥ सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः। आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा ॥ १६१ ॥ यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः। नहि तस्मात्फलं तस्य सुकृष्टादूषरादिव ॥ १६२ ॥ द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः। भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ १६३ ॥ अपि स्थाणुवदासीनः शुष्यन्परिगतः क्षुधा। न त्वेवानात्मसंपन्नाद्वृत्तिमीहेत पण्डितः ॥ १६४ ॥ सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम्। आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ १६५ ॥ यमाश्रित्य न विश्रामं क्षुधार्ता यान्ति सेवकाः। सोऽर्कवन्नृपतिस्त्याज्यः सदा पुष्पफलोऽपि सन् ॥ १६६ ॥ जीवेति प्रब्रुवन्प्रोक्तः कृत्यं कृत्यविचक्षणः। करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ १६७ ॥ प्रभुप्रसादजं वित्तं सुपात्रे यो नियोजयेत्। वस्त्राद्यं विदधात्यङ्गे स भवेद्राजवल्लभः ॥ १६८ ॥ अन्तःपुरचरैः सार्धं यो मन्त्रं न समाचरेत्। न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ १६९ ॥ सम्मतोऽहं प्रभोर्नित्यमिति मत्वा व्यतिक्रमेत्। कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभः ॥ १७० ॥ द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत्। यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ १७१ ॥ द्यूतं यो यमदूताभं हालां हालाहलोपमाम्। पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ १७२ ॥ युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे। प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ १७३ ॥ दुराराध्या हि राजानः पर्वता इव सर्वदा। व्यालाकीर्णाः सुविषमाः कठिना दुःखसेविताः ॥ १७४ ॥ दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम्। स्वल्पेनाप्यपचारेण ब्राह्मण्यमिव दुष्यति ॥ १७५ ॥ दुराराध्याः श्रियो राज्ञां दुरापा दुष्परिग्रहाः। तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्थिताः ॥ १७६ ॥ अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते। धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः ॥ १७७ ॥ सव्यदक्षिणयोर्यत्र विशेषो नोपलभ्यते। कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत् ॥ १७८ ॥ काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते। न तेषां संनिधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ १७९ ॥ यस्मिन्कृत्यं समावेश्य निर्विशङ्केन चेतसा। आस्यते सेवकः सः स्यात्कलत्रमिव चापरम् ॥ १८० ॥ यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम्। लज्जया वक्ति नो किंचित्तेन राजा सहायवान् ॥ १८१ ॥ कुतः सेवाविहीनानां चामरोद्धूतसंपदः। उद्दण्डधवलच्छत्रवाजिवारणवाहिनी ॥ १८२ ॥ अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम्। देवानां च विनश्येत स द्रुतं सुमहानपि ॥ १८३ ॥ अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते। अपि सम्मानहीनोऽपि स सर्वत्रापि पूज्यते ॥ १८४ ॥ अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः। यदाप्नोति फलं लोकात्तस्यांशमपि नो गुणी ॥ १८५ ॥ यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः। स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ १८६ ॥ फलहीनं नृपं भृत्याः कुलीन-

---

१ योग्ये भाजने कृतज्ञत्वादिगुणशालिनि जने च। २ मदिराम्। ३ निवासस्थाने। ४ अवस्थीयते।

मपि चोन्नतम् । संत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ १८७ ॥ भूपः कूप इवाभाति नेमज्जनसुखावहः । ददाति गुणसंबन्धाद्यथा पात्रानुरूपतः ॥ १८८ ॥ अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः । वृत्तिभङ्गान्महीपालं त्यक्त्वा यान्ति सुसेवकाः ॥ १८९ ॥ कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः । कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ १९० ॥ देशानामुपरि क्ष्मापा आतुराणां चिकित्सकाः । वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥ १९१ ॥ प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् । गणिकाः कामुकानां च सर्वलोकस्य शिल्पिनः ॥ १९२ ॥ सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम् । भुञ्जते च यथाशक्ति जलजाञ्जलजा यथा ॥ १९३ ॥ शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् । रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ १९४ ॥ विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च । प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ १९५ ॥ प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् । पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ १९६ ॥ गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः । पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥ १९७ ॥ फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः । दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ १९८ ॥ नृपदीपो धनस्नेहो प्रजाभ्यः संहरन्नपि । अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥१९९॥ यथा गौर्दुह्यते काले पाल्यते च तथा प्रजा । सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥२००॥ लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः । लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥२०१॥ उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥२०२॥ मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् । भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ २०३ ॥ न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः । यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥ २०४ ॥ चाटतस्करदुर्वृत्तैस्तथा साहसिकादिभिः । पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥ २०५ ॥ प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः । अधर्मादपि षड्भागो जायते यो न रक्षति ॥ २०६ ॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ २०७ ॥ गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते । प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ २०८ ॥ चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः । ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ २०९ ॥ यः समानं समाधत्ते भृत्यानां क्षितिपोऽधिकम् । वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ २१० ॥ विश्वासः संपदां मूलं तेन यूथपतिर्गजः । सिंहो मृगाधिपत्येऽपि न मृगैरुपयुज्यते ॥ २११ ॥ कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा । संभवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥२१२॥ अपृष्टस्तु नरः किंचिद्यो ब्रूते राजसंसदि । न केवलमसंमानं लभते च विडम्बनम् ॥ २१३ ॥ अजन्मा पुरुषस्तावद्गतासुस्तृणमेव वा । यावन्नेषुभिरादत्ते विलुप्तमारिभिर्यशः ॥ २१४ ॥ विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुन्तुदः । उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ २१५ ॥ निर्विषोऽपि यथा सर्पः फटाटोपैर्भयङ्करः । तथाडम्बरवान्राजा न परैः परिभूयते ॥ २१६ ॥ भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् । नास्त्येकमपि यद्येषां न तत्कुर्यात्कथंचन ॥ २१७ ॥ सामैव हि प्रयोक्तव्यमादौ कार्यं विजानता । सामसिद्धानि कार्याणि विक्रियां यान्ति न

---

१ नमन्तो नम्रा ये जनास्तेषां सुखावहः; मज्जने सुखावहो न भवतीति न मज्जनसुखावह इति च । २ विद्याविनयादिः; रज्जवश्च । ३ गां पृथिवीं धेनुं च पालयतीति तेन राज्ञा, वल्लवेन च । ४ धनं नृपः, स्नेहं दीपश्च । ५ दुरुपदेष्टा यस्यामात्यस्तादृशः । ६ विकारं, विपरीतफलप्रदत्वमिति भावः।

कचित् ॥ २१८ ॥ शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः । राज्यलोभोद्यतो विप्रः शक्रेण शपथैर्हतः ॥ २१९ ॥ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् । पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥ २२० ॥ नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पोऽप्यवज्ञया । वह्निरल्पोऽपि संवृद्धः कुरुते भस्मसाद्वनम् ॥ २२१ ॥ कौर्मं संकोचमास्थाय प्रहारानपि मर्षयेत् । प्राप्ते काले च मतिमानुत्तिष्ठेत्क्रूरसर्पवत् ॥ २२२ ॥ स्वाम्यमात्यश्च राज्यं च कोशो दुर्गं बलं सुहृत् । एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम् ॥ २२३ ॥ संधिविग्रहयानानि संस्थितिः संश्रयस्तथा । द्वैधीभावश्च भूपानां षड्गुणाः परिकीर्तिताः ॥ २२४ ॥ उत्साहस्य प्रभोर्मन्त्रस्यैवं शक्तित्रयं मतम् । आत्मनः सुहृदश्चैव तन्मित्रस्योदयास्त्रयः ॥ २२५ ॥ सामदाने भेददण्डावित्युपायचतुष्टयम् । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ २२६ ॥ क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म व्यवस्थितम् । तेन पृष्ठं न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥ २२७ ॥ रक्षाधिकारादीशत्वाद्भूतानुग्रहकारणात् । यदेव कुरुते राजा तत्प्रमाणमिति स्थितिः ॥ २२८ ॥ राजा नाम चरत्येष भूमौ साक्षात्सहस्रदृक् । न तस्याज्ञामतिक्रम्य संतिष्ठेरन्निमाः प्रजाः ॥ २२९ ॥ राज्ञामाज्ञाभयाद्यस्मान्न च्यवन्ते पथः प्रजाः । व्यवहारस्ततो ज्ञेयः शान्तितो राजशासनम् ॥ २३० ॥ नित्यार्यपृथिवीपालैश्चारित्रविषयः कृताः । चारित्रेभ्यस्ततः प्राङ्गरीयो राजशासनम् ॥ २३१ ॥ पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः । जये भवति संदेहः प्रधानपुरुषक्षयः ॥ २३२ ॥ अभिभूतोऽप्यवज्ञातो यो राज्ञां द्वारि तिष्ठति । स तु राज्ञां श्रियं भुङ्क्ते नाभिमानी कदाचन ॥ २३३ ॥ अन्तःपुरधनाध्यक्षैर्वैरिभूते निराकृते । संसर्गं न व्रजेल्लोके विना पार्थिवशासनात् ॥ २३४ ॥ जृम्भां निष्ठीवनं क्रौर्यं कोपं पर्यङ्किकां श्रमम् । भ्रुकुटिं वातमुद्रां च तत्समीपे विवर्जयेत् ॥ २३५ ॥ राज्ञस्तु दर्शनं कुर्याज्ज्ञात्वावसरसौष्ठवम् । गुणादिख्यापनात्पूर्वमुपनीतो महाशयैः ॥ २३६ ॥ दर्शनं नाधमद्वारा राज्ञः कार्यं विपश्चिता । गरिष्ठोऽप्यतिनीचः स्यादुपनीतो लघुर्भवेत् । ॥ २३७ ॥ शत्रोरत्यन्तमित्रं यत्नेन मैत्रीं विवर्जयेत् । अर्दयेत्तद्विरोधेन प्रतिष्ठाघातकारिणा ॥ २३८ ॥ यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्यते । कुठारैर्दण्डनिर्मुक्तैर्भिद्यन्ते तरवः कथम् ॥ २३९ ॥ एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् । आदिमध्यावसानेषु न ते यास्यन्ति विक्रियाम् ॥ २४० ॥ सर्व एव जनः शूरो ह्यनासादितसङ्गरः । अदृष्टपरसामर्थ्यः सदर्पः को भवेन्नहि ॥ २४१ ॥ हृष्टोऽपि राजा यद्दद्यान्न तत्तुष्टो वणिग्जनः । अतो भूमिपतिः सेव्यस्त्याज्यो दूरतरेण सः ॥ २४२ ॥ नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् । विसृजेन्नैव लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ २४३ ॥ चरेद्धीमानकटको युञ्जेत्स्नेहं न नास्तिकः । अनृशंसश्चरेदर्थं चरेत्कार्यमनुद्धतः ॥ २४४ ॥ संदधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः । नाभक्तं चारयेच्चारं कुर्यात्कार्यमपीडया ॥ २४५ ॥ सर्वे यत्र विनेतारः सर्वे यत्राभिमानिनः । सर्वे महत्त्वमिच्छन्ति कुलं तदवसीदति ॥ २४६ ॥ अकृत्वा निजदेशस्य रक्षां यो विजिगीषते । स नृपः परिधानेन वृतमौलिः पुमानिव ॥ २४७ ॥ विजिगीषुररिर्मित्रं पार्ष्णिग्राहोऽथमध्यमः । उदासीनोऽन्तरान्तर्धिरित्येषा नृपतेः स्थितिः ॥ २४८ ॥ गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः समासदैः । हंसाकारोऽपि संत्याज्यो गृध्राकारैः समासदैः ॥ २४९ ॥ ये ह्याहवेषु बध्यन्ते स्वाम्यर्थमपराङ्मुखाः । विकटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ २५० ॥ पदानि

---

१ 'विग्रहो' युद्धम् । २ एकत्र कटकेनावस्थानम् । ३ भेदनम् । ४ अवसानम्परिणामावस्थेति भावः ।

क्रतुतुल्यानि आहवेऽप्यनिवर्तिनाम्। राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥२५१॥ तवाहंवादिनं क्लीबं निर्हेतिं परमागतिम्। न हन्याद्विनिवृत्तं च युद्धं प्रेक्षितुमागतम् ॥ २५२ ॥ सुतभृत्यसुहृद्वैरिस्वामिसद्गुरुदैवते। एकैकोत्तरतो वृद्ध्या श्रीकारः पत्रमूर्धनि ॥ २५३॥ सपक्षो लभते काको वृक्षस्य विविधं फलम्। पक्षहीनो मृगेन्द्रोऽपि भूमिसंस्थो निरीक्षते ॥ २५४ ॥ सपक्षो लभते लक्षं गुणमुक्तोऽपि मार्गणः। न लक्षस्थो विपक्षः स्याद्गुणैरापूर्यते यदि ॥ २५५ ॥ परस्परानुरक्ता ये योधाः शार्ङ्गधनुर्धराः। संनद्धास्तुरगारूढास्ते जयन्ति रणे रिपून् ॥ २५६ ॥ जिते लक्ष्मीर्मृते स्वर्गः कीर्तिश्च धरणीतले। तस्माद्युद्धं विधातव्यं हन्तव्या परवाहिनी ॥ २५७ ॥ विधाय वैरं सामर्षे नरोऽरौ य उदासते। प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ २५८ ॥ सद्वंशसंभवः शुद्धः कोटिदोऽपि गुणान्वितः। कामं धनुरिव क्रूरो वर्जनीयः सता प्रभुः ॥ २५९ ॥ असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः। अनाक्रम्य जगत्कृत्स्नं नो संध्यां भजते रविः ॥ २६० ॥ चिन्त्यते नय एवादावमन्दं समुपेप्सुभिः। विनम्य पूर्वं सिंहोऽपि हन्ति हस्तिनमोजसा ॥ २६१ ॥ स्वजातीयं विना वैरी न जय्यः स्यात्कदाचन। विना वज्रमणिं मुक्तामणिर्भेद्यः कथं भवेत् ॥ २६२ ॥ युक्त्या परोक्षं बाधेत विपक्षक्षपणक्षमैः। शोषयत्यचिरेणैव प्रान्तरस्थमलं पयः ॥ २६३ ॥ परस्परं भावयन्तः श्रेयः परमवाप्स्यथ। इति मन्त्रं समाराध्य सर्वेषां सुखमेधते ॥ २६४ ॥ यदि स्याच्छरणं प्राप्तः सपत्नोऽपि सुरक्ष्यताम्। राज्यं सम्पच्च भोगाश्चास्थिराः कीर्तिः परं स्थिरा ॥ २६५ ॥ शत्रुहस्तगतं कार्यफलं चेत्स्यात्तदा सखे। अपि शत्रुजनैः साकं सन्दधीत सुधीवरः ॥ २६६ ॥ शत्रोर्न प्रत्ययो जातु विधेयो हितमिच्छता। प्रत्ययं तस्य हि प्राप्य निर्भयः पीड्यतेऽचिरात् ॥ २६७ ॥ अरिणा सह संवासाद्विषेण सह भोजनात्। पाप्मना सह सौहार्दान्मरणं प्रतिपद्यते ॥ २६८ ॥ पीडयेत न धर्मं स्वं न कामं च कदाचन। धर्मः कामफलः कामो धर्ममूलो यतः स्मृतः ॥ २६९ ॥ ऐश्वर्येऽपि क्षमा यस्य दारिद्र्येऽपि हितैषिता। आपत्तावपि धीरत्वं दधतो मर्त्यता कथम् ॥ २७० ॥ आपन्नमहितं दृष्ट्वा न दयेत कदाचन। तदुन्मूलनकालोऽयं विधिना ननु सूचितः ॥ २७१ ॥ विपन्नो यदि रक्ष्येत सपत्नो दुष्टमानसः। सम्पन्नः केन भूयोऽयमुन्मूल्यः स्यात्सखे वद ॥ २७२॥ शस्त्रं त्यक्त्वा तृणं वक्त्रे निधाय यदि वा द्विषन्। विपत्तावुपतिष्ठेत तदाऽप्येष न रक्ष्यताम् ॥ २७३ ॥ आततायिनमायान्तं हन्यादेवाविचारयन्। हननादेव निस्तारो नरकात्तस्य दुष्कृतेः ॥ २७४ ॥ भक्तान् भृत्यान् परैं रक्षेल्लालयेच्च सुतानिव। ते हि संवर्धिताः प्रेम्णा तृणायन्ते स्वजीवितम् ॥ २७५ ॥ स्वयं किमपि नैकाकी कर्तुं शक्नोति भूपतिः। अतः श्रेयोऽर्थिना तेन सङ्ग्राह्याः शुचयो बुधाः ॥ २७६ ॥ भृत्याः संरक्षिता येन स्वात्मा तेन सुरक्षितः। न भृत्या रक्षिता येन तेन स्वात्मा न रक्षितः ॥ २७७ ॥ इच्छेद्यदि हितं स्वस्य न धर्माद्विच्युतो भवेत्। नात्र शं विच्युतो धर्मान्न परत्र च विन्दन्ति ॥ २७८ ॥ दीनो भूत्वाऽपि कार्यार्थं धर्मं नो जातुचित्त्यजेत्। धर्मो नित्योऽस्ति दैन्यं तु सम्पन्नत्ववदस्थिरम् ॥२७९॥ प्रभुत्वं यदि वाञ्छेत मानं रक्षेत्समन्ततः। माने नष्टे प्रभुत्वं हि विलीनं भवति क्वचित् ॥ २८० ॥ सम्पत्तिर्वा विपत्तिर्वा न कस्यापि सदा स्थिरा। उद्यतेत सदा शक्त्या विपत्तियेन लीयताम् ॥ २८१ ॥ मान्या मानेन संतोष्या लुब्धा दानेन

---

१ अग्निम्। २ तृणसमूहे। ३ समस्तम्। ४ हीरकरत्नम्। ५ शत्रुदलने समर्थः। ६ कामः फलं यस्य सः। ७ सुखम्।

सर्वदा। उपेक्ष्यास्ते ह्यकर्म्मण्या स्तव्या दुर्जना द्विषः ॥२८२॥ गुणानाकर्ण्य कस्यापि नासूयेत कदाचन। आत्मन्यपि निधातुं तानुद्यतेत तथा पुनः ॥ २८३ ॥ आयान्तं गुणिनं दृष्ट्वा प्रहृष्येदाद्रियेत च। गुणिनो ह्यादृता भूयश्चेष्टन्ते तस्य सम्पदे ॥ २८४ ॥ प्रयोजनमनुद्दिश्य कृतं श्रेयः परेण यत्। विस्मरेत्तन्न सुकृती कृतघ्नो विस्मरन्भवेत् ॥ २८५ ॥ समाहितधिया शश्वदवस्थेयं मनीषिणा। नहि चित्तं स्थिरं नृणां कामवेगश्च दुस्त्यजः॥२८६॥वर्धनीयाः सहृदयाः सुहृदश्च समाश्रिताः। अलसा दुर्धियश्चैव परिहेयाः सुदूरतः ॥२८७॥ अलसानपि नृन्नक्षेन्न कृतघ्नान्कदाचन। द्विषतोऽपि गुणाः काम्याः सुहृदोऽपि न दुर्गुणाः ॥ २८८ ॥ प्रसन्नेन सदा भाव्यं न विषण्णेन जातुचित्। विषादपरिभूतात्मा परतोऽप्यभिभूयते ॥२८९॥ सर्वस्वमपहायापि यत्नवान्पुनरेधते। परिक्षीणकलोऽपीन्दुर्वर्धते पुनरप्यसौ ॥२९०॥ न्याय्यः पक्षोऽवलम्ब्येत विपन्नेनापि धीमता। न कुतोऽपि भयं जातु न्याय्यपक्षावलम्बिनाम् ॥ २९१ ॥ सुदूरं परिमुच्यैव न्याय्यान्याय्यविचारणम्। स्वार्थं सम्पादयेद्धीमान्स्वार्थभ्रंशो हि मूर्खता॥२९२॥ यावन्न द्विषतो हन्यान्न तावत्स समेधते। तिमिरं न हतं यावद्भास्करोऽपि न दीप्यते ॥२९३॥ वर्धमानविभूतीनां बालानामपि पूज्यता। यदप्येककलश्चन्द्रो वर्धमानो विनीयते ॥२९४॥ विपरीते विधौ[२] स्वात्मवस्त्वन्यत्र सुगोपयेत्। अग्नौ न्यस्तं वसु स्वीयं पुनः सूर्यः प्रपद्यते ॥ २९५ ॥ द्विजराजैः कलाः काम्यास्तेजांसि क्षत्रियैस्तथा। एधते कलया चन्द्रो भास्करस्तेजसा तथा ॥ २९६ ॥ सर्वं सम्पद्यते नृणां यदि धर्मो न हीयते। धर्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः ॥ २९७ ॥ भगवानपि कार्यार्थं याचकोऽप्यभवत्क्षणम्। किंतु कार्ये सुसम्पन्ने स्वं प्रभावं निदर्शयेत् ॥२९८॥ गुरूणामपमानो हि वधो ननु शरीरतः। शरीरेण वधोऽन्येषामिति तान्दूरतस्त्यजेत् ॥२९९ ॥ एकेनापि गुणेनर्द्धीं लभते स्पृहणीयताम्। काकस्यैव पिको लोकैर्मोद्यते मलिनोऽप्यसौ ॥३००॥ उदरार्थं न यत्किञ्चिन्निषेवेत कदाचन। न बको वर्णसाम्येऽपि हंसवन् मत्स्यभुग्यतः ॥ ३०१ ॥ सहजन्मापि दुष्टत्वं हीयते सत्पदाश्रयात्। मुनीनामाश्रमे सिंहा अपि गाव इवानघाः ॥३०२॥प्रभुणैव सदा स्थेयमन्यथा न कदाचन। प्रभुत्वपरिहीनानां मालिन्यं परिवर्धते ॥ ३०३ ॥ प्रभूतेऽपि प्रभावे स्वे तन्द्रितो न भवेद्भृशम्। तन्द्रादोषेण सिंहोऽपि क्षुधयाप्यभिभूयते ॥ ३०४ ॥ यतेत पररक्षार्थं न बिभ्यात्स्वविपत्तितः। शङ्करो विबुधांस्त्रातुं विषमप्यपिबन्महत् ॥ ३०५ ॥ अभिभूतोऽपि नोत्साहं जह्याज्जातु स्वसिद्धये। नष्टाङ्गोऽपि ग्रसत्येव सैंहिकेयो मुहुर्द्विषौ ॥ ३०६ ॥ एकेनापि गुणेनाहो स्पृहणीयो नरो भवेत्। कलाभृत्त्वेन रुचिरश्चन्द्रो दोषाकरोऽपि सन् ॥ ३०७ ॥ प्रतिष्ठा हि गुणैर्भूयः स्वाश्रयेषु निधीयते। गुणाभावे तु सिद्धाऽपि स्वयमेव विलीयते ॥ ३०८ ॥ आरोपिता अपि प्राज्या गुणा लोकेषु पूजिताः। पूजयन्तीह दृष्टान्तः प्रतिमा द्युसदां ननु ॥३०९॥ न लुब्धो नच निष्कामो नोग्रः शान्तो न वा भवेत्। समयं प्राप्य तत्सर्वं सम्पादयेत्समीहितम् ॥ ३१० ॥ कामयेत नहि क्षुद्रमर्थं जातु महामनाः। वर्धयेत स्वमौदार्यं प्रभावं च यशो भुवि ॥ ३११ ॥ उन्नतं मानसं यस्य भाग्यं तस्य समुन्नतम्। नोन्नतं मानसं यस्य भाग्यं तस्यासमुन्नतम् ॥ ३१२ ॥ अस्त्रं स्त्री वामनो मर्त्यः पशुरेभ्योऽथवेतरः। विधियोगाद्भवेत्कामं पौरुषं न परित्यजेत् ॥ ३१३ ॥ महानपि स संत्याज्यो यो न लोकोपभुक्तये। वापि क्षुद्राऽपि संसेव्या न महानपि वारिधिः ॥ ३१४ ॥ भीमानामपि सर्वस्वं ह्रियते विबुधैर्बलात्। सुरैः सागरत्नानि हृतान्यापीड्य सर्वथा ॥ ३१५ ॥ न कदर्यो भवेन्मर्त्यो नात्युदारश्च सर्वथा। कार्यं च समयं वीक्ष्य यद्योग्यं तत्समाचरेत् ॥ ३१६ ॥

---

१ मूढाश्च कुटिलप्रकृतिकाश्च। २ दैवे, चन्द्रे च। ३ देवानाम्।

दुर्गदेशप्रविष्टोऽपि शूरोऽभ्येति पराभवम्। गाढपङ्कनिमग्नाङ्गो मातङ्गोऽप्यवसीदति ॥ ३१७ ॥ नयेनाङ्कुरितं शौर्यं जयाय न तु केवलम्। अन्ययुक्तं विषं भुक्तं पथ्यं स्यादन्यथा मृतिः ॥ ३१८ ॥ मृदुभिर्बहुभिः शूरः पुंभिरेको न बाध्यते। कपोतपोतकैरेकः श्येनो जातु न बाध्यते ॥ ३१९ ॥ विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा। अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ ३२० ॥ म्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम्। पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥ ३२१ ॥ रिक्ताः कर्मणि पटवस्तृप्तास्त्वलसा भवन्ति भृत्या ये। तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥ ३२२ ॥ गन्तव्या राजसभा द्रष्टव्या राजपूजिता लोकाः। यद्यपि न भवन्त्यर्थास्तथाप्यनर्था विनश्यन्ति ॥ ३२३ ॥ अतितेजस्व्यपि राजा पानासक्तो न साधयत्यर्थान्। तृणमपि दग्धुमशक्तो वडवाग्निः संपिबत्यब्धिम् ॥ ३२४ ॥ अचिराधिष्ठितराज्यः शूरः प्रकृतिष्वरूढमूलत्वात्। नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ३२५ ॥ सप्रतिबन्धं कार्यं प्रभुरधिगन्तुं सहायवानेव। दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ३२६ ॥ अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोऽथवा स्वर्गः। उभयबलसाधुवादश्रवणसुखस्यैव नास्त्यन्तः ॥ ३२७ ॥ अविवेकमतिर्नृपतिर्मन्त्री गुणवत्सु वक्रितग्रीवः। यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः ॥ ३२८ ॥ अतिगम्भीरे भूपे कूप इव जनस्य दुरवतारस्य। दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥ ३२९ ॥ सदवनमसदनुशासनमाश्रितभरणं च राजचिह्नानि। अभिषेकः पटबन्धो बालव्यजनं व्रणस्यापि ॥ ३३० ॥ यदि तव हृदयं विद्वन्सुनयं स्वप्नेऽपि मा स्म सेविष्ठाः। सचिवजितं षण्ढजितं युवतिजितं चैव राजानम् ॥ ३३१ ॥ आश्रयितव्यो नरपतिरर्जयितव्यानि भूरिवित्तानि। आरब्धव्यं वितरणमानेतव्यं यशो दशापि दिशः ॥ ३३२ ॥ असमैः समीयमानः समैश्च परिहीयमानसत्कारः। धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥ ३३३ ॥ अनुयातानेकजनः परपुरुषैरुह्यतेऽस्य निजदेहः। अधिकारस्थः पुरुषः शव इव न शृणोति वीक्षते कुमतिः ॥ ३३४ ॥ स क्षत्रियस्त्राणसहः सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः। वहन्द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ३३५ ॥ क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः। राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ३३६ ॥ अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः। सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ ३३७ ॥ यत्काकिणीमप्यपथप्रपन्नां समुद्धरेन्निष्कसहस्रतुल्याम्। कालेषु कोटिष्वपि मुक्तहस्तस्तं राजसिंहं न जहाति लक्ष्मीः ॥ ३३८ ॥ उपेक्षितः क्षीणबलोऽपि शत्रुः प्रमाददोषात्पुरुषैर्मदान्धैः। साध्योऽपि भूत्वा प्रथमं ततोऽसावसाध्यतां व्याधिरिव प्रयाति ॥ ३३९ ॥ मित्राणि शत्रुत्वमिवानयन्ती मित्रत्वमप्यर्थवशाच्च शत्रून्। नीतिर्नियत्यस्मृतपूर्ववृत्तं जन्मान्तरं जीवत एव पुंसः ॥ ३४० ॥ सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीमहीधर्मयशःसमूहः। दुर्मन्त्रिणा नाशयते तथैव लक्ष्मीमहीधर्मयशःसमूहः ॥ ३४१ ॥ नियुक्तहस्तार्पितराज्यभारास्तिष्ठन्ति ये सौधविहारसाराः। बिडालवृन्दार्पितदुग्धपूराः स्वपन्ति ते मूढधियः क्षितीन्द्राः॥ ३४२ ॥ सुहृदामुपकारकारणाद्द्विषतामप्यपकारकारणात्। नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति

---

१ सतामवनं रक्षणम्। २ दुष्टशासनम्। ३ संचयनीयानि। ४ शासनादिपदे प्रतिष्ठापित। ५ रक्षणे निरतः।

केवलम् ॥ ३४३ ॥ विषमो[1]ऽपि विगा[2]ह्यते नयः कृ[3]ततीर्थः पयसामिवाशयः । स तु तत्र विशेषदुर्लभः सदु[4]पन्यस्यति कृ[5]त्यवर्त्म यः[6] ॥ ३४४ ॥ द्विषतामुदयः सुमेधसा गुरुरस्व[7]न्ततरः सुमर्षणः । न महानपि भूतिमिच्छता फलसंपत्प्रवणः[8] परिक्षयः ॥ ३४५ ॥ अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः । क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ३४६ ॥ अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया[9] । अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥ ३४७ ॥ क्षययुक्तमपि स्वभावजं दधतं धाम[10] शिवं समृद्धये । प्रणयन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजां नृपम् ॥ ३४८ ॥ प्रभवः खलु कोश[11]दण्डयोः कृतपञ्चा[12]ङ्गविनिर्णयो नयः । स विधेय[13]पदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ ३४९ ॥ अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः । विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥ ३५० ॥ विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः । नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ ३५१ ॥ चञ्चलं वसु नितान्तमुन्नतां मेदिनीमपि हरन्त्यरातयः । भूधरस्थिरमुपेयमागतं मावमंस्त सुहृदं महीपतिम् ॥ ३५२ ॥ आज्ञा कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च । येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवस्याश्रयेण ॥ ३५३ ॥ स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः । सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥ ३५४ ॥ नराधिपा नीचजनानुवर्तिनो बुधोपदिष्टेन न यान्ति ये पथा । विशन्त्यतो दुर्गममार्गनिर्गमं समस्तसम्बाधमनर्थपञ्जरम् ॥ ३५५ ॥ नृपोऽपकृष्टः सचिवात्तदर्पणः स्तनन्धयोऽत्यन्तशिशुः स्तनादिव । अदृष्टलोकव्यवहारमूढधीर्मुहूर्तमप्युत्सहते न वर्तितुम् ॥ ३५६ ॥ व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः । प्रविश्य हि घ्नन्ति शठास्तथाविधा न संवृताङ्गान्निशिता इवेषवः ॥ ३५७ ॥ क्रतौ विवाहे व्यसने रिपुक्षये यशस्करे कर्मणि मित्रसंग्रहे । प्रियासु नारीष्वधनेषु बन्धुषु धनव्ययस्तेषु न गण्यते बुधैः ॥ ३५८ ॥ परं विनीतत्वमुपैति सेवया महीपतीनां विनयो हि भूषणम् । प्रवृत्तदानो मृदुसंचरत्करः करीव भद्रो विनयेन शोभते ॥ ३५९ ॥ अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः । अमर्षशून्येन जनस्य जन्तुना न जा[14]तहार्देन न विद्विषादरः ॥ ३६० ॥ यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् । अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः क्रियेत ॥ ३६१ ॥ आसन्नमेव नृपतिर्भजते मनुष्यं विद्याविहीनमकुलीनमसंगतं वा । प्रायेण भूमिपतयः प्रमदा लताश्च यः पार्श्वतो भवति तं परिवेष्टयन्ति ॥ ३६२ ॥ सत्यानृता च परु[15]षा प्रियवादिनी च हिंस्रा[16] दयालुरपि चार्थपरा वदा[17]न्या । नित्यव्यया प्रचुरनित्यधनागमा च वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ३६३ ॥ राजन्दु[18]धुक्षसि यदि क्षितिधेनुमेतां तेनाद्य वत्समिव लोकममुं पु[19]षाण । तस्मिंश्च सम्यगनिशं परिपोष्यमाणे नानाफलैः फलति कल्पलतेव भूमिः ॥ ३६४ ॥ सिध्यन्ति

---

१ दुर्बोधोऽपि, दुःप्रवेशोऽपि च । २ विगृह्यते; प्रविश्यते च । ३ कृताभ्यासाद्युपायः सन्; कृतजलावतारः संश्च । ४ देशकालद्यविरुद्धम्, गर्तग्राहपाषाणादिरहितं च । ५ सन्धिविग्रहादिकार्यम्; स्नानादिकं च । ६ यथा केचित्कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टारः सन्ति, तीर्थकरस्तु विरलः, तद्वन्नीतावपि निगूढमपि तत्त्वं सति वक्तरि बोद्धारः सन्ति, वक्ता तु न सुलभ इत्यर्थः । ७ अत्यन्तदुरन्तः क्षयोन्मुख इत्यर्थः । ८ फलसिद्ध्युन्मुखः । ९ अनुत्साहेन । १० क्षात्रं तेजः, प्रकाशं च । ११ अर्थराशिचतुरङ्गसैन्ययोः । १२ 'सहायाः साधनोपाया विभागो देशकालयोः। विनिपातप्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते ॥' इति । १३ नियम्येष्वष्वधिकारेषु । १४ जातस्नेहेन । १५ कर्कशा । १६ घातुका । १७ दानशौण्डा । १८ दोहनं कर्तुमिच्छसि । १९ पोषणं कुरु ।

कर्मसु महत्स्वपि यन्नियोज्याः संभावनागुणमवेहि तमीश्वराणाम् । किं ग्रामविष्यदरुणस्तमसां वधाय तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ३६५ ॥ तातार्यमन्त्रिसुतसोदरपण्डितानां नित्यं भजन्ति विभजीकृतमन्यभोगान् । तस्मात्कदाचन रहस्यपि तद्विधानामाज्ञां विभज्य न दिशन्ति महीं महीशाः ॥ ३६६ ॥ ये बाहवो न युधि वैरिकठोरकण्ठपीठोच्छलद्रुधिरराजिविराजितांसाः । नापि प्रियापृथुपयोधरपत्रभङ्गसंक्रान्तकुङ्कुमरसाः खलु निष्फलास्ते ॥ ३६७ ॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन । इति महति विरोधे विद्यमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ ३६८ ॥ नियतविषयवर्ती प्रायशो दण्डयोगाज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः । कृशमपि विकलं वा व्याधितं वाऽधनं वा पतिमपि कुलनारी दण्डभीत्याऽभ्युपैति ॥ ३६९ ॥ नृपः कामासक्तो गणयति न कार्यं न च हितं यथेच्छं स्वच्छन्दश्चरति किल मत्तो गज इव । ततो मानध्मातः पतति तु यदा शोकगहने तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम् ॥ ३७० ॥ अवज्ञानात्प्राज्ञो भवति मतिहीनः परिजनस्ततस्तत्प्रामाण्याद्भवति न समीपे बुधजनः । बुधैस्त्यक्ते राज्ये नहि भवति नीतिर्गुणवती विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥ ३७१ ॥ अयुक्तं युक्तं वा यदभिहितमङ्गेन विभुना स्तुयादेतन्नित्यं जडमपि गुरुं तस्य विनुयात् । विवक्षुर्नैःस्पृह्यं कथमपि सभायामभिनयेत्स्वकार्यं संतुष्टे क्षितिभृति रहस्येव कथयेत् ॥ ३७२ ॥ मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना मुहुः संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः । मुहुर्भ्रश्यद्बीजा मुहुरपि बहुप्रापितफलेत्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ३७३ ॥ इच्छेद्यस्तु सुखं निवस्तुमवनौ गच्छेत्स राज्ञः सभां कस्याणीं गिरमेव संसदि वदेत्कार्यं विदध्यात्कृती । अक्लेशाद्धनमर्जयेदधिपतेरावर्जयेद्वल्लभान्कुर्वीतोपकृतिं जनस्य जनयेत्कस्यापि नापक्रियाम् ॥ ३७४ ॥ अज्ञो वा यदि वा विपर्ययगते ज्ञानेऽथ संदेहभृद्दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः । निःसंदेहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥ ३७५ ॥ सूचीमात्रविभेदसंभ्रमगुणः क्षोणीशवामभ्रुवामुत्तुङ्गस्तनमण्डलेषु लभते लीलारतिं कञ्चुकः । नाराचैर्निबिडैर्विभिन्नवपुषां पुंसां महायोधने स्वर्गस्त्रीकुचकुम्भसंभ्रमपरीरम्भः कथं दुर्लभः ॥ ३७६ ॥ एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते । निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति ॥ ३७७ ॥ ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया । भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्तादृशाः ॥ ३७८ ॥ द्वारे रुद्धमुपेक्षते कथमपि प्राप्तं पुरो नेक्षते विज्ञप्तौ गजमीलनानि कुरुते गृह्णाति वाक्यच्छलम् । निर्यातस्य करोति दोषकथनं तद्विद्विषामग्रतः स स्वामी यदि सेव्यते कुमतिभिः किं नः पिशाचैः कृतम् ॥ ३७९ ॥ वृत्तिच्छेदविधौ द्विजातिमरणे मित्रार्थसंप्रेषणे संप्राप्ते मरणे कलत्रहरणे स्वामिग्रहे गोग्रहे । प्राणत्राणपरा-

---

१ भृत्याः । २ राज्ञाम् । ३ सूर्यसारथिः । ४ सूर्यः । ५ उक्तम् । ६ तद्गुरोः स्तवनं कुर्यात् । ७ निःस्पृहताम् । ८ अभिनयपूर्वकं दर्शयेत् । ९ एकान्ते । १० पृथिव्याम् । ११ मनोज्ञाम् । १२ सभायाम् । १३ प्रियान् । १४ अपकारम् । १५ वस्त्रविशेषः, एतदाख्यो विट इति तु समासोक्तेर्विषयः । १६ मन्त्रिणम् । १७ अस्य हृदय इत्यनेनान्वयः । १८ सम्पन्नम् । १९ विबोधने ।

यणैकमनसां येषां न शस्त्रग्रहस्तानालोक्य विलोकते च मनसा सूर्योऽपि सूर्यान्तरम्¹ ॥ ३८० ॥ धर्मः प्रागेव चिन्त्यः सचिवगतिमती भावनीये सदैव ज्ञेया लोकानुवृत्तिर्वरचरनयनैर्मण्डलं वीक्षणीयम् । प्रच्छाद्यौ रागरोषौ मृदुपरुषयुतौ वर्जनीयौ च काले स्वात्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नापेक्षणीयः ॥ ३८१ ॥ कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के सहायाः का शक्तिः कोऽभ्युपायः फलमिह च कियत्कीदृशी दैवे²संपत् । संपत्तौ को निबन्धः प्रविदितवचनस्योत्तरं किं नु मे स्यादित्येवं कार्यसिद्धाववहितमनसो हस्तगाः संपदः स्युः ॥ ३८२ ॥

## साधारणनीतिप्रशंसनम् ।

अनुगन्तुं सतां वर्त्म कृत्स्नं³ यदि न शक्यते । स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ १ ॥ प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः । किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ २ ॥ सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम् । सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥ ३ ॥ न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते । अनाहूता न चायान्ति तेनाश्मानो⁴ऽपि देवताः ॥ ४ ॥ पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् । मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ ५ ॥ गतेऽपि वयसि⁵ ग्राह्या विद्या सर्वात्मना बुधैः । यद्यपि स्यान्न फलदा सुलभा सान्यजन्मनि ॥ ६ ॥ यस्य चाप्रियमन्विच्छेत्तस्य कुर्यात्सदा प्रियम् । व्याधा मृगवधं कर्तुं सम्यग्गायन्ति सुस्वरम् ॥ ७ ॥ प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम् । अपि चास्य शिरश्छित्त्वा रुद्याच्छोचेत्तथापि च ॥ ८ ॥ सुमन्त्रिते सुविक्रान्ते सुकृतौ सुविचारिते । प्रारम्भे कृतबुद्धीनां सिद्धिरव्यभिचारिणी ॥ ९ ॥ नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः । न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः ॥ १० ॥ नोदन्वानर्थितामेति सदाम्भोभिः प्रपूर्यते । आत्मा तु पात्रतां नेयः पात्रमायान्ति संपदः ॥ ११ ॥ काकतालीययोगेन यदनात्मवति क्षणम् । करोति प्रणयं लक्ष्मीस्तदस्याः स्त्रीत्वचापलम् ॥ १२ ॥ यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च । अवश्यं तदवाप्नोति न चेच्छान्तो निवर्तते ॥ १३ ॥ केचिदज्ञानतो नष्टाः केचिन्नष्टाः प्रमादतः । केचिज्ज्ञानावलेपेन⁶ केचिन्नष्टैस्तु नाशिताः ॥ १४ ॥ मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः । आपन्निकषपाषाणे नरो जानाति सारताम् ॥ १५ ॥ दुष्टैरपि निजैरेव प्रावृतं सर्वमुत्तमम् । वारं जीर्णाम्बरं वापि हट्टे कर्पटमर्हति ॥ १६ ॥ चिन्तनीया हि विपदामादावेव प्रतिक्रियाः । न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ १७ ॥ वरं दारिद्र्यमन्यायप्रभवाद्विभवादिह । कृशताभिमता देहे पीनता न तु शोफतः ॥ १८ ॥ स्त्री विनश्यति रूपेण ब्राह्मणो राजसेवया । गावो दूरप्रचारेण हिरण्यं लोभलिप्सया ॥ १९ ॥ अतिदानाद्बलिर्बद्धो ह्यतिमानात्सुयोधनः⁷ । विनष्टो रावणो लौल्यादति⁸ सर्वत्र वर्जयेत् ॥ २० ॥ धनमस्तीति वाणिज्यं किंचिदस्तीति कर्षणम् । सेवा न किंचिदस्तीति भिक्षा नैव च नैव च ॥ २१ ॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः । हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ २२ ॥ गीतशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥ २३ ॥ जानन्ति पशवो गन्धाद्वेदा⁹ज्जानन्ति पण्डिताः । चारा-

---

१ येषां वृत्तिच्छेदविध्यादिष्वपि न शस्त्रग्रहस्तादृशानालोक्य सूर्योऽपि तद्दर्शनजन्यस्य पातकस्य स्वस्मिन्नापातं मन्यमानस्तच्छान्तयेऽन्यं सूर्यं प्रेक्षितुमिवोद्यत इति भावः । २ भाग्य- । ३ समस्तम् । ४ पाषाणाः । ५ तारुण्ये । ६ विज्ञत्वाभिमानेन । ७ दुर्योधनः । ८ परस्त्रिया हरणात् । ९ शास्त्रात् ।

जानन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ २४ ॥ युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः । रवेर विषयं वस्तु किं न दीपः प्रकाशयेत् ॥ २५ ॥ वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् । वृथा दानं समर्थस्य वृथा दीपो दिवापि च ॥ २६ ॥ अजायुद्धमृषिश्राद्धं प्रभाते मेघडम्बरम् । दम्पत्योः कलहश्चैव परिणामे न किंचन ॥ २७ ॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ २८ ॥ अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥ २९ ॥ सौहृदेन परित्यक्तं निःस्नेहं खलवत्त्यजेत् । सोदरं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ ३० ॥ यन्निमित्तं भवेच्छोको दुःखं वा त्रास एव च । आयासो वा यतः शूलस्तदेकाङ्गमपि त्यजेत् ॥ ३१ ॥ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे[3] ह्यात्मार्थे पृथिवीं त्यजेत् ॥ ३२ ॥ न गणस्याग्रतो गच्छेत्सिद्धे कार्ये समं फलम् । यदि कार्यविपत्तिः स्यान्मुखरस्तत्र[4] हन्यते ॥ ३३ ॥ धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ ३४ ॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ३५ ॥ अनायके न वस्तव्यं न वसेद्बहुनायके । स्त्रीनायके न वस्तव्यं न वसेद्बालनायके ॥ ३६ ॥ सर्वथा संत्यजेद्वादं न कंचिन्मर्मणि स्पृशेत् । सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः ॥३७॥ अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् । कर्मणां फलमस्तीति मनसा त्रितयं चरेत् ॥ ३८ ॥ प्राणातिपातः स्तैयं च परदाराभिमर्शनम् । त्रीणि पापानि कायेन नित्यशः परिवर्जयेत् ॥ ३९ ॥ न कश्चिदपि जानाति किं कस्य श्वो[6] भविष्यति । अतः श्वः करणीयानि कुर्यादद्यैव बुद्धिमान् ॥ ४० ॥ अनेन मर्त्यदेहेन यल्लोकद्वयशर्मदम्[7] । विचिन्त्य तदनुष्ठेयं कर्म हेयं ततोऽन्यथा ॥ ४१ ॥ उपकारः परो धर्मः परार्थं कर्म नैपुणम् । पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥ ४२ ॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ४३ ॥ परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् । नहीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ॥ ४४ ॥ मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ४५ ॥ परदारपरद्रव्यपरद्रोहपराङ्मुखैः[12] । गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति ॥ ४६ ॥ ब्रह्महत्या सुरापानं स्तेयं[13] गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥ ४७ ॥ स्त्रीबालस्वामिमित्रघ्नो गोघ्नो विश्वासघातकः । सुरापो[14] ब्रह्महा चोरो यान्त्येते सर्वनारकान् ॥ ४८ ॥ कूटसाक्षी मृषावादी यश्चासदनुशास्ति वै । ते मोहमृत्यवः सर्वे तथा ये वेदनिन्दकाः ॥ ४९ ॥ घटं भिन्द्यात्पटं छिन्द्यात्कुर्याद्रासभ[15]रोहणम् । येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥ ५० ॥ नहीदृशं संवननं[16] त्रिषु लोकेषु विद्यते । दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥ ५१ ॥ विवादो धनसंबन्धो याचनं स्त्रीषु संगतिः । आदानमग्रतः स्थानं मैत्रीभङ्गस्य हेतवः ॥ ५२ ॥ दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् । कथितानि रहस्यानि सौहृदं किमतः परम् ॥ ५३ ॥ दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते । भिन्नश्लिष्टा तु या प्रीतिः

---

१ प्रतारणम् । २ प्रेम्णा । ३ देशस्य । ४ अग्रणीः । ५ स्थानम्, आश्रयमिति भावः । ६ आगामिनि दिवसे । ७ अस्मिंल्लोके परस्मिंल्लोके च यच्छ्रेयस्करम् । ८ मूषकादिभिः क्षुण्णस्य रजसः । ९ यथासम्भवं प्रतिदिनं यत् किमपि कृतं दानमध्ययनं वा तत्समयान्तरे बहुलं भवति, शनैः शनैः क्षीयमाणं च द्रव्यादि सर्वथा निःशेषं भवतीति भावः । १० भगिन्या । ११ पुत्र्या । १२ एतादृशो गङ्गाया अपि पावनो भवेदिति वक्तव्यम् । १३ चौर्यम् । १४ मद्यपानकारी । १५ गर्दभ- । १६ वशीकरणम् ।

सा दुःखैकप्रदायिनी ॥ ५४ ॥ ययोरेव समं वित्तं ययोरेव समं कुलम् । तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ५५ ॥ उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः । अधमा मातुलात्ख्याताः श्वशुराच्चाधमाधमाः ॥ ५६ ॥ ऋणशेषश्चाग्निशेषः शत्रुशेषस्तथैव च । पुनः पुनः प्रवर्तन्ते तस्माच्छेषं न रक्षयेत् ॥ ५७ ॥ कुभोज्येन दिनं नष्टं कुकलत्रेण शर्वरी । कुपुत्रेण कुलं नष्टं तन्नष्टं यन्न दीयते ॥ ५८ ॥ बर्बरश्च तपस्वी स्याच्छूरश्चाप्यक्षतव्रणः । मद्यपा स्त्री सती राजन्निति न श्रद्दधामहे ॥ ५९ ॥ नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ६० ॥ सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः । तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ६१ ॥ व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः । अधः कूपस्य खनक ऊर्ध्वं प्रासादकारकः ॥ ६२ ॥ कुर्यान्न परदारेच्छां विश्वासं स्त्रीषु वर्जयेत् । हतो दशास्यः सीतार्थी हतः पत्न्या विदूरथः ॥ ६३ ॥ न मद्यव्यसनी क्षीबैः कुर्याद्वेतालचेष्टितम् । वृष्णयो हि ययुः क्षीबास्तृणैः प्रहरणैः क्षयम् ॥ ६४ ॥ दानं सत्त्वाश्रितं कुर्यान्न पश्चात्तापवान्भवेत् । बलिनात्मार्पितो बन्धे दानशेषस्य शुद्धये ॥ ६५ ॥ न स्त्रीजितः प्रमूढः स्याद्गाढरागवशीकृतः । पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥ ६६ ॥ क्षिपेद्वाक्यशरान्घोरान्न पारुष्यविषप्लुतान् । वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥ ६७ ॥ परेषां क्लेशदं कुर्यान्न पैशुन्यं प्रभुप्रियम् । पैशुन्येन गतौ राहोश्चन्द्रार्कौ भक्षणीयताम् ॥ ६८ ॥ कुर्यान्नीचजनाभ्यस्तां न याच्ञां मानहारिणीम् । बलिप्रार्थनया प्राप लघुतां पुरुषोत्तमः ॥ ६९ ॥ वक्रैः क्रूरतरैर्लुब्धैर्न कुर्यात् प्रीतिसंगतिम् । वसिष्ठस्याहरद्धेनुं विश्वामित्रो निमन्त्रितः ॥ ७० ॥ तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत् । विश्वामित्रोऽपि सोत्कण्ठं कण्ठे जग्राह मेनकाम् ॥ ७१ ॥ भक्तं रक्तं सदासक्तं निर्दोषं न परित्यजेत् । रामस्त्यक्त्वा सतीं सीतां शोकशल्याकुलोऽभवत् ॥ ७२ ॥ वर्जयेदिन्द्रियजयी निर्जने जननीमपि । पुत्रीकृतोऽपि प्रद्युम्नः कामितः शम्बरस्त्रिया ॥ ७३ ॥ प्रभुप्रसादे विश्वासं न कुर्यात्स्वप्नसंनिभे । नन्देन मन्त्री निक्षिप्तः शकटारोऽपि बन्धने ॥ ७४ ॥ अभ्युन्नतपदारूढः पूज्यान्नैवापमानयेत् । नहुषः शक्रतां प्राप्य च्युतोऽगस्त्यावमाननात् ॥ ७५ ॥ हितोपदेशं शृणुयात्कुर्वीत च यथोदितम् । विदुरोक्तमकृत्वाभूत्कौरवः शोकशल्यभाक् ॥७६॥ न पुत्रायत्तमैश्वर्यं कुर्यादार्यः कथंचन । पुत्रार्पितप्रभुत्वाभूद्धृतराष्ट्रस्तृणोपमः ॥ ७७ ॥ श्रुतिस्मृत्युक्तमाचारं न त्यजेत्साधुसेवितम् । दैत्यानां श्रीवियोगोभूत्सत्यधर्मक्रियामुचाम् ॥ ७८ ॥ नदीनां नखिनां चैव शृङ्गिणां शस्त्रधारिणाम् । विश्वासो नैव कर्तव्यः स्त्रीणां राजकुलस्य च ॥७९॥ न कुर्यादभिचारोग्रवश्यादिकुहकक्रियाम् । लक्ष्मणेनेन्द्रजित्कृत्याभिचारसमये हतः ॥ ८० ॥ व्याकुलोऽपि विपत्पातैः स्मरेद्विष्णुं सदा हृदि । शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥ ८१ ॥ चिन्ता जरा मनुष्याणामनध्वा वाजिनां जरा । असंभोगो जरा स्त्रीणां वस्त्राणामातपो जरा ॥ ८२ ॥ प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः । तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ८३ ॥

---

१ समृद्धदरिद्रयोः । २ रात्रिः । ३ शूद्रश्चाण्डलो वा । ४ शस्त्राक्षतः । ५ मत्तः । ६ सामर्थ्यानुगुणम् । ७ स्त्रीप्रेमासक्तः । ८ वामनत्वं जगत्पतिरिति पाठान्तरम् । ९ तीव्रे तपसि लीनोऽपि स्वेन्द्रियाणां न विश्वसेदिति सुपठम् । १० शम्बरदैत्यगृहे पाचिकात्वेन नियुक्तयोषानाम्न्या स्त्रिया । ११ चाणक्यप्रसादतः प्राप्तराज्यस्य चन्द्रगुप्तस्य प्रतिद्वन्द्विना नृपेण । १२ एतन्नामा राक्षसवयस्यो मन्त्री, इदं च सर्वं वृत्तं मुद्राराक्षसनाटके स्पष्टम् । १३ नहुषो हि स्वाराज्यसम्पद्योन्मादितः शच्या सङ्गन्तुं सप्तर्षीन् शिबिकावाहकत्वेन नियोज्याप्यनङ्गातुरः पादाङ्गुष्ठेनागस्त्यं मूर्ध्नि पस्पर्शेति वृत्तं पुराणेषु स्पष्टम् । १४ पाणिनामिति पाठस्त्वशुद्ध एव । १५ निन्दित- । १६ किञ्चिदपि यदि नाश्वाः संचरेयुस्तदाऽतिधावनक्षमत्वरिक्तास्ते भवन्तीति तथोक्तम् ।

पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह । पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥ ८४ ॥ यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ८५ ॥ विद्याभ्यासो विचारश्च समयोरेव शोभते । विवाहश्च विवादश्च समयोरेव शोभते ॥ ८६ ॥ लक्ष्मीर्वसति जिह्वाऽग्रे जिह्वाऽग्रे मित्रबान्धवाः । जिह्वाऽग्रे बन्धनं प्राप्तं जिह्वाऽग्रे मरणं ध्रुवम् ॥ ८७ ॥ यस्मिन्देशे न सम्मानो न प्रीतिर्न च बान्धवाः । न च विद्याऽऽगमः कश्चिन्न तत्र दिवसं वसेत् ॥ ८८ ॥ वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः । अथैवमागते काले भिन्द्याद्घटमिवाश्मनि ॥ ८९ ॥ सर्वनाशे समुत्पन्ने ह्यर्द्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥ ९० ॥ मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च । द्विषतां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ९१ ॥ मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च । चतुर्णामपि चैतेषां निष्कृतिर्नैव विश्रुता ॥ ९२ ॥ गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् । गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ॥ ९३ ॥ आत्मबुद्धिः सुखायैव गुरुबुद्धिर्विशेषतः । परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयावहा ॥ ९४ ॥ विस्मयो सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम् । तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयताम् ॥ ९५ ॥ विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ९६ ॥ लुब्धमर्थेन गृह्णीयात्क्रुद्धमञ्जलिकर्मणा । मूर्खं छन्दानुवृत्त्या च तत्त्वार्थेन च पण्डितान् ॥ ९७ ॥ जानीयात्संगरे भृत्यान्बान्धवान् व्यसनागमे । आपत्कालेषु मित्राणि भार्यां च विभवक्षये ॥ ९८ ॥ खरं श्वानं गजं मत्तं रण्डां च बहुभाषिणीम् । राजपुत्रं कुमित्रं च दूरतः परिवर्जयेत् ॥९९॥ दूरस्थं जलमध्यस्थं धावन्तं धनगर्वितम् । क्रोधवन्तं मदोन्मत्तं नमस्कारेऽपि वर्जयेत् ॥ १०० ॥ पिपीलिकार्जितं धान्यं मक्षिकासंचितं मधु । लुब्धेन संचितं द्रव्यं समूलं च विनश्यति ॥ १०१ ॥ न सारणीया धीरेण रसना नीरसे जने । को नाम कुरुते [6]फेरौ नायकः सायकक्षतिम् ॥ १०२ ॥ धातुवादेषु वित्ताशा मोक्षाशा कौलिके[8] मते । जामातरि च पुत्राशा त्रयमेतन्निरर्थकम् ॥ १०३ ॥ द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन । यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ १०४ ॥ द्वाविमौ पुरुषौ लोके परप्रत्ययकारकौ । स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ १०५ ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ १०६ ॥ द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः । प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १०७ ॥ द्वाविमौ पुरुषौ लोके न भूतौ न भविष्यतः । प्रार्थितं कुरुते यश्च यश्च नार्थयते परम् ॥ १०८ ॥ द्वाविमौ पुरुषौ लोके शिरःशूलकरौ भृशम् । गृहस्थश्च निरारम्भो यतिश्च सपरिग्रहः ॥ १०९ ॥ शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो । उभयोर्दुःखदायित्वं को भेदः शत्रुमित्रयोः ॥ ११० ॥ दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः । ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ १११ ॥ ददतो युध्यमानस्य पठतः पुलको न चेत् । आत्मनश्च परेषां च धिक्त्यागं पौरुषं श्रुतम् ॥ ११२ ॥ न तद्भुक्तं न तत्पीतं न तत्स्रुतं न तद्गतम् । यन्मांसमाहिषक्षीरललनावाजिवर्जितम् ॥ ११३ ॥ प्रकृतज्ञमनार्यं च दीर्घरोषमनार्जवम् । चाण्डालानिव

---

१ पक्षिणः, पशवश्च । २ इदं रामचरितोपन्यासद्योतकम् । ३ परित्याज्यः । ४ विघ्नः । ५ सङ्ग्रामे । ६ शृगाले । ७ धातुशोधनक्रियासु । ८ वाममार्गे । ९ विषयभोगसुखमिच्छति । १० परकामनां पूरयति, स्वयं च यो न परस्माल्लब्धुमिच्छतीति भावः । ११ अनुद्योगी । १२ सम्पत्तिसञ्चयशीलः ।

मन्येत नद्येभिः सह संवसेत् ॥ ११४ ॥ दाने तपसि शौर्ये च विद्यायां वा धनार्जने । न यशः प्रथितं यस्य तेन जन्मवताऽपि किम् ॥ ११५ ॥ निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् । न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ॥११६॥ मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि । तत्रैकः शुक्लपक्षोऽभूद्यशः पुण्यैरवाप्यते ॥ ११७ ॥ मत्स्यादयोऽपि जानन्ति नीरक्षीरविवेचनम् । प्रसिद्धिरेव हंसस्य यशः पुण्यैरवाप्यते ॥ ११८ ॥ पञ्चभिः कामिता कुन्ती तद्वधूरथ पञ्चभिः । सतीं वदति लोकोऽयं यशः पुण्यैरवाप्यते ॥ ११९ ॥ सौभाग्यं विरलस्य स्यात्समकर्मगुणेष्वपि । षड्विंशदायुधा पृथ्वी खड्गायत्तैव दृश्यते ॥ १२० ॥ हस्तादपि न दातव्यं गृहादपि न दीयते । परोपकरणार्थाय वचने किं दरिद्रता ॥ १२१ ॥ वनानि दहतो वह्नेः सखा भवति मारुतः । स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ १२२ ॥ भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः । विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ १२३ ॥ जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशम् । वेत्ति विश्वंभरा भारं गिरीणां गरिमाश्रयम् ॥ १२४ ॥ जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः । दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ १२५ ॥ अत्यासन्ना विनाशाय दूरतश्चाफलप्रदाः । मध्यमावेन सेव्यन्ते राजा वह्निर्गुरुः स्त्रियः ॥ १२६ ॥ अमृतं दुर्लभं नृणां देवानामुदकं तथा । पितॄणां दुर्लभः पुत्रस्तक्रं शक्रस्य दुर्लभम् ॥ १२७ ॥ शनैः पन्थाः शनैः कन्था शनैः पर्वतमस्तके । शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ १२८ ॥ अन्वयागतविद्यानामन्वयागतसम्पदाम् । विदुषां च प्रभूणां च हृदयं नावलिप्यते ॥ १२९ ॥ मक्षिका मशको वेश्या मूषको याचकस्तथा । ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः ॥ १३० ॥ अकृतोपद्रवः कश्चिन्महानपि न पूज्यते । अर्चयन्ति नरा नागं न तार्क्ष्यं न गजादिकम् ॥ १३१ ॥ शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया । श्रियोऽनुकूलदानेन लज्जया च कुलाङ्गनाः ॥ १३२ ॥ ब्राह्मणा गणका वेश्याः सारमेयाश्च कुक्कुटाः । दृष्टेष्वन्येषु कुप्यन्ति न जाने तस्य कारणम् ॥१३३॥ पुत्रपौत्रवधूभृत्यैः सम्पूर्णमपि सर्वदा । भार्याहीनगृहस्थस्य शून्यमेव गृहं मतम्॥१३४॥ अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा । तदिदं देहि देहीति विपरीतमुपस्थितम्॥१३५॥नवे वयसि यः शान्तः स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते॥१३६॥धिग्गृहं गृहिणीशून्यं धिक्कलत्रमपुत्रकम् । धिक्पुत्रमविनीतं च धिग्ज्योतिषमजातकम् ॥ १३७ ॥ सर्वदा शुभमन्विच्छेन्नान्विच्छेदशुभं नरः । यथेच्छति तथा तस्य शुभं वाऽशुभमाप्यते ॥ १३८ ॥ अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च । अजापुत्रं बलिं दद्याद्दैवो दुर्बलघातकः ॥ १३९ ॥ दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः । श्यालको गृहनाशाय सर्वनाशाय मातुलः ॥ १४० ॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ १४१ ॥ उद्योगः कलहः कण्डूर्द्यूतं मद्यं परस्त्रियः । आहारो मैथुनं निद्रा सेवनात्तु विवर्धते ॥ १४२ ॥ कृतार्थः स्वामिनं द्वेष्टि कृतदारस्तु मातरम् । जातापत्या पतिं द्वेष्टि गतरोगश्चिकित्सकम् ॥ १४३ ॥ चक्षुःपूतं

---

१ कुन्ती हि राज्ञा पाण्डुना, धर्मराजेन, वायुना, इन्द्रेण, सूर्येण चोपभुक्तेति तथोक्तिः । २ द्रौपदी । ३ मित्रभावः । ४ पञ्चसु वाक्येषु अतिवाह्यते सिध्यति आरोहति प्राप्यते वर्धते इति पञ्चानां क्रियापदानामध्याहारः ।५ मार्गातिवाहनादीनि । ६ एतानि त्वरया न भवन्तीत्यर्थः । ७ वंशपरम्परागतविद्यानाम् । ८ सगर्वो न भवति । ९ कुलस्त्रियः । १० श्वानः । ११ गजः । १२ स्वल्पमपि । १३ वस्तुमाहात्म्येन । १४ कृता दाराः स्त्री येन सः ।

न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥ १४४ ॥ नास्ति यज्ञः स्त्रियः कश्चिन्न व्रतं नोपवासकम् । या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्यसौ ॥ १४५ ॥ शुचि भूमिगतं तोयं शुचिर्नारी पतिव्रता । शुचिः क्षेमकरो राजा संतोषी ब्राह्मणः शुचिः ॥ १४६ ॥ नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने । वत्सोऽपि स्तनपाने स्याच्छ्वा मृगग्रहणे शुचिः ॥ १४७ ॥ भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं भजेत्सती ॥ १४८ ॥ असारे खलु संसारे सारमेतच्चतुष्टयम् । काश्यां वासः सतां सङ्गो गङ्गाम्भः शंभुसेवनम् ॥ १४९ ॥ उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् । विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ १५० ॥ सप्तैतानि न पूर्यन्ते पूर्यमाणान्यनेकशः । ब्राह्मणोऽग्निर्यमो राजा पयोधिरुदरं गृहम् ॥ १५१ ॥ कल्पान्तवाससंक्षोभलङ्घिताशेषभूभृतः । स्थैर्यप्रसादमर्यादास्ता एव हि महोदधेः ॥ १५२ ॥ सपत्सरस्वती सत्यं संतानं सदनुग्रहः । सत्ता सुकृतसंभारः सकाराः सप्त दुर्लभाः ॥ १५३ ॥ अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः । किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १५४ ॥ परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ १५५ ॥ जलबिन्दुनिपातेन क्रमशः पूर्यते घटः । स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ १५६ ॥ सौवर्णानि सरोजानि निर्मातुं सन्ति शिल्पिनः । तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ १५७ ॥ साक्षरं पुरुषं दृष्ट्वा यो नरो नाभिमन्यते । बलीवर्दसमो लोके खुरशृङ्गविवर्जितः ॥ १५८ ॥ को न याति वशं लोके मुखे पिण्डेन पूरितः । मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १५९ ॥ दमो दानं दया चैव दाक्षिण्यं दयिता तथा । द्रविणं दीर्घजीवित्वं दकाराः सप्त दुर्लभाः ॥ १६० ॥ लुब्धानां याचकः शत्रुश्चौराणां चन्द्रमा रिपुः । जारस्त्रीणां पतिः शत्रुर्मूर्खाणां बोधको रिपुः ॥ १६१ ॥ अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥ १६२ ॥ परोपदेशवेलायां शिष्टाः सर्वे भवन्ति वै । विस्मरन्तीह शिष्टत्वं स्वकार्ये समुपस्थिते ॥ १६३ ॥ गुणिनां निर्गुणानां च दृश्यते महदन्तरम् । हारः कण्ठगतः स्त्रीणां नूपुराणि च पादयोः ॥ १६४ ॥ अलभ्यं लब्धुकामस्य जनस्य गतिरीदृशी । अलभ्येषु मनस्तापः संचितार्थो विनश्यति ॥ १६५ ॥ शत्रुवाक्यामृतं श्रुत्वा तेन सौहार्दमार्जवम् । नहि धीरेण कर्तव्यमात्मनः शुभमिच्छता ॥ १६६ ॥ शूराश्च कृतविद्याश्च रूपवत्यश्च योषितः । यत्र यत्र गमिष्यन्ति तत्र तत्र कृतादरः ॥ १६७ ॥ चत्वारो धनदायादा धर्माग्निनृपतस्कराः । तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः ॥ १६८ ॥ शीलभारवती कान्ता पुष्पभारवती लता । अर्थभारवती वाणी भजते कामपि श्रियम् ॥ १६९ ॥ पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया । शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ १७० ॥ उपभोक्तुं न जानाति श्रियं प्राप्यापि मानवः । आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ॥ १७१ ॥ आर्ता देवान्नमस्यन्ति तपः कुर्वन्ति रोगिणः । निर्धना दानमिच्छन्ति वृद्धा नारी पतिव्रता ॥ १७२ ॥ जामाता जठरं जाया जातवेदा जलाशयः । पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः ॥ १७३ ॥ जननी जन्मभूमिश्च जाह्नवी च जनार्दनः । जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥ १७४ ॥ सा

---

१ अस्थायित्वात् । २ अन्नेन, लक्षणया किञ्चिद्दानेनेति वक्तव्यम् । ३ हारे हि सूत्ररूपगुणसम्बन्ध इति तथोक्तिः । ४ धनभागलब्धारः । ५ लोकोत्तराम् । ६ शोभाम् । ७ प्रवहणम् । ८ अन्नत्यागरूपम् ।

श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः । तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥ १७५ ॥ सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् । स्वदारपरिहारेण परदारार्थिनो जनाः ॥ १७६ ॥ एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् । गतानुगतिको लोको न लोकः पारमार्थिकः ॥ १७७ ॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे । अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥ १७८ ॥ गुरुपत्न्यां निशाधीशो ब्राह्मण्यां पाकशासनः । गतः पञ्चेषुलक्ष्यत्वं का कथाऽन्यस्य देहिनः ॥ १७९ ॥ यस्मिन्रुष्टे भयं नास्ति तुष्टे नैव धनागमः । निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति ॥ १८० ॥ आलस्योपहता विद्या परहस्तगताः स्त्रियः । अल्पबीजं हतं क्षेत्रं हतं सैन्यमनायकम् ॥ १८१ ॥ निर्विषेणापि सर्पेण कर्तव्या महती फणा । विषमस्तु न चाप्यस्तु फटाटोपो भयंकरः ॥ १८२ ॥ एक एव पदार्थस्तु त्रिधा भवति वीक्षितः । कुणपः कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ १८३ ॥ नारी परमुखद्रष्ट्री कविरव्यवहारवित् । अपथ्यसेवी रोगी च कियद्भिर्नोपहस्यते ॥ १८४ ॥ अन्यदा भूषणं पुंसां क्षमा लज्जेव योषिताम् । पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ १८५ ॥ सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीतिवादिनम् । कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ १८६ ॥ शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । साधवो नहि सर्वत्र चन्दनं न वने वने ॥ १८७ ॥ प्रीतिर्लक्ष्मीर्व्ययः क्लेशः सा किं सा किं स किं स किम् । या लोभाद्या परद्रोहात्परार्थे यः परार्थकृत् ॥ १८८ ॥ मनो मधुकरो मेघो मानिनी मदनो मरुत् । माँ मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥ १८९ ॥ यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् । देहस्य नियतं भस्म देयं जन्मान्तरेऽप्यृणम् ॥ १९० ॥ असार एष संसारः सारं सारङ्गलोचना । तदर्थं धनमिच्छन्ति न त्यागेन धनेन किम् ॥ १९१ ॥ सत्यानुसारिणी लक्ष्मीः कीर्तिस्त्यागानुसारिणी । अभ्याससारिणी विद्या बुद्धिः कर्मानुसारिणी ॥ १९२ ॥ उपाध्यायश्च वैद्यश्च ऋतुकाले वरस्त्रियः । सूतिका दूतिका नौका कार्यान्ते ते च शष्पवत् ॥ १९३ ॥ विशाखान्ता गता मेघा प्रसूतान्तं च यौवनम् । प्रणामान्तः सतां कोपो याचनान्तं हि गौरवम् ॥ १९४ ॥ कृतान्तपाशबद्धानां दैवोपहतचेतसाम् । बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १९५ ॥ सदयं हृदयं यस्य भाषितं सत्यभूषितम् । कायः परहितो यस्य कलिस्तस्य करोति किम् ॥ १९६ ॥ अपत्यदर्शनस्यार्थे प्राणानपि च या त्यजेत् । त्यजन्ति तामपि क्रूरा मातरं दारहेतवे ॥ १९७ ॥ पुत्रसूः पाककुशला पवित्रा च पतिव्रता । पद्माक्षी पञ्चपैर्नारी भुवि संयाति गौरवम् ॥ १९८ ॥ दातुरुन्नतचित्तस्य गुणयुक्तस्य चार्थिनः । दुर्लभः खलु संयोगः सद्बीजक्षेत्रयोरिव ॥ १९९ ॥ आज्ञामात्रफलं राज्यं ब्रह्मचर्यफलं तपः । परिज्ञानफलं विद्या दत्तभुक्तफलं धनम् ॥ २०० ॥ अप्रियं नहि भाषेत न विरुध्येत केनचित् । कार्यसिद्धिं समीहेत कार्यभ्रंशो हि मूर्खता ॥ २०१ ॥ प्रभुत्वं च वयो वीर्यं धनं चैव विनश्वरम् । अत एषां वशं प्राप्य न प्रमत्तो भवेत्सुधीः ॥ २०२ ॥ शत्रुमुन्मूलयेदेव मित्रं संवर्धयेत्तथा । शत्रौ नष्टे प्रिये वृद्धे सुखम्भवति निश्चलम् ॥ २०३ ॥ आयुर्वित्तं गृह-

---

१ तथेति यथेति च शेषः । २ चन्द्रः । ३ गौतमपत्न्या महल्यायाम् । ४ इन्द्रः । ५ शवः । ६ निर्लज्जत्वम् । ७ लक्ष्मीः । ८ मृगनयना स्त्री । ९ त्याज्या इति शेषः । १० विशाखानाम नक्षत्रं, तदवध्येव वृष्टेः प्रायः सम्भवात् । ११ स्त्रीप्रेमबन्धनं प्राप्य न तथा दुर्धियो मातरमप्याद्रियन्ते । १२ पुत्रजननी ।

च्छिद्रं मन्त्रमौषधमैथुने । दानं मानापमानौ च नव गोप्यानि कारयेत् ॥ २०४ ॥ अग्नौ दग्धं जले मग्नं हृतं तस्करपार्थिवैः । तत्सर्वं दानमित्याहुर्यदि क्लैव्यं न भाषते ॥ २०५ ॥ संभ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् । विनयो वंशमाख्याति देशमाख्याति भाषितम् ॥ २०६ ॥ किं विद्यया किं तपसा किं योगेन श्रुतेन च । किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ २०७ ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ २०८ ॥ त्यजेत्स्वामिनमत्युग्रमत्युग्रात्कृपणं त्यजेत् । कृपणादविशेषज्ञं तस्माच्च कृतशासनम् ॥ २०९ ॥ पात्रापात्रविवेकोऽस्ति धेनुपन्नगयोरिव । तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥ २१० ॥ शनैर्विद्यां शनैरर्थानारोहेत्पर्वतं शनैः । शनैरध्वसु वर्तेत योजनान्न परं व्रजेत् ॥ २११ ॥ द्यूतं पानं समासक्तिः खलमैत्री च दुर्वचः। आलस्यं चैव मूढत्वं दूरं विद्वान्परित्यजेत् ॥ २१२ ॥ अतिथिर्बालकः पत्नी जननी जनकस्तथा । पञ्चैते गृहिणः पोष्या इतरे च स्वशक्तितः ॥ २१३ ॥ गाढं गुणवती विद्या न मुदे विनयं विना । मूर्खताऽपि मुदे भूयान्महत्सु विनयान्विता ॥ २१४ ॥ अहो साहजिकं प्रेम दूरादपि विराजते । चकोरनयनद्वन्द्वमाह्लादयति चन्द्रमाः ॥ २१५ ॥ साक्षरा विपरीताश्चेद्राक्षसा एव केवलम् । सरसो विपरीतश्चेत्सरसत्वं न मुञ्चति ॥ २१६ ॥ यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा । परापवादसस्येभ्यो गां चरन्तीं निवारय ॥ २१७ ॥ एकस्तपो द्विरध्यायी त्रिभिर्गीतं चतुः पथम् । सप्त पञ्च कृषीणां च सङ्ग्रामो बहुभिर्जनैः ॥ २१८ ॥ काकः पक्षिषु चाण्डालः स्मृतः पशुषु गर्दभः । नराणां कोऽपि चाण्डालः स्मृतः सर्वेषु निन्दकः ॥ २१९ ॥ दातृत्वं प्रियवक्तृत्वं धीरत्वमुचितज्ञता । अभ्यासेन न लभ्येयुश्चत्वारः सहजा गुणाः ॥ २२० ॥ लोभमूलानि पापानि रसमूलानि व्याधयः । इष्टमूलानि शोकानि त्रीणि त्यक्त्वा सुखी भव ॥ २२१ ॥ प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ २२२ ॥ सुखार्थी त्यजते विद्यां विद्यार्थी त्यजते सुखम् । सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥ २२३ ॥ अन्नं दानात्परं दानं विद्यादानमतः परम् । अन्नेन क्षणिका तृप्तिर्यावज्जीवं च विद्यया ॥ २२४ ॥ दूरस्थाः पर्वता रम्या वेश्या च मुखमण्डने । युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥ २२५ ॥ माता यदि विषं दद्याद्विक्रीणाति पिता सुतम् । राजा हरति सर्वस्वं तत्र का परिदेवना ॥ २२६ ॥ अहेरिव गणाद्भीतः परान्नाच्च विषादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ २२७ ॥ अवज्ञात्रुटितं प्रेम नवीकर्तुं क ईश्वरः । सन्धिं न याति स्फुटितं लाक्षालेपेन मौक्तिकम् ॥ २२८ ॥ संनिकर्षोऽत्र मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा यथाऽन्याम्भस्तत्रत्यो याति शुद्धये ॥ २२९ ॥ लेखनी पुस्तकं रामा परहस्ते गता गता । कदाचित्पुनरायाता भ्रष्टा मृष्टा च चुम्बिता ॥२३०॥ पूर्वदत्ता तु या विद्या पूर्वदत्तं तु यद्धनम् । पूर्वदत्ता तु या भार्या साग्रे धावति धावति ॥ २३१ ॥ श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् । श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च विन्दति ॥ २३२ ॥ मनो धावति सर्वत्र मदोन्मत्तगजेन्द्रवत् । ज्ञानाङ्कुशसमा बुद्धिस्तस्य निश्चलते मनः ॥ २३३ ॥ इच्छेच्चेद्विपुलां मैत्रीं त्रीणि तत्र न कारयेत् । वाग्वादमर्थसंबन्धं

---

१ एकान्तवासित्वादिना । २ जन्मसिद्धम् । ३ वाणीं धेनुं च । ४ नृषु कोपी च चाण्डाल इति सुवचम् । कोऽपीति पाठे तु कश्चिदेव पापिष्ठत्वेनानिर्देश्यतामेति, श्लेषमहिम्ना कोपी चासौ चाण्डाल इति चार्थः । ५ राज्यारम्भे । ६ शोको विलपनं वा । ७ गङ्गा तीरवासी जनः । ८ चोरिता । ९ लभते ।

तत्पत्नीपरिभाषणम् ॥ २३४ ॥ अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम् । अमृतं राहवे मृत्युर्विषं रुद्रस्य भूषणम् ॥ २३५ ॥ पण्डिते चैव मूर्खे च बलवत्यपि दुर्जने । ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ २३६ ॥ सङ्ग्रामे सुभटेन्द्राणां कवीनां कविमण्डले । दीप्तिर्वा दीप्तिहानिर्वा मुहूर्तादेव जायते ॥ २३७ ॥ विषस्य विषयाणां हि दृश्यते महदन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ २३८ ॥ पुराणान्ते श्मशानान्ते मैथुनान्ते च या मतिः । सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ २३९ ॥ आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् । गर्भस्थं केतकीपुष्पमामोदेन हि षट्पदाः ॥ २४० न ज्ञातुं नाप्यनुज्ञातुं नेक्षितुं नाप्युपेक्षितुम् । स्वजनः स्वजने जातं विपत्पातं समीहते ॥ २४१ ॥ प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम् । भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥ २४२ ॥ उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते । चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ २४३ ॥ अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् । गाढशोकप्रहाराणामचिन्तैव महौषधम् । ॥ २४४ ॥ अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा । निमित्तादपराद्धेषोर्धानुष्कस्यैव वल्गितम् ॥ २४५ ॥ शंभुः श्वेतार्कपुष्पेण चन्द्रमा वस्त्रतन्तुना । अच्युतः स्मृतिमात्रेण साधवः करसंपुटैः ॥ २४६ ॥ अकृत्वा पौरुषं या श्रीर्विकासिन्यपि किं तया । जरद्गवोऽपि चाश्नाति दैवादुपगतं तृणम् ॥ २४७ ॥ मन्दाकिनीपयःपानं मन्दाक्षीमुखचुम्बनम् । मन्दरोपवनक्रीडा मन्दानुष्ठानतः कुतः ॥ २४८ ॥ दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते । यदन्नं भक्षयेन्नित्यं जायते तादृशी प्रजा ॥ २४९ ॥ मौनं कालविलम्बश्च प्रयाणं भूमिदर्शनम् । भ्रुकुट्यन्यमुखी वार्ता नकारः षड्विधः स्मृतः ॥ २५० ॥ अक्षराणि परीक्ष्यन्तामम्बराडम्बरेण किम् । शंभुरम्बरहीनोऽपि सर्वज्ञः किं न जायते ॥ २५१ ॥ दोषोऽपि गुणतां याति प्रभोर्भवति चेत्कृपा । अङ्गहीनोऽपि सूर्येण सारथ्ये योजितोऽरुणः ॥ २५२ ॥ उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् । नीचमल्पप्रदानेन स्वेष्टं धर्मेण योजयेत् ॥ २५३ ॥ अकुले पतितो राजा मूर्खपुत्रो हि पण्डितः । निर्धनस्य धनप्राप्तिस्तृणवन्मन्यते जगत् ॥ २५४ ॥ लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम् । ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुभार्यकः ॥ २५५ ॥ आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् । पृथक्शय्या च नारीणामशस्त्रवध उच्यते ॥ २५६ ॥ प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम् । आत्मशक्तिसमं कोपं कुर्वाणो न विनश्यति ॥ २५७ ॥ पठकः पाठकश्चैव ये चान्ये शास्त्रपाठकाः । सर्वे व्यसनिनो ज्ञेया यः क्रियावान्स पण्डितः ॥२५८॥ पण्डितैः सह साङ्गत्यं पण्डितैः सह संकथाम् । पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ २५९ ॥ शीलं शौर्यमनालस्यं पाण्डित्यं मित्रसंग्रहः । अचोरहरणीयानि पञ्चैतान्यक्षयो निधिः ॥ २६० ॥ मातृवत्परदाराणि परद्रव्याणि लोष्टवत् । आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ २६१ ॥ धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २६२ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति । गुणधर्मविहीनो यो निष्फलं तस्य जीवितम् ॥ २६३ ॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते ॥ २६४ ॥ षट्पदः पुष्पमध्यस्थो यथा सारं समुद्धरेत् । तथा सर्वेषु शास्त्रेषु सारं गृह्णन्ति पण्डिताः ॥ २६५ ॥ गुणान्भूषयते रूपं शीलं भूषयते कुलम् ।

---

१ पुराणकथाश्रवणावसरे । २ परिणामे वृद्धिं प्रयास्यन्तीं सम्पत्तिम् । ३ गङ्गा- । ४ सङ्गः ५ परस्परमालापः ।

सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ २६६ ॥ अगुणस्य हतं रूपमशीलस्य हतं कुलम् । असिद्धेस्तु हता विद्या अभोगस्य हतं धनम् ॥ २६७ ॥ दिवा पश्यति नोलूको काको नक्तं न पश्यति । अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥ २६८ ॥ यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ २६९ ॥ मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः । भवन्ति तं विना नैव यथा सङ्ख्याङ्कबिन्दवः ॥ २७० ॥ वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत् । स्थायीभवति चात्यन्तं रङ्गः शुक्लपटे यथा ॥ २७१ ॥ पिण्डे पिण्डे[3] मतिर्भिन्ना कुण्डे कुण्डे नवं पयः । जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ॥ २७२ ॥ गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारती कथा । इष्टा भार्या प्रियं मित्रमपूर्वाणि दिने दिने ॥ २७३ ॥ विद्यया सह मर्तव्यं कुशिष्याय न दापयेत् । तथाऽपि दीयते विद्या पश्चात्संजायते रिपुः ॥ २७४ ॥ मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम् । तन्मध्ये भूतसंचारो यद्वा तद्वा भविष्यति ॥ २७५ ॥ पुस्तकेषु च या विद्या परहस्तेषु यद्धनम् । सङ्ग्रामे[4] च गृहे सैन्यं तिस्रः पुंसां विडम्बनाः ॥ २७६ ॥ असावधाने पाण्डित्यं क्रयक्रीतं च मैथुनम् । भोजनं च पराधीनं तिस्रः पुंसां विडम्बनः ॥ २७७ ॥ पादेन क्रम्यते पन्था मानहीनं च भोजनम् । अविवेकिप्रभोः सेवा पातकं किमतः परम् ॥ १७८ ॥ तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परसंतोषैः खलाः परविपत्तिषु ॥ २७९ ॥ प्रत्यक्षे[5] गुरवः स्तुत्या परोक्षे मित्रबान्धवाः । कर्मान्ते दासभृत्याश्च पुत्रा नैव तथा स्त्रियः ॥ २८० ॥ विनयं राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम् । अनृतं द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कैतवम् ॥ २८१ ॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च । आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥२८२॥ मुहूर्तमपि जीवेत्सन्नरः शुक्लेन कर्मणा । न कल्पमपि कृष्णेन लोकद्वयविरोधिना ॥२८३॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ २८४ ॥ स्वभावेन हि तुष्यन्ति देवाः सत्पुरुषाः पिता । ज्ञातयस्त्वन्नपानेन वाक्प्रदानेन पण्डिताः ॥ १८५ ॥ नराणां नापितो धूर्तः पक्षिणां चैव वायसः । चतुष्पदां[6] श्रृगालस्तु स्वेच्छाचारी तपस्विनाम् ॥ २८६ ॥ चाण्डालः पक्षिणां काकः पशूनां चैव कुक्कुरः । चाण्डालो मुनिषु क्रोधश्चाण्डालो नृषु[7] निन्दकः ॥२८७॥ भ्रमन्संपूज्यते चक्रं भ्रमन्संपूज्यते द्विजः । भ्रमन्संपूज्यते राजा स्त्री भ्रमन्ती विनश्यति ॥२८८॥ न पश्यति च जन्मान्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥२८९॥ स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते । स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते ॥ २९० ॥ खड्गमूलं भवेद्राज्यमस्त्रीमूलं स्थिरं भवेत् । प्रजामूलं भवेदर्थो वैरमूलं विनश्यति ॥ २९१ ॥ ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी । अविनीता रिपुर्भार्या पुत्रः शत्रुरपण्डितः ॥ २९२ ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः । नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥ २९३ ॥ विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च । व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ २९४ ॥ नास्ति

---

१ दुष्टस्वभावस्य । २ रात्रौ । ३ प्रतिपिण्डमित्यर्थः, प्रतिशरीरमित्यभिप्रायः । ४ सङ्ग्रामे सुदूरं प्रवर्तमाने सति । ५ 'दोषा वाच्या गुरोरपि' न्यायेनापि गुरूणां दोषा न प्रत्यक्षं वाच्याः । यद्यपि परोक्षेऽपि नामी निन्द्याः, किंतु सति तादृशे प्रसङ्ग इति यथोक्तम् । ६ पशूनाम् । ७ 'कोपो मुनीनां चाण्डालः सर्वं चाण्डालनिन्दकः ।' इति पाठान्तरे सर्वेत्यादिर्विधेयाविमर्षांशभवन्मतयोगदुष्टः । कोप इत्यादिरपि पञ्चमवर्णस्य ह्रस्वत्वाभावाद् दुष्टः पाठः ।

मेघसमं तोयं नास्ति चात्मसमं बलम् । नास्ति चक्षुःसमं तेजो नास्ति धान्यसमं प्रियम् ॥२९५॥ अधना धनमिच्छन्ति वादमिच्छन्ति गर्विताः । मानवाः स्वर्गमिच्छन्ति मोक्षमिच्छन्ति पण्डिता१ः ॥२९६॥ सत्येन धार्यते पृथ्वी सत्येन तपते रविः । सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥ २९७ ॥ हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् । श्रोत्रस्य भूषणं शास्त्रं भूषणैः किं प्रयोजनम् ॥ २९८ ॥ युक्तमुक्तं पुराविद्भिश्चिन्ता जूर्तिः२ सुदारुणा । न भेषजैर्लङ्घनैर्वा न चान्यैरुपशाम्यति ॥ २९९ ॥ आवासः३ क्रियतां गाङ्गे४ पापहारिणि वारिणि । स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ३०० ॥ सुभाषितरसास्वादः प्रौढस्त्रीसंगमस्तथा । सेवा विवेकिनो राज्ञो दुःखनिर्मूलनं त्रयम् ॥ ३०१ ॥ ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते दुःखभागिनः ॥ ३०२ ॥ नवं वस्त्रं नवं छत्रं नव्या स्त्री नूतनं गृहम् । सर्वत्र नूतनं शस्तं सेवकान्ने पुरातने ॥ ३०३ ॥ वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते । सर्वत्रैवं विचारेण नाहारे न च मैथुने ॥ ३०४ ॥ अतिदूरपथश्रान्ताश्छायां यान्ति च शीतलाम् । शीतलाश्च पुनर्यान्ति का कस्य परिदेवना ॥ ३०५ ॥ अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठके । स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसो हि मूर्खता ॥ ३०६ ॥ कृतस्य करणं नास्ति मृतस्य मरणं तथा । गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥ ३०७ ॥ नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि । कुशकण्टकविद्धोऽपि प्राप्तकालो न जीवति ॥३०८॥ निमग्नस्य पयोराशौ पर्वतात्पतितस्य च । तर्क्षकेनापि६ दष्टस्य आयुर्मर्माणि रक्षति ॥ ३०९ ॥ नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः । नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ॥ ३१० ॥ कवयः किं न पश्यन्ति किं न भक्षन्ति वायसाः । मद्यपाः किं न जल्पन्ति किं न कुर्वन्ति योषितः ॥ ३११ ॥ वह्निज्वालेव गृहिणी रक्षणीया प्रयत्नतः । वृद्धिक्षयविकाराभ्यां स्वाश्रयक्षेममिच्छता ॥ ३१२ ॥ एकस्मिन्विजिते चित्ते विजितं सकलं जगत् । अजिते तु पुनस्तस्मिन्न पुत्रोऽपि विनिर्जितः ॥ ३१३ ॥ अस्थिरं जीवितं लोके चास्थिरे धनयौवने । अस्थिराः पुत्रदाराश्च धर्मकीर्तिद्वयं स्थिरम् ॥ ३१४ ॥ लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् । प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ ३१५ ॥ यो यस्योपकृतेर्हेतुः स क्षुद्रोऽपि महीयते । आखुं विघ्नेश्वरः स्तौति मयूरं च षडाननः ॥ ३१६ ॥ श्यामा मन्थरगामिन्यः पीनोन्नतपयोधराः । महिष्यश्च महिष्यश्च सन्ति पुण्यवतां गृहे ॥ ३१७ ॥ पदे पदे च रत्नानि योजने रसकूपिका । भाग्यहीना न पश्यन्ति बहुरत्ना वसुंधरा ॥ ३१८ ॥ राजा वेश्या यमो वह्निः प्राघूर्णो७ बालयाचकौ । परदुःखं न जानन्ति ह्यष्टमो ग्रामकण्टकः ॥ ३१९ ॥ क्रोधो मूलमनर्थानां क्रोधः संसारबन्धनम् । धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ ३२० ॥ प्रेम सत्यं तयोरेव ययोर्योगवियोगयोः । वत्सरा वासरीयन्ति वत्सरीयन्ति वासराः ॥ ३२१ ॥ किं धनेन कुबेरस्य सुभाषितगुणेन किम् । वाचस्पतेश्च दीपेन रवेः सिन्धोश्च बिन्दुना ॥ ३२२ ॥ मधुना सिञ्चयेन्निम्बं निम्बः किं मधुरायते । जातिस्वभावदोषोऽयं कटुकत्वं न मुञ्चति ॥ ३२३ ॥ कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि । अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥ ३२४ ॥ अग्निहोत्रं गृहं क्षेत्रं मित्रं भार्यां सुतं शिशुम् । रिक्तपाणिर्न पश्येच्च राजानं देवतां गुरुम् ॥ ३२५ ॥ उत्तमं स्वार्जितं भुक्तं मध्यमं पितुरार्जितम् । कनिष्ठं भ्रातृवित्तं च स्त्रीवित्तमधमाधमम् ॥ ३२६ ॥ अलसस्य

---

१ ज्ञानिनः । २ ज्वरः । ३ निवासः । ४ गङ्गातटे इति भावः । ५ वैराग्याभावे सम्पत्त्यां च सत्यामिति शेषः । ६ विषधरविशेषेण । ७ तुलायः । ८ सुन्दर्यः ।

कुतो विद्या निर्विद्यस्य कुतो धनम् । निर्धनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥ ३२७ ॥
अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते । अनाश्रया न शोभन्ते पण्डिता वनिता लताः ॥ ३२८ ॥
विप्रार्थेषु धनक्षीणं स्वदारगतयौवनम् । स्वामिकार्ये हतप्राणमन्ते तिष्ठति माधवः ॥ ३२९ ॥
न विश्वसेदमित्रस्य[1] मित्रस्यापि न विश्वसेत् । कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥ ३३० ॥
अभ्रच्छाया तृणाग्निश्च खले प्रीतिः स्थले जलम् । वेश्यासक्तिः कुमित्रं च षडेते बुद्बुदोपमाः ॥ ३३१ ॥
प्रमदा मदिरा लक्ष्मीर्विज्ञेया त्रिविधा सुरा । दृष्ट्वैवोन्मादयत्येका पीता चान्यातिसंचयात् ॥ ३३२ ॥
राजपत्नी गुरोः पत्नी भ्रातृपत्नी तथैव च । श्वश्रूश्च जननी चेति पञ्चैता मातरः स्मृताः ॥ ३३३ ॥
इक्षुदण्डास्तिलाः शूद्राः कामिनी हेम मेदिनी । दधिचन्दनताम्बूलमित्येषां मर्दनं शुभम् ॥ ३३४ ॥
पराधीनं वृथा जन्म परस्त्रीषु वृथा सुखम् । परगेहे वृथा लक्ष्मीर्विद्या या पुस्तके वृथा ॥ ३३५ ॥
असंमाने तपोवृद्धिः संमानाच्च तपःक्षयः । पूजया पुण्यहानिः स्यान्निन्दया[2] सद्गतिर्भवेत् ॥ ३३६ ॥
ध्यानमस्त्रं बकानां च मोहोऽस्त्रं जारसुभ्रुवाम्[3] । खलानां साधुता चास्त्रं परप्राणान्तकृन्मतम् ॥ ३३७ ॥
ललितान्तानि गीतानि प्रसूतान्तं[4] च यौवनम् । विशाखान्तानि[5] मेघानि तक्रान्तं खलु भोजनम् ॥ ३३८ ॥
धातुः परीक्षा दुर्भिक्षे स्त्रीपरीक्षा च निर्धने । युद्धे शूरपरीक्षा च मृत्योरत्यन्तमापदि ॥ ३३९ ॥
अन्यमाश्रयते लक्ष्मीस्त्वन्यमन्यं च मेदिनी । अनन्यगामिनी पुंसां कीर्तिरेका पतिव्रता ॥ ३४० ॥
न कालः खड्गमुद्यम्य शिरः कृन्तति कस्यचित् । कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ३४१ ॥
जानन्नपि जनो दैवात्प्रकरोति विगर्हितम् । न कर्म गर्हितं लोके कस्यचिद्रोचते कृतम् ॥ ३४२ ॥
सद्भावेन जयेन्मित्रं सद्भावेन च बान्धवान् । स्त्रीभृत्यान्दानमानाभ्यां दाक्षिण्येनेतरं जनम् ॥ ३४३ ॥
संतोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने । त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥ ३४४ ॥
न पुत्रात्परमो लाभो न भार्यायाः परं सुखम् । न धर्मात्परमं मित्रं नानृतात्पातकं परम् ॥ ३४५ ॥
ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् । अपि शूद्रं च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥ ३४६ ॥
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि । सर्वदा सर्वयत्नेन पुत्रे शिष्यवदाचरेत् ॥ ३४७ ॥
सुकुले योजयेत्कन्यां पुत्रं विद्यासु योजयेत् । व्यसने योजयेच्छत्रुमिष्टं धर्मेण योजयेत् ॥ ३४८ ॥
नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः । पृथिव्या भूषणं राजा विद्या सर्वस्य भूषणम् ॥ ३४९ ॥
लालने बहवो दोषास्ताडने बहवो गुणाः । तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ ३५० ॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः । तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ३५१ ॥
सकृद्दुष्टं च मित्रं यः पुनः संधातुमिच्छति । स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३५२ ॥
न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । कारणेन हि जायन्ते मित्राणि रिपवस्तथा ॥ ३५३ ॥
हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः । शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः ॥ ३५४ ॥ आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि । आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३५५ ॥ परदारान्परद्रव्यं परीवादं परस्य च । परीहासं गुरोः स्थाने चापल्यं च विवर्जयेत् ॥ ३५६ ॥ अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् ।

---

१ शत्रोः । २ यस्य यो निन्दकः स तस्य पापान्यादत्त इति स्वपापेषु परैर्गृहीतेषु सद्गतिः शास्त्रदृष्ट्या सिद्धा, आत्मकृतया महात्मत्वख्यात्या प्रतिष्ठारूपा सद्गतिः । यद्वाऽसद्गतिरिति च्छेदः । निरादररूपा दुर्गतिरिति भावः । ३ वेश्यानाम् । ४ सन्तानसम्पत्त्युत्तरं प्राक्तनसम्भोगानन्दानुपलब्धेः । ५ विशाखा नाम नक्षत्रं तत्र यावन्नसूर्यसङ्क्रमणं स्यात्तदवधीति भावः । तत्र सूर्यसङ्क्रमणं हि प्रायोमार्गे सम्भवति ।

यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ ३५७ ॥ शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः । बुद्धिप्रारब्धकार्यस्य नास्ति किंचन दुष्करम् ॥ ३५८ ॥ असूयया हतेनैव पूर्वोपायोद्यमैरपि । कर्तॄणां गृह्यते संपत्सुहृद्भिर्मन्त्रिभिस्तथा ॥ ३५९ ॥ अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे । परापवादभीरूणां दूरतो यान्ति सम्पदः ॥ ३६० ॥ आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ३६१ ॥ न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः । एतदेव हि पाण्डित्यं न स्वल्पाद्भूरिनाशनम् ॥ ३६२ ॥ अफलानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥ ३६३ ॥ किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः । इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥ ३६४ ॥ देहे पातिनि का रक्षा यशो रक्ष्यमपातवत् । नरः पतितकायोऽपि यशःकायेन जीवति ॥ ३६५ ॥ निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति । तस्माद्देहेष्वनित्येषु कीर्तिमेकामुपार्जय ॥ ३६६ ॥ बुधाग्रे न गुणान्ब्रूयात्साधु वेत्ति यतः स्वयम् । मूर्खाग्रेऽपि च न ब्रूयाद्बुधप्रोक्तं न वेत्ति सः ॥ ३६७ ॥ यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः । तावदात्महितं कुर्यात् प्राणान्ते किं करिष्यसि ॥ ३६८ ॥ यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स मूढः शुभं विन्देत्प्रत्युत स्याद्विपत्तिभाक् ॥ ३६९ ॥ मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः । तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ ३७० ॥ अभिद्रोहेण भूतानामर्जयन्गत्वरीः श्रियः । उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ ३७१ ॥ या गम्याः सत्सहायानां यासु खेदो भयं यतः । तासां किं यन्न दुःखाय विपदामिव सम्पदाम् ॥ ३७२ ॥ दुरासदानरीनुग्रान्धृतेर्विश्वासजन्मनः । भोगान्भोगानिवाहेयान[1]ध्यास्याप्न दुर्लभा ॥ ३७३ ॥ नान्तरज्ञा श्रियो जातु प्रियैरासां न भूयते । आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ ३७४ ॥ कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः । साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव सम्पदः ॥ ३७५ ॥ कृतवानन्यदेहेषु कर्ता च विधुरं मनः । अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥ ३७६ ॥ शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः । विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥ ३७७ ॥ तदा रम्याण्यरम्याणि प्रियाः शल्यं तदाऽसवः । तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ ३७८ ॥ युक्तः प्रमाद्यसि हितादपेतः परितप्यसे । यदि नेष्टात्मनः पीडा मा सञ्जि भवता जने ॥ ३७९ ॥ जन्मिनोऽस्य स्थितिं विद्वांल्लक्ष्मीमिव चलाचलाम् । भवान्मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः ॥ ३८० ॥ अविज्ञातप्रबन्धस्य वचो वाचस्पतेरिव । व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ ३८१ ॥ कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी । तथाऽपि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ३८२ ॥ मनसा चिन्तितं कर्म वचसा न प्रकाशयेत् । अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते ॥ ३८३ ॥ कुदेशं च कुवृत्तिं च कुभार्यां कुनदीं तथा । कुद्रव्यं च कुभोज्यं च वर्जयेत्तु विचक्षणः ॥ ३८४ ॥ अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च । अभावे सति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥ ३८५ ॥ माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी । अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥ ३८६ ॥ कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम् । विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ३८७ ॥ अविद्यं जीवनं शून्यं दिक्शून्या चेदबान्धवा । पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥ ३८८ ॥ अदाता वंशदोषेण कर्मदोषाद्दरिद्रता । उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ३८९ ॥ अतिदर्पे हता लङ्का अतिमाने च कौरवाः । अतिदाने बलि-

---

१ विद्यादिसम्भवात् । २ सर्पसम्बन्धिना ।

वैद्यः सर्वसत्यन्तगर्हितम् ॥ ३९० ॥ वस्त्रहीनस्त्वलंकारो घृतहीनं च भोजनम् । स्तनहीना च या
नारी विद्याहीनं च जीवनम् ॥ ३९१ ॥ पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः । हितप्रयोजनं मित्रं
धनं सर्वप्रयोजनम् ॥ ३९२ ॥ दुर्लभं संस्कृतं वाक्यं दुर्लभः क्षेमकृत्सुतः । दुर्लभा सदृशी भार्या
दुर्लभः स्वजनः प्रियः ॥ ३९३ ॥ अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः । अशोच्या विधवा
नारी पुत्रपौत्रप्रतिष्ठिता ॥ ३९४ ॥ अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् । निराहाराः प्रजाः
शोच्याः शोच्यं राज्यमराजकम् ॥ ३९५ ॥ कुलीनैः सह संपर्कं पण्डितैः सह मित्रताम् । ज्ञातिभिश्च समं
मेलं कुर्वाणो न विनश्यति ॥ ३९६ ॥ कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः ।
निधनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥ ३९७ ॥ तस्करस्य कुतो धर्मो दुर्जनस्य कुतः
क्षमा । वेश्यानां च कुतः स्नेहः कुतः सत्यं च कामिनाम् ॥ ३९८ ॥ प्रेषितस्य कुतो मानं कोप-
नस्य कुतः सुखम् । कुतः स्त्रीणां सतीत्वं च कुतो मैत्री खलस्य च ॥ ३९९ ॥ दुर्बलस्य बलं राजा
बालानां रोदनं बलम् । बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ ४०० ॥ यो ध्रुवाणि परित्यज्या-
ध्रुवं कर्म्म निषेवते । ध्रुवाणि तस्य नश्यन्त्यध्रुवं तन्नष्टमेव च ॥ ४०१ ॥ शुष्कं मांसं स्त्रियो वृद्धा
सतां निन्दाऽसतां रतिः । प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ४०२ ॥ सद्योमांसं नवान्नं च
बाला स्त्री क्षीरभोजनम् । घृतमुष्णोदकं चैव सद्यः प्राणकराणि षट् ४०३ ॥ सिंहादेकं बकादेकं षट्
शुन स्त्रीणि गर्दभात् । वायसात्पञ्च शिक्षेच्च चत्वारि कुक्कुटादपि ॥ ४०४ ॥ प्रभूतमल्पकार्यं वयो
नरः कर्तुमिच्छति । सर्वारम्भेण यत्कुर्यात्सिंहादेकं प्रकीर्तितम् ॥ ४०५ ॥ सर्वेन्द्रियाणि संयम्य बक-
वत्पतितो जनः । कालदेशोपपन्नानि सर्वकार्याणि साधयेत् ॥ ४०६ ॥ बह्वाशी स्वल्पसंतुष्टः सुनिद्रः
शीघ्रचेतनः । प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥ ४०७ ॥ अविश्रामं वहेद्भारं शीतोष्णं
च न विन्दति । ससंतोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ ४०८ ॥ गूढमैथुनधार्ष्ट्यं च काले
चालयसंग्रहम् । अप्रमादमनालस्यं पञ्च शिक्षेत वायसात् ॥ ४०९ ॥ युद्धं च प्रातरुत्थानं भोजनं
सह बन्धुभिः । स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥ ४१० ॥ कोऽतिभारः समर्थानां किं
दूरं व्यवसायिनाम् । को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ४११ ॥ आपदां कथितः
पन्था इन्द्रियाणामसंयमः । तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ॥ ४१२ ॥ न च विद्यासमो
बन्धुर्न च व्याधिसमो रिपुः । न चापत्यसमः स्नेहो न च दैवात्परं बलम् ॥ ४१३ ॥ समुद्रावरणा
भूमिः प्राकारावरणं गृहम् । नरेन्द्रावरणा देशाश्चरित्रावरणाः स्त्रियः ॥ ४१४ ॥ घृतकुम्भसमा नारी
तप्ताङ्गारसमः पुमान् । तस्माद्घृतं च वह्निं च नैकत्र स्थापयेद्बुधः ॥ ४१५ ॥ आहारो द्विगुणः स्त्रीणां
बुद्धिस्तासां चतुर्गुणा । षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ४१६ ॥ जीर्णमन्नं प्रशंसन्ति भार्यां
च गतयौवनाम् । रणात्प्रत्यागतं शूरं सस्यं च गृहमागतम् ॥ ४१७ ॥ असंतुष्टा द्विजा नष्टाः संतु-
ष्टाश्च महीभुजः । सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ४१८ ॥ अवंशपतितो राजा
मूर्खपुत्रश्च पण्डितः । अधनश्च धनं प्राप्तस्तृणवन्मन्यते जगत् ॥ ४१९ ॥ पुस्तकस्था तु या विद्या
परहस्तगतं धनम् । कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ४२० ॥ पादपानां भयं वातात्प-
द्मानां शिशिराद्भयम् । पर्वतानां भयं वज्रात्साधूनां दुर्जनाद्भयम् ॥ ४२१ ॥ यस्य क्षेत्रं नदीतीरे भार्या

---

१ पतितस्तना । २ पिण्डदानार्थमावश्यकः । ३ कुक्कुरात् । ४ बहुभोजनकारी ।
५ सस्याद्युत्पत्तिस्थानं वा गृहम् ।

वापि परप्रिया । पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥ ४२२ ॥ असंभाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते । शिला तरति पानीये गीतं गायति वानरः ॥ ४२३ ॥ सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणि । भार्या भर्तुः प्रिया यस्य तस्य नित्योत्सवं गृहम् ॥ ४२४ ॥ हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः । हता रूपवती वन्ध्या हतं सैन्यमनायकम् ॥ ४२५ ॥ किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते । नग्नक्षपणके[1] देशे रजकः किं करिष्यति ॥ ४२६ ॥ अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् । गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ४२७ ॥ आयुः कर्म च वित्तं च विद्या निधनमेव[2] च । पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः[3] ॥४२८॥ यदभावि न तद्भावि भावि चेन्न तदन्यथा । इति चिन्ताविषघ्नोऽयमगदः[4] किं न पीयते ॥४२९॥ नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत् । न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ ४३० ॥ शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥४३१ ॥ उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् । मरणव्याधिशोकानां किमद्य निपतिष्यति ॥ ४३२ ॥ अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा । यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥ ४३३ ॥ न संशयमनारुह्य नरो भद्राणि[5] पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ४३४ ॥ गतानुगतिको लोकः कुट्टिनीमुपदेशिनीम् । प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम्[6] ॥४३५ ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ ४३६ ॥ प्रत्याख्याने[7] च दाने च सुखदुःखे प्रियाप्रिये । आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ४३७ ॥ अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया । दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना॥ ४३८॥ शङ्काभिः सर्वमाक्रान्तमन्नं पानं च भूतले । प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ॥ ४३९ ॥ सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः । छेत्तारः संशयानां च क्लिश्यन्ते लोभमोहिताः ॥ ४४० ॥ षड्दोषाः पुरुषेणेह हार्तव्या[8] भूतिमिच्छता । निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ४४१ ॥ माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् । कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ४४२ ॥ जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् । व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥ ४४३ ॥ तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता[9] । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥४४४॥आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् । भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥ ४४५ ॥ सुहृदां हितकामानां यः शृणोति न भाषितम् । विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥ ४४६ ॥ अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् । विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ ४४७ ॥ दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् । न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ ४४८ ॥ मार्जारो महिषो मेषः काकः कापुरुषस्तथा । विश्वासात्प्रभवन्त्येते विश्वासस्तत्र नो हितः ॥ ४४९ ॥ यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् । नोदके शकटं याति न च नौर्गच्छति स्थले ॥ ४५० ॥ द्रवत्वात्सर्वलोहानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥ ४५१ ॥

---

१ दिगम्बरसंन्यासिनां देशे । २ मरणम् । ३ प्राणिनः । ४ औषधम् । ५ श्रेयांसि । ६ यथा गोघ्नमपि द्विजं प्रमाणयति, न तथोपदेशिनीमपि कुट्टिनीमिति भावः । ७ निराकरणे । ८ त्याज्याः । ९ सत्या मधुरा च ।

पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते । अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते ॥ ४९२ ॥ लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता । पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥ ४९३ ॥ अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च । मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ॥ ४९४ ॥ परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः । अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥ ४९५ ॥ पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् । विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ ४९६ ॥ जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किंचिदासाद्य देही प्राणान्विमुञ्चति ॥ ४९७ ॥ नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छति शोचितुम् । आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ४९८ ॥ सुखमापतितं सेव्यं दुःखमापतितं तथा । चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥ ४९९ ॥ वृत्त्यर्थं नाति चेष्टेत सा हि धात्रैव निर्मिता । गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥ ४६० ॥ येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥ ४६१ ॥ परार्थं यस्य वित्तेहा वरं तस्य निरीहता । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ४६२ जन्मनि क्लेशबहुले किं नु दुःखमतः परम् । इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते ॥ ४६३ ॥ यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते । प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥ ४६४ ॥ अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम् । स्वभूमिः श्वापदादीनां राज्ञां मन्त्री परं बलम् ॥ ४६५ ॥ कायः संनिहितापायः संपदः पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ४६६ ॥ अधोऽधः पश्यतः कस्य महिमा नोपचीयते । उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ ४६७ ॥ अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया । रक्षितं वर्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ ४६८ ॥ शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः । तदंशेनापि मेधावी तपस्त्यक्त्वा सुखी भवेत् ॥ ४६९ ॥ एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता । ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ ४७० ॥ आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने । पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः ॥ ४७१ ॥ पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् । स्वामिनं सर्वभावेन परलोकममायया ॥ ४७२ ॥ पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः । कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते ॥ ४७३ ॥ वाजिवारणलोहानां काष्ठपाषाणवाससाम् । नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ४७४ ॥ आरोप्यते शिला शैले यत्नेन महता यथा । निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ४७५ ॥ अनाहूतो विशेद्यश्चापृष्टोऽपि बहु भाषते । आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥ ४७६ ॥ किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम् । यदेव रोचते यस्मै तदेतत्तस्य सुन्दरम् ॥ ४७७ ॥ यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ४७८ ॥ दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम् । कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥ ४७९ ॥ स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च । नहि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ ४८० ॥ मुकुटे रोपितः काचश्चरणाभरणे मणिः । नहि दोषो मणेरस्ति किंतु भर्तुरविज्ञता ॥ ४८१ ॥

---

१ अधृष्टत्वम् । २ विवेचनकारिण्या बुद्ध्या सम्पन्नाः, निर्मलबुद्धय इति तु सुवचम् । ३ जीवनोपायम् । ४ व्याघ्रादीनाम् । ५ जायमानं वस्तु महत्त्वम् । ६ वर्धते । ७ सत्पात्रेषु, धर्मेषु कर्मसु वा । ८ बुद्धिमान् । ९ अपराधीनजीवनोपायत्वम्, स्वातन्त्र्येणवृत्त्युपार्जनमिति भावः । १० परिपोषणे । ११ प्रतिनिधयः। १२ नाणकविशेषैः रूप्यकैरिति भावः । १३ अश्वहस्ति– । १४ मूढः । १५ चतुरः । १६ धारयितुः ।

बालादपि गृहीतव्यं युक्तमुक्तं मनीषिभिः । रवेरविषये किं न प्रदीपस्य प्रकाशनम्[1] ॥ ४८२ ॥ बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य[2] चात्मनः । आपन्निकषपाषाणे[3] नरो जानाति सारताम् ॥ ४८३ ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥ ४८४ ॥ कुर्वन्नपि व्यलीकानि[4] यः प्रियःप्रिय एव सः । अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥ ४८५ ॥ अप्रियाण्यपि कुर्वाणो यः प्रिय प्रिय एव सः । दग्धमन्दिरसारेऽपि[5] कस्य वह्नावनादरः[6] ॥ ४८६ ॥ अप्रियस्यापि पथ्यस्य परिणामः सुखावहः । वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ४८७ ॥ न परस्यापराधेन परेषां दण्डमाचरेत् । आत्मनावगतं कृत्वा बध्नीयात्पूजयेच्च वा ॥ ४८८ ॥ गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे । स्वनाशाय यथा न्यस्तो दर्पात्सर्पमुखे करः ॥ ४८९ ॥ परामर्शं परिच्छेत्तुं योग्यायोग्यं न वेत्ति यः । अस्तीह यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ॥ ४९० ॥ द्वयोरेव समं वित्तं द्वयोरेव समं बलम् । तयोर्विवादो मैत्री वा नोत्तमाधमयोः[6] क्वचित् ॥ ४९१ ॥ बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् । निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ ४९२ ॥ बन्धुः को नाम दुष्टानां कुप्येत्को नातियाचितः । को न तृप्यति वित्तेन कुकृत्ये को न पण्डितः ॥ ४९३ ॥ धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत् । नहि हस्तस्थमप्यन्नं क्षमावान्भक्षितुं क्षमः ॥ ४९४ ॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् । अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ ४९५ ॥ सेवितव्यो महावृक्षः फलच्छायासमन्वितः । यदि दैवात्फलं नास्ति छाया केन निवार्यते ॥ ४९६ ॥ हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः । पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते[7] ॥ ४९७ ॥ महानप्यल्पतां याति निर्गुणे गुणविस्तरः । आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ ४९८ ॥ वैद्यानामातुरः श्रेयान्व्यसनी मौनियोगिनाम्[8] । विदुषां जीवनं मूर्खः[9] सद्वर्णो जीवनं सताम् ॥ ४९९ ॥ तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् । आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥ ५०० ॥ सुपूरा स्यात्कुनदिका सुपूरो मूषकाञ्जलिः । सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ ५०१ ॥ अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः[10] । पैशुन्याद्भिद्यते स्नेहो वाचा भिद्येत कातरः ॥ ५०२ ॥ अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति । जौतुषाभरणस्येव[11] रूपेणापि हि तस्य किम् ॥ ५०३ ॥ भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् । कृत्यं न कुरुते वेगान्न[12] स संतापमाप्नुयात् ॥ ५०४ ॥ न विध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि । विश्वस्तास्त्वेव बध्यन्ते बलिनो दुर्बलैरपि ॥ ५०५ ॥ महामतिरपि प्राज्ञो न विश्वासं व्रजेद्रिपौ । विश्वासात्रिदशेन्द्रेण[13] दितेर्गर्भो विदारितः ॥ ५०६ ॥ मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके । कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ५०७ ॥ अमृतं शिशिरे बह्निरमृतं प्रियदर्शनम् । अमृतं राजसंमानममृतं क्षीरभोजनम् ॥ ५०८ ॥ सर्पाणां च खलानां च परद्रव्यापहारिणाम् । अभिप्राया न सिद्ध्यन्ति तेनेदं वर्तते जगत् ॥ ५०९ ॥ नाविदग्धः[14] प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः । निःस्पृहो

---

१ प्रकाशः । २ बलस्य । ३ निकषः परीक्षोपलः । ४ अप्रियाणि । ५ गृहद्रव्यम् । ६ सामर्थ्यात् गौरवहानेश्च । ७ मद्यविक्रेत्री- । ८ मदिरा- । ९ मूर्खेभ्य एवानायासं धनलाभात् । १० एकान्ते विचारितोऽर्थः । ११ लाक्षानिर्मितस्य भूषणस्य । १२ सम्भ्रमात् अविचारादिति यावत् । १३ एकदेन्द्रेण विमातुर्दुरभिप्रायं विज्ञाय शुश्रूषता पवित्रतामनपेक्ष्य शायितायास्तस्या गर्भे प्रविश्य गर्भं वज्रेण चिच्छेद, स एव गर्भो मरुन्नाम्ना प्रसिद्धा एकोनपञ्चाशद्देवा अभवन्, इति पुराणे । १४ अचतुरः ।

नाधिकारी स्यान्नाकामी मण्डनप्रियः ॥ ९१० ॥ औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम् । असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम् ॥ ९११ ॥ न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् । न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रेयमात्मनः ॥ ९१२ ॥ नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः । पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ ९१३ ॥ अशोच्यानीह भूतानि यो मूढस्तानि शोचति । स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ९१४ ॥ स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् । स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ९१५ ॥ यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः । तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥ ९१६ ॥ येनाहंकारयुक्तेन चिरं विलसितं पुरा । दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ९१७ ॥ मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः । व्रतिनः पापशीलानामसतीनां कुलस्त्रियः॥९१८॥ मित्रद्रोही कृतघ्नश्च तथा विश्वासघातकः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ९१९ ॥ जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम् । अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥९२०॥ व्यसनेष्वेषु सर्वेषु यस्य बुद्धिर्न हीयते । स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ९२१ ॥ मित्रवान्साधयत्यर्थान्दुःसाध्यानपि वै यतः । तस्मान् मित्राणि कुर्वीत समानान्येव चात्मनः ॥ ९२२ ॥ अपि संपूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः । नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥ ९२३ ॥ यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः । हीनं वाऽप्यधिकं वाऽपि हास्यतां यात्यसौ जनः ॥ ९२४ ॥ कारणान्मित्रतां याति कारणाद्याति शत्रुताम् । तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ९२५ ॥ उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥ ९२६ ॥ यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम् । न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः ॥ ९२७ ॥ शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् । रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ९२८ ॥ मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् । मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ९२९ ॥ गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम् । यो गच्छति पुमांल्लोके तमाहुर्ब्रह्मघातिनम् ॥ ९३० ॥ अयशः प्राप्यते येन येन चापगतिर्भवेत्[1] । स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत् ॥ ९३१ ॥ यः स्तोकेनापि[2] संतोषं कुरुते मन्दधीर्जनः[3] । तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ ९३२ ॥ कृतनिश्चयिनो वन्द्यास्तुङ्गिमा नोपभुज्यते । चातकः को वराकोऽयं[6] यस्येन्द्रो वारिवाहकः[7] ॥ ९३३ ॥ तावत्स्यात्सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः । स्त्रीवाक्याङ्कुशविक्षुण्णो[8] यावन्नो ध्रियते बलात् ॥ ९३४ ॥ अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम्[9] । अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ ९३५ ॥ अग्निहोत्रफला वेदा शीलवृत्तफलं श्रुतम् । रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ९३६ ॥ आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः । न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ ९३७ ॥ व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत्[10] । क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ ९३८ ॥ केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः । तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ९३९ ॥ नदीनां च कुलानां च मुनीनां च महात्मनाम् । परीक्षा न प्रकर्तव्या स्त्रीणां दुश्चरितस्य च ॥ ९४० ॥ सद्भिः संबोध्यमानोऽपि दुरात्मा पापपूरुषः । घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ ९४१ ॥ जनिता[11] चोपनेता[12] च यश्च विद्यां प्रयच्छति । अन्न-

१ नश्यति । २ कुत्सिता धीर्बुद्धिर्यस्य सः । ३ अवज्ञया । ४ दुर्गतिः । ५ अल्पेन । ६ क्षुद्रः । ७ जलपानं कारयितुं गृहीताधिकारः मेघरूपश्च । ८ विक्षुण्णः क्षुब्धः । ९ सुगमम् । १० विलपेत् । ११ उत्पादकः । १२ उपनयनकारी ।

दाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ९४२ ॥ वरं वरयते कन्या माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ९४३ ॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वान्हितान्गुरून् । न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ९४४ ॥ कलहान्तानि हर्म्याणि[1] कुवाक्यान्तं च सौहृदम् । कुराजान्तानि राष्ट्राणि[2] कुकर्मान्तं यशो नृणाम् ॥ ९४५ ॥ कृते प्रतिकृतिं[3] कुर्याद्धिंसिते प्रतिहिंसितम्[4] । न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ९४६ ॥ सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये । सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ९४७ ॥ योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् । एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥ ९४८ ॥ मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते । शक्यते नानुमानेन परेण परिवर्णितुम् ॥ ९४९ ॥ स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते । अस्य दग्धोदरस्यार्थे[5] कः कुर्यात्पातकं महत् ॥ ९५० ॥ विद्यया विनयावाप्तिः सा चेदविनयावहा[6] । किं कुर्मः कं प्रति ब्रूमो गरदायां[7] स्वमातरि ॥ ९५१ ॥ वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥ ९५२ ॥ द्विः शरं नाभिसंधत्ते द्विः स्थापयति नाश्रितान् । द्विर्ददाति न चार्थिभ्यो रामो द्विर्नैव भाषते ॥ ९५३ ॥ मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । तत्रापि संभवन्त्येते मित्रोदासीनशत्रवः ॥ ९५४ ॥ पञ्चैतानि विलिख्यन्ते गर्भस्थस्यैव देहिनः । आयुः कर्म च विद्या च वित्तं निधनमेव च ॥ ९५५॥ नास्ति सत्यं द्यूतकारे न शौचं वृषलीपतौ[8] । मद्यपे सौहृदं नास्ति आर्तेषु त्रितयं नहि ॥ ९५६ ॥ सर्वसहा ये ऋजवः प्रतिज्ञानार्थपालकाः । परोपकारिणः सेव्या निर्धना अपि ये जनाः ॥ ९५७ ॥ शरणागतरक्षार्थं स्त्रीगोद्विजहिताय च । स्वाम्यर्थं यस्त्यजेत्प्राणांस्तस्य लोकाः सनातनाः ॥ ९५८ ॥ कृतघ्नस्य शिशुघ्नस्य स्त्रीघ्नस्य पिशुनस्य च । चतुर्णामपि चैतेषां निष्कृतिं नैव शुश्रुमः ॥ ९५९ ॥ परं पलितकायेन[9] कर्तव्यः श्रुतसंग्रहः । न तत्र धनिनो यान्ति यत्र यान्ति बहुश्रुताः ॥ ९६० ॥ विश्वासप्रतिपन्नानां वञ्चने[10] का विदग्धता । अङ्कमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम् ॥ ९६१ ॥ नाजारजः पितृद्वेषी नाजारा भर्तृवैरिणी । नालम्पटोऽधिकारी स्यान्नाकामी मण्डनप्रियः ॥ ९६२ ॥ अचला कमला कस्य कस्य मित्रं महीपतिः । शरीरं च स्थिरं कस्य कस्य वश्या वराङ्गना ॥ ९६३ ॥ गर्दभः पटहो दासी ग्रामीः[11] पशवः स्त्रियः । दण्डेनाक्रम्य भुञ्जीयान्न ते संमानभाजनम्[12] ॥ ९६४ ॥ बहुभिर्न विरोद्धव्यं दुर्जनैः स्वजनैरपि । स्फुरन्तमपि नागेन्द्रं[13] भक्षयन्ति पिपीलिकाः ॥ ९६५ ॥ क्षन्तव्यो मन्दबुद्धीनामपराधो मनीषिणा । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥ ९६६ ॥ राजा पश्यति कर्णाभ्यां युक्त्या पश्यन्ति पण्डिताः । पशुः पश्यति गन्धेन भूतैः पश्यन्ति बर्बराः[14] ॥ ९६७ ॥ प्रत्यूहः[15] सर्वसिद्धीनामुत्तापः प्रथमः किल । अतिशीतलमप्यम्भः किं भिनत्ति न भूभृतः ॥ ९६८ ॥ अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति । स तत्र निधनं याति कीलोत्पाटीव वानरः ॥ ९६९ ॥ हतं ज्ञानं क्रियाहीनं हताश्चाज्ञानिनो नराः । हतं चानायकं सैन्य-

---

१ यावन्न गृहे कलहस्तावद्गृहस्य धनपूर्णत्वात् । २ राज्यानि । ३ प्रतीकारम् । ४ प्रतिमारणम् । ५ दुष्टोदरपूर्तये । ६ धृष्टत्वप्रापिका । ७ विषदात्र्याम् । सत्यामिति शेषः । ८ शूद्रोपभोगासक्ते । ९ जीर्णाङ्गेन । १० प्रतारणे । ११ क्षुद्रग्रामभवः, अचतुर इति यावत् । १२ 'वेदाः प्रमाणम्' इतिवदुद्देश्यविधेयभावापेक्षयाऽन्वयः । १३ सर्पम् । १४ क्षुद्रा भूतादिसेविनो जनाः । १५ विघ्नः ।

सभर्तारो हताः स्त्रियः ॥ ९७० ॥ कन्या निष्कासिता श्रेष्ठा वधूः श्रेष्ठा प्रवेशिता । अन्नं संकलितं श्रेष्ठं धर्मः श्रेष्ठो दिने दिने ॥ ९७१ ॥ सत्यं सत्यं मुनेर्वाक्यं नादत्तमुपतिष्ठते । अम्बुभिः पूरिता पृथ्वी चातकस्य मरुस्थली ॥ ९७२ ॥ न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् । नेन्धनेन जयेद्वह्निं न पानेन सुरां जयेत् ॥ ९७३ ॥ तद्गृहं यत्र वसतिस्तद्भोग्यं येन जीवति । तन्मुक्तये यदेवोक्तं ज्ञानमज्ञानमन्यथा ॥ ९७४ ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ९७५ ॥ पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नमन्यगृहे वासो नारीणां दूषणानि षट् ॥ ९७६ ॥ हन्तुं मेषोऽपसरति मृगेन्द्रः संकुचत्यति । बुद्धिमन्तः सहन्ते च निधाय हृदि किंचन ॥ ९७७ ॥ यदपथ्यवतामायुर्यदनीतिमतां श्रियः । तदेतत्काकतालीयं तदेतच्च घुणाक्षरम् ॥ ९७८ ॥ वस्त्रं गां च बहुक्षीरां जलपात्रमुपानहौ । औषधं बीजमाहारं संक्रीणीत यथाप्नुयात् ॥ ९७९ ॥ रागे द्वेषे च माने च द्रोहे पापे च कर्मणि । अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ ९८० ॥ बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च । अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ९८१ ॥ चिरेण मित्रं संधीयाच्चिरेण न कृतं त्यजेत् । चिरेण विहितं मित्रं चिरं धारणमर्हति ॥ ९८२ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ ९८३ ॥ धनाशा जीविताशा च गुर्वी प्राणभृतां सदा । वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी ॥ ९८४ ॥ चित्रास्वातिगता वर्षाः प्रसूता गतयौवना । प्रवासी गतसौख्यश्च याचना गतगौरवा ॥ ९८५ ॥ शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः । उल्लङ्घितो यदम्भोधिः प्रभावः प्राभवो हि सः ॥ ९८६ ॥ राँः पुण्यं च कलत्राणि पुत्रोत्पत्तिर्निधिस्तथा । सुकृतादपि लभ्यन्ते नैव पार्थ पराक्रमात् ॥ ९८७ ॥ धर्मेहान्यर्जिते वित्तेऽनुभवन्ति सुखं परे । स्वयं पापस्य पात्रं स्यात्सिंहो गजवधादिव ॥ ९८८ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः । तथा वेदं विना विप्रस्त्रयस्ते नामधारकाः ॥ ९८९ ॥ वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् । प्रकृत्या ह्यगुणः श्रेयान्नालंकारश्च्युतोपलः ॥ ९९० ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरगः ॥ ९९१ ॥ मद्यपाः किं न जल्पन्ति किं न भक्षन्ति वायसाः । कवयः किं न पश्यन्ति किं न कुर्वन्ति योषितः ॥ ९९२ ॥ अशक्तः सततं साधुः कुरूपा च पतिव्रता । व्याधितो देवभक्तश्च निर्धना ब्रह्मचारिणः ॥ ९९३ ॥ तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता । यावज्ज्वलति नाङ्गेषु स्वतः पञ्चेषुपावकः ॥ ९९४ ॥ वाहितं चाश्ववाणिज्यं राजसेवा तपोबलम् । धीराश्चत्वारि कुर्वन्ति कृषिं कुर्वन्ति कातराः ॥ ९९५ ॥ न देवो विद्यते काष्ठे न पाषाणे न मृण्मये । भावेषु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ ९९६ ॥ अन्यायोपार्जितं द्रव्यं दश वर्षाणि तिष्ठति । प्राप्ते चैकादशे वर्षे समूलं च विनश्यति ॥ ९९७ ॥ तृप्त्यर्थं भोजनं येषां संतानार्थं च मैथुनम् । वाक्सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते ॥ ९९८ ॥ विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ ९९९ ॥ क्षमानित्यं क्रोधाच्छ्रियं रक्षेत्तमो रक्षेच्च मत्सरात् । न तृष्णायाः परो व्याधिर्न च धर्मो दयापरः ॥ १००० ॥ तुल्यं तपो नास्ति न संतोषात्परं सुखम् । अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ १००१ ॥ भोगी भवति दानेन मेधावी वृद्धसेवया ।

---

१ निर्जलदेशः । २ भ्रमणम् । ३ काकागमनतालफलपतनतदुपभोगवत्प्रारब्धमात्रोपस्थाप्यम् । ४ कीटविशेषो घुणस्तद्दष्टकाष्ठेऽक्षरसदृशत्वमनृतम् । ५ मङ्गलायतनो हरिरितिपाठस्त्वसाधुरेवायतनपदस्य नित्यक्लीबलिङ्गत्वात् । ६ वानरस्य । ७ धनम् । ८ कोशः ।

यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं परिणमेच्च यत् । हितं च परिणामे स्यात्तत्कार्यं भूतिमिच्छता ॥ ६०२ ॥ बुद्धौ कलुषितायां च विकारे प्रत्युपस्थिते । अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ६०३ ॥ यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् । उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥ ६०४ ॥ न क्रोधयातुधानस्य धीमान्गच्छेद्विधेयताम् । निपीतभ्रातृरुधिरः प्राप निन्दां वृकोदरः ॥ ६०५ ॥ न लोकायतवादेन नास्तिकः स्याददैवतः । हरिर्हिरण्यकशिपुं जघान स्तम्भनिर्गतः ॥ ६०६ ॥ संदेहो वैष्णवे मार्गे न कार्योऽन्यैः कुदर्शनैः । रामप्रभावमद्यापि पयोऽब्धौ पश्य सेतुना ॥ ६०७ ॥ गौर्गौः[1] कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः । दुष्प्रयुक्ता पुनर्गोत्वं[2] प्रयोक्तुः सैव शंसति ॥ ६०८ ॥ न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ६०९ ॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ६१० ॥ धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा । तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे[3] ॥ ६११ ॥ विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना । आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ ६१२ ॥ सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः । नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी[4] ॥ ६१३ ॥ न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ६१४ ॥ नारुंतुदः स्यादार्तोऽपि न परद्रोहकर्मभिः । ययाऽस्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥ ६१५ ॥ यथा खनन्खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ ६१६ ॥ यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम् । न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ ६१७ ॥ पित्रोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ ६१८ ॥ श्रद्दधानः शुभां विद्यामाददीतावरादपि । अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ ६१९ ॥ यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् । यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ ६२० ॥ यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः । तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ ६२१ ॥ न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहेत् । प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा ॥ ६२२ ॥ सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ ६२३ ॥ नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ६२४ ॥ नात्यर्थमर्थार्थितया लुब्धमुद्वेजयेज्जनम् । अब्धिर्दत्त्वाश्वरत्नं स्त्रीर्मथ्यमानोऽसृजद्विषम् ॥ ६२५ ॥ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह । पयोऽपि शौण्डिकीहस्ते मदिरां मन्यते जनः ॥ ६२६ ॥ अकिंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति । तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ६२७ ॥ अत्युष्णात्सुघृतादन्नादच्छिद्राच्चैव वाससः । अपरप्रेष्यभावाच्च भूय इच्छन्पतत्यधः ॥ ६२८ ॥ आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् । मातृजङ्घैव वत्सस्य स्तम्भो भवति दोहने ॥ ६२९ ॥ भवत्येकस्थले जन्म गन्धस्तेषां पृथक्पृथक् । उत्पलस्य मृणालस्य मत्स्यस्य कुमुदस्य च ॥ ६३० ॥ तत्र मित्र न वस्तव्यं यत्र नास्ति चतुष्टयम् । ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी ॥ ६३१ ॥ सच्छिद्रनिकटे वासो न कर्तव्यं कदाचन । घटी पिबति पानीयं ताड्यते झल्लरी यथा ॥ ६३२ ॥ तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् । जिताक्षस्य तृणं नारी निस्पृहस्य तृणं जगत् ॥ ६३३ ॥ गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य न्याय्यं भवति शास-

---

१ वाणी । २ पशुत्वम् । ३ ऊषरे । ४ मद्यविक्रयकर्त्री । ५ सर्गर्वस्य ।

नम् ॥ ६३४ ॥ मनसैव कृतं पापं न शरीरकृतं कृतम्। येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥ ६३५ ॥ भिन्ने चित्ते कुतः प्रीतिः स्याद्वा प्रीतिः कुतः सुखम्। त्वं च स्मरसि तं पुत्र पुच्छच्छेदं स्मराम्यहम् ॥ ६३६॥ मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः। नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥ ६३७ ॥ हस्ती चाङ्कुशहस्तेन कशाहस्तेन वाजिनः। श्रृङ्गी लगुडहस्तेन खड्गहस्तेन दुर्जनः ॥ ६३८ ॥ देशानुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः। तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥ ६३९ ॥ वाग्वादमर्थसंबन्धं परोक्षे दारदर्शनम्। यदीच्छेद्विपुलां प्रीतिं त्रीणि तत्र न कारयेत् ॥ ६४० ॥ अर्थानामर्जनं कार्यं वर्धनं रक्षणं तथा। भक्ष्यमाणो निरादायं सुमेरुरपि हीयते ॥ ६४१ ॥ आपदर्थं धनं रक्षेन्महतां कुत आपदः। कदाचित्कुपितो देवः संचितं चापि नश्यति ॥ ६४२ ॥ युध्यन्ति पशवः सर्वे पठन्ति शुकसारिकाः। दातुं जानाति यो वित्तं स शूरः स च पण्डितः ॥ ६४३ ॥ नदीतीरेषु ये वृक्षा यस्य नारी निरङ्कुशा। मन्त्रिहीनो भवेद्राजा तस्य राज्यं विनश्यति ॥ ६४४ ॥ गुणं पृच्छस्व मा रूपं शीलं पृच्छस्व मा कुलम्। सिद्धिं पृच्छस्व मा विद्यां भोगं पृच्छस्व मा धनम् ॥ ६४५ ॥ गुणो भूषयते रूपं शीलं भूषयते कुलम्। सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ ६४६ ॥ यस्य न ज्ञायते शीलं कुलं विद्या नरस्य च। कस्तेन सह विश्वासं पुमान्कुर्याद्विचक्षणः ॥ ६४७ ॥ का प्रीतिः सह मार्जारैः का प्रीतिरवनीपतौ। गणिकाभिश्च का प्रीतिः का प्रीतिर्भिक्षुकैः सह ॥ ६४८ ॥ धीराणां भूषणं विद्या मन्त्रिणां भूषणं नृपः। भूषणं च पतिः स्त्रीणां शीलं सर्वस्य भूषणम् ॥ ६४९ ॥ महानदीप्रतरणं महापुरुषविग्रहम्। महाजनविरोधं च दूरतः परिवर्जयेत् ॥ ६५० ॥ नारुहेद्विषमं वृक्षं जीर्णां नावं न चारुहेत्। कूपे नालोकयेत्तोयं न बाऽऽत्मानं विनाशयेत् ॥ ६५१ ॥ संकटे न च गन्तव्यं विषमे न कदाचन। महापथे न गन्तव्यं गन्तव्यं चात्मनः पथम् ॥ ६५२ ॥ अनादायी व्ययं कुर्यादसहायी रणप्रियः। आतुरः सर्वभक्षी च नरः शीघ्रं विनश्यति ॥ ६५३ ॥ सुसंदिग्धस्य भक्तस्य दन्तस्य चलितस्य च। अमात्यस्य च दुष्टस्य मूलादुद्धरणं वरम् ॥ ६५४ ॥ दीर्घशृङ्गमनड्वाहं रण्डां च बहुभाषिणीम्। शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत् ॥ ६५५ ॥ सिद्धमन्त्रौषधं धर्मं गृहच्छिद्रं च मैथुनम्। कुभुक्तिं कुश्रुतं चैव वचनं न प्रकाशयेत् ॥ ६५६ ॥ धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु। अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥ ६५७ ॥ सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम्। परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥ ६५८ ॥ परापकारनिरतैर्दुर्जनैः सह संगतिः। वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ ६५९ ॥ नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा। कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥ ६६० ॥ वारिजेनेव सरसी शशिनेव निशीथिनी। यौवनेनेव वनिता नयेन श्रीर्मनोहरा ॥ ६६१ ॥ दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः। परोपकरणं कायादसारात्सारमाहरेत् ॥ ६६२ ॥ श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्। लोकानुरागो विनयान्न किं लोकानुरागतः ॥ ६६३ ॥ किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः। को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम् ॥ ६६४ ॥ एकामिषाभिलाषो हि बीजं वैरमहातरोः। तिलोत्तमाभिलाषो हि यथा सुन्दोपसुन्दयोः ॥ ६६५ ॥ आचान्तकान्तिरुन्निद्रैर्मयूखैरहिमत्विषः। धूसरापि कला चान्द्री

---

१ 'परस्त्री संकटं प्रोक्तं रण्डा च विषमं पथम्। वेश्या महापथं प्रोक्तं स्वपर्यायः पिता श्रुतः ॥' इति शास्त्रात्।

किं न बध्नाति लोचनम् ॥ ६६६ ॥ हेतुर्नैसर्गिकः कोऽपि प्रीतेर्यद्धि न वर्तते । मालती मधुरास्तीति मधुपः केन शिक्ष्यते ॥६६७॥ देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ । यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ६६८ ॥ न माता शपते पुत्रं न दोषं लभते मही । न हिंसां कुरुते साधुर्न देवः सृष्टिनाशकः ॥ ६६९ ॥ प्रायः सन्त्युपदेशार्हा धीमन्तो न जडाशयाः । तिलाः कुसुमसौगन्ध्यवाहिनो न यवाः क्वचित् ॥ ६७० ॥ संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति स्फुटम् । दग्धस्यागुरुखण्डस्य स्फारीभवति सौरभम् ॥ ६७१ ॥ उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् । प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ ६७२ ॥ जडे प्रभवति प्रायो दुःखं बिभ्रति साधवः । शीतांशावुदिते पद्माः संकोचं यान्ति वारिणि ॥ ६७३ ॥ कश्चित्कस्यचिदेव स्यात्सुहृद्विस्रम्भभाजनम् । पद्मं विकासयत्यर्कः संकोचयति कैरवम् ॥ ६७४ ॥ ईश्वराः पिशुनाञ्शश्वद्बिभ्रतीति किमद्भुतम् । प्रायो निधय एवाहीन्द्विजिह्वान्दधतेतराम् ॥ ६७५ ॥ संपद्यास्ते परैः साकं विपदि स्वजनैर्जडः । जृम्भत्यम्भोरुहे भृङ्गः शुष्यत्युदकशैवलैः ॥ ६७६ ॥ नीचावमानमलिनां यो भुङ्क्ते संपदं पुमान् । लशुनाक्तां स कर्पूरचर्चां वितनुते तनौ ॥ ६७७ ॥ व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत् । काषायरसमास्वाद्य स्वाद्वतीवाम्बु विन्दते ॥ ६७८ ॥ गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः । मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥ ६७९ ॥ प्रभूतवयसः पुंसो धियः पाकः प्रवर्तते । जीर्णस्य चन्दनतरोरामोद उपजायते ॥ ६८० ॥ धनागमेऽधिकं पुंसां लोभमभ्येति मानसम् । निदाघकाले प्रालेयः प्रायः शैत्यं वहत्यलम् ॥ ६८१ ॥ सहजोऽपि गुणः पुंसां साधुवादेन वर्धते । कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥ ६८२ ॥ निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ । खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥ ६८३ ॥ शुभं वाप्यशुभं कर्म फलकालमपेक्षते । शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥ ६८४ ॥ भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति । लवणेनान्तरालेन तृष्णा प्रत्युत जायते ॥ ६८५ ॥ दुर्लभोऽप्युत्तमः प्रायः स्वजातीयेन लभ्यते । कर्णकोटरगं वारि वारिणैवावकृष्यते ॥ ६८६ ॥ जन्तोर्निरुपभोगस्य दृश्यते भुवि रूक्षता । वाताशिनो द्विजिह्वत्वं विहितं पश्य वेधसा ॥ ६८७ ॥ आकरः कारणं जन्तोर्दौर्जन्यस्य न जायते । कालकूटः सुधासिन्धोः प्राणिनां प्राणहारकः ॥ ६८८ ॥ न व्याप्तिरेषा गुणिनो गुणवाञ्जायते ध्रुवम् । चन्दनोऽनलसंदग्धो न भस्म सुरभि क्वचित् ॥ ६८९ ॥ कार्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम् । लोभार्थी शौण्डिकः शष्पैर्मेषं पुष्णाति पेशलैः ॥ ६९० ॥ दुर्जनो जीयते युक्त्या विग्रहेण न धीमता । निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥ ६९१ ॥ स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते । मुक्तारत्नस्य शाणाश्मघर्षणं नोपयुज्यते ॥ ६९२ ॥ येनात्मा पण्यतां नीतः स एवान्विष्यते जनैः । हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः ॥ ६९३ ॥ विक्रीतं निजमात्मानं वस्त्रैः संस्कुरुते जडः । परेभ्यः स्वशरीरस्य के वा भूषां वितन्वते ॥ ६९४ ॥ असंभवगुणस्तुत्या जायते स्वात्मनस्त्रपा । कर्णिकारं सुगन्धीति वदन्को नोपहास्यते ॥ ६९५ ॥ तटस्थैः ख्यापिताश्चैतो विशन्ति गुणिनां गुणाः । उत्कोचितानां पद्मानां गन्धो वायुभिराहृतः ॥ ६९६ ॥ निजाशयवदाभाति पुंसां चित्ते पराशयः । प्रतिमा मुखचन्द्रस्य कृपाणे याति दीर्घताम् ॥ ६९७ ॥ अधमं बाधते भूयो दुःखवेगो न तूत्तमम् । पादद्वयं रुजत्याशु शीतस्पर्शो न चक्षुषी ॥ ६९८ ॥ यत एवागतो दोषस्तत एव

---

१ भुवस्य ।

निवर्तते । अग्निदग्धस्य विस्फोटशान्तिः स्यादग्निना ध्रुवम् ॥ ६९९ ॥ बुद्धिमत्त्वातिमानः को भवेत्प्रज्ञो-पजीविनाम् । अन्यदीयैरलंकारैर्नाहंकारो विभूषणे ॥ ७०० ॥ उत्तमोऽप्यधमस्य स्याद्याञ्चानम्रकरः कचित् । कौस्तुभादीनि रत्नानि ययाचे हरिरम्बुधिम् ॥ ७०१ ॥ प्रयत्ने समके केचिदेव स्युः फल-भागिनः । क्षीरोदमथनाद्दैवैरमृतं प्रापि नासुरैः ॥ ७०२ ॥ भोगः परोपतापेन पुंसां दुःखाय न स्थिरः। पानमप्यसृजः क्षिप्रं स्वपीडायै जलौकसाम् ॥ ७०३ ॥ नोपभोगपरानर्थान्कोऽपि संचिनुते चिरम् । आस्रवः किमलंकारानात्मन्याहृत्य कुर्वते ॥ ७०४ ॥ विवर्णवचनैर्मृत्युर्गूढोऽप्यन्तः प्रकाशते । इन्धना-न्तरसंस्थैश्च ज्वलत्यग्निः पयःकणैः ॥ ७०५ ॥ निकटस्थं गरीयांसमपि लोको न मन्यते । पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम् ॥ ७०६ ॥ स्वजनः स्वात्मवज्जन्तुर्ज्ञायते गुणवान्परैः। गोपैर्गोपब-दाज्ञायि हरिर्देवो जगत्पतिः ॥ ७०७ ॥ उत्तमस्तोषमायाति तदङ्गं पोष्यते यदि । वृक्षः प्रसीदति प्रायः पादाभ्यङ्गेन न स्वयम् ॥ ७०८ ॥ दुर्भगः स्यात्प्रकृत्या यो विभूत्यापि स तादृशः । गोमयं श्रीनिवासो-ऽस्ति न तथापि मनोहरम् ॥ ७०९ ॥ आगच्छदुत्सवो भाति यथैव न तथा गतः । हिमांशोरुदयः सायं चकास्ति न तथोषसि ॥ ७१० ॥ सन्तोषक्षतये पुंसामाकस्मिकधनागमः । सरसां सेतुमेदाय वर्षौघः स च न स्थिरः ॥ ७११ ॥ संतुष्यत्युत्तमः स्तुत्या धनेन महताधमः । प्रसीदन्ति जपैर्देवा बलिभिर्भूतविग्रहाः ॥ ७१२ ॥ स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् । श्येनो विहङ्गमानेव हिनस्ति न भुजङ्गमान् ॥ ७१३ ॥ गुरुं प्रयोजनोद्देशादर्चयन्ति न भक्तितः । दुग्धदात्रीति गौर्गेहे पोष्यते न तु धर्मतः ॥ ७१४ ॥ गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः । पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥ ७१५ ॥ बहुभिर्मूर्खसंघातैरन्योन्यं पशुवृत्तिभिः । प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥ ७१६ ॥ मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी । क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥ ७१७ ॥ कामाय स्पृहयत्यात्मा संयतोऽपि मनीषिणः । वीथीनियमितोऽ-प्युक्षा शष्पमासाद्य धावति ॥ ७१८ ॥ रोगशोकपरीतापबन्धनव्यसनानि च । आत्मापराध-वृक्षाणां फलान्येतानि देहिनाम् ॥ ७१९ ॥ भूमिपतावर्थपतौ बाले वृद्धे तपोनिधौ विदुषि । योषिति मूर्खे गुरुषु च विदुषा नैवोत्तरं देयम् ॥ ७२० ॥ कटुकं वा मधुरं वा प्रस्तुतवाक्यं मनो-हारि । वामे गर्दभनादश्चित्तप्रीत्यै प्रयाणेषु ॥ ७२१ ॥ अतिपरिचयादवज्ञा संततगमनादनादरो भवति । लोकः प्रयागवासी कूपे स्नानं समाचरति ॥ ७२२ ॥ अतिपरिचयादवज्ञा संततगमना-दनादरो भवति । मलये[1] भिल्लपुरंध्री[2] चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ ७२३ ॥ अतिपरिचयादवज्ञा इति यद्वाक्यं मृषैव तद्भाति । अतिपरिचितेऽप्यनादौ संसारेऽस्मिन्न जायतेऽवज्ञा ॥ ७२४ ॥ अविधेयो भृत्यजनः शठानि मित्राण्यदायकः स्वामी । अविनयवती च भार्या मस्तकशूलानि चत्वारि ॥ ७२५ ॥ वैद्यस्तर्कविहीनो निर्लज्जा कुलवधूर्यतिर्मूर्खः । कटके च प्राघुर्णको[3] मस्तकशूलानि चत्वारि ॥७२६॥ शक्तिरहितोऽपि कुप्यति सेवासक्तोऽपि मानमुद्वहति । अधनोऽपि हि कामयते जानाति विधिर्विडम्बयितुम् ॥ ७२७ ॥ त्यजति भयमकृतपापं सुमित्रमयशः प्रमादिनं श्रिया । ह्रीः कामिनमलसं श्रीः क्रूरं स्त्री दुर्जनं लोकः ॥ ७२८ ॥ अनुचितकर्मारम्भः स्वजनविरोधो बली-यसा स्पर्धा । प्रमदाजनविश्वासो[4] मृत्युद्वाराणि चत्वारि ॥ ७२९ ॥ अन्यमुखे दुर्वादो[5] यः प्रियवदने स एव परिहासः । इतरेन्धन[6]जन्मा यो धूमः सोऽगुरुभवो धूपः ॥ ७३० ॥ अशठमलोभम[7]जिह्मं त्यागिन-

---

१ मलयपर्वते । २ भिल्लस्त्री । ३ अगन्तुकः । ४ स्त्रीषु विश्वासः । ५ दुष्टभाषणम् । ६ कष्ट-
७ सरलम् । ८ दानशीलम् ।

मनुरागिणं विशेषज्ञम् । यदि नाश्रयति नरं श्रीः श्रीरेव हि वञ्चिता तत्र ॥ ७३१ ॥ व्यथयतितरामुपेतः स्वस्थप्रकृतेरवद्यलेशोऽपि । भृशमुद्विजते चक्षुः सक्तेन रजःकणेनापि ॥ ७३२ ॥ शरदि समग्रनिशाकरकरशतहततिमिरसंचया रजनी । जलदान्तरितार्कामपि दिवसच्छायां न पूरयति ॥ ७३३ ॥ यत्र न फलितास्तरवो विकसितसरसीरुहाः सरस्यो वा । न च सज्जनाः स देशो गच्छतु निधनं श्मशानसमः ॥ ७३४ ॥ गुणमधिगतमपि धनवानचिरान्नाशयति रक्षति दरिद्रः । मज्जयति रज्जुमम्भसि पूर्णः कुम्भो न खलु तुच्छः ॥ ७३५ ॥ अबुधा अजङ्गमा अपि कयापि गत्या परं पदमवाप्ताः । मन्त्रिण इति कीर्त्यन्ते [1]नयबलगुटिका इव जनेन ॥ ७३६ ॥ स्वल्पा इति रामबलैर्ये न्यस्ता नाशये पयोराशेः । ते शैलाः स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥ ७३७ ॥ यत्रार्जवेन लघिमा गरिमाणं वक्रता तनुते । छन्दःशास्त्र इवास्मिंल्लोके सरलः सखे किमसि ॥ ७३८ ॥ सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु । स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखी भवति ॥ ७३९ ॥ प्राप्य चलानधिकाराञ्शत्रुषु मित्रेषु बन्धुवर्गेषु । नापकृतं नोपकृतं न सत्कृतं किं कृतं तेन ॥ ७४० ॥ वित्तं परिमितमधिकव्ययशीलं पुरुषमाकुलीकुरुते । [2]ऊनांशुकमिव पीनस्तनजघनायाः कुलीनायाः ॥ ७४१ ॥ [3]अप्रतिबुद्धे श्रोतरि वक्तुर्वाक्यं प्रयाति वैफल्यम् । नयनविहीने भर्तरि लावण्यमिवेह [4]खञ्जनाक्षीणाम् ॥ ७४२ ॥ बहु-त[5]रहिते रसातल उत्तिष्ठन्ते हि [6]सुमनसस्[7]तपसि । [8]कान्तारैजनवेगं विषह्य सद्रसफलास्तु विरलाः स्युः ॥ ७४३ ॥ प्रतिगृहकोणं गुणिनो खद्योता इव स्फुरन्ति शतम् । तद्भासकः [10]स्वगोभिः को वा रविरिव गुणज्ञोऽस्ति ॥ ७४४ ॥ रमणीयः स हि पुरुषो रमणी यत्रैव रज्यति [11]विदग्धा । श्लोकः स एव सुभगश्चित्तं सक्तं हि यत्र रसिकस्य ॥ ७४५ ॥ आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् । बलवदपि शिक्षितानामात्मन्य[12]प्रत्ययं चेतः ॥ ७४६ ॥ अबला यत्र प्रबला शिशुरवनीशो निरक्षरो मन्त्री । नहि नहि तत्र धनाशा [13]जीविते आशापि दुर्लभा भवति ॥ ७४७ ॥ ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते । प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते जन्तुः ॥ ७४८ ॥ राजनि विदुषां मध्ये वरसुरतानां समागमे स्त्रीणाम् । [14]साध्वसदूषितहृदयो [15]वाक्पटुरपि कातरो भवति ॥ ७४९ ॥ अलिरनुसरति परिमलं लक्ष्मीरनुसरति नयगुणसमृद्धिम् । निम्नमनुसरति सलिलं विधिलिखितं बुद्धिरनुसरति ॥ ७५० ॥ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । संपूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ॥ ७५१ ॥ किं क्रूरं फणिहृदयं पुनरपि किं क्रूरमङ्गनाहृदयम् । क्रूरात्क्रूरतरं किं पतिसुतधनहीनकामिनीहृदयम् ॥ ७५२ ॥ अनुकूलां विमलाङ्गीं कुलजां कुशलां सुशीलसंपन्नाम् । पञ्चलकारां भार्यां पुरुषः पुण्योदयाल्लभते ॥ ७५३ ॥ अरसिकजनभाषणतो रसिकजनैः सह वरं कलहः । लम्बकुचालिङ्गनतो लिकुचकुचापादताडनं श्रेयः ॥ ७५४ ॥ आपदि मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भवति । विनये वंशपरीक्षा स्त्रियः परीक्षा तु निर्धने पुंसि ॥ ७५५ ॥

---

१ चतुरङ्गाख्यक्रीडनकस्य गुटिकाः । २ अल्पं वस्त्रम् । ३ मूर्खे । ४ खञ्जरीटनयनानाम् । ५ त-रहिते रसातले । रसाल आम्रवृक्षे इत्यर्थः । ६ पुष्पाणि, शोभनमनसश्च । मुनय इत्यर्थः । ७ माघमासे, तपश्चर्यायां च । ८ कान्तारमरण्यम् । दुर्गममार्गः इति यावत् । तत्सम्बन्धि एजनवेगं कम्पनवेगं विषह्य सद्रसानि फलानि येषामेवंविधा विरलाः स्युः; कान्ता स्त्री- रा द्रव्यं, जनवेगो जनसंतापः, एतान्मर्षयित्वा सद्रसो मोक्षरसः स एव फलं येषामेतादृशा विरलाः स्युः । ९ प्रकाशकः । १० स्ववाणीभिः; स्वकिरणैश्च । ११ चतुरा । १२ अविश्वस्त- । १३ जीवने । १४ भयम् । १५ वाग्मी ।

अनवसरे च यदुक्तं सुभाषितं तच्च भवति हास्याय । रहसि प्रौढवधूनां रतिसमये वेद-पाठ इव ॥ ७५६ ॥ आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म । स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ ७५७ ॥ अवसरपठिता वाणी गुणगणरहितापि शोभते पुंसाम् । रतिसमये युवतीनां भूषाहानिर्विभूषणं भवति ॥ ७५८ ॥ अव्याकरणमधीतं भिन्नद्रोण्या तरङ्गिणीतरणम् । भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम् ॥ ७५९ ॥ यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपाश्रयति । तस्य दिवाकरकिरणैर्नलिनीदलमिव विकास्यते बुद्धिः ॥७६० ॥ विरला जानन्ति गुणान्विरलाः कुर्वन्ति निर्धने स्नेहम् । विरलाः परकार्यरताः परदुःखेनापि दुःखिता विरलाः ॥ ७६१ ॥ उद्वेजयति दरिद्रं परमुद्राया झणत्कारः । गृहपतिरतिमिलितायाः कङ्कणनादो यथा जारम् ॥७६२॥ कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति नैतानि । को मूको यः काले प्रियाणि वक्तुं न जानाति ॥ ७६३ ॥ कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने । अवधीरणा क कार्या खलपरयोषित्परधनेषु ॥ ७६४ ॥ कुत्र विधेयो वासः सज्जनकण्ठे यथा काश्याम् । कः परिहार्यो देशः पिशुनयुतो लुब्धभूपश्च ॥ ७६५ ॥ दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधापि मधुरैव । तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ॥ ७६६ ॥ अविदितपरमानन्दो वदति जनो विषयमेव रमणीयम् । तिलतैलमेव मृष्टं येन न दृष्टं घृतं क्वापि ॥ ७६७ ॥ रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ ७६८ ॥ को धर्मो भूतदया किं सौख्यमरोगिता[1] जगति जन्तोः । कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ ७६९ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् । वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुर्भद्रम् ॥ ७७० ॥ कल्पयति येन वृत्तिं येन च लोके प्रशस्यते सद्भिः । स गुणस्तेन च गुणिना रक्ष्यः संवर्धनीयश्च ॥ ७७१ ॥ दुर्जनगम्या नार्यः प्रायेणापात्रभृद्भवति राजा । कृपणानुसारि च धनं मेघो गिरिजलधिवर्षी च ॥ ७७२ ॥ कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु । वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥ ७७३ ॥ दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी । उद्युक्तो विद्यान्तं धर्मार्थयशांसि च विनीतः ॥ ७७४ ॥ निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः । यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ७७५ ॥ अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते । निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥७७६॥ विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम् । उष्ट्राणामिव तेषां मन्येऽहं शंसितं जन्म ॥ ७७७ ॥ दुरधिगमः परभागो[2] यावत्पुरुषेण पौरुषं न कृतम् । जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥ ७७८ ॥ आपदि येनोपकृतं येन च हसितं दशासु चान्त्यासु । उपकृदपकृदपि च तयोर्यस्तं पुरुषं परं मन्ये ॥७७९॥ असती भवति सलज्जा क्षारं नीरं च शीतलं भवति । दम्भी भवति विवेकी प्रियवक्ता भवति धूर्तजनः ॥ ७८० ॥ पश्यति परस्य युवतिं सकाममपि तन्मनोरथं कुरुते । ज्ञात्वैव तदप्राप्तिं व्यर्थं मनुजो हि पापभाग्भवति ॥ ७८१ ॥ स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि । मधुरापि हि मूर्छयते त्रिषविटपिसमाश्रिता[3] वल्ली ॥ ७८२ ॥ सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य । हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ॥ ७८३ ॥ कविहृदयेष्वनसूया कस्तूरीकर्दमेष्वमालिन्यम् । अक्षारता[4] पयोधावनीपालेषु

---

१ अरोगताम् । २ गुणोत्कर्षः । ३ विषवृक्षाश्रिता । ४ क्षता ।

पाण्डित्यम् ॥ ७८४ ॥ वस्तुनि चिराभिलषिते कथमपि दैवात्प्रसक्तसंघटने । प्राक्प्राप्तान्यपि बहुशो दुःखानि परं सुखानि जायन्ते ॥ ७८५ ॥ विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः । नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥ ७८६ ॥ सत्यपि च सुकृतकर्मणि दुर्नीतिश्चेच्छ्रियं हरत्येव । तैलैः सदोपयुक्तां दीपशिखां दलति वातालिः ॥ ७८७ ॥ उपचारः कर्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः । उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥ ७८८ ॥ स्नेहो हि वरमघटितो न वरं हि संजातविघटितस्नेहः । हृतनयनो हि विषादी न विषादी भवति जात्यन्धः ॥ ७८९ ॥ नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः । के शशधरकरनिकरानुकारिणः सज्जना एव ॥ ७९० ॥ किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः । कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा ॥ ७९१ ॥ वितरति यावद्दाता तावत्सकलोऽपि भवति कलभाषी । विरते पयसि घनेभ्यः शाम्यन्ति शिखण्डिनां ध्वनयः ॥ ७९२ ॥ व्यसने मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भवति । विनये भृत्यपरीक्षा दानपरीक्षा च दुर्भिक्षे ॥ ७९३ ॥ आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम्[3] । सन्तोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥ ७९४ ॥ अप्येकवंशजनुषो पश्यत पूर्णत्वतुच्छताभाजोः । ज्याकार्मुकयोः कश्चिद्गुणभूतः कश्चिदपि भर्ता ॥ ७९५ ॥ अन्धत्वमन्धसमये बधिरत्वं बधिरकाल आलम्ब्य । श्रीकेशवयोः प्रणयी परमेष्ठी नाभिवास्तव्यः ॥ ७९६ नियतैः पदैर्निषेव्यं स्खलितेऽनर्थावहं समाश्रयति । सम्भवदन्यगतिः कः संक्रमकाष्ठं दुरीशं च ॥ ७९७ ॥ सम्यग्निष्पन्नः सन्योऽर्थस्त्वरया स्फुटीक्रियते । स व्यङ्ग्य एव भवति प्रथमो विनतातनूज इव ॥ ७९८ ॥ अवरस्य मधुरिमाणं कुचकाठिन्यं दृशोस्तथा तैक्ष्ण्यम् । कवितायाः परिपाकाननुभवरसिको विजानाति ॥ ७९९ ॥ सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः । यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ ८०० ॥ निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् । पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ८०१ ॥ राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् । सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ ८०२ ॥ वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु । कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम् ॥ ८०३ ॥ संनिहितेऽपि दुरापे वस्तुनि मनसोऽनवाप्तविषयस्य । भवति न संशयनाशो बहुशोऽप्याश्वास्यमानस्य ॥ ८०४ ॥ स्ववशः करोति कर्म प्रमादयुक्तस्तु परवशो भवति । स्ववशो रोहति वृक्षं निपतत्यवशस्ततः पुरुषः ॥ ८०५ ॥ भोगाक्षमस्य रक्षां दृङ्मात्रेणैव कुर्वतोऽनभिमतस्य । वृद्धस्य प्रमदापि श्रीरपि भृत्यस्य भोगाय ॥ ८०६ ॥ सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः । विद्यते नहि स कश्चिदुपायः सर्वलोकपरितोषकरो यः ॥ ८०७ ॥ कस्यचित्किमपि नो हरणीयं मर्मवाक्यमपि नोच्चरणीयम् । श्रीपतेः पदयुगं स्मरणीयं लीलया भवजलं तरणीयम् ॥ ८०८ ॥ आतुरं कुलमनादरणीयं चित्तमेतदमलीकरणीयम् । रामधाम शरणीकरणीयं लीलया भवजलं तरणीयम् ॥ ८०९ ॥ जीवितं तदपि जीवितमध्ये गण्यते सुकृतिभिः किमु पुंसाम् । ज्ञानविक्रमकलाकुललज्जात्यागभोगरहितं विफलं यत् ॥ ८१० ॥ लोक एष गतलोचनत्रपः कस्य वा न विवृणोति वाच्यताम् । लोचनोत्सवमशेषजीवनं यत्कलङ्कयति चन्द्रमण्डलम् ॥ ८११ ॥ यः परस्य विषमं विचिन्तयेत्प्राप्नुयात्स कुमतिः स्वयं हि तत् । पूतना हरिवधार्थमाययौ प्राप

---

१ विश्वस्त-। २ सिंह निद्रापहारी। ३ स्वदेशलोभः।

सैव बधमात्मनस्ततः ॥ ८१२ ॥ काके शौचं द्यूतकारे च सत्यं सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः । क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा ॥ ८१३ ॥ एको देवः केशवो वा शिवो वा एकं मित्रं भूपतिर्वा यतिर्वा । एका भार्या सुन्दरी वा दरी वा एको वासः पत्तने वा वने वा ॥ ८१४ ॥ चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम् । तस्माच्चित्तं सर्वद रक्षणीयं स्वस्थे चित्ते बुद्धयः संभवन्ति ॥ ८१५ ॥ शुक्ले पक्षे शीतरश्मिर्बलीयान्न प्राधान्यं तारकायास्तु दृष्टम् । शक्त्या युक्ते विद्यमानेऽपि कान्ते न प्राधान्यं योषितां क्वापि दृष्टम् ॥ ८१६ ॥ दाता दानस्यान्तरा स्यात्पृथिव्यां गेहे गेहे याचकानां समूहः । चिन्तारत्नस्यास्ति सत्त्वे विवादो मार्गे मार्गे रेणवः सन्त्यसंख्याः ॥ ८१७ ॥ मांसं मृगाणां दशनौ[1] गजानां मृगद्विषां[2] चर्म फलं द्रुमाणाम् । स्त्रीणां सुरूपं च नृणां हिरण्यमेते गुणा वैरकरा भवन्ति ॥ ८१८ ॥ शाठ्येन धर्मं कपटेन मित्रं परोपतापेन समृद्धिभावम् । सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते ॥ ८१९ ॥ राजा घृणी ब्राह्मणः सर्वभक्षी स्त्री चावशा दुष्टबुद्धिः सहायः । प्रेष्यः प्रतीपोऽधिकृतः प्रमादी त्याज्या इमे यश्च कृतं न वेत्ति ॥ ८२० ॥ मूर्खो द्विजातिः स्थविरो गृहस्थः कामी दरिद्रो धनवांस्तपस्वी । वेश्या कुरूपा नृपतिः कदर्यो लोके षडेतानि विडम्बितानि ॥ ८२१ ॥ दानं दरिद्रस्य प्रभोश्च शान्तिर्यूनां तपो ज्ञानवतां च मौनम् । इच्छानिवृत्तिश्च सुखान्वितानां दया च भूतेषु दिवं नयन्ति ॥ ८२२ ॥ अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च । वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन् ॥ ८२३ ॥ आरोग्यमानृण्यमविप्रवासः सप्रत्यया वृत्तिरभीतिवासः । सद्भिर्मनुष्यैः सह संप्रयोगः षड् जीवलोकस्य सुखानि राजन् ॥ ८२४॥ मृतस्य लिप्सा[3] कृपणस्य दित्सा[4] विमार्गगायाश्च रुचिः स्वकान्ते । सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा ॥ ८२५ ॥ आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ८२६ ॥ भार्यावियोगः स्वजनापवाद ऋणस्य शेषं कृपणस्य सेवा । दारिद्र्यकाले प्रियदर्शनं च विनाग्निना पञ्च दहन्ति कायम् ॥ ८२७ ॥ अश्वप्लुतं वासवगर्जितं च स्त्रीणां च चित्तं पुरुषस्य भाग्यम् । अवर्षणं चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्यः ॥ ८२८ ॥ नृपस्य चित्तं कृपणस्य वित्तं मनोरथं दुर्जनमानुषाणाम् । स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ॥ ८२९ ॥ किं पौरुषं रक्षति यो न वार्तां किं वा धनं नार्थिजनाय यत्स्यात् । सा किं क्रिया या न हितानुबद्धा किं जीवितं साधुविरोधि यद्वै ॥ ८३० ॥ अन्यायवित्तेन कृतोऽपि धर्मः सव्याज इत्याहुरशेषलोकाः । न्यायार्जितार्थेन स एव धर्मो निर्व्याज इत्यार्यजना वदन्ति ॥ ८३१ ॥ यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा । निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ८३२ ॥ शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी । कालानुरोधः प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु ॥ ८३३ ॥ न स्वल्पमप्यध्यवसायभीरोः करोति विज्ञानविधिर्गुणं हि अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः ॥ ८३४ ॥ न कस्यचित्कश्चिदिह स्वभावाद्भवत्युदारोऽभिमतः खलो वा । लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ति ॥ ८३५ ॥

---

१ दन्तौ । २ सिंहव्याघ्रादीनाम् । ३ लोभः । ४ दानेच्छा ।

अपायसंदर्शनजां विपत्तिमुपायसंदर्शनजां च सिद्धिम् । मेधाविनो नीतिविधिप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति ॥ ८३६ ॥ दन्तस्य निर्घर्षणकेन राजन्कर्णस्य कण्डूयनकेन वापि । तृणेन कार्यं भवतीश्वराणां किमङ्गवाक्पाणिमता नरेण ॥ ८३७ ॥ त्यजेत्क्षुधार्तो महिलां सपुत्रां खादेत्क्षुधार्ता भुजगी स्वमण्डम् । बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥ ८३८ ॥ दारेषु किंचित्स्वजनेषु किंचिद्गोप्यं वयस्येषु सुतेषु किंचित् । युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात् ॥ ८३९ ॥ मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ ८४० ॥ त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात्कदाचिद्गतिमाप्नुयात्सः । यथा समुद्रेऽपि च पोतभङ्गे सांयात्रिकोऽप्यृच्छति जातु पारम् ॥ ८४१ ॥ दानेन तुल्यो विधिररित नान्यो लोभाच्च नान्योऽस्ति परः पृथिव्याम् । विभूषणं शीलसमं न चान्यत्संतोषतुल्यं धनमस्ति नान्यत् ॥ ८४२ ॥ एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य । तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ ८४३ ॥ क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीप्यति जाठराग्निः । आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥ ८४४ ॥ अर्थातुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा । विद्यातुराणां न सुखं न निद्रा क्षुधातुराणां न रुचिर्न वेला ॥ ८४५ ॥ विवाहकाले ऋतुसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥ ८४६ ॥ यत्रास्ति लक्ष्मीर्विनयो न तत्र चाभ्यागतो यत्र न तत्र लक्ष्मीः । उभौ च तौ यत्र न तत्र विद्या नैकत्र सर्वो गुणसंनिपातः ॥ ८४७ ॥ द्वारि प्रविष्टः सहसा ततः किं दृष्टः प्रभुः स्मेरमुखस्ततः किम् । कथा श्रुता श्रोत्ररसा ततः किं व्यथा न शान्ता यदि जाठरीया ॥ ८४८ ॥ सुपात्रदानाच्च भवेद्धनाढ्यो धनप्रभावेण करोति पुण्यम् । पुण्यप्रभावात्सुरलोकवासी पुनर्धनाढ्यः पुनरेव भोगी॥ ८४९ ॥कुपात्रदानाच्च भवेद्दरिद्रो दारिद्र्यदोषेण करोति पापम् । पापप्रभावान्नरकं प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥ ८५० ॥ प्रभुर्विवेकी धनवांश्च दाता विद्वान्विरागी प्रमदा सुशीला । तुरङ्गमः शस्त्रनिपातधीरो भूमण्डलस्याभरणानि पञ्च ॥ ८५१ ॥ स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा । निजाङ्गना यद्यपि रूपराशिस्तथापि लोकः परदारसक्तः ॥ ८५२ ॥ गन्धः सुवर्णे फलमिक्षुदण्डे नाकारि पुष्पं खलु चन्दनेषु । विद्वान्धनाढ्यो न तु दीर्घजीवी धातुः पुरा कोऽपि न बुद्धिदोऽभूत् ॥ ८५३ ॥ सर्पस्य रत्ने कृपणस्य वित्ते सत्याः कुचे केसरिणश्च केशे । मानोन्नतानां शरणागते च मृतौ भवेदन्यकरप्रचारः ॥ ८५४ ॥ श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना नैको मुनिर्यस्य वचोऽप्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ८५५ ॥ प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते । न तृप्तिमुत्पादयते शरीरे वृद्धस्य दारा इव दर्शनीयाः ॥ ८५६ ॥ राजाश्रयस्तस्करताश्वपण्यमाथर्वणं चापि समुद्रयातम् । एतानि सिद्ध्यन्ति महाफलानि विपर्यये प्राणहराणि पञ्च ॥ ८५७ ॥ स्वर्गच्युतानामिह भूमिलोके चत्वारि चिह्नानि वसन्ति देहे । दानप्रसङ्गो मधुरा च वाणी सुरार्चनं ब्राह्मणतर्पणं च ॥ ८५८ ॥ निरक्षरे वीक्ष्य महाधनत्वं विद्यानवद्या विदुषा न हेया । रत्नावतंसाः कुलटाः समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ॥ ८५९ ॥ गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् । अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥ ८६० ॥ किमिष्टमन्नं खरसूकराणां किं रत्नहारो मृगपक्षिणां च । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं शास्त्रकथाप्रसङ्गः ॥ ८६१ ॥ ये शान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः स्त्रीविषये निवृत्ताः । प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ ८६२ ॥ पतिव्रतायाः कुचकुम्भयुग्ममत्युग्रशार्दूलनखावलिश्च ।

वीरस्य शस्त्रं कृपणस्य वित्तं लभ्यानि चत्वारि तदन्तकाले ॥ ८६३ ॥ देशाटनं पण्डितमित्रता च वाराङ्गना राजसभाप्रवेशः । अनेकशास्त्रार्थविलोकनं च चातुर्यमूलानि भवन्ति पञ्च ॥ ८६४ ॥ न वेत्ति यो यस्य गुणप्रकर्षं स तं सदा निन्दति नात्र चित्रम् । यथा किराती करिकुम्भजातां मुक्तां परित्यज्य बिभर्ति गुञ्जाम् ॥ ८६५ ॥ गिरौ मयूरा गगने पयोदा लक्षान्तरेऽर्कश्च जलेषु पद्मम् । इन्दुर्द्विलक्षं कुमुदस्य बन्धुर्यो यस्य मित्रं नहि तस्य दूरम् ॥८६६॥ सुभाषितज्ञेन जनेन साकं संभाषणं सुप्रभुसेवनं च । आलिङ्गनं तुङ्गपयोधराणां प्रत्यक्षसौख्यं त्रयमेव लोके ॥८६७॥ अर्थो नराणां पतिरङ्गनानां वर्षा नदीनामृतुराट् तरूणाम् । स्वधर्मचारी नृपतिः प्रजानां गतं गतं यौवनमानयन्ति ॥८६८॥ जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागः प्रभवो हि संपदः ॥८६९॥ संपूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नूनम् । विद्वान्कुलीनो न करोति गर्वं गुणैर्विहीना बहु जल्पयन्ति ॥ ८७० ॥ धिग्जीवितं शास्त्रकलोज्झितस्य धिग् जीवितं चोद्यमवर्जितस्य । धिग्जीवितं व्यर्थमनोरथस्य धिग्जीवितं ज्ञातिपराजितस्य ॥ ८७१ ॥ रूपं जरा सर्वसुखानि तृष्णा खलेषु सेवा पुरुषाभिमानम् । याच्ञा गुरुत्वं गुणमात्मपूजा चिन्ता बलं हन्त्यदया च लक्ष्मीम् ॥ ८७२ ॥ शुष्केन्धने वह्निरुपैति वृद्धिं बालेषु शोकश्चपलेषु कोपः । कान्तासु कामो निपुणेषु वित्तं धर्मो दयावत्सु महत्सु धैर्यम् ॥ ८७३ ॥ निर्वाणदीपे किमु तैलदानं चौरे गते वा किमु सावधानम् । वयोगते किं वनिताविलासः पयोगते किं खलु सेतुबन्धः ॥ ८७४ ॥ त्रिविक्रमोऽभूदपि वामनोऽसौ स शूकरश्चेति स वै नृसिंहः । नीचैरनीचैरतिनीचनीचैः सर्वैरुपायैः फलमेव साध्यम् ॥ ८७५ ॥ कुग्रामवासः कुजनस्य सेवा कुभोजनं क्रोधमुखी च भार्या । मूर्खश्च पुत्रो विधवा च कन्या विनाग्निना संदहते शरीरम् ॥ ८७६ ॥ अल्पीयसामेव निवासभूमित्यागाद्विपत्तिर्महतां न जातु । रत्नाकरात्सन्मणयोऽभियान्ति राज्ञां शिरः काकमुखानि भेकाः ॥ ८७७ ॥ अनेकशास्त्रं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः । यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ ८७८ ॥ अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः । सारं ततो ग्राह्यमपास्य फल्गु हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ ८७९ ॥ क्रोधो हि शत्रुः प्रथमो नराणां देहस्थितो देहविनाशनाय । यथा स्थितः काष्ठगतो हि वह्निः स एव वह्निर्दहते शरीरम् ॥ ८८० ॥ यथा विहङ्गास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति । यथा तरुण्यः पतिमाश्रयन्ति सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ८८१ ॥ यती व्रती चापि पतिव्रताश्च वीराश्च शूराश्च दयापराश्च । त्यागी च भोगी च बहुश्रुताश्च सुसङ्गमात्रेण दहन्ति पापम् ॥ ८८२ ॥ वसन्त्यरण्येषु चरन्ति दूर्वाः पिबन्ति तोयान्यपरिग्रहाणि । तथापि वध्यां हरिणा नराणां को लोकमाराधयितुं समर्थः ॥ ८८३ ॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न विदन्ति धर्मम् । धर्मो न वै यत्र च नास्ति सत्यं सत्यं न तद्यच्छलनानुविद्धम् ॥ ८८४ ॥ वरं सखे सत्पुरुषापमानितो न नीचसंसर्गगुणैरलङ्कृतः । वराश्वपादेन हतो विराजते न रासभस्योपरि संस्थितो नरः ॥ ८८५ ॥ आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ ८८६ ॥ उपाधिभिः संततसंगतोऽपि नहि स्वभावं विजहाति भावः । आजन्म उन्मज्जति दुग्धसिन्धौ तथापि काकः किल कृष्ण एव ॥ ८८७ ॥ किं वाससा तत्र विचारणीयं वासः प्रधानं खलु योग्यतायाः। पीताम्बरं वीक्ष्य ददौ स्वकन्यां चर्माम्बरं वीक्ष्य विषं समुद्रः ॥ ८८८ ॥ करोति नोऽशेषजनातिरिक्तां संभावनामर्थवतीं क्रियाभिः । संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या ॥ ८८९ ॥ नरस्य चिह्नं नरकागतस्य विरोधिता बन्धुजनेषु नित्यम् ।

सरोगता नीचजनेषु सेवा ह्यतीव दोषः कटुका च वाणी ॥ ८९० ॥ स्थितो न खादामि हसन्न वच्मि गतं न शोचामि कृतं न मन्ये । द्वयोस्तृतीयो न भवामि राजन्केनास्मि मूर्खो वद कारणेन ॥ ८९१ ॥ यस्मिन्कुले यः पुरुषः प्रधानः स सर्वयत्नेन हि रक्षणीयः । तस्मिन्विनष्टे सकलं विनष्टं न नाभिभङ्गे[1] ह्यरका[2] वहन्ति ॥ ८९२ ॥ पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्[3] । सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥ ८९३ ॥ संचिन्त्य संचिन्त्य जगत्समस्तं त्रयः पदार्था हृदयं प्रविष्टाः । इक्षोर्विकाराः कृतयः कवीनां मुग्धाङ्गनापाङ्गतरङ्गितानि ॥ ८९४ ॥ बालसखित्वमकारणहास्यं स्त्रीषु विवादमसज्जनसेवा । गर्दभयानमसंस्कृतवाणी षट्सु नरो लघुतामुपयाति ॥ ८९५ ॥ वयसि[6] गते कः कामविकारः क्षीणे वित्ते कः परिवारः । शुष्के नीरे कः कासारो[7] ज्ञाते तत्त्वे[8] कः संसारः ॥ ८९६ ॥ जवो हि सप्तेः[9] परमं विभूषणं त्रपाङ्गनायाः कृशता तपस्विनः । द्विजस्य विद्या नृपतेरपि क्षमा पराक्रमः शस्त्रबलोपजीविनाम् ॥ ८९७ ॥ धनेन किं यो न ददाति याचके बलेन किं यश्च रिपुं न बाधते । श्रुतेन किं यो न च धर्ममाचरेत्किमात्मना यो न जितेन्द्रियो भवेत् ॥ ८९८ ॥ श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा[10] । निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता ॥ ८९९ ॥ प्रकीर्णकेशामनवेक्ष्यकारिणीं[11] सदा च भर्तुः प्रतिकूलभाषिणीम् । परस्य वेश्माभिरतामपत्रपामेवं विधां योषितमाशु वर्जयेत् ॥ ९०० ॥ ॥ सतीमपि ज्ञातिकुलैकसंश्रयां[12] जनोऽन्यथा भर्तृमतीं[13] विशङ्कते । अतः समीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ ९०१ ॥ मनीषिणः सन्ति न ते हितैषिणो हितैषिणः सन्ति न ते मनीषिणः । सुहृच्च विद्वानपि दुर्लभो नृणां यथौषधं स्वादु हितं च दुर्लभम् ॥ ९०२ ॥ परोऽवजानाति यदज्ञताजडस्तदुन्नतानां न विहन्ति धीरताम् । समानवीर्यान्वयपौरुषेषु यः करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥ ९०३ ॥ यदा विगृह्णाति हतं तदा यशः करोति मैत्रीमथ दूषिता गुणाः । स्थितिं समीक्ष्योभयथा परीक्षकः करोत्यवज्ञोपहतं पृथग्जनम् ॥ ९०४ ॥ वनेषु दोषाः[14] प्रभवन्ति रागिणां[15] गृहेषु पञ्चेन्द्रियनिग्रहस्तपः । अकुत्सिते[16] कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ ९०५ ॥ सुजीर्णमन्नं सुविचक्षणः सुतः सुशासिता स्त्री नृपतिः सुसेवितः । सुचिन्त्य चोक्तं[17] सुविचार्य यत्कृतं सुदीर्घकालेऽपि न याति विक्रियाम् ॥ ९०६ ॥ तृणानि नोन्मूलयति प्रभञ्जनो[18] मृदूनि नीचैः प्रणतानि सर्वतः । समुच्छ्रितानेव तरून्प्रबाधते महान्महत्स्वेव करोति विक्रमम् ॥ ९०७ ॥ निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति ॥ ९०८ ॥ न साहसैकान्तरसानुवर्तिना न चाप्यपायोपहतान्तरात्मना । विभूतयः शक्यमवाप्तुमूर्जिता नये च शौर्ये च वसन्ति संपदः ॥ ९०९ ॥ मुदं विषादः शरदं हिमागमस्तमो विवस्वान्सुकृतं कृतघ्नता । प्रियोपपत्तिः शुचमापदं[20] नयः श्रियः समृद्धा अपि हन्ति दुर्नयः ॥ ९१० ॥ उदीरितोऽर्थः[21] पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः । अनुक्तम-

---

१ पिण्डिकाया नाशे । २ चक्रदण्डविशेषाः । ३ दूषितम् । ४ पुराणं नवं वा । ५ बालस्य सखित्वम् । बालस्य सखा, तस्य भाव इति विग्रहे तु बालसखत्वमिति स्यात् । ६ तारुण्यावस्थायाम् । ७ तडागः । ८ आत्मानात्मस्वरूपे । ९ अश्वस्य । १० नदी । ११ विचारमन्तरैव कार्यतत्पराम् । १२ पितृकुल एव निवासिनीम् । १३ जीवत्पतिकाम् । १४ मन्मथविकाराः । १५ अजितेन्द्रियाणाम् । अपक्वकषायाणामिति भावः । १६ कर्तव्ये । १७ सिद्ध्यसिद्धिचोरनाग्राहिणः । १८ वायुः । १९ निहननमात्रपरेण । २० शोकम् । २१ कथितः ।

प्यूहति पण्डितो जनः परेङ्गितं[1]ज्ञानफला हि बुद्धयः ॥ ९११ ॥ असत्यता निष्ठुरताऽकृतज्ञता[2] भयं प्रमादोऽलसता विषादिता । वृथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गरौक्ष्यादि विनाशनं श्रियः ॥ ९१२ ॥ दरिद्रता धीरतया विराजते कुरूपता शीलतया विराजते । कुभोजनं चोष्णतया विराजते कुवस्त्रता शुभ्रतया विराजते ॥ ९१३ ॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः । तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥ ९१४ ॥ कुदेशं[3]मासाद्य कुतोऽर्थसंचयः कुपुत्रं[4]मासाद्य कुतो जलाञ्जलिः । कुगेहिनीं[5] प्राप्य गृहे कुतः सुखं कुशिष्यमध्यापयतः कुतो यशः ॥ ९१५ ॥ मातुः समं नास्ति शरीरपोषणं चिन्तासमं नास्ति शरीरशोषणम् । भार्यासमं नास्ति शरीरतोषणं विद्यासमं नास्ति शरीरभूषणम् ॥ ९१६ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो बली बलं वेत्ति न वेत्ति निर्बलः । पिको वसन्तस्य गुणं न वायसः करी च सिंहस्य बलं न मूषकः ॥ ९१७ ॥ सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् । सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति ॥ ९१८ ॥ स दीक्षितो यः सकलं संदीक्षते[6] स पण्डितो यः करणै[7]रखण्डितः । स तापसो यः परतापकर्षणः[8] स धार्मिको यः परमर्म न स्पृशेत्[9] ॥ ९१९ ॥ यशस्करे कर्मणि मित्रसंग्रहे प्रियासु नारीष्वधनेषु बन्धुषु । क्रतौ विवाहे व्यसने रिपुक्षये धनव्ययस्त्वेषु न गण्यते बुधैः ॥ ९२० ॥ विवादशीलां स्वयमर्थचोरिणीं परानुकूलां बहुपाकपाकिनीम् । सक्रोधिनीं चान्यगृहेषु वासिनीं त्यजन्ति भार्यां दशपुत्रमातरम्[10] ॥ ९२१ ॥ अतिप्रचण्डा बहुदुःखभागिनी विवादशीला परगेहगामिनी । भर्तुः स्वयं निन्दति या च तस्करी त्यजेत्स्वभार्यां दशपुत्रपुत्रिणीम् ॥ ९२२ ॥ कुले कलङ्कः कवले कदन्नता[11] सुतः कुबुद्धिर्भवने दरिद्रता । रुजः शरीरे कलहप्रिया प्रिया गृहागमे[12] दुर्गतयः षडेते ॥ ९२३ ॥ प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थमन्तरा । शकुनादिव मार्गवर्तिभिः पुरुषादुद्विजितव्यमीदृशात् ॥ ९२४ ॥ मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा । इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ ९२५ ॥ महतां यदि निन्दने रतिर्गुणसंख्यैव तदा विधीयताम् । असतामपि चेत्स्तवे रतिर्ननु तद्दूषणमेव गण्यताम् ॥ ९२६ ॥ अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् । स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम्[13] ॥ ९२७ ॥ महतस्तरसा विलङ्घयन्[14]निजदोषेण कुधीर्विनश्यति । कुरुते[15] न खलु स्वयेच्छया शलभानिन्धनमिद्धदीधितिः ॥ ९२८ ॥ क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः । शिरसौघमधत्त शंकरः सुरसिन्धो[16]र्मधुजित्तमङ्घ्रिणा ॥ ९२९ ॥ कृतिनामकृती कथं कथं वा तुलनां यातु कृतैर्वचः प्रपञ्चैः । बहुभिर्विधृतैः कचैः कलापैर्विधवा[17] किं सधवोपमानमेति ॥ ९३० ॥ अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः । उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ ९३१ ॥ उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः । अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ ९३२ ॥ जरा

---

१ इङ्गितं मनसा चिन्तितम् । २ कृतघ्नतेति पाठः स्पष्टार्थः । ३ निर्जीविकम् । ४ नास्तिकपुत्रम् । ५ असतीं स्त्रियम् । ६ साधु मन्यते । ७ इन्द्रियैः । ८ परक्लेशापहः । ९ पीडयेत् । १० दशपुत्रामपीति भावः । ११ कुत्सितं भोज्यम् । १२ गृहस्थाश्रमे । १३ बन्धनं हि प्रियप्रसक्तिमूलम् । तदभावे तु बन्धननिवृत्त्या पारमार्थिकश्रेयःपरत्वसम्पत्तिरेवेति तथोक्तिः । १४ अवजानानः । १५ मूढः । १६ दहतीतिभावः । वेदाः प्रमाणमित्यादिवदयं प्रयोगः । १७ गङ्गायाः । १८ जीवत्पतिकासाम्यम् ।

रूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया । कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः ॥ ९३३ ॥ गुणवानपि नोपयाति पूजां पुरुषः सत्पुरुषैरकत्थ्यमानः । नहि सौरमणिः[1] स्वभावकान्तिं रविपादैः[2]रनधिष्ठितः करोति ॥ ९३४ ॥ सहसा विदधीत न क्रियामविवेकः परम्[3]आपदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ ९३५ ॥ विना गोरसं[4] को रसो भोजनानां विना गोरसं[5] को रसो भूपतीनाम् । विना गोरसं[6] को रसः कामिनीनां विना गोरसं[7] को रसः पण्डितानाम् ॥ ९३६ ॥ सकलापि कला कलावतां विकला पुण्यकलां विना खलु । सकले नयने वृथा यथा तनुभाजां[8] हि कनीनिकां विना ॥ ९३७ ॥ सुकुलजन्म विभूतिः[9]रनेकधा प्रियसमागमसौख्यपरम्परा । नृपकुले गुरुता[10] विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥ ९३८ ॥ कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि[11] प्रणिधीयते । न स विरौति न चापि हि शोभते भवति योजयितुर्वचनीयता[12] ॥ ९३९ ॥ सहजमलिनवक्रभावभाजां भवति भवः[13] प्रभवात्[14]मनाशहेतुः । जलधरपदवीमवाप्य धूमो ज्वलनविनाशमनुप्रयाति नाशम् ॥ ९४० ॥ परिहरत पराङ्गनानुषङ्गं बत यदि जीवितमस्ति वल्लभं वः । हर हर हरिणीदृशो निमित्तं दश दशकन्धरमौलयो लुठन्ति ॥ ९४१ ॥ शिशुरपि निपुणो गुरोर्गरीयान्न तु वपुषैव महान्महत्प्रतिष्ठः[15] । मणिरणुरपि भूषणाय पुंसां न तु पृथुलैव शिला विलासहेतुः ॥ ९४२ ॥ अनुदिनमनुकूलमाचरन्तं विहितमतिः प्रतिकूलमाचरेत्कः । शमितगरलजातकण्ठदाहं शितिकण्ठः[16] शशिनं शिरःसु धत्ते ॥ ९४३ ॥ नितम्बो विशालः कटिर्मध्यसूक्ष्मा कुचद्वन्द्वमत्यन्तभव्यं मुखं च । वचश्चेन्न किंचिद्रसालं रमण्यस्ततः किं ततः किं ततः किं ततः किम् ॥ ९४४ ॥ स्तब्धस्य नश्यति यशो विषमस्य[17] मैत्री नष्टक्रियस्य कुलमर्थपरस्य धर्मः । विद्याफलं व्यसनिनः कृपणस्य सौख्यं राज्यं प्रमत्तसचिवस्य[18] नराधिपस्य ॥ ९४५ ॥ दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः सन्तापयन्ति कमपथ्यभुजं न रोगाः । कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः कं स्वीकृता न विषया ननु तापयन्ति ॥ ९४६ ॥ वित्तेन किं वितरणं यदि नास्ति दीने किं सेवया यदि परोपकृतौ न यत्नः । किं संगमेन तनयो यदि नेक्षणीयः किं यौवनेन विरहो यदि वल्लभायाः ॥ ९४७ ॥ किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः । किं चक्षुरप्रतिहतं[19] धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम् ॥ ९४८ ॥ प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम् । संप्रीणिताः प्रणयिनो विभवैस्ततः किं कल्पं[20] स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ९४९ ॥ आदौ न वा प्रणयिनां प्रणयो विधेयो दत्तोऽथवा प्रतिदिनं परिपोषणीयः । उत्क्षिप्य यत्क्षिपति तत्प्रकरोति लज्जां भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥ ९५० ॥ वाञ्छैव सूचयति पूर्वतरं भविष्यं पुंसां यदन्यतनुजं त्वशुभं शुभं वा । विज्ञायते शिशुरजातकलापचिह्नः प्रत्युद्गतैरपसरन्सरसः कलापी ॥ ९५१ ॥ शस्त्रैर्हतास्तु रिपवो न हता भवन्ति प्रज्ञाहताः[21]श्च नितरां सुहता भवन्ति । शस्त्रं निहन्ति पुरुषस्य शरीरमेकं प्रज्ञा

---

१ सूर्यकान्तमणिः । २ पादाः किरणाः । ३ परं केवलम् । यद्वा-परमाया आपदस्तासामिति । ४ घृतम् । ५ पृथिवीभोगः । ६ नेत्रादीन्द्रियामोदम् । ७ वचनविलक्षणत्वानन्दम् । ८ जीवानाम् । ९ सम्पत्तिः । १० आदरः । ११ वङ्गेसीसके वा । १२ निन्दा । १३ जन्म । १४ प्रभवः पित्रादिः । १५ महत्सु प्रतिष्ठा यस्य सः । १६ महेश्वरः । १७ उन्नताधमस्य । १८ प्रमत्तः सचिवो यस्येति तस्य । १९ अनष्टदर्शनशक्तिकम् । २० प्रलयं यावत् । अत्रानवीकृतत्वंदोषः । संसारतो, हि तरणं परमात्मबोधात्' इति पाठे तु न । २१ मूढाः ।

कुलं च विभवं च यशश्च हन्ति ॥ ९५२ ॥ स्थानेषु शिष्यनिवहैर्विनियुज्यमाना विद्या गुरुं हि गुणवत्तरमातनोति । आदाय शुक्तिषु बलाहकविप्रकीर्णैं रत्नाकरो भवति वारिभिरम्बुराशिः ॥ ९५३ ॥ वार्ता च कौतुककरी विमला च विद्या लोकोत्तरः परिमलश्च कुरङ्गनाभेः । तैलस्य बिन्दुरिव वारिणि दुर्निवारमेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥ ९५४ ॥ अत्यन्तमन्थनकदर्थनमुत्सहन्ते मर्यादया नियमिताः किमु साधवोऽपि । लक्ष्मीसुधाकरसुधाद्युपनीय शेषे रत्नाकरोऽपि गरलं किमु नोज्जगार ॥ ९५५ ॥ अर्था हसन्त्युचितदानविहीनलुब्धं भूम्यो हसन्ति मम भूमिरिति ब्रुवाणम् । जारा हसन्ति तनया[2]नुपलालयन्तं मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ ९५६ ॥ वैद्या वदन्ति कफपित्तमरुद्विकाराञ्ज्योतिर्विदो ग्रहगतिं परिवर्तयन्ति । भूता[3]भिषङ्ग इति भूतविदो वदन्ति प्राचीनकर्म बलवन्मुनयो वदन्ति ॥ ९५७ ॥ कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके ख्यातिं प्रयाति नहि सर्वविदस्तु सर्वे । किं केतकी फलति किं पनसः सुपुष्पः किं नागवल्ल्यपि च पुष्पफलैरुपेता ॥ ९५८ ॥ शीलावलम्बनमहर्निशमिष्टचिन्ता वित्तानुरूपमशनाभरणादि कार्यम् । वार्यं च दुर्जनसमाजनिजप्रशंसाहास्यादि सज्जनवचो हृदये निधेयम् ॥ ९५९ ॥ पश्यन्ति नैव कवयो निजकाव्यदोषं भक्षन्ति नो बलिभुजो निजजातिमांसम् । जल्पन्ति नैव मधुपा[4] निजमर्मवाक्यं कुर्वन्ति नो युवतयः पुरुषेषु बीजम् ॥ ९६० ॥ कीर्तिं मृणालकमनीयभुजामनिद्र[6]चन्द्रानना स्मितसरोरुहचारुनेत्राम् । ज्योत्स्नास्मितामपहतां दयितामिव स्वां लब्धुं न कं परमुपक्रममातनोति ॥ ९६१ ॥ शास्त्रं सुनिश्चलधिया परिचिन्तनीयं सेव्यो नृपोऽपि सततं परिसेवनीयः । अङ्के स्थितापि युवतिः परिरक्षणीया शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ॥ ९६२ ॥ हंसो विभाति नलिनीदलपुञ्जमध्ये सिंहो विभाति गिरिगह्वरकन्दरासु । जात्यो विभाति तुरगो रणयुद्धमध्ये विद्वान्विभाति पुरुषेषु विचक्षणेषु ॥ ९६३ ॥ हंसो न भाति बलिभोजनवृन्दमध्ये गोमायुमण्डलगतो न विभाति सिंहः । जात्यो न भाति तुरगः खरयूथमध्ये विद्वान्न भाति पुरुषेषु निरक्षरेषु ॥ ९६४ ॥ विश्वेश्वरस्तु सुधिया गलितेऽपि भेदे भावेन भक्तिसहितेन समर्चनीयः । प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते चैलाञ्चलव्यवहितेन निरीक्षणीयः ॥ ९६५ ॥ किं कोकिलस्य विरुतेन[10] गते वसन्ते किं कातरस्य बहुशस्त्रपरिग्रहेण । मित्रेण किं व्यसनै[11]ककालपराङ्मुखेन किं जीवितेन पुरुषस्य निरक्षरेण ॥ ९६६ ॥ हारः प्रलम्बितपयोधरमध्यवर्ती शुष्कस्तनान्तरगतो वरकञ्चुकश्च । काणेक्षणेऽञ्जनममूर्ध्नि च पुष्पमाला दीनाश्रयो बुधजनः खलु पञ्च दुःखम् ॥ ९६७ ॥ नीचं समृद्धमपि सेवति नीच एव तं दूरतः परिहरन्ति पुनर्महान्तः । शा[12]खोटकं मधुरपक्वफलैरुपेतं सेवन्ति वायसगणा न तु राजहंसाः ॥ ९६८ ॥ माकन्दरा[13]जपरिरम्भणलालितापि मल्ली[14]वधूर्मधुपरागवती बभूव । दृष्ट्वाऽपि तत्कुटिलतां न जहाति चूतः[15] प्रायः कुजातिनिवहेषु कुतोऽभिमानः ॥ ९६९ ॥ कालक्रमेण परिणामवशादनर्घ्या[16] भावा भवन्ति खलु पूर्वमतीव तुच्छाः । मुक्तामणिर्जलदतोयकणोऽप्यणीयान्संपद्यते च चिरकीचक[17]रन्ध्रमध्ये ॥ ९७० ॥ यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसाऽपि न कृतं तदिहाभ्युपैति । इत्थं विधेर्विधिविपर्ययमाकलय्य[18] सन्तः

---

१ वृत्तान्तः । २ तनयोपलालनमात्रपरत्वेन क्लीबत्वमभिव्यज्यते । ३ भूतबाधा । ४ मद्यपानकराः । ५ प्रीतिम् । ६ प्रकाशमान- । ७ वेगवान् । ८ काक- । ९ शास्त्रदृष्ट्याद्वैतबुद्धौ निवृत्तायाम् । १० ध्वनिना । ११ विपत्ति- । १२ श्मशानादिगतं वृक्षम् । १३ द्राक्षा- । १४ मल्लिकारूपा वधूः । १५ आम्रः । १६ न नव्यः प्रशंसनीयो येभ्यस्तादृशाः । १७ वेणु- । वेणुगर्भतोऽपि रत्नोत्पत्तिः श्रूयते । १८ विचार्य ।

सदा सुरसरित्तटमाश्रयन्ति ॥ ९७१ ॥ अन्तःप्रतप्तमरुसैकतदह्यमानमूलस्य चम्पकतरोः क विकासचिन्ता । प्रायो भवत्यनुचितस्थितिदेशभाजां श्रेयः स्वजीवपरिपालनमात्रमेव ॥ ९७२ ॥ उचितमनुचितं वा कुर्वता कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ९७३ ॥ व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते । विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ९७४ ॥ प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः । अतिपरिचयदोषात्कस्य नो मानहानिर्नवनवगुणरागी प्रायशः सर्वलोकः ॥ ९७५ ॥ भवति हृदयहारी कोऽपि कस्यापि हेतुर्न खलु गुणविशेषः प्रेमबन्धप्रयोगे । किसलयितवनान्ते कोकिलारावरम्ये विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ ९७६ ॥ परीवादस्तथ्यो भवति वितथो वाऽपि महतां तथाऽप्युच्चैर्धाम्नो हरति महिमानं जनरवः । तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो रवेस्तादृक्तेजो नहि भवति कन्यां गतवतः ॥ ९७७ ॥ बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्पराभ्यूहस्थानान्यपि तनुपराणि स्थगयति । जनं विद्वानेकः सकलमभिसन्धाय कपटैस्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥ ९७८ ॥ कलारत्नं गीतं गगनतलरत्नं दिनमणिः सभारत्नं विद्वाञ्श्रवणपटुरत्नं हरिकथा । निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी महीरत्नं श्रीमाञ्जयति कृतिरत्नं सुपुरुषः ॥ ९७९ ॥ नराः संस्काराहा जगति किल केचित्सुकृतिनः समानायां जात्यामपि वयसि सत्यां परविधः । वयं दृष्टान्तोऽत्र स्फुटकरगतोऽत्यभ्यसनतः शुकः श्लोकान्वक्तुं प्रभवति न काकः क्वचिदपि ॥ ९८० ॥ वरं तुङ्गाच्छृङ्गाद्गुरुशिखरिणः क्वापि पुलिने पतित्वाऽयं कायः कठिनदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ९८१ ॥ विदैवज्ञं ग्रामं विबुधविधुरां भूपतिसभां मुखं श्रुत्या हीनं मनुजपतिशून्यं च विषयम् । अनाचारान्दारानपहरिकथं काव्यमपि च प्रवक्तृत्वापेतं गुरुमपि सुबुद्धिः परिहरेत् ॥ ९८२ ॥ मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनितास्तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥ ९८३ ॥ किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः । किमाराध्यं पुण्यं किमभिलषणीयं च करुणा यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति ॥ ९८४ ॥ वरं मौनं कार्यं न च वचनमुक्तं यदनृतं वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् । वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिर्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ ९८५ ॥ वरं शून्या शाला न च खलु वरो दुष्टवृषभो वरं वेश्या पत्नी न पुनरविनीता कुलवधूः । वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे वरं प्राणत्यागो न पुनरधमानामुपगमः ॥ ९८६ ॥ दृढः प्रेमा भग्नः सदसिरिव संधिं न भजते भजेतापि प्रायः स्खलति खलु यत्नैरपि धृतः । स्खलेन्नो चेत्साम्यं भजति न भजेद्वा न भवति च्युताशङ्कश्चेत्स्यात्स्मृतिमुपगतस्तु व्यथयति ॥ ९८७ ॥ इयं प्रीतिर्वल्ली हृदयभुवि दैवात्समुदिता तथा यत्नाद्रक्ष्या प्रकृतिमृदुलापायबहुला ।

---

१ परिणामः । २ कुत्सितं फलम् । ३ अन्तःकरणवर्ती । ४ सूर्यस्य । ५ दोषचर्चा । ६ स्वभावपरिवर्तनम् । ७ ज्योतिर्विच्छून्यम् । ८ विद्वज्जनशून्याम् । ९ देशम् । १० तेजनयन्त्रेणोल्लिखितः । ११ आयुधैः कृतक्षतः । १२ हस्ती । १३ शुष्क- । १४ नपुंसकत्वम् । १५ दुश्चरिता । १६ समीचीनः खड्ग इव ।

यथा नैनां स्फीतां पिशुनजनदुर्वाक्यदहनो दहत्यन्तः शोषं व्रजति न पुनः सौहृदनिधे ! ॥ ९८८ ॥ न रम्यं नारम्यं प्रकृतिगुणतो वस्तु किमपि प्रियत्वं यत्र स्यादितरदपि तद्ग्राहकवशात् । रथाङ्गाह्वानानां भवति विधुरङ्गारशकटी पटीराम्भःकुम्भः स भवति चकोरीनयनयोः ॥ ९८९ ॥ अरण्यं सारङ्गैर्गिरिकुहरगर्भाश्च हरिभिर्दिशो दिङ्मातङ्गैः सलिलमुषितं पङ्कजवनैः । प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः सतां माने म्लाने मरणमथवा दूरगमनम् ॥ ९९० ॥ नभोभूषा पूषा कमलवनभूषा मधुकरो वचोभूषा सत्यं वरविभवभूषा वितरणम् । मनोभूषा मैत्री मधुसमयभूषा मनसिजः सदोभूषा सूक्तिः सकलगुणभूषा च विषयः ॥ ९९१ ॥ कलासीमा काव्यं सकलगुणसीमा वितरणं भियां सीमा मृत्युः सकलसुखसीमा सुवदना । तपःसीमा मुक्तिः सकलकृतिसीमा श्रितभृतिः श्रियां सीमाऽऽह्लादो श्रवणसुखसीमा हरिकथा ॥ ९९२ ॥ शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ९९३ ॥ प्रसरति मनः कार्यारम्भे दृढीभवति स्पृहा स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् । फलति सकलं कृत्यं चित्तं समुन्नतिमश्नुते भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यति ॥ ९९४ ॥ सरसि बहुशस्ताराच्छाये क्षणात्परिवञ्चितः कुमुदविटपान्वेषी हंसो निशासु विचक्षणः । न दशति पुनस्ताराशङ्की दिवाऽपि सितोत्पलं कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ ९९५ ॥ स्वफलनिचयः शाखाभङ्गं करोति वनस्पतेर्गमनमलसं बर्हाटोपः करोति शिखण्डिनः । चतुरगमनो जात्यो योऽश्वः स गौरिव वाह्यते गुणवति जने प्रायेणैते गुणाः खलु दूषणम् ॥९९६॥ कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् । सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९९७ ॥ मधुकरगणश्चूतं त्यक्त्वा गतो नवमल्लिकां पुनरपि गतो रक्ताशोकं कदम्बवनं ततः । तदपि सुचिरं स्थित्वा तेभ्यः प्रयाति सरोरुहं परिचितजनद्वेषी लोको नवं नवमीहते ॥ ९९८ ॥ दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः । तस्मादेयो विपुलमतिभिर्नावकाशोऽधमानां जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥९९९॥ मौने मौनी गुणिनि गुणवान् पण्डिते पण्डितोऽसौ दीने दीनः सुखिनि सुखवान्भोगिनि प्राप्तभोगः । मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥ १००० ॥ विद्यातीर्थे जगति विबुधाः साधवः सत्यतीर्थे गङ्गातीर्थेऽमलिनमनसो योगिनो ध्यानतीर्थे । धारातीर्थे धरणिपतयो दानतीर्थे धनाढ्या लज्जातीर्थे कुलयुवतयः पातकं क्षालयन्ति ॥ १००१ ॥ साध्वीस्त्रीणां दयितविरहे मानिनां मानभङ्गे सल्लोकानामपि जनरवे निग्रहे पण्डितानाम् । अन्योद्रेके कुटिलमनसां निर्गुणानां विदेशे भृत्याभावे भवति मरणं किंतु संभावितानाम् ॥ १००२ ॥ शीतेऽतीते वसनमशनं वासरान्ते निशान्ते क्रीडारम्भं कुवलयदृशां यौवनान्ते विवाहम् । सेतोर्बन्धं पयसि चलिते

---

१ मृगैः । २ सिंहैः । ३ दिग्गजैः । ४ सूर्यः । ५ सदसः सभाया भूषा भूषणम् । ६ कलानां परा काष्ठा । ७ कर्म- । ८ आश्रितपालनम् । ९ सम्पदाम् । १० दरिद्रः । ११ कीटकसमूहैर्व्याप्तम् । १२ लालयार्द्रम् । १३ आमगन्धि । १४ गर्हितम् । १५ निर्मांसम् । १६ इन्द्रम् । १७ क्षुल्लकत्वम् । १८ इदं च वृत्तं पञ्चतन्त्रादिषु स्पष्टम् । १९ विरक्ते । २०अमलिनमनस इति च्छेदः २१ खड्गाघातरूपे तीर्थे । २२ परोन्नतौ । २३ प्रसिद्धानाम् ।

वार्धके तीर्थयात्रां वित्तेऽतीते वितरणमतिं कर्तुमिच्छन्ति मूढाः ॥ १००३ ॥ श्रेयो नूनं व्रजति स पुमाञ्शिक्षयावर्धितो यः स्वच्छन्दं यश्चरति स पराभूतिमाप्नोति काले । पूज्यो वेणुर्भवति च नर्तिं प्रापितो भूपतीनामन्यं नृत्तोचितमिति करे नर्तकाः कल्पयन्ति ॥ १००४ ॥ बाले बाला विदुषि विबुधा गायने गायनेशाः शूरे शूरा निगमविदि चाम्नायलीलागृहाणि । सिद्धे सिद्धा मुनिषु मुनयः सत्सु सन्तो महान्तः प्रौढे प्रौढाः किमिति वचसा तादृशा यादृशेषु ॥१००५॥ चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो नव्यां वल्लीं दवदहन[1]कश्चान्दनीं[2] दन्दहीति[3] । अप्युन्मत्तः कुवलयमयीं मालिकां[4]मालुनीते[5] मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण ॥ १००६ ॥ यावत्स्वस्थमिदं शरीरमरुजं[6] यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्संदीप्ते भवने तु कूपखननं प्रत्युद्यमः[7] कीदृशः ॥ १००७ ॥ निर्वृत्ताध्वरकृत्य[8] ऋत्विजमहो तीर्णापगो[9] नाविकं युद्धान्ते सुभटं[10] च सिद्धविजयो बोढारमात्तस्थलः[11] । वृद्धं वारवधूजनं च कितवो[12] निर्घृष्टयौवनो ध्वस्तातङ्क[13]चयश्चिकित्सकमपि द्वेष्टि प्रदेयार्थिनम् ॥१००८॥ मित्रं स्वच्छतया रिपुं नयबलै[14]र्लुब्धं धनैरीश्वरं कार्येण द्विजमादरेण युवतिं प्रेम्णा शनैर्बान्धवान् । अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं[15] कथाभिर्बुधं विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद्वशम् ॥ १००९ ॥ दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनाद्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् । ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ १०१० ॥ कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः । कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं को वा दुर्जनवागुरासु[16] पतितः क्षेमेण यातः पुमान् ॥१०११ ॥ वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं योधं कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् । राजानं च कुमन्त्रिभिः परिवृतं देशं च सोपद्रवं भार्यां यौवनगर्वितां पररतां मुञ्चन्ति ते पण्डिताः ॥१०१२॥ वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसा निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं मन्त्रिणः । पुष्पं पर्युषितं[17] त्यजन्ति मधुपा दग्धं वनान्तं मृगाः सर्वः कार्यवशाज्जनोऽभिरमते तत्कस्य को वल्लभः ॥१०१३॥ सन्तश्चेदमृतेन किं यदि खलस्तत्कालकूटेन[18] किं दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः । किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥ १०१४ ॥ लोभश्चेदगुणेन किं पिशुनता[19] यद्यस्ति किं पातकैः सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् । सौजन्यं यदि किं गुणैः स्वमहिमा यद्यस्ति किं मण्डनैः सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥१०१५॥ छेदश्चन्दनचूतचम्पकवने रक्षापि शाखोटके[20] हिंसा हंसमयूरकोकिलकुले काकेषु नित्यादरः । मातङ्गेन खरक्रयः[21] समतुला कर्पूरकार्पासयोरेषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥ १०१६ ॥ या राका[22] शशिशोभना गतघना[23] सा यामिनी यामिनी या सौन्दर्यगुणान्विता पतिरता सा कामिनी कामिनी । या गोविन्दरस-

---

१ वनानलः । २ चन्दनसम्बन्धिनीम् । ३ अतिशयेन दहति । ४ पङ्क्तिम् । ५ छिनत्ति । ६ रोगाग्रस्तम् । ७ उद्योगः । ८ सम्पादितयज्ञानुष्ठानः । ९ नदीपारं प्राप्तः । १० वीरयोद्धारम् । ११ प्राप्यदेशं प्राप्तः । १२ धूर्तः । १३ निरस्तसर्वरोगः । १४ नीतिप्रभावैः । १५ अविश्वासादप्रीतेर्वा । १६ वागुरा बन्धनानि । १७ निर्गन्धम् । १८ विषयम् । १९ परदोषसूचकता । २० श्मशानवृक्षे । २१ हस्तिनं दत्वा खरक्रयणम् । २२ पूर्णिमा ।२३ मेघावरणजन्यभीषणताशून्या

प्रमोदमधुरा सा माधुरी माधुरी या लोकद्वयसाधिनी तनुभृतां सा चातुरी चातुरी ॥ १०१७ ॥ किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः । किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः ॥ १०१८ ॥ क्षान्तिश्चेद्वचनेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् । किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदि व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥ १०१९ ॥ सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः स्निग्धं मित्रमवञ्चकः परिजनो निष्क्लेशलेशं मनः । आकारो रुचिरः स्थिरश्च विभवो विद्याऽवदातं मुखं तुष्टे विष्टपकष्टहारिणि हरौ संप्राप्यते देहिना ॥ १०२० ॥ का श्लाघ्या गुणिना क्षमा परिभवः को यः स्वकुल्यैः कृतः किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते । को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥ १०२१ ॥ स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं सा स्त्री याऽनुविधायिनी स मतिमान्यः सद्भिरभ्यर्च्यते । सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ १०२२ ॥ प्रायेणात्र कुलान्वितं कुकुलजः श्रीवल्लभं दुर्भगो दातारं कृपणा ऋजूननृजवो वित्तान्वितं निर्धनाः । वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खा जनाः ॥ १०२३ ॥ पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः । अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ १०२४ ॥ सिंहो← व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् । छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलमज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ १०२५ ॥ शक्तेनापि सता जनेन विदुषा कालान्तरप्रेक्षिणा वस्तव्यं खलु वज्रपातविषमे क्षुद्रेऽपि पापे जने । दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन किं भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिताः ॥ १०२६ ॥ सिद्धिं वाञ्छयता जनेन विदुषा तेजो निगृह्य स्वकं सत्त्वोत्साहवतापि दैवगतिषु स्थैर्यं विधेयं क्रमात् । देवेन्द्रद्रुहिणोपमैर्बहुगुणैरभ्यर्चितो भ्रातृभिः किं क्लिष्टः सुचिरं विराटभवने पूर्वं न धर्मात्मजः ॥१०२७॥ रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना गन्तव्यानि दिनानि दैववशतो भूयो धनं वाञ्छता । सैरन्ध्रीति विगर्हिता युवतिभिः साक्षेपमाज्ञाभयाद्द्रौपद्या किल मत्स्यराजभवने घृष्टं न किं चन्दनम् ॥ १०२८ ॥ किं चित्रं यदि राजनीतिकुशलो राजा भवेद्धार्मिकः किं चित्रं यदि वेदशास्त्रनिपुणो विप्रो भवेत्पण्डितः । तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी तच्चित्रं यदि निर्धनोऽपि पुरुषः पापं न कुर्यात्कचित् ॥ १०२९ ॥ वासांसि व्रजचारिवारिजदृशां हृत्वा हठादुच्चकैर्यः प्राग्भूरुहमारुरोह स पुनर्वस्त्राणि विस्तारयन् । व्रीडाभारमपाचकार सहसा पाञ्चालजायाः स्वयं को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी ॥ १०३० ॥ अर्थी लाघवमुच्छ्रितो निपतनं कामातुरो लाञ्छनं निःस्वो वञ्चनमुन्मनाः विकलतां दोषाकुलः संशयम् । लुब्धोऽकीर्तिमसंगरः परिभवं दुष्टोऽन्यदोषे रतिं दुर्योग-

---

१ धर्माऽपीडनपूर्वकं लोकयात्रा, लोकयात्रारक्षणपूर्वकं धर्मानुष्ठानं च । २ जीवानाम् । ३ स्वच्छा । ४ संसार- । ५ पापात् । ६ कुलीनम् । ७ अकुलीनः । ८ सम्पन्नम् । ९ दरिद्राः । १० कुटिलाः । ११ रावणः । १२ पार्थः । १३ विराटराजगृहे । १४ प्रारब्धोपस्थाप्यमानेषु शुभाशुभोपभोगेषु । १५ कलङ्कम् । १६ निर्धनः । १७ अस्वस्थान्तःकरणः । १८ अदृष्टयुद्धप्रसङ्गः । १९ दुर्वचनशीलः ।

प्रियतां दुरोदर[1]वशः प्राप्नोति कष्टं मुहुः ॥ १०३१ ॥ नीतिर्भूमिभुजां नतिर्गुणवतां ह्री[2]रङ्गनानां रतिर्दंपत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो[3] गिराम् । लावण्यं वपुषः श्रुतं सुमनसः शान्तिर्द्विजस्य क्षमा शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥ १०३२ ॥ कार्पण्येन यशः क्रुधा[4] गुणचयो दम्भेन सत्यं क्षुधा मर्यादा व्यसनैर्धनं च विपदा स्थैर्यं प्रमादै[5]र्द्विजः । पैशुन्येन कुलं मदेन विनयो दुश्चेष्टया पौरुषं दारिद्र्येण जनादरो ममतया चात्मप्रकाशो हतः ॥ १०३३ ॥ तारुण्यं तरुणीजने विकचता[6] पुष्पे विधौ चन्द्रिका कासारे कुमुदं वने पिचुवनं[7] दानं द्विपेऽनर्गले[8] । आनृण्यं गृहिणां गृहस्य गृहिणी पित्रोः शुभा संततिर्लावण्यं तनुते द्विजेऽतिपलिते[9] विद्व[10]च्चतुर्थाश्रमः ॥ १०३४ ॥ माधुर्यं प्रमदाजनेषु ललितं दाक्षिण्य[11]मार्ये जने शौर्यं शत्रुषु नम्रता गुरुजने धर्मिष्ठता साधुषु । मर्मज्ञेष्वनुवर्तनं बहुविधं मानं जने पण्डिते शाठ्यं पापिजने नरस्य कथिताः पर्यन्तमष्टौ गुणाः ॥ १०३५ ॥ इन्दुं निन्दति तस्करो गृहपतिं जारो सुशीलं खलः साध्वीमप्यसती कुलीनमकुलो जह्याज्जरन्तं[12] युवा । विद्यावन्तमनक्षरो धनपतिं नीचश्च रूपोज्ज्वलं वैरूप्येण हतः प्रबुद्धमबुधो[13] कृष्टं निकृष्टो जनः ॥ १०३६ ॥ विद्वान्संसदि[14] पाक्षिकः[15] परवशो मानी दरिद्रो गृही[16] द्रव्याढ्यः कृपणो यतिर्वसुमना वृद्धो विवाहोद्यतः । राजा दुःसचिव प्रियः सुकुलजो मूर्खः पुमान्स्त्रीजितो[17] वेदान्ती हतसत्क्रियः किमपरं हास्यास्पदं भूतले ॥ १०३७ ॥ का विद्या कवितां विनाऽर्थिनि जने त्यागं विना श्रीश्च का को धर्मः कृपया विना क्षितिपतिः को नाम नीतिं विना । कः सूनुर्विनयं विना कुलवधूः का स्वामिभक्तिं विना भोग्यं किं रमणीं विना क्षितितले किं जन्म कीर्तिं विना ॥ १०३८ ॥ दाक्षिण्यं[18] स्वजने दया परजने शाठ्यं[19] सदा दुर्जने प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् । शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता ये चैव पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ १०३९ ॥ स्वाधीना दयिता सुतावधि सुतोऽसौ षोडशाब्दावधि स्यात्कन्या करपीडना[20]वधि सुतस्त्री तद्वशत्वावधि । जामाता बहुलार्पितावधि सखा साधुप्रलापावधि शिष्यो गुह्यनिरूपणावधि परे चैते धनत्वावधि ॥ १०४० ॥ स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां स्वास्थ्यं स्वल्पधनस्य संहतिरसद्वृत्तेश्च वाग्डम्बरः । स्वाचारस्य सदर्चनं परिणतेर्विद्या कुलस्यैकता प्रज्ञाया धनमुन्नतेरतिनतिः शान्तेर्विवेको बलम् ॥ १०४१ ॥ नागो भाति मदेन कं[21] जलरुहैः पूर्णेन्दुना शर्वरी शीलेन प्रमदा जवेन[22] तुरगो नित्योत्सवैर्मन्दिरम् । वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः सत्पुत्रेण कुलं नृपेण वसुधा लोकत्रयं विष्णुना ॥ १०४२ ॥ एहि स्वागतमाविशासनमिदं कस्माच्चिराद्दृश्यते का वार्ता परिदुर्बलो[23]ऽसि नितरां प्रीतोऽस्मि ते दर्शनात् इत्येवं समुपागतं द्विजवरं सम्भावयन्त्यादरात्तेषां युक्तमशङ्कितेन मनसा गेहेषु गन्तुं सदा ॥ १०४३ ॥ स्यादत्यन्तनिरक्षरः क्षितिपतिः श्रीकारमात्राश्रयान्मन्त्री तत्कथितार्थलेखनपरस्तत्सेवको जायते । अध्येता तदगारमेव भजते विद्वांस्तु तं याचते यावान्यस्य गिरा समं परिचयस्तावान्विदूरे[24] श्रियः ॥ १०४४ ॥ को लाभो गुणिसंगमः किमसुखं प्रोज्झि[25]तैः संगतिः का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः । कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ १०४५ ॥

---

१ द्यूतवशः । २ लज्जा । ३ स्वच्छता । ४ क्रोधेन । ५ समुदायः । ६ विकासः । ७ तूल- । ८ मत्ते । ९ अतिजीर्णे । १० विद्वत्सन्न्यासः । ११ चातुर्यम् । १२ वृद्धम् । १३ मूर्खः । १४ सभायाम् । १५ पक्षपाती । १६ गृहस्थाश्रमी । १७ स्त्रीवंशवदः । १८ सरलभावः । १९ शठत्वम् । २० विवाहावधि । २१ उदकम् । २२ वेगेन । २३ कृशः । २४ अत्यन्तदूरे । २५ मूर्खैः ।

सस्यानि स्वयमत्ति चेद्वसुमती माता सुतं हन्ति चेद्वेलामम्बुनिधिर्विलङ्घयति चेद्भूमिं दहेत्पावकः । आकाशं जनमस्तके पततति चेदन्नं विषं चेद्भवेदन्यायं कुरुते यदि क्षितिपतिः कस्तं निरोद्धुं क्षमः ॥ १०४६ ॥ वासः शुभ्रमृतुर्वसन्तसमयः पुष्पं शरन्मालती धानुष्कः कुसुमायुधः परिमलः कस्तूरिकास्त्रं धनुः । वाणी तर्करसोज्ज्वला प्रियतमा श्यामा वयो नूतनं मार्गः शांभव एव पञ्चमलया गीतिः कविर्विह्वणः ॥ १०४७ ॥ रोलम्बैर्न[1] विलम्बितं[2] विघटितं धूमाकुलैः कोकिलैर्मायूरैर्[3]श्चलितं पुरैव रभसात्कीरैर्[4]र्धीरैर्गतम् । एकेनापि सुपल्लवेन तरुणा दावानलोपप्लवः सोढः को न विपत्सु मुञ्चति जनो मूर्ध्नापि यो लालितः ॥ १०४८ ॥ क्षोणीशाश्रयिणां परोपकरणाभावाद्[5]वात्तश्रियां कार्पण्यात्सुधियामनध्ययनतो यूनां प्रवासाश्रयात् । ज्ञातॄणां जगदीशभक्तिविरहादायुर्वृथा गच्छतीत्येवं कांस्यसमुद्भवः प्रतिदिनं नादो वदत्युच्चकैः ॥ १०४९ ॥ मानुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता विप्रत्वे बहुविद्यताऽतिगुणता विद्यावतोऽर्थज्ञता । अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा ॥ १०५० ॥ आयाते च तिरोहितो यदि पुनर्दृष्टोऽन्यकार्ये रतो वाचि स्मेरमुखो विषण्णवदनः स्वक्लेशवादे मुहुः।अन्तर्वेश्मनि वासमिच्छति भृशं व्याधीति यो भाषते भृत्यानामपराधकीर्तनपरस्तन्मन्दिरं न व्रजेत्[7] ॥ १०५१ ॥ बन्दी विन्दति चेदमात्यपदवीं शिष्टैरलं भूरिभिः पुंभिश्चेत्प्रतिपाद्यते रतिकला केणीदृशामादरः । विश्रान्ता यदि वैखरीषु कविता काव्येन भव्येन किं भूपाले यवने समस्तभुवने वैदग्ध्यमस्तं गतम् ॥ १०५२ ॥ आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते मध्येवारिधि वा वसंस्तृणमणिर्धत्ते[10] मणीनां रुचम् । खद्योतोऽपि[11] न कम्पते प्रविचलन्मध्येऽपि तेजस्विनां धिक्सामान्यमचेतसं[12] प्रभुमिवानामृष्टतत्त्वान्तरम्[13] ॥ १०५३ ॥ मूर्खोऽशान्तस्तपस्वी क्षितिपतिरलसो मत्सरो धर्मशीलो दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रभृद्धर्महीनः । आज्ञाहीनो नरेन्द्रः शुचिरपि सततं यः परान्नोपभोजी वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग्विडम्बप्रकारान् ॥ १०५४ ॥ ख्यातः शक्रो भगाङ्को[14] विधुरपि मलिनो माधवो[15] गोपजातो वेश्यापुत्रो[16] वसिष्ठो रतिपतिरतनुः सर्वभक्षी हुताशः । व्यासो मत्स्योदरीजो लवणजलनिधिः पाण्डवा जारजाता रुद्रः प्रेतास्थिधारी त्रिभुवनविषये कस्य दोषो न चास्ति ॥१०५५॥ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् । तृष्णास्रोतोविभङ्गो[17] गुरुषु च विनयः सर्वभूतानुकम्पा सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ १०५६ ॥ आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा । एते तस्मिन्निवृत्ताः पुनरितरककुप्प्रान्तपर्यस्तबिम्बे प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः ॥ १०५७ ॥ मणिना वलयं वलयेन मणिर्मणिना वलयेन विभाति करः । कविना च विभुर्विभुना च कविः कविना विभुना च विभाति सभा ॥ १०५८ ॥ शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः । पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥ १०५९ ॥

## इति चतुर्थं भाण्डं सम्पूर्णम् ।

---

१ भ्रमरैः । २ विलम्बो न कृतः । ३ मयूरसमूहैः । ४ शुकैः । ५ राजाश्रयवताम् । ६ धनिनाम् । ७ गच्छेत् । ८ मन्त्रिणोऽधिकारम् । ९ अर्थबोधिकासु कण्ठस्थानादावुच्चार्यमाणासु वाणीषु । १० ज्वलदाकारं तृणम् । ११ ज्योतिरिङ्गणः । १२ मूढम् । १३ अविवेचिततारतम्यम् । १४ नेत्राणां भगाकारत्वात् । १५ लक्ष्मीपतिः । १६ उर्वश्या अपि वेश्यात्वात् । १७ अलुब्धत्वम् ।

श्रीः ।

# पञ्चमं भाण्डम् ।

## समस्यानिदर्शनम् ।

"सहस्रशीर्षा पुरुषः" स्थितो धर्तुं धरातलम् । तव सैन्यभराक्रान्तं न भ्रश्येत्कथमन्यथा ॥ १ ॥

तव सैन्यस्य सञ्चारे चकितश्च रजोहतः। देववर्योऽपि भो राजन् "सहस्राक्षः सहस्रपात्" ॥ १ ॥

"स भूमिं सर्वतः स्पृत्वा" "अत्यतिष्ठद्दशाङ्गुलम् ।" प्रतापस्तव यो राजन्प्रदहत्यरिमण्डलम् ॥ १ ॥

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।" इत्येवं स्तूयते विष्वग्व्याप्तस्तव चमूचयः ॥ १ ॥

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।" भूतेर्दृष्टेश्च तापाच्च त्रस्तः सैन्यस्य सर्वतः ॥ २ ॥

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।" दलितश्चकितश्छन्नस्तव सैन्ये विसर्पति ॥ ३ ॥

"कामं कामदुघं धुङ्क्ष्व मित्राय वरुणाय च ।" वयं धीरेण दानेन सर्वान्कामानशीमहि ॥ १ ॥

असमाने समानत्वं भविता कलहे मम । इति मत्वा ध्रुवं मानी "मृगात्सिंहः पलायते" ॥ १ ॥

हीनहत्या दधात्येव लाघवं महतामपि । इति मत्वा द्विपद्वेषी "मृगात्सिंहः पलायते" ॥ २ ॥

तिष्ठार्जुनाद्य सङ्ग्रामे त्वां हनिष्याम्यहं शरैः।तिष्ठामि कर्ण किं मूढ "मृगात्सिंहः पलायते" ॥ ३ ॥

ऋषेरस्याश्रमे पुण्ये शापसंत्रस्तमानसः। उद्बोधिताभिप्रायोऽयं "मृगात्सिंहः पलायते" ॥ ४ ॥

अयं मृगःसमायाति त्वरितैस्त्वरितैः पदैः। ततो वेगात्पलायस्व "मृगात्सिंहः पलाय ते" ॥ ५ ॥

सौवर्ण्याच्छन्नदुर्भावादपि भीतिः स्वभावतः।साक्षाद्वन्योऽपि मारीचा-"मृगात्सिंहः पलायते" ॥ ६ ॥

त्वदीयपाणिपद्मस्था नेत्रकज्जलकान्तिभिः । चुम्बिताग्राश्चकोराक्षि "मुक्तागुञ्जाभवन्त्यहो" ॥ १ ॥

हन्त नो ग्रस्यसे यावत्कालेन क्रूरकर्म्मणा । तावदेव मतिं मूढ "श्रीरामभजने कुरु" ॥ १ ॥

इदमेव कलेरस्य मदविस्फूर्जितं महत् । यन्मे मनोरथावाप्तिः "न रामभजनादपि" ॥ १ ॥

विद्यायां दुर्मदो येषां कार्पण्यं विभवे सति । तेषां दैवाभिशप्तानां "सलिलादग्निरुत्थितः" ॥ १ ॥

सीतासमागमोत्कण्ठाकर्णान्ताकृष्टधन्वनः । राघवस्य शराङ्गारैः "समुद्रादग्निरुत्थितः" ॥ २ ॥

दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन "शतचन्द्रं नभस्तलम्" ॥ १ ॥

चलत्तरङ्गरङ्गायां गङ्गायां प्रतिबिम्बितम् । सचन्द्रं शोभतेऽत्यर्थं "शतचन्द्रं नभस्तलम्" ॥ २ ॥

विधे पिधेहि शीतांशुं यावन्नायाति मे प्रियः।आगते दयिते कुर्याः "शतचन्द्रं नभस्तलम्" ॥ ३ ॥

सुमेरुशिखरप्रान्तस्फुरद्दिव्यवधूमुखैः । परितः स्फुरितैः शङ्के "शतचन्द्रं नभस्तलम्" ॥ ४ ॥

घृतं न श्रूयते कर्णे दधि स्वप्नेऽपि दुर्लभम्।मुग्धे दुग्धस्य का वार्ता "तक्रं शक्रस्य दुर्लभम्" ॥ १ ॥

अक्रत्वङ्गमतस्तक्रं न शतक्रतुना हुतम् । नादत्तमिति वाक्यार्थात् "तक्रं शक्रस्य दुर्लभम् ॥ २ ॥

भीष्मग्रीष्मर्तुसंतप्तशून्यरथ्यान्तरस्थयोः । अन्योन्यालापसुखिनोर्यूनोश्च "चन्द्रायते रविः" ॥ १ ॥

---

१शेषनागः। २ देववर्योऽपि सहस्राक्ष इन्द्रश्चकितः । तथा देववर्यः सहस्रपात् सहस्रं पादाः किरणा यस्य तादृशः सूर्यः, रजसा उत्थितेन धूलिस्तोमेन हतः छन्नतेजाः । स्पष्टमन्यत् । ३ अत्र संहिताऽनुपादानं तु,अनुकृते रक्षणीयत्वेन सोढव्यम् । ४ इदं क्रियापदम् । भविष्यदिति तु सुवचम् । ५ मृगानत्तीति ।६ पलाय मांसाय । ७ हतभाग्यानाम् । ८ बाणरूपैरङ्गारैः । ९ अयज्ञाङ्गम् । १० इन्द्रेण । ११ 'नादत्तं लभते पुमान्' इति शास्त्रात् । १२ भयानक- । १३ रथ्या क्षुद्रो मार्गः।

स्वस्ति क्षत्रियदेवाय जगद्देवाय भूभुजे । यद्यशःपुण्डरीकान्तर् "गगनं भ्रमरायते" ॥ १ ॥

यशःपद्मस्य ते राजन्पृथिवी कर्णिकायते । पत्रायन्ते दिशश्चाष्टौ "गगनं भ्रमरायते" ॥ २ ॥

स्फुरिते जठरे विष्णोर्नवनीतभुजः शिशोः । "मक्षिकापादघातेन कम्पितं भुवनत्रयम्" ॥१॥

अतसीपुष्पसंकाशं, खं वीक्ष्य जलदागमे। ये वियोगेऽपि जीवन्ति"न तेषां विद्यते भ्रमः"॥१॥

"वागर्थाविव संपृक्तौ" "शतकोटिप्रविस्तरम्"तुरासाहं पुरोधाय नेमुः सर्वे सुराःशिवौ ॥१॥

आषाढी कार्तिकी माघी वचा शुण्ठी हरीतकी।गयायां पिण्डदानेन"पुण्या श्लेष्महरानृणी"॥१॥

जम्बूफलानि पक्कानि पतन्ति विमले जले । कपिकम्पितशाखाभ्यो "गुलुगुग्गुलुगुग्गुलु"॥१॥

विदग्धे सुमुखे रक्ते नितम्बोपरि संस्थिते । कामिन्याश्लिष्टयुगले "कूजितं रतिकूजितम्"॥१॥

"मलयसहायकरा इति गोलानाचम्य" सकलभूमिरुहाम् । विलसति दवदहनावलिरिह जलवाहः परं शरणम् ॥ १ ॥

निजपतिराद्यः प्रणयी हरिर्द्वितीयः करोमि किं गोपि । शृणु सखि पाणिनिसूत्रं "विप्रतिषेधे परं कार्यम्" ॥ १ ॥ प्रतिषेधत्यपि शुक्रे महिमश्रवणैर्धितोऽसुरराट् । प्रददे हरये मत्वा "विप्रतिषेधे परं कार्यम्" ॥ २ ॥

दैत्यानां मनसि दया जाता कृष्णं हि रक्षितुं कस्मात् । द्रष्टुं देवमजस्रं "दैत्यस्त्रीणामपि प्रीतिः" ॥ १ ॥ श्रीनाथ नः श्रुतमिति बहुधा भ्रमता मया नृलोकेषु । शीलं वारवधूनां "दैत्यस्त्रीणामपि प्रीतिः" ॥ २ ॥

रामाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटस्तरुण्याः । सोपानमासाद्य करोति शब्दं "ठठंठठंठंठठठंठठंठः" ॥ १ ॥ अधोमुखीकृत्य मुदा ददाने कवीश्वरान्प्रत्यमिता नरेन्द्र । नदन्ति कुम्भा ननु नाणकाढ्याः " ठठं ठठंठं ठठठं ठठं ठः ॥ २ ॥

कर्पूरपूरच्छविवादविद्यासंवादवद्भूकद्युतिशुक्तिताम्रे । इन्दौ नृपद्वेषितमोविताने "सूर्योदये रोदिति चक्रवाकी" ॥ १ ॥ विलोक्य बालामुखचन्द्रबिम्बं कण्ठे च मुक्तावलिहारताराः । पुनर्निशाया भयभीतभीता "सूर्योदये रोदिति चक्रवाकी" ॥ २ ॥

सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने । तिरोहिते त्वद्यशसा नरेन्द्र "चन्द्रोदये नृत्यति चक्रवाकी" ॥ १ ॥

न कापि रामाहितसंशयो या विना न नात्वं जनकात्मजायाः । पुरः सुराणाङ्कपुरःसराणाम् "अङ्गारपूर्णं कमलं प्रफुल्लम्" ॥ १ ॥ पुञ्जायमानारुणरत्नहारे कान्तोरसि स्त्रावदनङ्ग भाति । सिध्येदमुष्योपमितिर्यदि स्यात् "अङ्गारपूर्णं कमलं प्रफुल्लम्" ॥ २ ॥

रे पुत्र सत्सङ्गमवाप्नुहि त्वमसत्प्रसङ्गं त्वरया विहाय । धन्योऽपि निन्दां लभते कुसङ्गात्"सिन्दूरबिन्दुर्विधवाललाटे" ॥ १ ॥

श्रुत्वा प्रदग्धं तनयं सशोका पुनर्निशम्याप्तशरीरभावम् । पश्यत्सु देवेषु च धावमाना "रमा मुदा शंकरमालिलिङ्ग" ॥ १ ॥

---

१ श्रेष्ठचन्दनम् ।

सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता । तदा ह्यसौ तद्व्रतशक्तिपीडितो "हुताशनश्चन्दनपङ्कशीतलः" ॥ १॥ निशम्य राक्षस्युदितं भयङ्करं भवाशु शीतोऽनल यद्यहं सती । इतीव सीतावचनात्कपेस्तनौ "हुताशनश्चन्दनपङ्कशीतलः" ॥ २ ॥

संत्यज्य तोयानि तरौ विदध्यान्मत्सी स्वकीयां स्थितिमन्वहं चेत् । किं तर्हि विद्वन्वद दुर्घटं स्यात् "सौभाग्यचिह्नं विधवाललाटे" ॥ १ ॥ कस्तूरिकाचन्दनकुङ्कुमानि सौभाग्यचिह्नानि विलासिनीनाम् । प्रयागमृत्स्नातिलकक्रियैव "सौभाग्यचिह्नं विधवाललाटे" ॥ २ ॥ यथाऽभिलाषं परकीयदारै रतं श्रुतं सत्ययुगेऽपि नूनम् । अवेहि तल्लक्ष्म कलेः कवे यत् "सौभाग्यचिह्नं विधवाललाटे" ॥ ३ ॥ न जात्वहो पत्रविशेषकादि सौभाग्यचिह्नं सधवास्त्यजन्ति । सखे न कुर्वन्ति कुलप्रसूताः "सौभाग्यचिह्नं विधवा ललाटे" ॥ ४ ॥

यादृशं बत नृपेन्द्र मतं ते तद्वरं ननु विवेकक्कृतोऽद्य । श्रूयते सततमेव सभायां हुंहुहुंहुहुहुंहु हुहुंहुंहुं ॥ १ ॥ उन्नमय्य [1]सकचग्रहमा[2]स्यं चुम्ब[3]ति प्रिय[4]तमे हठ[5]वृत्त्या । कूजि[6]तं जयति मा[7]नधनाया "हुंहुहुंहुहुहुहुंहुहुहुंहु" ॥ २ ॥

प्राप्तौ वसूनां विधिरेव हेतुः परं न विद्या मम बुद्धिरेषा । इत्थं न चेत्तर्हि वद त्वमेव "कुतोऽस्ति विद्वान्सततं दरिद्री" ॥ १ ॥ संप्राप्ततत्त्वः शरदभ्रलोलां लक्ष्मीं जहाति स्वयमेव तुच्छाम् । कदाऽपि वाच्यं न सखे त्वयेति "कुतोऽस्ति विद्वान्सततं दरिद्री" ॥ २ ॥ नारायणस्तोत्रपरः सुशीलः सत्कर्मधर्म्मप्रवणः कुलीनः । सरस्वतीसेवनकृन्न वेद्मि "कुतोऽस्ति विद्वान्सततं दरिद्री" ॥ ३ ॥

मम करग्रहणाय पणीकृतं न यदि राघवतोऽप्यधिरोहति । सखि तदैवमभून्मम जीविते "शशकशृङ्गमयं कठिनं धनुः" ॥ १ ॥

नीलाब्जद्युतिनयनं नितान्तवृत्तमास्यश्रीपरिचितचन्द्रिकाविलासम । स्नातायाः सरसि विलोक्य वक्त्रचन्द्रं "मध्याह्ने मुकुलितमम्बुजं वनान्ते" ॥ १ ॥

अहं न जाने किमिदं चकास्ति "कान्ताऽऽननं वा निशि चन्द्रबिम्बम् ।" अयं किमन्तस्तिलकः कलङ्कः किं वा स्मितश्रीरुत चन्द्रिकेयम् ॥ १ ॥ "कान्ताऽऽननं वा निशि चन्द्रबिम्बं" सुधाधर[8]त्वेन गतं प्रसिद्धिम् । इति ब्रुवाणाः कवयो निरस्ता निरङ्कसाङ्कत्वगुणानभिज्ञाः॥ २॥ श्रिया मनोज्ञं कठिनीकृतीनामपि द्रुतं द्रावकमेकमेव । "कान्ताऽऽननं वा निशि चन्द्रबिम्बं" न कस्य पुंसो मुदमादधाति ॥ ३ ॥ पद्मानि सङ्कोचयति प्रसह्य कामोदयं दर्शनतः करोति । ज्योत्स्नां दधाति द्वयमेव लोके "कान्ताऽऽननं वा निशि चन्द्रबिम्बम् ॥ ४ ॥ निन्दन्तु मां केऽप्यथवा स्तुवन्तु तथाऽप्यहं तथ्यमुदीरयामि । "कान्ताऽऽननं वा निशि चन्द्रबिम्बं" जडात्[9]मकस्यैष तनोति हर्षम् ॥ ५ ॥ पद्मोपमं किं किमथो विकल्पे कस्यां तमश्चञ्चति चक्रवाकान् । किं द्वेष्टि तापं हरते नृणां किं "कान्ताऽऽननं वा निशि चन्द्रबिम्बम्" ॥ ६ ॥

---

१ केशग्रहसहितम् । २ मुखम् । ३ चुम्बनं कुर्वति सति । बलात्कुर्वति सति । ४ कान्ते । ५ बलात्कारेण । ६ कण्ठेऽव्यक्तशब्दः । ७ मान एव धनं यस्याः, मानिन्या इत्यर्थः । ८ सुधासमानाधारत्वेन सुधाधराख्येन च । ९ डलयोरभेदाज्जलात्मनः समुद्रस्य जडात्मनोऽज्ञस्य च विज्ञानां तु "इन्द्रियाणीन्द्रियार्थेषु" इति दिशा न हर्षद्वेषौ ।

एकेन केनापि गुणेन नीचोऽप्युच्चैः प्रतिष्ठां लभते जगत्सु । दृष्टान्तमग्रे मृदुताप्रसिद्धो "दोषाकरोऽप्युच्चपदं प्रपन्नः" ॥ १ ॥

पतिव्रतानामिह रीतिरेषा स्वस्वामिनो यद्गतिमाप्नुवन्ति "नाथे निशाया नियतेर्नियोगादस्तं गते हन्त गता निशाऽपि" ॥ १ ॥ "नाथे निशाया नियतेर्नियोगादस्तं गते हन्त गता निशाऽपि" । एषा पुनश्चन्द्रमसं न लेभे क्वापि प्रियाऽऽत्तिर्नहि तामसीनाम् ॥ २ ॥

राज्याऽधिकारा जलवीचिचञ्चला "भवन्तु किं तैर्मम बुद्धिशालिनः" । तडित्कदम्बेन गतं गते घने "किं तेन हानिर्गगनस्य जायते" ॥ १ ॥

कालुष्यमुद्वीक्ष्य विधुं कलङ्किनं बुधा यदाहुर्मम सङ्गतं न तत् । जाने निजाङ्के दयिताऽस्य वर्तते "निशीथिनीनाथकलङ्किता नहि" ॥ १ ॥ व्यनक्ति यः स्त्रीविभवेऽपि वैभवं तं जाल्ममेव प्रवदन्ति कोविदाः । अस्माकमित्युक्तिमतां कथं मता "निशीथिनीनाथकलङ्किता नहि" ॥ २ ॥ तत्तथ्यमेवास्ति बुधा वदन्ति यत् "निशीथिनीनाथकलङ्किता नहि" । श्यामां निजाङ्के जहति प्रियामयं तत्कार्ष्यमेतत्सितधाम्नि राजते ॥ ३ ॥

गौरीस्वरूपां तुलसीमवेक्ष्य मुमोच वृन्दाऽङ्गरतिं मुकुन्दः । अथानयो रागमवेक्ष्य मन्ये "गौरीमुखं चुम्बति वासुदेवः" ॥ १ ॥

"यज्ञोपवीतं परमं पवित्रं" स्पृशन्करेणावितथं ब्रवीमि । "अणोरणीयान्महतो महीयान्" योगे वियोगे सुदृशो भवामि ॥ १ ॥

"नार्को दिने भाति विधुर्न नक्तम्" किंतु क्षितीन्द्रोदयसिंह वीर । विष्वक्प्रतापस्तपति त्वदीयो विकाशते त्वन्महिमा विशुद्धः ॥ १ ॥

सरस्वतीं ध्यायति मत्सपत्नीमयं सदैवेति रुषेव लक्ष्मीः । तत्रानुरागं न तनोति मन्ये "ततोऽस्ति विद्वान्सततं दरिद्री" ॥ १ ॥

अलं न शास्त्राण्यपि यं प्रवक्तुं वेदान्तसिद्धान्तमहं वदामि । वाक्यं स्मरन्मुक्तिमवाप्स्यतीति "तत्तथ्यमेवास्ति न चेदिदं स्यात्" ॥ १ ॥ कान्ते गृहाण त्वमिमां स्वमालामकारणं किं कलहं करोषि । यत्पूर्वपादं मनुषेऽत्र शुद्धं "तत्तथ्यमेवास्ति न चेदिदं स्यात्" ॥ २ ॥

पात्रद्विजे स्थापय सर्ववित्तं प्राप्त्यै पुनस्त्वं परलोकमध्ये । चिन्ता त्वया नेति कदाऽपि कार्या "यद्दीयते तन्न लभेत विद्धयः" ॥ १ ॥

चन्द्रे कलङ्कं समवेक्ष्य कान्तावियोगिनां प्रज्वलितेन्द्रियाणाम् । इतीव तर्को भवति प्रसह्य "भात्यन्धकारो दिननाथबिम्बे" ॥ १ ॥

गुरोरवज्ञां प्रविधाय गर्वादतीव दुर्बोधगभीरभावम् । काव्यं मुखश्रीजितपूर्णचन्द्र "चन्द्रे कथं पश्यसि दुर्घटाख्यम्" ॥ १ ॥

उच्चैस्तरां मत्सरिणोऽपि लोकाः कुर्वन्ति संसत्सु पुरः प्रशंसाम् । न पण्डितैर्विश्वसितव्यमत्र "तत्सौहृदं यत् क्रियते परोक्षम्" ॥ १ ॥

प्रसह्य कृष्णेन निपीडयमानकण्ठो मुमूर्षुर्हतसर्वचेष्टः । ननाद यत्तेन तथा मतोऽसौ "शृगालशब्दं कुरुते करीन्द्रः" ॥ १ ॥

श्रीपाटनाधीश तवारिवर्गप्रलापमाकर्ण्य महाऽनुभावाः । सखे न के नाम वितर्कयन्ति "पिपीलिका नृत्यति वह्निकुण्डे" ॥ १ ॥

विख्यातो ननु वरद त्वमेव लक्ष्म्याः प्राणेशो निजदयितां च तां प्रदत्से । कारुण्यं वितरसि यन्न तन्न युक्तं "विक्रीते करिणि किमङ्कुशे विवादः" ॥ १ ॥ लड्डुकैर्द्विजकुलमद्य भोजयित्वा दीनारं प्रतिजनमप्यनुप्रदाय । यद्वीटीं न नृप ददासि तन्न योग्यं "विक्रीते करिणि किमङ्कुशे विवादः" ॥ २ ॥

काश्चिदिनार्धसमये रविरश्मितप्तां नीलांशुकाञ्चलनिलीनमुखेन्दुबिम्बाम् । तां तादृशीं समनुवीक्ष्य कविर्जगाद "राहुर्दिवा ग्रसति पर्व विना किलेन्दुम्" ॥ १ ॥ श्रीपाटनेश्वरजगत्सु विकाशमानं त्वत्सद्यशः सितकरं ग्रसितुं प्रवृत्तम् । त्वद्वेषिदुर्यश उदीक्ष्य बुधाः स्मयन्ते "राहुर्दिवा ग्रसति पर्व विना किलेन्दुम्" ॥ २ ॥

दृष्टं यशः सुखयतिच्छविचञ्चदच्छं वैरायते सरसिजेन सुधाधरं यत् । "क्लान्तं कदा शिशिरयिष्यति मां सखे तत् कान्ताननं स्मरसि किं नहि चन्द्रबिम्बम्" ॥ १ ॥ ज्योत्स्नाचमत्कृतिविचित्रमनङ्गरङ्गं भङ्गं करोति कमलस्य सुधाप्रसङ्गम् । "क्लान्तं कदा शिशिरयिष्यति मां सखे तत्कान्ताननं स्मरसि किं नहि चन्द्रबिम्बम्" ॥ २ ॥

संक्रुद्धदाशरथिसंहितबाणनिर्यत्कल्पानलोत्कटकठोरशिखासहस्रैः । तापार्दिताः समधिकं कथितानि सिन्धोस् "त्यक्त्वा पयांसि तटमारुरुहुः शफर्यः" ॥ १ ॥

अतिशिशिरसमीरप्रौढवेगप्रगल्भे प्रबलतमहिमर्तौ दुःखदे प्रोषितानाम् । इह कथमपि नित्यस्नानहेतोः प्रभाते "प्रविशति जलमध्ये शीतभीता मृगाक्षी" ॥ १ ॥

इतो गङ्गाभङ्गा घटिततटभङ्गा पुनरितो दवज्वाला ज्वालाज्वलिततरुमाला वनभुवः । सरंहः सिंहोऽग्रे ध्वनति मम हंहो नहि गतिर्विना दैवं दैवं "हरिणशिशुरेवं प्रलपति" ॥ १ ॥

"न जानीमः कस्मात्कमलवनवैरी हिमकरः" कवेः कस्याप्येतद्वचनमतिसन्दिग्धमनसः । न कैरत्र ज्ञातः कथय कविताविद्भिरनयोः प्रियावक्त्रौपम्याद्रविणकलहो भूमिवलये ॥ १ ॥

श्मशानेष्वावासो वसनमिभचर्मैव जरठो वृषो वाहो भस्म द्रविणमनुगा भूतनिवहाः । तथाऽप्येकः शम्भुस्त्रिभुवनमिदं रक्षति सदा "क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे" ॥ १ ॥

कदा गण्डद्वन्द्वमदलुलितसिन्दूरसुभगं नमस्कुर्वन् पद्मामलमधुरमूर्तिं गणपतिम् । गजास्य श्रीशम्भोः सुत सुमुख लम्बोदर विभो "प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्" ॥ १ ॥ कदा सम्यग्ध्यायन्ननुपमचरित्रं मणिगणस्फुरद्भूषाचित्रं पुररिपुकलत्रं किमपि तत् । शिवे दुर्गे कात्यायनि जननि भक्तप्रणयिनि "प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्" ॥ २ ॥ कदा पुण्यक्षेत्रे करकलितरुद्राक्षवलयो दधत्स्वान्ते शान्तेऽखिलशिवपदं श्रीशिवपदम् । महेश श्रीकण्ठ स्मरहर हर त्र्यम्बक शिव "प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्" ॥ ३ ॥ कदा ब्रह्मेशानत्रिदशपतिमुख्यैः सुरगणैः स्तुतं विष्वक्सेनं जितदनुजसेनं हृदि भजन् । अये विष्णो जिष्णो गरुडरथ विश्वम्भर हरे "प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्" ॥ ४ ॥ कदा श्रीमत्पङ्केरुहवनविकाशिप्रसमरप्रभापुञ्जं तेजः किमपि कलयन्नौपनिषदम् । ग्रहेश श्रीभानो मिहिर तरणे सूर्य सवितः

---

१ स्वर्भानुः

"प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्" ॥ ५ ॥ कदा कार्योद्योगं सकलमपि संन्यस्य सहसा स्मरन्नित्यं शान्तं हृदयवचनागोचरमहः । विभो मायाऽतीत प्रथम परमानन्दनिबिड "प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्" ॥ ६ ॥

"विद्वद्भिः कृततापने दिनकरे मित्रत्वमावेद्यते वह्निः सर्वभुगप्ययं भुवि बृहद्भानुर्यदाख्यायते । शम्भुः पीतविषः श्मशानवसतिर्मृत्युञ्जयः कथ्यते भिन्दन्गाढतमो जनैकसुखदश्चन्द्रः कलङ्की कथम्" उष्णांशोरपि मङ्गलं विदधतो मित्रत्वमन्वर्थकं यत्तेजस्विनि पावकेऽखिलभुजि स्थाने बृहद्भानुता । शम्भुः पीतविषोऽप्युमाऽधरसुधामास्वाद्य मृत्युञ्जयश्चन्द्रस्यापि कलङ्किता गुरुवधूमालिङ्गतो युज्यते ॥ १ ॥

बहलबलसमर्था मेघनादादयो मे सपदि युधि विशन्तः कीटहस्ते निपेतुः । इति वदति दशास्यो हस्ततालं वितत्य "मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्" ॥ १ ॥

मृगशिशुनयनाया अक्षिपक्ष्मप्रकोणे विलसति तरला या तारका तारकेव । प्रतिफलित इहोष्ट्रे भ्रान्तिरास्ते जनानां "तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता" ॥ १ ॥

मधौ मन्दं मन्दं मरुति शिशिरे वाति रुचिरे कुलस्त्रीभिः कृष्णे विहरति तथा वृष्णिनिकरे । उषा योषा तोषाद्वदनमनिरुद्धस्य पिबतो "पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती" ॥ १ ॥ स्वयं संराध्येशं पुरमिदमनल्पेन तपसा महेन्द्रं संतोष्य त्रिदशरिपुनाशादसुकरात् । समायाते पार्थे द्रुपदतनया क्लेशविकला "पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती" ॥ २ ॥ कदाचित्पाञ्चाली विपिनभुवि भीमेन बहुशः कृशाङ्गि श्रान्तासि क्षणमिह निषीदेति गदिता । शनैः शीतच्छायं तटविटपिनं प्राप्य मुदिता "पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ३ ॥ तपापाये गोदापरतटभुवि स्थातुमनसि प्रविष्टे तत्पूर्वं भगवति मुनौ कुम्भजनुषि । द्रुतं लोपामुद्रा स्वयमविकलं गन्तुमुदिता "पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती" ॥ ४ ॥

"सर्वस्य द्वे" सुमतिकुमती संपदापत्तिहेतू "एको गोत्रे" प्रभवति पुमान्यः कुटुम्बं बिभर्ति । "वृद्धो यूना" सह परिचयात्त्यज्यते कामिनीभिः "स्त्रीपुंवच्च" प्रभवति यदा तद्धि गेहं विनष्टम् ॥ १ ॥

ये[4] पापं शमयन्ति संगतिभृतां ये दानशृङ्गारिणो येषां चित्तमतीव निर्मलतरं येषां न भग्नं व्रतम् । ये सर्वान्सुखयन्ति हि प्रतिदिनं ते साधवो दुर्लभा "गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत्" ॥ १ ॥ हारो भाति कुचद्वयं तव शुभे मध्यं वपुः सद्वचः केशा नासिकमौक्तिकं सुवदनं दर्पाङ्गरागोदशः[6] । "गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवजम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ २ ॥

---

१ अयं श्लोकः प्रश्नरूपः, परश्लोकश्चोत्तररूप इत्युभयोरनयोः समस्यारूपत्वम् । २ द्रौपद्याः श्वशुरो वायुः । ३ लोपामुद्रायाः श्वशुरः पूरतरणसाधनं कुम्भः । ४ ये गङ्गावत्संगतिभृतां पापं शमयन्ति, ये गजगण्डवद्दानशृङ्गारिणः, येषां चित्तं गगनवदतीव निर्मलम्, येषां व्रतं गाङ्गेयवन्न भग्नम्, गेयवत्सर्वान्सुखयन्ति इत्यन्वयः । ५ हारो गङ्गावत् कुचद्वयं गजगण्डवत् इत्येवं पादत्रयोक्तानां हार इत्यादीनां चतुर्थपादोक्तैर्गङ्गावदित्यादिभिर्विभज्यान्वयः । क्रियापदं च भातीति प्रत्येकमन्वयि । ६ कस्तूरिकाकृतोऽङ्गरागो दर्पाङ्गरागः । ७ कर्दमवदित्यर्थः ।

यत्कण्ठे[1] गरलं विराजतितरां शीर्षे च मन्दाकिनी यस्याङ्के च शिवामुखं कटितटे शार्दूलचर्माम्बरम् । माया यस्य रुणद्धि विश्वमखिलं तस्मै नमः शंभवे "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ १ ॥ पृथ्वीन्द्रोदयसिंहवीररिपवो विच्छायतां ते गतास्तेषां राज्यमगाक्षयं सुविशदे मित्रोदये[2] मोदसे । भूमिं द्विड्भिरुपास्तृणोप्यसुगमां तेजांसि ते सर्वतो "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ २ ॥ संग्रामे रिपुभूभुजां मुखरुचिर्जीवश्च देवाङ्गनाचक्षुः प्रोल्लसदस्र[3]मांसनिवहैस्तन्मेदिनीमण्डलम् । त्वच्चापोद्गतबाणसंहतिरभूच्छ्रीराम भूमीपते "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ ३ ॥ वैदेहीं समवाप्य दाशरथिनारब्धे प्रयाणेऽग्रतो दृष्टः पुष्पकमास्थितेन रभसा[4]दाकाशमारोहता । लङ्कासागरजानकीवनरणक्षौण्यश्चमत्कारिका "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ ४ ॥ यो द्रोणाचलमादधौ करतले योऽतीतरत्सागरं यश्चोत्खाततवांस्तरूनुदवहत्पुच्छेन दावानलम् । यो रक्षॉन्[5]समरेऽरुणत्कपिवरः पायाद्धनूमानसौ "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ ५ ॥ कस्तूरीतिलकं ललाटरचितं नासामणिं निस्तलं वक्रं कुञ्चितकेशपाशमनिशं दृष्टिं निसृष्टां पुरः । पुंसां मानसमत्स्यबन्धनविधौ धत्सेऽत्र वत्से स्वयं "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ ६ ॥ विद्धि श्रीहृदयं सदान्तमलिनं भीमं भवाम्भोनिधिं विज्ञाने सुरतं महीशभवनं गूढं दृढं कण्टकैः । दारागारसमागमं सुविषमं मोहं परं दुस्तरं "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ७॥ सोऽसाध्यः परिकीर्तितोऽतिसृतिमान्यस्यातिसार्येत विण्नीलाभाऽधिकनिर्मला प्रविलसत्सौरभ्यसम्भारयुक् । अन्तर्दुष्टितयाऽतिविस्रमलिना बद्धा शिरातन्तुभिर् "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" ॥ ८ ॥

शुण्ठीगोक्षुरयोर्[6]विचार्य मनसा कल्काशनं यन्मया प्रोक्तं तद्विपरीतकं कृतमहो गोः खुरमात्रं ददौ । नार्थो मूर्खजनालये न च सुखं नो वा यशो लभ्यते सद्वैद्ये कविभूपतौ हरिहरे "लाभः परं गोवधः" ॥ १॥ पञ्चास्यस्य[7] पराभवाय भषको[8] मांसेन गोर्भूयसा दध्यन्नैरपि पायसैः प्रतिदिनं संवर्धितो यो मया । सोऽयं सिंहरवाद्गुहान्तरगमद्भीत्याकुलः संभ्रमाद्धन्ताशा विलयं गता हतविधे "लाभः परं गोवधः" ॥२॥ पारीन्द्रस्य[9] पराभवाय सुरभी[10]मांसेन दुर्मेधसा पोष्यन्ते किल पीवराः कटुगिरः श्वानः प्रयत्नादमी । न त्वेभिर्मदमत्तवारणचमूविद्रावणः केसरी जेतव्यो भवता किरातनृपते "लाभः परं गोवधः"॥ ३ ॥

अस्माकं जलैकजीविनां[11] जलमिदं सद्वाजिराजिव्रजैः[12] पातव्यं पररक्तसक्तमनसां तृप्तिः पतीनां क्षयः । मत्स्यैवं किल राजदेव नृपते त्वज्जैत्रयात्रोत्सवे[13] "मत्सी रोदिति मक्षिका च हसति ध्यायन्ति[14] वामभ्रुवः" ॥ १ ॥

---

१ अत्रापि पूर्ववत् यत्कण्ठे गरलं जम्बूवद्विराजतितरां यस्याङ्के (उत्सङ्गे) शिवामुखं जलबिन्दुवद्विराजतितराम् इत्येवम्प्रतिपदं परेणान्वयः। एवं परत्रापि। २ मित्रस्य सूर्यस्योदये प्रकाशे सख्युरभ्युदयवृद्धौ च। ३ अस्रं रुधिरम्। ४ वेगात्। ५ 'सर्वे सान्ता अदन्ता' इति नयेन अदन्तत्वेनास्य निर्देशः। वस्तुतस्तु-'यः सङ्ख्येऽरुणदस्रपान्' इति पाठो युक्तः। ६ गोक्षुरनामौषधमदत्वा गोः शफं कश्चिददादिति यथोक्तम्। ७ सिंहस्य। ८ शुनकः। ९ सिंहस्य। अयं श्लोकः पूर्वश्लोकस्यैव प्रतिच्छायात्मा प्रतीयते। १० सुरभिर्गौः। 'कृदिकारादक्तिनः' इति ङीपि दीर्घत्वम्। ११ जलैकजीवितानाम्। १२ श्रेष्ठतुरगपङ्क्तिसमूहैः। १३ विजययात्रोत्सवे। १४ चिन्तयन्ति।

श्रुत्वा सागरबन्धनं[1] दशशिरा[2]: सर्वैर्मुखैरेकदा तूर्णं[3] पृच्छति वार्तिकान्सचकितो भीत्या परं संभ्रमात् । बद्धः सत्यमपांनिधिर्जलनिधिः कीलालधिस्तोयधिः "पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः" ॥ १ ॥ पाषाणाः पयसि प्रबद्धवपुषस्तिष्ठन्ति सेतुं गताः श्रुत्वैवं वदतां दशाननधरः क्रुद्धः समुद्रं प्रति । धिक्त्वां नाम तवाम्बुधिः सलिलधिः पानीयधिस्तोयधिः "पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः" ॥ २ ॥ अम्बा[5] कुप्यति तात मूर्ध्नि[6] विधृता गङ्गेयमुत्सृज्यतां[7] विद्वन्षण्मुख का गतिर्मम चिरं मूर्ध्नि स्थिताया वद । कोपावेशवशादशेषवदनैः[8] प्रत्युत्तरं दत्तवान् "पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः" ॥ ३ ॥ माध्वीके विधुमण्डले वरवधूवक्त्रे च गीतान्तरे सक्ते वक्रचतुष्टये दशमुखो विज्ञापितस्तच्चरैः। बद्धोऽसाविति चेतरैर्भयवशादूचे वचः संभ्रमात् "पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः" ॥ ४ ॥ पीतस्त्वं कलशोद्भवेन मुनिना ध्वस्तोऽसि देवासुरैराबद्धोऽसि च राघवेण मृदुना शाखामृगैर्लङ्घितः । नाम्नामारभटी वृथैव भवतो लोकैरियं घुष्यते "पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः" ॥ ५ ॥

तर्तुं पर्वतसंनिभेन कपिनालाबू[10] कृतां वक्षसि क्षिप्रं वीक्ष्य निमज्जतीमथ तव स्पृष्टास्तरन्तीः शिलाः । लोके नृत्यपरे विभीषणजने सीताह सेतूद्यमे " तुम्बी मज्जति संतरन्ति दृषदः प्रेतो दिवा नृत्यति" ॥ १ ॥

नृत्यन्ती नवबल्लिमल्लिसुमनोदामाभिरामाकृतिस्त्वत्कीर्तिर्भ्रमणीशतानि धरणीचक्रेश चक्रे मुहुः । तस्या एव चिरं चरन्ति चरणव्यापारचिह्नोचयाश्च "चण्डीशाचलचन्द्रचन्दनवनीमन्दाकिनीविभ्रमम्" ॥१ ॥ श्रीमत्तोमरवंशभूषणमणे श्रीपाटनेश प्रभो त्वत्कीर्तिः स्वविशुद्धया सुषमया ब्रह्माण्डमश्वेतयत् । इत्यस्मात्तनुतेऽभितस्त्रिभुवने किं दृश्यमानं पदं "चण्डीशाचलचन्द्रचन्दनवनीमन्दाकिनीविभ्रमम्" ॥ २ ॥

आश्चर्यं कथयामि कस्य पुरतः कुर्वे किमेमि क वा काचित्काञ्चनवल्लरी गृहशिरोरूढा समुज्जृम्भते । अस्यां किं च सखे दधन्ति सुषमां नारङ्गबिम्बोपमां "दृष्ट्वा पक्वफलानि मे मृदु मनो मोहं समुत्पद्यते " ॥ १ ॥

संप्राप्तेऽस्तपदं प्रतापतपने त्वद्विद्विषां दुर्यशो ध्वान्ते सर्पति सर्वतश्च नृपते मत्वा प्रदोषागमम् । शम्भौ नृत्यति पाटनेश नृपते पश्यद्भिरभ्यर्थ्यते "चण्डीभर्तुरकाण्डताण्डवविधिः खण्डीकरोतु द्विषः" ॥ १ ॥

प्राप्य प्राग्विद्रुमत्वं त्वदधरबिलसत्कान्तिपूरेण नासा "मुक्ता गुञ्जा भवन्ति" प्रचलकुवलयस्पर्धिभिस्त्वत्कटाक्षैः । भूयोऽप्येतास्त्वदीयस्मितधवलरुचा सम्भविष्यन्ति मुक्ता लोके दृष्टा विचित्रा रुचिरमुखि मया शक्तिरेषा तवेति ॥ १ ॥

निर्माल्यं गिरिशस्य पावनतमं निश्चित्य तस्यार्चनं कृत्वा चास्य पयः कमण्डलुगतं सम्पाद्य मध्यंदिनम् । सूर्यस्यार्घ्यविधिं विधातुमनसः पश्यन्न को मन्यते "सन्ध्यावन्दनमाचरन्ति विबुधा नारी भगान्तर्जलैः" ॥ १ ॥

त्वं नो गोत्रपतिस्तवेन्दुरधिपस्तस्यामृतं त्वत्करे तेन व्याधशराहतां प्रणयिनीमेनां पुनर्जीवय । इत्यूर्ध्वं गगने निशापतिमृगे कारुण्यमातन्वतः "शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले॥१॥

---

१ सेतुबन्धम् । २ रावणः । ३ झटिति । ४ वृत्तान्तज्ञापकान् । ५ माता । ६ मस्तके । ७ त्यज्यताम् । ८ क्रोधपरत्वेन । ९ षड्भिर्मुखैरित्यर्थः । १० अलाबूस्तुम्बी ।

उन्नादाम्बुदवर्धितान्धतमसि प्रभ्रष्टदिङ्मण्डले काले यामिकजाग्रदुग्रसुभटव्याकीर्णकोलाहले । कर्णस्यासुहृदर्णवाम्बुवडवावह्नेर्यदन्तःपुरादायातासि तदम्बुजाक्षि "कृतकं मन्ये भयं योषिताम्" ॥ १ ॥ उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने व्योम्नि भ्राम्यति दुर्गमक्षितिभृतां मूर्धानमारोहति । व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी कीर्तिस्ते मदनाभिराम "कृतकं मन्ये भयं योषिताम्" ॥ २ ॥

चित्रं नर्तनमम्बरे शिखरिणौ शीतांशुबिम्बे तमःसंचारं जलजं कपोतरणितं कामागमप्रक्रियाः । मीनौ विद्युति तारकाविहरणं ज्योत्स्ना विकोशाम्बुजे "कुर्वाते कुरुते करोति कुरुतः कुर्वन्त्यलंकुर्वते" ॥१॥ यस्य द्वारि सदा समीरवरुणौ संमार्जनं हव्यवाट् पाकं शीतगुरातपत्रकरणं दस्रौ प्रतीहारताम् । देवा लास्यविधिं च दास्यममरा वर्ण्यो दशास्यः कथं "कुर्वाते कुरुते करोति कुरुतः कुर्वन्त्यलंकुर्वते" ॥ २ ॥

कश्चित्पान्थस्तृषार्तः पथि तपनऋतौ गम्यमानोऽन्यपान्थं पप्रच्छानन्दलीनो वद पथिक कुतो जह्नुकन्याप्रवाहः । तेनासौ शीघ्रवाचा प्रचलितमनसा विप्रवर्येण चोचे " सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः" ॥१॥ राम त्वत्कीर्तिवृक्षाद्बहुतरममलादुत्थिताः कोरका ये तन्मध्ये रुद्ररूपोऽप्यजनि खलु कशः कोरकस्तस्य चाग्रे । अस्य श्रोत्राक्षिकूपास्तदुपरि च शिरस्तत्र चास्ति स्रवन्ती "सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः"॥ २ ॥ उद्दामार्कांशुदीप्यद्दिनमणिमणिभिर्भस्मितान्ते समन्ताद्वायुव्याधूयमानज्वलनकणगणाकीर्णधूलिप्रकीर्णे । कान्तारेऽस्मिन्नृपार्ते पथि पथिक भवे क्वापि पाथोऽथ तेनाऽ-"सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः" ॥ ३ ॥

मां साक्षीकृत्य मुग्धे विजयमभिलषँल्लेखयामास शंभुर्भूत्या मन्मौलिमालां सदशनवशतीमक्षपातान् विजित्य । गौर्यप्यानन्ञ दृष्टीर्जितनखनवभूस्तन्वि शेषा तदित्थं "शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः" ॥१॥ प्रत्येकं दिक्पतीशानिलतपनवसून्सन्नतस्त्वं यथा भूरश्रौषीस्त्वं यथा च स्वरसहितलसन्मूर्छनागानतानान् । कृष्णन्यस्तान्यमौलीक्षणवदवसरे सा च सा च प्रसादात् "शीर्षाणां शेष वन्ध्या नव नवतिरभूल्लोचनानामशीतिः" ॥ २ ॥

इन्द्राद्या लोकपाला हरिविधुतपना नागविद्याधराद्या द्वेष्याः सर्वेऽपि देवाः प्रिय तव वरदः कोऽस्ति वन्द्यो गरीयान् । श्रुत्वा वाचं प्रियाया इति दशमुखतः प्राह वाक्यं दशास्यः "शूली शंभुः पिनाकी शिवभवपशुपाः शर्व ईशश्च भर्गः" ॥ १ ॥

## प्रहेलिकानिदर्शनम् ।

अपदो दूरगामी च साक्षरो न च पण्डितः । अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥१॥ [2]वने जाता वने त्यक्ता वने तिष्ठति नित्यशः । पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डितः ॥ २ ॥ गो[3]पालो नैव गोपालस्त्रिशूली नैव शंकरः । चक्रपाणिः स नो विष्णुर्यो जानाति स पण्डितः ॥ ३ ॥ उच्छि[4]ष्टं शिव[5]निर्माल्यं [6]वमनं शवक[7]र्पटम् । काकविष्ठासमुत्पन्नः पञ्चैतेऽतिपवित्रकाः ॥ ४ ॥

---

१ लेखपत्रमुद्दिश्येदमभिधानम् । २ अरण्ये काष्ठात्मना जाता, वने जले पुनस्त्यक्ता अत एव तस्मिन्नेव जले नित्यशस्तिष्ठति । स्त्रीलिङ्गत्वेन निर्दिश्यत इति स्त्री, संचालकं प्रति किमपि प्रदायाधिक्रियत इति वेश्येव पण्यस्त्रीत्येवं नावमुद्दिश्येदं वचनम् । ३ चक्रत्रिशूलोभयचिह्नाङ्कितवृषभविशेषमुद्दिश्येदमभिहितम् । ४ वत्सेन पीतपूर्वत्वादुच्छिष्टमपि गोदुग्धं पवित्रमिति । ५ शिवोपरिस्थितपूर्वत्वेन गङ्गोदकमपि निर्म्माल्यम्, अथापि न तत्त्याज्यम् । ६ इदं माक्षिकं मधूद्दिश्योक्तम् । ७ इदं कौशेयं वस्त्रमुद्दिश्योक्तम् । ८ प्रायोऽश्वत्थतरुरीदृशो भवतीति यथोक्तम् ।

अनेक[1]सुषिरं वा[2]द्यं का[3]न्तं च ऋषिसंज्ञितम् । चक्रि[4]णां च सदाराध्यं यो जानाति स पण्डितः ॥ ५ ॥ वे[5]ने वसति को वीरो योऽस्थिमांसविवर्जितः । असि[6]वत्कुरुते कार्यं कार्यं कृत्वा वनं गतः ॥ ६ ॥ रवि[8]र्जा शशिकुन्दाभा तापहर्त्री जगत्प्रिया । वर्धते वनसङ्गे[9]न न ता[10]पि यमु[11]नापि न ॥ ७ ॥ तरुण्या[12]लिङ्गितः कण्ठे नितम्बस्थलमाश्रितः । गुरूणां संनिधानेऽपि कः कूजति मुहुर्मुहुः[13] ॥ ८ ॥ अव[14]लोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ । निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥ ९ ॥ आपाण्डु पीनकठिनं वर्तुलं सुमनोहरम् । करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहैः[15] ॥ १० ॥ एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः । क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः[16] ॥ ११ ॥ छत्रधारी न राजासौ जटाधारी न चेश्वरः । सृष्टिकर्ता न स ब्रह्मा छिद्रकर्ता न तस्[17]करः ॥ १२ ॥ अस्थि नास्ति शिरो नास्ति बाहुरस्ति निरङ्गुलिः । नास्ति पादद्वयं गाढमङ्गमालिङ्गति स्[18]वयम् ॥ १३ ॥ अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ । सीताहरणसामर्थ्यो न रामो न च रा[19]वणः ॥ १४ ॥ नरना[20]रीसमुत्पन्ना सा स्त्री देहविवर्जिता । अमुखी कुरुते शब्दं जातमात्रा विनश्[21]यति ॥ १५ ॥ दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः । गुणस्यूतिसमृद्धोऽपि परपादेन गच्[22]छति ॥ १६ ॥ न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति । तवाप्यस्ति ममाप्यस्ति यदि जाना[23]सि तद्वद ॥ १७ ॥ य एवादिः स एवान्तो मध्ये भवति मध्यमः । य एतन्नाभिजानीयात्तृणमात्रं न वेत्ति सः[24] ॥ १८ ॥ पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः । चलते वायुवेगेन पदमेकं न गच्[25]छति ॥ १९ ॥ श्यामं च वर्तुलाकारं पुंनाम चतुरक्षरम् । शकारादि मकारान्तं यो जानाति स पण्डितः[26] ॥ २० ॥ अर्धचन्द्रवदाकारं स्त्रीनामार्थं च त्र्यक्षरम् । नकारादि रिकारान्तं यो जानाति स पण्डितः[27] ॥ २१ ॥ वर्तुलः सुदृढो दण्डाघातसोढा घनध्वनिः । उपदेष्टा कदर्यादेर्महोत्सवस्य सूचकः[28] ॥ २२ ॥ वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्ष एव च । अकारादि सकारान्तं यो जानाति स पण्डितः[29] ॥२३॥ चतु-

---

१ बहुच्छिद्रम् । २ वः वकार आद्यवर्णो यस्य तथोक्तम् । ३ कः अन्ते यस्य तथोक्तम् । ४ सर्पेण सदाराध्यमृषिसञ्ज्ञितं वल्मीकम् । वाल्मीकिनाम्नस्तन्मूलतया प्रसिद्धत्वात् । ५ घटशिल्पिनो घटादिसाधनविशेषभूतो दोरकविशेषः। अस्य प्रायो वने जलपात्रे निवासः। ६ असिना खड्गेन तुल्यम्, अस्य हि घटादिसम्बन्धदूरीकरणाय नियोगोऽपेक्ष्यते । ७ जलम् । ८ रविः मन्थानदण्डः । 'रई' इति भाषायाम् । सूर्यो रविरिति प्रतीतिमात्रम् । ९ जलसम्बन्धेन तक्रस्य प्रवृद्धेः वनं जलम् । १० तापयतीत्येवंभूतम् । ११ इदं तक्रमुद्दिश्योक्तम् । १२ इदं जलकलशमुद्दिश्योक्तम्।जलकलशो हि प्रायशो युवत्या कटिदेशे निधायानीयते तदूर्ध्वभागश्च युवत्या बाहुना पाशेनेवावेष्ट्यत इति बोध्यम् । १३ अत्र जारपुरुषसङ्गप्रत्यायनमात्रम् । १४ कुत इति प्रश्ने यत इत्युत्तरमुन्नेयं,तथा च यतो व्याधकुटुम्बिनीति पर्यवसीयते इदमवधेयम् । कापि शबरी स्नुषायाः स्तनौ तथाविधौ दृष्ट्वेदं सम्भावितवती मत्सुत एतस्यामनुषज्य तथा क्षीणः यथा गजान्निहन्तुं न क्षमते अन्यथेयं गजमुक्ताभिरेवालङ्कृताऽभविष्यदिति रोदनम् । १५ पक्वबिल्वफलमुद्दिश्येदमुक्तम् । स्तनमण्डलस्य तु प्रतीतिमात्रम् । १६ पुंश्चिह्नम् । १७ शष्पयुक्तं पुंश्चिह्नमुद्दिश्येदं वचनम् । १८ कञ्चुकं कवचं वोद्दिश्येदं वचनम् ।१९ कञ्चुक इति तत्त्वम् । शसयोः सावर्ण्यात् सीतेति शीतेति पठनीयम् । २० अङ्गुष्ठ-मध्यमाङ्गुली- । २१ 'छोटिका' इत्याहुः । २२ उपानहमुद्दिश्येदं वचनम् । २३ 'नयनम्' । २४ 'यवस' इत्युद्दिश्येदं वचनम् । २५ पताकामुद्दिश्येदं वचनम् ।२६ शालग्रामः। २७ 'नगारि इति नाम भाषायां क्षुद्रमृदङ्गस्य,तदुद्देशेनैवेदमभिधानम् । अमस्तका द्विवर्णाऽपि निर्जिह्वा भक्षणोद्यता । लम्बोष्ठी चाङ्गुलीयोगाच्चञ्चला साध्यसिद्धये ॥' इति पाठान्तरे कर्तरीति बुध्यते । २८ मृदङ्गः । २९ 'अननस' इत्याख्यं तरुं समुद्दिश्योक्तम् ।

मुखो न च ब्रह्मा वृषारूढो न शंकरः। निर्जीवी च निराहारी अजस्रं धान्यभक्षणम्[1] ॥ २४ ॥ कृष्णास्या न तु मार्जारी द्विजिह्वा न च सर्पिणी। पञ्चभर्ता न पाञ्चाली यो जानाति स पण्डितः[2] ॥ २५ ॥ अपूर्वोऽयं मया दृष्टः कान्तः कमललोचने। शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः[3] ॥ २६ ॥ पर्वताग्रे रथारूढो भूमौ तिष्ठति सारथिः। चक्रवद्भ्रमते पृथ्वी तस्याहं कुलबालिका[4] ॥ २७ ॥ अर्ध-चन्द्रसमायुक्तं पुंनाम चतुरक्षरम्। ककारादि लकारान्तमिह जानाति पण्डितः[5] ॥ २८ ॥ अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः। यावत्पतितः स तया तत्क्षणमवधीरितः कस्मात्[6] ॥ २९ ॥ गीत्वा किमपि[7] व्याधः शृङ्गं जग्राह तरुणहरिणस्य। तमथ समीक्ष्योद्यतकरमेणीमपि लज्जिता व्याधी[8] ॥ ३० ॥ काचिन्मृगाक्षी प्रियविप्रयोगे निशीथिनीपारमपारयन्ती। आगातुमादाय करेण वीणा-मुद्ग्रीवमालोक्य शनैरहासीत् ॥ ३१ ॥ सदारिमध्यापि[9] न वैरियुक्ता नितान्तरक्तापि सितैव[10] नित्यम्। यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति[11] निवेदयाशु[12] ॥ ३२ ॥ पुमान्न देवो न पशुर्न नाद्रिर्ना-चापि तिर्यङ्न च जीवभिन्नः। विश्वं प्रपश्यन्नपि यो न जातु द्रष्टेति यो वेद स वेद वेदान्[13] ॥ ३३ ॥ रम्येक्षणा लब्धजनुर्वनान्तर्लोला स्वभावाद्वनमात्रजीवा। रसैकविज्ञा ननु जीवनस्य वने कदाचिन्न च[14] यन्निवासः ॥ ३४ ॥ वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शूलपाणिः। त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः[15] ॥ ३५ ॥ वृक्षाग्रवासी न च पक्षिजातिस्तृणं च शय्या न च राज-योगी। सुवर्णकायो न च हेमधातुः पुंसश्च नाम्ना न च राजपुत्रः[16] ॥ ३६ ॥ चक्री त्रिशूली न हरो न विष्णुर्महान्बलिष्ठो न च भीमसेनः। स्वच्छन्दचारी नृपतिर्न योगी सीतावियोगी न च रामचन्द्रः[17] ॥ ३७ ॥ आद्येन[18] हीनं जलधावदृश्यं मध्येन हीनं भुवि वर्णनीयम्। अन्तेन हीनं धुनुते शरीरं

---

१ वृषणोद्यां धान्याधानीं शतघ्नीं 'तोप' इत्याख्यं प्रहरणविशेषमुद्दिश्य वेदं वचनम्। 'भय ङ्करायतमुखी सम्मुखागतनाशिनी। राज्ञां सेव्या सदा दिव्या मन्त्रवत्फलदायिनी ॥' इति पाठा-न्तरे तु 'तोप' इत्यर्थाभिव्यक्तिः स्पष्टैव। २ लेखिनी। ३ अशोकः। ४ कुम्भकारस्य। ५ 'करवाल' इति। ६ रजस्वलात्वादित्युत्तरम्। ७ अद्भुतम्। ८ व्याधः किमप्यद्भुतं गीतं गीत्वा गीतविमू-र्छितविलीनचित्तस्य तरुणहरिणस्य शृङ्गं जग्राह। किमर्थम्, यतो मद्गीतसुखितस्त्वं याचकस्य म इदं शिरोदानं देहीति। अथ तं च हरिणं शिरोदानायोद्यतकरं समीक्ष्य तज्जायां हरिणीमपि पत्युर्भक्त्या निजशिरोदानायोद्यतकरां समीक्ष्य धर्मार्थचारिणी व्याधी लज्जिता। केन हेतुना यतोऽयं हरिणो दाता इयं च हरिणी पतिभक्ता दातृजाया, मत्कान्तस्तु याचकः। अहं च याचकजाया। वरमेते पशवो न वयं मनुष्याः। इत्यभिप्रेत्य लज्जितेति प्रथमोऽर्थः ॥ अथवा व्याधजायायाः पूर्वपरिणीतपुरुषो मृतः स च विद्यमानः संगृहीतो द्वितीयः पुरुषः। तं च विलोक्य चिन्तितवती। यतो निजकान्तवियोगासहिष्णुः शिरोदानायोद्यतकरा पतिभक्ता वरमियं हरिणी। अहं च परिणीतप्रियमरणेऽपि जीविता संगृहीतभर्तृका चासती मानुषी। इति लज्जितेति द्वितीयोऽर्थः ॥ ९ सदाऽरीणां मध्ये वर्त्तमाना, सदा 'रि' इति वर्णो मध्ये यस्यास्तादृशी च। १० सिता-शर्कराविशेष एवेति' 'सा' इति वर्णः संजातो यत्र तथाभूता च। ११ कान्ता रमणीया, 'का' इति वर्णोऽन्ते यस्यास्तादृशी च। १२ सारिकामुद्दिश्येदं वचनम्। १३ आत्मानमुद्दिश्येदं वचनम्। १४ शफरीमुद्दिश्येदमभिधानम्। अत्र वनशब्दो जलवाचीअपि। १५ नारिकेलमुद्दिश्येदं वचनम्। १६ आम्रफलमुद्दिश्येदमुक्तम्। १७ महोक्षमुद्दिश्येदं वचनम्। १८'करज' इति पदमुद्दिश्येदं वचनम्। तत्र 'क' इत्यस्याद्यस्य वर्णस्य निरासे 'रज'इति शिष्यते तच्च जलधावदृश्यम्भवत्येव। मध्यमेन 'र' इति वर्णेन हीनं तदेव पदं कज' इति स्यात् कजं च कमलं भुवि वर्ण्यत एव। तथाऽन्त्येन जकारेण हीनतां नीतं कररूपतां धत्ते, करपदवाच्यं राजानं प्रति देयं द्रव्यं तच्च शरीरं धुनुते कम्पयति। करजश्च नखः।

कान्तार्पितः स श्रियमातनोतु ॥ ३८ ॥ सर्वस्वापहरो[1] न दस्युकुलजः खट्वाङ्गभृन्नेश्वरो दोषानिष्टकरो न धर्मनिरतः कीलालपो नासुरः । नृणां पृष्ठपलाशनो न पिशुनः शीघ्रंगमो नो हयः शश्वद्रात्रिचरो न राक्षसगणः कोऽयं सखि ब्रूहि मे ॥ ३९ ॥ सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनः सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुतस्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिताः[2] ॥ ४० ॥ जाता शुद्धकुले जघान पितरं हत्वाऽपि शुद्धा पुनः स्त्री चैषा वनिता पितेव सततं विश्वस्य या जीवनम् । सङ्गं प्राप्य पितामहेन जनकं प्रासूत या कन्यका सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥ ४१ ॥

## अपह्नुतिनिर्देशः ।

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत्[4] ॥ १ ॥ रुचिरस्वरवर्णपदा[5] रसभाव[6]वती जगन्मनो हरति । तत्किं तरुणी नहि नहि वाणी बाणस्य[7] मधुरशीलस्य ॥ २ ॥ सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् । नागरिकः किं मिलितो नहि नहि सखि हैम[8]नः पवनः ॥ ३ ॥ काले पयोधराणाम[9]पतितया[10] नैव शक्यते स्थातुम् । उत्कण्ठितासि बाले नहि नहि सखि पिच्छिलैः[11] पन्थाः ॥ ४ ॥ अतनुप्रवृद्ध[12]वेगो धुनोति कायं तनोति रोमाञ्चम् । किंनु मदनोद्रेको नहि सखि मारुतो जवः शीतः ॥ ५ ॥ मधुरस्वना धृ[13]तोर्णा मण्याभरणा शुशोभना सुदती[14] । मत्स्कन्धोचितदण्डा भिक्षो दयितास्ति किं न मे वीणा ॥ ६ ॥ रागी[15] भिनत्ति निद्रां तल्पं न जहाति निष्ठुरं दशति । चतुरे किं प्राणेशो नहि नहि सखि मत्कुणव्रातः ॥ ७ ॥ आदौ गृहीतपाणिः पश्चादारूढजघनकटिभागा । नखमुखलालनसुखदा सा किं रामाऽस्ति नैव भोः पामा[16] ॥ ८ ॥ नाथ विलोकय मेघं[17] नहि नहि पापं तवातिपुण्यायाः । नहि कथयामि पयोधर[18]मपसारय कञ्चुकीमुरसः ॥ ९ ॥ पञ्च-

---

१ मत्कुणमुद्दिश्येदमुक्तम् । २मत्कुणः । ३ जलवृष्टिमुद्दिश्येदं वचनम् । तथाहि-जलवृष्टिः शुद्धजलसमुदायभूतमेघादुद्भूय स्वजन्मना स्वोत्पादकं मेघं विनाशयति, तथाऽपि स्वयं शुद्धा स्वच्छजलाऽस्ति. पितुरिव समस्तस्य जगतो जीवनं च भवति. सूर्यकिरणैः समुद्रोदके शोषिते सति तस्मान्मेघोत्पत्तिर्भवतीति समुद्रो मेघपिता. सा पूर्वोक्ता जलवृष्टिर्मेघस्य पित्रा स्वपितामहीभूतेन सागरेण सह नद्यादिद्वारा संगमं प्राप्य तेन तज्जलं वर्धयित्वा पुनर्मेघोत्पत्तय एव हेतुर्भवतीति जनकं प्रासूतेत्यस्याभिप्रायः । ४ स्वप्ने मनःप्रमोषादिदं मया प्रलपितमिति ध्वनयितुं प्रबुद्धाऽस्मीत्युक्त्वोक्तमपि तच्चरितमपह्नुतवतीति भावः । ५ स्वरोऽकारादिर्निषादादिश्च, वर्णः ककारादिः, शुक्लादिश्च; पदं पादः, सुबन्ततिङन्तान्यतरच्च । ६ रसः सुरतानन्दः, शृङ्गारादिश्च, भावः प्रेमा, निर्वेदादिश्च । ७ एतदाख्यस्य कादम्बरीनिर्मातुः कवेः । ८ हेमसम्बन्धी । ९ मेघानां स्तनानां च द्वितीयपक्षे बहुवचनं श्लेषसमर्थनायैव । १० न पतिता च्युतेति तया, न पतिः प्रियो यस्याः सविधे तादृश्येति च । ११ पङ्किलः । १२ अतनु अत्यन्तं प्रवृद्धो वेगो यस्य सः, अतनोः कन्दर्पस्य प्रवृद्धो वेग इति च । १३ धृतोर्णादिदशा धृतोर्णवसना च । १४ शोभना दन्ता यस्याः सेति, शोभनैर्दन्तिनो दन्तमयैर्भूषणैः शोभिता च । १५ अनुरक्तः, शोभावर्णश्च । १६कण्डूः । १७ जलधरम्, मे-मम, अघं-पापमिति च १८ पयोधरः-स्तनः, मेघश्च; तम् । पयसः-दुग्धस्य जलस्य च धरस्तम् । स्तनावरणम् ।

दशीरजनिसमा[1] तारामणिभूषणापि[2] कोकिलवाक् । चन्द्रसमा[3] गतवसना[4] हस्तगता स्त्री न मे वीणा ॥ १० ॥ नाथ मयूरो[5] नृत्यति तुरगाननवक्षसः कथं नृत्यम् । नहि कथयामि कलापिनमिह[6] सुखलापी प्रिये कोऽस्ति ॥ ११ ॥ अक्षरमैत्रीभाजः सालंकारस्य चारुवृत्तस्य । किं ब्रूमो सखि यूनो नहि नहि सखि पद्यबन्धस्य ॥ १२ ॥ इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सवं नहि घनागमरीतिरुदाहृता[7] ॥ १३ ॥ तन्वी चारुपयोधरा सुवदना श्यामा मनोहारिणी नीता निष्करुणेन केनचिदहो देशान्तरादागता । उत्साङ्गोचितया[8] तया रहितया किं जीवनं प्रेक्षसे भिक्षो ते दयिताऽस्ति किं नहि नहि प्राणप्रिया तुम्बिका ॥ १४ ॥ या पाणिग्रहलालिता[9] सुसरला तन्वी सुवंशोद्भवा[10] गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी । सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं रे भिक्षो तव कामिनी, नहि नहि प्राणप्रिया यष्टिका ॥ १५ ॥

## कूटानि ।

के[11] शवं[12] पतितं दृष्ट्वा द्रोणो[13] हर्षमुपागतः । रुदन्ति कौरवाः[14] सर्वे हा केशव कथं गतः ॥१॥ पानीयं पातुमिच्छामि त्वत्तः कमललोचने । यदि[15] दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥ २ ॥ वि[16]षं भुङ्क्ष्व महाराज स्वजनैः परिवारितः । विना केन[17] विना नाभ्यां[18] कृष्णाजिनम्[19] अकण्टकम्[20] ॥ ३ ॥ अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः । सीदन्ति मम गात्राणि माघमासेगवा[21] इव ॥ ४ ॥ यस्य षष्ठी चतुर्थी च विहस्य च विहाय च । अहं कथं द्वितीया स्याद्द्वितीया[22] स्यामहं कथम् ॥ ५ ॥ समरे हेमरेखाङ्कं बाणं मुञ्चति राघवे । स रावणोऽपि मुमुचे मध्येरीतिधरं[23] शरम् ॥ ६ ॥ शिलार्पितपदद्वन्द्वा[24] नासार्पितकरद्वया[25] । अभूद्व्यक्तस्तनी नारी कथमेतद्भविष्यति ॥ ७ ॥ सुवर्णस्य[26] सुवर्णस्य[27] सुवर्णस्य[28] च जानकि ।

---

१ पञ्चदशी रजनिः-पूर्णिमा रात्रिः, तत्समा आह्लादकत्वेनेति च । २ तारा एव मणयस्तैर्भूष्यत इति पञ्चदशीसमत्वसमर्थने; तारा इव ये मणयस्तेषां भूषणं यस्याः सेति स्त्रीपक्षे तारा:-लक्षणया तदाकारा ये मणयस्ते एव भूषणं यस्या इति, वीणापक्षे वीणायां हि स्थले स्थले सौवर्णानि ताराचिह्नानि भवन्ति । ३ चन्द्रेण समा, सदृशी, तदाख्येन हारविशेषेण वा समा,-मया, लक्ष्म्या, शोभयेतियावत् सह वर्त्तत इति तथोक्तेति स्त्रीपक्षे, वीणापक्षे त्वाह्लादकत्वेनैव साम्यम् । ४ सुरतावसरे वसनत्यागो दृष्टचरः, वीणापक्षे तु तदुपरि रजःपातनिवारणार्थं कञ्चुकाकारं यद् वस्त्रं, तन्निष्कास्यैव वादनोपयोगित्वमिति तथोक्तम् । ५ बर्हो, 'तुरङ्गवदनो मयुः' इत्यमरोक्त्या मयोः किन्नरस्य उरः-वक्षःस्थलमिति च । ६ कलापोऽस्यास्तीति तम् । अत्र प्राशस्त्ये इन । कलापः बर्हः, मयूरमित्यर्थः । पक्षान्तरे तु कं-सुखं, मनोहरमितियावत् लपति-आलपतीत्येवं शीलमस्यास्तीतितम् । ७ वर्षर्तुप्राप्तिप्रकारम् । ८ निकटे क्रोडे वाऽवस्थातुं योग्येत्यर्थः । ९ पाणिना ग्रहो ग्रहणं तेन लालिता. पाणिना ग्रहणं परिणयश्च । १० शोभनो वंशः कुलं, वेणुश्च, तत्र सम्भवो जन्म यस्याः सा । ११ जले । १२ मृतकम् । १३ कृष्णकाकः । १४ शृगालाः । १५ यदि दासी असि नेच्छामि नो दासी असि तदा पिबाम्यहमिति पदच्छेदः । १६ विगतः षकारो यस्मात् । १७ ककारेण विना । १८ नकारद्वयरहितम् । १९ कृष्णाजिनम्. अत्र ककार-षकार-नकाराणां निष्कासने 'ऋ आजि अम्' इति स्थितौ संधौ कृते 'राज्यम्' इति सम्पद्यते । २० शत्रुरहितम् । २१ 'माघमा कर्कटी प्रोक्ता तदपत्यानि सेगवाः' इत्युक्तेः कर्कटया अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य बहिर्यान्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थः । २२ सहधर्मिणी । २३मध्यभागे रीतिः पित्तलं तद्विशिष्टम्;मध्ये रीकारविशिष्टं शरं च, शरीरमित्यर्थः । २४'अधस्ताद्दारुणि शिला' इत्यमरः ।२५'नासा दारूपरिस्थितम्' इत्यमरः।२६ उज्ज्वलवर्णस्य । २७ शोभना वर्णा नामाक्षराणि यत्र तस्य । २८ अशीतिरक्तिकापरिमितस्य ।

प्रेषिता तव रामेण सुवर्णस्य[1] च मुद्रिका ॥ ८ ॥ निश्चितं स[2]सुरः कोऽपि न कुलीनः[3] स[4]मे-मतिः । सर्वथा सुरसंबद्धं[5] काव्यं[6] यो नाभिनन्दति ॥ ९ ॥ येनाकारि परा[7]भूतिर्दिनेनायक-सूनवे[8] । यद्गोत्रात्मभवाकान्तं[9] तन्महः[10] श्रेयसेऽस्तु वः ॥ १० ॥ विजितात्मभवद्वेषिगुरु-पाद[11]हतो जनः । हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ ११ ॥ शंकरं[12] पतितं दृष्ट्वा पार्वती[13] हर्ष-निर्भरा । रुरुदुः पन्नगाः सर्वे हा हा शंकर शंकर ॥ १२ ॥ हनूमता हतारामे[14] वानरा हर्षनिर्भराः । रुदन्ति राक्षसाः सर्वे हाहाराम हता हताः ॥ १३ ॥ विराजराजपुत्रारेर्यन्नाम[15] चतुरक्षरम् । पूर्वार्धं तव शत्रूणां परार्धं तव संगरे ॥ १४ ॥ अट्टशूला[16] जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केश-शूलिन्यो भविष्यन्ति कलौ युगे ॥ १५ ॥ कुन्दकुञ्जममुं पश्य सरसीरुहलोचने । अमुना[17] कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ॥ १६ ॥ राजन्कमलपत्राक्ष तत्ते भवतु चाक्षयम् । आसादयति यद्रूपं करेणुः करणैर्विना[18] ॥ १७ ॥ स्तनमण्डलमाश्रित्य[19] नखस्य वरयोषिताम् । कदाकर्णयते गीतं रमया सह रङ्गराट् ॥ १८ ॥ एकोना[20] विंशतिः स्त्रीणां स्नानार्थं सरयूं गता । विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥ १९ ॥ त्रैलोक्ये नोपमैतस्याः सखे किमिति भाषसे । अनन्तरा सा नादिर्वा न तृतीयेति मे मतिः[21] ॥ २० ॥ सुवर्णालंकृता[22] कन्या हेमालंकारवर्जिता । सा[23] कन्या विधवा[24] जाता

---

सुरया सहितः, मद्यप इत्यर्थः; सः सुरः इति पदच्छेदे सुरो देवश्च ।
१ काञ्चनस्य । २ सुरया सहितः, मद्यप इत्यर्थः; सः सुरः इति पदच्छेदे सुरो देवश्च ।
१ काञ्चनस्य । २ साधौ अमतिः श्रद्धारहित इति यावत्; समे विष्णौ
३ सत्कुले प्रसूतः, कौ लीनः । ४ समे साधौ अमतिः श्रद्धारहित इति यावत्; समे विष्णौ
मतिर्यस्य स इति च । ५ शोभनरसविशिष्टं बद्धं रचितम्; असुरैः संबद्धं युक्तं च । ६ कवि-
कृतिम्; शुक्रं च । ७ पराजयः; परा उत्कृष्टा भूतिरैश्वर्यं च । ८ कर्णाय सुग्रीवाय, यमाय च ।
९ गाम्रायन्ते ते गोपास्तेषामात्मभवा गोपिकास्तासां कान्तं मनोहरम् । अथ च गोत्रायाः
पृथ्व्या आत्मभवा सीता सा कान्ता यस्य तत् । अथ च गोत्रस्य हिमालयस्यात्मभवा पार्वती
सा कान्ता यस्य तत् । १० कृष्णाख्यं रामाख्यं शिवाख्यं च । ११ विना गरुडेनामृताहरण-
समये जित इन्द्रस्तदात्मभवोऽर्जुनस्तद्द्वेषी कर्णस्तद्गुरुः पिता सूर्यस्तत्पादहतस्तत्किरण-
संतप्तः । हिमापहोऽग्निस्तदमित्रं पानीयं तद्धरो मेघः सूर्यकिरणसन्तप्तो जनो मेघाच्छन्नमाका-
शमभिनन्दतीति भावार्थः । १२ श्रेष्ठचन्दनम् । १३ पर्वतवासिनी स्त्री भिल्ली । १४ हत आराम-
स्तत्र । रावणस्योद्याने दाहिते सतीत्यर्थः । १५ वयः पक्षिणस्तेषां राजा गरुडस्तद्राजा विष्णु-
स्तत्पुत्रो मदनस्तदरिः शिवस्तस्य चतुरक्षरं नाम 'मृत्युंजयः' इति, तत्पूर्वार्धं 'मृत्यु इति' संगरे
तव शत्रूणाम् । तव उत्तरार्धं 'जय' इति । १६ 'अट्टमन्नं शिवो वेदो ब्राह्मणश्च चतुष्पथः । केशो
भग इति प्रोक्तः शूलो विक्रय उच्यते ॥' इति स्पष्टं श्रीमद्भागवतमाहात्म्यव्याख्यादौ । १७ मुकार-
रहितेन, मुकुन्दकुञ्जेनैव प्रयोजनादिति भावः । १८ करेणुः करणैर्विना ककार-रेफ-णकारैर्विना
यद्रूपमासादयति प्राप्नोति तत्तेऽक्षयं भवत्वित्यन्वयः, उक्तव्यञ्जनत्रयरहितम् । 'अ ए उः' इति
स्वरत्रयम्. तत्र अ ए इत्यत्र वृद्धौ ऐ, उः इत्यत्र आयादेशे 'आयुः' इति सिद्धम् । १९ खस्याका-
शस्य मण्डलमाश्रित्य हे कद मेघ, मा स्तन गर्जितं मा कुरु, यतो रङ्गराड्रङ्गनाथो रमया सह
वरयोषितां गीतमाकर्णयत इत्यन्वयः । २० एकोना इति विंशतेर्विशेषणेन विरोधः एको ना
नरः इति पदच्छेदेन परिहारः । २१ कश्चित्स्वनायिकां स्तौति, तं प्रति अन्यः परिभाषते,
हे सखे, एतस्यास्त्रैलोक्ये उपमा नास्तीति किमिति कुतो भाषसे, यतः सा अनन्तरा मध्य-
वर्णरहिता, उमेति यावत् अथवा सैव उमा अनादिः आद्यवर्णरहिता मा लक्ष्मीरिति यावत्.
उपमा उपमानमस्तीति भावः, तृतीया नास्तीति मे बुद्धिः । २२ सुष्ठुवर्णेन कान्त्याऽलङ्कृता ।
२३ विद्युदित्यर्थः । २४ विविधा धवाः पतयो यस्याः सा जारिणीत्यर्थः ।

गृहे[1] रोदिति[2] तत्पतिः[3] ॥ २१ ॥ अहं च त्वं च राजेन्द्र लोकनाथावुभावपि । बहुव्रीहिरहं[4] राजन्षष्ठीतत्पुरुषो भवान्[5] ॥ २२ ॥ अपः पिबन्प्रपापालीमनुरक्तो विलोकयन् । अगस्त्यं चिन्तयामास चतुरः[6] सापि सागरान् ॥ २३ ॥ ब्रह्म[7] नान्तमपि[8] क्लीबं[9] मनः सान्तं[10] न पश्यति[11] । किं चित्रं लोकजनकं वाक्[12] कान्ता नैत्यकान्तकम्[13] ॥ २४ ॥ अर्धरात्रे दिनस्यार्धे ह्यर्धचन्द्रेऽर्धभास्करे । रावणेन हृता सीता कृष्णपक्षे सिताष्टमी[14] ॥ २५ ॥ शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः । रिपुगर्भस्य यो भर्ता स मे विष्णुः प्रसीदतु[15] ॥ २६ ॥ कहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन्किमुत्तरम् । कथमुक्तं न जानासि कदर्थयसि यत्सखि[16] ॥ २७ ॥ विषादी भैक्ष्यमश्नाति सदा रोगं

---

१ गृहे-घटारूपे शरीरे स्थितः । २ वर्षतीति लक्ष्योऽर्थः । ३ तस्या विद्युतः पतिः, मेघ इति भावः । ४ अहं वाचकः, बहुव्रीहिः- लक्षणया तदाख्यसमासघटित इति भावः । लोकनाथ इति प्रकृतप्रसक्तम् । तथा च-लोको नाथो यस्य सः, अत्यन्तं परेषामधीनजीवन इत्यर्थः । ५ भवान्-नरपतिः, षष्ठी तत्पुरुषः-लक्षणया तदाख्यसमासघटितो लोकनाथः । तथा च । लोकस्य भूर्लोकस्येति, लोकानां-नराणामिति वा नाथ इति तथोक्तः । ६ समुद्रान् पिबन्नपि नागस्त्यस्तृषाशान्तिं लब्धवानिति स इव यद्यहं तृषाशान्तिं न लप्स्ये तर्हि चिरमिमां पश्यन् कृतार्थः स्यामिति भावः । सा-प्रपापाली, अपि अनुरक्तं मनोरमं च तं विलोकयन्ती, यदि चत्वारः सागरा उपेता भवेयुस्तर्हीमं चिरं पाययन्ती कृतार्था भवेयम् इति चिन्तयामासेत्यर्थः । अत्र प्रपापालीपक्षे लिङ्गविपरिणामेनानुरक्तेति विलोकयन्तीति चानुषज्येते । यदि तु-सागरानिति बहुवचनबोध्यमेव 'चतुरः' इति विशेषणं, तर्हि-'चतुरः-पटुः' इति कर्तृपदमेव, अदश्च तत्पदस्य विशेषणत्वे चतुरेति पूर्ववत् । ७ बृहत् । ८ नान्तो यस्यापरिच्छेद्यत्वादिति तत् । अत्र 'न' इत्येव निषेधार्थः, तेनैव समं समासश्चेत्यनादेशानुत्पत्तिः । 'न' नकारोऽन्तेऽस्य ( ब्रह्म ) पदस्येति तथोक्तम् । ९ तथा च-ब्रह्मणोऽनन्तस्य ( अपरिमेयत्वादिना ) अपि क्लीबत्वमिति विरुद्धमिव । अथ-नकारान्तो ब्रह्मशब्दः क्लीबलिङ्ग इत्यविरुद्धम् । १० अन्तेन सहवर्त्तत इति तं, सः सकारोऽन्ते यस्येति च तत् । तथा च-मनः-विनाशीति, मनःशब्दः सकारान्त इति च । ११ साक्षात्करोति । 'पराञ्चि खानि व्यतृणात्स्वयम्भूः' इति, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति च श्रुतिः । १२ रमणीया । कः-ककारः, अन्ते यस्याः सेति च । वाक्शब्दस्य स्त्रीलिङ्गत्वेन कान्तात्वं ककारान्तत्वं तु सिद्धमेव । १३ अकानां-दुःखानाम् अन्तकम् । नकान्तकं-( कान्तमेवेति ) सुन्दरं ( क्लीबत्वात् ) तत् । 'क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे' 'तमेव विदित्वाऽतिमृत्युमेति' 'तत्र को मोहः कः शोकः, एकत्वमनुपश्यतः' इत्यादिश्रवणात् । तथा च-कान्ता ( सुन्दरी ) वाक् ( नायिका ) लोकजनकम् अपि अकान्तं ( कुरूपं ) यदि न एति तर्हि तद् युक्तमेव, अथ ककारान्तरूपो वाक्शब्दोऽककारन्तं, किं तु नकारान्तं नैति तदा किं चित्रम् । मातृकासु हि ककारस्य प्रथमं पाठः नकारस्य पुनरतिदूरे, इति बोध्यम् । १४ कृष्णपक्षे ( या ) अष्टमी ( तस्याः ) दिनस्यार्द्धे रावणेन सीता हृता । अष्टमी च अर्धरात्रे-निशीथे, सिता तदानीं चन्द्रोदयात् । कथम्भूते-अर्द्धरात्रे अर्द्धः चन्द्रोऽस्मिन्निति तथोक्ते । कथम्भूते दिनस्यार्द्धे अर्धभास्करः अर्धदिनस्थायी भास्करो यत्रेति तथोक्ते । १५ शमीगर्भोऽग्निस्तद्गर्भो जलं, तद्रिपुरग्निस्तद्रिपुर्जलं तद्गर्भो लक्ष्मीस्तद्भर्त्ता विष्णुरिति । यद्वा-शमीगर्भोऽग्निस्तद्गर्भो जलं तद्रिपुः-सूर्यः, तद्गर्भः-कालिन्दी तद्भर्त्तेति दिक् । १६ कहं-कथम् । अस्मि-अहम् । कथमित्यर्थकं कहमितिप्राकृतम् । कयाऽप्युच्यमानं स्वापवादमाकर्णयन्त्या इदं वचनम् । एतदाकर्ण्य काऽपि दिव्या तत्प्रश्नोत्तरं तदा दातुमयुक्तम्मन्वाना सहासं संस्कृतमाह-अस्मिन् कथम् ( तथाविधा ) अस्मि इति प्रश्ने किमुत्तरमिति गुहा-प्रतिध्वनिरूपोचितमिदं स्थानम् ( एव ) वक्ति । किं वक्तीति पुनर्जिज्ञासायामाह । कहम् ( इत्यनेन शब्देन ) 'कथम्' ( इति स्वेन ) उक्तम् ( एव ) जानासि? ( अत्र काकुः ) तथा च, जानास्येवेत्यर्थः । तथा च यत् हे सखि ! कदर्थयसि विडम्बयसीत्यर्थः । 'कहम्' इति प्राकृतम् 'अस्मि' इति संस्कृतं चेति भेदस्तु 'वैदग्ध्यार्थं प्रयोक्तव्यं संस्कृतं चान्तरान्तरा' इति नियमात् ।

न मुञ्चति । रुष्टेनापि त्वया वीर शम्भुनाऽरिः समः कृतः ॥ २८ ॥ विगोवाहा भुजङ्गाञ्जनगासा अबलादृताः । पान्तु देवाः सदा रुष्टा निघ्नन्तु च भवद्रिपून् ॥ २९ ॥ शस्त्रं नैखलु कर्तव्यमिति पित्रा नियोजितः । तदेव शस्त्रं कृतवान्पितुराज्ञा न लङ्घिता ॥ ३० ॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । नैतया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ ३१ ॥ देवराजो मया दृष्टो वारिवारणमस्तके । भक्षयित्वार्कपर्णानि विषं पीत्वा क्षयं गतः ॥ ३२ ॥ विना यौवनमार्गेण गच्छन्तौ लपितं मया । हरेः कृत्यं दर्शयतां पश्येत्युक्तेन दृश्यते ॥ ३३ ॥ कोलाकृतिरपारेवो मोरोहंसो जलोदरी । कंसारिरात्तलीलो वो बाघलो भूकलोऽवतु ॥ ३४ ॥ कुमारसम्भवं दृष्ट्वा रघुवंशे मनोऽहरत् । राक्षसानां कुलस्यार्यो रामो राजीवलोचनः ॥ ३५ ॥ विनायकरिपोर्नाम यद्भवेच्चतुरक्षरम् । तत्पूर्वार्द्धं भजेत्त्वद्विट् परार्द्धं सुहृदां सदा ॥ ३६ ॥ सुरारिरिपुभृत्यस्य तस्य तातस्य वाहनम् । अन्त्याक्षरविहीनस्य तस्य कान्ता स्थिरा भवेत् ॥ ३७ ॥ नागवल्लिरिपोः कन्या सा कन्या यस्य वल्लभा । तस्य हाररिपुस्वामी तस्य कान्ता स्थिरा भवेत् ॥ ३८ ॥ केष्ठौ मानगजायुक्ता वार्चवीश्वरगोजगाः । शं वो ददतु काजेशा वेदेलास्वर्धुनीधराः ॥ ३९ ॥ राम-

---

१ हे वीर ! त्वया रुष्टेनापि शम्भुना-महेश्वरेण समः अरिः-शत्रुः कृतः, यतोऽसौ विषादी विषादोऽस्यास्तीति तथोक्तः, विषमत्तीत्येवंभूतस्तु शम्भुः, भैक्ष्यम् अश्नाति, भुङ्क्ते तथा सदा रोगं व्याधिं न मुञ्चति, शम्भुस्तु सदारः पार्वतीयुक्तः, अगं-कैलाशं च न मुञ्चति २ विश्च विश्चेति वी गरुडहंसौ च गौश्चेति, ते वाहा येषां ते । भुजङ्गः ( शेषः ) चाऽब्जं च नगश्चेति तेष्वासः शयनमासनं वा येषां ते । अबलाभिः लक्ष्मीसावित्रीपार्वतीभिरादृताः। अरुष्टाः पान्तु भवन्तमिति शेषः। भवद्रिपूंश्च रुष्टाः सन्तो निघ्नन्तु । ३ नखान् लुनातीति तत् नखच्छेदकमित्यर्थः । न खलु नैवेत्यर्थस्तु प्रतीत एव । ४ नतयेति समस्तम्, असमस्तं त्वाभासते । ५ हे देवर ! मयाऽजः-मेषः। वारिवारणः । सेतुः तस्य मस्तके उपरिभागे दृष्टः। ६ अर्को वृक्षविशेषः, तस्य पर्णानि-पत्राणि । ७ जलम् । ८ स्थानम् । ९ वनमार्गेण गच्छन्तौ वन्दारू दृष्ट्वेति शेषः । मयाऽऽलपितं-कथितं, हे विनायौ हरेः कृत्यं दर्शयतां-निरूपयतामित्युक्ताभ्यां ताभ्यां पश्येत्युक्तेन मया दृश्यते, ताभ्यां दर्श्यमानं हरेश्चरितं मया साक्षात् क्रियत इत्यर्थः। १० कोलस्य-वराहस्य, आकृतिरिवाकृतिर्यस्य। अपारे दुस्तरे संसार इति यावत् । अवः—रक्षकः । मायाः-लक्ष्म्या यदुरस्तस्य हंसः जले क्षीरसमुद्रान्तरुदरं-तद्वद् गृहमिति भावः, अस्यास्तीति तथोक्तः । आत्ता गृहीता नानाऽवतारैर्लीला नानाविधानि चरित्राणि येनेति तथोक्तः । वा-निश्चयेन अघं-पापं तदाख्यमसुरं वा लुनातीति तथोक्तः । भुवं-कलयति दन्तोपरि धरतीति भूकलः कंसारातिः वो-युष्मान् अवतु-रक्षतात्। ११ आर्यो राजीव( कमल )लोचनो रामः रघुवंशे कुमारसम्भवं लवादिजन्म दृष्ट्वा प्रसन्नः सन् राक्षसानां कुलस्य मनोलक्षणया तदामोदम् अहरत् । १२ विनायकरिपोर्विघ्नस्य यच्चतुरक्षरं नाम 'अन्तरायः' इति यद्भवेत् । तव द्विट् तत पूर्वार्द्धम् अन्तमित्यर्थः । भजेत् परार्द्ध-रायः । धनानीत्यर्थः, तव सुहृदां सदा सन्तु इति शेषः। १३ सुरारिः रावणस्तद्रिपुः रामः तद्भृत्यो हनुमांस्तस्य तातः पिता पवनः, तस्य वाहनं हरिणः, अन्त्याक्षर ( ण ) विहीनस्य, 'हरि' इति पदवाच्यस्येति यावत्, कान्ता लक्ष्मीः, स्थिरा भवेत् । तव गृह इति शेषः । १४ नागवल्ल्या उत्तमवल्ल्या रिपुर्हिमाद्रिः तस्य कन्या पार्वती सा पार्वती कन्या यस्य ( शिवस्य ) वल्लभा, तस्य हारो भुजगस्तद्रिपुर्गरुडस्तस्स्वामी विष्णुस्तस्येति दिक् । १५ के-जले, लक्षणया-पद्मे तिष्ठतीति केष्ठः, ब्रह्मा, तस्येयं केष्ठा-सावित्रीत्यर्थः, यद्वा-कस्य-जलस्य-ई-लक्ष्मीः, तत्र तद्रूपे कमल इत्यर्थः तिष्ठतीति तस्येयमिति, केष्ठा च मा लक्ष्मीश्च नगजा-गौरी चेति तद्युक्ताः, वार्चः ( हंसः ) च वीश्वरः ( पक्षिराट् ) च, गोर्जायत इति गोजः ( वृषभः ) चेति तैर्गच्छन्तीति यथोक्ताः । वेदाश्चेला ( पृथ्वी ) च स्वर्धुनी ( गङ्गा ) चेत्यासां धराः, न तु ता धरन्तीति ते तथोक्ताः 'कर्मण्यण्' इत्यणापत्तेः । कः ( ब्रह्मा ) चाजो विष्णुश्चेशश्चेति ते, इति दिक् ।

रामेऽतिरामेऽतिरमे रामे[1] मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ४० ॥ बन्धनान्मोचितो येन दैत्यसूनुतनूद्भवः । तमनोऽङ्ककरमहं श्रीशं श्रादृते वरानने[2] ॥ ४१ ॥ अर्जुनान्ते वरारोहे भीमान्ते च वरानने । पाण्डवैः सह योद्धव्यं रक्षणीयो धनञ्जयः[3] ॥ ४२ ॥ चेतनं पुष्करं कोशैः क्षुधाध्मातैः समन्ततः । न घृणीनामरम्याणां विवेकं यान्ति दृष्टयः[4] ॥ ४३ ॥ शब्दस्य तुरीयभागे पव्यान्ते राजवर्जिते । वाजं देयं प्रयत्नेन कविभ्यो वज्रनिर्म्मितम्[5] ॥ ४४ ॥ बृहद्धयसहस्राणि द्वारि तिष्ठन्तु भूपते । पिशङ्गिले सुखं यातां स्थिरा भूयात्पिलिप्पिला[6] ॥ ४५ ॥ यथा नयति कैलासं नगं गानसरस्वती । तथा नयति कैलासं न गङ्गा न सरस्वती[7] ॥ ४६ ॥ मोमारामममादंद्वे हयागदलनंभषः । यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥ ४७ ॥ मा तीराण्डे जनं हीनं[10] गीर्या उदयते रविः । उदिते च दिवानाथे सङ्गमः पुनरावयोः ॥ ४८ ॥ तातेन कथितं पुत्र लेखं लिख ममाज्ञया । न तेन[11] लिखितो लेखः पितुराज्ञा न लोपिता ॥४९॥ वासनावासुदेवस्य वासितं भुवनत्रयम् । सर्वभूतनिवासीनां वासुदेव नमोऽस्तु[12] ते ॥५०॥

---

१ अतिक्रान्ता परित्यक्ता रामा-सीता येन तत्र, तथा मनोरमे रामे-रामचन्द्रे राम एव रा धनं यस्य तादृक् रामैकाश्रित इति भावः । अहम् अति ( अत्यन्तम् ) रमे । यतः-मे-मम, रामनाम । सहस्रनाम-। विष्णुसहस्रनाम, तत्तुल्यं तत्सदृशफलदं तत्र । २ येन दैत्यः-हिरण्याक्षस्तस्य सूनुः कनिष्ठो भ्राता-हिरण्यकशिपुः, तदुद्भवः-प्रह्लादः, बन्धनात्-सङ्कटात्, मोचितस्तम्, अनः-शकटं तस्याङ्कं ( चक्रं ) करे यस्य तम्, श्रश्च रेति तयोः समाहारस्तस्मात्, ऋते- तद्विना, अर्थात् श्रीशब्दाच्छ्रे पृथक्कृते 'ई' 'श्र' शब्दाद्रे पृथक्कृते 'शम्' इति, तथा च-ईशं-महेश्वरमहम्भजे । ३ अर्जुनं-धवलं, लक्षणया दिनं, तस्यान्ते सायमित्यर्थः, तथा-भीमायाः-तथाभूतायाः, रात्रेः अन्तः प्रभातं,तत्र चाधनञ्जयः अग्निः, रक्षणीयः,तदानीं हवनं मया विधेयमित्यर्थः । स्पष्टमन्यत् । कर्णस्य दुर्योधनाद्यन्यतमस्य वा स्वप्रियां प्रतीयमुक्तिः । ४ क्षुधा-(निर्जलतया ) दित्सयेति यावत्, ध्मातैः-कोशैः मेघशरीरैः समन्ततः पुष्करम्-आकाशम्,चेतनं-चेतनमिव । तेषां सञ्चलत्त्वाच्च शब्दायमानत्वाच्चेति भावः । अतएव-दृष्टयः-नेत्राणि ( कर्तृः ) अरम्याणाम्,-अरमणीयानां, मलिनानामिति यावत्, घृणीनां-प्रभाणां, सूर्यप्रकाशस्य पुनः पुनराच्छाद्यमानत्वात्, विवेकं-याथार्थ्येनावमं यान्ति । इदं वर्षर्तोः आरम्भतः प्राक्तनस्य समयस्य वर्णनम् । वर्षर्तोः प्रायोनिवृत्तौ शारदागमनारम्भकालस्येति वा । ५ शब्दस्य-दिवसस्य, तुरीयभागे, सायमित्यर्थः । तथा पव्यस्य-मासस्यान्ते, अमायामित्यर्थः राज्ञा-चन्द्रेण वर्जिते चन्द्रप्रकाशशून्य इत्यर्थः, वज्रेण-घृतेन, निर्मितम्-पूर्णम्, वाजम्-अन्नम् कविभ्यः प्रयत्नेन देयम् । अत्र वाजशब्दस्यान्नवाचित्वं 'वाजो निस्वनपक्षयोः । वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु' इति मेदिन्युक्तितः सिद्धम् । राजशब्दस्य चन्द्रवाचित्वं तु द्विजराजैकदेशबोध्यत्वेन, वज्रशब्दस्य घृतवाचित्वं तु 'वज्रंस्याद्बालके धात्र्यां क्लीबं योगान्तरे पुमान् ।' इति हैमोक्त्या योगान्तरशब्दस्य घृतपरत्वमिति भावः । द्विजराजैकदेशभूतो राजशब्द इति चन्द्रवाची । शब्दशब्दोऽहोवाचीति तु गवेषणीयम् । ६ बृहतां-तुरगाणाम्' द्वयं, तत्सहस्राणि पिशङ्गिले दिवा नक्तं च पिलिप्पिला-लक्ष्मीः । शेषं स्पष्टम् । बृहदादेरश्वादित्वं तु प्रमाणान्तरापेक्षम् । ७ यथा गानसरस्वती-महेश्वरस्तुतिपरकाव्यगानरूपा वाणी । शेषं स्पष्टम् । ८ मो मा-रा-म-म-मा-दं-द्वे ( इत्येतानि अक्षराणि क्रमेण ) ह-या-ग-द-ल-न-भ-ष' इत्यक्षरैरन्तभागे योजितानि 'मोहमायारागनदमलमानदम्भद्वेषाः' इत्यात्मना सम्पद्यन्ते, अत एवह; यस्येत्यादि । स्पष्टम् । ९ हे चक्रवाक । १० हीनामिति त्वशुद्धम्. क्रियाविशेषणत्वेऽपि तथात्वानुपपत्तेः । ११ नतेन नम्रेणेति समस्तम्, असमस्तं त्वाभासत एव । १२ वासन वासयति ( वराहरूपेण पृथिवीमुद्धृत्य जलोपरि च तां निवेश्य )-

आटवी कोटिवीचिश्च गाढवीचिकवाहिनी । तव रक्षतु राजेन्द्र गाढवाचा प्रजापतिः[१] ॥ ९१ ॥
अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः । सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम्[२] ॥ ९२ ॥
मुद्गदाली गदव्याली कवीन्द्र वितुषा कथम् । भक्तवल्लभसंयोगाज्जाता विगतकञ्चुकी[३] ॥ ९३ ॥
प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् । निद्रां सहस्रपर्णानां पलायनपरायणाम्[४] ॥ ९४ ॥
केति[५] ते कबरीभारः सुमनःसङ्गात्[६]प्रियेऽति[७] नीलत्वात् । अवति[८] च कलापवत्त्वो[९]न्निर्जरसे[१०]व्यः[११] कथं न स्यात् ॥ ९५ ॥ यामि विधौ[१२]वभ्युदिते पुनरेष्यामीति यदुदितं भवता । जानात्युदन्त[१३]मेतं नेदं[१४]तत्त्वेन मुग्धवधूः ॥ ९६ ॥ अधुना मधुकरपतिना गिलितोऽप्यपकारदंपती येन । त्रातः स पालयेत्त्वां विगतविकारो विनायको लक्ष्म्याः[१५] ॥ ९७ ॥ उपरिगतं हि सवर्णं हृत्वा करतो ददासि रन्तुं मे । धन्यः सरोजयुगलं त्यक्त्वा स्तनयुगमथास्पृशत्कृ[१६]ष्णः ॥ ९८ ॥ अच्युतभक्ति-

---

-निवासोद्यतानि कारयति, इति तत्सम्बुद्धौ तथोक्त । सर्वाणि भूतानि निवसन्त्यस्मिन्निति तत् भुवनत्रयम् । अव-रक्ष, हे असून् प्राणान् देवयति-चेतयति, इति तत्सम्बुद्धौ तथोक्त, ईनां कामानां ( बहुवचनं प्रभृतिद्योतकमिति ) कामादीनामित्यर्थः, वासितं-वासनाम् ( भावे क्तः ) स्य-जहि ( षो अन्तकर्मणि ) हे वासुदेव ते नमोऽस्तु 'वासना' इत्यत्र 'वासनात्' इति 'निवासीनाम्' इत्यत्र 'निवासोऽसि' इति तु युक्तं पाठान्तरम् । गणेशस्तवनादिपरत्वेन व्याख्यानं त्वस्य वैयात्यमेव, अप्रकृतत्वात् ।

१ हे राजेन्द्र ! अटव्यां गच्छतीति आटवी-वनान्तःसञ्चारिणीत्यर्थः, कोटयः ( अनन्ताः ) वीचयः ( तरङ्गाः ) यत्र सा, अनन्ततरङ्गयुक्ता, गाढा वीचयो यत्र तादृशं यत् कं जलं, तद्वाहिनी, गङ्गेति भावः । च-तथा प्रजापतिः ब्रह्मा । गाढवाचा नितान्तं प्रेमाढ्यया गिरा कृत्वा, तव त्वाम् रक्षतु ! तवेति सम्बन्धसामान्यविवक्षया षष्ठी । २ हे भूपाल ! अत्रिलोचनसम्भूतं यज्ज्योतिः(चन्द्रः)तस्य य उद्गमस्तेन भासन्त इति तैः,कुमुदैरित्यर्थः। स्पष्टमन्यत् । ३ हे कवीन्द्र ! गदव्याली व्याल्युपमया रोगनाशिनीति भावः । मुद्गदाली-द्विधाकृतानि मुद्गान्नानि । वितुषा कथम् । अग्नौ पाचनार्थं निहितायास्तस्यास्तुषाणां पृथक्त्वसम्पत्तिरित्याशयेनोत्तरयति-भक्तस्यान्नस्य एव वल्लभस्य संयोगात् । भक्तः-अनुरक्तो यो वल्लभः प्रियस्तत्संयोगादिति तु प्रतीयत एव । अन्धोवल्लभसंयोगादिति पाठान्तरम् । ४ धाम स्थानम्, आकाशमिति यावत् आप्य आसमन्तात् व्याप्य,अयम् प्रकृष्टम् अनन्तत्वात् यदभ्रं व्योम,तत्र भ्राजते-दीप्यत इति तथोक्तः । विषमाः सप्त, अश्वा यस्येति तथोक्तः, सूर्यः सहस्रं पर्णानि-पत्राणि येषां तेषां महाकमलानाम् । स्पष्टमन्यत् । ५ कः-ब्रह्मा, तद्वदाचरतीति तथोक्तः । ६ सुमनसां देवानां, पुष्पाणां च सङ्गात् । परितस्तेषामुपासकत्वेनावस्थानात्, अलङ्कारत्वेन गुम्फितत्वाच्च । ७ अः विष्णुः, तद्वदाचरति । ८ भवः शम्भुः,तद्वदाचरतीति । ९ कलाः पाति )निधित्वेन रक्षति ) इति कलापः चन्द्रः, सोऽस्यास्ति शेखर इति तत्त्वात् कलापो-भूषणविशेषः, तद्वत्त्वादिति च । १० निर्जरा देवा युवानश्च तैः सेव्यः । ११ दैवे चन्द्रमसि च । १२ वृत्तम्, उद् अन्ते यस्य ( विधाविति-प्रकृतिभूतस्य शब्दस्य) तं च । १३ एतं विधौ इत्यस्य प्रकृतिभूतं शब्दम्, विधुशब्दमिति भावः। १४ न जानाति किं तु-इदन्तत्वेन, इकारान्तत्वेन-'विधौ' इत्यस्य प्रकृतिर्यदि विधीति, तर्हि समयानिश्चयोक्तिः स्यादिति ( एव ) व्यथत इति भावः । १५ न 'धु' यत्र तेन म ( धु ) करपतिना, ग्राहेण गिलितोऽपि, अपगतः पकारो यस्मात ( पदात ) तादृशो दंपती, दन्ती, गजेन्द्र इति भावः । येन ( हरिणा ) त्रातः स विगतो विकारो 'वि' इति शब्दो यस्मात्तादृशः, लक्ष्म्याः ( वि ) नायकः, भगवान् इति भावस्त्वां पालयेत् । १६ कृष्णो राधां प्रत्याह हे प्रिये, उपरिगतं सवर्ण-समानवर्णम । त्वद्वद्रुचिरं सरोजयुगलम् । करतः-करेण, हृत्वा आकृष्य, रन्तुं मे ददासि । तथा-, 'उ' ना-उकारेण परिगतं सवर्ण-सकारं, हृत्वा, पृथक्कृत्य ( अवस्थितं ) सरोजयुगलम्, ( उरोजयुगलम् ) रन्तुं मे ददासि ( इति धिया ), अथ करतः सरोजयुगलं त्यक्त्वा धन्यः कृष्णः स्तनयुगमस्पृशत् ।

वशादिह सममावस्तत्प्रसङ्गेन । सा रमतेरभ्युदयति रतिरिति नैवाद्भुतं किंचित्[1] ॥ ५९ ॥ मञ्जुलवौ संभावितगुणे कचिन्नापदाधारे। अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ[2] ॥ ६० ॥ अयि सखि शस्तः सखिवत्पतिरिति किं त्वं न जानासि । शस्तोऽतिसखिवदुपपतिरित्यालि कथं त्वयाऽपि नाबोधि[3] ॥ ६१ ॥ [4]द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः । तत्पुरुष कर्म्म धारय येनाहं स्यां बहुव्रीहिः ॥ ६२ ॥ त्वद्विरहमसहमाना निन्दति बाला दिवानिशं शम्भुम् । राहुमपि रामचन्द्रं रामानुजमपि पन्नगारातिम्[5] ॥ ६३ ॥ स जयति चित्रचरित्रो यस्य हि वरचरणपुष्करकरेणुः । महिषीमृषिसिंहस्य प्राजीजनदपि वृषोदये हेतुः[6]॥ ६४ ॥ रविसुतकृतगोकर्णः श्रुतिविषयगुणाम्बरोऽवनात्म-

---

१ इह-अस्मिन् जगति अच्युतस्य भक्तिवशात् समभावः-सम ( बुद्धि ) त्वम्, रागद्वेषशून्यत्वमिति यावत् । तस्य-समभावस्य असङ्गेन-सत्त्वेन सारा-श्रेयसी, मतिर्यस्य तादृशस्य( पुंसः ) रतिः सर्वतः शोकमोहादिनिवृत्त्या परमानन्दानुभवः अभ्युदयति, इति किञ्चित् किञ्चिदपि अद्भुतं नैव । यद्वा—हे अच्युतभ ! अच्युता भा-प्रतिभा, यस्मात्तादृश ! प्रतिभोपस्कारक ( व्याकरणाद्यध्यापक ) रमतेः 'रमु क्रीडायाम्' इत्यस्माद्धातोः, क्ति ( प्रत्यय ) वशात् सः-प्रसिद्धः मभावः ( मः-मकारस्याभावः ) भवतीति शेषः । तस्य ( मकाराभावस्य ) प्रसङ्गेन ( प्रसक्तया ) सा-क्तिः, रतिरिति अभ्युदयतीति दिक् । २ अयि ( इदं मधुरालापे ) सखि ! मञ्जुलघौ मञ्जुषु मनोज्ञेषु ( मध्ये ) लघुः-मनोज्ञः, तस्मिन् अतिसुन्दर इत्यर्थः । 'लघुरगुरौ च मनोज्ञे' इति मेदिनी । तथा सम्भाविताः निश्चिताः गुणाः सौन्दर्यादयो धर्माः यस्य तादृशे, तथा-कचित्-कस्मिन्नपि विषये नापदामाधारस्तस्मिन्, तत्र तस्मिन् प्रकृत उपपतौ मम चेतः( अनुरक्तम् ),न तु अनीदृशे उक्ताद्विपरीतगुणे पत्यौ परिणेतरि चेत इति । यद्वा-मञ्जुलः घिः तदाख्या सञ्ज्ञा यत्र तादृशे । (ततश्च ) सम्भावितो निश्चितः गुणो यत्र तादृशे । कचित ( तृतीयैकवचने ) विषये 'ना' इति पदस्य 'आङो ना स्त्रियाम्' इति विधीयमानेत्यस्याधारे, तत्रोपपतौ ( शब्दे ) मम चेतः, नत्वनीदृश एतस्माद्विपरीते पत्यौ पतिशब्द इत्यर्थः । ३ सखिशब्दः पतिशब्दश्च सरूपौ, अतिसखिशब्द उपपतिशब्दश्च सरूपौ स्त इति एकया पत्युः सख्युरिव सम्भावनीयत्वं मन्वानया पतिः ( प्रसङ्गाय ) प्रशंसितः, अपरया तदपेक्षयाऽप्यतिशयितत्वेनोपपतिः सम्भावित इति तत्त्वम् । अक्षरार्थश्च स्पष्टः । 'शस्तः' इत्यत्र परं श्लेषः, प्रशंसित इत्यर्थः, तथा, शस्तः शसः, द्वितीयाविभक्तिबहुवचनात् परम् । सखि ( शब्द ) वत् पति ( शब्दः ) इत्यर्थः । शस् शब्दात् तसि शस्तः । अन्यत्र शस्तः-प्रशस्त इति स्पष्टमेव । ४ द्वन्द्वः स्त्रीपुरुषव्यक्तिद्वयरूपः, द्वौ गावौ यस्येति द्विगुः, अपि अहम् ( अस्मि ) च-तथा, नित्यम्, मद्गेहे, भावः-पदार्थः, अव्ययी व्ययाभाववान् । वर्त्तमानं हि वस्तु कदाचित क्षीयते, नत्ववर्त्तमानमिति तथोक्तम् । तत तस्मात् हे पुरुष ! येन ( कर्मणा ) अहं बहुः व्रीहिर्यस्य तादृशः ( अतिबहुलतया धान्यशाली ) स्याम् (तत्) कर्म्म धारय सम्पादय । ५ त्वद्विरहमसहमाना बाला दिवानिशं निरन्तरम्, ( मन्मथं दग्ध्वाऽपि अहतपराक्रमतयाऽवस्थापितवन्तं ) शम्भुं स्मरारिम्, तथा ( ग्रसित्वाऽपि चन्द्रं पुनर्वमन्तं ) राहुम्, अपि ( रावणपुर्यादि दाहयित्वाऽपि मदनोद्दीपकपवनसञ्चारकं मलयगिरिमदाहितवन्तं ) रामचन्द्रं, ( नष्टमपि पुनः काममुत्पादितवन्तं ) रामस्य ( बलभद्रस्य ) अनुजं ( कृष्णं ) च ( वायुभक्षिणः सर्पान् ( नाशयन्तं ) पन्नगारातिं गरुडं, च निन्दति । ६ यस्य हि परोऽसौ चरणपुष्करकयोः ( पादकमलयोः ) रेणुः ऋषिसिंहस्य मुनिवरस्य गौतमस्य, महिषीम् (शिलाभूतामपि ) प्राजीजनत प्रजातामिव सञ्जीविताम् अकरोत्, अपि स वृषस्य धर्मस्य उदये, हेतुः चित्रविचित्रचरित्रो रामो जयति । यद्वा यस्य गजस्य, वरचरणपुष्करा ( शुण्डा ) करेणुः हस्तिनी, ऋषिनाम्नः सिंहस्य महिषीं ( सिंहीम् ) प्राजीजनत्, वृषस्य ( वृषभस्य ) उदये जन्मनि हेतुरपि, वृषजननी चेत्यर्थः, अत एव चित्रचरित्रः कश्चित् ( हस्ती ) जयतीति तु प्रतीयमानोऽर्थः ।

धरः । नरकशिरा जगदखिलं चिरमव्यादसमरुक्पाणिः ॥ ६५ ॥ सायकसहायबाहो मकरध्वजनियमितक्ष्माऽधिपते । अब्जरुचिरभास्वरस्ते भातितरामवनिप श्लोकः ॥ ६६ ॥ भोग्यरिगातिररिध्रोऽरिं वो हरतान्महासिदयितः । अब्जोदरोजतातो वार्वाहाभः समस्तानाः ॥ ६७ ॥ लम्बोदर तव चरणावादरतो यो न पूजयति । स भवति विश्वामित्रो दुर्वासा गोतमश्चेति ॥ ६८ ॥ अम्बरमम्बुनि पत्रमरातिः पीतमहीनगणस्य ददाह । यस्य वधूस्तनयं गृहमब्जा पातु स वो हरलोचनवह्निः ॥ ६९ ॥ वायुमित्रसुतबन्धुवाहनारातिभूषणशिरोऽवलम्बिनी । तज्जवैरिभगिनीपतेः सखा पातु मां कमललोचनो हरिः ॥ ७० ॥ अतनुज्वरपीडितासि बाले तव सौख्याय मतो ममोपवासः । रसमर्पय वैद्यनाथ नाहं भवदावेदितलङ्घने समर्था ॥ ७१ ॥ अकुबेरपुरीविलोकनं न धरासुतुकरं कदाचन । अथ तत्प्रतिकारहेतवेऽदमयन्तीपतिलोचनं भज ॥ ७२ ॥ रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक् ॥ ७३ ॥ गोगजवाहनभोजनभक्ष्योद्भूतपमित्रसपत्नजशत्रोः । वाहनवैरिकृतासनतुष्टा मामिह पातु जगत्त्रयजुष्टा ॥ ७४ ॥ नदीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः । एषोऽङ्गनावेषधरः प्रमाथी जित्वाव यं नेष्यति चाद्य गा वः ॥ ७५ ॥ श्रुत्वा प्रदग्धं तनयं सुशोका पुनर्निशम्याप्तशरी-

---

१ श्रुतिविषयो गुणो यस्य तद् (आकाशम्) एवाम्बरं वस्त्रं यस्य सः, नग्न इत्यर्थः । न सममिति अवनायात्मनः शरीरस्य धरः । नराणां कं शिरः, तच्छिरः-कपालमस्यास्तीति । न सममिति असमं विषमं, त्रिसङ्ख्याकमिति यावत्, रुक्-तल्लक्ष्यं शूलं त्रिशूलमिति भावः, पाणौ यस्य । २ सायकः बाण एव सहायो यस्य, तादृग्बाहुर्यस्य तत्सम्बुद्धौ, मकरध्वजः सागरः, तेन नियमिता परिवेष्टिता या क्षमा तदधिपते, (सार्वभौम) हे अवनिं पातीति तत्सम्बुद्धौ ते तव श्लोकः यशः, अब्जश्चन्द्रस्तस्य रुचिस्तद्वद्भास्वरो भातितराम् । ३ भोगिनां सर्पाणामरिर्गरुडः, तेन गातिः गमनं यस्य, अरिचक्रं धरतीत्यरिध्रः, महान् असिः खड्गो यस्य, अब्जमुदरे नाभौ यस्य, अजस्य ब्रह्मणस्तातः पिता, वार्वाहो मेघः, तद्वदाभा यस्य, सम्यक् अस्तं क्षिप्तमनः शकटं येन, ई, लक्ष्मीः, तद्दयितः, विष्णुरित्यर्थः, वः युष्माकम्, अरिं, शत्रुम्, हरतात्, विनाशयतु । ४ जगतः शत्रुः । ५ मलिनवस्त्रः । ६ पशुः । ७ स कृष्णो वो युष्मान्पातु यस्याम्बरं पीतम्, यस्य गृहमम्बुनि, यस्य पत्रं वाहनम् अहीनगणस्य अरातिर्गरुडः । यस्य वधूरब्जा कमला यस्य तनयं हरलोचनवह्निर्ददाह । ८ वायुमित्रमग्निस्तत्सुतः षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहनं मूषकस्तदरातिः सर्पस्तद्भूषणः शिवस्तच्छिरोऽवलम्बिनी गङ्गा तज्जो भीष्मस्तद्वैरी शिखण्डी तद्भगिनी द्रौपदी तस्याः पतिरर्जुनस्तत्सखा कृष्णः । ९ अतनुः महान्; कामश्च । १० लङ्घनम्, समीपस्थितिश्च । ११ भेषजम्, पक्षे प्रीतिम् । १२ उपवासे; पक्षे उल्लङ्घने । १३ अनलका. विधवेत्यर्थः । १४ मङ्गलकारकम् । १५ अनललोचनं शिवम् । १६ 'जीविकार्थे चापण्ये' इत्यत्र अपण्ये इत्युक्तत्वाद्धस्तिकां विक्रीणीते इत्यत्रेव रामकं सीतिकां लक्ष्मणकमित्येते प्रयोगा एव साधवः । १७ गवा गच्छतीति गोगः शिवस्तज्जः कार्तिकेयस्तस्य वाहनं मयूरस्तस्य भोजनं भक्ष्यं सर्पस्तस्य भक्ष्यं वायुस्तदुद्भूतो हनूमांस्तं पातीति सः तत्पः सुग्रीवस्तस्य मित्रं रामस्तस्य सपत्नो रावणस्तज्ज इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहनं ऐरावतस्तस्य गजस्य वैरी सिंहस्तत्रोपविष्टा, अत एव सर्वोपरि तुष्टा अम्बिका मां पातु रक्षतु । १८ भो नदीज गङ्गातनय भीष्म, एष दृश्यमानः अङ्गनावेषधरः स्त्रीरूपधारी लङ्केशवनारिकेतुः रावणवनभञ्जको हनूमद्ध्वजः नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्रः । भो भोः कौरवाः अयं प्रमाथी हन्ता अद्य वो युष्मान् जित्वा गाश्च नेष्यतीत्यर्थः ।

रभावम् । पश्यत्सु देवेषु च धावमाना रमा मुदा शङ्करमालिलिङ्ग ॥ ७६ ॥ गोकर्ण[1]राडाभरणं यदीयं यद्गव्यहव्यादजमाददाह । कुं भेनचूडामणिरादिगन्तात्पायादपायादुरगात्मजार्धः ॥ ७७ ॥ विलासिनीं काञ्चनपट्टिकायां पाटीर[2]पङ्कैर्विरही विलिख्य । तस्याः कपोले व्यलिखत्पवर्गं तवर्गमोष्ठे चरणे रवर्गम् ॥ ७८ ॥ काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितुं लिलेख । बाह्वोर्भुजङ्गं हृदि राहुबिम्बं नाभौ च कर्पूरमयं महे[3]शम् ॥ ७९ ॥ नेतुः प्रयाणोन्मुखतां समीक्ष्य नक्षत्रमुक्तावलिमस्य कण्ठे । अधारयत्सा स तु वासराणां संख्यापरोऽभूत्सखि कोऽत्र भा[4]वः ॥ ८० ॥ गौरी[5]क्षणं भूधरजाहिनाथः पत्रं तृतीयं दयितोपवीतम् । यस्याम्बरं द्वादशलोचनाख्यः काष्ठा सुतः पातु सदाशिवो वः ॥ ८१ ॥ पु[6]ष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृजं विलोक्य । नाभीसरोजे नयनं मुरारेर्वामेतरं वारयति स्म चित्रम् ॥ ८२ ॥ मृगत्रयं भाति वपुष्यवेशे फलानि चत्वारि सुमानि पञ्च । कपोलषट्कं प्रमदालतायाः पृच्छन्ति मध्यं विदुषः कवीन्द्राः ॥ ८३ ॥ इन्दीवराक्ष्याः स्फुटविद्रुमोष्ठ्याः संकेतमुद्दिश्य वने चरन्त्याः । चौरैः समस्ताभरणानि हृत्वा नासामणिर्नोऽपहृतः किमेतत् ॥ ८४ ॥ नृसिंहदेवे चलिते भरेण प्रत्यर्थि-

---

१ उः शिवः कुं धरणिमपायान्नाशात्पायाद्रक्षतु । स कः गोकर्णाः सर्पास्तेषां राड् वासुकिः यदीयमाभरणम् । हूयते तद्धव्यम् । गोरिदं गव्यं, गव्यं च तद्धव्यं चेति गव्यहव्यम्, गव्यहव्यमत्तीति गव्यहव्याद् वह्निः यस्य शिवस्य गव्यहव्याद्वह्निरित्यनेन त्र्यम्बकस्य तृतीयनेत्रोत्थवह्निरित्यर्थः । सः अजम् अनङ्गं आददाह, यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्निः मदनं भस्मीचकारेत्यर्थः । किंभूतः । भानाम् ऋक्षाणाम् इनः स्वामी चन्द्रः स एव चूडामणिर्मुकुटरत्नं यस्य सः । अगात्मजा पार्वती अर्धं अर्धं वा यस्य सः । आदिगन्तात् दिगन्तेभ्य आ इति दिशामन्तं मर्यादीकृत्य आदिगन्तं तस्मात् । २ चन्दनद्रवैः । गल्ले पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्यां तव चुम्बनं करिष्यामीति सूचितम् । तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवौष्ठौ खण्डयिष्यामीति सूचितम् । टवर्गस्य मूर्धस्थानत्वाद्यदि त्वं रुष्टासि तर्हि त्वां शिरसा नमामीति सूचितम् । ३ सर्पग्रासभीत्या प्राणाः स्वतो न निर्गमिष्यन्तीत्याशयेन बाह्वोर्भुजङ्गं लिलेख । चन्द्रश्च स्वभागतया श्रुतिसिद्धं मृतानां मनो ग्रहीतुमागच्छेदित्याशयेन हृदि राहुम्, मन्मथत्रासाय शिवं च लिलेखेति भावः । ४ नक्षत्रमालाधारणे नक्षत्रोदयवेलायामागमनं कर्तव्यमिति तया सूच्यते. वासरसंख्याकरणेन सप्तदिनमध्य एव मयाऽऽगम्यत इति तेन सूचितम् । ५ सः सदाशिवो वो युष्मान्पातु. सः कः यस्य गौः वृषभः पत्रं रथः तथा ईक्षणं तृतीयं यस्य. भूधरजा पार्वती दयिता यस्य. अहिनाथः शेषः उपवीतं यस्य. अम्बरं वस्त्रं काष्ठाः दिशो यस्य. द्वादशलोचनाख्यः कुमारः सुतो यस्य इत्यन्वयः. । ६ पुष्पेषोर्मदनस्य माता लक्ष्मीः पुरुषायमाणा पुरुषवदाचरन्ती. विपरीतरतं कुर्वन्तीत्यर्थः । विश्वसृजं भगवन्नाभिसरोजस्थं ब्रह्माणं विलोक्य लज्जावती सती मुरारेर्दक्षिणं नयनं वारयति स्म. यतो भगवन्नेत्रे सूर्यचन्द्रात्मके दक्षिणस्य हि सूर्यात्मकत्वात्तद्वारणेन सरोजं मुकुलितं भवेत्. ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत्. इति मनसि कृत्वा तद्वारयामासेति भावः । ७ उपरि अक्ष्णोः नीलच्छाया. अधस्तात् ओष्ठस्य रक्तवर्णच्छाया. तयोः प्रतिबिम्बितं नासामौक्तिकं गुञ्जाफलमिति मनसि कृत्वा चौरैर्न हृतम् इत्यभिप्रायः । ८ नृसिंहदेवे सेनाभरेण सह यात्रार्थं चलति प्रत्यर्थिभूतैः शत्रुभूपतिभिः सेनाभिः सह पलायमानैर्भरेण साध्वसाधिक्येन कण्ठे कुठारः क्रियते कुठाराघाततुल्या पीडानुभूयते तथाच भरेण सेनासमूहगुरुत्वेन कमठे ठकारः क्रियते भूभरधरः कूर्मावतारोऽङ्गसंमर्दभीत्या पाणिपादमुखमन्तः संकोच्य ठकारतुल्योऽभूत. तथा केवलं मण्डलाकृतिस्तत्स्थौ तथाशेषोऽपि एकस्मिन्नेव भुवः प्रदेशेऽधिकभरेण ढकारतुल्यो वक्रीकृतग्रीवकुण्डलिकोऽभूत. तपने सूर्ये च. चकारः समुच्चयः क्रियते. अतिभीत्या तेषां शत्रूणां शतसूर्यं नभस्तलं पश्यत इत्यर्थः ।

भूतैः क्रियते भरेण । कण्ठे कुठारः कमठे ठकारः शेषे ढकारस्तपने चकारः ॥ ८५ ॥ [1]कुध्रेनसूप्री-नयनाश्रयाशदग्धोन्मदा [2]दर्दुरहर्षकाले । [3]स्वजन्मभक्षप्रियभोजनाशा नृत्यन्ति भीमानुजहृत्कहर्याः॥ ८६ ॥ शिरसि देवनदीं पुरवैरिणः सपदि वीक्ष्य धराधरकन्यका । निबिडमानवती रमणाङ्कके कचन चुम्बन-मारभते स्म सा ॥ ८७ ॥ काचिद्विलोलनयना रमणे स्वकीये दूरं गते सति मनोभवबाणखिन्ना । त्यक्तुं शरीरमचिरान्मलयाद्रिवायुं सौरभ्यशालिनमहो पिबति स्म [6]चित्रम् ॥ ८८ ॥ कान्ता रुचिं मुनिजनस्तरुणोऽवियोगी कामश्च रत्नमणिरुज्ज्वलकङ्कणेन । धत्ते पयोधरयुगे कुचभूषणेन हारे हरे हिमकरे मकरे करे च[7] ॥ ८९ ॥ वि[8]कसति नगनाभ्यां कैरवे पङ्कजं च श्लथयति चरणाम्बु ब्रह्मचर्यं पयोधेः । उरसि लसति यस्य श्रेयसां सम्प्रदायः स फणिनमधिशेते पद्मया पद्मनाभः ॥ ९० ॥ अहिरिपुपतिकान्तातातसम्बद्धकान्ताहरतनयनिहन्ता प्राणदातृध्वजस्य । सखिसुतसुतकान्तातातसम्पूज्यकान्तापितृशिरसि पतन्ती जाह्नवी नः पुनातु ॥ ९१ ॥ उदित-वति परस्मिन्प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽतिप्रपञ्चे । सपदि पदमुदीतं केवलः प्रत्ययो यस्तदियदिति च वक्तुं कः क्षमः पण्डितोऽपि ॥ ९२ ॥ हरिद्रायां राहुप्रखरपिहितेच्छा-परिषदि प्रयुक्तालङ्कृत्यै वियुतगरुतां दुर्गकुरटीम् । वयं सार्कोपेताः प्रहर इति सेनाधिपकृताममात्येभ्यो लेखां प्रतिदिशति सिंहक्षिति[10]पतिः ॥ ९३ ॥ गता सा किं स्थानं पथि सह तया का स्थितवती

---

१ कुं पृथ्वीं धरन्ति ते कुध्राः पर्वतास्तेषामिनः स्वामी हिमाचलस्तस्य सूः पुत्री पार्वती तां प्रीणातीति प्रीर्महादेवस्तस्य नयनस्य आश्रयाशो नेत्रवह्निस्तेन दग्धो यः कामस्तेन उन्मदा उन्मत्ताः । २ दर्दुराणां मण्डूकानां हर्षकालो वर्षाकालस्तस्मिन् । ३ स्वस्माज्जन्म येषां तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति ते स्वजन्मभक्षाः सर्पास्त एव प्रिया भोजनस्य आशा येषां ते ईदृशाः मयूरा इत्यर्थः । ४ अत्र भीमानुजगोजभाज इत्यस्य भीमानुजोऽर्जुनस्तत्सं-ज्ञका ये गोजाः गोः पृथिव्याः जायन्ते ते गोजाः वृक्षास्तत्सेविनः स्फुटितार्जुनवृक्षा ये नाधि-तिष्ठन्त इतियावदित्यर्थः । ५ सविषे गले । ६ मलयस्थचन्दनेष्वनिशं सर्पनिवासात्तच्छ्वाससं-पृक्तस्य वायोः सविषत्वात्तत्पानेन झटिति मे मरणं स्यादिति बुद्ध्या तं पपाविति गूढाशयः । ७ कान्ता हारे रुचिं धत्ते, मुनिजनो हरे रुचिं धत्ते, अवियोगी तरुणो हिमकरे रुचिं धत्ते, कामो मकरे निजचिह्नभूते रुचिं धत्ते, रत्नमणिरुज्ज्वलकङ्कणेन सह करे कुचभूषणेन सह पयोधरयुगे च रुचिं धत्ते । ८ पद्मनाभः पद्मया सह फणिनं शेषमधिशेते । यस्य नयनाभ्यां चन्द्रसूर्यलक्षणाभ्यां कैरवं पङ्कजं च विकसति, यस्य चरणाम्बु गङ्गाजलं पयोधेर्ब्रह्म-चर्यं श्लथयति दूरीकरोति. गङ्गायाः समुद्रपत्नीत्वात्. यस्योरसि श्रेयसां संप्रदायः कौस्तुभमणि-र्लसति. एवंविधः पद्मनाभः फणिनमधिशेते । ९ अहिः सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तातः समुद्रःस सम्यग्बद्धो येन स रामस्तत्कान्ता जानकी तस्या हरो हर्ता रावणस्त-त्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमान्स ध्वजे यस्यैतादृशोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतो मदनस्तत्सुतोऽनिरुद्धस्तत्कान्ता उषा तत्तातो बाणासुरस्तस्य सम्यक्पूज्यः शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जाह्नवी भागीरथीत्यर्थः । १० सिंहक्षितिपतिः सेनाधिपकृतां लेखाम् अमात्येभ्यः प्रधानेभ्यः प्रतिदिशति कथयति इति. लेखां प्रतीति किम. वयं सार्कोपेताः अर्कशब्देन इनः लक्ष्यते सयुक्तः इनः लक्ष्यते सयुक्तः इनः, सेनोपेताः हरिद्रायां निशायां राहुप्रसरपिहितेच्छापरिषदि सत्याम्. राहुशब्देन तमः, पिहितशब्देनाच्छादनम्. इच्छाशब्देन आशा दिशा, परिषच्छब्देन मण्डलम्. प्रयुक्तो योऽलंकारः हारः तस्य कृत्यै प्रहारार्थम्, वियुतगरुताम्, गरुत्पक्ष उच्यते, विका-रयुक्तानां पक्षाणां विपक्षाणाम्. दुर्गकुरटीम्. कुरटीशब्देन नगरी लक्ष्यते ।

नृपेणेत्थं पृष्टा सखि चतुरदूती स्थितवती । विलोक्यालंकारं निजमथ च शाकं नरपतिं निराकाङ्क्षं चक्रे कथय कथमेतत्प्रभवति ॥ ९४ ॥ स्तनान्ते नो हारो रजतगिरिमूले न धनदः सुकेशीनां मध्ये विहरति न कामो नवयुवा । रसान्ते नैवाब्धिर्विबुधनगरीसीम्नि न सुरस्तथाऽन्यस्मिन्पद्ये स्फुटमवतु दैवं किमपि नः ॥ ९५ ॥ काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं सा तन्मूले सभयमलिखद्व्यालमस्योपरिष्टात् । गौरीनाथं पवनतनयं चम्पकं चास्य भावं पृच्छत्यार्यान्प्रति कथमिदं मल्लिनाथः कवीन्द्रः ॥९६॥ सर्वज्ञः सन्वदसि बहुधा दीयते दीयते वै दाधातूनां भवति सदृशं रूपमेषां चतुर्णाम् । द्वौ दानार्थौ भवति च तथा पालने खण्डने वा नो जानीमः कथयति भवान्कस्य धातोः प्रयोगम् ॥ ९७ ॥ चञ्चद्द्वादशनीलनीरजयुतं सप्ताम्बुजोद्भासितं नित्यं षोडशशोणपद्मरुचिरं धात्रानिशं सेवितम् । क्षीराम्भोधिगृहं सहस्रदलसत्पर्यङ्कविश्रान्ति यत्पायाद्वः कमलाङ्गसङ्गिशयनं तन्नीलरोचिर्महः ॥ ९८ ॥ रामं वानरवाहिनीं पुररिपुं राहुं रवेः सारथिं कुम्भीगर्भसमुद्भवं मुररिपुं मारस्य मौर्वीरवम् । तन्वी नूतनपल्लवैर्विरचिते शय्यातले शायिनी सख्या वीजिततालवृन्तपवना बाला मुहुर्निन्दति ॥ ९९ ॥

---

१ कश्चिद्राजा कांचिन्नायिकां स्वगृहमानयन्, ततश्च तद्भर्तारमागतं दृष्ट्वा तां स्वगृहं प्रापयितुं दूतीमाज्ञापयति स्म. सा च दूती तां स्वगृहं प्रापय्य पुना राजनिकटे आगत्य स्थितवती. तां प्रत्याह राजा. सा किं स्वस्थानं गता. गतवत्या तया सह पथि मार्गे का स्थितवती. एवं राज्ञा पृष्टा चतुरा दूती स्थितवती सती निजमलंकारं 'पोहोंची' इति देशीभाषाप्रसिद्धं तथा शाकं 'मेथी' इति हिन्दीभाषाप्रसिद्धं शाकविशेषं चावलोक्य तावन्मात्रेणैव नरपतिं निराकाङ्क्षमुत्तरविषये आकाङ्क्षारहितं चक्रे। एतदलंकारशाकावलोकनं कथं प्रभवति राज्ञो नैराकाङ्क्ष्यसंपादने कथं समर्थं भवतीति कथयेति कविप्रश्नः, अत्र प्रथमप्रश्नस्य प्राप्तेत्यर्थकं 'पोहोची' इति हिन्दीभाषयोत्तरम्, द्वितीयप्रश्नस्य तु अहमासमित्यर्थकं 'मैं थी' इति हिन्दीभाषयोत्तरमिति तात्पर्यं बोध्यम् । २ प्रियनिवासम् । ३ करण्डस्थितपुष्पसौरभं गन्धवाहो हरेदिति तद्भक्षकं सर्पम्, पुष्पबाणो बाणार्थं हरेदिति तद्वैरिणं शिवम्. सूर्यः पुष्पं स्वकरैः शोषयेदिति जन्मकाले एव भक्ष्यबुद्ध्या हर्तुं प्रवृत्तं भयजननाय हनूमन्तम्, तन्मकरन्दं भृङ्गो हरेदिति चम्पकमलिखदिति भावः। चम्पके भृङ्गा न गच्छन्तीति प्रसिद्धेः । ४ त्वं सर्वज्ञः सन् बहुधा वारंवारं दीयते दीयते इति वदसि, दीयते इति रूपं चतुर्णामपि दाधातूनां सदृशं भवति. तन्मध्ये द्वौ दानार्थौ; दाण्दाने डुदाञ् दाने, इति, एकः पालने; देङ् रक्षणे इति, एकः खण्डने, दोऽवखण्डने इति, एतन्मध्ये भवान्कस्य धातोः प्रयोगं कृत्वा वदति तं न जानीमः। ५ तन्नीलरोचिः श्यामप्रभं महस्तेजः कृष्णलक्षणं वो युष्मान्पायात्, तत्किंभूतम्, कमलाङ्गसङ्गिशयनं लक्ष्मीस्तनाथं तल्पम्, पु० किं, क्षीराम्भोधिगृहं सहस्रदलसत्पर्यङ्कविश्रान्ति सहस्रफणदिव्यशयनशेषस्थितम्. पु० किं०, क्षीराम्भोधिगृहं दुग्धसमुद्रनिवासम्। पु० किं०, धात्रा नाभिसरोरुहस्थेन ब्रह्मणा अनिशं सेवितमध्यासितम्. पु० किं०, षोडशशोणपद्मरुचिरं षोडशारुणकमलमनोहरम् । षोडशशोणपद्मानां विवृतिः । विष्णोश्चत्वारो हस्ताः, द्वौ चरणौ. तावन्त एव ब्रह्मणः, द्वौ करौ द्वौ चरणौ लक्ष्म्याः इत्येवं षोडशशोणपद्मरुचिरम्,पु०किं०नित्यविनाशि, पु० किं०, सप्ताम्बुजोद्भासितं सप्तकमलशोभितम्, सप्ताम्बुजानां विवृतिः-चत्वारि मुखानि ब्रह्मणः, एकं नाभिसरोरुहम्, एकं विष्णोर्मुखम्, एकं लक्ष्मीमुखम्, इत्येवं सप्ताम्बुजोद्भासितम्, पु० किं,चञ्चद्द्वादशनीलनीरजयुतं शोभमानद्वादशनीलोत्पलयुतम्, नीरजानां विवृतिः-अष्टौ नयनानि ब्रह्मणः, द्वे विष्णोः, द्वे लक्ष्म्याः, इत्येवं द्वादशनीलनीरजयुतम्। ६ कोकिलरक्षकाकावशेषकत्वाद्रामम्, मलयाद्यवशेषणाद्वानरवाहिनीम्, मन्मथावशेषणात्पुररिपुम् चन्द्रावशेषणाद्राहुम्, रवेः शीघ्रमस्ताद्रिप्रापणेन रात्रिसंपादनादनूरुम्, चन्द्रोत्पादकसमुद्रावशेषणादगस्त्यम्, मन्मथोत्पादनान्मुररिपुं निनिन्देति भावः । कोकिलादीनां कामोद्दीपकत्वं साहित्यशास्त्रे प्रसिद्धम् ।

सत्यासक्तमनाः प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो युक्तानेकमुखोद्भवास्पदमलं श्रीर्यत्र संराजते। योगङ्गां च बिभर्ति यश्च सशिवो यः कामदेहाश्रयः सङ्गः साम्यमयं प्रयातु भवतां कृष्णेन रुद्रेण वा ॥ १०० ॥ येनं ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो यो गंगां च दधेऽन्धककक्षयकरो यो बर्हिपत्रप्रियः। यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥ १०१ ॥ ³यो व्योमाडिनगोऽहरीडुडुपगोयुग्मः कगाध्रोऽपभीर्भीमर्भ्वर्यसुकी रमारतरसो

---

१ अयं भवतां सङ्गः कृष्णेन रुद्रेण वा साम्यं प्रयातु प्राप्नोतु. किं भूतेन कृष्णेन अर्थवशाद्विपरिणामः किंभूतः सत्यासक्तमनाः सत्यभामायामासक्तं मनो यस्यासौ नामैकदेशे नामग्रहणम्। प्रवृद्धो नरकासुरस्तं छिनत्तीति. द्विजानां पक्षिणामिन्द्रो गरुडस्तस्याश्रयः सेव्यः युक्तान्यनेकमुखानि यस्य ब्रह्मणस्तस्य उद्भवो यस्मात्कमलात्तत्। यस्यास्पदम्. अलमत्यर्थं यत्र श्रीर्लक्ष्मी राजते। योऽगं गोवर्धनं गां पृथ्वीं च बिभर्ति. शिवेन सह वर्तमानः 'विष्णोश्च हृदयं शिवः' इति वचनात् यः कामदेहः प्रद्युम्नस्तस्याश्रयः ॥ किंभूतो रुद्रः सत्यामासक्तं चित्तं यस्य 'उमा गौरी सती चण्डी' इत्यभिधानात्। प्रवृद्धं यन्नरस्य ब्रह्मणः कं शिरस्तस्य छेत्ता. द्विजानां ब्राह्मणानामिन्द्रश्चन्द्रस्तस्याश्रयः। अनेकमुखानामुद्भवो यस्य कार्तिकेयस्य तदास्पदम्। श्रीर्यत्र संराजते निधिपतित्वात्, यो गङ्गां बिभर्ति. यः शिवया पार्वत्या सह वर्त्तमानः कामं द्यति खण्डयति एवंविधा या ईहा तस्या आश्रयः ॥ किंभूतः सङ्गः. सत्या सूनृता वाक् तत्र लग्नं मनो यस्य सः प्रवृद्धं यन्नरकं दुःखं तस्य नाशकः द्विजेन्द्रा ब्राह्मणास्तेषामाश्रयः, युक्तानि योग्यानि यानि अनेकसुखानि तेभ्यः उद्भवो यस्या (धर्मवार्तायाः) तस्या आस्पदम्। यत्र श्रीः शोभा राजते। यो गां वाणीं धत्ते कामं ददातीति कामदा ईहा इच्छा तदाश्रयः। २ त्वां सर्वदा स उमाधवोऽव्याद्रक्षतु सः कः येन बलिं जितवानिति बलिजिद्विष्णुस्तस्य कायः शरीरं पुरा त्रिपुरबधकालेऽस्त्रीकृतोऽस्त्रीत्वेन संपादितः। किंभूतेन ध्वस्तो मनोभवो मारो येन ध्वस्तमदनः। पु० स क०. यो गङ्गां दधे। पु० की०. अन्धकनामा दैत्यस्तस्यान्तकरः। पु० की०. यो बर्ही मयूर एव पत्रं रथो यस्य सः स्कन्दः प्रियो यस्य। सः पु० की० स्तुत्यमीड्यं नाम यस्य अमरा इति आहुः, इतीति किम्, हर इति. किंभूतः शशिमच्छिरः, शशी अस्ति यस्मिंस्तच्छशिमत् तादृशं शिरो यस्य सः। हाराश्च वलयानि च हारवलयम्. इष्टाश्च ते भुजङ्गाश्च इष्टभुजङ्गाः ते हारवलयम् यस्य सः। इष्टा वल्लभा भुजङ्गाः सर्पा हारः कण्ठभूषण वलयं कटकं बाहुभूषणमित्यर्थः। यद्वा इष्टानि भुजङ्गाः एव हाराः वलयानि च यस्येति॥ हरिपक्षे-सर्वं ददातीति सर्वदः स माधवो लक्ष्मीस्तस्या धवो भर्त्ता माधवस्त्वामव्यात्। सः कः येन भवेनेत्युत्पन्नमात्रेण धृतविग्रहेणेत्यर्थः, अनोध्वस्तं शकटाकार्ति दनुजं हतवानित्यर्थः। अथवा अभवेनेति घोरसंसारसागरे प्राक्तनकर्मानुसारेण न विद्यते भवो जन्म यस्य सः तेन कृष्णलीलामृतविग्रह इति। पु० स कः, येनामृतविभागार्थं रुद्रमोक्षार्थं वा बलिजिच्चासौ कायश्चेति पुरा स्त्रीकृतः स्त्रीभावं प्रापितः, पु०की०यः अगं गोवर्धनम् गां पृथ्वीं च दधे। पु०की०यः अन्धे अगाधे के जले क्षयं गृहं करोतीति। विष्णुस्तु जलाशयीति। पु०की०बर्हिणो मयूरस्य पत्राणि बर्हाणि पिच्छानि प्रियाणि वल्लभानि यस्य सः। पु० की० अमरा यस्य इति स्तुत्यं नाम आहुः। इतीति किम्, शशिमच्छिरोहर इति शशिनं चन्द्रं मथ्नातीति शशिमद्राहुः तस्य शिरः तस्य हरतीति सः। तथा इष्टः भुजङ्गहा गरुडो यस्य सः। तथा अरं सुदर्शनं वलयं यस्य सः। तथा रवे परब्रह्मणि लयो यस्य सः। रवलयः इति। ३ कं जलं ददतीति कदास्तेषां भा इव भा यस्य सः श्रीकृष्णो वो युष्मान्पायाद्रक्षतु. सः कः. यः व्योमाडिनगः व्योमाटां पक्षिणां इनो गरुडस्तेन गच्छतीति सः। तथा अह्नाम् ईट् अहरीट् सूर्यः उडुपश्चन्द्रस्तौ गोयुग्मं नेत्रद्वयं यस्य सः। तथा कुः पृथ्वी अगाः गिरयः तान्धरतीति तथा। अपगता भीर्भयं यस्मात्सः ॥ पु० क० भीमर्भ्वर्यसुकी ऋभूणां देवानाम् अरयः ऋभ्वरयः भीमाश्च ते ऋभ्वरयश्च भीमर्भ्वरयः भीमर्भ्वरीणां असून्-

नाम्यब्रुडासीनकः । द्योसचम्ववनम्यपत्सलिलजो वार्धिस्वपोऽष्टार्धदोरायो गदसि वाडवादमुतपा पायात्स वः कन्दमाः ॥ १०२ ॥ लक्ष्मीवन्कृतकूरसू रणदहिन्दूधक्क्षमः पापडीलाइल्यूढोऽकलघी वडांछन वडी खाजाम्बुदालीरुचिः । मल्लाशाकरखण्डनो विविभुना क्षीरावसातुल्य मां सासु हालितडिन्निभाङ्गवसनोऽव्याः सेवकं सारवान् ॥ १०३ ॥ खोटीच्छाशिपलेहपापडवडीर्ष्यारोडभाजी गणो यद्भक्तोऽनिमिषीव वाकुलचणा ध्यायन्ति यां योगिनः । कालाभीलकरालभूखलमहादैत्येन्द्रमाथार्थिनी सा सासूयरसा तवाघतटये स्तात्कर्णमोटी चिरम् ॥ १०४ ॥ सूदारा

---

-प्राणान् किरतीति सः । ऋभवः अरयः तेषामरयो दैत्या भीमाश्च ते ऋभ्वरयश्च भीमभ्वयश्च तेषामसून् किरति कलेवराद्वियोजयतीति । तथा रमा लक्ष्मीः तस्या रते क्रीडायां रस आसक्तिर्यस्य सः । अप्सु रोहति अब्रुट् कमलं नाभावब्रुटि आसीनः कः ब्रह्मा यस्येति । तथा पु० क० द्योसदां देवानां चम्वा संघेन अवनम्यं पत्सलिलजं चरणकमलं यस्य । वार्धौ स्वपितीति तथा । अष्टार्धं चत्वारो दोषा बाहवो यस्य । आद्यः अनादिरित्यर्थः । गदी गदाधरः । असिं खड्गं वहति । मोक्षं ददाति । १ हे लक्ष्मीवन् त्वं सेवकम् । अव्याः रक्ष । कथंभूतस्त्वम्. कृतकूः कृतं कोः पृथिव्याः ऊः अवनं रक्षणं येनासौ । पु० क०. असूः । सूयते उत्पद्यते असौ सूः न सूः असूः अज इत्यर्थः, पु० क० रणदहिन् रणं संग्रामं ददति ते. रणदाः शत्रवस्तान्हिनस्ति असौ शत्रुहा इत्यर्थः । पु० क० दूधक्. दुवं दुःखं दहतीति दूधक्. पु० क० क्षमः क्षमा अस्यातीति सः । पु० क० पापडी. डलयोरभेदात् पापली पापं लुनातीति सः । पु. क०. इलाट् इलायां पृथिव्यां अटतीति इलाट् । पुरा वामनादिरूपेण बलेः सकाशं प्राप्तः, उक्तं च—'बहवो मां न जानन्ति मम मायाविमोहिताः । सदाहं द्विजरूपेण विचरामि महीतले ॥' इति भारतवचनात् । पु० क० विभुना ऊढः वीनां पक्षिणां विभुर्गरुडस्तेन ऊढः वाह्यमान इत्यर्थः । पु० क० अकलघी. अकं दुःखं लङ्घयतीति-अकलघी । पु० क० अवलाञ्छनम्, अवगतं लाञ्छनं यस्य सः अवलाञ्छनस्तस्य सम्बुद्धौ हे अवलाञ्छन. अवाप्योरुपसर्गयोरित्यकारलोपः । पु० क० वडी. बवयोः डलयोश्च सावर्ण्यात् बली. बलमस्यास्तीति सः । पु० क० खाजाम्बुदालीरुचिः । खे आकाशे अजन्ति गच्छन्ति ते खाजाः गगनचराः । ते च ते अम्बुदाश्च तेषामालिः पङ्क्तिस्तस्या रुचिरिव रुचिर्यस्यासौ घनश्याम इत्यर्थः । पु० क०. मल्लाशाकरखण्डनः मल्लाश्चाणूरादयस्तेषामाशा वाञ्छा तस्या आकरः समूहः, तं खण्डयतीति सः । मल्लेच्छासमूहनाशने क्षम इत्यर्थः । अत्रापि डलयोः सावर्ण्यमूह्यम् । पु०क० क्षीरावसः क्षीरे क्षीरसमुद्रे आसमन्ताद्भावेन वसतीति तस्य संबुद्धौ हे क्षीरावस । हे अतुल्य नास्ति तुल्यो यस्य सः तस्य संबोधने । कीदृशं माम् । सासुम् । असवः प्राणास्तैः सह वर्तमानम् । पु० क० अलितडिन्निभाङ्गवसनः । अङ्गं च वसनं च अङ्गवसने । अलिश्च तडिच्च अलितडितौ तयोर्निभेव निभा ययोस्ते । अलितडिन्निभे अङ्गवसने यस्यासौ अलितडिन्निभाङ्गवसनः । पु० क० सारवान् सारो बलमस्यास्तीति सः । पालनसमर्थ इत्यर्थः । २ सा कर्णमोटी चामुण्डा तवाघतटये अघहरणाय स्तात् अस्तु. कथंभूता । सा सासूयरसा. असूया कोपस्तस्य रसः । तेन सह वर्तमाना । कथंभूता सा कालाः कृष्णवर्णाः भीलाः भीषणाः तेभ्योऽपि करालाः । अतिरौद्रा इत्यर्थः । भुवि खलाः भूखला दुर्जनाः ते च ते महादैत्याश्च तेषां माथो मथनं तमर्थयतीति एवंविधा तथा वाकुलचणाः कुलख्याताः योगिनः ध्यायन्ति तथा । यद्भक्तो गणः यस्याः सेवको गणः यत्प्रसादेनानिमिषीव देवराज इव । वर्तते इति वाक्यशेषः । तमेव विशिनष्टि । खे वियत्यटतीति खाटी । इच्छया अश्नातीति इच्छाशी । पले आमिषे ईहा स्पृहा यस्येति पलेहः । तथा डलयोरैक्यात् पापं लुनातीति पापडः । बवयोस्तथैक्यात् बलमस्यास्तीति बली । तथा ईर्ष्यया रोलं लोलं भजते इति । स चासौ इति कर्मधारयः ।

उलपाडिमेखलतटी कच्छोटजा बिभ्रती पूता रेभरलीननीलजसभा नागीव पातालगाः। खाधोऽसावज-कालियारिहरिणव्याधैः समं पीडितामामोघोऽघरवाघवारणपदं मन्दाकिनी वः क्रियात् ॥१०५॥ जायन्ते नव सौ तथामि च नव भ्याम्भिस्भ्यसां संगमे षट्संख्यानि षडेव सुप्यथ शसि त्रीण्येव तद्वज्जसि। चत्वार्यन्यवचःसु यस्य विबुधाः शब्दस्य रूपाणि तज्जानन्ते यदि शक्तिरस्ति गदितुं षाण्मासिकोऽत्रावधिः ॥ १०६ ॥ मुद्गीदालिसुशालितूअरतणीगावं सुदुग्धं घृतं नीकादूहपलेहपापडवडी कोरीवघारीमडा। मूलाकोठकुठीवडा च कपिटाटीटीदुराचीमडा आदासूरणरायताद्यदिवडा कुर्वन्तु वो मङ्गलम् ॥१०७॥ वाश्चारेड्ध्वजधग्धृतोड्वधिपतिः कुध्रेड्जजानिर्गणेङ्गोराडारुडुरःसरेडुरुतरग्रैवेयकभ्राडरम्। उड्वीड्रुड्नरकास्थिधृक्त्रिदृगिभेडार्द्राजिनाच्छच्छविः स स्तादम्बुमदम्बुदालिगलरुग्देवो मुदे वो मृडः ॥१०८॥

## क्रियागोपनम्।

*आगताः पाण्डवाः सर्वे दुर्योधनसमीहया। तस्मै गां च सुवर्णं च रत्नानि विविधानि च ॥ १ ॥ निरुद्यमानवद्याङ्ग्याचकान्दुःखसंचयान्। अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ २ ॥ प्रातः प्रातः समुत्थाय द्वौ मुनी च कमण्डलू। अत्र क्रियापदं वक्तुमवधिर्ब्रह्मणो वयः ॥ ३ ॥ ललाटतिलकोपेतः कृष्णः कमललोचनः। गोकुलेऽत्र क्रियां वक्तुं मर्यादा दशवार्षिकी ॥ ४ ॥ पम्पासरसि रामेण सस्नेह सविलासया। सीतया किं कृतं सार्धमत्रैवोत्तरमीक्ष्यताम् ॥ ५ ॥ राजन्नवघनश्याम निस्त्रिंशाकर्ष

---

* १ यः धनेच्छमीहया धनेच्छया आगतस्तस्मै सर्वे पाण्डवाः गां च सुवर्णं च विविधानि रत्नानि च 'अदुः' ददति स्म। २ (?) ३ 'प्रातः' इति क्रिया। प्रा पूरणे। लट्। प्रथमपुरुषद्विवचनम्। ४ 'ललाट' इति। लट् बाल्ये लिट्। ५ 'सस्ने' इति। ष्णा शौचे कर्मणि लिट्।-

---

१ उलपानि हरिततृणानि येषामालिः पङ्क्तिः सैव मेखला काञ्ची यस्यास्तद्विधा तटी भृगुर्यस्याः सा। तथा कच्छे जलप्राये देशे उटजानि पर्णकुटी। बिभ्रती बिभ्राणा तथा पूता पावना। तथा रेभः शब्दः तं राति अङ्गीकरोति इति रेभराः सशब्दाः। मुखरा इत्यर्थः। तथा लीनानां एकान्तगतानां नीरजानां पङ्क्तिरथानाम्। हंसचक्रवाककलहंसादीनामित्यर्थः। सभा परिषत् यस्याः सा। तथा खाधः अम्बरादधः नागीव पातालगा भोगवती इत्यर्थः। तथाजो ब्रह्मा कालियारिः हरिणव्याधो रुद्रः तैः समं सहैव। युगपदित्यर्थः। पीडितावगाहितेत्यर्थः। तथा मा मीयते इति मा तद्विरुद्धा इयत्ताशून्या इत्यर्थः। अमोघो नेतॄणां मोक्षप्रदः ओघरवो स्रोतोध्वनिर्यस्याः सा तथा एवंगुणविशिष्टा मन्दाकिनी सूदारा सुतरां उदारा वो युष्माकम्। अघवारणपदं अघवारणस्य पदम् अवस्थितिं क्रियात् करोतु। यद्वा वो युष्मान् अघवारणपदं अघवारणसमर्थानित्यर्थः। २ गवाक्षशब्दस्येत्यर्थः। ३ वाःषु चरन्ति तेषां ईट् स्वामी मकरः स ध्वजो यस्य तं कामं दहतीति वाश्चारेड्ध्वजधक्। धृत उडूनां नक्षत्राणामधिपतिर्येन। कुं पृथ्वीं धरन्ति तेषामीट् हिमालयस्तस्माज्जाता पार्वती सा जाया यस्य सः कुध्रेड्जजानिः। गणानां प्रमथानामीशः। गवां राजा नन्दी तमारोहतीति आरुट्। उरसा सरन्ति ते भुजंगास्तेषामीट् स एवोरुतरं ग्रैवेयकं कण्ठभूषणं तेन अरमत्यन्तं भ्राजते तथा। उडूनामीशस्य रुट् यस्य सः। नरकपालास्थिधारकः। त्रिनेत्रः। इभानां हस्तिनामीट् तस्यार्द्राजिनं तेनाच्छा छविर्यस्य सः मृडः देवः वः मुदे स्तात्, आशिषि 'अस् भुवि' इत्यस्य लोटो रूपम्। अम्बु विद्यते येषां ते अम्बुमन्तः एतादृशा अम्बुदा मेघास्तेषामालिर्माला सेव कण्ठच्छविर्यस्य एतादृशः।

दुर्जय । आकल्पं वसुधामेतां विद्विषोद्य रणे बहून् ॥ ६ ॥ कान्तया कान्तसंयोगे किमकारि नवोढया । अत्रापि चोत्तरं वक्तुमवधिर्ब्रह्मणो वयः ॥ ७ ॥ दामोदराय पुण्यात्मन्पुष्पमूलफलान्यपि । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ८ ॥ विराटनगरे राजन्कीचकादुपकीचकम् । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ९ ॥ कान्तं विना नदीतीरं मदमालोक्य केकिनी । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १० ॥ अम्लानपङ्कजा माला कण्ठे रामस्य सीतया । मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेपि क्रियापदे ॥ ११ ॥ नारसिंहाकृतिं वीक्ष्य वने मत्तमतंगजः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १२ ॥ संध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १३ ॥ पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः । सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ १४ ॥ बिम्बाकारं सुधाधारं कान्तावदनपङ्कजम् । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १५ ॥ राघवस्य शरैर्घोरैर्घोररावणमाहवे । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १६ ॥ पामारागाभिभूतस्य श्लेष्मव्याधिनिपीडित । यदि ते जीवितस्येच्छा तदा भोः शीतलं जलम् ॥ १७ ॥

## कर्तृपदगोपनम् ।

गौरीनखरसादृश्यश्रद्धया शशिनं दधौ । इहैव गोप्यते कर्ता वर्षेणापि न लभ्यते ॥ १ ॥ अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च । ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ २ ॥ राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ ३ ॥ श्यामौ तव स्तनावेतौ पिबन्ति सततं मुदा । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ ४ ॥ व्ययवासाः पञ्चशिरा यरिवींनारिभूषणः । असिरोमा क्रियादुर्वः शङ्कालायनवीक्षणः ॥ ५ ॥ व्यामोहं तव भिन्दन्तु छिन्दन्तु दुरितानि च । कर्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः ॥ ६ ॥ न करोति नाम रोषं न वदति परुषं न हन्त्ययं शत्रून् । रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य ॥ ७ ॥ शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम् । यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ ८ ॥

---

—६ 'अव' इति अव रक्षणे 'द्य' इति च दो अवखण्डने लोट् । ७ 'अत्रापि' इति त्रपूष् लज्जायाम् । कर्मणि लुङ् । ८ हे दामोदर पुष्पमूलफलानि 'आय' आनय । 'इटकिटकटी' इत्यत्र प्रश्लिष्टस्य ईधातोराङ्पूर्वस्य लोटो रूपमिदम् । उपसर्गसमभिव्याहारेण आनयनार्थकत्वम् । ९ विः पक्षी कीचकाद्वेणोः कीचकान्तरम् 'आट' बभ्राम । १० केकिनी मयूरी । इरंमदं मेघज्योतिः । विद्युतमिति यावत् । आलोक्य 'विनानदीति' विशेषेण पुनः पुनर्वा शब्दं करोतीत्यर्थः । ११ 'प्रत्यक्षेपि' क्षिप्ता । १२ गजः सिंहस्याकृतिं वीक्ष्य 'नार' न जगाम । ऋ गतौ । कर्तरि लिट् । १३ हे द्विजोत्तम 'ए' आगच्छ । १४ 'अधुः' दधति स्म । १५ पूर्वोक्तं कान्तावदनं 'दश' चुम्बस्वेति १६ हे राघव त्वं रावणं आहवे शरैः कृत्वा 'स्य' मारय इति । १७ भो श्लेष्मव्याधिनिपीडित यदि जीवितस्येच्छा तर्हि शीतलं जलं मा पाः । मा पिबेति ।

१ इः कामस्तं हन्तीति 'इहा' ईश्वर इति । २ हे ब्राह्मण 'इभ्यः' समृद्धः । ३ राक्षसानाम् 'इभ्यः' स्वामी रावणः जनकस्य सुतां सीतां हृत्वा पुरीं लङ्कां ययौ । ४ 'श्यामौतवः' कृष्णमार्जाराः । ५ 'उः' महादेवः । ६ उः शिवः इः ब्रह्मा अः विष्णुः इत्यनेन 'व्यः' इति जातम्, तस्य बहुवचने 'व्याः' हरविधिहरयः तव मोहं भिन्दन्तु दुरितानि छिन्दन्तु । ये कर्तृज्ञास्ते विचक्षणाः । ७ अयं पुरुषो रोषं न करोति, परुषं कठोरं न वदति । शत्रून्न हन्ति नामेति प्रसिद्धम् । तथापि अस्य वीरस्य 'धीः' अखिलां महीं रञ्जयति । ८ यैरनिशं सुकृतं कृतं तेषामेव 'मनः' शरदिन्दुकुन्दधवलं नगपतिनिलयं देवं हरं प्रसादयति ।

## कर्म्मपदगोपनम् ।

शीकरासारसंवाहिसरोजवनमारुतः । प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ १ ॥ सुभग तवाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः । शमयति कुर्वन्दिवसः पुण्यवतः कस्य रमणीयः ॥ २ ॥ एहि हैरमणि पश्य कौतुकं धूलिधूसरतनुं दिगम्बरम् । सापि तद्वदनपङ्कजं पपौ भ्रातरुक्तमपि किं न बुध्यते ॥ ३ ॥

## करणपदगोपनम् ।

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी । दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे ॥ १ ॥ अहं महानसायातः कल्पितो नरकस्तव । मया मांसादिकं भुक्तं भीमं जानीहि मां बक ॥ २ ॥

## सम्प्रदानगोपनम् ।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी । ददाति भक्तिसम्पन्ना पुत्रसौभाग्यकाम्यया ॥ १ ॥ प्रशस्त्यायुक्तमार्गस्य तव संमानितां श्रिताः । स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥ २ ॥

## अपादानगोपनम् ।

शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः । बिभेत्यश्रान्तमलिनो वनेऽपि कुसुमाकुलैः ॥ १ ॥ सरसी-तोयमुद्धृत्य जनः कंदर्पकारकम् । पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ २ ॥

## संबन्धगोपनम् ।

तूणेव मधुवासेऽस्मिन्सहकारद्रुमञ्जरी । इयमुन्निद्रमुकुलैर्भाति न्यस्तशिलीमुखा ॥ १ ॥ भानुर्वै जायते लक्ष्म्या सरस्वत्याथवा मता । अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी ॥ २ ॥ प्राप्तमदो मधुमासः प्रबला रुक्प्रियतमोऽपि दूरस्थः । असतीं संनिहितेयं संहतशीला सखी नियतम् ॥ ३ ॥

## अधिकरणगोपनम् ।

या कटाक्षच्छटापातैः पवित्रयति मानवम् । एकान्ते रोपितप्रीतिरस्ति सा कमलालया ॥ १ ॥ विपद्यमानता सिद्धा सर्वस्यैव निरूष्मणः । यथात्र भस्म पद्भ्यां च निर्वाणं हन्त्ययं जनः ॥ २ ॥

## सम्बोधनपदगोपनम् ।

कमले कमले नित्यं मधूनि पिबतस्तव । भविष्यति न संदेहः कष्टं दोषाकरोदये ॥ १ ॥ सर्वज्ञेन त्वया किंचिन्नास्त्यविज्ञातमीदृशम् । मिथ्यावचस्तथा च त्वमसत्यं वेत्सि न कचित् ॥ २ ॥ पिबतस्ते

---

१ पान्थस्त्रीनिःश्वासैर्मांसलः पुष्ट इवेत्युत्प्रेक्षा । शीकरासारसंवाहि जवनो मारुतो वेगवान्वायुः 'सरः' प्रक्षोभयति । २ दिवसः 'शं' सुखं कुर्वन् अयति गच्छति । ३ हे रमणि एहि कौ पृथिव्यां 'तुकं' बालकं धूलिधूसरतनुं दिगम्बरं पश्य । १ दुष्टं वाः जलं दुर्वाः तेन 'दुर्वारा' कलुषितजलेन । २ महच्च तत् अनः शकटं च महानः तेन 'महानसा' महता शकटेन आयातः आगतः नरको मृत्युः । १ अम्भोरुहमये इत्यत्र 'अये' इः कामः तस्मै. २ प्रशस्त्यायुक्तमार्गस्य इत्यत्र 'प्रशस्त्यै' कल्याणाय उक्तमार्गस्य । १ 'अलिनः' भ्रमरात् । २ 'सरसीतः' सरोवरात्. कं जलम् । १ उन्निद्रमुकुला 'एः' इति भिन्ने पदे क्रियेते । इः कामस्तस्य एः । २ भा कान्तिः 'नुः' नरस्य । ३ 'माधः' चन्द्रस्य अदो मधु मद्यं प्राप्तम् । १ 'ए' कृष्णे 'कान्ते' भर्तरि. । २ विपद्यमानता इत्यत्र 'विपदि' कष्टे निर्गतः ऊष्मा द्रव्यरूपो यस्मात्तस्य निरूष्मणः । अमानता आदराभावः । शान्तमूष्मरहितमित्यर्थः । १ कमले इत्यत्र 'कम् अले' इति पदच्छेदः । हे 'अले' कं सुखं यथा स्यात्तथा पिबतस्तव । २ सर्वं जानातीति सर्वज्ञस्तस्य इनः स्वामी तत्संबोधनं हे सर्वज्ञेन पण्डितश्रेष्ठ ।-

शरावेण वारि कह्लारशीतलम् । केनेमौ दुर्विदग्धेन हृदये संनिरोपितौ ॥ ३ ॥ वटवृक्षो महानेष मार्गमावृत्य तिष्ठति । तावत्त्वया न गन्तव्यं यावन्नान्यत्र गच्छति ॥ ४ ॥

## कर्तृक्रियापदयोर्गोपनम् ।

घनघनाघनकान्तिघनोऽघनुद्दनुजपुञ्जमिनात्रिजगुर्विगः । सकमलोऽपिनदर्धसमां क्रियामिह विलोकयितुं च सकर्तृकाम् ॥ १ ॥

## कर्तृकर्मक्रियापदगोपनम् ।

भवानिशङ्करोमेशं प्रति पूजापरायणः । कर्तृकर्मक्रियागुप्तं यो जानाति स पण्डितः ॥ १ ॥ वीरमत्यद्भुतं लोके किमहं वच्म्यतः परम् । कर्तृकर्मक्रियागुप्तं मर्यादा ब्रह्मणो वयः ॥ २ ॥

## संहितागोपनम् ।

न मया गोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि । अस्थानरुदितैरेतैरलमालोहितेक्षणे ॥ १ ॥

## समासगोपनम् ।

विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति । रुष्टेनापि त्वया वीर शम्भुनारिः समः कृतः ॥ १ ॥
नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः । मण्डलाग्रे गदाशङ्ख चक्रं जयति बिभ्रती ॥ २ ॥

## लिङ्गगोपनम् ।

नितान्तस्वच्छहृदयं सखि प्रेयान्समागतः । त्वां चिराद्दर्शनप्रीत्या यः समालिङ्गय रंस्यते ॥ १ ॥
कलिकालमियं यावदगस्त्यस्य मुनेरपि । मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ २ ॥

## सुब्वचनगोपनम् ।

प्रमोदं जनयत्येव सदारा गृहमेधिनः । यदि धर्मश्च कामश्च भवेतां संगताविमौ ॥ १ ॥

## तिङ्वचनगोपनम् ।

कस्मात्त्वं दुर्बलासीति सख्यस्तां परिपृच्छति । त्वयि संनिहिते तासु दद्यात्कथय सोत्तरम् ॥ १ ॥

---

-३ हे 'मृग' मृग कह्लारशीतलं वारि उदकं पिबतः ते हृदये केन दुर्विदग्धेन इमौ शरौ बाणौ संनिरोपितौ इत्यन्वयः. । ४ बवयोरैक्यात् हे 'वटो' ब्राह्मण । ऋक्षः भल्लूकः. । आवृत्य रुद्ध्वा । १ घनः सान्द्रः स चासौ घनः पर्जन्यश्च तस्य कान्तिस्तद्वत् घनः सुन्दरः घनवत्सुन्दर इत्यर्थः । तथा अघनुत् अघहन्ता इनः सूर्यः अत्रिजश्चन्द्रः तावेव गावौ नेत्रयुग्मे यस्य सः । तथा विना गरुडेन गच्छति 'विगः' कमलया लक्ष्म्या सह वर्तते इति । अतः विष्णुः रामावतारे कृष्णावतारे च दनुजपुञ्जं दैत्यनिचयम् 'अपिनट्' चूर्णितवान् । अत्र श्लोके सकर्तृकां कर्त्रा सह वर्तमानां क्रियां क्रियापदं विलोकयितुम्, अर्धसमाम् अर्धवर्षं। ददामीति श्लोककर्ता प्रतिज्ञां करोति । १ हे 'कर' 'उमेशं' प्रति अनिशं पूजापरायणो 'भव' । २ (?) न निषेधः मे मम आगोरसाभिज्ञमिति पदच्छेदः । मे चेतः आगोरसाभिज्ञम् । अपराधरसाभिज्ञं नेत्यर्थः । १ विषादी खिन्नः. पक्षे विषं कालकूटमत्तीति सः विषादी । तत्पुरुषसमासः । सदा सर्वदा रोगं व्याधिं न मुञ्चति । पक्षे दारैः सह वर्तमानः सदारः सस्त्रीकः अगं शैलं न मुञ्चति । तत्पुरुषसमासः । २ नित्यं देवैः आराधिता, पक्षे नित्यं मा लक्ष्मीर्यस्यां सा नित्यमा देवैः राधिता । बहुव्रीहिसमासः. । १ अयं नितान्तमतिशयेन स्वच्छं निर्मलं हृत् हृदयं यस्य सः नितान्तस्वच्छहृत् प्रेयान् समागतः पुंलिङ्गनिर्देशः । २ इयम्, अगस्त्यस्य वृक्षस्य कलिका अलमत्यन्तं मुनेर्मनः खण्डयति । स्त्रीलिङ्गनिर्देशः. । १ सदाराः, इत्यत्र 'राः' इति प्रथमैकवचनं सुबन्तम् । गृहमेधिनः, इति षष्ठी । १ अतिशयेन पृच्छन्तीति परिपृच्छति । इति यङ्लुगन्ते अन्ति परतो रूपमस्ति । इदमेव रूपमेकवचनं ज्ञायते नतु बहुवचनेनेति तिङ्वचनगोपनम् ।

## मात्रावैपरीत्यनिदर्शनम्।

+ महाशयमतिस्वच्छं नीरं संतापशान्तये। खलवासादतिश्रान्ताः समाश्रयत हे जनाः॥ १ ॥ तुषारधवलः स्फूर्जन्महामणिधरोऽनघ। नागराजो जयत्येकः पृथिवीधरणक्षमः॥ २ ॥

## बिन्दुवैपरीत्यनिदर्शनम्।

सुश्यामा चन्दनवती कान्ता तिलकभूषिता। कस्यैषानङ्गभूः प्रीतिं भुजंगस्य करोति न॥ १ ॥ यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितिः। तथा सर्वाश्रयः सत्यमयं मे बकुलद्रुमः॥ २ ॥

## विसर्गवैपरीत्यनिदर्शनम्।

महीरुहो विहङ्गानामेते हृद्यैः कलापिनाम्। विरुतैः स्वागतानीव नीरवाहाय कुर्वते॥ १ ॥ अगस्त्यस्य मुनेः शापाद्ब्रह्मस्यन्दनमास्थितः। महासुः खात्परिभ्रष्टो नहुषः सर्पतां गतः॥ २ ॥

## अक्षरवैपरीत्यनिदर्शनम्।

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन्। विरसः कुपरीवारो नदीनः केन सेव्यते॥ १ ॥ सुशीलः स्वर्णगौराङ्गः पूर्णचन्द्रनिभाननः। सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः॥ २ ॥

## स्थानवैपरीत्यनिदर्शनम्।

तनोतु ते यस्य फणी गरुत्मान्पाणौ मुरारिर्दयिता च शय्या। नाभौ स्फुरन्भद्रमशुभ्रदेहः पद्मा गतिश्चक्रमसौ विधाता॥ १ ॥ हरः क्षयी तापकरः सुदेशः शान्तो हरिर्गोत्ररिपुर्विवस्वान्। चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य लक्ष्म्या वृतः पातु विधिर्जगन्ति॥ २ ॥

---

+ १ एकस्मिन्नर्थे 'नीरं' जलम्। द्वितीयेऽर्थे नीरशब्दस्य ईकारस्थाने अकारः क्रियते। तदा 'नरं' पुरुषम्, इत्यवशिष्यते। २ एकस्मिन्नर्थे 'नागराजः' शेषः। द्वितीयेऽर्थे नागराज इत्यस्य आकारस्थाने अकारः क्रियते तदा नगराजः हिमाचलः इति स्यात्। १ एकस्मिन्नर्थे 'अनङ्गभूः' कामस्य स्थानम्, ईदृशी स्त्री। द्वितीयेऽर्थे अनुस्वारो लुप्यते तदा 'नगभूः' पर्वतस्य भूमिः इत्यवशिष्यते। २ एकस्मिन्नर्थे 'अयं मे' मम 'बकुलद्रुमः' बवयोरैक्यात्। द्वितीयेऽर्थे, अनुस्वारत्यागेन 'अयमेव कुलद्रुमः' इति स्थितम्। अयं पुमान् कुले द्रुम इव। द्रुमो वृक्षः। १ एकस्मिन्नर्थे हृद्यैः मनोहरैः विरुतैः शब्दैः द्वितीयेऽर्थे विसर्गलोपे कृते 'हृद्यैकलापिनाम्' इति जातम्। हृद्यं सुन्दरम्, एकम्, अद्वितीयं लपन्ति वदन्ति ते हृद्यैकलापिनस्तेषां विहंगानाम्। २ एकस्मिन्नर्थे 'महासुः' महान्तोऽसवः प्राणा यस्य सः। 'खात्' आकाशात्। द्वितीयेऽर्थे विसर्गलोपे 'महासुखात्' महच्च तत्सुखं चेति तस्मात् राज्यात्। १ एकस्मिन्नर्थे नदीनाम्, इनः स्वामी। नदीनः समुद्रः। द्वितीयेऽर्थे नदीनः, इत्यस्मात् नकारं सस्वरं लुप्यते तदा 'दीनः' इति तिष्ठति। दीनशब्देन कृपणधनी पुमान् बुध्यते। २ एकस्मिन्नर्थे 'सुगतो' बुद्धः जिनः। द्वितीयेऽर्थे सुगत इत्यस्मात् गकारः सस्वरो लुप्यते तदा 'सुत' इति स्यात्। सुतः पुत्रः। १-२ एतादृशानां श्लोकानां मध्ये अर्थयोजनिकायां कृतायां सत्यां योजनिका स्थानान्तरे धृतास्ति। यो यस्य शब्दस्य अन्वयत्वेन लगति स शब्दस्तत्पार्श्वे धृतो नास्तीति बोध्यम्।

---

१ यत्र प्रश्ने मात्राबिन्दुविसर्गाणां च्युतकेषु कृतेषु सत्सु द्वितीयोऽर्थः प्रकटो जायते तन्मात्राच्युतकादिकम्। च्युतकशब्देन कुत्रचित्स्थाने नाशः, कुत्रचिद्विनिमयः। २ कर्तृकर्मक्रियापदानां स्थानान्तरे धृतत्वात्, अन्वयो दुर्लभो यस्य वृत्तस्य तत्स्थानवैपरीत्यम्।

## व्यञ्जनवैपरीत्यनिदर्शनम् ।

* भिक्षवो रुचिरा सर्वे रसाः सर्वजनप्रियाः । क्षमायामभिसंपन्ना दृश्यन्ते मगधे परम् ॥१॥ सत्य-शीलदयोपेतो दाता सुचिरमत्सरः । जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता ॥ २ ॥

## [1]च्युतदत्ताक्षरनिदर्शनम् ।

सदागतिहयोच्छ्रायस्तमसो वश्यतां गतः । अस्तमेष्यति दीपोऽयं विधुरेकः शिवे स्थितः ॥ १ ॥ पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा । तनोति कस्य न स्वान्तमेकान्तमदनातुरम् ॥ २ ॥ कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम् । किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥ ३ ॥

## अन्तरालापाः ।

+ कस्तूरी जायते कस्मात्को हन्ति करिणां कुलम् । किं कुर्यात्कातरो युद्धे मृगात्सिंहः पलायनम् ॥ १ ॥ कः खे चरति का रम्या का जप्या किं विभूषणम् । को वन्द्यः कीदृशी लङ्का वीरमर्कट-कम्पिता ॥ २ ॥ सीमन्तिनीषु का शान्ता राजा कोऽभूद्गुणोत्तमः । विद्वद्भिः का सदा वन्द्या अत्रै-वोक्तं न बुध्यते ॥ ३ ॥ युधिष्ठिरः कस्य पुत्रो गङ्गा वहति कीदृशी । हंसस्य शोभा का वास्ति धर्मस्य त्वरिता गतिः ॥ ४ ॥ भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः । कथं विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् ॥ ५ ॥ पृथ्वीसंबोधनं कीदृक्कविना परिकीर्तितम् । केनेदं मोहितं विश्वं प्रायः केनाप्यते यशः ॥ ६ ॥ भवत इवातिस्वच्छं कस्याभ्यन्तरमगाधमतिशिशिरम् । काव्यामृतरसमग्नस्त्व-मिव सदा कः कथय सरसः ॥ ७ ॥ वीरे सरुषि रिपूणां नियतं का हृदयशायिनी भवति । नभसि प्रस्थितजलदे का राजति हन्त वद तारा ॥ ८ ॥ भ्रमरहितः कीदृक्षो भवतितरां विकसितः पद्मः । ज्यौतिषिकः कीदृक्षः प्रायो भुवि पूज्यते लोकैः ॥ ९ ॥ प्रभवः को गङ्गाया नगपतिरतिसुभगशृङ्गधरः । के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थरतैः ॥ १० ॥ अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृशः सदृशः ।

---

* १ एकस्मिन्नर्थे 'भिक्षवः' श्वेताम्बराः. द्वितीयेऽर्थे भिक्षव इति पदार्थे भकारलोपः क्रियते तदा । 'इक्षवः' गुडवृक्षाः । २ एकस्मिन्नर्थे 'जिनो' वीतरागः । द्वितीयेऽर्थे जिन इत्यस्माज्ज-कारो लुप्यते तदा 'इन' इति स्थितम् । इनः स्वामी राजा वा । १ एकस्मिन्नर्थे 'दीपः' इति द्वितीयेऽर्थे दीप इत्यत्र पकारं लुप्त्वा तत्स्थाने नकारो दीयते तदा 'दीन' इति । अयं दीनो विधुश्चन्द्रः एक एव शिवे स्थितः । २ एकस्मिन्नर्थे 'कामिनी' स्त्री । द्वितीयेऽर्थे 'यामिनी' रात्रिः । ३ अत्र 'रसाले' इति वक्तव्ये 'साले' इति रश्च्युतः । 'वने' इत्यत्र 'यौवने' इति यौर्दत्तः । 'वदनेन' इत्यत्र 'मदनेन' इति मश्च्युतो वो दत्तः ।

+ १ कस्तूरी कस्मात् जायते-मृगात् । करिणां कुलं को हन्ति-सिंहः । कातरो युद्धे किं कुर्यात्-पलायनम्, इति योजना । २ खे कः चरति-विः पक्षी, रम्या-रमा, जप्या-ऋक्, विभूषणम्-कटकम्, वन्द्यः-पिता, लङ्का-वीरमर्कटैर्हनुमदादिभिः कम्पिता नाशितेत्यर्थः । ३ चरणाद्यन्ताक्षरयोर्मेलनेनोत्तरम् । यथा सीता रामः विद्या । ४--५ चतुर्थपादस्थपदत्रयेण प्रश्नत्रयस्योत्तरम् । ६ 'कविना' हे को हे पृथ्वि इना कामेन । कविना काव्यकर्त्रा । ७ 'सरसः' तडागस्य रसेन शृङ्गारादिना सह वर्तमानः । ८ 'तारा' आरा चर्मप्रभेदिनी शत्रूणां मनसि दुःखरूपा, तारा नक्षत्रम् । ९ 'भ्रमरहितः' भ्रमराणां भृङ्गाणां हितो हितकृत् भ्रमेण मिथ्या-मत्या रहितः शुद्धज्ञानवान् । १० 'प्रभवः' उत्पत्तिस्थानम्, महान्तः ईश्वराः ।—

---

१ 'स्फोटयित्वाक्षरं किंचित्पुनरन्यस्य दानतः । यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत् ॥' इति ।

नीलादिकोपलम्भः स्फुरति प्रत्यक्षतः कस्य ॥ ११ ॥ गैरिकमनःशिलादिः प्रायेणोत्पद्यते कुतो नगतः । यः खलु न चलति पुरुषः स्थानादुक्तः स कीदृक्षः ॥ १२ ॥ कस्य मैरौ दुरधिगमः कमले कः कथय विरचितावासः । कैस्तुष्यति चामुण्डा रिववस्ते वद कुतो भ्रष्टाः ॥ १३ ॥ कं संजघान कृष्णः का शीतलवाहिनी गङ्गा । के दारपोषणरताः कं बलवन्तं न बाधते शीतम् ॥ १४ ॥ कः कौ के कं कौ कान् हसति च हसतो हसन्ति हरिणाक्ष्याः । अधरः पल्लवमङ्घ्री हंसौ कुन्दस्य कोरकान्दन्ताः॥१५॥ का शम्भुकान्ता किमु चन्द्रकान्तं कान्तामुखं किं कुरुते भुजङ्गः । कः श्रीपतिः का विषमा समस्य गौरीमुखं चुम्बति वासुदेवः ॥ १६ ॥ का लोकमाता किमु देहमुख्यं रतेः किमादौ कुरुते मनुष्यः । को दैत्यहन्ता वद वै क्रमेण गौरीमुखं चुम्बति वासुदेवः ॥ १७ ॥ का शैलपुत्री किमु नेत्ररम्यं शुकार्भकः किं कुरुते फलानि । मोक्षस्य दाता स्मरणेन को वा गौरीमुखं चुम्बति वासुदेवः ॥१८॥ के भूषयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतः श्रीः । किमाह सीता दशकण्ठनीता हारामहादेवरतातमातः ॥ १९ ॥ रवेः कवेः किं समरस्य सारं कृषेर्भयं किं किमुशन्ति भृङ्गाः । खलाद्भयं विष्णुपदं च केषां भागीरथीतीरसमाश्रितानाम् ॥ २० ॥ व्रजन्ति पद्मानि कदा विकासं प्रिया गते भर्तरि किं करोति । रात्रौ च नित्यं विरहाकुला का सूर्योदये रोदिति चक्रवाकी ॥ २१ ॥ सन्तश्च लुब्धाश्च महर्षिसङ्घा विप्राः कृषिष्ठाः खलु माननीयाः । किं किं समिच्छन्ति तथैव सर्वे नेच्छन्ति किं माधवदावयानम् ॥ २२ ॥ का पाण्डुपत्नी गृहभूषणं किं को रामशत्रुः किमगस्त्यजन्म । कः सूर्यपुत्रो विपरीतपृच्छा कुन्तीसुतोरावणकुम्भकर्णाः ॥ २३ ॥ करोति शोभामलके स्त्रियाः को दृश्या न कान्ता विधिना च कोक्ता । अङ्गे तु कस्मिन्दहनः पुरारेः सिन्दूरबिन्दुर्विधवाललाटे ॥२४॥ किं भूषणं सुन्दरसुन्दरीणां किं दूषणं पान्थजनस्य नित्यम् । कस्मिन्विधात्रा लिखितं जनानां सिन्दूरबिन्दुर्विधवाललाटे ॥ २५ ॥ कीदृक्षा गिरिशतनुर्जये च धातुर्विष्णौ का विबुधजरातमस्तृतीया । मध्यार्णे सति कथमात्मकोऽस्ति देशः सोमाज्यं सकलकला जसातसाह ॥२६ ॥ विवाहे पुरन्ध्रीजनैर्लिप्यते का न के मानमायान्ति गर्वोन्नता का । घने वारिधौ रामतः कम्पते का हरिद्रा दरिद्राः सरिद्रावणश्रीः ॥ २७ ॥ कस्मिन्वसन्ति वद मीनगणा विकल्पं किं वापदं वदति किं कुरुते विवस्वान् ।

---

—११ 'सदृशः' समान इव दृश्यतेऽसौ तुल्य इत्यर्थः । दृशा नेत्रेण सह वर्तमानः सदृक् तस्य सनेत्रस्य मनुष्यस्य । १२ 'नगतः' नगात्पर्वतात् नगतः स न जगामेत्यर्थः । १३ 'कस्य' कं जलं तस्य 'कः'ब्रह्मा 'कैः' 'मस्तकैः' 'कुतः' पृथ्व्याः सकाशात् । पृथ्व्यधिकारात्पतिता इत्यर्थः । १४ कृष्णः कं संजघान-कंसम् । शीतलवाहिनी गङ्गा का-काशीतलवाहिनी । दारपोषणरताः के-केदारपोषणरताः । शीतं बलवन्तं कं न बाधते-कम्बलवन्तम् । १५ हरिणाक्ष्याः कः कं हसति-अधरः पल्लवम् । कौ कौ हसतः-अङ्घ्री हंसौ । के कान् हसन्ति-दन्ताः । कुन्दस्य कोरकान् । १६-१७-१८, गौरी मुखम् चुम्बति वासुदेवः । गौरीमुखं चुम्बति वासुदेवः । भुजङ्गो जारः । १९ हाराः महादेवरताः । तमातः रात्रितः हा राम, हा देवर, हा तात,हा मातः । २० भा कान्तिः । गीः वाणीः । रथी योद्धा । ईतिः अनावृष्ट्यादिः । भृङ्गा रसं उशन्ति वाञ्छन्ति । आश्रितानाम् । भागीरथीतीरसमाश्रितानाम् । २१ सूर्योदये रोदिति चक्रवाकी । २२ मानम् । धनम् । वनम् । दानम् । घनम् । यानम् । माधवदावयानं माधवे वैशाखे दावः ऊष्मा तस्मिन् यानं गमनं नेच्छन्ति २३, २४, २५ चतुर्थपादस्थपदैः प्रश्नस्योत्तरम् । २६, २७ चतुर्थपादस्थचतुर्भिः पदैः क्रमेण चत्वारि, उत्तराणि ।—

---

१ मरुदेशे ।

विद्युल्लतावलयवान्पथिकाङ्गनानामुद्वेजको भवति कः खलु वारिवाहः ॥ २८ ॥ शब्दः प्रभूत इति प्रचुराभिधायी कीदृग्भवेद्वदत शब्दविदो विचिन्त्य । कीदृग्बृहस्पतिमते विहिताभियोगः प्रायः पुमान्भवति नास्तिकवर्गमध्यः ॥ २९ ॥ कः प्रार्थ्यते मदनविह्वलया युवत्या भाति क्व पुण्ड्रकमुपैति कथं बतायुः । कानादरो भवति केन च रज्यतेऽब्जं बाह्यास्ति किं फलमुदाहर नालिकेरम् ॥ ३० ॥ क्व वसति लघु जन्तुः किं निदानं हि वान्तेर्झटिति वद पशुं कं लम्बकण्ठं वदन्ति । प्रसवसमयदुःखं वेत्ति का कामिनीनां तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता ॥ ३१ ॥ को निर्दग्धस्त्रिपुररिपुणा कश्च कर्णस्य हन्ता नद्याः कूलं विघटयति कः कः परस्त्रीरतश्च । कः संनद्धो भवति समरे भूषणं किं कुचानां किं दुःसङ्गाद्भवति महतां मानपूजापहारः ॥ ३२ ॥ कः कान्तारमगात्पितुर्वचनतः संश्लिष्य कण्ठस्थलीं कामी किं कुरुते च गृध्रहठतश्छिन्नं प्ररूढं च किम् । का रक्षःकुलकालरात्रिरभवच्चन्द्रातपं द्वेष्टि को रामश्चुम्बति रावणस्य वदनं सीतावियोगातुरः ॥ ३३ ॥ कीदृङ्मत्तमतङ्गजः क्रमभिनत्पादेन नन्दात्मजः शब्दं कुत्र हि जायते युवतयः कस्मिन्मतिव्याकुलाः । विक्रेतुं दधि गोकुलात्प्रचलिता कृष्णेन मार्गे धृता गोपी काचन तं किमाह करुणं दानी अनोखे भये ॥ ३४ ॥ किं कुर्वन्त्युषसि द्विजाः प्रतिदिनं के माननीयाः प्रभोः का वा साहसिकी निशासु सततं द्यौः कीदृशी वर्तते । कुत्रास्ते मधु नालिकेरजफले कैः स्यात्पिपासाशमः सन्ध्यावन्दनमाचरन्ति विबुधा नारीभगान्तर्जलैः ॥ ३५ ॥ लङ्काभूपनिशाचरो रघुपतिं युद्धे कथं दृष्टवान्दीनं पाति पितेव यः पशुपतिः कस्तस्य वाहः प्रियः । केनापूर्वफलं नरैः सुकृतिभिः कस्मिन्स्थले भुज्यते जारा ये भुवि तान्प्रशास्ति कतमो ह्येषामिहैवोत्तरम् ॥ ३६ ॥ कुत्रोदेत्युदयाचलस्य तरणी[१] रम्या गतिः कस्य खे कान्त्या भान्ति च किं करोति गणको यष्टिं विधृत्यैति कः । कस्मिञ्जाग्रति जन्तवो न च कदा सूते च का कः प्रियः शृङ्गाग्रे तुरगस्य भाति गणयत्यन्धोऽह्नि वन्ध्यासुतः ॥ ३७ ॥ अन्यस्त्रीस्पृहयालवो जगति के पद्मामगम्या च का को धातुर्दर्शने समस्तमनुजैः का प्रार्थ्यतेऽहर्निशम् । दृष्ट्वैकां यवनेश्वरो निजपुरे पद्माननां कामिनीं मित्रं प्राह किमादरेण सहसा यारानदीदंशमा ॥ ३८ ॥ कस्मिञ्शेते मुरारिः क्व न खलु वसतिर्वायसी को निषेधः स्त्रीणां रागस्तु कस्मिन्क्व नु खलु सितिमा[३] शौरिसंबोधनं किम् । संबुद्धिः काऽहिमांशोर्विधिहरवयसां

---

--२८ 'वारिवाहः' वारि जले । वा विकल्पार्थे । अहः दिनम् वारिवाहोमेघः । २९ नास्तिकवर्गमध्यः न विद्यते कवर्गो गकारो मध्ये यस्य सः । प्रभूतशब्दः प्रभूतः प्रचुरवाची । नास्तिकानाम्, अपुनर्जन्मवादिनां वर्गः समूहस्तस्य मध्येऽन्तर्वर्ती । ३० 'नालिकेरम्'ना पुरुषः । अलिके भाले । अरं शीघ्रम् । पुनः प्रतिलोमम् । रङ्के क्षुद्रे । अलिना भ्रमरेण । बाह्योऽस्थि यस्य एवंविधं नालिकेरम् । ३१ चतुर्थपादस्थपदचतुष्टयेन प्रश्नचतुष्टयस्योत्तरम् । ३२ मारः मदनः । नरः । पूरः । जारः । परः । हारः । मानपूजापहारः मानपूजयोरपहारो नाशः । ३३ चतुर्थपादस्थपदैरनुक्रमेण, उत्तराणि । ३४ दानी दानमस्यास्तीति । अनः शकटम् । खे आकाशे । भये सति । दानी अनोखे भये, इति यावनीभाषया प्रत्युत्तरम् । ३५ चतुर्थपादस्थपदैरनुक्रमेणोत्तराणि । ३६ लङ्का-कालम् । दानं-नदी । केन सुखेन-नाके स्वर्गे । जाराः-राजा । ३७ चतुर्थपादस्थपदैरनुक्रमेणोत्तराणि । ३८ यारा जाराः । नदी । दंश । मा लक्ष्मीः । यारानदीदंशमा हे मित्र एतादृशी[२] दीपकलिकामया कदापि न दृष्टा । इत्यर्थकं यावनीभाषया प्रत्युत्तरम् ।--

---

१ कस्मिन्प्रदेशे । २ सूर्यः । ३ श्वेतवस्त्रम् ।

चापि संबुद्धयः का ब्रूते लुब्धः कथं वा कुरुकुलहननं केन तत्केशवेन ॥ ३९ ॥ गच्छन्ति काजि-वह्नौ हुतनिजतनवः का भिनत्ति स्वकूलं किं स्याद्योऽयं विकल्पे क्रकचनिभनखैः किं नृसिंहेन भिन्नम्। कीदृग्दित्याः प्रसूतिः किमनलशमनं का नृपैः पालनीया को वन्द्यः कः प्रमार्ष्टि त्रिभुवनकलुषं स्वर्धुनीवारिपूरः ॥ ४० ॥ पुंसः संबोधनं किं विदधति करिणां के रुचोऽम्रेर्द्विषत्किं का शून्या ते रिपूणां नरवर नरकं कोऽवधीद्रोचकं किम्। के वा वर्षासु न स्युर्बिसमिव हरिणा किं नखाग्रैर्विभिन्नं को वा मार्गं विसर्पन्विघटयति तरून्नर्मदावारिपूरः ॥ ४१ ॥ किं तृष्णाकारि कीदृक्प्रथचरणमहो रौति[3] कः काब्धिकाञ्चिः कोऽपस्मारी भुजङ्गे किमु कलिशमनं त्वार्यसंबोधनं किम्। का सुन्दर्यामपीन्दुः कथमचलभृतः का च संबुद्धिरग्रैर्बीजं किं कौवनीजारमणमतिहरा हेमसारङ्गलीला ॥ ४२ ॥ ताराविष्णूरणत्विट्खगहृदयरमास्कन्दसंबुद्धयः क क स्याद्धातुत्रयं लुग्विकरणपठितं कुत्र तत्त्वावबोधः। चत्वारस्तद्धिताः स्युः क नु खलु विगतैकैकवर्णस्वरूपाः किं सूत्रं पाणिनीयं विकसति न सहस्रोक्तिभिर्भास्वरेऽपि ॥ ४३ ॥ गाण्डीववांस्त्रिभुवने कतमः श्रुता का सञ्ज्ञा स्वरस्य गरुडध्वजकामिनीका। मुग्धा कुरङ्गनयना सुरतस्पृहालुं कान्तं गिरा मधुरया किमु वक्ति नाजी ॥ ४४ ॥ यो यादवेन्दुभगिनीदयितः प्रसिद्धो गोपाङ्गनाऽम्बरविलुण्ठकमाह्वय त्वम्। को भाति भूमिवलये विभवस्य भोक्ता रोमाणि मित्र वद कोऽत्र लुनाति नायी ॥ ४५ ॥ आदाने विद्रुशन्ति धातुमिह कं धातुर्गतौ खेन कः सम्बुद्धिं वद वेधसः शिति जनिस्थाने किमादिश्यते। दाने धातुमुशन्ति कं सति शरत्काले नदी कीदृशी दृष्ट्वा नव्यवधूं युवा वदति किं लाडी मजादार या ॥ ४६ ॥ स्यात्किं कच्छतटीषु का पितृहिता धातुः प्रदानेऽस्ति कस्कं गायन्ति रघोः सुतं सुमतयः कः सिन्धुकन्यापतिः। तातस्ते क गतोऽधुना वद बटो जानासि सत्यं वदेत्युक्तः पृच्छककर्म्मको वदति किं वेतो गया राजमः ॥ ४७ ॥ धातुः को गतिगन्धयोः स्फुरति भोः कीदृग्विकल्पेऽव्ययं वायुः

---

--३९ के उदके। शवे मेते। न। नवे। शके। यवनविशेषे। केशव। इन। क। ईश। वे। न। केशवेन।४० स्वः स्वर्गे। धुनी नदी। वा। रिपूरः रिपोर्हिरण्यकशिपोरुरः स्थलम्। स्वर्धुनी स्वः स्वर्गं धूनयति कम्पयतीति तादृशी। वारि उदकम्। पूः पुरी। अः विष्णुः। स्वर्धुनीवारिपूरः ४१ नः। मदाः। वारि। पूः नगरी। अः विष्णुः। नर्म क्रीडानर्म। दावाः दावानलाः। रिपूरः हिरण्यकशिपोरुरःस्थलम्। नर्मदावारिपूरः। ४२ हेम। सारम्। अराभिः सहितम्। गली प्रशस्तकण्ठः। इला पृथ्वी। लाली लालावान्। गरं विषम्। थाम सान्त्वम्। हे। हेला लीला। मली मलवान्, कलङ्कीति यावत्। साग अगैर्वृक्षैः सहितः। रम। हेमसारङ्गलीला हेम्नः सुवर्णस्य सारङ्गो मृगः तस्य लीला। ४३ हे भ। हे अ। अवे। भाः। वे। भाव। इ। भावे। 'भा दीप्तौ' 'वा गतिगन्धनयोः' 'इण् गतौ'। भावे। भवस्यापत्यं भाविः, अवस्यापत्यमित्याविः। वस्येति विः। अस्येति इः। सश्च रश्च अश्च स्राः। तेषामुक्तयः स्रोक्तयः ताभिः सह 'भास्वरे' त्यस्मिन्पदे 'भावे' इत्युत्तरं स्फुरति। 'भास्वरे' इत्यत्र सकार-अकाररेफैर्विना 'भावे' इति पाणिनिसूत्रमुद्भवतीत्यर्थः। ४४ 'ना' 'अचू' 'ई'। 'नाजी' इति भाषायां निषेधवाचकश्च शब्दः। ४५ 'ना' ( हे ) 'अ' 'अयी ( शुभावहविधिविशिष्ट इत्यर्थः )।' इति भाषायां नापितस्य 'सञ्ज्ञा'। ४६ 'ला' 'डी' ( हे ) 'म' 'जा' 'दा' अरया ( वेगरहितेति भावः )'। 'लाडी' मजादार 'या' इति भाषायां 'कान्तेयमतिसुन्दरी' इत्यर्थमाह। ४७ 'वेतः' 'गया ( पितृपिण्डदानतीर्थम् )' 'रा' 'जम्' 'अः' 'वे तो गया राजमः' इति भाषायां 'ते तु गता राजद्वारे' इति वाक्यार्थकः।—

---

१ शोभाः। २ रमणीयम्। ३ गायति। ४ अवनीजा सीता तद्रमणो रामः।

कीदृगवं समाह्वय पुनः किं हौ परे स्यादटे । सम्बोध्यो विधिरर्भकाः कृतहठा घाटच्छटां वीक्षितुं किं प्राहुः पितुरग्रजं प्रति सखे बाबा चलो घाटमें ॥ ४८ ॥ कम्पी कोऽभिविधौ किमव्ययमिह कास्ते द्रवत्वं पुनः स्याद्रूपं प्रथमाद्वितीयवचने किं वेः खमद्याह्वय । को धातुर्गतिगन्धयोर्द्रविणिनां किं याचते भिक्षुकः प्रश्नानां द्रुतमुत्तराणि वद रे भय्या जलेबी खवा ॥ ४९ ॥

## बहिरालापानां निर्देशः ।

पूजायां किं पदं प्रोक्तमस्तनं को बिभर्त्युरः । क आयुधतया ख्यातः प्रलम्बासुरविद्विषः ॥ १ ॥ को दुराढ्यस्य मोहाय का प्रिया मुरविद्विषः । पदं प्रश्नवितर्के किं को दन्तच्छदभूषणम् ॥ २ ॥ पक्षिश्रेष्ठसखीवभ्रूसुरा वाच्याः कथं वद । ज्येष्ठे मासि गताः शोषं कीदृश्योऽल्पजला भुवः ॥ ३ ॥ विश्वम्भराप्रलम्बघ्नव्रीहिमानुषसंयुगाः । कथं वाच्या भवन्त्येता दिनान्ते विकसन्ति काः ॥ ४ ॥ आनन्दयति कोऽत्यर्थं सज्जनानेव भूतले । प्रबोधयति पद्मानि तमांसि च निहन्ति कः ॥ ५ ॥ अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये । प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् ॥ ६ ॥ कीदृक्किं स्यान्न मत्स्यानां हितं स्वेच्छाविहारिणाम् । गुणैः परेषामत्यर्थं मोदते कीदृशः पुमान् ॥ ७ ॥ अगस्त्येन पयोराशेः कियत्किं पीतमुज्झितम् । त्वया वैरिकुलं वीर समरे कीदृशं कृतम् ॥ ८ ॥ के स्थिराः के प्रियाः स्त्रीणां कोऽप्रियो नक्तमाह्वय । नृत्यभूः कीदृशी रम्या नदी कीदृग्घनागमे ॥ ९ ॥ का कृता विष्णुना कीदृग्योषितां कः प्रशस्यते । असेव्यः कीदृशः स्वामी को निहन्ता निशातमः ॥ १० ॥ लक्ष्मणेत्युत्तरं यत्र प्रश्नः स्यादत्र कीदृशः । ग्रीष्मे द्विरदवृन्दाय वनाली कीदृशी हिता ॥ ११ ॥

---

--४८ 'वा' 'वा', 'चलः' 'अघ' 'अट' (हे) 'म' 'बाबा' इति हे पितामह' 'चलो' इति 'चलत' इत्यस्य 'घाट' इति घाटाख्ये स्थानविशेषे इत्यस्यार्थस्य च वाचकानि पदानि । ४९ 'भयी' भा । जले । 'वी' (हे) 'ख' 'वा' 'भय्या' 'भ्रातर्' इत्यस्य जलेबी इति खाद्यविशेषस्य 'खवा' इति 'खादय' इत्यस्यार्थस्य वाचकानि पदानि ।

१ 'सुनासीरः' सुः पूजायाम् । ना पुरुषः । सीरः । हलम् । २ 'रामानुरागः' । राः धनम् । मा लक्ष्मीः । नु इति वितर्के । रागः आरक्तत्वम् । ३ 'विवरालीनकुलीराः' । विः पक्षी । वरं श्रेष्ठम् । आली सखी । नकुली नकुलस्त्री । इरा मदिरा । विवरेषु छिद्रेषु आलीनाः प्रविष्टा कुलीराः जलचरजीवविशेषा यासु ताः । ४ 'कुवलयवनराजयः' । कुः पृथ्वी ( बवयोरैक्यात् ) बलो बलभद्रः । यवो धान्यभेदः । नरो मनुष्यः । आजि । सङ्ग्रामः । कुवलयानां कमलानां वनानां राजयः पङ्क्तयः । ५ 'मित्रोदयः' मित्राणां सखीनामुदयो वृद्धिः । मित्रस्य सूर्यस्य उदय उद्गमनम् । ६ 'मदनवती' मदना मदनवृक्षा विद्यन्ते यस्यां सा अतिगहनत्वाद्दुर्गमा । मदनः कामो विद्यते यस्याः सा । सयौवना इत्यर्थः । ७ 'विमत्सरः' वयः पक्षिणो विद्यन्ते यस्मिंस्तत् विमत् ईदृशं सरस्तडागम् । विगतो मत्सरोऽहंकारो यस्य सः । ८ 'सकलङ्कम्' सकलं समस्तं कं पानीयं मूत्रं च । कलङ्केन लाञ्छनेन सह वर्तमानं कृतम् । ९ 'अगाधवारिपूरजनिततरङ्गा' अगाः पर्वताः । धवाः भर्तारः । रिपुः शत्रुः । हे रजनि । ततरङ्गा ततो विस्तीर्णो रङ्गो नर्तनमण्डपो यस्यां सा । अगाधेन अतलस्पर्शेन वारिपूरेण जनसमूहेन जनिता उत्पादितास्तरङ्गा लहर्यो यस्यां सा । १० 'कुमुदवनवान्धवोदयः' कोः पृथिव्याः मुत् कुमुत् । पृथिव्याः मध्ये प्रीतिः कृतेत्यर्थः । अवनं रक्षणं विद्यते यस्यासौ अवनवान् रक्षाकरः धवो भर्ता । नास्ति दया यस्य सः अदयः दयारहितः । कुमुदानां चन्द्रविकासिकमलानां वनानां बान्धवो भ्राता चन्द्रस्तस्योदयः । ११ 'कासारसहिता' सारसस्य पक्षिणो हिता प्रिया का इति प्रश्नः । सारसस्य योषित् लक्ष्मणा कासारेण अखातसरोवरेण सहिता सहवर्तमाना ।—

प्रायः कार्ये न मुह्यन्ति नराः सर्वत्र कीदृशाः । नाधा इति भवेच्छन्दो नौवाची वद कीदृशः ॥ १२ ॥
कामुकाः स्युः कया नीचाः सर्वः कस्मिन्प्रमोदते । अर्थिनः प्राप्य पुण्याहं करिष्यध्वे वसूनि किम्
॥ १३ ॥ को दुःखी सर्वकार्येषु किं भृशार्थस्य वाचकम् । यो यस्माद्विरतो नित्यं ततः किं स करि-
ष्यति ॥ १४ ॥ वारणेन्द्रो भवेत्कीदृक्प्रीतये भृङ्गसंहतेः । यद्यवश्यं तदास्मै किमकरिष्यमहं धनम्
॥ १५ ॥ काले देशे यथायुक्तं नरः कुर्वन्नुपैति काम् । भुक्तवन्तावलप्स्येतां किमन्नमकरिष्यताम्
॥ १६ ॥ हिमानीस्थगितौ स्यातां कीदृशौ शशिभास्करौ । कः पूज्यः कः प्रमाणेभ्यो न प्रभाकर-
संमतः ॥ १७ ॥ के प्रवीणाः कुतो हीनं जीर्णं वासोंऽशुमांश्च कः । निराकरिष्णवो बाह्यं योगाचाराश्च
कीदृशाः ॥ १८ ॥ न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते । लादेशानां नवानां च तिङां किं
नाम कथ्यताम् ॥ १९ ॥ सततं श्लाघते कस्मै नीचो भुवि किमुत्तमम् । कर्तर्यपि रुचादीनां धातूनां किं
पदं भवेत् ॥ २० ॥ किमव्ययतया ख्यातं कस्य लोपो विधीयते । ब्रूत शब्दविदो ज्ञात्वा समाहारः क उच्यते
॥ २१ ॥ कौ विख्याताववहेः शत्रू शोकं वदति किं पदम् । कोऽभीष्टोऽतिदरिद्रस्य सेव्यन्ते के च भिक्षुभिः
॥ २२ ॥ किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा । पूजायां किं पदं कोऽग्निः कः कृष्णेन हतो रिपुः
॥ २३ ॥ वदवल्लभ सर्वत्र साधुर्भवति कीदृशः । गोविन्देनानसि क्षिते नन्दवेश्मनि काभवत् ॥ २४ ॥

---

सौ अधा ना
—१२ 'सावधानाः' सह अवधानेन समाधिना वर्तत इति । अनन्यग्रचित्ता इत्यर्थः । सौ अधा ना
स इति पदच्छेदः । अस्यार्थ औकारेण सह वर्तमानः सौ । नधा अधा तथा च औकारयोगे धकार-
हीनो ना इति शब्दः । सकारस्य विसर्गः 'नौः' इति नौवाची भवेदिति योजना । १३ 'दास्या
महे' । दास्या वेश्यया । महे महोत्सवे । दास्यामहे दानं दास्यामः । १४ 'प्रयास्यति' । प्रयासः
आयासोऽस्यातीति प्रयासी । अति भृशम् । प्रयास्यति तत्स्थानं विमुच्य गमिष्यति ।
१५ 'समदास्यः' समदं मदसहितम् आस्यं मुखं यस्य सः समदास्यः । भ्रमरा हि गजानां
मदमाघ्राय हृष्यन्ति । समदास्यः त्वं दानं व्यतरिष्यः । १६ 'अहास्यताम्' । हास्यस्य भावो
हास्यता । न हास्यता अहास्यता ताम् । युक्तक्रियां कुर्वतो न कश्चिद्धसेदित्यर्थः । ओहाक्
त्यागे । क्रियातिपत्तौ स्यप्, तदन्नं तावत्त्यक्ष्यतामित्यर्थः । १७ 'अभावः' अभौ नास्ति भा
दीप्तिर्ययोस्तौ कान्तिरहितौ । अः कृष्णः अभावः प्रमाणशास्त्रे प्रसिद्धः सप्तमः पदार्थः । प्रभा-
करास्तु अभावरूपं सप्तमं पदार्थं प्रमाणत्वेन न मन्यन्ते । १८ 'विज्ञानवादिनः' । विज्ञा
विशेषेण जानन्ति ते चतुराः । नवात् नूतनात् । जीर्णं हि वस्त्रं नवात हीनमूल्यं स्यादित्य-
भिप्रायः । इनः सूर्यः । विज्ञानवादिनः विज्ञानस्य क्षणिकविज्ञानस्य वादो विद्यते येषु ते विज्ञान-
वादिन इति पदं बौद्धशास्त्रे प्रसिद्धम् । १९ 'परस्मैपदम्' । आत्मव्यतिरिक्तः परः तस्मै परस्मै
अन्यस्मै न स्तौति । पदं पदसंज्ञं सुप्तिङन्तं पदम् । परस्मैपदं नवानामपि तिङां तिप् तस् झि
इत्यादीनां परस्मैपदसंज्ञा । २०'आत्मनेपदम्' । आत्मने स्वस्मै । पदं प्रतिष्ठास्थानम् । आत्मनेपदं
त आताम् झ इत्यादीनि नव वचनानि भवन्ति इति भावः । २१ 'स्वरितः' । स्वर् स्वरव्ययं स्वर्गे
निपातः । इतः इत्संज्ञकस्य । स्वरितः ह्रस्वादयस्त्रयः स्वराः प्रत्येकमुदात्तानुदात्तस्वरितसंज्ञाः ।
समाहारः स्वरितः इति तात्पर्यार्थः । २२ वीहाराः । विश्च विश्च वी गरुडमयूरौ । हा इति खेदे ।
राः द्रव्यम् । वीहाराः तीर्थभूमयः । २३ 'कंसासुरः' । कं जलम् । सा एन कृष्णेन सहवर्तमाना
लक्ष्मीः । सुः पूजायाम् । रः अग्निः । कंसासुरः एतन्नामा दैत्यः । २४'दीनरक्षी-क्षीरनदी' दीनान्दुः-
स्थान् भिक्षाचरादीन् रक्षत इत्येवंशीलो दीनरक्षी दीनपालकः । क्षीरं दुग्धं तस्य नदी क्षीरनदी ।–

यत्तादन्विष्य का ग्राह्या लेखकैर्मसिमल्लिका । घनान्धकारे निःशङ्कं मोदते केन बन्धकी ॥ २५ ॥ किमनन्ततया ख्यातं पादेन व्यङ्गमाह्वय । जनानां लोचनानन्दं के तन्वन्ति घनात्यये ॥ २६ ॥ प्रायेण नीचलोकस्य कः करोतीह गर्वताम् । आदौ वर्णद्वयं दत्त्वा ब्रूहि के वनवासिनः ॥ २७ ॥ सानुजः काननं गत्वा नैकषेयाञ्जघान कः । मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद ॥ २८ ॥ धत्ते वियोगिनीगण्डस्थलपाण्डुफलानि का । वद वर्णौ विधायान्ते सीता दृष्टा भवेत्कया ॥ २९ ॥ विष्णोः का वल्लभा देवी लोकत्रितयपावनी । वर्णावाद्यन्तयोर्दत्त्वा कः शब्दस्तुल्यवाचकः ॥ ३० ॥ पुरुषः कीदृशो वेत्ति प्रायेण सकलाः कलाः । मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात्सुरालयः ॥ ३१ ॥ यजमानेन कः स्वर्गहेतुः सम्यग्विधीयते । विहाया- द्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥ ३२ ॥ नीचेषु यावनी वाणी का कः स्याच्छुभदो जने । शम्भोरावरणं किं कं भजन्ते व्याधयो जनम् ॥ ३३ ॥ कस्मिन्स्वपिति कंसारिः का वृत्तिरधमा नृणाम् । किं ब्रूते पितरं बालः किं दृष्ट्वा रमते मनः ॥ ३४ ॥ किमिच्छति नरः काश्यां भूपानां को रणे हितः । को वन्द्यः सर्वदेवानां दीयतामेकमुत्तरम् ॥ ३५ ॥ भागीरथी कथंभूता कामिनी प्राह किं प्रियम् । एकमेवोत्तरं देहि शास्त्रलौकिकभाषया ॥ ३६ ॥ बुधः कीदृग्वचो ब्रूते को रोगी कश्च नास्तिकः । कीदृक्चन्द्रं नमस्यन्ति किं सूत्रं पाणिनेर्वद ॥ ३७ ॥ राज्ञः संबोधनं किं स्यात् सुग्रीवस्य तु का प्रिया । अधनास्तु किमिच्छन्ति रुग्णैः किं क्रियते वद ॥ ३८ ॥ किमस्ति यमुना- नद्यां जारान्किं वक्ति जारिणी । आन्ध्रगीर्वाणभाषायामेकमेवोत्तरं वद ॥ ३९ ॥ का कान्ता कालियारातेः पुनरर्थे किमव्ययम् । किं वन्द्यं सर्वदेवानां फलेषु किमु सुन्दरम् ॥ ४० ॥ केदारे कीदृशो मार्गः कुत्र शेते जनार्दनः । स्त्रीचित्तं कुत्र रमते स्वामी किं वक्ति चेटिकाम् ॥ ४१ ॥ कः कुर्याद्भु- वनं सर्वं कः समुन्मूलयेद्द्रुमान् । किं प्रतीके भवेन्मुख्यं कः परत्रैति पुण्यताम् ॥ ४२ ॥ घनसमये शिखिषु स्यान्नृत्यं कीदृक्षु किं घनात्पतति । प्रावृषि कस्य न गमनं मानसगमनाय कीदृशाः हंसाः ॥ ४३ ॥

---

—२५ 'नालिकेरजा-जारकेलिना' । नालिकेराज्जाता नालिकेरजा । जारेण उपपतिना सह केलिः क्रीडा तेन जारकेलिना । २६ 'खञ्जनाः' । खम् आकाशम् आकाशस्य सर्वत्र वर्तमा- नत्वादन्तो नास्ति । हे खञ्ज । खञ्जनाः पक्षिविशेषाः । २७ 'शबराः' । राः द्रव्यम् । शबराः भिल्लाः । २८ 'राक्षसोत्तमः' । रामः दशरथिः । राक्षसोत्तमः राक्षसानां मध्ये उत्तमः श्रेष्ठः । २९ 'लवलीलया' । लवली लताविशेषः । लवलीलया लवो नाम पुत्रस्तस्य लीला क्रीडा तया । ३० 'समानः' । मा लक्ष्मीः । समानः तुल्यः । ३१ 'नागरिकः ।' नागरिकः नगरनिवासी चतुरो वा । नाकः स्वर्गः । ३२ 'यागविधिः' । यागः यजनं तस्य विधिः । गवि गोत्वं वर्तते । ३३ 'अवेलाभोजिनम्' । अवे । लाभः । अजिनम् । अवेलाभोजिनम् । ३४ 'शेषेसेवावापररू- पम्' । शेषे । सेवा । वा । पररूपम् । ३५ 'मृत्युंजयः' । मृत्युम् । जयः । मृत्युंजयः । ३६ 'मला- पहा' । मलापहा । 'मला पहा' महाराष्ट्रभाषायां 'मां पश्य' इत्यर्थकमिदम् । ३७ 'अर्थवदधातुर प्रत्ययः प्रातिपदिकम्' । अर्थवत् । अधातुः । अप्रत्ययः । प्रातिपदिकम् । ३८ 'देवताराधनम्' । देव । तारा । धनम् । देवताराधनम् । ३९ (?) ४० 'मातुलिङ्गम्' । मा । तु । लिङ्गम् । मातुलिङ्गम् । ४१, ४२ (?) ४३ 'समुत्सुकमनसः' समुत्सु मुदा हर्षेण सहवर्तमानाः समुद- तेषु कं पानीयम् । अनसः शकटस्य । समुत्कम्, उत्कण्ठायुक्तं मनो येषां ते समुत्सुकमनसः ।—

चादय इति यत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः । कथय त्वरितं के स्युर्नौकाया वाहनोपायाः ॥ ४४ ॥ वदतानुत्तमवचनं ध्वनिरुच्चैरुच्यते स कीदृक्षः । तव सुहृदो गुणनिवहैं रिपुनिवहं किं नु कर्तारः ॥ ४५ ॥ को मायति मकरन्दैस्तनयं कमसूत जनकराजसुता । कथय कृषीवल सस्यं पक्वं किमचीकरस्त्वमपि ॥ ४६ ॥ पृच्छति पुरुषः केऽस्यां समभूवन्वज्रकृत्तपक्षतयः । बहुभयदेशं जिगमिषुरेकाकी वार्यते स कथम् ॥४७॥ को नयति जगदशेषं क्षयमथ बिभरांबभूव कं विष्णुः । नीचः कुत्र सगर्वः पाणिनिसूत्रं च कीदृक्षम् ॥ ४८ ॥ किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी भवति । नीचः केन सगर्वः सूत्रं चन्द्रस्य कीदृक्षम् ॥ ४९ ॥ सुकपरिविन्दः शब्दः सुब्रह्मण्यस्य वाचकः केन । स्तनभरनमिता नारी केनोपायेन रञ्जयेत्कान्तम् ॥ ५० ॥ कीदृग्गृहं याम्यगृहं गतस्य कात्राणमम्भस्तरणे जनानाम् । भूषा कथं कण्ठ न ते नु पृष्टे मुक्ताकलापैरिति चोत्तरं किम् ॥ ५१ ॥ कीदृग्वनं स्यान्न भयाय पृष्टे यदुत्तरं तस्य च कीदृशस्य । वाच्यं भवेदीक्षणजातमम्बु कं चाधिशेते गवि कोऽर्चनीयः ॥ ५२ ॥ दधौ हरिः कं शुचि कीदृगभ्रं पृच्छत्यकः किं कुरुते सशोकः । श्लोकं विधायापि किमित्युदारः कविर्न तोषं समुपैति भूयः ॥ ५३ ॥ लक्ष्मीधरः पृच्छति कीदृशः स्यान्नृपः सपत्नैरपि दुर्निवारः । अकारि किं ब्रूहि नरेण सम्यक्पितृत्वमारोपयितुं स्वकीयम् ॥ ५४ ॥ कीदृशं वद मरुस्थलं मतं द्वारि कुत्र सति भूषणं भवेत् । ब्रूहि कान्त सुभटः सकार्मुकः कीदृशो भवति कुत्र विद्विषाम् ॥ ५५ ॥ का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता । कीदृशेन पुरुषेण पक्षिणां बन्धनं समभि-

---

—४४ 'केनिपाताः ।' अत्र के निपाता इति प्रश्नः प्रथमवारमेव । द्वितीयवारं तूत्तरम् । निपाताः के भवन्तीति प्रश्नः । चादयो निपातसंज्ञाः के पानीये निपतन्ति ते केनिपाताः अरित्राणि । ४५ 'अवमंतारः ।' अवमं नीचार्थवाचकम् । तारः अत्युच्चैर्ध्वनिः । अवमन्तारः अस्मन्मित्राणि रिपूणामपमानं करिष्यन्ति, इत्यर्थः । ४६ 'अलीलवम् ।' अली भ्रमरः । लवं कुशनामानं पुत्रम् । अहम्, अलीलवं छेदनमकरवम् । ४७ 'मानवनगाः' हे मानव, नगाः पर्वताः, इन्द्रेण हि पर्वतानां पक्षच्छेदः कृत इति पौराणिकी कथा, मानवन गाः हे अनवन न विद्यते अवनं रक्षणं यस्य सः अनवनः तत्संबोधनं हे अरक्षित त्वं मा गाः गमनं मा कुर्याः । ४८ 'यमोगन्धने' । यमः कृतान्तः, अगं गोवर्धनम् । धने । यमो गन्धने पाणिनीयव्याकरणमध्ये इदं सूत्रमस्ति । ४९ 'विशेषणमेकार्थेन' । विशेषणम् । एकाशून्यानां संख्यापूरकम् एकमेव भवति । एकादि अङ्को लिख्यते तदा बिन्दूनां साफल्यं स्यादन्यथा शून्यमेव । अर्थेन द्रव्येण । विशेषणमेकार्थेन इदं चन्द्रव्याकरणसूत्रमस्ति । ५० 'उपरिविहरणेन' । आद्ये सुकपरिविन्दशब्दे उ प रि वि इत्येतेषां वर्णानां हरणेन निष्कासनेन स्कन्दः इति शब्दः सुब्रह्मण्यस्य षडाननस्य वाचको भवति, द्वितीये उपरि विहरणेन इत्यस्य विपरीतरते नेत्यर्थः । ५१ 'हाराविनावः' हाराविं । हा इति खेदे । हा इति रावः शब्दो विद्यते यस्मिंस्तत । नावः नौकाः । हे हाराः वो युष्मान्विना । ५२ 'अहिंस्रमहिमः' अहिंस्रम् न सन्ति हिंस्रा घातुका जीवविशेषा यस्मिंस्तत् । अहिमः न विद्यते हिम् अहिम् तस्य अहिमः सतः कोऽर्थः, यदा अहिंस्रशब्दात् हिम् दूरीक्रियते तदा अस्रम् इति तिष्ठेत । अस्रं नेत्रजलम्, अश्रुपातः । 'अहिं शेषनागम्' । अः कृष्णः पूज्यः सन् अधिशेते । ५३ 'अगमकमकरोदिति' । अगं गोवर्धनम् । अकं न विद्यते कं जलं यत्र तत् । हे अक न विद्यते कं सुखं यस्य सः हे दुःखिन् । रोदिति रोदनं करोति, अगमकमकरोदिति एवं श्लोकम् अगम्यम् अकरोत् इति विचारयन् तुष्टो न भवति । ५४ 'समजनितनयः' हे सम मा लक्ष्मीस्तया सह वर्तमान हे लक्ष्मीधर । जनितनयः कृतो नयो न्यायो येन सः समजनि तनयः । तनयः पुत्रः समजनि उत्पादितः । ५५ 'अवारितोरणे' । अवारि न विद्यते वारि जलं यस्मिंस्तत्, तोरणे बहिर्द्वारे सति । अवारितोरणे रणे संग्रामे अवारितः न वारयितुं शक्यते सः ।—

लभ्यते सदा ॥ ५६ ॥ कीदृशं हृदयहारि कूजितं कः सखा यशसि भूपतेर्मतः । कस्तवास्ति विपिने भयाकुलः कीदृशश्च न भवेन्निशाकरः ॥ ५७ ॥ कीदृशी निरयभूरनेकधा सेव्यते परमपापकर्मभिः । प्रेतराक्षसपिशाचसेविता कीदृशी च पितृकाननस्थली ॥ ५८ ॥ ॥ केसरद्रुमतलेषु संस्थितः कीदृशो भवति मत्तकुञ्जरः । तत्त्वतः शिवमपेक्ष्य लक्षणैरर्जुनः समिति कीदृशो भवेत् ॥ ५९ ॥ निर्जितसकलारातिः पृच्छति को नैको मृत्योर्भयमृच्छति । मेघात्ययकृतरुचिराशायाः किं तिमिरक्षयकारि निशायाः ॥ ६० ॥ विहगपतिः कं हतवानहितं कीदृग्भवति पुरं जनमहितम् । किं कठिनं विदितं वद धीमन्यादः पतिरपि कीदृग्भयकृत् ॥ ६१ ॥ अनुकूलविधायिदैवतो विजयी स्यान्ननु कीदृशो नृपः । विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुतः ॥ ६२ ॥ कुसुमं पतदेत्य नाकतो वद कस्मै स्पृहयन्ति भोगिनः । अधिगम्य रतं वराङ्गना क नु यत्नं कुरुते सुशिक्षिता ॥ ६३ ॥ कवयो वद कुत्र कीदृशाः कठिनं किं विदितं समन्ततः । अधुना तव वैरियोषितां हृदि तापः प्रबलो विहाय काः ॥ ६४ ॥ वसति कुत्र सरोरुहसन्ततिर्दिनकृतो ननु के तिमिरच्छिदः । पवनभक्षसपत्नरणोत्सुकं पुरुषमाह्वय को जगति प्रियः ॥ ६५ ॥ न भवति मलयस्य कीदृशी भूः क इह कुचं न बिभर्ति कं गता श्रीः । भवदरिनिवहेषु कास्ति नित्यं बलमथनेन विपद्व्यधायि केषाम् ॥ ६६ ॥ समयमिह वदन्ति कं निशीथं शमयति कान्वद वारिवाहवृन्दम् । वितरति जगतां मनःसु कीदृङ्मुदमतिमात्रमयं महातडागः ॥ ६७ ॥ किमकरवमहं हरिर्महीध्रं स्वभुजबलेन गवां हितं विधित्सुः । प्रियतमवदनेन पीयते कः परिणतबिम्बफलोपमः प्रियायाः ॥ ६८ परिहरति भयात्तबाहितः किं कमथ कदापि न विन्दतीह भीतः । कथय किमकरोरिमां धरित्रीं नृपतिगुणैर्नृपते स्वयं त्वमेकः ॥ ६९ ॥

—५६ 'शकुन्तलाभरतेन'। शकुन्तला नाम्नी ऋषेः पुत्री भरतनाम्ना पुत्रेण नन्दिता इत्यर्थः। शकुन्तानां पक्षिणां लाभोऽर्जनं तत्र रत आसक्तस्तेन । व्याधेनेत्यर्थः। ५७ 'कलंकविरहितः'। कलं मधुरःशब्दः। कविः काव्यादिकृत। अहितः शत्रुः। कलङ्केन मृगरूपाभिज्ञानेन विरहितः, न स्यात् इति भावार्थः। ५८ 'नरकपालरचिता'। नरकाणां पालाः नारकजीवरक्षका यमभटास्तै रचिता उपस्कृता। नराणां कपालानि कर्पराणि तैः कृत्वा रचिता। श्मशानभूमिस्तु मनुष्याणां मुण्डैः सहिता भवति । ५९ 'दानवकुलभ्रमरहितः' । दानेन मदेन बकुलानां वृक्षाणां भ्रमरेभ्यः सकाशात् हितः हितकृदित्यर्थः दानवानां दैत्यानां कुले यो भ्रमो दानवा अमी युध्यन्तीति मिथ्याज्ञानं तेन रहितः । ६० 'विधुताराततेजः।' हे विधुताराते विधुताः कम्पिताः अरातयः शत्रवो येन स तत्संबोधनम्। अजः ब्रह्मा। विधुश्चन्द्रः–तारा नक्षत्राणि तासां तेजः प्रकाशः। ६१ 'अहिमकरमयः।' अहिं सर्पम्। अकरं नास्ति करो राजदण्डो यस्मिंस्तत। अयः लोहम्। अहयः सर्पाः मकराः मत्स्यविशेषास्तन्मयः। ६२ 'कुशलवर्धितः' । कुशलैः शुभसूचकशकुनैर्वर्धितो वर्धापितः कुशश्च लवश्च कुशलवौ नामानौ पुत्रौ तयोर्वृद्धिः संपन्नतः । ६३ 'सुरतरवे ।' सुरतरवे कल्पवृक्षाय वाञ्छन्ति । सुरतस्य संभोगस्य रवः शब्दस्तस्मिन् । ६४ 'गिरिसारमुखाः' । गिरि वाण्यां सारं प्रधानं स्फुटोच्चारणवन्मुखं वदनं येषां ते । गिरिसारं लोहम् । उखाः स्थालीः । ६५ 'केकिरणोत्कराः' । के पानीये । किरणानाम् उत्कराः समूहाः । हे केकिरणोत्क केका विद्यते येषां ते केकिनः तेषां मयूराणां रणे शब्दे उत्क उत्सुकः तत्संबोधनम् । राः द्रव्यम्। ६६ 'विपन्नगानाम् ।' विगताः पन्नगाः सर्पा यस्याः सा विपन्नगा न, किंतु पन्नगग्नहितैव ना पुमान् अं कृष्णम्। विपत्संपत्त्यभावः दरिद्रता। नगानां पर्वतानाम्। ६७ 'अरविंदवान्'। अरवि नास्ति रविः सूर्यो यस्मिन्सः अरविस्तम्। दवान्दावानलान्। अरविन्दवान् अरविन्दानि कमलानि विद्यन्ते यस्मिन्सः ओष्ठः। ६८ अधरः। हे कृष्ण त्वं गोवर्धनपर्वतम् अधरः हस्ते धृतवान्। अधरः ओष्ठः। ६९ 'समरंजयम्।' समरं संग्रामम्। जयं जयवादम्। अहं समरंजयं रागिणीं पृथ्वीमकरवम्।—

पृच्छति शिरसिरुहो मधुमथनं मधुमथनस्तं शिरसिरुहं च । कः खलु चपलतया भुवि विदितः का ननु यानतया गवि गदिताः ॥ ७० ॥ कीदृक्तोयं दुस्तरं स्यात्तितीर्षोः का पूज्यास्मिन् खड्गमामन्त्रयस्व । दृष्ट्वा धूमं दूरतो मानविज्ञः किं कर्तासि प्रातरेवाश्रयाशम् ॥ ७१ ॥ कीदृक्प्रातर्दीपवर्तेः शिखा स्यादुष्ट्रं पृच्छत्याभजन्ते मृगाः किम् । देवामात्ये किं गते प्रायशोऽस्मिंल्लोकः कुर्यान्नो विवाहं विविक्तः ॥ ७२ ॥ कीदृक्सेना भवति रणे दुर्वारा वीरः कस्मै स्पृहयति लक्ष्मीमिच्छन् । का संबुद्धिर्भवति भुवः संग्रामे किं कुर्वीध्वं सुभटजना भ्रातृव्यान् ॥ ७३ ॥ कंसारातेर्वद गमनं केन स्यात्कस्मिन्दृष्टिं लभते स्वरपेच्छुः । कं सर्वेषां शुभकरमूचुर्धीराः किं कुर्यात्त्वं सुजन सशोकं लोकम् ॥ ७४ ॥ कीदृक्षः सकलजनो भवेत्सुराज्ञः कः कालो विदित इहान्धकारहेतुः । कः प्रेयान्कुमुदवनस्य को निहन्ति भ्रातृव्यं वद शिरसा जितस्त्वया कः ॥ ७५ ॥ संग्रामे स्फुरदसिना हतास्त्वया के दुःखं के बत निरये नरस्य कुर्युः । कस्मिन्नुद्भवति कदापि नैव लोम ज्ञाताः के जगति महालघुत्वभाजः ॥ ७६ ॥ कीदृक्षं समिति बलं निहन्ति शत्रुं विष्णोः का मनसि मुदं सदा तनोति । तुच्छं सच्छरधिमुखं निगद्यते किं पञ्चत्वैः सममपमान एव केषु ॥ ७७ ॥ कामरिरहितामिच्छति भूपः कामुद्धरयति शूकररूपः । केनाकारि हि मन्मथजननं केन विभाति च तरुणीवदनम् ॥ ७८ ॥ हिमांशुखण्डं कुटिलोज्ज्वलप्रभं भवेद्वराहप्रवरस्य कीदृशम् । विहाय वर्णं पदमध्यसंस्थितं न किं करोत्येव जिनः करोति किम् ॥ ७९ ॥ वसन्तमासाद्य वनेषु कीदृशा पिकेन राजन्ति रसालभूरुहाः । निरस्य वर्णद्वयमत्र मध्यमं तव द्विषां कान्ततमा तिथिश्च का ॥ ८० ॥ उरःस्थलं कोऽत्र विना पयोधरं बिभर्ति संबोधय मारुताशनम् । वदन्ति कं पत्तनसंभवं जनाः फलं च किं गोपवधूकुचोपमम् ॥ ८१ ॥ वसन्तमासाद्य वनेषु राजते विकासि किं वल्लभ पुष्पमुच्यताम् । विहङ्गमं कं च परिस्फुटाक्षरं वदन्ति किं पङ्कजसंभवं विदुः ॥ ८२ ॥ समुद्यते कुत्र

---

--७० 'केशवनौकाः ।' हे केशव । हे केश । वनौकाः वने ओको गृहं यस्यासौ वानरः । नौकाः नावः । ७१ 'अनुमातासे' । अनु, न विद्यते नौः यत्र तत् नौकारहितमित्यर्थः । माता जनयित्री । हे असे खड्ग । अनुमातासे त्वम् अनुमानं करिष्यसि । ७२ 'विभाकरभवनम्'। विभा विगता भा कान्तिर्यस्याः सा । हे करभ उष्ट्र । वनम् । विभाकरभवनं विभाकरस्य सूर्यस्य भवनं गृहं तत् । सिंहराशिं गते जीवे लोकाः विवाहादिशुभकार्याणि न कुर्वन्ति । सिंहस्याधिपतिः सूर्यः । ७३ 'पराजयेमहि' । परा उत्कृष्टा एव सेना जयं प्राप्नुयादित्यर्थः । आजये संग्रामाय । हे महि हे पृथ्वि । वयं पराजयेमहि जयेम । ७४ 'विनोदयेयम्' । विना गरुडेन । उदये सति परस्योन्नतौ सत्याम् । अयं भाग्यम् । अहं तं विनोदयेयं विनोदेन युक्तं कुर्यामित्यर्थः । ७५ 'विधुरविरहितः' । विधुरेण कष्टेन विरहितः । सुखीत्यर्थः । विधुश्च रविश्च विधुरवी चन्द्रादित्यौ ताभ्यां रहितः । विधुश्चन्द्रः । अविः ऊर्णायुः । अहितः शत्रुः । ७६ 'नरकरेणवः' । नराश्च करेणवश्च मनुष्यहस्तिनः । नरकस्य रेणवो धूलयः अग्निरूपाः वालुका इत्यर्थः । नरकरे पुरुषाणां हस्ततले । अणवः परमाणवः । ७७ 'अभिमानिषु' । अभि नास्ति भीर्भयं यस्य तत् । मा लक्ष्मीः । अनिषु न विद्यन्ते इषवो बाणा यस्मिंस्तत् । अभिमानिषु गर्ववत्सु । ७८ 'कुंकुमेन' । कुं पृथ्वीम् । कुं धराम् । एन कृष्णेन । कुङ्कुमेन । ७९ 'दंष्ट्राभम्' । दंष्ट्रावत् आभा शोभा यस्य तत् । द्वितीयायामुदयं प्राप्तश्चन्द्रो वक्रोज्ज्वलगुणेन सूकरदंष्ट्रया सहोपमीयते । दम्भं कपटं जिनः न करोति । भन्दं कल्याणं जिनः करोति । ८० 'कान्तगिरा' । कान्तगिरा । कान्ता मनोहरा गीर्वाणी यस्यासौ कान्तगीस्तेन । कारा बन्दिगृहम् । राका पूर्णमासी । ८१ 'नागरङ्गम्' । हे नाग हे सर्प । नागरः नगरे भवस्तम् । नागरङ्गं नारङ्गीफलम् । ८२ 'किंशुकम्' । किंशुकं पलाशम् । शुकं कीरम् । कं ब्रह्माणम् ।--

न याति पांसुला समुद्यते कुत्र भयं भवेज्जलात् । समुद्यते कुत्र तवापयात्यरिः प्रहीणसंबोधनवाचि किं पदम् ॥ ८३ ॥ तपस्विनोऽत्यन्तमहासुखाशया वनेषु कस्मै स्पृहयन्ति सत्तमाः । इहापि वर्णद्वितयं निरस्य भोः सदा स्थितं कुत्र च सत्वमुच्यताम् ॥ ८४ ॥ पदमनन्तरवाचि किमिष्यते कपिपतिर्विजयी ननु कीदृशः । परगुणं गदितुं गतमत्सराः कुरुत किं सततं भुवि सज्जनाः ॥ ८५ ॥ वदति राममुष्य जघन्यजो वसति कुत्र सदालसमानसः । अपि च शक्रसुतेन तिरस्कृतो रविसुतः किमसौ विदधे त्वया ॥ ८६ ॥ मेघात्यये भवति कः समदः सुभगं च किं कमधरन्मुरजित् । कटुतैलमिश्रितगुडो नियतं विनिहन्ति कं त्रिगुणसप्तदिनैः ॥ ८७ ॥ वर्षासु का भवति निर्मधु कीदृगब्जं शेषं बिभर्ति वसुधासहितं क एकः । आमन्त्रयस्व धरणीधरराजपुत्रीं को भूतिभस्मनिचिताङ्गजनाश्रयः स्यात् ॥ ८८ ॥ कौ शङ्करस्य वलयावपयोधरः कः कीदृक्परस्य नियतं वशमेति भूपः । संबोधयोरगपतिं विजयी च कीदृग्दुर्योधनो नहि भवेद्वद कीदृशश्च ॥ ८९ ॥ कामुज्जहार हरिरम्बुधिमध्यमग्नां कीदृक्श्रुतं भवति निर्मलमानसानाम् । आमन्त्रयस्व वनमग्निशिखावलीढं तच्चापि को दहति के मदयन्ति भृङ्गान् ॥ ९० ॥ मेघात्यये भवति किं सुभगावगाहं का वा विडम्बयति वारणमल्लवेश्याः । दुर्वारवीर्यविभवस्य भवेद्रणे कः काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः ॥ ९१ ॥ कल्याणवाक्त्वमिव किं पदमत्र कान्तं सद्भूपतेस्त्वमिव कः परितोषकारी । कः सर्वदा वृषगतिस्त्वमिवातिमात्रं भूत्याश्रितः कथय पालितसर्वभूतः ॥ ९२ ॥ सूर्यस्य का तिमिरकुञ्जरवृन्दसिंही सत्यस्य का सुकृतवारिधिचन्द्रलेखा । पार्थश्च कीदृगरिदावहुताशनोऽभूत्का मालतीकुसुमदाम हरस्य मूर्ध्नि ॥ ९३ ॥ मेघात्यये भवति का सुभगावगाहा वृत्तं वसन्ततिलकं कियदक्षराणाम् । भो भोः कदर्यपुरुषा विषुवद्दिने च वित्तं च वः सुबहु तत्क्रियतां किमेतत् ॥ ९४ ॥ प्राप्ते वसन्तसमये वद किं तरूणां किं क्षीयते विरहिणामुरगः किमेति । किं कुर्वते मधुलिहो मधुपानमत्ताः कीदृग्वनं मृगगणास्त्वरितं त्यजन्ति ॥ ९५ ॥ दुर्वारवीर्य सरुषि त्वयि का प्रसुप्ता श्यामा

---

--८३ 'हिमकरे'। हिमकरे चन्द्रे उद्गते सति मकरे मत्स्ये उत्पन्ने सति करे हस्ते सायुधे ऊर्ध्वीकृते सति रे रे दास इति चामन्त्रणे । ८४ 'तपसे' तपोगुणाय । से सकारभावःसकारे वर्तते । ८५ 'अनुसरामः'। अनु पश्चाद्वाचि । रामेण सहवर्तमानः सरामः। अनुसरामः । वयं परगुणं प्रति अनुसरणं कुर्मः। ८६ 'अनुजगृहे'। हे अनुज भ्रातः गृहे मया अनुजगृहे अनुगृहीतः। ८७ 'श्वासरोगम्'। श्वा तेषु दिनेषु मैथुनेच्छो भवेत् । सरस्तडागम् । अगं गोवर्धनम् । श्वासरोगम् । ८८ 'कालिकापालिकमठः'। कालिका श्यामता । अपगता अलयो भ्रमरा यस्मात्तदपालि भ्रमररहितम् । कमठः कच्छपः। हे कालि हे पार्वति। कापालिको योगी तस्य मठः।८९ 'अहीनाक्षतनयः'। अही सर्पौ। ना पुमान् । क्षतनयः क्षतः खण्डितो नयो न्यायो येन सः अन्यायवान् । हे अहीन सर्पाणां स्वामिन् । अक्षतनयः न क्षतो नयो न्यायो येन स अखण्डन्यायवान् । हीने अक्षिणी यस्यासौ हीनाक्षोऽन्धस्तस्य तनयः पुत्रः। न हीनाक्षतनयो अहीनाक्षतनयः । धृतराष्ट्रो हि हीनाक्षोऽन्ध इति पौराणिकाः । तत्पुत्रो दुर्योधनोऽहीनाक्षतनयो न भवति किंतु अन्धपुत्र इत्यर्थः । ९० 'कुन्दमकरन्दबिन्दवः'। कुं पृथ्वीम् । दमकरम् उपशमक्षमायुक्तं भवति इत्यर्थः । हे दविन् दवो विद्यते यस्मिंतत दवी तत्संबोधनम् । दवः वनाग्निः । कुन्दमकरन्दबिन्दवः कुन्दानां पुष्पविशेषाणां मकरन्दः पुष्परसस्तस्य बिन्दवः कणाः । ९१ 'सरोजराजयः'। सरस्तडागम् । जरा वयोहानिः । जयः । सरोजराजयः कमलश्रेणयः। ९२ 'शंकर'। शं सुखम् । करो राजभागः। शंकरो महादेवः। ९३ 'भागीरथी'। भा कान्तिः। गीः वाणी । रथी रथो विद्यते यस्य सः भागीरथी गङ्गा। ९४ 'नदीयताम्'। नदी। इयतां एतावदक्षराणाम्। न दीयताम्। ९५ 'दवविकलम्'। दलम्। बलम्। बिलम्। कलम् अव्यक्तमधुरम्। दवविकलं दावाग्निना व्याकुलम्। बवयोरभेदादिदं समाधेयम्।--

सपत्नहृदये सुपयोधरा च । तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये सैवाद्यवर्णरहिता वद नाम का स्यात् ॥ ९६ ॥ उरसि मुरभिदः का गाढमालिङ्गितास्ते सरसिजमकरन्दामोदिता नन्दने का । गिरिसमलघुवर्णैरर्णवाख्यातिसंख्यैर्गुरुभिरपि कृता का छन्दसां वृत्तिरस्ति ॥ ९७ ॥ समरशिरसि सैन्यं कीदृशं दुर्निवारं विगतघननिशीथे कीदृशे व्योम्नि शोभा । कमपि विधिवशेन प्राप्य योग्याभिमानं जगदखिलमनिन्द्यं दुर्जनः किं करोति ॥ ९८ ॥ भवति गमनयोग्या कीदृशी भू रथानां किमतिमधुरमम्लं भोजनान्ते प्रदेयम् । प्रियतम वद नीचामन्त्रणे किं पदं स्यात्कुमतिकृतविवादाश्चक्रिरे किं समर्थैः ॥ ९९ ॥ भवति जयिनी काजौ सेनाह्वयाधरभूषणं वहति किमहिः पुष्पं कीदृक्कुसुम्भसमुद्भवम् । महति समरे वैरी वीर त्वया वद किं कृतः कमलमुकुले भृङ्गः कीदृक्पिबन्मधु राजते ॥ १०० ॥ आह्वानं किं भवति हि तरोः कस्यचित्प्रश्नविज्ञाः प्रायः कार्यं किमपि न कलौ कुर्वते के परेषाम् । पूर्णं चन्द्रं वहति ननु का पृच्छति म्लानचक्षुः केनोदन्याजनितमसमं कष्टमाप्नोति लोकः ॥ १०१ ॥ का संबुद्धिः सुभट भवतो ब्रूहि पृच्छामि सम्यक्प्रातः कीदृग्भवति विपिनं संप्रबुद्धैर्विहङ्गैः । लोकः कस्मिन्प्रथयति मुदं का त्वदीया च जैत्री प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन ॥ १०२ ॥ गतक्लेशायासा विमलमनसः कुत्र मुनयस्तपस्यन्ति स्वस्थाः सुररिपुरिपोः का च दयिता । कविप्रेयः किं स्यान्नवलघुयुतैरष्टगुरुभिर्बुधा वृत्तं वर्णैः स्फुटघटितबन्धं कथयत ॥ १०३ ॥ बिभर्ति वदनेन किं क इह सत्त्वपीडाकरं कुलं भवति कीदृशं गलितयौवनं योषिताम् । बभार हरिरम्बुधेरुपरि कां च केन स्तुतो हतः कथय कस्त्वया नगपतेर्भयं कीदृशात् ॥ १०४ ॥ हरिर्वहति कां तवास्त्यरिषु का गता कं च का

---

—९६ 'शस्त्री' आद्यवर्णरहिता 'स्त्री' हे दुर्वारवीर्य त्वयि सरुषि सति सपत्नहृदये का प्रसुप्ता शस्त्री । श्यामा श्यामवर्णा लोहमयत्वात् कान्ता षोडशवार्षिकी च सुष्ठु पयो जलं धरतीति सुपयोधरा', लोहनिर्मिते शस्त्रे पानीयं दीयते इति प्रसिद्धिः,सुस्तनी च । प्रणतशत्रुसरोजसूर्यं त्वयि तुष्टे सति सपत्ने हृदये प्रसुप्ता सैवाद्यवर्णरहिता का स्त्री इति दिक् । ९७ 'मालिनी' मा लक्ष्मीः । अलिनी भ्रमरी । मालिनी नाम छन्दोवृत्तम् । मुरभिद् विष्णुः । गिरयोऽष्टौ तत्समसङ्ख्याकैर्लघुभिर्वर्णैः । अर्णवाः समुद्राः अतस्तदाख्यातिवर्णा अपि गुरवो वर्णा अपि । सप्तैव अन्यत्स्पष्टम् । ९८ 'अभि भवति'। अभि नास्ति भीर्यस्य तत् भयरहितम् । भवति भानि नक्षत्राणि विद्यन्ते यस्मिंस्तत् भवत् तस्मिन्नक्षत्रयुक्ते । अभिभवति पराभवति । नीचो वृद्धिं गतो दुःखदायक एव भवेदिति भावः । ९९ 'समादधिरे' समा अविषमा । दधि क्षीरजम् । रे इति नीचसम्बोधनं दीयते । समादधिरे समाहिताः । १०० 'परागरञ्जितः ।' परा उत्कृष्टा । हे राग आरक्त । गरं गरलम् । रञ्जि रञ्जती-त्येवंशीलं तत् । जितः । परागरञ्जितः परागेण केसरेण रञ्जितः प्रीणितमनाः । १०१ 'नीरापका-रेण.' हे नीप वृक्षविशेष । परे अन्ये । 'आत्मनः कार्याणि सर्वे कुर्वन्ति परकार्यकृत्तु विरलः । राका पूर्णिमा । हे काण एकाक्ष । नीरापकारेण नीरस्य जलस्य अपकारोऽभावस्तेन नीरं विना तृषा कष्टं ददाति । १०२ 'वीहारसेविना' हे वीर । रवि रवः शब्दो विद्यते यस्मिन् तत्, शब्दयुक्तम् । हासे हास्ये । सेना सैन्यम् । वीहारसेविना वीहार उपवनादौ खेलनं सेवते इत्येवंशीलस्तेन । १०३ 'शिखरिणी' शिखराणि विद्यन्ते यस्मिन्नसौ शिखरी पर्वतः तस्मिन् शिखरिणि । ईः लक्ष्मीः । शिखरिणी छन्दः । कवीनां प्रेयोऽतिप्रियम् । अन्यत्स्पष्टम् । १०४ 'विषमपादनिकुञ्जगताहितः', विषं गरलम्, अपात् सर्पः, अनि नास्ति इः कामो यस्मिन् तत् कन्दर्परहितम् । कुं पृथ्वीम् । जगता संसारेण । अहितः शत्रुः । विषम-पादनिकुञ्जगताहितः । विषमाणां दुर्गमाणां पादानां प्रत्यन्तपर्वतानां निकुञ्जेषु गहनस्थानेषु गता अहयः सर्पा यस्मिन्सः, विषमपादनिकुञ्जगताहिस्तस्मात् । यत्र पर्वते शिलाया अधस्तात्सर्पा निर्गच्छन्ति ततः पर्वताद्विभीयते । १०५ 'कुंभीरमीनमकरागमदुर्गवारिः ।' कुं-

कमर्चयति रोगवान्धनवती पुरी कीदशी । हरिः कमधरद्बलिप्रभृतयो धरां किं व्यधुः कया सदसि कस्त्वया बुध जितोऽम्बुधिः कीदृशः ॥ १०५ ॥ पवित्रमतितृतिक्तकिमिह किं भटामन्त्रणं ब्रवीति धरणीधरश्च किमजीर्णसंबोधनम् । हरिं वदति को जितो मदनवैरिणा संयुगे करोति ननु कः शिखण्डिकुलताण्डवाडम्बरम् ॥ १०६ ॥ को मोहाय दुरीश्वरस्य विदितः संबोधनीयो गुरुः को धात्र्यां विरलः कलौ नवधनः किंवन्न कीदृग्द्विजः। किं लेखावचनं भवेदतिशयं दुःखाय कीदृक्खलः को विघ्नाधिपतिर्मनोभवसमो मूर्खा पुमान्कीदृशः ॥ १०७ ॥ कामिन्याः स्तनभारमन्थरगतेर्लीलाचलचक्षुषः कन्दर्पैकविलासनित्यवसतेः कीदृक्पुमान्वल्लभः । हेलाकृष्टकृपाणपाटितगजानीकात्कुतस्तेऽरयः श्वासायासविशुष्ककण्ठकुहरा निर्यान्ति जीवार्थिनः ॥१०८॥ दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधेः का रूपं विनिहन्ति को मधुवधूवैधव्यदीक्षागुरुः । स्वच्छन्दं नवसल्लकीकवलनैः पम्पासरोमज्जनैः के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाभिरामस्थिताः ॥ १०९ ॥ का चक्रे हरिणा धने कृपणधीः कीदृग्भुजङ्गेऽस्ति किं कीदृक्कुम्भसमुद्भवस्य जठरं कीदृग्वियासुर्वधूः । श्लोकः कीदृगभीप्सितः सुकृतिनां कीदृङ् नभो निर्मलं क्षोणीमाहय सर्वगं किमुदितं रात्रौ सरः कीदृशम् ॥ ११० ॥ मुण्डं पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां कीदृग्वीरजनश्च कोऽतिगहनः संबोधयावञ्छितम् । का धात्री जगतो बृहस्पतिवधूः

---

-पृथ्वीम् । भीः भयम् । अं विष्णुम् । ईः लक्ष्मीः । इनं सूर्यम् । अकरा नास्ति करो राजदण्डो यस्यां सा । अगं गोवर्धनपर्वतम् । अदुः ददति स्म । गवा वाण्या वादेन कृत्वा । अरिः प्रतिवादी । कुम्भीरमीनमकरागमदुर्गवारिः कुम्भीरा नक्राश्च मीना मत्स्याश्च मकराश्च तेषां आगमौ आगमननिर्गमने ताभ्यां कृत्वा दुर्गं दुस्तरं वारि जलं यस्यासौ ईदृशः समुद्रो भवति। १०६ 'पयोधरसमयः'। पयो जलम् । हे योध । हे धर पर्वत । हे रस अजीर्ण । हे सम । मा लक्ष्मीस्तया सह वर्तमान हरे । मयः मयनामा कश्चिद्दैत्यविशेषो हरेण हत इति भावार्थः । पयोधरसमयः पयोधरस्य मेघस्य समयः कालः, मेघागमे हि मयूरा विशेषेण नृत्यन्तीत्यर्थः । १०७ 'राजीवसन्निभवदनः ।' राः द्रव्यम् । हे जीव हे गुरो । सन् सज्जनः । इभवत् हस्तिवत् । न विद्यते अः कृष्णोऽस्मिन्निति अनः । ब्राह्मणो हि कृष्णरहितः कदाचिन्न स्यादित्यर्थः । राजी पङ्क्तिः । वसन् निवासं कुर्वन् । इभवदनः इभवत् हस्तितुल्यं वदनं मुखं यस्यासौ गणेश इत्यर्थः । राजीवेन कमलेन सन्निभं सदृशं वदनं मुखं यस्यासौ राजीवसन्निभवदनः । १०८ 'समरतः' समं तुल्यं रतं भोगक्रिया यस्य सः । संग्रामात् । १०९ 'कुंजराः' कुं पृथ्वीम् । जरा वृद्धत्वम् । अः कृष्णः । कुञ्जरा हस्तिनः । ११० 'कुमुदवनपरागरंजिताम्भोविहितगमागमकोकमुग्धरेखम्' कुमुद् पृथ्व्या हर्षोऽकारि पृथ्वी उद्धृता इत्यर्थः । अवनपरा अवनं रक्षणं धनस्य गोपनं तत्र परा सावधाना । गरं विषम् । जितानि पीतानि अम्भांसि जलानि येन तज्जिताम्भः । विहितगमा विहितः कृतो गमो गमनं यया सा । गमकः अर्थाभिप्रायेण गम्यते प्राप्यते स गमकः । अकमुक् कं पानीयं मुञ्चन्ति ते कमुचो मेघा न विद्यन्ते कमुचो यस्मिन् तत् अकमुक् मेघै रहितमित्यर्थः । हे धरे हे पृथ्वि । खम् आकाशम् । 'कुमुदवनपरागरञ्जिताम्भो विहितगमागमकोकमुग्धरेखम्' कुमुदानां चन्द्रविकासिकमलानां वनानि तेषां परागेण रजसा रञ्जितं रङ्गयुक्तं कृतम् अम्भो जलं यस्मिन् तादृशं सरः । पुनः कीदृशम् । विहितौ निष्पादितौ गमागमौ गमनागमने याभ्यां तौ विहितगमागमौ तौ च तौ कोकौ च ताभ्यां कृत्वा मुग्धा सुन्दरा रेखा पङ्क्तिर्यस्मिन् तत्, यतस्तौ चक्रवाकीचक्रवाकौ अन्योऽन्यं वियुक्तौ सन्तौ रात्रौ मेलनाय तीरात्तीरं पर्यटतः तयोर्गमनागमनेन जलरेखायाः समुद्भवात् रात्रौ सर ईदृशं भवतीति भावः । १११ 'विकचवारिजराजिसमुद्भवोच्छलितभूरिपराग विराजितम् ।' हे विकच । विगताः कचाः केशा यस्य सः, तत्संबोधनम् । हे वालरहित । वारि-

कीदक्कविः कादतः कोऽर्थः किं भवता कृतं रिपुकुलं कीदक्सरो वासरे ॥ १११ ॥ कस्मै यच्छति सज्जनो बहुधनं सृष्टं जगत्केन वा शंभोर्भाति च को गले युवतिभिर्वेण्यां च का धार्यते । गौरीशः कमताडयच्चरणतः का रक्षिता राक्षसैरारोहादवरोहतः कलयतामेकं द्वयोरुत्तरम् ॥ ११२ ॥ कः स्या-दम्बुदयाचकौ युवतयः कं कामयन्ते पतिं लज्जा केन निवार्यते निकटके दासे कथं यावनी । भाषा दर्शयतेति वस्तुषु महाराष्ट्रे कदा वा भवेदाद्यन्ताक्षरयोर्हि लोपरचनाचातुर्यतः पूर्यताम् ॥ ११३ ॥ का मेघादुपयाति कृष्णदयिता का वा सभा कीदृशी कां रक्षत्यहिहा शरद्विकचयेत्कं धैर्यहन्त्री च का । कं धत्ते गणनायकः करतले का चञ्चला कथ्यतामारोहादवरोहतश्च निपुणैरेकं द्वयोरुत्तरम् ॥ ११४ ॥ कुत्र श्रीः स्थिरतामुपैति भुवि को दुःखी किमीषत्पदं धर्मादीन्विनिवारयन्ति पथि के पान्थस्य दीनस्य च । का संबुद्धिरिह श्रियश्च तमसः कौ नाशकौ प्रोच्यतां गच्छन्तं पथिकं किमाह यवनः सङ्गाभिलाषान्वितः ॥ ११५ ॥ कः खे भाति हतो निशाचरपतिः केनाम्बुधौ मज्जति कः कीदक्तरुणीविलासगमनं को नाम राज्ञां प्रियः । पत्रं किं नृपतेः किमम्बु ललितं को रामरामाहरो मत्प्रश्नोत्तरमध्यमाक्षरपदं यत्तत्तवाशीर्वचः ॥ ११६ ॥ किं त्राणं जगतां न पश्यति च कः के देवता-विद्विषः किं दातुः करभूषणं निरुदरः कः किं पिधानं दृशाम् । के खे खेलनमाचरन्ति सुदृशां किं चारुता-भूषणं बुद्ध्या ब्रूहि विचार्य सूक्ष्ममतिमंस्त्वेकं द्वयोरुत्तरम् ॥ ११७ ॥ कः कर्णारिपिता गिरीन्द्र-तनया कस्य प्रिया कस्य तुक्को जानाति परेङ्गितं विषमगुः कुत्रोदभूत्कामिनाम् । भार्या कस्य विदेहजा तुदति का भौमेऽह्नि निन्द्यश्च कस्तत्प्रत्युत्तरमध्यमाक्षरपदं सर्वार्थसंपत्करम् ॥ ११८ ॥ लावण्यं क नु योषितां नभसि के संचारमातन्वते कासामुच्चतरा भवन्ति निनदाः क क्रीडतो दम्पती । केषु श्रीः प्रकटीचकार भगवान्सीतापतिः पौरुषं मत्प्रश्नोत्तरमध्यवर्णघटितो देवो मुदे सोऽस्तु वः ॥ ११९ ॥ कः पूज्यो सुजनत्वमेति कतिमः क्व स्थीयते पण्डितैः श्रीमत्या शिवया च केन भुवने युद्धं कृतं दारुणम् । किं वाञ्छन्ति सदा जना युवजना ध्यायन्ति किं मानसे मत्प्रश्नोत्तरमध्यमाक्षरपदं भूयात्तवाशी-र्वचः ॥ १२० ॥ क्षोणी कं सहते करोति दिवि का नृत्यं शिवायाः पतिर्भूतानां कमयुङ्क्त जीवहरणे का रामशत्रोः पुरी । कं रक्षन्ति च साधवः पशुपतेः किं वाहनं प्रोच्यतामालोमप्रतिलोम-शास्त्रचतुरैरेकं द्वयोरुत्तरम् ॥ १२१ ॥ त्रय्याद्याः के धनं किं भवति मृगमदे को गुणः का च माया

---

-जलम्, महाप्रलये हरिः शेषशय्यायां समुद्रजले शेते । जरा वृद्धत्वम् । आजिसमुद्र आजौ संग्रामे समुत सहर्षः । भवः संसारः। हे अच्छलित हे अवञ्चित । भूः पृथ्वी । इपरा इः कामस्तेन परा उत्कृष्टा नित्ययौवनवती । गवि वाण्याम् । राः द्रव्यम् । जितम् । विकचवारिजराजि-समुद्भवोच्छलितभूरिपरागविराजितं विकचानां प्रफुल्लानां वारिजानां कमलानां राजिः पङ्क्ति-स्तस्याः समुद्भवस्तेन उच्छलितो यो भूरि प्रचुरः परागः तेन विराजितं शोभितम्। ११२-११५,(?) ११६ ग्रहेशः । रामेण । मैनाकः । मन्थरम् । सचिवः । तुरङ्गः, गजः, राजीवम्, रावणः, एत-न्मध्यमाक्षरघटितं वाक्यं 'हे मेःनाथ चिरं जीव' इति राजानं प्रति आशीर्वचनम् । ११७ अन्धः अन्नं, दृग्विहीनश्च । दानवाः दैत्याः, दानवारि च । दानोदकमित्यर्थ । तमः राहुः, अन्धकारश्च । वयः पक्षिणः तारुण्यं च । ११८ वासवः । हरस्य ह्रस्वस्य । तुगागमो 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रेण । मतिमान् । मनसि । रामस्य । कुस्तुतिः । अभ्यङ्गः । एतन्मध्यमाक्षरघटितवाक्यं 'सरस्वति नमस्तुभ्यम्' इति । विषमाः पञ्च गावो बाणा यस्येति विषमगुः कामः। ११९ । १२० (?) १२१ भारं-रंभा । कालं-लंका । दीनं-नंदी । १२२ त्रयाणां वेदानामाद्यवर्णाः 'ओं ओं ओं'-

केऽगाधाः किं झषाणां जलमलघु सुखं योषितां केन दीनः । कस्के देवारयः को ननु निमिरदितिर्ब्रूहि केषां जनित्री द्यौः का को वैष्णवास्ये बुध वसति जपो मध्यवर्णैः पदानाम् ॥ १२२ ॥

## युगपत्प्रश्नोत्तरे ।

भारतं चेक्षुदण्डं च सिन्धुमिन्दुं च वर्णय । पादमेकं प्रदास्यामि प्रतिपर्वरसोदयः ॥ १ ॥ कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप । तथापीयमवस्था ते नहि सर्वे भवादृशाः ॥ २ ॥ अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता । त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी कचित् ॥ ३ ॥ भूरिभारभराक्रान्तो बाधति स्कन्ध एष ते । न तथा बाधते स्कन्धो यथा बाधति बाधते ॥ ४ ॥ काव्याकुलिता माद्यति काञ्चन मुद्रां मनोरमामाहुः । इह काऽलिकावतंसितचन्द्रकला कामिता योग्या ॥ ५ ॥ पृच्छामि कोऽपकारी दुःसाध्या कामलाधिका पीडा । काचविभूषाऽल्पधना परिणामे ना कमभिलषति ॥६॥ दश-मुखगुताऽलङ्का ग्रीष्मे कासारकेलिरुद्दिष्टा । कासार्तिः स्यति वृद्धं कः स्रष्टा केकिनः शरदि ॥ ७ ॥ निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् । उत्पत्तिरिन्दोरपि निष्फलैव कृता विनिद्रा नलिनी न येन ॥ ८ ॥ अङ्गणं तदिदमुन्मदद्विपश्रेणिशोणितविहारिणो हरेः । उल्लसत्तरुणकेलिपल्लवां सल्लकीं त्यजति किं मतङ्गजः ॥ ९ ॥ इदमनुचितक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः । इदमपि न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥ १० ॥ यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा । अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरु-णीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥ ११ ॥ भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना स मे रामः स्थाता न युधि पुरतो लक्ष्मणसखः।इयं यास्यत्युच्चैर्विपदमधुना वानरचमूर्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥ १२ ॥ अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः पञ्चाशन्मधुगन्धमत्तमधुपाः क्रोधोद्धताः सिन्धुराः । अश्वानामयुतं प्रपञ्चचतुरं पण्याङ्गनानां शतं दण्डे पाण्ड्यनृपेण ढौकितमिदं वैतालि-कायार्पणम् ॥ १३ ॥

---

-हति, धनं च कनकम्, मृगमदे कस्तूर्यां गुण आमोदः । माया शाम्भवी । अगाधाः सागराः । झषाणां जीवनं जलम् । योषितां सुखं कान्तेन वधतो दीनः प्रवासी भवति । देवारयः। असुराः । निमिः, विदेहः । अदितिः देवानां जनयित्रीत्यर्थः । द्यौः वियत् इत्येषाम्मध्यमाः वर्णाः ओं नमो भगवते वासुदेवाय' इति मन्त्रमुद्भावयन्ति ।

१ भोजराजस्योक्तिः पूर्वार्धम् । उत्तरार्धं तु कालिदासस्य । २ प्रथमतृतीयपादौ नदीमु-त्तितीर्षोर्भोजस्योक्तिरूपौ द्वितीयचतुर्थपादौ राजदर्शनार्थिनः काष्ठभारवाहपण्डितस्य प्रत्युक्तिः। ३ अत्र वक्रोक्तिः । ४ पूर्वार्धं मृगयाया गृहमागच्छतः शिबिकारूढस्य भोजराजस्योक्तिः। उत्तरार्धं पुना राजदर्शनार्थं गच्छतः शिबिकावाहकस्य पण्डितस्य प्रतिवचनम्। ५ पूर्वार्धं बिल्हणस्योक्तिः । उत्तरार्धं राजकन्यायाः प्रतिवचनम् । ६ पूर्वार्धं तच्चित्तपरीक्षिकाया राजकन्याया वचनम्, उत्तरार्धं तदनुरक्तस्य बिल्हणस्य प्रतिवचः । ७ पूर्वार्धं सारक्रीडां कुर्वत्याः शीलाभट्टारि-कायाः वचनम्, उत्तरार्धं तु भोजस्य। ८ पूर्वार्धं रात्रौ चन्द्रं वर्णयतो भोजस्य । उत्तरार्धं पुना राज-दर्शनार्थम् आगतस्य छद्मचौरपण्डितस्य वचनम् । ९ प्रतिचरणसप्तमाक्षरविलोपात् द्वितीयोऽर्थः सम्भवति, पूर्वचरणत्रयं राघवस्य सीतां प्रति वचनम् । चतुर्थचरणस्तु तस्याः प्रत्युक्तिरूपः । १० निखिलमपि पद्यं विज्ञायते भाण्डागारकस्योक्तिः । 'वैतालिकायार्पय' इति च स सप्ताक्षराणि वैतालिकगीतदत्तकर्णस्य विक्रमादित्यस्य प्रतिवचनम् ।

## व्यतिरेकविच्छित्तिनिर्देशः ।

स्फूर्तिविशेषं दधतः परलोकभयं प्रसह्य संहरतः । भेदं परमाकारमृते न वेद्मि शस्त्रस्य शास्त्रस्य ॥ १ ॥ रोमाञ्चमङ्कुरयतां समधिकमाश्लिष्यतां मुहू रहसि । दाराणां च दराणामाकारमृते न वेद्मि वैधर्म्यम् ॥ २ ॥ अपि सम्भृतस्य सततं रिक्तत्वं बिभ्रतो विसर्जनतः । उदरस्योदारस्य च केवलमाकारतो भेदः ॥ ३ ॥ दुर्बलजनपाणितलं प्राप्य स्थेमानमुज्झतां सहसा । दाराणां भाराणं परमाहुर्भेदकं दंभम् ॥ ४ ॥ विजयपराक्रमसारं विस्फुरदुत्साहवृत्तिविस्फारम् । प्रधनं पुनः प्रधानं परमाहुर्भिन्नमाकारात् ॥ ५ ॥

## व्याजस्तुतिविच्छित्तिनिर्देशः ।

त्वदुपाश्रयेण पुरुषाः पुरुषोत्तमैपत्नि मन्ददर्ङ्महसः । यचन्द्रचन्द्रिकाढथेऽप्यध्वनि विचरन्ति दीपिकोद्योतैः ॥ १ ॥ मूकः प्रागथ वाग्मी पदमपि चलितुं नो पटुर्यासि पद्भ्यां प्रासांस्त्वम्प्रेक्षमाणः प्रणमसि तदहं वेद्मि गीतं तवान्ध्यम् । सोऽन्नद्वेषोऽपि नष्टः श्रवणमुदयते हन्त बाधिर्यबाधादिष्ट्या सन्मित्र जाता तव विभवमहासन्निपाताद्विमुक्तिः ॥ २ ॥ मूकः पूर्वमभूः सखे त्वमधुना वाग्जालमालम्बसे चक्षुर्गाढनिमीलितं तव पुनर्दिष्ट्या समुन्मीलितम् । सद्भोज्ये रुचिरस्तमाप सहसा जातो बुभुक्षोदयो दृष्ट्वा ध्वस्तगदं भवन्तमभितो जाताः प्रसन्ना वयम् ॥ ३ ॥ भोजाद्याः क्षितिपा यशः कृत इह स्वीयामपीमां श्रियं भोगार्थं विबुधव्रजाय यददुस्तेषामयोग्यं हि तत् । रुद्ध्वा कोशगृहे स्वभावचपलां तां यद्धराधीश्वरा रक्षन्त्याधुनिकाः सखे तदुचितं कोऽस्त्यत्र ते संशयः ॥ ४ ॥

## चित्रम् ।

+नमामि मामनोनुन्नमानं मुनिममानिनम् । नानाननममानाममोंनामानमुमेनमुम् ॥ १ ॥ तारतारतरैरेतैरुत्तरोत्तरतो रुतैः । रताती तित्तिरी रौति तीरे तीरे तरौ तरौ ॥ २ ॥ ततुता ततुतां नीता तेन ते नीतनीतिना । नाता नूतनता तान्ति तनौ तेनातनोति नः ॥ ३ ॥ या माता ममता माया मापरोक्षक्षरोपमा । तारोने गगनेऽरो तामक्षगच्छच्छगक्षम ॥ ४ ॥ सर स्वतिप्रसादं मे स्थितिं चित्तसरस्वति । सरस्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ॥ ५ ॥ ससार साकं दर्पेण कंदर्पेण ससारसा । शरं

---

१ दकारम्भकारं च । २ हे श्रेष्ठस्य पुरुषस्य पत्नि नारायणप्रिये इति च । ३ लक्ष्मीवन्तो हि न प्रायोऽन्यं पश्यन्तीति तथोक्तिः । ४ सम्पन्नावस्थायाम् । ५ दारिद्र्यावसरे ।

---

+ १ द्व्यक्षरं पद्यम् । नमामि नमस्करोमि । कम् । उं विष्णुम् । न केवलं तमेव अपि तु उमेनं पार्वतीनाथम् । हरिहरमित्यर्थः । किंभूतम् । मामनोनुन्नमानम् । मा लक्ष्मीस्तस्या मनसो नुन्नोऽपहृतो मानो येन तं लक्ष्मीचाञ्चल्यगर्वापहारिणम् । पु० मुनिं योगीश्वरम् । अमानिनं मानरहितम् । पु० नानाननं नानाविधानि आननानि मुखानि यस्य तं दशावतारत्वादनेकविधमुखम् । पु० अमानामम् अमानमाकाशममति अतिक्रामतीत्यमानामस्तम् । पु० ओंनामानं ब्रह्मस्वरूपम् । एवंविधं उमेनं हरम् उं हरिं च नमामि । २-३ द्व्यक्षरः । ४ उ॰ इति संबोधनम् । हे अक्षगच्छच्छगक्षम अक्षैरिन्द्रियैर्गच्छन्ति प्रतिपद्यन्ते ते अक्षगच्छाः विषयाः तेषां छगः नाशः तत्र क्षमः समर्थः तस्य संबोधनम् । हे महायोगिन् । गगने आकाशे ताम् अर प्राप । किंभूते गगने तारोने ताराभिः ऊनं तस्मिन् । तां काम् । या माता अर्थात् विश्वस्य माता । पु० या ममता ममतास्वरूपेण वर्तते । या वैष्णवी माया । पु० । या मा लक्ष्मीः । पु० । या परोक्षक्षरोपमा परश्चासौ उक्षा च परोक्षः वृषभः तेन क्षरति गच्छतीति स श्रीमहादेवः तेन उपमीयते इति सा । ५ स्वतिप्रसादं सुन्दरातिप्रसन्नतां सर प्राप्नुहि । चित्तसरस्वति चित्तसमुद्रे । क्षेत्रं शरीरमेव कुरुक्षेत्रं तत्र सरस्वत्याख्यनदीरूपे । नद्याः समुद्रस्थिते-

नवाना विभ्राणा नाविभ्राणा शरन्नवा ॥ ६ ॥ मारारिशक्ररामेभमुखैरासाररंहसा । सारारब्धस्तवा नित्यं तदर्तिहरणक्षमा ॥ ७ ॥ माता नतानां संघट्टः श्रियां बाधितसंभ्रमा । मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा ॥ ८ ॥ सरला बहलारम्भतरलालिबलारवा । वारलाबहलामन्दकरला बहलामला ॥ ९ ॥ भासते प्रतिभासाररसाभाताहताविता । भाविताात्मा शुभा वादे देवाभा बत ते सभा ॥ १० ॥ सारमासुषमा चारु रुचा मारवधूत्तमा । मात्तधूर्ततमावासा सा वामा मेऽस्तु मा रमां ॥ ११ ॥ रसा साररसा सार सायताक्ष क्षतायसा । सातावात तवातासा रक्षतस्त्वस्त्वतक्षर॥ १२ ॥ यदानतोऽयदानतो नयात्ययं न यात्ययम् । शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम् ॥ १३ ॥ आम्नायानामाहान्त्या वागीतिर्नीतिर्भीतिः प्रीतिः । भोगो रोगो मोदो मोहो ध्येयेच्छेत्क्षेमे देशे॥ १४॥ नागविशेषे शेषेऽशेषेऽपि संहृते जगति । हंस्यसिकालं कालं का लङ्कालङ्घने स्तुतिर्भवतः ॥ १५ ॥

---

रौचित्येन मम चित्तसमुद्रे स्थितिं कुरु इत्यर्थः । ६ नवा शरत् कंदर्परूपेण दर्पेण साकं ससार । किंभूता ससारसा सारसेन पक्षिविशेषेण पद्मेन वा सहिता । शरं काण्डं बिभ्राणा पोषयन्ती । परिपाकं प्रापयन्तीति भावः । नवाना नवमनः शकटं कर्दमाभावेन पथि यस्यां सा । न अविभ्राणा वीनां पक्षिणां भ्राणः शब्दः न तेन रहिता च । ७-८ खड्गबन्धोऽयम् । उमा गौरी शं सुखं मे मह्यं दिश्याद्देयात् । कीदृशी आदिजा जगदादिभवा तथा मारारिः शम्भुः, शक्र इन्द्रः । रामो जामदग्न्यो दाशरथिर्वा, इभमुखो गणाधिपस्तैरासाररंहसा वेगवर्षवद्वेगेनादरावेशात्सार उत्कृष्ट आरब्धः प्रकृतः स्तवः स्तुतिर्यस्याः सा । नित्यं सर्व्वदा तेषां मारारिप्रभृतीनामर्तेः पीडाया हरणेऽपनयने क्षमा समर्था । नतानां मातेव माता । वत्सलत्वात् । तथा संघट्टः समूहः । कासां श्रियामृद्धीनाम् । तथा बाधितो नाशितो भक्तानां संभ्रमो भयं यया सा तथाभूता । तथा मान्या पूज्या।अथ सीमा मर्यादा रामाणां स्त्रीणाम् सर्वोत्तमेत्यर्थः । ९ मुरजबन्धोऽयम् । शरद्वर्णनमिदम् । सरलो दीर्घ आसमन्ताद्बहलेन प्रभूतेनारम्भेण तरलानां चञ्चलानामलिबलानां भ्रमरसैन्यानामारवः शब्दो यस्यां सा सरलाबहलारम्भतरलालिबलारवा । तथा वारलाभिर्हंसीभिर्बहला संतता । यदि वा वारेण परिपाट्या लावो हवनं येषां तानि तथाविधानि हलानि हलकृष्टधान्यक्षेत्राणि यत्र सा तथाविधा । तथा करं लान्ति गृह्णन्ति ये ते करला नृपा अमन्दा यात्रायां सोद्यमाः करला यस्यां सा तथाविधा तथा बहलानिप्रभूतान्यामलकान्यामलकीफलानि यत्र सा तथाविधा।यदि वा बहलमत्यर्थममलानिर्मला बहलामला । १०-११ पद्मबन्धोऽयम् । १२ सर्वतोभद्रः। हे सार उत्कृष्ट तव रक्षतः पालयतः सतः सा रसा पृथ्वी साररसा उत्कृष्टरसास्तु भवतु । हे आयताक्ष दीर्घलोचन, तथा सा क्षतायसा चास्तु। क्षतो नाशित आयोऽर्थागमो यैस्ते क्षतायाश्चोरादयस्तान्स्यति अत्यन्तं नाशं नयतीति कृत्वा तथा सातं सुखमवतीति सातावा, श्रेयस्कारिणीत्यर्थः । अस्त्विति सर्वत्र योज्यम् । हे अत, अतति नित्यमेवोद्यमं भजत इत्यर्थः। तथा अतासा अक्षया रसा । भवत्वित्यत्रापि योगः। तुर्नियमे रक्षत एव, न त्वबलिष्ठस्य । तथा हे अतक्षर तक्षणं तक्षस्तनूकरणं तं राति प्रददातीति तक्षरः । न तक्षरोऽतक्षरः । पुष्टिद इत्यभिप्रायः । १३ यस्यामानतोऽयं जनः न यात्ययं नीतिविश्लेषं न याति कुतः अयदानतादिति भावः । शुभावहविधिदानात् शिवे मङ्गले हिताम् अनुकूलाम् । शिवेन महादेवेन ईहिताम् प्रार्थनीयाम् । स्मरेण कंदर्पेण अमितां मातुमयोग्याम् अनभिभूतामित्यभिप्रायः । १४ चतुर्मात्रिकं विद्युन्मालावृत्तम्। आम्नायानां वेदानामन्त्या वाक् उपनिषद् आह कथयतिस्म । किम् इतिः नीतिः भीतिः प्रीतिः भोगः रोगः मोदः मोहः क्षेमे शुभे देशे स्थाने आत्मपरात्मनोः ध्येयेत् इच्छेच्च । १५यमानुप्रासः । हे राम त्वया अशेषे समस्ते जगति संहृतेऽपि त्वं नागविशेषे विशिष्टे नागे शेषनागे स्वपिषि, शेषे तथा असिवत् कालं कृष्णं कालं हंसि मारयसि इत्यतो भवतस्तव लङ्कायां लङ्घने पारगमने का स्तुतिः स्तवनं न किमपीत्यभिप्रायः ।

विनायमेनो नयतासुखादिना विना यमेनोनयता सुखादिना । महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥ १६ ॥ विश्वस्य हेतुरमरैर्बहु गीयसे त्वं विश्वम्भरे शिवशिवे त्रिगुणात्ममूर्ते । चिद्वयोमतोऽपि परमां प्रथमां वदन्ति त्वां योगिनः स्तुतिपराः प्रणिधानदृष्ट्या ॥ १७ ॥ पायाद्वः करणोऽरणो रणरणो राणो रणोवारणो दत्ता येन रमारमारमरमा रामारमाः सा रमा । स श्रीमानुदयोदयो दयदयो दायोदयोदे दयो विष्णुर्जिष्णुरभीरभीरभिरभीरामीरभीसारभीः ॥ १८ ॥ कन्दर्पादपि सुन्दरो रविमहाः प्रत्यर्थिसीमन्तिनी वक्त्राम्भोजसुधाकरोऽति विभवो युद्धेषु पार्थोपमः । रक्षाक्षजगतः स्वकीर्तिविदितो रामोऽस्तु युक्तो मुदा दानी शङ्करसेवको वरगुणो नीत्युत्तमः सर्वदा ॥ १९ ॥ सर्वत्राहतशासनः क्षितितले भास्वत्प्रतापानलो निश्शेषीकृतदस्युनीतितिमिरः सन्मानसामोदकः । विख्यातो विमलैर्गुणैर्मतिमतामभ्यर्थनीयः सदा दाता त्रासयतां निगृह्य विरुधो लोकेऽधिकः सम्पदा ॥ २० ॥ जेताजा-

---

—१६ मृतं जटायुं दृष्ट्वा रामं प्रति लक्ष्मणोक्तिरियम् । अयं विना पतत्रिस्वरूपो ना पुरुषः जटायुः पुरुषजातिः यमेन यमराजेन मानसादरं यतमानानां रक्षितुमुद्यतानां सादं विषादं रातिददातीति तत् यथा भवेत्तथा, अरं शीघ्रं मानसात् मानसं चित्तमेव मानसं मानससरस्तस्मात् अदीयत अखण्डयत । महाजनः महात्मा महाजनोदी च । महम् उत्सवमजन्ति क्षिपन्ति ये दुर्जनास्तन्नोदी तदपसारकृत् । किम्भूतेन यमेन एनो अपराधमृतेविना नयता स्वपुरं प्रापयता, असुखादिना प्राणभक्षकेण सुखादिना हीनं कुर्वता च इत्यभिप्रायः । १७ एतस्य वसन्ततिलकाछन्दसो दुर्गास्तुतिरूपस्य श्लोकस्य चतुर्णामपि चरणानां षष्ठसप्तमाष्टमाक्षरलोपेन इन्द्रवज्रावृत्तं शिवस्तुतिश्च जायते । १८ सः पुराणप्रसिद्धः वेवेष्टि व्याप्नोति विष्णुर्भगवान्वो युष्मान्पायादित्यर्थः । व इति बहुवचनेन सर्वसमानत्वं सूचितम् । मायया स्पृष्टस्य तस्य कथं रक्षकत्वं भवतिवत्यतः प्राह श्रीर्लक्ष्मीर्नित्यमस्यास्तीति श्रीमान् मायाविनाभूत इत्यर्थः । ननु बहूनां रक्षणपरिपन्थिनां विद्यमानत्वात्कथमस्य रक्षकत्वमित्यत आह जिष्णुरिति जयनशीलः । तथा च रक्षणपरिपन्थिनोऽपि तद्वशगा इति भावः । सम्प्रति वः इति बहुवचनोक्तं सर्वसमानत्वं द्रढयितुमवतारविशेषान्विशेषणमुखेनाह । करण इति । कं जलं रणति गच्छति करणः मत्स्यकूर्मावतारवान्, अरणः न विद्यते रणः संग्रामो यस्य स तथाभूतः । अनेन च ब्रह्मकर्ममात्रप्रणयी वामनावतार उक्तः । यस्येति शेषः । स कः यस्य विष्णोः राणः रणस्यायं राणः रणसंबन्धी । रणरणः रणाच्छब्दाज्जायमानो रणः शब्दो रणरणः प्रतिशब्दः । रणोवारणः रणस्य उः लक्षणं व्रणादिचिह्नं येषां ते रणवः वीराः तान् वारयति इति रणोवारणोऽभूत । उकारस्त्विह लक्षणपरः । अनेन नृसिंहावतार उक्तः । येन अरं शीघ्रं अरीणां समूहो आरं अरिवृन्दं मिनोति हिनस्ति, आरमाः तेन आरमा अरिकुलनिहन्त्रा रमा लक्ष्मीर्विप्रेभ्यो विश्राणिता सम्प्रत्ता । तया रमया रमते असौ रमारमो विष्णुस्तस्मिन्रमन्ते ते रमारमरमाः ब्राह्मणास्तान् आरमयति आमोदयति सः, तथाभूत आस बभूव । अनेन क्षत्रियान्तकारिपरशुरामावतार उक्तः । उदयोदयः । याति प्राप्नोति इति यः, न यः अयः अप्राप्तः उदयो येन तत् अयोदयं भूधरादि उत् उद्धृतम् अयोदयं अप्राप्तोदयं जलमग्नं भूधरादि येन सः । अनेन आदिवराह उक्तः । पु० क० । अदयदयः अदयेषु देदयते सः । क्रूरेष्वपि दयाधानित्यभिप्रायः । अनेन बौद्धावतार उक्तः । दायोदयोदयः दायार्थं विभागार्थम् । उत् उद्धृतम् अयो लोहमयं शस्त्रं यैस्ते दायोदयाः धार्तराष्ट्राः तान्द्यति खण्डयति तथाविधोऽर्जुनः तस्मिन् दयते स तथा । अनेन कृष्णावतार उक्तः । पु० क० अभीरभीरभिः पराङ्गनाहरणादिभ्यः कृत्येभ्योऽभीरा निर्भयाः रावणादयस्तेषु भिये भयार्थं रभते राभस्येन वर्ततेसः । अनेन रामावतार उक्तः । अभीराभीरभीसारभीः अभीराः शूराः भीराः कातराः तेष्वपि कोट्या लोभादिवशात् भिये भयं सारयन्ति प्रयच्छन्ति ते दुष्टम्लेच्छास्तेषां भीः यस्मात् सः । अनेन कल्क्यवतार उक्तः । १९ अयं चक्रबन्धः । २० अयमपि चक्रबन्धः ।—

वूर्जितौजा विजयिजविगजभ्राजि सद्वाजि राज्यां तेजोभाजां जजौर्जाविजितजनजितां स्वौजसा दुर्जनानाम् । योऽन्यब्जोऽजातजाड्यो जगति जयिशयो जम्भजित्पूजितौजा अज्यायं जन्मवीज जयतु सरजसौर्जित्यजित्सोऽञ्जसा वः ॥ २१ ॥ क्षेमं ते पक्ष्मलाक्षि किसअं खेमं मदङ्गं दिढम् (कृशकं क्षेमं मदङ्गं दृढम्) एतादृक्कृशता कुतः तुह पुणो पुट्टं सरीरं जदो ( तव पुनः पुष्टं शरीरं यतः । केनाहं पृथुलः प्रिये पणइणीदेहस्स संमेलना ( प्रणयिनीदेहस्य सम्मेलनात् ) त्वत्तस्तन्वि न काऽपि मे जइ इदं खेमं कुदो पुच्छसि ( यदीत्थं क्षेमं कुतः पृच्छसि ) ॥ २२ ॥ मञ्जुलमणिमञ्जीरे कलगम्भीरे विलाससरसीतीरे । विरसाऽसि केलिकीरे किमालि धीरे च गन्धसारसमीरे ॥ २३ ॥ गोपीलोचनयुग्मजालवसतिर्गोबालगोष्ठीरतिर्गोरक्षाधृतगोपवेषरुचिरो गोवर्धनागोद्धरः । गोलोकाधिपतिः खगोत्तमरथो गोत्रापतिं गोपतिर्गोविन्दोऽवतु गोकुलादृतमना गोपालगोत्रोद्भवः ॥ २४ ॥

## भाषाचित्रम् ।

उत्सरङ्गकलितोरुकटारीभाजिरा उत भयंकरभालाः । सन्तु पायकगणा जय तैस्त्वं गामगोहरमिलाव इलावी ॥ १ ॥ कुललालिलावलोले शलिलेशे शालशालिलवशूले । कमलाशवलालिबलेऽमाले दिशमन्तकेऽविशमे ॥ २ ॥ कमनेकतमादानं सुरतनरजतुच्छलं तदासीनम् । अप्पतिमानं खमते सोऽगनिकानं नरं जेतुम् ॥ ३ ॥ तोदी सदिगमणमदोऽकलहं स सदा बलं विदन्तारितम् । आरमहावसरं सा सदमारं

---

–२१ विजयिनो जविनश्च ये गजास्तैर्भ्राजत इत्येवम्भूते । सतां वाजिनां राजिर्यत्रेति तत्र, आजौ सङ्ग्रामे तेजोभाजां तेजस्विनां जजन्ति युध्यन्तीति जजा योधास्तेषामूर्जा बलं तेन विजितं जनं जयन्तीति तेषां जजौर्जाविजितजनजितां दुर्जनानां स्वौजसा जेता अत एवोर्जितौजा न विद्यते न्यब्जो रोग उपतापो वा यस्य सः । अजातं जगति न जातं जाड्यं यस्य तादृशः । जम्भजिता शक्रेणाऽपि पूजितं प्रशंसितमोजो बलं यस्य, सरजसं राजसं यदौर्जित्यं तज्जयतीत्येवम्भूतः । यो जयिनो विष्णोः हस्तोऽस्ति सोऽज्यं निकृष्टं जन्मबीजं कर्म्मबन्धनं जयतु हरतु । २३अयं श्लोकः संस्कृतप्राकृतसौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव।

१ भो राजन् तव पायकगणाः सेवका उत्सरङ्गकलितोरुकटारीभाजिराः उत्सरङ्गा अति मुदिताः कलितोरुकटाः सज्जितसुकपोला ये अरीभाः शत्रुजनगजास्तेषां य आजिः सङ्ग्रामः तं रान्ति ददतीति ते सन्तु । उत पुनः भयङ्करभालाः भृकुटीभीषणललाटाः भवन्तु । तैः पायकगणैः । इलावः पृथ्वीरक्षकः इलावी जितकंदर्पस्त्वं मनोहरं यथा भवेत्तथा गां पृथ्वीं जय। शत्रुजनदेशानात्मीयान्कुरुतादितिभावः । २ अत्र संस्कृतमागधीभाषयोः श्लेषः। तथा च–कुलानि लालयन्ति पोषयन्तीत्येवंशीला ये तेषां लावे छेदे लोलस्तत्र शलन्तीति शलाः सोद्यमाः ते यत्र देशे स शली, लिशति अल्पी करोतीति शलिलेशस्तत्र । शालैर्गृहैः शालन्ते शोभन्ते ये तान् लुनातीति शालशालिलवः, स चासौ शूलं चेति दुःखजनकत्वात्तथाभूते । कमला लक्ष्मीः तस्याः शवा–दरिद्राः तेषु ललति लसतीत्येवंशीलं बलं यस्य तस्मिन् । मलनं मालः, न मालोऽस्येत्यमालस्तत्र । मलधारणे । अनिवार्य इत्यभिप्रायः । अन्तके मृत्यौ सति एवासुदेवे या दिङ् मार्गस्तामविशं प्रविष्टोऽस्मीति संस्कृतार्थः । 'कुररालिरावलोलं सलिलं तत्सारसालिरवशूरम् । कमलासवलालिवरं मारयति शाम्यतो विषमम् ॥' इति मागधी छाया, अर्थश्चायम्,–कुरराणां तदाख्यानां पक्षिणां याऽऽलिस्तद्रावै रोलः–कलकलः यत्र तत् । सारसानां याऽऽलिस्तद्रवेण शूरं तद्विरहिमारणे क्षमम् । कमलानामासवं (मकरन्दं) ये लान्ति ते च येऽलिनस्तैर्वरम् । विषमं-वियोगिजनदुःखावहं तत्सलिलं शाम्यतः-शमजुषोऽपि मारयति । शरदि तादृशं जलं विलोक्य मुनयोऽपि क्षुभ्यन्तीति भावः । ३ अत्र संस्कृतपैशाचीभाषयोः श्लेषः–'हे सुरतनः ! सुरतमात्रे पुरुष सुरतेतरचातुर्यशून्ये इत्यर्थः । ख ( वत ) मते–शून्यप्रज्ञ ! यस्त्वया श्लाघ्यते स कं नरं जेतुम् भजतु यातु । अहो–

गदासारम् ॥४॥ धीरा गच्छदुमेहतमुद्धरवारिसदःसु । अभ्रमदप्रसराहरणं रविकिरणात्तेजःसु ॥ ५ ॥ एष पश्य यवनीनवनीवीं सम्ममर्द मदमुग्धमुखश्रीः । प्रत्युवाच यवनी कुपितेव चलमुवे दुख न दे मुझको तू ॥ ६ ॥ ज्वरार्दिता या कटकान् कषायान्न चेत्पिबेत्किं वद वैद्य देयम् । निबोध हंसी मधुरप्रचारे वहां बनप्सा शरबतिपलावे ॥ ८ ॥ पित्ततापितशरीरवल्लरी सा सखी वद "हकीम दबायी" औषधं शृणु मृगाक्षि मनोज्ञं "जा गुलाब गुलकन्द खिला दे" ॥ ९ ॥ हा हन्त किं त्वमसि सुन्दरि दुःखितेव सा क्लिश्यते मम सखी वद किं हि तस्याः । अम्लोर्ध्ववायुरपि वैद्य न पच्यतेऽन्न "देना गुलाबजलसङ्ग सिकंजबीना" ॥ १० ॥ दृष्ट्वा कामपि तुन्नवायवनितां ताम्बूलरागाधरां साकूतं निजगाद "दुर्जन सुही चाहे सुही लीजिये" । सर्वाङ्गस्फुरयौवने स्पृहयति त्वत्सेवनं मे मनः प्रोत्तिष्ठ त्वरितं प्रसीद "हमरे सीने न लागो जरा" ॥ ११ ॥ अन्यां कामपि तुन्नवायललनां मातङ्गकुम्भस्तनीं दृष्ट्वा सस्मितमाह जान तुमरी काहे कि ये अंगिया । निघ्नन्ती नितरां कटाक्षविशिखैः सावग्विादग्धा पुनः साभिप्रायमुवाच "हात धरिके सीने प मलमलसही" ॥ १२॥ घाटोद्यानमहं कदाचिदगमं बाहर्हवाके लिये काचित्तत्र कुरङ्गलोलनयना दिल्दारमालिन्मिली । मद्वाक्यं वनपालिके शृणु मनाक् कर्ने तु देगी मुझे सेत्युक्ताऽऽह न तानि मे त्वमधुना मर्वा जरा लीजिये ॥ १३ ॥ हट्टे कुत्रचिदीक्षितः पथि मया नद्दाफ लौंडा सजा कृत्वा कज्जलरेखिकां नयनयोर् मुड्ढेप बैठा हुआ सर्वानेव विमोहयन्स्मितरुचा "गालोंकु त्यारी करे" हंहो किं कथ-

---

--न तादृक् पुरुषोऽयं स जेष्यतीति । किम्भूतम्--अनेकतमान्यादानानि यस्य तम् । तत् प्रसिद्धं छलं-कपटमासीनमुपेतवन्तम् । अपां-जलानां पतिः-वरुणस्तस्येव मानो यस्य तम् । अगा अचला निकाना दीप्तिः, यस्य तं तादृशम् । पैशाची छाया तु'कामे कृता मोदानां सुवर्णरजतोच्छलद्दासीनाम्, अप्रतिमानं क्षमते सगणिकानां न रञ्जयितुम ॥' इति । अर्थश्चायम्--स पुरुषो रञ्जयितुमात्मरञ्जनाय कामविषये कृतामोदानां सुवर्णरजताभ्यामुच्छलन्त्यो दास्यो यासां तादृशीनाम् गणिकानामप्रतिमानं न क्षमते । तदानीमादरमभिलषतः कदाचिदुपकृतगणिकस्येयमुक्तिः । इति । ४ अत्र संस्कृतशूरसेनीभाषयोः श्लेषः । 'तु' इति परानिति तोदी देशनं दिक् उपदेशः । तया सह वर्त्तत इति सदिक् । न गणेन सहायेन मदो यस्य सः, स वित् । सदा अकलङ्क ( परिभूतत्वात् ) निर्वैरम् अतएव दमेहाया उपशमचेष्टाया अवसरो यस्य तत्, तथा अस्यन्ते क्षिप्यन्ते इत्यासाः शरास्तान् घ्नन्ति खण्डयन्तीत्यासदा धनुर्धरा तैः सह वर्त्तत इति सासदं गदासारम् इदमारमरिसक्तं बलमत्रर्मध्ये-भार-ससार । इति संस्कृतार्थः । 'ततो दृश्यते गगनमदः कलहंसशतावलम्बितान्तरितम् । आरतमेघावसरं शाश्वतमारं गतासारम् ॥' इति शूरसेनीछाया । अर्थश्चायम्--आरतो निवृत्तो मेघानामवसरो यत्र तादृशम् । शाश्वतो मारः मदनो यत्र तादृशम् । गत आसारः--धारासम्पातो यत्र तादृशम् । इति शारदाकाशवर्णनमिदम् । ५ संस्कृतापभ्रंश भाषयोः श्लेषः । हे उमे अवेरिव--गड्डरिकाया इव किरणं विक्षेपः निरसनं यस्यास्तथाभूता, हतामुत प्रमोदः यस्यास्तथाभूता, अणुः--कृशा अभ्रे-आकाशे, माद्यति यः सोऽपां जलानां, प्रसरो यस्याः साऽभ्रमदप्रसरा गङ्गेत्यर्थः । अहर्निशम् अपि उद्गता धरा मलयापन्निम्नि यस्मात्तदुद्धर तच्च तद्वारि च ( समुद्रजलं च ) तदेव सदः( गृहं ) येषां तेषु तेजः सु वडवानलज्वालाज्योतिष्विति भावः।अगद्छत् अपतत् । हरनिर्वासनार्दिता गङ्गाऽऽत्मानं वाडवाग्नीन्धनीचकारेति धीरा सपत्न्या व्यसनेन स्वस्था स्या इति भावः 'धीरागच्छतु मेघतमोदुर्धरवार्षिकदस्यु । अभ्रमदप्रसराहरणं रविकिरणास्ते यस्य ॥' इत्यपभ्रंशच्छाया । अर्थश्चायम् हे धीरा दुर्धरा वार्षिका दस्यवो यत्र तन्मेघतमो गच्छतु अपैतु यस्य ते, न भ्रमंददातीत्यभ्रमदः प्रसरो येषां तादृशा रविकिरणा हरणं हर्त्तार इति ।

यामि मित्र शृणु रे बचे सुबे खूब्बई ॥ १४ ॥ हरनयनहुताशज्वालया "जो जलाया" रति नयनजलौघैः खाक बाकी बहाया । तदपि दहति चित्तं "हाय मैं क्या करूंगी" मदनरशिसि भूयः "क्या बला आग लागी" ॥ १५ ॥ नूनं बादलशाइ शोहपसरी निःसाणशब्दः खरः शत्रुं पाडि लुटालितो विहणिसो एवं भणन्त्युद्भटाः । रूढे गर्दभरामघालि सहसा रे कंत मेरे कहे कण्ठे पापनिवेशि याहि शरणं श्रीमल्लदेवं प्रभुम् ॥ १६ ॥

## गीतानि ।

पातयसि मां प्रति किं नयने वचो मे शृणु पङ्कजनयने ॥ ध्रुवपदमिदम् ( । ) महौषधमलयजजलसहितः कषायः किल पर्पटविहितः। ज्वरं क्षिपतितरामतिविकटं हरिः सहसैव यथाशकटम् ॥ रात्रौ पात्रे प्लावितं धान्यकमतंतुषचारु । सितया युतमतिसितया निगदितमिदमतिहिमगुणचारु ॥ चारुमुखि पित्तदवथुदलने । पातयसि मां प्रति किं नयने ॥ १ ॥ सदागतिरतरलितकमलां तटीगतविहगोत्तमविमलाम् ॥ भजतु विजयार्थं दवथुरुज प्रियासहितः सरसीं मनुजः । क्लिष्टैरन्यैरौषधैरिह किं कुन्दसुदन्ति ( ? ) पुरुपित्तजमपि दवथुं जितमिव ते कलयन्ति ॥ यान्ति ये सुखमम्बुजशयने पातयति मां प्रति किं नयने ॥ २॥ त्वमसि यदि युक्ता गदपतिना विषमेण धातुकृतस्थितिना ॥ शिवाऽमृतलतिकाऽम्बुदमधुना । शृतं पिब तन्वि युतं मधुना ॥ विद्रदौरि श्रूयतामतिविषमज्वरहारि यवनिम्बकुलवृहतीयुतमथ विकिसतममृतजवारि । वारिधर-सहचरमुरुदहने पातयसि मां प्रति किं नयने ॥ ३ ॥ उमापतितुष्टिकरं हवनं सदा दुःखयुजामवनम् ॥ गुरुद्विजपदपङ्कजनमनं बुधैः स्मृतमखिलज्वरशमनम् । परिमुक्तानि विदूषणैः श्रीकृष्णस्योक्तपदानि ॥ स्थितिमिह विदधतु नित्यं निन्दितपीयूषाण्यसमानि । मानवति पण्डितजनवदने पातयसि मां प्रति किं नयने ॥ ४ ॥

## पक्वान्नवर्णनम् ।

मिष्टं नटीनामधरोष्ठवत्परं प्रवृद्धपीनस्तनवत्सुवर्तुलम् स्नेहप्रगाढं सुहृदां चरित्रवल्ललत्ययं लोचनलोभि मोदकम् ॥ १ ॥ सर्वाशनं यत्पुरतो वराकं प्राप्नोति यो भाग्यमृते सदा कम् । स्पर्धां विधत्ते सुधयाऽपि साकं सखे तमास्वादय दुग्धपाकम् ॥ २ ॥ मुक्ताऽपि वाञ्छां बहुलीकरोति कान्त्याऽक्षिसौख्यं दधती जनानाम् । समुन्मिषद्गन्धरसा नवीना बासोंदिका स्त्रीव मुदे न कस्य ॥ ३ ॥ बाह्लीकजीरार्द्रलवङ्ग-सौरभास्तक्रे निमग्ना जलधाविवेन्दवः । जिह्वालताग्रे वटका मनोहराः कल्लोलयन्ति त्रिदिवौकसामपि ॥ ३ ॥ अत्युज्ज्वलैरवयवैर्मृदुतां दधाना मुक्ता बलं वितरति स्मरदानरक्षा । स्निग्धाशया गुरुगुणग्र-थिता मनोज्ञा फीणी नवीनललनेव मुदं ददाति ॥ ४ ॥ जलवलिवलयानि प्रौढपित्तक्षयानि क्षत-पवनभयानि प्रोल्लसद्विस्मयानि । मधुररसमयानि श्लाघनीयानि यानि स्फुरदरुचिजयानि प्रेमतो वर्ण-यानि ॥ ५ ॥ धाराभिरुत्तमघृतस्य कृताभिषेका गोधूमजा शरदखण्डितचन्द्रवृत्ता । सिद्धाढकीदलगुड-प्रतिपूरितेयं श्रीपोलिका जगति कस्य मुदं न धत्ते ॥ ६ ॥ संपक्वं मृदुवह्निना चणकजं चूर्णं समाने घृते क्षेप्यं खण्डजकर्दने द्विगुणिते स्थाल्यामिदं स्थापयेत् । कर्पूरत्रुटिकुङ्कुमैः कतलिकां कृत्वा शुभां भक्षये-त्सैषा मानसमोहिनी बहुगुणा श्रीमोहनस्थालिका ॥ ७ ॥

## भङ्गावर्णनम् ।

लोचनविलोभनीया मधुराशनलालसा सरसा । स्मरकेलिकलाकुशला धूर्तवधूरिव विभाति धूर्तवधूः ॥ १ ॥ प्रायः सुकृती पुरुषः स्वीकृतनिर्वाहको भवति । गौरीपतिरपि गिरिशो धूर्तवधूमेव सन्ततं भुङ्क्ते ॥ २ ॥ यो यत्समुपाश्रयते तदेव तं वस्तु किल मिलति । भजते यो धूर्तवधूं तं स्मरमिव मूर्तमेति धूर्तवधूः ॥ ३ ॥ सहर्षहास्यरङ्गां मदमोहतुङ्गां विदूरसारभङ्गां पृथुचित्तसङ्गाम् । उच्चैरनङ्गां हरिदङ्गसङ्गां क्षुधोत्तरङ्गां स्पृहयामि भङ्गाम् ॥४॥ भङ्गाऽम्भः पिबतो न शाम्यति विना दुग्धाभिषेकं क्षुधा नेत्रं कोकनदायते निजमुखं दैन्येन नो दर्श्यते । शोकः क्वापि पलायते सदसि वाक् प्रागल्भ्यमालम्बते मुक्तासारमिवोज्ज्वलं स्रवति भो मूत्रं मनो हृष्यति ॥ ५ ॥ सर्वं तुच्छं मनसि मनुते यत्प्रभावाद्वराकोऽप्युच्चैर्हर्षं प्रकटयति यः शोकजालं निरस्य । यत्नप्राप्यः स्थिरयति मनो ध्यानमुद्रासु सोऽयं संविद्वल्लीसलिलमहिमा शक्यते केन वक्तुम् ॥ ६ ॥

## क्षीबवर्णनम् ।

अस्तव्यस्तमितस्ततः पथि पतन्मद्यं मदादुद्वमन्हस्ताभ्यां मुखमक्षिकाः परिणुदन् गालीर्गदन्गद्गदम् । उत्तालैः शिशुभिर्भृशं वलयितो बीभत्समूर्तिर्महान्मत्तो दक्षिणतः क्षणं क्षिप दृशं मत्तोऽयमागच्छति॥१॥ भम्भम्भो बबवारुणीं भभभवान् किं वक्ति सस्सस्सखे कोष्णीषं तत ते पुनः पपपिब प्रेक्षस्व खः खः खगम् । इत्थं सम्प्रति गद्गदाक्षरममी मैरेयमत्ता मुहुः स्वच्छन्दं प्रलपन्ति थूत्कृतिकणव्याकीर्णवक्त्रश्रियः ॥ २ ॥ धूलीमुद्धूलयन्तः पटुपटहपुटान्युद्धतं वादयन्तो यद्वा तद्वा वदन्तश्चटुलखुरखरीपृष्ठमारोहयन्तः । जीर्णोपानद्भिराराद्दहह सवयसः साधु नीराजयन्तो व्यालोलद्धोमयाक्षस्रजमिह दहतः पश्य वल्गन्ति पौराः ॥ ३ ॥

## तमालपत्रचूर्णवर्णनम् ।

विलसति तमालचूर्णं नैवेद्यमिव जगदीशसम्बन्धि । यत्कणलिप्ताग्रस्तं त्रिजगद्धस्तं प्रसारयति ॥१॥

## सिंहप्रशंसनम् ।

गर्जन्हरिः साम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य । पदं बबन्ध क्रमितुं सरोषः प्रतर्कयन्न्यमृगेन्द्रनादम् ॥ १ ॥ क्रीडन्तु नर्दन्तु च तावदिष्टं मायन्तु भूयो द्विपराजमुख्याः । यावन्मृगेन्द्रस्य न नासिकाया गन्धोऽध्वनीनो बत जातुचित्स्यात् ॥ २ ॥ लीढग्रस्तविपाण्डुराग्रनखयोराकर्णदीर्णमुखं विन्यस्याग्रिमयोर्युगे चरणयोः सद्यो विभिन्नद्विपः । एतस्मिन्मदगन्धवासितसटः सामर्षतिर्यक्चलत्सृक्कान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः ॥ ३ ॥ पश्योदञ्चदवाञ्चदञ्चितवपुः पश्चार्धपूर्वार्धभाक्स्तब्धोत्तानितपृष्ठनिष्ठितमनाग्भुग्नाग्रलाङ्गूलभृत् । दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन्सटामुत्कटामुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी ॥ ४ ॥ उत्कर्णोऽयमकाण्डचण्डिमपटुः स्फारस्फुरत्केसरः क्रूराकारकरालवक्त्रविकटस्तब्धोर्ध्वलालाङ्गूलभृत् । चित्रेणापि न शक्यतेऽभिलिखितुं सर्वाङ्गसंकोचनाचीत्कुर्वद्द्विरिकुञ्जकुञ्जरशिरः कुम्भस्थलस्थो हरिः ॥ ४ ॥

---

१ स्वैरिणी । २ धत्तूराङ्गना, भङ्गेति भावः । ३ कुलटां, भङ्गां, च । ४ वागाडम्बरमात्रमिदम् । ५भागुरिमतेनात्र टाप् । ६ कोकनदं रक्तोत्पलम् । ७ बुद्धि-।

## तरक्षुप्रशंसनम् ।

लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्यामात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण । स्फूर्जद्धुंकारघोषः प्रतिदिशमखिलान्द्रावयन्नेष जन्तून्कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥ १ ॥

## गजप्रशंसनम् ।

अम्भोमुचां सलिलमुद्गमतां निशीथे तालीवनेषु निभृतं स्थिरकर्णतालाः । आकर्णयन्ति करिणोऽर्धनिमीलिताक्षा धारारवान्दशनकोटिनिषण्णहस्ताः ॥ १ ॥ सलीलमादाय करेण धूलिं निमीलिताक्षं विकिरन् समन्तात् । मदोद्धतः फाल्गुनकेलिमारात्परिभ्रमन्नभ्यसतीव हस्ती ॥ २ ॥ शुण्डाग्रेण रदं शनैः परिमृशन् पुच्छाग्रमुच्छालयन्दानैः पङ्किलयन्स्वकीयसरणिं मेहन्मुहुर्वृन्दशः । चीत्कुर्वन्वनशृङ्खला मुखरयन् टङ्कारयन्घण्टिकां कुम्भीन्द्रो मदमुद्रिताक्षमधुना धुन्वञ्शिरो धावति ॥ ३ ॥

## मृगप्रशंसनम् ।

प्रकृतिविमुग्धो हरिणो गानरसज्ञो विलोलनेत्रयुगः । विपिनविहारी सुमृदुलतृणादनः सुन्दरो भीरुः ॥ १ ॥

## भल्लप्रशंसनम् ।

नयनपथनिरोधाक्रोधनिर्धूतभालभ्रमदविरलरोमस्तोमबद्धान्धकारः । कृमिकवलनलोभोत्खातवल्मीकरन्ध्रोत्थितफणिफणघातैरुच्छलत्येष भल्लः ॥ १ ॥

## हयप्रशंसनम् ।

यावच्छकलितो वायुरेकीभवितुमर्हति । तावदेव तुरंगोऽयमाजगाम जगाम च ॥ १ ॥ मण्डले मण्डलाकारो रेखा वाजीमयी जवे । सव्यापसव्ये द्विमुखो नकुलाधिष्ठितो हयः ॥ २ ॥ पुरो नुन्नः पश्चाद्व्रजति विधुतश्चोच्छ्रितततनुः समुत्पत्योत्तानः पतति पथि लोकान्प्रविशति । हयः किंचिद्गच्छेद्यदि नयति पत्तिं क्वचिदहो कशाघाते तिष्ठत्यथ चरणघातेन खनति ॥ ३ ॥ आकर्षन्निव गां वमन्निव खुरो पश्चार्धमुज्झन्निव स्वीकुर्वन्निव खं पिबन्निव दिशो वायूंश्च मुष्णन्निव । साङ्गारप्रकरां स्पृशन्निव भुवं छायाममृष्यन्निव प्रेङ्खच्चामरवीज्यमानवदनः श्रीमान्हयो धावति ॥ ४ ॥ पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्रावयित्वाङ्गमुच्चैरासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय । घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥ ५ ॥

## वानरवर्णनम् ।

यदर्कांशुक्रान्तस्फुरदरुणपुष्पोदरधिया प्रविष्टो नासान्तः कणितमणिडिम्भः प्रकुरुते । कपिः स्थित्वा स्थित्वा तदिदमनुशृण्वन्विचकितो धुनोत्यास्यं रौति प्रचलति चलत्युच्छलति च ॥ १ ॥

## वृषभवर्णनम् ।

गर्जित्वा मेघधीरं प्रथममथ शनैर्मण्डलीकृत्य देहं शृङ्गाभ्यां भीषयन्तावभिमुखमवनीं दारयन्तौ खुराग्रैः । मन्दं मन्दं समेत्य स्थिरनिहितपदं दत्तघातौ सरोषं युध्येते चालयन्तौ कुटिलितमसकृत्पुच्छमेतौ महोक्षौ ॥ १ ॥

## सुरभिवर्णनम् ।

आहत्याहत्य मूर्ध्ना द्रुतमनुपिबतः प्रस्नुतं मातुरूधः किंचित्कुब्जैकजानोरनवरतचलच्चारुपुच्छस्य धेनुः । उत्कर्णं तर्णकस्य प्रियतनयतया दत्तहुंकारमुद्रा विस्रंसत्क्षीरधारालवशबलमुखस्याङ्गमातृप्ति लेढि ॥ १ ॥

## गर्दभवर्णनम् ।

आघ्रायाघ्राय गन्धं विकटमुखपुटो दर्शयन्दन्तपङ्क्तिं धावत्युन्मुक्तनादो मुहुरपि च रसाक्रष्टया पृष्ठलग्नः। गर्दभ्याः पादघातद्विगुणितसुरतप्रीतिराक्रष्टशिश्नो वेगादारुह्य मुह्यन्नवतरति खरः खण्डितेच्छश्चिरेण ॥ १ ॥

## अजवर्णनम् ।

घ्रात्वा श्रोणीमजाया विततमभिमुखं वक्रसंकोचभङ्गं स्थित्वा सूर्यं निरीक्ष्य प्रविकसितसठो घट्टयन्क्ष्मां खुरेण । बोब्रोकारान्प्रकुर्वन्मणिशकलनिभं चालयन्नेत्रयुग्मं छागश्चाटूननेकांश्चतुर इव विटो मन्मथान्धः करोति ॥ १ ॥

## मेषवर्णनम् ।

पार्श्वास्फालावलेपाचटुलितचरणोल्लेखिताकाशदेशः संघट्टाटोपकोपप्रसरितरसनापल्लवालीढसृक्कः । किंचित्साचीकृतास्यःस्फुरदधरपुटःस्फारिताताम्रचक्षुर्घ्राणाघाताभिलाषादपसरति रुषं दर्शयन्नेष मेषः ॥ १ ॥

## मयूरवर्णनम् ।

मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः । कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ १ ॥

## चातकवर्णनम् ।

दम्भोलिस्फूर्जदम्भोधरविपुलतडिद्दम्भगम्भीरनादैरम्भःसंभारसंभावनकुतुकिकुलं चातकानां प्रनृत्यत्।ऊर्ध्वं विन्यस्तचञ्चूपुटमुपरि परिभ्राम्यदुत्पातवातैरम्भोदोन्मुक्तमम्भःकणमपि न चिरात्प्राप्य नम्रं मिथोऽभूत् १

## पारावतवर्णनम् ।

कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः । पारावतः परावृत्य रिरंसुश्चुम्बति प्रियाम् ॥ १ ॥

## बकवर्णनम् ।

नालेनेव स्थित्वा पादेनैकेन कुञ्चितग्रीवम् । जनयति कुमुदभ्रान्तिं वृद्धबको बालमत्स्यानाम् ॥ १ ॥ स्थित्वा धैर्याद्दुपाम्भः समजठरशिराश्चक्रमूर्तिर्मुहूर्तं धूर्तः संत्यक्ततीरः कतिचिदपि पदान्युच्चकैः कुञ्चिताङ्घ्रिः । पश्चाद्ग्रीवां प्रसार्य त्वरितगतिरपां मध्यमाविश्य चञ्च्वा चञ्चन्तीमूर्ध्वकण्ठः कथमपि शफरीं स्फारिताक्षो बकोऽत्ति ॥ २ ॥

## कुक्कुटवर्णनम् ।

न्यञ्चच्चञ्चलचञ्चुचुम्बनचलच्चूडाग्रमुग्रंपतच्चक्राकारकरालकेसरसटास्फारस्फुरत्कन्धरम् । वारंवारमुदञ्चिचञ्चलघनभ्रश्यन्नखक्षुण्णयोर्दृष्टा कुक्कुटयोर्द्वयोः स्थितिरिति क्रूरक्रमं युध्यतोः ॥ १ ॥ पक्षावुत्क्षिप्य धुन्वन्सकलतनुरुहान्भोगविस्तारितात्मा प्रागेवोड्डीननिद्रः स्फुरदरुणकरोद्भासितं खं निरीक्ष्य । प्रातः प्रोत्थाय नीडस्थितचपलतनुर्घर्घरध्वानमुच्चैरुद्ग्रीवं पूर्वकायोन्नतविकटसटः कुक्कुटो रारटीति ॥ २ ॥

## गौरखरकृकलासयोर्वर्णनम् ।

ग्रीष्मादित्यकरप्रतप्तसिकतामध्योपविष्टः सुखं शेते गौरखरो मरुस्थलभुवि प्रोथं निधाय क्षितौ । गुञ्जज्झाहककण्टकाहतमरुद्धूतोत्पतद्धूलिभिरिछन्नाङ्गः कृकलासकोऽपि निभृतं मार्तण्डमुद्वीक्षते ॥ १ ॥

## भुजगवर्णनम् ।

आलोकत्रस्तनारीकृतसभयमहानादधावज्जनौघव्याप्तद्वारप्रदेशप्रचुरकलकलाकर्णनस्तब्धचक्षुः । काष्ठं दण्डं गृहाणेत्यतिमुखरजनैस्ताडितो लोष्टघातैर्भीतः सर्पो गृहस्यानधिगतविवरः कोणतः कोणमेति ॥ १ ॥

---

१ आहकः पक्षिविशेषः ।

## पुलिन्दवर्णनम् ।

वामस्कन्धनिषण्णशार्ङ्गकुटिलप्रान्तार्पिताधोमुखस्यन्दच्छोणितलम्बमानशशकान्वेणीस्खलच्चामरान् । ज्यान्तप्रोतकपोतपोतनिपतद्रक्ताक्ततूणीरकान्सोऽपश्यत्करिकुम्भभेदजनितास्कन्दान्पुलिन्दान्पुरः ॥ १ ॥

## पथिकवर्णनम् ।

गायति हसति च नृत्यति हृदयेन धृतां प्रियां विचिन्तयति । समविषमं न च विन्दति गृहगमनसमुत्सुकः पथिकः ॥ १ ॥ मातर्धर्मपरे दयां कुरु मयि श्रान्तेऽद्य वैदेशिके द्वारालिन्दककोणके सुनिभृतं यास्यामि सुप्त्वा निशि । इत्युक्ते सहसा प्रचण्डगृहिणीवाक्येन निर्भर्त्सितः स्कन्धन्यस्तपलालमुष्टिविभवः पान्थः पुनः प्रस्थितः ॥२॥ भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवोद्घुष्यते स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः । इत्यालोक्य भृशं दृशा करुणया शीतातुरेण स्तुतः पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ॥ ३ ॥ देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननैर्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि । उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाश्रुपूर्णे दृशौ तामाशां पथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते ॥ ४ ॥

## वीरजनप्रशंसनम् ।

खड्गहस्तोऽरिमालोक्य हर्षामर्षसमन्वितः । शूरः पुलकितो रक्तनेत्रो हसति जृम्भते ॥ १ ॥ स्तव्यः कस्य न वीरः कर्मसु दक्षः प्रभावविख्यातः । सत्यप्रतिज्ञतायाः सम्पादयिता विपद्यखिन्नात्मा ॥ २ ॥ पुरुषत्वं यदि सत्यं तर्हि परं वीरमात्रगं विद्धि । विघ्नसहस्रेऽप्यचलो यद्व्यवसायोऽवतिष्ठते पुरतः ॥ ३ ॥

## बालकवर्णनम् ।

धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपाः । कृतमुखवाद्यविकाराः क्रीडन्ति सुनिर्भरं बालाः ॥ १ ॥ अवधूतवेषधारी दुग्धाहारी मुदा विहारी च । रागद्वेषवशित्वं तावदनाप्तः शिशुः सतां गेहे ॥ २ ॥ आयातो भवतः पितेति सहसा मातुर्निशम्योदितं धूलीधूसरितो विहाय शिशुभिः क्रीडारसान्प्रस्तुतान् । दूरात्स्मेरमुखः प्रसार्य ललितं बाहुद्वयं बालको नाधन्यस्य पुरः समेति परया प्रीत्या रटन्घर्घरम् ॥ ३ ॥

## कुमारप्रशंसनम् ।

अकूर्चारम्भोऽपि प्रतिचुबुकदेशं करतलं प्रतिज्ञायां कुर्वन्युवतिषु दृशं स्निग्धतरलाम् । कुमारोऽहंकारात्परिषदि समानानगणयन्भुजो वक्षः पश्यन्नवयसि कान्तिं वितनुते ॥ १ ॥

## नर्तकीवर्णनम् ।

वंशं निखातमवनौ दृढबद्धरज्जुमारुह्य सम्प्रति नटी विगतप्रयासा । ऊर्ध्वं निलिम्पललनेव विभाव्यमाना निःशङ्कमुद्भ्रमति चक्रवदन्तरिक्षे ॥ १ ॥ दीर्घाक्षं शरदिन्दुकान्तिवदनं बाहू नतावंसयोः संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव । मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथाऽस्या वपुः ॥ २ ॥ स्वेदक्लेदितकङ्कणं भुजलतां कृत्वा मृदङ्गाश्रयां चेटीहस्तसमर्पितैकचरणा मञ्जीरसंधित्सया । सा भूयः कुचकम्पसूचितरयं निःश्वासमामुञ्चती रङ्गस्थानमनङ्गसात्कृतवती तालावधौ तस्थुषी ॥ ३ ॥

## लेखिकावर्णनम् ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः । कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १ ॥ यद्भ्रूलते तरलिते यदुदङ्गुलीकः पाणिः पुरो यदपि चक्षुरलब्धलक्ष्यम् । उन्मुद्रिताधरदलं च यदास्यमस्यास्तत्काव्यकर्मणि निषिक्तमवैमि चेतः ॥ २ ॥

## कलमकण्डनीगीतिनिर्देशः ।

विलासमसृणोल्लसन्मुसललोकदोःकन्दलीपरस्परपरिस्खलद्वलयनिःस्वनोद्बन्धुराः । लसन्ति कलहुंकृतिप्रसभकम्पितोरःस्थलत्रुटद्गमकसंकुलाः कलमकण्डनीगीतयः ॥ १ ॥

## भिल्लीवर्णनम् ।

जघनस्थलनद्धपत्रवल्ली गिरिमल्लीकुसुमानिकाऽपि भिल्ली । अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कलयाञ्चकार भर्त्रा ॥ १ ॥

## तिर्यक्केलिवर्णनम् ।

मधुद्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः । शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ १ ॥

## मलयानिलवर्णनम् ।

आदाय बकुलगन्धानन्धीकुर्वन्पदे पदे भ्रमरान् । अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥१॥

## रेलशकटीवर्णनम् ।

अयि पश्य रेलशकटी चीत्कृतिमातन्वती विकटाम् । पृथिवीं प्रकम्पयन्ती धावति मदमत्तकरिणीव ॥ १ ॥ बलिष्ठौ नो धुर्यावथ न युगवार्ताऽपि विदिता न वा दृष्टं वल्गाप्रमुखमितरत्साधनमपि । फिरङ्गाणां धावत्यति तदपि सा रेलशकटी क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २ ॥ त्रिविक्रममनस्त्रपां विदधती हसन्ती रवेर्हयानपि रयात्तिरस्कृतवती वटीं पारदीम् । जगत्त्रयविलक्षणाऽखिलफिरङ्गसिद्धिः स्वयं कलेवरधरेव रेलशकटी परं खेलति ॥ ३ ॥ कुर्वाणा पथि पृष्ठतः पवनमप्युत्कम्पयन्ती मनः पक्षीन्द्रस्य हनूमतो विदधती धिक्कारदिग्धां गतिम् । स्फीता व्योम्नि विमानसन्ततिरिव क्षोण्यां फिरङ्गैः कृता वेगाद्धावति पश्य रेलशकटी प्रायः पिबन्ती दिशः ॥ ४ ॥ श्रीराज्ञा परिजित्य वाहनतया तोयानलौ योजितौ धूमो भग्मगिति ध्वनंस्त्वरयते यत्र स्वयं सारथिः । धावत्येकदिनेन योजनशतं या भारमुद्बिभ्रती सेयं केन विचित्ररेलशकटी संश्लाघितुं शक्यते ॥ ५ ॥ श्रीराज्ञै किमु दत्तवान्करतया शक्रो विमानावलिं किंवा दृग्विषयीभवन्मरुदयं वेगान्मुहुर्धावति । हित्वा किन्तु निजां मनोभिरणुतामुच्चैर्महत्त्वं धृतं शक्तिर्वा गरुडस्य रेलशकटी व्याजाद्भुवि क्रीडति ॥ ६ ॥

## तारप्रशंसनम् ।

स्तम्भस्थापितभारस्ताम्रमुखाणां विलक्षणश्चारः । विलसति विततकारः स्फारस्तारः प्रकामविस्तारः॥ १॥

## तारमन्तराऽपि वृत्तावेदकयन्त्रप्रशंसनम् ।

स्तम्भद्वयं विचित्रं स्वावधि वृत्तं निवेदयत्सपदि । तारापेक्षामपि यन्न्यक्कृत्य विराजते सुदृढम् ॥१॥

## विलोमचित्रम् ।

तं भूसुतामुक्तिमुदारहासं वन्दे यतो भव्यभवं दया श्रीः । श्रीयादवं भव्यभतोयदेवं संहारदामुक्तिमुतासुभूतम् ॥ १ ॥ चिरं विरञ्चिर्न चिरं विरञ्चिः साकारता सत्यसतारका सा । साकारता सत्यसतारका सा चिरं विरञ्चिर्न चिरं विरञ्चिः ॥ २ ॥ तामसीत्यसति सत्यसीमता मा ययाक्षमसमक्षयायमा । मा ययाक्षमसमक्षयायमा तामसीत्यसति सत्यसीमता ॥ ३ ॥ कां तापघ्नी तारकाद्या विपापा त्रेधा विद्या नोष्णकृत्यं निवासे । सेवा नित्यं कृष्णनोद्या विधात्रे पापाविद्याकारताघ्नी पताका ॥ ४ ॥

---

१ भूसुताया रावणरक्षिताया सीताया मुक्तिं मोक्षणं यस्मात्तं राघवं वन्दे नमस्करोमीत्यर्थः । किम्भूतम् उदारहासम् उदारः गम्भीरो हासो यस्यतम्, उद्वेगनिमित्तेषु सर्वानर्थेषु प्राप्तेष्वपि अनुद्विग्नमित्यर्थः । पुनः किंभूतम् भव्यभवम् भव्यः पवित्रो भवोऽवतारो यस्यासौ, तथाभूतम् । तथा,-यतो दया श्रीश्च बभूवेत्यध्याहारः । दया भूतदया श्रीः शोभा च तयोर्निदानमित्यर्थः । एतद्रामपक्षे, कृष्णपक्षे तु श्रीयादवं वन्दे किंभूतम् भव्यभतोयदेवम् । भव्या उत्तमा भा दीप्तिर्यस्यासौ सूर्यः तथा तोयशब्देन चन्द्रो लक्ष्यते, तस्य जलात्मकत्वात् तयोर्द्योतनादेवम् सूर्याचन्द्रमसोरपि प्रकाशकमित्यर्थः । तथोक्तम् "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥" अथ किंभूतं श्रीयादवम् संहारदामुक्तिम् संहारोऽनर्थस्तं ददातीति तथाविधा या पूतना तस्या मुक्तिर्मोक्षो यस्मात्तं तथाभूतम् । पुनः किंभूतम् उत प्रत्युत असुभूतम् सर्वत्र प्राणरूपेणावस्थितमित्यर्थः । अथवा प्राणनं जीवनं तद्रूपं चैतन्यस्वरूपम् । तथोक्तम् "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इत्यादि । पूतनायै मुक्तिं दातुमन्तर्यामित्वेन स्वयमेव प्रेरकोऽभूदित्युक्तम् । २ विरञ्चिर्ब्रह्मा द्विपरार्धावसाने यावत्सर्वभूतापेक्षया चिरं तिष्ठतीति प्रथमम्, अपरं तु 'आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इति श्रवणान्न चिरं विरञ्चिरिति ज्ञायते, तस्यायुषः परिमितत्वात् अथ साकारता सत्यसतारकास्ति सेति तच्छब्देन रामस्य या साकारता सत्यसतारका तारकेण सह वर्तमाना सतारका सत्या सती सतारका सत्यसतारका सत्यमबाधितं विज्ञानमतारकं यद्ब्रह्म तद्रूपेत्यर्थः इति रामपक्षे, कृष्णपक्षे तु साकारता सत्यसतारकास्ति या कृष्णरूपिणी साकारता सा सती सर्वदैव वर्तमाना नित्येत्यर्थः। किम्भूता असतारका तारकाभिः सह वर्तमानं सतारकं व्योम तन्न विद्यते यस्याः सा असतारका व्योमापि यस्यां लीयते, इतः परं नित्यत्वं किं वर्णनीयमित्यर्थः। चिरं विरञ्चिरित्यादि पूर्ववत् ।३ अथ रामकृष्णाभ्यां यां मायामवष्टभ्य साकारता स्वीकृता तस्याः स्वरूपमाह, असति सत्यसीमता तामसीति । असति शुक्तिकारजतवदसत्ये प्रपञ्चे सत्यसीमता सत्यत्वमर्यादा तामसी मायेति माया अत एवास्या असत्यत्वं कार्यवशादनुभूयत इत्याह माययेति यया मायया कृत्वा मा लक्ष्मीः अयमा न विद्यते यमो नियमो यस्याः सा तथा । योग्येऽयोग्ये वा कुत्र स्थातव्यं कियत्कालं स्थातव्यमिति क्षणभङ्गुराया लक्ष्म्या यमो नियमो नास्ति, उत्तरक्षणे बाधदर्शनाद्भ्रमरूपतेत्यर्थः । कथम्भूतया यया अक्षमसमक्षया न क्षमम् अक्षमं समक्षं यस्याः सा, तथा तस्या मायायाः स्वरूपे विचार्यमाणे समक्षत्वं न प्राप्नोति प्रेक्षणेनैव नश्यतीत्युक्तत्वात् । यतः परमात्मा ज्ञानरूपः,माया त्वज्ञानरूपेति सा कथं ब्रह्मसमक्षतां याति यतो ज्ञानमज्ञानस्यैव घातकमित्यर्थः । एवमुभयत्रापि सममिति । ४ अत्र त्रिविधसंसारतापघ्नी कास्तीति विचार्यमाणे त्रेधा विद्याऽस्तीति ऋग्यजुःसामात्मिका, ननु तर्हि न कर्मकाण्डं विद्याशब्दव्यपदेश्यं 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह'इत्याद्युक्तत्वादित्याशङ्क्याह किम्भूता त्रेधा विद्या तारकाद्या तारकं परं ब्रह्म श्रीरामाख्यम् आद्यं श्रेष्ठत्वान्निरूपणीयत्वेन प्राप्तं यस्याः सा तथा उपनिषद्विद्यात्मिकेत्यर्थः । पुनः किम्भूता विपापा विगतं पापमज्ञानं यया सा । पापोपशामकत्वे दृष्टान्तमाह-निवासे नोष्णकृत्यमिति नितरां वासो यस्मिन्निति निवासः शीतलच्छायाद्युपस्कृतं गृहं तस्मिन्नुष्णकृत्यं संतापभवनं नास्ति तद्वद्वेदार्थपरिशीलनेन त्रिविधतापोन्मूलनमित्यर्थ इति रामपक्षे कृष्णपक्षे, तु कृष्णभक्तिसहकृतैव विद्या—

श्रीरामतो मध्यमतोदि येन धीरोऽनिशं वश्यवतीवराद्वा । द्वारावतीवश्यवशं निरोधी नयेदितो मध्यमतोऽमरा श्रीः ॥ ५ ॥ कौशिके त्रितपसि क्षरव्रती योऽददाद्वितनयस्वमातुरम् । रन्तुमास्वयन तद्विदादयोतीव्ररक्षसिपतत्रिकेशिकौ ॥ ६ ॥ लम्बाधरोरु त्रयलम्बनासे त्वं याहि याहि क्षरमागताज्ञा । ज्ञातागम रक्षहि याहि या त्वं सेनाबलं यत्र रुरोध बालम् ॥ ७ ॥ लङ्कायना नित्यगमा धवाशा साकं तयानु-

---

—अज्ञाननाशकर्त्रीत्याह, सेवा नित्यमिति विधात्रे अनुष्ठात्रे अर्जुनाय ब्रह्मणे वा कृष्णनोद्या नित्यं सेवा पापाविद्या कारतारघ्नी भवति कृष्णेन नोद्या प्रेर्यमाणा नित्यं सेवा अनन्यभक्तिः । सा पापं दुःखं तन्मूलमविद्याकारोऽज्ञानं तदुभयमपि नाशयति तदुक्तं भगवद्गीतायाम्–"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥"इति अनन्यभक्तिरेव कृष्णसाक्षात्कारनिमित्तमिति सदृष्टान्तमाह–किंभूता सेवा पताका पताकेव पताका यथा गरुडलाञ्छनाङ्किता कृष्णध्वजपताका दृष्टमात्रैव आगतः कृष्ण इति साक्षात्कारं व्यनक्ति तद्वदनन्यभक्तिरपीत्यर्थः । ५ माया परमात्मनः समक्षं स्थातुं न शक्नोतीति स्वरूपानुसंधानेन मायायास्तिरस्कार इत्युक्तं तत्रात्मज्ञाने महानायासः श्रीरामसेवया तु विद्याप्राप्तिस्तया तत्कालमेवाज्ञाननिरास इत्याह--श्रीरामेति । वा इत्यथवा स पुमान् धीरः येनानिशं श्रीरामतः मध्यमतोदि श्रीरामतो निमित्तभूतान्मध्यं मध्ये अवभासमानं प्रपञ्चाख्यम् अतोदि नाशितम् । स एव धीर इत्यर्थः । किंभूताच्छ्रीरामतः । वश्यवतीवरात् वशं नेतुं समर्थं वश्यं रूपं तद्वती जानकी तस्याः वराद्भर्तुरित्यर्थः ॥ कृष्णपक्षे तु निरोधी पुमान्मध्यं चिदचिद्ग्रन्थिस्वरूपं मनःइतः प्रपञ्चात् द्वारावतीवश्यवशं नयेत् वायुनिरोधीन्द्रियनिरोधी च पुमान् द्वारावत्याः वश्यः तत्रासक्तः कृष्णस्तत्र वशं नयेत् योगेन वैराग्येण वा चित्तं निरुध्य श्रीकृष्ण एव वशं नयेदित्यर्थः । तेन किं भवतीत्याह अतः अस्मादुपायाच्छ्रीमोक्षलक्ष्मीः अमरा स्थिरा भवति अन्यथा निरोधवानपि विघ्नैरभिभूयत इत्यर्थः । उक्तं च 'तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्' इत्यादि । ६ अत्र विश्वामित्रः स्वयज्ञसंरक्षणार्थं रामं याचितुं दशरथं प्रत्यगादित्याह क्षरव्रती द्वितनयस्वं कौशिके अददात् क्षरेषु सर्वेषु भूतेषु व्रतमभीप्सितपूरणं येन तथाविधो दशरथः द्वयोस्तनययोः समाहारो द्वितनयम् तदेव स्वं धनं कौशिके विश्वामित्रे दत्तवान् ननु प्राणादपि प्रियतमं पुत्राख्यं धनं विश्वामित्रार्थे केन निर्बन्धेन दत्तवानित्याशङ्क्याह–किंभूते विश्वामित्रे त्रितपसि त्रिःप्रकारं त्रिगुणात्मकं प्रसादक्षोभसमर्थं तपो यस्य स तथा तस्मिन् किंभूतं द्वितनयस्वम् आतुरं पित्रोर्वियोगादित्यर्थः ॥ कृष्णपक्षे तु श्रीशुकः परीक्षितं प्रति वक्ष्यमाणं कृष्णकथोद्देशमनुवदति भो आस्वयन आसमन्तात्सुष्ठु अयनं गतिः परमार्थगतिः यस्य तथाविधः परीक्षित् तद्वित्कृष्णोऽतीव्ररक्षसि न विद्यते तीव्रं रक्षः यस्मात्तत् अतीव्ररक्षः तस्मिन्पूतनाख्ये तथा पतत्रिकेशिकौ पतत्त्री पक्षी बकासुरः केशी हयरूपी दैत्यः तयोः कुः पार्थिवशरीरं तस्मिन् आदयोऽस्ति आसमन्ताद्दया कृपा यस्य स तथा पूतनाबककेशिशरीराणि कृपयैवातारयदित्यर्थः । किं कर्तुं रन्तुं क्रीडां कर्तुं क्रीडाछलेनेत्यर्थः । ७ विश्वामित्रेण सह रामम्प्रस्थितमाकर्ण्य राक्षसास्ताटकां प्रेषयामासुरित्याह–भो लम्बाधरोरु त्वं क्षरं याहि अधरश्च ऊरू च अधरोरु लम्बम् अधरोरु यस्याः सा लम्बाधरोरू तस्याः संबोधनं तथा किंभूते त्रयलम्बनासे त्रये लोकत्रये लम्बा नासा यस्याः सा तथाविधे त्वं क्षरं नाशयोग्यं मानुषदेहं रामं याहि । आदरे वीप्सिते द्विरुक्तिः । किंभूता त्वम् आगताज्ञा आगता प्राप्ता आज्ञा रावणाज्ञा यथा तथा । कृष्णपक्षे तु श्रीकृष्णं गोकुलस्थितमाकर्ण्य कंसः पूतनामाज्ञापयति हे पूतने त्वं तत्र याहि, बलं पुरुषार्थं रक्ष । तत्र केत्याह यत्र सेनाबलं बालं रुरोध इनेन स्वामिना नन्देन सह वर्तमाना यशोदा बालं कृष्णं रुरोध रुद्ध्वा आच्छाद्य स्थितवती तत्रेत्यर्थः । कुत एतावन्तं विश्वासं कृतवतीत्याह–हीति निश्चयेन ज्ञातागमा ज्ञात आगमो यया सा कोऽपि बालघातार्थम् आयास्यतीति संभावयन्तीत्यर्थः । ८ ताटकया सह शूर्पणखाऽपि समागतेत्याह–लङ्कायना तया साकं नित्यगमाऽभूत्–

न्नयमानुकारा । राकानुमा यन्ननुयातकंसा शावाधमागत्य निनाय कालम् ॥ ८ ॥ गाधिजाध्वरवैरा ये तेऽतीता रक्षसा मताः । तामसाक्षरतातीते ये रावैरध्वजाधिगाः ॥ ९ ॥ तावदेव दया देवे यागे यावदवासना । नासवादवया गेया वेदे यादवदेवता ॥ १० ॥ सभास्वये भग्नमनेन चापँ कीनाशतानद्धरुषा शिलाशैः । शैलाशिषारुद्धनताशनाकी पञ्चानने भग्नभये स्वभासः ॥ ११ ॥

—लङ्कायामयनं गतिर्यस्याः सा शूर्पणखा तथा ताटकया साकं नित्यगमाऽभूत् नित्यं गच्छतीति नित्यगमा पर्यटनासक्ताऽभूदित्यर्थः । अनुन्नयमानुकारा न नुन्नः प्रेरितः अनुन्नः स्वतः प्रवृत्तः एवंविधो यो यमः कृतान्तस्तद्वदनुकारो यस्याः सा निष्कृपेत्यर्थः । किंभूता धवाशा धवविषयिणी आशा यस्याः सा तथा रामं भर्तारमपेक्षमाणा ॥ अथ कृष्णपक्षे तु ॥ शावाधमा आगत्य कालं निनाय शवप्रियाः शावाः क्रव्यादाः तेषु अधमा बालघातिनी पूतना आगत्य गोकुलं प्राप्य कालं खग्रासकं कृष्णं निनाय प्राप्तवती ननु राक्षसी गोकुलान्तर्गता तत्रत्यैः किं पूर्वं न निषिद्धेत्याह-यद्यतः राकानुमा राका पूर्णिमा तया अनुमीयते सा प्रथमं राकावदतिसुन्दरं रूपं धृतवती तद्दाक्षिण्येन केनापि गृहान्तर्गमने नाक्षिप्ता नन्विति निर्धारणे यातकंसा यातः अन्तरितः कंसो यस्यां सा तथा पुनः कंसेन न दृष्टा कृष्णग्रस्ता सती विपन्ना इत्यर्थः । विश्वामित्रस्य यागव्यवस्थामाह—गाधिजो विश्वामित्रस्तस्याध्वरो यागस्तत्र वैरं येषान्ते मारीचादयस्ते अतीताः रामेण ते हताः देहादिप्रपञ्चमतिक्रम्य गता इत्यर्थः । किंभूताः रक्षसा रावणेन मताः स्वसंमानेन प्रसिद्धाः ॥ अथ कृष्णपक्षः पूतनावधमाकर्ण्य कंसेनान्ये बकतृणावर्तादयः प्रेषिता इत्याह—तामसाक्षरतातीते कृष्णे सति ये रावैः प्रेषिता दैत्याः ते अध्वजाधिगा आसन् तामसाऽहंकारेणासमन्तादुत्पन्ना या क्षरता प्रपञ्चात्मकता ततोप्यतीतपरे ब्रह्मरूपे कृष्णे सति दैत्याः रावैः कंसनिर्देशशब्दैः आगतास्ते अध्वजाधिगाः गोकुलमार्गयाने जातो य आधिः मानसी व्यथा तां गच्छन्तः प्राप्ताः अहो गोकुलं गत्वा प्रपञ्चातीते कृष्णेऽस्माभिः किं कर्तव्यं पूतनावन्मर्तव्यमिति पर्याकुलचित्ता आसन् इत्यर्थः ॥ १०–मुनिभिः केवलं रामार्पणबुद्ध्या कृतस्य यागस्य प्रशंसामाह-देवे रघुनाथे दया कृपा प्रीतिस्तावदेव संभवतीति यावद्यागे अवासनायागे क्रियमाणे अवासना स्वर्गादिभोगप्राप्तये इच्छाराहित्यं तस्मात्फलराहित्येन यो यागः स रामप्रीतये भवतीत्यर्थः ॥ अथ कृष्णपक्षः । कृष्णे परब्रह्मस्वरूपताम् अवधारयन्तो दैत्याः पुनः परामर्श चक्रुरित्याह यादवदेवता कृष्णमूर्तिः वेदे उपनिषद्भागे या गातुं निरूपयितुं योग्या न तु साक्षात्कारं कर्तुमथवान्येन निरूपयितुं न शक्यते इत्याह नासवादिति असुसंबन्धि आसवं प्राणात्मकं शरीरम् अवेत्युपसर्गः अवलक्षणत्वद्योतकः तथा चावलक्षणान्मनुष्यदेहात्सकाशान्नातिनिरूपयितुं शक्यते एवं प्रथमं तस्य निरूपणासम्भवे तस्य हननमस्माभिरसम्भावितमेवेत्यर्थः । वस्तुतस्तु आस्रवात् आसवादिति मदजनकवस्तुमात्रोपलक्षणं तस्मान्न अवया न ज्ञेया तन्निमित्तमासवाद् दुर्ज्ञेयेत्यर्थः । अवयेति अवयायते इत्यवया 'आतोनुपसर्गे कः' । इति कः । पश्चाट्टाप् । अवपूर्वको यातिरेतिश्च ज्ञापनार्थः ॥ ११–स्वयंवरदर्शनार्थं कौशिकेन सह जनकगृहं प्रति गतो रामः तत्र किं कृतवानित्याह–अये श्रोतः अनेन रामेण सभासु शिलाशैः सह चापं भग्नं सभासु स्थितासु शिलावद् दृढा जानकीविषयिणी आशा येषां ते शिलाशाः राजानस्तैः सह चापं भग्नं न केवलं चापं भग्नं राजानो भग्नमनोरथाः कृता इत्यर्थः । कीनाशतानद्धरुषा कीनाशस्य भावः कीनाशता यमरूपता तया आनद्धः अभिनिविष्टो रावणस्तस्य रुषा कोपेन प्राचीनवैरानुबन्धनिमित्तेन पूर्वं धनुरुद्धर्तुं प्रवृत्तो रावणः धनुषाधः पतितः परं तु न हत इति रुषा कोपेनेवेत्यर्थः । अथ कृष्णपक्षः गोवर्धनोद्धरणे इन्द्रो लाघवं प्राप्त इत्याह–पञ्चानने नृसिंहे कृष्णे स्वभासः स्वप्रतापाद्भग्नभये निःशङ्कं यागं कारयितुं प्रवृत्ते सति शैलाशिषारुद्धनताशः नाकी इष्टः शैलस्य गोवर्धनस्य आशिषा अभीष्टपूरणेन रुद्धा रोधं प्रापिता अत एव नता भग्ना हविर्ग्रहणेच्छा यस्य तथाविधो नाकी स्वर्गाधिपोऽभूदित्यर्थः । "यो गोवर्धनभूधरं करधृतं लीलाम्बुजन्मायितं

न वेद यामक्षरभामसीतां कातारका विष्णुजितेऽविवादे । देवाविते जिष्णुविकारता का तां सीमभारक्षमयादवेन ॥ १२ ॥ तीव्रगोरन्वयत्रार्यो वैदेहीमनसो मतः । तमसो न महीदेवैर्योऽत्रायन्वरगोव्रती ॥१३॥ वेद यापद्मसदनं साधारावततार मा । मारता तव राधा सा नन्दसद्मपयादवे ॥१४॥ शैवतो हननेऽरोधी यो देवेषु नृपोत्सवः । वत्सपो नृषु वेदे यो धीरोऽनेन हतोवशैः ॥१५॥ न गोपगोऽसि क्षर मेपिनाकेऽनायोऽजने धर्मधनेन दानम् । नन्दानने धर्मधने जयो ना केनापि मे रक्षसि गोपगोनः ॥ १६ ॥

---

—कृत्वा सप्त दिनानि नाचलदपाद्रोपांश्च घोरापदः । यश्चक्रे निजशासने हरिविरिञ्च्याखण्डलादीन्सुरानुद्दण्डानपि सोऽवताजगदिदं गोपालराजो हरिः ॥" इति श्रीभागवते दशमस्कन्धे ॥ १२–स्वयंवरार्थमागतान् राज्ञो वर्णयति–याम् अक्षरभामसीतां लोको न वेद अक्षरमविच्युतं भाम सौभाग्यं यस्याः सा अक्षरभाम्नी सा चासौ सीता च तां न जानातीत्यर्थः । अविवादे विष्णुजिते का तारका विष्णुना रामचन्द्रेण जितं विष्णुजितं तस्मिन् विष्णुजिते अविवादे सर्वसंमते सति का तारका तारकात्वं का प्राप्नोतीत्यर्थः । तारकसंबन्धस्तु चन्द्रं विनान्येन सह न भवति । प्रकृते रामचन्द्रेण सह सीतैव तारकात्वं प्राप्तुमर्हति नान्येनेत्यर्थः ॥ अथ कृष्णपक्षः ॥ गोकुलोपरि क्षुब्धस्येन्द्रस्य न किंचिच्चलतीत्याह–सीम्नो भारः सीमभारः सीमा गिरिमर्यादा तया भारक्षमश्चासौ यादवश्च तेन देवशक्त्या अविते रक्षिते गोकुले जिष्णोरिन्द्रस्य शिलावर्षणादिविकारता का न कापीत्यर्थः । १३–धनुषि भग्ने सति जानक्या रामो वृत इत्याह–तीव्रा गावः किरणा यस्य एवंविधस्य तीव्रगोः सूर्यस्य अन्वयं वंशं त्रायन्ते ते अन्वयत्राः सूर्यवंशाभिमानरक्षकाः दिलीपादयस्तेष्वार्यः श्रेष्ठः सूर्यवंशालङ्करणं रामः वैदेहीमनसो मतः जानक्या मनः पूर्वकं वृतः धनुःपणबन्धेनेत्यर्थः । कृष्णपक्षः । ब्रह्मसत्रं प्रति गतः कृष्णस्तैर्न मानित इत्याह अत्रायन्वरगोव्रती कृष्णः अत्र ब्रह्मसत्रे आयन्प्राप्तः वरा भाग्यशालिन्यो गाव एव व्रतं परिपालितत्वेनोपस्थितं यस्यासौ गोव्रती कृष्णः तमसोऽज्ञानान्महीदेवैर्ब्राह्मणैर्न मानित इत्यध्याहारः । १४ जानक्याः पारमार्थिकं स्वरूपं वर्णयन्नाह–साधारा मा अवततार आधारेण विष्णुना सह लक्ष्मीः अवतारं चक्रे । सा का या पद्मसदनं वेद । पद्ममेव सदनम् अधिवासस्थलं वेद ज्ञातवती । अनेन लक्ष्म्याः पूर्णावतार इति सूचितम् । अथवा पद्मं विष्णोश्चरणकमलं तदेव सदनं विश्रमस्थलं जानाति ॥ कृष्णपक्षे तु कापि गोपिका नन्दं प्रति राधायाः पैशुन्यं वदति भो सद्मप गृहाधीशनन्द ! सा तव राधा सेति तच्छब्देन विदितवृत्तान्तेति सूचितं तथा यादवे सैव कृष्णे मारता मदनरूपता इत्येवं समाचारोऽस्ति । अनेन कृष्णस्य वयःसम्बन्धिनी वर्णिता भवति ॥ १५ ईश्वरस्य धनुर्भङ्गमाकर्ण्य परशुरामोऽभ्यगादित्याह–नृपोत्सवः शैवतो हनने अरोधी नृपस्य आगतस्य दशरथस्योत्सवो यस्मात्स नृपोत्सवो रामः शिवस्य पक्षपातीति शैवः परशुरामस्तस्माच्छैवतः हनने कोपाविर्भावेऽप्यरोधी न रोधं प्राप्तवान्, अकुण्ठितशक्तिरासीदित्यर्थः । विमानस्थितेषु देवेषु पश्यत्सु सत्सु ॥ अथ कृष्णस्वरूपं धेनुकवधं चाह–यः वेदेऽस्ति वेदे प्रतिपादितोऽस्ति स नृषु वत्सपोऽभूत् । अनेन वत्सपेन कृष्णेन धीरो धेनुकः अवशैः असाध्यैस्तज्जातीयैरन्यैः सह हतो मारित इत्यर्थः ॥ १६ परशुरामः रामं प्रति सक्रोधं वदति–भो क्षर नश्वरमे पिनाके त्वं न गोपगः असि । यद्यपि त्वया जीर्णं धनुर्भग्नं, तथापि मदानते धनुषि नगस्य पर्वतस्योपसमीपे गच्छतीति नगोपगः पाषाणस्तत्तुल्योऽसि, मदीयधनुषोऽतिगुरुत्वेन निश्चेष्टो भवसीत्यर्थः । एवमेतादृशे त्वयि जनकेन यत्कन्यादानं कृतं तद्युक्तमित्याह–धर्मधनेन कन्यालक्षणेन अजने यद्दानं स अनायः अजनोऽदानपात्रम् एवम् अदानपात्रे त्वयि यद्दानं कृतं स अनायः, नयो नीतिस्तत्सम्बन्धी नायः, न नायः अनायः अनीतिरित्यर्थः । कृष्णपक्षे तु दैत्यवधं दृष्ट्वा नन्दः कृष्णं स्तौति–भो कृष्ण त्वं नन्दानने नासि । नन्द एव आननं मुख्यो यस्मिन्गोकुले तस्मिन् ना पुरुषः परमात्मा असि बलवत्त्वात् । अत एव किंलक्षणे नन्दानने धर्मधने जन्मान्तरीयधर्मैरर्जितम् । तस्मिन् नः अस्माकं जयोऽपि त्वमेवासि । केनापि सुकृतविपाकेन गोपगः गोपविशेषेण वर्तमानः सन् मे इति मां रक्षसि ॥

ततान दाम प्रमदा पदाय नेमे रुचामस्वनसुन्दराक्षी । क्षीरादसुं न स्वमचारु मेने यदापि दाम प्रमदा नतोऽतः ॥ १७ ॥ तामितो मत्तसुत्रामा शापादेषविगानताम् । तां नगाविषदेऽपाशामान्यासूत्तमतो मिता ॥ १८ ॥ नासावद्यापत्रपाज्ञाविनोदी धीरोनुत्या सस्मितोऽख्याविगीत्या । त्यागी विद्यातोऽस्मि सत्यानुरोधी दीनोविज्ञापात्रपद्यावसाना ॥ १९ ॥ संभावितं भिक्षुरगादगारं यातािधरपि स्वनघाजवंशः । शवं जघान स्वपराधिताया रङ्गादगारक्षुभितं विभासम् ॥ २० ॥

---

१७ रामं राज्याधिकारिणं दृष्ट्वा कैकेयी सापत्नभावं दर्शयतीत्याह--आमस्वना अपरिपक्ववचना तथाविधा सुन्दराक्षी कैकेयी पदाय राज्यप्राप्तये यद्दामनिर्बन्धकारणं ततान विस्तारयामास, स्वपुत्राय राज्यं देयमिति दशरथाय निर्बन्धं चकारेत्यर्थः । आमस्वनेति पदेन नेदं मातृकृत्यमिति सूचितम् । अथ कथं दाम ततानेत्याह–इमे रुचा न रुचा दीप्त्या इमे रामादयः पदयोग्या न भवन्ति । तथा तस्याः किं लौकिकं भयं नास्तीत्याह--प्रमदेति । प्रकृष्टो मदो गर्वो यस्याः सा तथा ॥ कृष्णपक्षे तु अथ कदाचित्कृष्णेन दधिभाण्डे भग्ने दुग्धनाशे जाते यशोदाया अति श्रमोऽभूदित्याह–प्रमदा यशोदा क्षीरात्सकाशादसुं प्राणमपि स्वकीयं न मेने । यथा क्षीरे ममता तथा प्राणे माभूदित्यर्थः । अथ कृष्णबन्धनार्थं यद्दाम आपि प्राप तदचारु कार्यक्षमं न भवतीति मेने । अतः दामपूरणहेतोर्नता नम्रा परिश्रान्ताभूदित्यर्थः ॥ १८ वनवासार्थं रामे प्रस्थिते सति अहल्योद्धरणप्रसङ्गमाह--मत्तसुत्रामा ताम् इतः प्राप्तः मत्तः काममोहितः सुत्रामा इन्द्रस्तां प्रति प्रसिद्धामहल्यां प्रति गतः 'सुत्रामा गोत्रभिद्वज्री' इत्यमरः । तथा एष सुत्रामा इन्द्रः शापाद्विगानताम् इतः गौतमकृतात् विगानतां सहस्रभगत्वादिलक्षणं प्राप्तः ॥ कृष्णपक्षे तु पूर्वश्लोके यशोदया कृष्णः दाम्ना बद्ध इति निरूपितं तत्र यमलार्जुनोन्मूलनप्रसङ्गमाह तां व्यवस्थामनुभूय नगाविषदे कृष्णे सति यशोदामातासु, अपाशा तथा उत्तमतोमिता अभूत् न गच्छतस्तौ नगौ स्थावरौ वृक्षौ यमलार्जुनौ ताभ्याम्, अविषममृतं मोक्षः तत्प्रदे कृष्णे सति यशोदामातासु दधिदुग्धादिविषयेषु, अपाशा अनिर्बन्धा सती उत्तमतः अलौकिककर्मकर्तुर्मिताकृष्णान्विता समर्यादाभूत् ॥ १९ शूर्पणखायाः प्राप्तायाः नासिकानिकृन्तनं कृतमित्याह--शूर्पणखा तावन्नासावद्यापत्रपास्ति नासा नासिका तस्या अवद्यं विगानं छेदलक्षणं तत्र अपत्रपा निर्लज्जास्ति । लक्ष्मणस्तु आज्ञाविनोदी आज्ञया रामाज्ञया विनोदो यस्यास्तीति विनोदी तथा धीरः उदात्तः श्रीरामस्तु नुत्या शूर्पणखाकृतया स्तुत्या उपालम्भेन अख्याविगीत्या अकीर्तिख्यापनेन सस्मितोऽभूत् ॥ कृष्णपक्षे तु नारदशापादुन्मोचिताभ्यां कुबेरपुत्राभ्यां स्तुतः कृष्णस्तौ प्रति स्वरूपमाह--अहं विद्यातः ज्ञानतस्त्यागी ज्ञानप्रदोऽस्मि तथा सत्यानुरोधी सत्यं परब्रह्म तत्र अनुरोधोऽत्यासक्तिर्यस्य स तथा, लोकस्तु दीनः विषयसुखासक्तोऽस्ति, अविज्ञा अविद्या तु पात्रपद्यावसाना पात्रं ज्ञानपात्रं मद्भक्तस्य पद्या पद्धतिर्ज्ञानमार्गनिष्ठत्वं तेनैवावसानं नाशो यस्याः सा तथोक्ता, एवं सति शापनिर्मुक्तिः क्रियत इत्यर्थः ॥ २० पञ्चवटीवने सपरिग्रहे रामे कृताधिवासे सति किंचिदपूर्वं जातमित्याह–भिक्षुः संभावितमगारमगात् भिक्षुकरूपधरो रावणः संभावितं पूर्वं निर्मायकत्वेन ज्ञातम् अगारं पञ्चवटीस्थलम् अगात्, ततः स्वनघाजवंशः याताधिः सन् आपि सुतराम् अनघः निष्पापः मैवंविधोऽजवंशो ब्रह्मवंशो रावणः यातो गतः आधिश्चिन्ता यस्य जानकीं दृष्ट्वा निश्चिन्तः जानकीं प्राप निष्पापवंशोत्पन्नोऽप्येतादृशं निन्द्यं पापकर्माकरोदित्याश्चर्यादिति रामपक्षे । कृष्णपक्षे तु रङ्गाद्रङ्गस्थानात् एवं चिन्तया पूर्वमेव गतप्राणं कंसं जघान । किम्भूतम् अगारक्षुभितं अगारं राजकीयपरिवारस्तस्मिन् क्षुभितं सक्रोधम् । एष चाणूरघाती कृष्णो बहिः कथं न निःसार्यत इति । पुनः कथम्भूतं विभासं विच्छायं गतकान्ति सद्यो मृतिचिह्नयुतमित्यर्थः । अथ कस्माद्धेतोर्जघानेत्याह–स्वपराधितायाः अपराधिनो भावः अपराधिता सुतरामपराधिता तस्यास्तथा पितृनिर्बन्धाग्रजहननपूतनादिकूटरचनादयोऽपराधास्तत्कर्तृत्वादित्यर्थः ॥

तयातितारस्वनया गतं मा लोकापवादद्वितयं पिनाके । केनापि यं तद्विदवाप कालो मातङ्ग-
यानस्वरतातियातः ॥ २१ ॥ शवेऽविदा चित्रकुरङ्गमाला पञ्चावटीनर्म न रोचते वा ।
घातेचरोऽनर्मनटीव चापं लामागरं कुत्रचिदाविवेश ॥ २२ ॥ नेह वा क्षिपसि पक्षिकन्धरामालिनी
स्वमतमत्त दूयते । ते यदूत्तमतम स्वनीलिमाराधकं क्षिपसि पक्षिवाहने ॥ २३ ॥ वनान्तयानस्वणुवेद-
नासु योषामृतेऽरण्यगताविरोधी । धीरोऽविताऽगण्यरते मृषा योऽसुनादवेणुस्वनयातनां वः ॥ २४ ॥

---

–२१ मृगयापरावृत्तस्य रामस्य जानकीमपश्यतो निर्वेदमाह-तया मा गतं तया जानक्या मेति धिक्
मृषैव गतं निष्क्रान्तम् । अथ सा स्वतो न गता बलात्कारेण नीता भविष्यतीत्याह-किम्भूतया
अतितारस्वनया उच्चैराक्रोशमानयापि एवं तस्यां गतायां पिनाके लोकापवादद्वितयं जातं
पिनाके पुरुषार्थाधिष्ठाने लोकापवादद्वितयं जातमित्यर्थः ॥ कृष्णपक्षे कंसहननात्पूर्वं-
रङ्गमाह–यं कंसं केनापि प्रकारेण कालः कृतान्तोपमः कृष्णः अवाप । ननु परब्रह्मस्वरूपस्य
कृष्णस्य कंसद्वेषः कथमित्याह कालस्तद्वित्तदुपस्थितं कंसनिबन्धनं वेत्तीति तद्वित् । अथ
स कः प्रकारस्तमाह कालो मातङ्गयानस्वरतातियातः मातङ्गः कुवलयापीडस्तस्य यानं
धावनं स्वरश्च तद्वद्याक्रोशस्तमतिलङ्घ्य यातः। कुवलयापीडं क्रोशन्तं मारयित्वा रङ्गं प्राप्त इत्यर्थः॥
२२ रामस्य पुनर्जानकीं प्रति निर्वेदोक्तिमाह–भो जानकि अविदा अज्ञानेन मया तत्पञ्चा-
वटीनर्म न रोचते वा येन त्वं गतासीत्यर्थः । अथ तदेवाज्ञानं प्रकटयन्नाह शवे शवप्रिये राक्षसे
चित्रकुरङ्गमालास्तीति मायामृगमजानता मयेत्यर्थः । कृष्णपक्षे तु कृष्णस्य सामर्थ्यं कंसह-
ननात्पूर्वमेव प्रकटीभूतमित्याह यः कृष्णः वाते वात्या भूतदैत्ये तृणावर्ते अचरः अचलोऽभूत्तथा
लामागरं कुत्रचिदाविवेश लामा पूतना तस्याः गरं विषं नर्मैव क्रीडामात्रमिव कुत्रचिदाविवेश
न च कृष्णे; अनेन बाल्ये एतावन्तं पुरुषार्थं कृतवान्किं पुनर्यौवने इति सूचितम् । एवमेतदुभयं
सदृष्टान्तमाह नर्मनटी नर्तकी चापं भ्रूभङ्गमात्रं दर्शयति तद्वदित्यर्थः ॥ २३ जानकीं स्कन्धे
गृहीत्वा सत्वरं निर्गतस्य रावणस्य जटायुना साकं सङ्गोभूऽदित्याह–जटायुः रावणं प्रति वदति
भो स्वमतमत्त इयं मालिनी दूयते स्वमतं स्वाग्रहस्तेन मत्त उन्मत्तः स्वाग्रहमेव करोषि परकीय-
विचारं न शृणोषि असावधानत्वादित्यर्थः। मालिनी अतिसुकुमारा जानकी दूयते क्लेशं प्राप्नोति।
किं भूता पक्षिकन्धरा पक्षिणि स्वपक्षपातिनि मयि कन्धरा मन्या यस्याः सा ताम्, इह मत्स्थाने
न क्षिपसि वा न मुञ्चसि वा तर्हि सङ्ग्रामेण मोचयिष्यामीति तात्पर्यार्थः । अथ कृष्णपक्षे तु
कंसवधे कृते उद्धवाक्रूरादयः कृष्ण स्तुवन्ति भो यदूत्तमतम स्वनीलिमाराधकं स्वस्य नीलिमा
तम् आराधायतीति स्वनीलिमाराधकं पुरुषं ते पक्षिवाहने क्षिपसि यदुषु उत्तमतम श्रेष्ठतम
त्वदनुस्मृतिं कुर्वाणं पुरुषं ते पक्षिवाहनं गरुडः तस्मिन् क्षिपसि आरोहयसि गरुडारूढं कृत्वा
वैकुण्ठं प्रति नयसीत्यर्थः । एवमपरोक्षभावनया एतत्फलं कंसस्य श्रीमत्साक्षात्कारे प्रवृत्तस्य
मुक्तिरित्यत्र किञ्चित्रमित्यर्थः ॥ २४ जटायुवचनाज्जानकी शुद्धिं लब्ध्वापि दक्षिणतश्चलि-
तस्य रामस्यावस्थामाह रामः योषामृते वनान्तयानस्वणुवेदना। अरण्यगताविरोधी,
अभूत योषां जानकीं विना वनान्तेषु यानं परिभ्रमणं तत्र महाक्लेशप्राप्तावपि सुत-
रामणुवेदनासु विवेकेन लक्ष्मणकृतेन सान्त्वनेन च ईषत्क्लेशेषु जातेषु सत्सु अरण्यगता
वानराः अविरोधिनो मित्राणि वयस्याः यस्य स्त्रीवेदनासूद्भूतासु सतीषु वानरैः सह सख्यं
यज्जातं तेन विश्रान्तिरभूदित्यर्थः ॥ कृष्णपक्षे तु कृष्णे विहाय गोकुलं मथुरां गते सति
विरहखिन्ना गोप्यो मिथः प्रोचुरित्याह–अगण्यतरे धीरः वः अविता इति मृषा गणयितुं योग्यं
गण्यं न गण्यम् अगण्यम् अश्लाघ्यं कुब्जया सह रतं तत्र धीरः निर्लज्जत्वेन प्रवृत्तः कृष्णः वः
अविता पुनर्गोकुलमागत्य रक्षिष्यतीति मृषा तत्कुतः सुनादवेणुस्वनयातनां किं न स्मरतीत्य-
ध्याहारः, सुष्ठु नादो यस्यासौ सुनादः एतादृशः वेणुस्तस्य स्वनस्तेन कृतां यातनां दूराद्वेणुस्व
नमाकर्ण्य यावत् कृष्णदर्शनं तावत्पर्यन्तं या यातना विरहदुःखमस्माकं किं पुनस्तस्मिन् परदेशं-

किंतु तोयरसापम्पा न सेवानियतेन वै । वैनतेयनिवासेन पापं सारयतो नु किम् ॥ २५ ॥ स नतातपहा तेने स्वं शेनाविहिताऽऽगसम् । संगताहिविनाशे स्वं नेतेहापत तान सः ॥ २६ ॥ कपितालविभागेन योषादोऽनुनयेनसः । स नये न नु दोषायो नगेभाविलतापिकः ॥ २७ ॥ ते सभा प्रकपिवर्णमालिका नाल्पकप्रसरमभ्रकल्पिता । तालिपकभ्रमरसप्रकल्पनाकालिमार्णवपिकप्रभासते ॥ २८ ॥ रावणेऽक्षिपतनत्रपानतेनाल्पकभ्रमणमक्रमातुरम् । रन्तुमाक्रमणमभ्रकल्पना तेनपात्रनतपक्षिणे वरा॥२९॥

---

-गते सति किं न स्मरतीत्यर्थः । २५ अणुवेदनास्विति पदेन महति दुःखे सति कथं विश्रान्तिरित्याह-पम्पातोये रसः स्वादुता यस्याः सा तोयरसा एवं विधा पम्पा किं नास्ति अस्त्येवेत्यर्थः । तथा वै इति निश्चयेन नित्यनियतेन हनुमता सेवा किं नास्ति अस्त्येव एवमुभयथापि रामस्य विश्रान्तिर्विरहदुःखेऽप्यासीदित्यर्थः ॥ कृष्णपक्षेः तु गोप्य उद्धवं परिहसन्ति वैनतेयनिवासेन गरुडनिवासेन कृत्वा पापं सारयतो दूरीकुर्वतः पुरुषस्य किंनु वाच्यमित्यध्याहारः, कृष्णोपासनया निष्पापस्त्वं कथमस्मान् प्रतारयसीति सूचितम् ॥ २६ वालिना हतदारः सुग्रीवो रामं शरणं प्रयात इत्याह-स नतातपहा रामः शेन स्वं तेने नतस्य नम्रस्य शरणागतस्य आतपं सन्तापं हन्तीति तथाविधो रामः शेन सुखेन स्वं तेने आश्वासनजनितसुखेन स्वं स्वकीयं सुग्रीवं तेने विस्तारितवान् । न विहितं न सम्पादितम्, आगः अपराधो येन तथा निरपराधत्वेनाविहितागसमिति सूचितमित्यर्थः ॥ उद्धवः गोपिकां प्रति कृष्णस्याश्रितपक्षपातं वदति स नेता नियन्ता कृष्णः इह सरस्वतीतीरसंस्थानं नन्दे सकण्टके आप प्राप सङ्गताहिविनाशे स्वं जनं ततान सङ्गतः प्राप्तः योऽहिः सर्पस्तस्य विनाशे कृते सति स्वकीयं जनं गोकुलस्थितं ततान विस्तारयामास, नन्दं निधनशङ्कया मुमूर्षु विस्तारितवान् स किं भवतीनुपेक्षत इति सूचितम् ॥ २७ वालिनं हत्वा सुग्रीवपत्नीं मुमोचेत्याह स रामःअनुनयेन प्रीत्या कपितालविभागेन योषादोऽभूत् कपिर्वाली तालाश्च तद्वृक्षकास्तेषां विभागेन विच्छेदेन योषां ददातीति योषादः योषां सुग्रीवपत्नीं दत्तवान् । गोपिका वदन्ति-स कृष्णः नये नीतिमार्गे नास्ति नु इति वितर्के किं तु दोषायास्ति दोषाणां दुःखानां अयः प्राप्तिर्यस्मात्स तथा पुनरायास्यतीति चेन्न । कुतः तथा नगे भाविलतापकः नगे पर्वते भाविनी या लग्नवल्ली सहकारशाखा तत्र पिकः पिकतुल्यः यथायमसंभावितार्थः तद्वदित्यर्थः ॥ २८ वालिपुत्रः अङ्गदो रामं प्रति वदति भो राम ते सभा प्रकपिवर्णमालिकास्ति प्रकृष्टा ये कपयो वानरास्तेषां ये विचित्रवर्णास्तेषां माला यस्यां सा तथा नानाविधवानरश्रेणीसंपन्ना सा तु कल्पकप्रसरं यथा भवति तथा अल्पसङ्ख्याका परन्तु अभ्रकल्पिता अभ्रे आकाशे मेघमण्डलपर्यन्तं वा नास्ति अनेन रक्षःपङ्क्तिः आकाशे प्रकल्पितास्तीत्यर्थः । गोपिकास्तावदन्योपदेशेन पिकं प्रति वदन्ति भो कालिमार्णवमालिन्य समुद्रापिक त्वयि तालिपकभ्रमरसप्रकल्पना प्रभासते । तल्पे भवं तालिपकं सुरतं तस्य भ्रमस्तत्र यो रसः स तस्य कल्पना प्रभासते स्वप्ने सुरतभ्रमे यावान् रसः स एव त्वयि भासते न साक्षादस्मत्सुरतसुखं तत्तु तव स्वप्नेऽपि दुर्लभमित्यर्थः ॥ २९ रावणो यद्यपि सकलसैन्यसन्नाहवानस्ति तथापि तत्र वीरलक्षणं नास्तीत्याह-रावणे अक्रमातुरं यथा भवति तथा अक्षिपतनत्रपानते सति अल्पकभ्रमणं न भविष्यति । न क्रमः अक्रमः परस्त्रीहरणादिकस्तेन आतुरं यथा स्यात्तथा अक्षिपतनं रामस्य दृष्टिपातस्तेन या त्रपा लज्जा तया रावणे नम्रे सति पर्याकुलतया यद् भ्रमणं चित्तभ्रमः किं न भविष्यति भूयादेव अहो वीरव्रतमतिक्रम्य पापं कृतवतो मम जयो नास्त्येवेति लज्जया कृत्वा चित्तस्यैव किं त्रासो न भविष्यतीत्यर्थः । उद्धवो गोपिकाः प्रति वदति भो गोप्यः तेन आक्रमणं दैत्यनिबर्हणादिकं तथा अभ्रवत्कल्पना मेघश्यामता च रन्तुं क्रीडार्थमवलम्बिता तथाऽनेन तस्य न किमपि प्रयोजनं तत्र तेन कारणेन सा मेघश्यामता पात्रनतपक्षिणे वरा । पात्रे नताः पात्रनताः पुरुषास्तेषां पक्षो यस्य-

दैवे योगे सेवादानं शङ्का नाये लङ्कायाने । नेयाकालं येनाकाशं नन्दावासे गेयो वेदैः ॥ ३० ॥
शङ्कावज्ञानुत्त्वनुज्ञावकाशं याने नद्यामुग्रमुद्यानेनेया । याने नद्यामुग्रमुद्यानेनेया शङ्कावज्ञानुत्त्वनुज्ञावका-
शम् ॥ ३१ ॥ वादिदेश द्विसीतायं यं पाथोयनसेतवे । वेतसेन यथोपायं यन्तासीद्विशदे दिवा॥३२॥
वायुजोऽनुमतो नेमे संग्रामेऽरवितोऽह्नि वः । वह्नितो विरमेप्रासं मेनेऽतोमनुजो युवा ॥ ३३ ॥
क्षताय मा यत्र रघोरितायुरङ्कानुगानन्यवयोऽयनानि । निनाय योवन्यनगानुकारंयुतारिघोरत्रयमाय-

---

—स तत्पक्षी तस्मै कृष्णाय वरा कल्पिता भक्तानां ध्यानगोचरत्वायेत्यर्थः । तथा च भवतीनां ध्यानयोगेनैव कृतार्थत्वमस्तीति सूचितम् ॥ ३० सीताशुद्ध्यर्थमादिष्टो हनुमान् रामं प्रत्याह-अये श्रीराम लङ्कायाने लङ्कां प्रति गमने शङ्का नास्ति कुतः यतो दैवे योगे सेवादानं जातमस्ति देवसम्बन्धी दैवस्तस्मिन् तव योगे या सेवावलम्बितास्ति अतो लङ्कागमने त्वत्से-वाया एव सामर्थ्यमित्यर्थः । पुनरुद्धवः कृष्णं स्तौति स कृष्णः नन्दावासे नन्दव्रजेऽभूत् स कः येन आकाशं नेयाकालं नेतुं संहर्तुं योग्यो नेय आ समंतात् कलयति तत् एवं-विधमाकाशं काले आकाशादिकमपि संहर्तुं क्षमस्तत्र भवतीनां सारः श्रमः कियानित्यर्थः । किंभूतः वेदैः गेयः गातुं योग्यः । अत्र विद्युन्माला, तल्लक्षणम्, "मो मो गो गो विद्युन्माला" इति ॥ ३१ जानकीशुद्धिं कृत्वा परावृत्तो हनुमान् रामं प्रति वदतीत्याह हे राम ! सा जानकी उग्रमतिक्लेशं यथा भवति तथा नद्यां कुल्यायाम् उद्याने नेया उद्याने क्रीडावने नेतुं योग्या नेया अस्ति तथा सीता कृत्रिमसरित्उपकण्ठे उद्यानेऽस्तीत्युक्तमित्थं त्वं रावणस्य क्रीडावने गन्तुं कथमवकाशं लब्धवानित्याह याने प्रयाणकाले अनुज्ञावकाशं यथा भवति तथा शङ्कावज्ञानुत् तु श्रीमदनुज्ञालब्धावकाशत्वेन शङ्कावज्ञे नुदिते तथा शङ्का राक्षस-भयं तत्कृतावज्ञा जम्बूवनपालादिकृते तद्भयं मया निराकृतमित्यर्थः ॥ गोकुलात्परावृत्त उद्धवः कृष्णं प्रति वदति भो कृष्ण उद्यानेनेया कापि गोपिका नद्यां याने उग्रमतिक्लेशं यथा भवति तथा तिष्ठति या त्वया पूर्वं स्कन्धोपरि धृत्वा उद्यानं प्रति प्रापिता । तर्हि तस्या दयितदेवरा-दयः किं न सन्तीत्याह-हे कृष्ण सा गोपिका अहं पुनरागमिष्यामीति श्रीमदनुज्ञया लब्धावकाशं यथा स्यात्तथा शङ्कावज्ञा सती तिष्ठति शङ्काया दयितभयस्य अवज्ञा अवगणना तस्याः सा दयितदेवरादीनां शङ्काभयं तथा तत्कृतविकाराद्यविगणय्य प्राणावशेषा तिष्ठति एवं तयै-कया विनाऽन्याः सर्वा अपि मया सम्बोधिता इत्युक्तं भवति ॥ ३२ समुद्रं नियम्य लङ्कां गन्तुं शक्तोऽपि रामः क्षुद्रवानरकौतुकं द्रष्टुं सेतुबन्धार्थमादिदेशेत्याह-वेति अथवा स रामः यं कंचिद्वानरं पाथोयनसेतवे आदिदेश । पाथसामुदकानामयनं यस्मिन् स पाथोयनः समुद्रस्तस्य सेतवे सेतुबन्धायादिदेश आज्ञापयामास किमर्थं परं द्विसीतायं यथा स्यात्तथा द्वयोः सीतयोः समाहारो द्विसीतं तस्यायः प्राप्तिः किं पुनरेकसीतालब्धिः अपरं सेतुबन्धाख्यं पुरुषार्थं सीता-द्वयलाभो भविष्यतीत्युत्साहेनादिदेशेत्यर्थः ॥ कंसे हते मातामहायोग्रसेनाय राज्यं दत्वा स्वयं तत्सैन्यपतिर्बभूवेत्याह-स कृष्णः यथोपायं वेतसेन यन्तासीत् यथोपायं राजनीतिमन-तिक्रम्य वेतसेन वेत्रधारत्वेन नियन्तासीत् । विशदे दिवा सुमुहूर्तोपलक्षिते दिवसे ॥ ३३ राक्षसैः सह सङ्ग्रामोपस्थितः श्रीरामो हनुमत्प्रशंसामाह-हे वानराः ! वः इति युष्माकं मध्ये अरवितः अह्नि वा सङ्ग्रामे उपस्थिते सति वायुजोऽनुमतो नास्ति रविर्यस्मिंस्तत् अरवि तस्मिन् रात्रावित्यर्थः । अह्नि रात्रौ वा सङ्ग्रामे उपस्थिते सति हनुमानेव अनुमतः सम्मतः रात्रौ दिवा वा मायाविभिः सह सङ्ग्रामे वायुपुत्र एव निर्वाहयिष्यतीत्युक्तं भवति, नरा नानुमता न सम्मताः । कंसादिहनने राज्यस्थापने वा कृष्णस्य किं चित्रं वर्णनीयमित्याह-अतः परं यो विरमे प्राप्ते सति वह्नितो वह्निमेव ग्रासं भक्ष्यत्वेनोपस्थितं मेने अमनुजः देवः सन् युवा परा-क्रमी तत्र न किमपि चित्रमित्यर्थः ॥ ३४ रामरावणयोर्युद्धप्रसङ्गे वानरैर्व्याकुलितो रावणो रामेण सह न प्रभावमगादित्याह-यत्राङ्कानुगानन्यवयोयनानि सन्ति तत्र इतायुः रघोः क्षताय मा भूत् अङ्कमनुगच्छन्ति ते अङ्कानुगाः शरणं गता वानरास्तेष्वनन्यं वयः जन्म येषां ते अनन्यव-

ताक्षः ॥ ३४ ॥ तारके रिपुराप श्रीरुचा दाससुतान्वितः । तन्विताासु सदा चारु श्रीपरा पुरि के रता ॥ ३५ ॥ लङ्का रङ्कागाराध्यासं याने मेया काराध्यासे । सेव्या राका यामे नेया संध्या रागाकारं कालम् ॥ ३६ ॥

इति सुभाषितसुधारत्नभाण्डागारस्य पञ्चमं भाण्डम् ।

---



---

--यतः सुग्रीवहनुमदादयस्तेषामयनानि सङ्ग्रामे गृहप्रवेशपरिसरणानि यत्र तत्र इताषुः दशास्यः रघो रामचन्द्रस्य क्षताय शस्त्रादिभिर्घाताय मा न समर्थोऽभूत् । प्रथमतो वानरैरेव व्याकुलीकृतः रामेण सह योद्धुमलब्धावकाशोऽभूदित्यर्थः । बृन्दावने कृष्णो दैत्यानवधीदित्युक्तं तत्र त्रयमतिभयानकं हतमित्याह-य आयताक्षः कृष्णः युतारिघोरत्रयं मुक्ति निनाय । युताः योगं प्राप्ताश्च ते अरयश्च तेषु घोरत्रयं निनाय प्रापितवान् । पूतना अघासुरः केशी चेति भयानकं त्रयं स्वान्तिके प्रापितमित्यर्थः । अथ भयानकमेव व्यनक्ति । किंभूतं घोरत्रयं वन्यनगानुकारं वने स्थितः वन्यः स चासौ नगः पर्वतस्तद्वदनुकारो यस्य स तथा अतिप्रचण्डमित्यर्थः ॥ ३५ सपरिवारस्य रावणस्य तारके परब्रह्मणि प्रवेशोऽभूदित्याह-रिपुः श्रीरुचा तारके आप रिपुः रावणः श्रीर्मोक्षलक्ष्मीः तस्याः रुग्दीप्तिः प्रकाशस्तेनेत्यर्थः । किंभूतः दाससुतान्वितः दासाश्च कुम्भकर्णादयः सुता इन्द्रजिदादयस्ते सर्वेऽपि तारकं प्राप्ता इत्यर्थः । कृष्णपक्षे तु सदा चारु यथा स्यात्तथा तन्विताासु गोपीषु श्रीपरा पुरि के रता आसीत् तनुना शरीरेण इतासु प्राप्तासु गोपिकासु मध्ये श्रियः लक्ष्म्याः परा श्रीर्द्वितीया लक्ष्मीरिव सैरन्ध्री पुरि मथुरायां के परब्रह्मणि कृष्णे रता आसीत् । गोकुले कृष्णविरहेण तदाध्याननीतासु सतीषु मथुरायां कृष्णस्य सैरन्ध्या साकं गार्हस्थ्यमभूदित्यर्थः । ३६ रावणे सपरिवारे हते सति लङ्का हतप्रभाऽभूदित्याह याने रामागमने सति लङ्का रङ्कागाराध्यासं यथा स्यात्तथा मेयाऽभूत् लङ्कानगरी रङ्कस्यागारं रङ्कागारं तस्य अध्यासो भ्रमस्तेन ज्ञातुं योग्याभूत् इयं लङ्का तु कस्यचिद्रङ्कस्य अगारमिति भ्रमेण ज्ञाताभूदित्यर्थः । कस्मिन् सति काराध्यासे सति कारा वन्दीगेहं तस्य अध्यासे अविस्तारे सति काराविस्तारं निर्भिद्य बन्दीभूतेषु देवेषु निर्मोचितेषु सत्स्वित्यर्थः ॥ कृष्णपक्षे तु पूर्वं सैरन्ध्या साकं कृष्णस्य गार्हस्थ्यमभूत्तत्र दृष्टान्तमाह-सेव्या सेवितुं योग्या अतिरमणीयमभूदित्युक्तं सैरन्ध्री यामे संयोगावसरे कालं मेघश्यामं कृष्णं प्रति नेया नेतुं योग्या नेयाऽभूत् । अत्र योग्यपदेनोभयोः संयोगे शोभातिशयः सूचितः । का कमिव राका संध्या रागाकारमिव । पूर्णचन्द्रोदयोपलक्षिता राका संध्याकारं प्राप्य यथा शोभातिशयशालिनी भवति तद्वदित्यर्थः ॥

श्रीः।

# षष्ठं भाण्डम्।

## सूर्यान्योक्तिनिदर्शनम्।

रवेरेवोदयः श्लाघ्यः कोऽन्येषा[1]मुदयग्रहैः[2]। न तमांसि न तेजांसि यस्मिन्नभ्युदिते सति ॥ १ ॥
खद्योतो[3] द्योतते तावद्यावन्नोदयते शशी। उदिते तु सहस्रांशौ[4] न खद्योतो न चन्द्रमाः ॥ २ ॥ तस्यै-
वाभ्युदयो भूयाद्भानोर्यस्योदये सति। विकासभाजो जायन्ते गुणिनः[5] कमलाकराः[6] ॥ ३ ॥ निमीलनाय
पद्मानामुदयायाल्पतेजसाम्। तमसामवकाशाय व्रजत्यस्तमसौ रविः ॥ ४ ॥ करस्फोटो[7]ऽम्बरत्या-[8]
गस्तेजोहानिः[9] सरागता[10]। वारुणीसङ्गजावस्था[11] भानुनाऽप्यनुभूयते ॥ ५ ॥ उद्यन्नित्यं त्वरितस्तमोऽपगम-
यति करैः समाकृष्य। महितस्त्वदसि स्थाने[12] मित्रे[13] पुमांस्त्वं परे[14] क्लीबाः ॥ ६ ॥ निहतं तिमिरं
निहिता सञ्ज्ञा कर्म्मसु नियोजितो लोकः। कमलं[15] भानं नीतं देव[16] तवैव प्रभावोऽयम् ॥ ७ ॥
अजस्रं[17] लसत्पद्मिनीवृन्दसङ्गं मधूनि प्रकामं पिबन्तं मिलिन्दम्[18]। रविर्मोचयत्यब्जकारागृहेभ्यो दयालुर्हि
नो दुष्टवद्दोषदर्शी ॥ ८ ॥ एतावत्सरसिजकुड्मलस्य कृत्यं भित्त्वाऽम्भः सरसि विनिर्गमो बहिर्यत्।
आमोदो विकसनमिन्दिरा[19]निवासस्तत्सर्वं दिनकरकृत्यमामनन्ति ॥ ९ ॥ देवो हरिर्वहतु वक्षसि कौस्तुभं
तन्मन्ये च काचन पुनर्द्युमणेः[20] प्रतिष्ठा। यत्पाद[21]संगतिसमर्पितसौरभाणि धत्ते स एव शिरसा सरसीरुहाणि
॥ १० ॥ उद्यन्त्वमूनि सुबहूनि महामहांसि[22] चन्द्रोऽप्यलं भुवनमण्डलमण्डनाय। सूर्यादृते न तदुदेति
न चास्तमेति येनोदितेन दिनमस्तमितेन रात्रिः ॥ ११ ॥ दिक्श्रीतमोहतिजगज्जनरञ्जनादि सर्वं भवि-
ष्यति रवेरिव चन्द्रतोऽपि। किं त्वस्तगामिनि रवौ भविता न जाने राजीवजीवन[23]विधौ कतमः प्रकारः
॥ १२ ॥ अधिगमनमनेकास्तारका राजमानाः[24] प्रतिगृहमपि दीपाः प्राप्नुवन्ति प्रतिष्ठाम्। दिशि दिशि
विकसन्तः सन्ति खद्योतपोताः[25] सवितरि मुदिते[26]ऽस्मिन् किं नु लोकैरलोकि ॥ १३ ॥ गते तस्मिन्भानौ

---

१ चन्द्रप्रभृतीनाम्। २ प्रकाशकर्तृत्वाभिमानः। ३ ज्योतिरिङ्गणः। ४ सूर्ये। ५ गर्भे तन्तुसन्तानशालिनः, शौर्यादिशालिनश्च। ६ कमलपुञ्जाः, लक्ष्म्यास्पदभूताश्च। ७ कराणां किरणानां स्फोटः प्रकाशः, हस्तानां शब्दविशेषश्च। ८ अम्बरस्य गगनस्य वस्त्रस्य च त्यागः। ९ तेजसः प्रकाशविशेषस्य प्रभाविशेषस्य च हानिः। १० रक्तवर्णत्वम्, विधेयताविशेषश्च। ११वारुणी पश्चिमा दिक् तस्याः सङ्गजावस्था, पक्षान्तरे वारुण्या मदिरायाः पानरूपव्यासङ्गजन्या याऽवस्था सेति। १२ योग्यम्। १३ हे सूर्य, सखे इति च। १४ परे चन्द्रादयः प्रियान्तराश्च। मित्रशब्दः सूर्यवाचित्व एव पुँल्लिङ्गः, अन्यदा तु क्लीबलिङ्ग इति तत्त्वम्। १५ पङ्कजम्, कं सुखम्, अलमिति च। १६--दैवत। राजन्निति च १७ निरन्तरम्। १८ भ्रमरम्।१९ इन्दिरा लक्ष्मीः। २० सूर्यस्य। २१ पादः किरणः, चरणश्च। २२ महन्महस्तेजो येषां तानि नक्षत्रादीनीति भावः। २३ राजीवजीवनं कमलविकासः। २४ प्रकाशमानाः। २५ क्षुद्रा ज्योतिरिङ्गणाः। २६ मुदिते प्रकाशं प्राप्त इत्यर्थः। 'उदित' इति पाठान्तरे तु संहिताऽभावो 'निरङ्कुशा महाकवयः।' इत्यादिना समाधेयः।

त्रिभुवनसमुन्मेष[1]विरहव्यथां चन्द्रो नेष्यत्यनुचितमितो नास्ति किमपि। इदं चेतस्तापं जनयतितरामत्र यदमी प्रदीपाः संजातास्तिमिरहतिबद्धोद्धुरशिखाः ॥ १४ ॥ क्षपां[2] क्षामीकृत्य[3] प्रसभमुपहृत्याम्बु सरितां प्रताप्योर्वीं कृत्स्नां तरुगहन[4]मुच्छोष्य सकलम्। क्व सम्प्रत्युष्णांशुर्गत इति तदन्वेषणपरास्तडिद्दीपालोकैर्दिशि दिशि चरन्तीह जलदाः ॥ १५ ॥ पातः[5] पूष्णो[6] भवति महते नोपतापाय यस्मात्कालेनास्तं क इह न गता यान्ति यास्यन्ति चान्ये। एतावत्तु व्यथयति यदालोकबाह्यैस्तमोभिस्तस्मिन्नेव प्रकृति[7]महति व्योम्नि लब्धोऽवकाशः ॥ १६ ॥ पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ व्रजतु वरुणागारद्वारं[8] प्रेमाभिरनादृतः। तदपि तरणिर्दृष्ट्वा पादं[9] शिरःसु महीभृतां[10] दलिततिमिरव्रातः प्रातः पुनः सक्तदेष्यति ॥ १७ ॥ येनोन्मथ्य तमांसि मांसलघनस्पर्धीनि सर्वं जगच्चक्षुष्मत्परमार्थतः कृतमिदं देवेन तिग्मत्विषा[11]। तस्मिन्नस्तमिते विवस्वति कियान्क्रूरो जनो दुर्जनो यद्बध्नाति धृतिं शशाङ्कशकलैर्[13]लोके प्रदीपेऽथवा ॥ १८ ॥ यत्पादाः[14] शिरसा न केन विधृताः पृथ्वीभृतां[15] मध्यतस्तस्मिन्भास्वति राहुणा कवलिते[16] लोकत्रयीचक्षुषि। खद्योतैः स्फुरितं तमोभिरुदितं[17] ताराभिरुज्जृम्भितं घूकै[18]रुत्थितमाः किमत्र करवै किं किं न कैश्चेष्टितम् ॥१९॥ पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सार्य नैशं[19] तमः कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा। मध्याह्ने सरितां पयः प्रविततैरापीय दीप्तैः करैः सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत् ॥ २० ॥ दूरं यान्तु निशाचराः शशिकराः क्लेशं लभन्तां तरामुद्योतं कलयन्तु हन्त न चिरं खद्योतका द्योतले[21] । ध्वान्तं ध्वंसमुपैतु हंसनिवहः पद्माकरे शाम्यतु प्राचीपर्वतमौलिमण्डनमणिः सूर्यः समुज्जृम्भते ॥ २१ ॥

## चन्द्रान्योक्तिनिदर्शनम्।

आलोकवन्तः[22] सन्त्येव भूयांसो[23] भास्करादयः। कलावानेव तु ग्रावद्राव[24]कर्मणि कर्मठः[25] ॥ १ ॥ देवायद्यपि तुल्योऽभूद्भूतेशस्य[26] परिग्रहः। तथापि किं कपालानि[27] तुलां यान्ति कलानिधेः ॥ २ ॥ अहो नक्षत्रराजस्य साभिमानं विचेष्टितम्। परिक्षीणस्य वक्रत्वं संपूर्णस्य सुवृत्तता[28] ॥ ३ ॥ व्यज्यमानकलङ्कस्य वृद्धौ सति कलानिधेः। आशास्महे वयं पूर्वां सर्वश्लाध्यां कृशां दशाम्[29] ॥ ४ ॥ क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम्। उपैति मित्राद्[30]यच्चन्द्रो युक्तं तन्मलिनात्मनः[31] ॥५॥ निशाचरोऽपि दीनोऽपि सकलङ्कोऽपि चन्द्रमाः। चकोरीनयनद्वन्द्वमानन्दयति सर्वदा ॥ ६ ॥ हरमुकुटे सुरत[32]टिनीनिकटस्थितिलाभतो द्विजेन्द्रेण। अपि गरलं फणि[33]फूत्कृतिरीक्ष्ण[34]तीक्ष्णाशुशुक्षणिः क्षान्तः ॥७॥ निजकरनिकरसमृद्ध्या धवलय भुवनानि पार्वण[35] शशाङ्क। सुचिरं हन्त न सहते हतविधिरिह सुस्थितं कमपि ॥८॥ यद्यपि शिरोऽधिरोहति रौद्रैः[36] क्रोधेन सिंहिकातनयः[37]। त्यजति न शरणं यातं सागरसूनु[38]र्मृगं तदपि

---

१ समुन्मेषः अभ्युदयः प्रकाशो वा। २ रात्रिम्, नायिकाविशेषं च। ३ कृशां कृत्वा। ४ तरुवनम्। ५ पतनम्। ६ सूर्यस्य। ७ स्वतो विपुले, उदारे च। ८ पश्चिमदिग्द्वारम्। ९ किरणैः, नायिकाविशेषैश्च। १० किरणं, चरणं च। ११ पर्वतानां राज्ञां च। १२ तिग्मांशुना, सूर्येणेति यावत्। १३ चन्द्रखण्डप्रकाशे। १४ पादाः,किरणाश्चरणाश्च। १५ पर्वतानां,राज्ञां च। १६ ग्रस्ते। १७ प्रसृतम्, अधिकृतं वा। १८ उलूकैः। १९ रात्रिसम्बन्धिः। २० प्रकाशम्। २१ आकाशे। २२ प्रकाशवन्तः। २३ बहवः। २४ ग्रावा चन्द्रकान्तमणिः। २५ प्रवीणः। २६ प्रेतराजस्य, महेश्वरस्य वा। २७ अस्थिविशेषाः। २८ सुन्दरवर्तुलाकारत्वं, सुचरितत्वं वा। २९ अवस्थाम्। ३० सूर्यात्, सख्युश्च। ३१ कलङ्किनः, कलुषितान्तःकरणस्य च। ३२ गङ्गानदी। ३३ फणी सर्पः। ३४ तृतीयनेत्रस्य भयङ्करो ज्वलनः। ३५ पूर्ण। ३६ भयावहः। ३७ राहुः। ३८ चन्द्रमाः।

॥ ९ ॥ प्रोषितवति रजनिकरे[1] बन्धुतया न खलु कैरवाण्येव । म्लायन्ति किंतु सहसा भुवनान्यपि तमसि[3] मज्जन्ति ॥ १० ॥ शंकरशिरसि निवेशितपदेति मा गर्वमुद्वहेन्दुकले । फलमेतस्य भविष्यति तव चण्डी[4]चरणरेणुमृजा ॥ ११ ॥ द्विजपति[5]पदमपि यातो हतवानसि मानिनीं गुरोरेव[6] । जातेऽप्यङ्के शशधर सुमना[7]स्तिष्ठसि न तेऽवगमः ॥ १२ ॥ क्षीणे क्षीणोऽप्यनृजुर्जातेऽप्यङ्के महोज्ज्वलाभासः । मित्रा[8]नुदयेऽभ्युदयी सोम न केषां प्रणम्योऽसि ॥ १३ ॥ क्षीणः क्षीण उपैषि त्यजसि च मित्रं[9] प्रवर्धमानस्त्वम् । स्थाने निधे कलानामङ्कग्लानिं हृदोऽपनय ॥ १४ ॥ या महेशशिरसो विभूषणं या त्रिलोकजनलोचनोत्सवः । सेयमिन्दुकलिका दिनात्यये तापिता कमिह नातितापयेत् ॥ १५ ॥ रञ्जिता न ककुभो[10] निवेशिता नार्चिषो बत चकोरचञ्चुषु । कष्टमिन्दुरुदये निपीयते दारुणेन तमसा[11] बलीयसा ॥ १६ ॥ किरति प्रकरं गवां[12] प्रकर्षं सुमनःस्वच्छतरं विधौ कलानाम् । कति चेत्कलयन्ति यत्प्रबोधं कति चेन्नेति स तत्स्वभाव एव ॥ १७ ॥ निधेः कलानामपि रीतिरेषा मर्माणि मे संस्पृशतीव भूयः । कुतो विशेषात्कुमुदेऽनुरागः कुतो विरागश्च कुशेशयेषु[13] ॥ १८ ॥ निष्पीडितो यद्यपि दैवयोगान्निशाकरश्चापि विधुन्तुदेन[14] । तथाऽपि पीयूषविशेषवर्षी सुधाकरः कैरवकाननेषु ॥ १९ ॥ वक्रोऽस्तु बाल्ये तदनु प्रवृद्धः कलङ्कवानस्तु जडोऽस्तु चन्द्रः । महेशमौलौ च पदं दधातु जायेत वन्द्यो विविधोपकारात् ॥ २० ॥ तारागणाश्चन्द्रमसं भजन्ते न जातु नाथं नलिनीकराणाम्[15] । एतावता तस्य किमस्ति हानिर्ज्ञाता तयोरन्तरमेव लोकः ॥ २१ ॥ यस्योदये नैव दिशां प्रसादै[16]स्तापापनोदोऽपि जगत्त्रयस्य । चकोरचञ्चूपुटपारणे तु चन्द्रस्य तस्यास्ति कियान्प्रयासः ॥ २२ ॥ प्रकुर्वता संगतिमिन्दुनाऽधुना किं किं न लब्धं जगदीश्वरेण वै । कलङ्कहानिः सुरसिन्धु[17]संगमः कलाऽक्षयित्वं[18] च पदं तथोच्चकैः ॥२३॥ नयनम्[19]असि जनार्दनस्य शंभोर्मुकुटमणिः सुदृशां त्वमादिदेवः[20] । त्यजसि न मृगमात्रमेकमिन्दो चिरमिति येन कलङ्किनं वदन्ति ॥ २४ ॥ विरम तिमिर साहसा[21]दमुष्माद्यदि रविरस्तमितः स्वतस्ततः किम् । कलयसि[22] न पुरो महोर्मिधाराद्युतिनिधिरभ्युदयत्ययं शशाङ्कः ॥ २५ ॥ आस्ते विधुः परमनिर्वृत एव मौलौ शंभोरिति त्रिजगतीजनचित्तवृत्तिः । अन्तर्निगूढनयनानलदाहदुःखं जानाति कः परमृते बत शीतरश्मेः ॥ २६ ॥ एकैव साऽमृतमयी सुतरामनर्घ्या[23] कोऽप्यस्त्यसौ[24] हिमकरस्य कला ययैव । आरोपितो गुणविदा परमेश्वरेण चूडामणौ न गणितोऽस्य कलङ्कदोषः ॥ २७ ॥ श्रेयान्विधोर्बहुलपक्षपरिक्षयो[25]ऽपि नो पूर्णताऽपि जलधेरिह वर्णनीया । यद्वारि न स्पृशति हन्त पृथग्जनोऽपि यस्यामृतैर्मखभुजो[26]ऽपि मुदं लभन्ते ॥ २८ ॥ मारस्य[27] मित्रमसि किं च सुधामयूख शंभावपि प्रणयितां[28] प्रकटी-

---

१ चन्द्रमसि । २ इदमर्धान्तरैकपदत्वग्रस्तम् । ३ सूर्योदये भुवनानां तमसि निमज्जनं कथमिवेति चिन्त्यमिदमभिधानम् । महसीति पाठे तु सूर्यस्यासह्ये तेजसि दह्यन्त इति तथोक्तिः सङ्गच्छेत । ४ पार्वती- । ५ चन्द्र, ब्राह्मणमुख्य- । ६ बृहस्पतेः, आचार्यस्य । ७ देवः, प्रसन्नश्च । ८ मित्रः सूर्यः, मित्रं सखा च । ९ चन्द्रो हि कृष्णपक्षे सूर्यसान्निध्यं भजते, शुक्लपक्षे तु सूर्यतो वियुज्यते । अत्रापि मित्रपदं सूर्य-प्रियोभयपरम् । १० दिशः । ११ राहुणा । १२ किरणानाम् । १३ कमलेषु । १४ राहुणा । १५ कमलपुञ्जानां विकासकत्वेन तेषां नाथः सूर्यः । १६ प्रसन्नता, स्वच्छतया प्रकाशश्च । १७ गङ्गा- । १८ कलाया अक्षयित्वमिति भावः । १९ वाममिति शेषः । २० परमं पूज्यः, अभिनन्दनीयश्च । २१ अनुचितात्प्रसरणानुष्ठानरूपादुद्योगात् । २२ विचारयसि, पश्यसि वा । २३ अत्युत्कृष्टा । २४ लोकोत्तरा । २५ कृष्णपक्षे क्षीणत्वम् । २६ यज्ञभोक्तारो देवाः । २७ कन्दर्पस्य । २८ अनुरागित्वम् ।

करोषि । विश्वासपात्रमसि यद्द्विषतोस्तयोरप्येतत्तव प्रकृतिशुद्धतनोश्चरित्रम् ॥ २९ ॥ रत्नाकरो जनयिता सहजश्च वर्गः किं कथ्यताममृतकौस्तुभपारिजाताः । किं तैरचिन्त्यमिह तत्पुनरन्यदेव तत्त्वान्तरं कुमुदबन्धुरसौ यदिन्दुः ॥ ३० ॥ नानन्दि कैरवमवर्धि न वाऽम्बुराशिरादीपि नाम्बर[1]महारि नवान्धकारः । धिग्दैवदुर्विलसितं यदसौ सुधांशुरभ्युद्यतश्च तमसा[2] कवलीकृतश्च ॥ ३१ ॥ चन्द्रं समाश्रयति नाम तिथिस्त्वनेका क्षीणस्तु बिम्बपरिपूर्णमपूरणाय । एवं पुनः सकलमण्डलपूर्णवर्णं सा पूर्णिमैव खलु पूरयितुं समर्था ॥ ३२ ॥ प्राणप्रियाऽऽश्रयवियोगत एव ये स्युर्दीनाः पराक्रमविधिर्बत तत्र कीदृक् । भूयोऽपि तेषु बत निर्दयतां वितन्वन्किं दर्शयत्युपरि सङ्गत एष चन्द्रः ॥ ३३ ॥ स्मेरा[3] दिशः कुमुदमुद्भिदुरं[4] पिबन्ति ज्योत्स्नाकरम्भ[5]मुदरंभरयश्चकोराः । आः कीदृगत्रिमुनिलोचनदूषिकायां पीयूषदीधितिरिति प्रथितोऽनुरागः ॥ ३४ ॥ दोषाकरस्य[6] शमनस्य भयान्निवृत्ताः स्यामेत्यमी जगति योगिन[7] एव सर्वे । किं त्वध्वगत्व[8]वशतो बत मुक्तयोगा[9] ये तेषु तस्य किल दृष्टचरः प्रभावः ॥ ३५ ॥ दोषाकरोऽप्यसुभगत्वमुपैति यन्न तत्पान्थलुण्ठनसमाहृतसौभगत्वा[10]त् । धूमायितं तु मलिनत्वमवेक्ष्यते तदाहोपमो दुरिततातिशयोऽथवाऽयम् ॥ ३६ ॥ मुग्धा मृषा हिमकरोऽयमिति स्तुवन्ति दोषाकरं न खलु तत्त्वलवो[11]ऽपि तत्र । प्राणप्रियाऽऽश्रयमपाकृतवान्वराको व्यापाद्यते कथमिवेतरथाऽमुना[12] किम् ॥ ३७ ॥ प्राणप्रियाश्रयवियोगत एव ये स्युर्दीनाः पराक्रमविधिर्बत तत्र कीदृक् । भूयोऽपि तेषु बत निर्दयतां वितन्वन्किं दर्शयत्युपरिगो द्विजनायको[13]ऽयम् ॥ ३८ ॥ हिमकर परभागं भूषयिष्यन्सुमेरोर्व्रजसि यदि तदाऽहं न क्षमः संनिरोद्धुम् । इति तु बहुविधाभिः काकुभिः प्रार्थये त्वां पुनरपि कुमुदानामेत्यहार्यो[14] विषादः ॥ ३९ ॥ कलास्तास्ताः सम्यग्वहसि यदसि त्वं द्विजपतिर्द्युतिरतादृग्नूत्ना जनिरपि च रत्नाकरकुले । बहु ब्रूमः किंवा पुरहरशिरोमण्डनमसि त्वदीयं तत्सर्वं शशधर कलङ्काद्विफलितम् ॥ ४० ॥ पादन्यासं[15] क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः । सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैर्दूरारोहो भवति महतामप्यपभ्रंशहेतुः ॥ ४१ ॥ त्वं भोः शंभोर्निवससि शिरोदेशमाश्रित्य नित्यं तत्त्वां याचे जगदुपकृतिव्यापृतिव्यग्रमिन्दो । यः सद्भावस्तव परिणतः कैरवे वा चकोरे स्पृश्यस्तेन प्रतिनिशमसौ चक्रवाको वराकः ॥ ४२ ॥ यज्जातोऽसि पयोनिधौ हरजटाजूटे प्रसिद्धोऽसि यद्विश्वस्योदरदीपकोऽसि विधिना सृष्टोऽसि यच्चामृतैः । भ्रातः शीतमयूख सर्वमधुना म्लानीकृतं तत्त्वया राजीवं यदपास्य[16] कैरवकुलं नीतं विकासास्पदम् ॥ ४३ ॥ पीयूषं वपुषोऽस्य हेतुरुदयो विश्वस्य नेत्रोत्सवः प्लुष्टं[17] भानुकरैरिदं त्रिभुवनं ज्योत्स्ना[18]भरैः सिञ्चति । सर्वाशा[19]प्रतिरोधकान्धतमसध्वंसाय बद्धोद्यमो धिग्धातारमिहापि लक्ष्म[20] लिखितुं यस्य प्रवृत्तं मनः ॥ ४४ ॥ उच्चैःस्थानकृतोदयैर्बहुविधैर्ज्योतिर्भि[21]रुद्यत्प्रभैः शुक्राद्यैः

---

१ आकाशम् । २ राहुणा । ३ समप्रकाशाः । ४ विकसितम् । ५ 'करम्भो' दधिसक्तवः ।' इत्यमरः । ६ चन्द्ररूपस्य दूषणानां निधानरूपस्य वा । ७ समाधिभाजः, प्रियासम्बन्धयुक्ताश्च । ८ अध्वगत्वं देशान्तरं प्रति प्रयाणकर्तृत्वम् । ९ त्यक्तसमाधयः, विनष्टप्रियाश्लेषसुखाश्च । १० सौभगत्वं सुखित्वं, सौन्दर्यं च । पान्थाः प्रवासिनो हि चन्द्रोदये म्लानवदनाः सुखहीना भवन्तीति तथोक्तम् । ११ हिमकरत्वांशः । १२ दोषाकरेण चन्द्रमसा १३ असौ सोल्लुण्ठनोक्तिः । १४ अनिवर्तनीयः । १५ पादाः किरणाः चरणाश्च । १६ परिहाय, तिरस्कृत्य वा । १७ दग्धम् । १८ज्योतिर्विशेषनिर्भरैः । १९ आशा दिशः । २० लक्ष्म लाञ्छनम् । २१ ताराभिः ।

किममीभिरत्र वितथां प्रौढिं[2] दधानैरपि । यावल्लोकतमोऽपहे[3]न भवता लक्ष्मीर्न[4] विस्तार्यते तावच्चन्द्र कथं प्रयाति परमां वृद्धिं स रत्नाकरः॥४५॥जन्म क्षीरमहार्णवे सहभुवः श्रीपारिजातादयो बिम्बं यस्य सुधामयं त्रिभुवनाधीशस्य मूर्ध्नि स्थितिः । इत्थं सर्वचराचरप्रियकरे यस्योदये चेद्भवेत्संकोचः कमलस्य दुष्कृतिरसौ निन्द्यो न ताराधिपः ॥ ४६ ॥ इन्दुं निन्दतु नाम वाऽथ नलिनी निन्दन्तु चक्राह्वया नैवानेन सुधाकरस्य सुषमा[6]हानिर्न वा दुर्यशः । एतेनैव कृतार्थताऽस्य जनता[7] यन्मोदमालम्बते यज्ज्योत्स्नासु चिरं चकोरपरिषच्चञ्चूपुटं[8] न्यस्यति ॥ ४७ ॥ लक्ष्मीकेलिगृहे कुशेशयदृशां[10] पाणिद्युति[11]द्रोहिणि श्यामा[12]सूक्तिसुधासहोदरमधुप्रस्यन्दसंदोहिनि[13] । जीवातु[14]स्त्रिदिवौकसां[15] त्रिजगतामाप्यायनं[16] चन्द्रमस्त्वं चेदम्बुरुहे न रज्यसि गुणश्लाघा बतास्तं गता ॥ ४८ यातेयं रजनी सहैव भवता भावी प्रकाशो दिशां सूर्येणापि चिरं चकोरनिचयैः स्थेयं क्वचित्कानने । उद्यद्दारुणचण्डभानुजदवज्वाले[17] जगन्मण्डले कस्मै चन्द्र समर्प्य कैरवकुलं व्योमान्तमालम्बसे ॥ ४९ ॥ नक्षत्राणि बहूनि सन्ति परितः पूर्णोदयान्यम्बरे किं तैः शान्तिमुपैति दीर्घतिमिरं किं वार्धि[18]रुज्जृम्भते । किं स्यादार्तचकोरपारणविधिर्भ्रातः सुधादीधिते तन्नूनं भुवनैकतापशमनः श्लाघ्यस्तवैवोदयः ॥ ५० ॥ ध्माता[19] भालतलानलैः कवलिता कण्ठस्थहालाहलैरालीढाऽथ जटाटवीविलुठितै[21]राशीविषाणां गणैः । छन्ना भस्मभिराहतास्थिपटलैः क्लिन्नार्द्रचर्माम्बरैः स्वीयां मुञ्चति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥ ५१ ॥ श्रीमाहेश्वरमौलिमण्डनमणिर्वैश्वम्भरं[22] लोचनं त्वं रत्नाकरसंभवः किमपरं भूदेवदेवो भवान् । यद्धालानलसङ्गदोषरभसादन्दह्यसे[23] नोग्रजाज्जातं तत्किमिहास्ति ते सुमनसश्चित्रं कलानां निधे ॥ ५२ ॥ येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः[24] । क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनाग्[25]गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ ५३ ॥ जन्म क्षीरनिधौ तथैव विपुलं पीयूषपूर्णं वपुः संतापार्तिहरं हरस्य शिरसि स्थानं सदा सुन्दरम् । तारानाथ निशामुखैकतिलक ख्यातौषधीनां पते चन्द्र त्वां वसनाञ्चलस्य दशयो[26] संभावयामः कथम् ॥ ५४ ॥ इन्दुर्यद्युदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मा स्म भूत्[27] नासीरेऽपि तमःसमुच्चयममूरुन्मूलयन्ति त्विषः । अप्यक्ष्णोर्मुदमुद्वहन्ति कुमुदैरामोदयन्ते दिशः संप्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यक्तुं प्रकाशिष्यते ॥ ५५ ॥ पूर्णः पङ्कजलोचनामुखतुलामायासि कालक्रमात्क्षीणोऽपि क्षणदापते[28] पशुपते[29]रायासि भूषास्पदम् । एतस्मिन्नथ सैंहिकेयकवल[30]क्लेशे मनागवर्तिनि त्वं साधारणवत्सुधाकर मुधा हा हन्त किं ताम्यसि ॥ ५६ ॥ भीतो वाडववासतो जलनिधौ शंभोः शिरः स्वीकृतं तत्र त्र्यम्बकमौलिवासुकिविषज्वालावलीत्रासितः । तस्माल्लोकमगाद्दिवं[31] निपतितस्तत्रैव राहोर्मुखं प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ ५७ ॥

---

१ असत्यम् । २ प्रकर्षम् । ३ 'अपे क्लेशतमसोः' इति डः । ४ सम्पत्तिः प्रकाश इति यावत् । ५ चक्रवाकाः । ६ 'सुषमा परमा शोभा' इत्यमरः । ७ जनानां समूहः । ८ परिषन्मण्डली । ९ लक्ष्मीर्हि कमलनिवासिनीति तथोक्ता । १० कमलाक्षीणां स्त्रीणाम् । ११ करसदृशे । १२ श्यामा वरवर्णिन्यपरनाम्नी नायिका । १३ सन्दोहः समुदायोऽस्मिन्नस्तीति तादृशे । यद्वा सन्दोग्धत्येवंशील इति । १४ जीवनोपायभूते । १५ देवानाम् । १६ संतृप्तिकारणकम् । १७ वनानले । १८ समुद्रः । १९ संज्वालिताः । २० कपर्दरूपवनसञ्चारिभिः । २१ सर्पाणाम् । २२ विश्वं बिभर्तीति नारायण इत्यर्थः, तस्येदमिति वैश्वम्भरम् । वाममिति शेषः । भगवतो हि विष्णोर्वामनेत्रं चन्द्रमाः । २३ अतिशयेन दह्यसे । २४ पादानां किरणानां चरणानां च । २५ किञ्चित् । २६ एकदेशेन । २७ अग्रभागे । २८ रात्रिपते । २९ महेश्वरस्य । ३० राहुग्रास- । ३१ आकाशम् ।

## जलधरान्योक्तिनिर्देशः।

प्रावृषेण्यस्य मालिन्यं दोषः कोऽभीष्टवर्षिणः। शारदाभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते ॥ १ ॥
चातकः स्वानुमानेन जलं प्रार्थयतेऽम्बुदात्। स स्वौदार्यतया सर्वान्प्लावयत्यम्बुना महीम् ॥ २ ॥
त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः। अस्माकमर्कवृक्षाणां पूर्वपत्रेऽपि संशयः ॥ ३ ॥
आसन्यावन्ति याच्ञासु चातकाश्रूणि चाम्बुद। तावन्तोऽपि त्वया मेघ न मुक्ता वारिबिन्दवः ॥ ४ ॥
त्वमेव चातकाधार इति केषां न गोचरः। धिगम्भोधर तस्यापि कार्पण्योक्तिं प्रतीक्षसे ॥ ५ ॥
यदम्बुकणमादाय प्राप्तोऽसि जलदोन्नतिम्। तस्योपर्यम्बुधेर्गर्जा मलिनस्योचितैव ते ॥ ६ ॥
नोपेक्षा न च दाक्षिण्यं न प्रीतिर्न च संगतिः। तथापि हरते तापं लोकानामुद्यतो घनः ॥ ७ ॥
समागमिष्यतोऽम्भोद वेत्ति कः समयं तव। रौति नो यदि सारङ्गस्तदोच्चैः खे पुरःसरः ॥ ८ ॥
आश्रयः क्रियतामेष तरुः सन्मार्गमाश्रितः। पाथोद सिच्यतां काले नोपेक्ष्यो दूरमावतः ॥ ९ ॥
सन्ति कूपाः स्फुरद्रूपाः सागराः सरितस्तथा। तथाऽपि चातकस्यैकः फलदो जलदोदयः ॥ १० ॥
नदेभ्योऽपि ह्रदेभ्योऽपि पिबन्त्यन्ये सदा पयः। चातकस्य तु जीमूत भवानेवावलम्बनम् ॥ ११ ॥
एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य। विश्वं सशैलकाननमाननमवलोकते यस्य ॥ १२ ॥ संप्रति न कल्पतरवो न सिद्धयो नापि देवता वरदाः। जलद त्वयि विश्राम्यति सृष्टिरियं भुवनलोकस्य ॥ १३ ॥ क्षणदृष्टनष्टतडितो निजसंपत्तेः पयोदनिवहेन। ज्ञातं साधु यदुचितं भुवनेभ्यो वितरता वारि ॥ १४ ॥ जलधर जलभरनिकरैरपहर परितापमुद्धतं जगतः। नो चेदपसर दूरं हिमकरकरदर्शनं वितर ॥ १५ ॥ अयि जलद यदि न दास्यसि कतिचित्त्वं चातकाय जलकणिकाः। तदयमचिरेण भविता सलिलाञ्जलिदानयोग्यस्ते ॥ १६ ॥ नैताः स्वयमुपभोक्ष्यसि मोक्ष्यसि जलदोषरादिषु क्वापि। तत्किं तत्र न मुञ्चति मुक्ता मुक्ता भवन्ति यत्रापः ॥ १७ ॥ धीरध्वनिभिरलं ते नीरद मे मासिको गर्भः। उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति ॥ १८ ॥ जलदः समुद्रसेवामाचरति समग्रभुवनभरणाय। कुरुते तामपि हतमतिरात्मंभरिरनिशमौर्वाग्निः ॥ १९ ॥ सर्वं वनं तृणाल्या विहितं पीताः सितांशुरविताराः। प्रध्वस्ताः पन्थानो मलिनेनोद्गम्य मेघेन ॥ २० ॥ प्रावृषि शैलश्रेणीनितम्बमुज्झन्दिगन्तरं भ्रमसि। चपलान्तर घन किं तव वचनीयं पवनवश्योऽसि ॥ २१ ॥ जलधर विमलैरितरैः किमु नो मलिनाम्बरस्त्वमेवेष्टः। मा वक रुचिरो भूस्तद्गुण एवेष्टो न रूपं यत् ॥ २२ ॥ शुष्कां पृथिवीं हरितां विधातुमम्बुद यदीह सम्प्राप्तः। तर्हि तडित्करकाणां त्यागेनालं विनाशयताम् ॥ २३ ॥ अभितो नितरां सलिलं जलदे दातुं समुद्यते भवति। तदपि बहुलमल्पं वा पात्राधीनं मतं पतनम् ॥ २४ ॥ जलधेरधिकं न जलं गर्जति जलदस्तथाऽपि तन्मूर्ध्नि। दातुर्या न कथं स्यान्मानोऽमानश्च लुब्धस्य ॥ २५ ॥

---

१ प्रावृषि-वर्षासु भव इति प्रावृषेण्यस्तस्य। २ मलिनत्वम्। ३ विषयः। ४ गर्जनम्। ५ शब्दं करोति। ६ चातकः। ७ मेघ। ८ हे मेघ। ९ भुवनलोकस्य—जलरूपस्य संसारस्य, यद्वा; भुवनान्तर्वर्तिनो जनस्य प्राणिमात्रस्य। जात्यभिप्रायेणेदं वचनम्। मेघवृष्टिमन्तरा जलसम्पत्तेः क्षये सर्वस्यापि भुवनवर्तिनो जनसमाजस्य क्षयः स्यादिति तथोक्तिः। १० निवहः समूहः। ११ भरोऽतिशयः निकरः समुदायः। १२ उत्कृष्टाः। १३ मौक्तिकानि। १४ जलानि। १५ गभीरगर्जनैः। १६ मे अस्या वक्त्र्याः सिद्धाः। १७ प्रमत्तगजगर्जनभ्रान्त्या। १८ जरठस्य मध्ये 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः। १९ उत्पतितुं चेष्टते। २० समुद्रसेवाम्। २१ तस्मात्। २२ जलधिमस्तके। २३ अपमानः।

धन्यस्त्वमसि पयोधर क्षितिभृन्मुकुटैरुदूह्यसे शश्वत् । अमृतं वितरसि जगतो जीवनभूतं यतः
कामम् ॥२६॥ विश्वम्भरो भवानिव रुचिरो न पुनर्भवन्मतः स इव । युक्तं यत्सुप्रकटं परोपकृतये स्व-
जीवनं दत्ते ॥ २७ ॥ यद्यपि सन्ति बहूनि सरांसि स्वादुसुशीतलसुरभिपयांसि । चातकपोतस्तदापि
च तानि त्यक्त्वा वाञ्छति जलदजलानि ॥ २८ ॥ एतदत्र पथिकैकजीवितं पश्य शुष्यतितरां
महत्सरः । धिङ् मुधाम्बुधर रुद्रसद्गतिर्वर्धिता किमिह तेऽद्रिवाहिनी ॥ २९ ॥ मुञ्च मुञ्च सलिलं दया-
निधे नास्ति नास्ति समयो विलम्बने । अद्य चातककुले मृते पुनर्वारि वारिधर किं करिष्यसि
॥ ३० ॥ चातकस्य खलु चञ्चुसंपुटे नो पतन्ति किल वारिबिन्दवः । सागरीकृतमहीतलस्य किं
दोष एष जलदस्य दीयते ॥ ३१ ॥ ऊषरेषु विवरेषु चाम्भसां वीचयोऽपि भवता विनिर्मिताः । क्षेत्र-
सीम्नि निहितास्तु बिन्दवो वारिवाह भवतो नवो नयः ॥ ३२ ॥ आपो विमुक्ताः कचिदाप एव कचिन्न
किंचिद्गरलं कचिच्च । यस्मिन्विमुक्ताः प्रभवंति मुक्ताः पयोद तस्मिन्विमुखः कुतस्त्वम् ॥३३॥ पानीय-
मानीय परिश्रमेण पाथोद पाथोनिधिमध्यतस्त्वम् । कल्पद्रुमे सीदति साभिलाषे महोषरे मुञ्चसि किं
निमित्तम् ॥ ३४॥ पपात पाथःकणिका न भूमाववाप शांन्ति ककुभां न तापः । दृष्ट्वैव जीवातुरयं
तडित्वान्कृशीवलानां मुदमाततान ॥३५ ॥ प्रथितोऽसि यतस्ततः पृथिव्यामपि जीमूत जनस्य जीवनेन ।
विषयानपि गच्छतः किमेतान्ध्वनिभिर्भीषयसीह राजहंसान् ॥ ३६ ॥ गर्जितबधिरीकृतककुभा किमपि
कृतं न घनेन । कियती चातकचञ्चुपुटी सापि भृता न जलेन ॥ ३७ ॥ गर्जसि मेघ न यच्छसि
तोयं चातकपक्षी व्याकुलितोऽहम् । दैवादिह यदि दक्षिणवातः क त्वं काहं क च जलपातः ॥३८॥
वितर वारिद वारि दवातुरे चिरपिपासितचातकपोतके । प्रचलिते मरुति क्षणमन्यथा क च भवान्क
पयः क च चातकः ॥ ३९ ॥ किसलयानि कुतः कुसुमानि वा क च फलानि तथा नववीरुधाम् ।
अयमकारणकारुणिको न चेद्वितरतीह पयांसि पयोधरः ॥ ४० ॥ पयोद हे वारि ददासि वा न
वा त्वदेकचित्तः पुनरेष याचकः । वरं महत्या म्रियते पिपासया तथाऽपि नान्यस्य करोत्युपासनाम्
॥ ४१ ॥ दीनानामिह परिहाय शुष्कसस्यान्यौदार्यं प्रकटयतो महीधरेषु । औन्नत्यं परममवाप्य
दुर्मदस्य ज्ञातोऽयं जलधर तावको विवेकः ॥ ४२ ॥ अन्योऽपि चन्दनतरोर्महनीयमूर्तेः सेकार्थमु-
त्सहति तद्गुणबद्धतृष्णः । शाखोटकस्य पुनरस्य महाशयोऽयमम्भोद एव शरणं यदि निर्गुणस्य
॥ ४३ ॥ आश्वास्य पर्वतकुलं तपनोष्मतप्तं दुर्दावबह्निविधुराणि च काननानि । नानानदीनदशतानि
च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः ॥ ४४ ॥ एतेषु हा तरुणमारुतधूयमानदावानलैः
कवलितेषु महीरुहेषु । अम्भो न चेज्जलद मुञ्चसि मा विमुञ्च वज्रं पुनः क्षिपसि निर्दय कस्य हेतोः
॥ ४५ ॥ शोषं गते सरसि शैवलमञ्जरीणामन्तस्तिमिर्लुठति तापविशीर्णदेहः । अत्रान्तरे यदि
न वारिद वारिपूरैराप्लावयेस्तदनु किं मृतमण्डनेन ॥ ४६ ॥ शृण्वन्पुरः परुषगर्जितमस्य हन्त रे
पान्थ विह्वलमना न मनागपि स्याः । विश्वार्तिवारणसमर्पितजीवनोऽयं नाकर्णितः किमु सखे भवताऽ-
म्बुवाहः ॥ ४७ ॥ यत्तादृशेषु सरलेषु न पक्षपातो जातो बत स्फुटमसौ कुटजेषु रागः ।

१ आत्मप्राणान्, स्वजलं च । २ पर्वतसेना, पर्वतात् प्रभूता नदी च । ३ तरङ्गाः ।
४ ककुप् दिक् । ५ वनानलेन दह्यमाने । ६ पवने । ७ पर्वतेषु । ८ श्मशानादिदुःस्थलस्थस्य
वृक्षस्य । ९ मत्स्यविशेषः ।

विश्वैकजीवनपटोरपि वारिवाह दुर्वारवायुवशगस्य न तद्विचित्रम् ॥ ४८ ॥ यत्पल्लवः समभवत्कुसुमं यदासीत्तत्सर्वमस्य भवतः पयसः प्रसादः । यद्रूरुहे फलविधौ न ददासि वारि प्राचीनमम्बुद यशो मलिनीकरोषि ॥ ४९ ॥ नैवालवालवलयं भरितं द्रुमाणां नार्द्रीकृताऽपि बत चातकपोतचञ्चुः । दावानलाकुलतरुः शमितो न शीघ्रं भाराय वारिधर वारिपदं तवाभूत् ॥ ५० ॥ के वा न सन्ति भुवि वारिरुहावतंसा हंसावलीवलयिनो जलसन्निवेशाः । किं चातकः फलमपेक्ष्य स वज्रपातां पौरंदरीं[1] कलयते नववारिधाराम् ॥ ५१ ॥ वातैर्विधूनय विभीषय भीमनादैः संचूर्णय त्वमथवा करकाभिघातैः[2] । त्वद्वारिबिन्दुपरिपालितजीवितस्य नान्या गतिर्भवति वारिद चातकस्य ॥ ५२ ॥ व्याजस्तुतिस्तव पयोद मयोदितेयं यज्जीवनाय जगतस्तव जीवनानि । स्तोत्रं तु ते महदिदं घन धर्मराजसाहाय्यमर्जयसि यत्पथिकान्निहत्य[3] ॥ ५३ ॥ संपादिताः सपदि दर्दुरदीर्घनादा[4] यत्कोकिलाकलरुतानि निराकृतानि । निष्पीतमम्बु लवणं न तु देवनद्याः[5] पर्जन्य तेन भवता विहितो विवेकः ॥ ५४ ॥ यस्योदये गुरुमनोरथमन्थरेण संचिन्तितं किमपि चेतसि चातकेन । आः कष्टमिष्टफलदानविधानहेतोरम्भोधरात्पतति संप्रति वज्रवह्निः[6] ॥ ५५ ॥ दवदहन[7]जटालज्वालजालाहतानां परिगलितलतानां म्लायतां भूरुहाणाम् । अयि जलधर शैलश्रेणिशृङ्गेषु तोयं वितरसि बहु कोऽयं श्रीमदस्तावकीनः ॥ ५६ ॥ नभसि निरवलम्बे सीदता दीर्घकालं त्वदभिमुखनिषण्णोत्तानचञ्चूपुटेन । जलधर जलधारा दूरतस्तावदास्तां ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥ ५७ ॥ अये हेलावेलालुलितकुलशैले जलनिधौ कुतो वारामोघं बत जलद मोघं विसरसि । समन्तादुत्तालज्वलदनलकीलाकवलनक्लमोपेतानेतानुपकुरु पयोभिर्विटपिनः ॥ ५८ ॥ अमुं कालक्षेपं त्यज जलद गम्भीरमधुरैः किमेभिर्निर्घोषैः[8] सृज झटिति झाङ्कारि सलिलम् । अये पश्यावस्थामकरुणसमीरव्यतिकरज्वलद्दावज्वालावलिजटिलमूर्तेर्विटपिनः ॥ ५९ ॥ अकूपाराद्वारि[9] प्रचुरतरमादाय जलदः स दानाध्यक्षोऽपि प्रकिरति जलं नाद्भुतमिदम् । स मैत्रो धन्यो यत्परिकिरति मुक्ताफलतया यदीयासौ कीर्तिर्नटति नृपनारीकुचतटे ॥ ६० ॥ तवैव प्रावीण्यं जलद जगदानन्दकरणं यदम्भःपालीराहरसि खलसत्त्वाजलनिधेः । निसर्गात्क्षारास्ता नयसि च कथंचिन्मधुरतामथासारैस्तासां युगपदुपकर्तासि जगतः ॥ ६१ ॥ विलपति तथा सारङ्गो[10]ऽयं भवानयमुन्नतो जलमपि च ते संयोगोऽयं कथंचिदुपस्थितः । उपकुरु कुरु प्रह्वं[11] चेतो न वेत्सि यदग्रतो जलधर पुनः क त्वं कायं क ते जलबिन्दवः ॥ ६२ ॥ नीरं दूरं तदपि विरसं जंगमा नो लताद्यास्तस्मिन्दातर्यपि जलनिधौ को लभेताम्बुबिन्दुम् । दानाध्यक्षे त्वयि जलधर क्वापि कुत्रापि शैलाःशालावन्तोऽमृतनिभजलैस्तर्पिताः सर्व एते ॥ ६३ ॥ तृष्ण्या नद्यः कमलसरसी राजहंसावतंसाः पुण्याश्चैतो हिमगिरिभुवस्त्वत्कृते येन मुक्ताः । संप्राप्तेऽस्मिञ्जलद दहनोचण्डदाहे निदाघे पर्जन्य स्वीकुरु तमधुना चातकं पातकं वा ॥ ६४ ॥ शैलेयेषु शिलातलेषु च गिरेः शृङ्गेषु गर्तेषु च श्रीखण्डेषु[13] बिभीतकेषु[14] च तथा पूर्णेषु

---

१ इन्द्रसम्बन्धिनीम् । २ करका वर्षोपलाः । ३ विरहिण इत्युक्तिः । धर्मराजोऽन्तकः । जीवनमम्बु प्राणा इति च प्रत्यायनमात्रम् । मेघोदये हि विरहिण उद्दीप्तकामज्वालाः सम्पीड्यन्त इति तथोक्तिः । ४ दर्दुरा भेकाः । ५ अत्र देवनदीपदेनाकाशगङ्गाया एव ग्रहणम् । अन्यथा सर्वासां महानदीनामपि मेघैर्जलमुपादीयमानं कविभिर्यद्वर्ण्यते तन्न सङ्गच्छेत । आकाशगङ्गा त्वत्यूर्ध्वभाग इति । ६ विद्युत् । ७ दवदहनो वनाग्निः । ८ वज्रशब्दैः । ९ समुद्रात् । १० चातकः । ११ नम्रं सदयमिति भावः । १२ पर्वतसम्बन्धिषु । १३ चन्दनेषु । १४ 'बेहड़ा' इति ख्यातेषु तरुविशेषेषु ।

रिक्तेषु च । स्निग्धेन ध्वनिनाऽखिलेऽपि जगतीचक्रे समं वर्षतो वन्दे वारिदसार्वभौम भवतो विश्वोपकारि व्रतम् ॥ ६५ ॥ नीहाराकरसारसागरसरित्कासारनीरश्रियं त्यक्त्वा तोयद चातकेन महती सेवा समालम्बिता । तस्यैतत्फलितं समुज्झसि शिलासंताडनं मस्तके गाढं गर्जसि वज्रमुज्झसि तडिल्लेखाभिरातर्जसि ॥ ६६ ॥ आरामा[1]भरणस्य पल्लवचयैरापीततिग्मत्विषः पाथोद प्रशमं नयागुरुतरोरेतस्य दावज्वरम् । ब्रूमस्त्वामुपकारकातर गतप्रायाः पयःसंपदो दग्धोऽप्येष तरुर्दिशः परिमलैरापूर्य निर्वास्यति ॥ ६७ ॥ यावत्तिष्ठति चातकोऽयमसुभिः कण्ठस्थलस्थायिभिस्तावद्देहि पयः पयोद फलतु त्वद्वारि कल्पद्रुमः । नो चेदस्य तृषार्तपीडिततनोः प्राणैः प्रयाणे कृते कस्मै दास्यसि को ग्रहीष्यति पुनस्तापस्तु ते स्थास्यति ॥ ६८ ॥ कूपे पानमधोमुखं भवति मे नद्यो वराक्यः स्त्रियः सामान्यं बकटिट्टिभैः सह सरस्येवं समालोकयन् । शुष्यत्तालुगलोऽपि कम्पिततनुः श्रुत्वा गभीरध्वनिं धैर्यादुद्धृतकन्धरो जलधर त्वां याचते चातकः ॥ ६९ ॥ मार्गो भूरि जलं मरुस्थलभुवि स्वप्नेऽपि नो लभ्यते तीव्रो वाति समीरणः क्वचिदपि च्छायाभृतो न द्रुमाः । अङ्गारप्रकरा[2]न्किरन्निव रविर्ग्रीष्मे तपत्यम्बरे[3] तद्भोः पान्थहिताय पूरय धरां पाथोद[4] पाथोभरैः ॥ ७० ॥ भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः पाठीनैः[5] पृथुपङ्कपीठलुठितैर्यस्मिन्मुहुर्मूर्च्छितम् । तस्मिञ्शुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं यत्राकुम्भ[6]निमग्नवन्यकरिणां यूथैः पयः पीयते ॥ ७१ ॥ कालातिक्रमणं कुरुष्व तडितां विस्फूर्जितैस्त्रासय स्फारैर्भीषणगर्जितैरतितरां कार्ष्ण्यं[7] मुखे दर्शय । अस्यानन्यगतेः पयोद मनसो जिज्ञासया चातकस्यावेहि त्वमिहाखिलं तदपि न त्वत्तः परं याचते ॥ ७२ ॥ भूयो गर्जितमम्बुद प्रकटिता विद्युत्खमापूरितं दूरावग्रह तिष्ठ तिष्ठ तदलं वृष्ट्या तवातः परम् । निर्दग्धाखिलशालिहालिकवधूसंनद्धनेत्रैः परं नैराश्यादिह वर्षितव्यमधुना केदारपूरं पयः ॥ ७३ ॥ गर्जन्नम्बु ददाति तच्च कणिकारूपेण यत्र क्वचिद्वर्षाकालमपेक्ष्य दानसमये कार्ष्ण्यं विधत्ते मुखे । पश्चात्पाण्डुरतामुपैति लघुतामभ्येति भूयस्ततः श्रीमद्राम नृपालशेखर विभो दाता कियान्वारिदः ॥ ७४ ॥ आसक्ताः प्रतिकोटरं विषधरा भानोः करा मूर्धनि ज्वालाजालकरालदावदहनः प्रत्यङ्गमालिङ्गति । सर्वानन्दनचारुचन्दनतरोरेतस्य जीवातवे रे जीमूत विमुञ्च वारि बहुशो युष्मद्यशो जृम्भताम् ॥ ७५ ॥ ते ते चातकपोतका वितृषिता दावाग्निदग्धं वनं संनिर्वापितमुष्णतापितमही निर्वापिता सर्वतः । कासाराः परिपूरिताः पृथुपयोधाराभिरम्भोधर त्वय्येवायमहो महोर्जितमहादानावदानक्रमः ॥ ७६ ॥ तापं लुम्पसि सर्वतो वितरसे मुक्ताफलं शुक्तिषु क्षेत्रं सिञ्चसि किं च पल्लवयसि श्रीखण्ड[9]मुख्यान्द्रुमान् । क्षारं[10] क्षीरमिदं जलं जलनिधेरादाय जीमूत हे विश्वं जीवयसि ब्रवीतु जगति प्रौढोऽपि कस्ते गुणान् ॥ ७७ ॥ संतापं जगतो विलुम्पसि धरां धाराभिरासिञ्चसि क्षेत्राण्यङ्कुरयस्यमून्मुकुलयस्यह्नाय[11] नीपद्रुमान्[12] । सारङ्गस्य नभोनिवेशितदृशश्चञ्चूपुटीपूरणे वैमुख्यं वहसि त्वमम्बुद यदि प्रत्येतु को नाम तत् ॥ ७८ ॥ कूपाम्भांसि पिबन्तु कूपरसिका वापीषु वापीजुषो[13] नादेयाश्च[14] पतत्रिणोऽपि मुदिता आस्वादयन्तामपः[15] । सारङ्गस्य नभोनिवेशितदृशः किं तेन यावन्महीमम्भोभिः स्नपयन्नसावुदयते न प्रावृषेण्यो[16] घनः ॥ ७९ ॥ कर्तव्यो हृदि

---

१ आरामः क्रीडावनम् । २ प्रकराः समूहाः । ३ आकाशे । ४ पाथो जलम् । ५ सहस्रदंष्ट्रैर्महामत्स्यैः । ६ आकुम्भं गण्डस्थलावधि । ७ मलिनताम् । ८ स्फुरतु । ९ चन्दनादीन् । १० अतिक्षारम् । ११ झटिति । १२ कदम्बद्रुमान् । १३ दर्दुरादयः । १४ नदीतीरनिवासिनः । १५ जलानि । १६ वर्षाकालिकः ।

वर्तते यदि तरोरस्योपकारस्तदा मा कालं गमयाम्बुवाह समये सिञ्चैनमम्भोभरैः । शीर्णे[1] पुष्पफले दले विगलिते मूले गते शुष्कतां कस्मै किं हितमाचरिष्यसि परीतापस्तु ते स्यास्यति ॥ ८० ॥ नो चिन्तामणिभिर्न कल्पतरुभिर्नो कामधेन्वादिभिर्नो देवैश्च परोपकारनिरतैः स्थूलैर्न सूक्ष्मैरपि । अम्भोदेहे[2] निरन्तरं जलभरैस्तामुर्वरां[3] सिञ्चता धौरेयेण[4] धुरं त्वयाऽद्य वहता मन्ये जगज्जीवितम् ॥ ८१ ॥ हे पाथोद यथोन्नतेन भवता दिग्व्यावृता सर्वतो मन्ये धीर तथा करिष्यसि खलु क्षीराब्धितुल्यं सरः । किं त्वेष क्षमते नहि क्षणमपि ग्रीष्मोष्मणा व्याकुलः पाठीनादिगणस्त्वदेकशरणस्तद्वर्ष तावत्कियत् ॥ ८२ ॥ नान्धौ[6] स्कन्धनतिः सरःसु न मनो वापीषु नापीहितं कर्णेऽप्यर्णवसंकथा न च कृता नाद्यापि नद्यां मनः । सारङ्गेण समुत्तरङ्गरसनादण्डेन चण्डातपक्रान्तेनापि निरन्तरं जलद हे त्वय्येव दत्तं मनः ॥ ८३ ॥ निष्पद्मं शिशिरेण धीवरगणैर्निर्मत्स्यनिष्कूर्मकं व्याधैर्निर्विहगं निरम्बु रविणा निर्नालकं दन्तिभिः । निःशालूकमकारि शूकरगणैर्नामैकमात्रं सरो हे जीमूत परोपकारक पयोदानेन मां पूरय ॥ ८४ ॥ कासारेषु सरित्सु सिन्धुषु तथा नीचेषु नीरग्रहं धिक्तत्रापि शिरोनतिः किमपरं हेयं भवेन्मानिनाम् । इत्यालोच्य विमुच्य चातकयुवा तेषु स्पृहामादरादुद्ग्रीवस्तव वारिवाह कुरुते धाराधरालोकनम् ॥ ८५ ॥ रे धाराधर धीर नीरनिकरैरेषा रसा[9] नीरसा शेषा पूषकरोत्करैरतिखरैरापूरि भूरि त्वया । एकान्तेन भवन्तमन्तरगतं स्वान्तेन संचिन्तयन्नाश्चर्यं परिपीडितोऽभिरमते यच्चातकस्तृष्णया ॥ ८६ ॥ आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा वात्याभिः[11] परुषीकृता दश दिशश्चण्डातपो दुःसहः । एवं धन्वनि[12] चम्पकस्य सकले संहारहेतावपि त्वं सिञ्चन्नमृतेन[13] तोयद कुतोऽप्याविष्कृतो वेधसा ॥ ८७ ॥ ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यच्चातकस्त्वां ध्यायन्घन वासरान्कथमपि द्राघीयसो[14] नीतवान् । दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि स्वीचक्रे करकौ[15]निपातनकृपा तत्कं प्रति ब्रूमहे ॥ ८८ ॥ स क्षारो जलधिः सरांसि वितरन्त्यभ्यागतेभ्यो मितं गृह्यन्ते सरितः श्रमेण परितोऽप्याधारबन्धं बलात् । प्राप्यं कूपकतः कथंचन किमप्यारोप्य कण्ठे पदं तत्त्वां त्यागिन[16]मेकमेव भगवन्पर्जन्य मन्यामहे ॥ ८९ ॥ हर्षं वर्षन्विधत्से चिरसमयतृषाशुष्यतां चातकानां भूमेस्तापोपशान्तिं वितरसि तरसा लोकशोकं धुनोषि । अम्भोदैतत्तवैकं परममनुचितं यत्पिधत्से सुधांशुं वाचामीशं[17] कविं[18] वा बुधमपि[19] वहसि प्रेम खद्योतवर्गे[20] ॥ ९० ॥ घनतरघनवृन्दच्छादिते व्योम्नि सद्यः सवितुरथ हिमांशोः संकथैव[21] व्यरंसीत् । दिवसरजनिभेदं मन्दवाताः शशंसुः कमलमुदितगन्धानाहरन्तः क्रमेण ॥ ९१ ॥ अन्ये ते विहगाः पयोद परितो धावन्ति तृष्णाऽऽतुरा वापीकूपतडागसिन्धुसरसीतोयेषु मज्जन्ति च । मामद्यापि न वेत्सि चातकशिशुं यः शुष्ककण्ठोऽपि सन्नान्यं प्रार्थयतेऽभियाति न न वा प्रस्तौति न ध्यायति ॥ ९२ ॥ अहमस्मि नीलकण्ठस्तुष्येऽहं शब्दमात्रेण । नाहं जलद कदाचिच्चातक इव जीवनं[22] याचे ॥ ९३ ॥ त्वयि वितरति कामं तुष्टिमासाद्य पृथ्वी प्रतिपदमियमम्भांस्युद्वमन्तीव सर्वा । प्रखरतपनहेतिप्लोषशान्तौ प्रसन्ना धरति हरितरङ्गं स्वाङ्गमम्भोदवर्य ॥ ९४ ॥

---

१ नष्टे, पतिते वा । २ अम्भांस्येव देहो यस्येति, हे अम्भोद इहेति वा । ३ 'उर्वरा सर्वसस्याढ्या' इत्यमरः । ४ मुख्येन । ५ "सहस्रदंष्ट्रः पाठीनः" इत्यमरः । ६ कूपे । ७ विनष्टकमलदण्डम् । ८ कमलादिकन्दशून्यम् । ९ पृथिवी । १० पूषा सूर्यः । ११ वायुभिः । १२ मरु (निर्जल) देशे । १३ पीयूषेण, तत्तुल्येन जलेन च । १४ अतिदीर्घान् । १५ करका हिमोपलाः । १६ दानिनम् । १७ गुरुनक्षत्रम्, वाग्मिवर्यं च । १८ शुक्रनक्षत्रं काव्यनिर्मातारं च । १९ बुधनक्षत्रम्, विद्वांसं च । २० ज्योतिरिङ्गणकुले, क्षुद्रगणे च । २१ चर्चा । २२ प्राणान्, जलं च ।

## पवनान्योक्तिनिर्देशः ।

वायुरेव महाभूतं वदन्तु निखिला जनाः । आयुरेवैष भूतानामिति मन्यामहे वयम् ॥ १ ॥ अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम् । मृगमदपरिमललहरीं समीर किं पामरेषु रे किरसि ॥ २ ॥ परमो मरुत्सखाग्नेस्तेजोवृद्धिं तनोतु तं जेतुम् । दीपं हरति तदस्य ज्ञातं प्रतिपत्तिनिर्वहणम् ॥ ३ ॥ प्राथमिकी घनवृष्टिः प्राप्ता शिखिनो निदाघतप्तस्य । आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥ ४ ॥ वरतरुविघटनपटवः कटवश्चञ्चन्ति वायवो बहवः । तत्कुसुमबहलपरिमलगुणविन्यासे कृती त्वेकः ॥ ५ ॥ गन्धवाह गहनानि गाहसे गन्धजातमिह संचिनोषि च । नैपुणच्युतिरियं तु तावकी यत्र तत्र सदसद्विवेचनम् ॥ ६ ॥ अहह चण्डसमीरण दारुणं किमिदमाचरितं चरितं त्वया । यदिह चातकचञ्चुपुटोदरे पतति वारि तदेव निवारितम् ॥ ७ ॥ अनिल निखिलविश्वं प्राणिति त्वत्प्रयुक्तं सपदि च विनिमीलत्याकुलं त्वद्वियोगात् । वपुरसि परमेशस्योचितं नोचितं ते सुरभिमसुरभिं वा यत्समं स्वीकरोषि ॥ ८ ॥ लतां पुष्पवतीं स्पृष्ट्वा सुस्नातश्च महार्णवे । पुनस्तत्स्पर्शभीत्येव वायुर्वाति शनैः शनैः ॥ ९ ॥ मारुत धन्यस्त्वमसि प्रणयसि सुमनस्विनां यदामोदम् । दिशि दिशि विकिरन्कामं नयसि च कामं समुल्लासम् ॥ १० ॥ मारुत चातक एष प्रार्थयतेऽन्यं ननु त्वां भोः । तस्मिन्वितरति चास्मै दुर्नयसे हन्त किं विफलम् ॥ ११ ॥ राजीविनीविपिनसौरभसारगन्धिर्योऽभूद्वसन्तदिवसेषु जनैकबन्धुः । रथ्यारजांसि विकिरन्निरुजन्नगेन्द्रानुन्मत्तवद्भ्रमति पश्यत सोऽद्य वायुः ॥ १२ ॥ ये जात्या लघवः सदैव गणनां याता न ये कुत्रचित्पद्भ्यामेव विमर्दिताः प्रतिदिनं भूमौ विलीनाश्चिरम् । उत्क्षिप्ताश्च पलाशयेन मरुता पश्यान्तरिक्षे सखे तुङ्गानामुपरि स्थितिं क्षितिभृतां कुर्वन्त्यमी पांसवः ॥ १३ ॥ हंहो दग्धसमीर सर्पति भवत्यस्मिन्वने शाखिनां शाखाघर्षणजः स कोऽपि सुचिरं जज्वाल दावानलः । येनादाहि पलायमानहरिणं भस्मीभवद्भूरुहं शुष्यन्निर्झरमुत्पतत्खगकुलं खेलद्भुजङ्गं वनम् ॥ १४ ॥ हंहो धीर समीर हन्त जननं ते चन्दनक्ष्माभृतो दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः । प्रत्यङ्गं दहतीह मे त्वमपि चेदुद्दामदावाग्निवन्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥ १५ ॥ कोयं भ्रान्तिप्रकारस्तव पवन घनावस्करस्थानजातं तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम् । अस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां केनोपायेन सह्यो वपुषि कलुषतादोष एष त्वदीयः ॥ १६ ॥ हेमाम्भोरुहपत्तने परिमलस्तेनो वसन्तानिलस्तत्रत्यैरिव यामिकैर्मधुकरैरारब्धकोलाहलः । निर्यातस्त्वरया व्रजन्निपतितः श्रीखण्डपङ्कद्रवैर्लिप्तो केरलकामिनीकुचतटे खञ्जः शनैर्गच्छति ॥ १७ ॥

## भूधरान्योक्तिनिदर्शनम् ।

भूधर भवन्तमुन्नतमवलोक्य दविष्ठमस्तविज्ञानाः । सत्वरमुपसर्पन्तो हन्त न निपतन्ति के नाम ॥ १ ॥ अश्मसु पतनं प्रस्तरलाभो वा भूधर त्वदुत्तरितैम् । केषांचित्सुभगानां सुलभानि हन्त रत्नानि ॥ २ ॥ किमपि ब्रवीषि न गिरे प्रकटयसि न कञ्चन प्रभावं वा । तदिति प्रहरन्ति तथा लुठन्ति

१ महाभूतमिति वदन्तीत्यन्वयः । २ वायुरिति पदे 'वा' इत्यस्यैवकारार्थकत्वात् । ३ कस्तूरीसौरभम् । ४ हे पवन । ५ कुसुमितां, रजस्वलां च । ६ अत्युदाराणां, पुष्पितानां तरूणां च । ७ यथेष्टम् । ८ कन्दर्पम् । ९ पत्तनपदं पुञ्जपरम् । १० नष्टपादः । ११ प्रतिदानम् ।

रत्नानि ते तानि ॥ ३ ॥ वसुधां बिभर्षि कामं रत्ननिकायश्च ते सदा सविधे । अमृतवहानां[1] जनकस्तदपि जडस्त्वं गिरे किमसि ॥ ४ ॥ नाधन्यानां निवासं विदधति गिरयः शेखरीभूतचन्द्राः शृङ्गैर्ज्योत्स्नाप्रवाहं द्रुतमिव तुहिनं दिङ्मुखेषु क्षिपन्तः । येषामुच्चैस्तरूणामविहतगतिना वायुना कम्पितानामाकाशे विप्रकीर्णः कुसुमचय इवाभाति ताराग्रहौघः ॥ ५ ॥

## हिमालयान्योक्तिनिदर्शनम् ।

तरुकुलसुषमापहरां जनयन्तीं जगति जीवजातार्तिम् । केन गुणेन भवानीतात हिमानीमिमां वहसि ॥ १ ॥ तुहिनगिरे त्वत्प्रभवति गङ्गा च शिवा त्वदेव सम्भूता । दुर्मुख एष तथाऽपि ब्रवीति लोको बताश्ममयम् ॥ २ ॥ यद्यपि गङ्गा च शिवा भवतो भवतो धृतात्मसम्पत्ती । तदपि हि जडयसि लोकं किमिति न जाने तुषारशैलेन्द्र ॥ ३ ॥ विन्ध्यमन्दरसुमेरुभूभृतां यत्पतिस्तुहिनपर्वतोऽभवत् । ईश्वर[2]श्वशुरताप्रभावतस्तद्ध्रुवं जगति जृम्भते यशः ॥ ४ ॥ क्षोणी[3] यस्य हिरण्मयी मणिमयः प्राकारशिल्पोच्चयः कुञ्जाः कल्पलतामयाः सुरधुनीधारामयो निर्झरः । किं चेन्द्रादिसमस्तदिक्पतिपुरीमय्यन्ति यत्पल्लवाः शैलः सोऽपि गिरिर्वयं च गिरयस्त्वय्येव मे का मतिः ॥ ५ ॥

## सुवर्णाचलान्योक्तिनिदर्शनम् ।

सुमनोविबुधजनानां[4] चरणरजस्त्वं निरन्तरं निवहन् । यदसि समुन्नत एको मेरो भूभृत्ततः स्थाने ॥ १ ॥ विबुधैर्निषेव्यसे त्वं बिभर्षि दिव्यानि भूरि रत्नानि । शैल सुवर्णमतस्त्वां साम्प्रतमाहुर्बुधाः सकलाः ॥ २ ॥ अनतिशयं स्वर्णचयं निवहन्नितरां प्रमोदसे स्वान्ते[5] । किंतु तवैषा सम्पत्कस्योपकृते[6] प्रतिब्रूहि ॥ ३ ॥ भूरि बिभर्षि सुमेरो रत्नानि तथाऽपि नो[7] न लभ्यानि । कथमिव तव तत्स्तवनं प्रभवाम विधातुमुद्युक्ताः ॥ ४ ॥ ये संतोषसुखप्रबुद्धमनसस्तेषामभिन्नो मृदो येऽप्यन्ये घनलोभसंकुलधियस्तेषां तु दूरे नृणाम् । इत्थं कस्य कृते कृतः स विधिना तादृक्पदं संपदां स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ ५ ॥ विबुधविलासनिदानं सुवर्णकान्तिः समुन्नतो नितराम् । त्वमसि सुमेरो तस्मात्कस्य न रुचिरो न दूरगश्चेत्स्याः ॥ ६ ॥

## विन्ध्याचलान्योक्तिनिदर्शनम् ।

आचक्ष्महे तव किमद्यतनीमवस्थां तस्याद्य विन्ध्यशिखरस्य मनोहरस्य । यत्रैव सप्त मुनयस्तपसा निषेदुः सोऽयं विलासवसतिः पिशिताशनानाम्[8] ॥ १ ॥

## मलयाचलान्योक्तिनिदर्शनम् ।

मलयगिरे त्वमनन्यश्चन्दनसम्भूतिसारसर्वस्वम् । इति तव सदृशः सुरभेर्जनको लोके सुविश्रुतो नान्यः ॥ १ ॥ चन्दनजन्मपदत्वं यद्यपि लोके सुविश्रुतं भवतः । विपधरसंश्रयदानात्तदसदिवेत्यभून्मलय ॥ २ ॥ किं तेन हेम[9]गिरिणा रजताद्रिणा[10] वा यत्राश्रिता हि तरवस्तरवस्त एव । मन्यामहे मलयमेव यदाश्रयेण शाखोटनिम्बकुटजा अपि चन्दनानि ॥ ३ ॥ विद्योतन्ते कति न गिरयस्तेषु किं नोद्यन्ते[11] शाखावन्तः[12] खदिरबदरीसालशाखोटकाद्याः । धन्यस्तावन्मलयशिखरी यत्र जातास्त एव स्वैरामोदैस्त्रिभुवनमथ प्रीणयन्तः स्फुरन्ति ॥ ४ ॥

---

१ नदीनां, सुधाप्रवाहानां च । २ सम्पन्न,–महादेव– । ३ पृथिवी । ४ देवानां क्रीडास्थलं सुमेरुरिति तथोक्तिः । ५ चित्ते । ६ कस्योपकाराय । ७ अस्माकम् । ८ राक्षसानाम् । ९ सुमेरुणा । १० कैलासपर्वतेन । ११ उत्पद्यन्ते प्रकाशन्ते च । १२ वृक्षाः ।

## मन्दराचलान्योक्तिनिदर्शनम्।

मुरारातिर्लक्ष्मीं त्रिपुरविजयी शीतकिरणं करीन्द्रं पौलोमीपतिरपि च लेभे जलनिधेः। त्वया किंवा लब्धं कथय मथितो मन्दरगिरे शरण्यः शैलानां यदयमदयं रत्ननिलयः ॥ १ ॥

## मैनाकाचलान्योक्तिनिदर्शनम्।

शक्रादरक्षि यदि पक्षयुगं तथाऽपि मैनाक सन्ति तव नेह गतागतानि। निःसत्त्वता च निरपत्रपता च किंतु पाथोनिधौ निवसता भवताऽर्जितात्र ॥१॥ वरं पक्षच्छेदः समदमघवन्मुक्तकुलिशप्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः। तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ २ ॥

## लोकालोकाचलान्योक्तिनिदर्शनम्।

एकस्यायमुदेति मूर्धनि गिरेरन्यस्य चैव क्रमादस्तं याति कलानिधिस्तदुभयोरस्तः प्रशस्तोऽचलः। को नामोदयिनं करोति न शिरोमाणिक्यमस्तं पुनर्यातं यः कुरुते भवानिव स दुष्प्रापोऽस्ति पृथ्वीतले ॥१॥

## रोहणाचलान्योक्तिनिदर्शनम्।

रोहणाचल शैलेषु कस्तुलां तुलयेत्तव। यस्य पाषाणखण्डानि मण्डनानि महीभृताम् ॥ १ ॥ रत्नानि किमालयो जलनिधिः किं न स्थिरा मेदिनी किं न व्योम महत्पदं सुकृतिनां किं नाम नैवोन्नतम्। हंहो रोहण किं न याचकचमूनिःशङ्कटङ्काहतिक्षान्तिस्वीकरणेन गोत्रतिलकस्त्रैलोक्यवन्द्यो भवान् ॥ २ ॥ यामस्ते शिवमस्तु रोहणगिरे मत्तः स्थितिप्रच्युता वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः। भ्रातस्ते मणयो वयं यदि भवन्नामप्रसिद्धास्ततः किं शृङ्गारपरायणाः क्षितिभुजो नाङ्गीकरिष्यन्ति नः ॥ ३ ॥

## गुहान्योक्तिनिदर्शनम्।

यस्यां स केसरियुवा पदमाबबन्ध गन्धद्विपेन्द्ररुधिरारुणिताङ्गनायाम्। तामद्य पर्वतदरीं धुतधूम्रलोमा गोमायुरेष वपुषा मलिनीकरोति ॥ १ ॥

## निर्झरान्योक्तिनिदर्शनम्।

कल्लोलसंचलदगाधजलैरलोलैः कल्लोलिनीपरिवृढैः किमपेयतोयैः। जीयात्स जर्जरतनुर्गिरिनिर्झरोऽयं यद्विप्रुषापि तृषिता वितृषीभवन्ति ॥ १ ॥

## सागरान्योक्तिनिदर्शनम्।

नावज्ञा नाप्यवैदग्ध्यमुदधेर्महिमैव सः। यत्तीरपङ्कमग्नानि महारत्नानि शेरते ॥ १ ॥ यद्यपि स्वच्छभावेन दर्शयत्युदधिर्मणीन्। तथापि जानुदघ्नोऽयमिति चेतसि मा कृथाः ॥ २ ॥ रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधेः। मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥ ३ ॥ अधः करोषि रत्नानि मूर्ध्ना धारयसे तृणम्। दोषस्तवैष जलधे रत्नं रत्नं तृणं तृणम् ॥ ४ ॥ वातोल्लासितकल्लोल धिक्ते सागर गर्जितम्। यस्य तीरे तृषाक्रान्तः पान्थः पृच्छति वापिकाम् ॥ ५ ॥ अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया। धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥ ६ ॥ यद्यपि बद्धः

---

१ इन्द्रः। २ निर्बलत्वम्। ३ निर्लज्जत्वम्। ४ वज्र-। ५ हिमालयस्य। ६ बृहत्तरङ्ग-। ७ जलकणेन। ८ चातुर्याभावः। ९ जानुप्रमाणः क्षुद्र इति यावत्। १० हस्तिनः, चाण्डाला इति तु प्रत्यायनमात्रम्।

शैलैर्यद्यपि गिरिमथनमुषितसर्वस्वः । तदपि परभीतभूधररक्षायां दीक्षितो जलधिः ॥ ७ ॥ किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते । सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥ ८ ॥ मा कुरु गुरुतागर्वं लघुरन्यो नास्ति सागर त्वत्तः । जलसंग्रहमन्यस्मात्त्वयि सति कुर्वन्ति पोतस्थाः ॥ ९ ॥ किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र । अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥ १० ॥ लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम् । सर्वमलज्जाकरमिह यत्कुर्वन्तीह परिपूर्णाः ॥ ११ ॥ प्रकृते क्षारो भीषणमकरसहायो विषैकधामा त्वम् । पुनरपि जलधी रुचिरो रत्ननिधित्वेन केवलं जगतः ॥ १२ ॥ अन्तस्तव स ज्वलनो भीमा मकराश्च सर्वतो विकटाः । अथ बत विषमयभङ्गं तदिति निषेव्यः कथं भवेर्जलधे ॥ १३ ॥ पुण्यश्लोकोऽपि विभुः प्रसङ्गतस्ते परं मतः कृष्णः । इति किमिव कृष्णिमानं निवेदयेयं जलाशयाधीश ॥ १४ ॥ त्वदुपरि गर्जन्ति घना न च ते जलधे जलैस्सुभूयिष्ठाः । तृषितान्प्रसादयन्ते त्वं च विषादयस इत्यद्धा ॥ १५ ॥ बहुदयितां ते तनया लक्ष्मीस्तनयो विधुश्च लाञ्छनवान् । कथमिव जलधे पुनरपि न लज्जसे किं मृषा नदसि ॥ १६ ॥ जलमपि न ते निपेयं गृहं च ते दुर्गमं मकरैः । तदिति प्रसह्य विबुधै रत्नानि हृतानि संचितानि चिरात् ॥ १७ ॥ तृषां धरायाः शमयत्यशेषां यः सोऽम्बुदो गर्जति गर्जतूच्चैः । यस्त्वेष कस्यापि न हन्ति तृष्णां स किं वृथा गर्जति निस्त्रपोऽब्धिः ॥ १८ ॥ त्वमद्य सिन्धो जगदेकबन्धो रत्नानि दातुं विमुखोऽसि कस्मात् । किं वा सुतः कल्पमहीरुहस्ते दानैः कृतार्थीकुरुते जगन्ति ॥ १९ ॥ अयि रोषमुरीकरोषि नो चेत्किमपि त्वां प्रति वारिधे वदामः । जलदेन तवार्थिना विमुक्तान्यपि तोयानि महान्न हा जहासि ॥ २० ॥ तोयानामधिपतिराकरो मणीनां शैलानामभयपदं महान्महद्भ्यः । अग्राह्यो भवसि यदि त्वमेव तावत्को नु स्याज्जगति तदा जनावलम्बः ॥ २१ ॥ स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः कल्याणिनी भवतु मौक्तिकशुक्तिमाला । प्राप्तं मया सकलमेव फलं पयोधे यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ २२ ॥ आदाय वारि परितः सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन । क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितं च ॥ २३ ॥ निष्पीतपीनतिमिराणि मनोहराणि रत्नानि सन्ति न कियन्ति तवान्तिकेषु । एतस्य कौस्तुभमणेर्व्रजतः परंतु पाथोनिधे स्मरणमान्तरमावहेथाः ॥ २४ ॥ कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकरालय मावमंस्थाः । किं कौस्तुभेन विहितो भवतो न नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ २५ ॥ लज्जामहे वयमहो वचनेऽपि हन्त सांयात्रिकाः सलिलराशिममी विशन्ति । अंसाधिरोपिततदीयतटोपकण्ठकौपेयकाम्बुदृतयो यदुदीर्णतृष्णाः ॥ २६ ॥ चपलतरतरङ्गैर्दूरमुत्सारितोऽपि प्रथयति तव कीर्तिं दक्षिणावर्तशङ्खः । परिगणय पयोधे पद्मनाभार्घ्ययोग्यस्तव निकटनिषण्णैः क्षुल्लकैः श्लाघ्यता का ॥ २७ ॥ यद्वीचीभिः स्पृशसि गगनं यच्च पातालमूलं रत्नैरुद्दीपयसि पयसा यत्पिधत्से धरित्रीम् । धिक् सर्वं तत्तव जलनिधे

१ गिरिणा मथित्वा यस्य सर्वस्वं (देवैर्दैत्यैश्च) हृतं तादृशः । २ अत्युन्नततेनेति भावः । ३ पोतो नौका । ४ विषं जलम् । ५ जलधिरिति जल (ड) धीरिति च च्छेदः । द्वितीयपक्षे डलयोः सावर्ण्यम् । ६ वाडवनामा । ७ विषं जलं गरलं च । ८ "पुण्यश्लोको जनार्दनः" इत्युक्त्या नारायणः पुण्यश्लोकः । ९ श्यामः, मलिनश्च । १० चञ्चलत्वात् । बह्वी या दया सा संजाता यस्या इति वा । ११ निर्लज्जः । १२ मैनाकप्रभृतीनाम् । १३ नौकादिद्वारा वाणिज्यकर्तारः । १४ दृतिः पात्रविशेषः । १५ दक्षिणभागे आवर्त्तो यस्येत्येवम्भूतः । १६ पद्मनाभो विष्णुः । १७ क्षुद्रैः शङ्खैः ।

यद्विमुच्याश्रुधारास्तीरे नीरग्रहणरसिकैरध्वगैरुज्झितोऽसि ॥ २८ ॥ अयं वारां[1]मेको निलय इति रत्नाक इति श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः । क एवं जानीते निजकरपुटीकोटरगतं क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः[2] ॥ २९ ॥ अये वारां राशे कुलिशकरकोपप्रतिभयाद[3]यं पक्षप्रेम्णा गिरिवरसुतस्त्वामुपगतः । त्वदन्तर्वास्तव्यो यदि पुनरयं वाडवशिखी प्रदीप्तः प्रत्यङ्गं ग्लपयति ततः कोऽस्य शरणम् ॥ ३० ॥ अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते । आँहो रिक्तः कथमपि भवेदेष दैवात्तदानीं को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः[6] ॥ ३१ ॥ इतः स्वपिति केशवः कुलमितस्तदीयद्विषा[7]मितश्च शरणार्थिनः शिखरिपत्रिणः[8] शेरते । इतोऽपि वडवानलः सह समस्तसंवर्तकै[9]रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ३२ ॥ ग्राव[10]णो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधाः । तीरे कल्पमहीरुहाः किमपरं नाम्नाऽपि रत्नाकरो दूरे कर्णरसायनं निकटतस्तृष्णाऽपि नो शाम्यति ॥ ३३ ॥ एतस्मादमृतं सुरैः शतम[11]खेनोच्चैःश्रवाः सद्गुणः कृष्णेनाद्भुतविभ्रमैक-वसतिर्लक्ष्मीः समासादिता । इत्यादि प्रचुराः पुरातनकथाः सर्वेभ्य एव श्रुता अस्माभिर्न च दृष्ट-मत्र जलधौ मृष्टं पयोऽपि क्वचित् ॥ ३४ ॥ संख्येया न भवन्ति ते युगशतैर्गाम्भीर्यमुख्या गुणाः सत्यं वारिनिधे तथापि तदिदं चित्ते विधत्ते व्यथाम् । स्वच्छन्देन तिमिंगिला[12]न्निजकुलग्रासं मुहुः कुर्वतो यत्ते वारयितुं निजेऽपि विषये न स्वामिता विद्यते ॥ ३५ ॥ कल्लोलैः[13] स्थगयन्मुखानि ककुभा[14]मभ्रं-लिहैरम्भसा क्षारेणापि दिवानिशं जलनिधे गर्जन्न विश्राम्यसि । एतत्ते यदि घोरनक्रनिलयं स्वादु व्यधास्यद्विधिः किं कर्तासि तदा न वेद्मि तरलैः स्वैरेव दुश्चेष्टितैः ॥ ३६ ॥ द्यामारोहति वाञ्छति स्थगयितुं तेजोऽपि तेजस्विनामुच्चैर्गर्जति पूरयन्नपि महीमम्भोभिरम्भोधरः । कांश्चिद्द्रागुपजीव्य तोयचुलुका-न्सिन्धो भवत्संनिधौ पानीयप्रचयेषु सत्स्वपि न ते जातो विकारः क्वचित् ॥ ३७ ॥ किं वाच्यो महिमा तवात्र जलधे यस्येन्द्रवज्रा[15]हतित्रस्तक्ष्माभृदमज्जदम्बुनिचये मज्जत्कलङ्काकृतिः । मैनाको-ऽपि गभीरनीरबिलसत्पा[16]ठीनपृष्ठोल्लसच्छैवालाङ्कुरकोटिकोटरकुटीकुडयान्तरे निर्वृतः ॥ ३८ ॥ आस्तां तावदहो समुद्रमहिमा दूरेऽपि कर्णप्रियस्तीरे यस्य पिपासयैव मरणं प्राप्नोति शीघ्रं जनः । तस्मादम्बुनिधेर्वरं लघुसरः कूपोऽथवा वापिका यत्र स्वीयकरद्वयेन सलिलं पेपीयते स्वेच्छया ॥ ३९ ॥ देवैर्यद्यपि तक्रवद्विमथितः केदा[17]रवद्वानरैर्बद्धः सिद्धवदञ्जनाविजनु[18]षा कुल्या[19]वदुल्लङ्घितः । किं चासीच्चुलुके-ऽम्बुबिन्दुवदयं द्राक्कुम्भयो[20]नेर्मुनेर्नातारोऽयमिति प्रथा जलनिधेरासीदथापि श्लथा[21] ॥ ४० ॥ पीयूषेण सुराः श्रियं मुररिपुर्मर्यादया मेदिनी शक्रः कल्परु[22]हा शशाङ्ककलया श्रीशंकरस्तोषितः । मैनाकादिनगा निजोदरगता प्रस्थानतः स्थापितास्त्वच्चूलीकरणे घटोद्भवमुनिः केनापि नो वारितः ॥ ४१ ॥ हे हेलाजितबोधिस[23]त्त्व वचसां किं विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।

१ जलानाम् । २ अगस्त्यः । ३ मैनाकः । ४ यदीत्यर्थः । ५ गर्तविवर- । ६ क्षमः । ७ दैत्यानां राक्षसानां च । ८ शिखरिण एव पत्रिणः पक्षिण इति । मैनाकादेः पक्षवत्त्वं सुप्रथितं पुराणेषु । ९ समस्ता ये संवर्तका महामेघास्तैः । १० पाषाणाः । ११ शतमख इन्द्रः । १२ महामत्स्यविशेषान् । १३ बृहत्तरङ्गैः । १४ दिशाम् । १५ कुलिशाहतिः-वज्राघातः । १६ मत्स्यविशेष- । १७ क्षेत्रगतजलवाहिकापद्धतिः केदारः । १८ अञ्जनाजनुषा हनुमता, विजनुषा पक्षिपुत्रेण गरुडेन च । १९ कुल्या कृत्रिमा सरित् । २० अगस्त्यस्य । २१ शिथिला । २२ कल्प-द्रुमेण । २३ बोधिसत्त्वा बौद्धाः इदं दयालुताऽतिशयद्योतनार्थम् । बुद्धस्तु श्रीघनः शास्ता-बोधिसत्त्वो विनायकः ।' इति वैजयन्ती ।

तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोति कृपया साहायकं यन्मरोः ॥ ४२ ॥ पीयूषेण कृतार्थिता दिविषदो लक्ष्म्या हरिः प्रीणितश्चन्द्रार्धेन विभूषितः पशुपतिः कल्पद्रुमैर्वासवः । आत्मानं परिमथितामुदधिना किं किं न तेषां कृतं तस्यागस्त्यमुनिप्रपीतपयसो नोच्चैः कृतैकाञ्जलिः ॥ ४३ ॥ लक्ष्म्या श्रीपुरुषोत्तमो हिमरुचा गौरीप्रियोऽलंकृतो देवेन्द्रोऽपि विमानवारणहयस्त्रीरत्नकल्पद्रुमैः । पीयूषैरमितैस्त्वया दिविषदश्चान्ये कृतार्थीकृताः श्रीमन्वारिनिधे त्वदीयमहिमा नूनं न वाग्गोचरः ॥ ४४ ॥ हंहो वारिनिधे विधेः समुचितं येनासि रत्नाकरो रत्नं चेदवमन्यसे वद विभो नैतत्पदं विन्दसि । पश्यालङ्करणं पुरन्दरपुरे चिन्तामणिः कौस्तुभं विष्णोर्वक्षसि मीनकेतनरिपोः शीर्षे कलानां निधिः ॥ ४५ ॥ याचित्वाऽम्बुकणांस्त्वदेव जलधे मौलौ तवैव स्थिता गर्जन्त्यम्बुधरास्तथाऽपि सहसे नो जातुचित्क्षुभ्यसे । सर्वस्वं च हृतं बलात्सुरवरै रामेण बद्धस्तथाऽऽक्रान्तस्त्वं च हनूमता पुनरपि श्रीस्ते तथैवेत्यहो ॥ ४६ ॥ पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां सुत्रामत्रासभाजां त्रिदशविटपिनां जन्मभूमिस्त्वमेव । गाम्भीर्यं तच्च तादृक्त्वयि सलिलनिधे किंतु विज्ञाप्यमेतत्सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टयः काङ्क्षणीयाः ॥ ४७ ॥

## क्षीरोदान्योक्तिनिदर्शनम् ।

सागराः सन्तु भूयांसः किं तैर्ये नार्थितृप्तये । धन्यः क्षीरोद एकाकी यमुपास्ते सदा हरिः ॥ १ ॥ विश्वेषां तृप्तिकरं क्षीरं दातुं सदा निरावरणः । क्षीरोद त्वदृतेऽन्यः न कृती लोके कचित्प्रथितः॥ २ ॥ रजतगिरेरपि नाथस्त्वादृशसंश्रयमनेत्य हन्तेशः । उदरभृतेऽटति भिक्षां क्षीरनिधे त्वां श्रितो हरिः शेते॥ ३॥ दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् । स परमपरः क्षीरोदन्वान्यदीयमुदीर्यते मथितुरमृतं खेदच्छेदि प्रभोरनुमोदनम् ॥ ४ ॥ साकं ग्रावगणैर्लुठन्ति मणयो बालार्कबिम्बोपमा नीरे नीरचरैः समं स भगवान्निद्राति नारायणः । एवं वीक्ष्य तवाविवेकमथ च प्रौढि परामुन्नतेः किं निन्दाम्यथवा स्तवीमि कथय क्षीरार्णव त्वामहम् ॥ ५ ॥

## अगस्त्यान्योक्तिनिदर्शनम् ।

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः । येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥ १ ॥ अखर्वपर्वगर्तेषु विच्छिन्नो यस्य वारिधिः । हा स एव मुनेः पाणिरधस्ताद्विन्ध्यभूभृतः ॥ २ ॥ सन्तु महान्तो बहवः परेऽपि धन्यास्तथाऽपि कुम्भभवः । चुलुकैकदेशगं यः सकलं विदधे क्षणाज्जलधिम् ॥ ३ ॥अल्पीयसैव पयसा यत्कुम्भः पूर्यते प्रसिद्धं तत् । ब्राह्मं तेजः पश्यत कुम्भोद्भूतः पपौ वार्धिम् ॥ ४ ॥ गतोऽस्मि तीरं जलधेः पिपासया स चापि शुष्कश्चुलुकीकृतो मया । न लक्ष्यते दोषलवोऽपि तोयधेर्ममैव तत्कर्मफलं विजृम्भते ॥ ५ ॥ जलधी रत्नाकरतागभीरताभ्यां प्रतारितो जातः । भवतो मुने न तृप्तिः किमिति निपीतं त्वया वितथम् ॥ ६ ॥ कम्पन्ते गिरयः पुरंदरभिया मैनाकमुख्याः पुनः क्रन्दन्त्यम्बुधराः स्फुरन्ति बडवावक्त्रोद्गता वह्नयः । भो कुम्भोद्भव मुच्यतां जलनिधिः स्वस्त्यस्तु ते सांप्रतं निद्रालुः श्लथबाहुवल्लिकमलाश्लेषो हरिः सीदति ॥ ७ ॥

---

१ साहाय्यम् । २ चन्द्रमसा । ३ मीनकेतनो मदनस्तद्रिपुः शङ्करस्तस्य ४ सुत्रामा देवराजः । ५-"देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥" इत्यमरोक्तानाम् । ६ मैत्रावरुणिरगस्त्यः । ७ नदीम् । ८ ब्राह्मणस्येति भावः । ९ समुद्रम् । १० इन्द्रभीत्या । ११ लक्ष्मी- ।

## रत्नान्योक्तिनिदर्शनम् ।

मणिर्लुठति पादेषु काचः शिरसि धार्यते । यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः ॥ १ ॥ अप्याकरसमुत्पन्ना मणिजातिरसंस्कृता¹ । जातरूपेण² कल्याणि नहि संयोगमर्हति ॥ २ ॥ अनस्तमितसारस्य तेजसस्तद्विजृम्भितम् । येन पाषाणखण्डस्य मूल्यमल्पं वसुन्धरा ॥ ३ ॥ धन्योऽयं मणिरेकश्छिन्नो भिन्नश्च शाणनिर्घृष्टः । युक्तस्तेजोनिचयैर्धन्यो दुःखेऽपि योऽधिकाभासः ॥ ४ ॥ भ्रष्टे नृपतिकिरीटाद्भूमौ पतितं तिरोहितं रजसा । विधिविलसितेन रत्नं जनचरणविडम्बनां सहते ॥ ५ ॥ वपुःपरीणाह³गुणेन तेभ्यो यशस्विनः किं मणयो भवन्ति । तथाऽपि चूडासु महीपतीनां त एव खेलन्ति न गण्डशैलाः ॥ ६ ॥ सिन्धुस्तरङ्गैरुपकल्प्य फेनान्रत्नानि पङ्कैर्मलिनीकरोति । तथाऽपि तान्येव महीपतीनां किरीटकोटीषु पदं लभन्ते ॥ ७ ॥ विरम रत्न मुधा⁴ तरलायसे तव न कश्चिदिहास्ति परीक्षकः । विधिवशेन⁵ परिच्युतमाकरात्त्वमपि काचमणीकृतमीश्वरैः ॥ ८ ॥ अनिर्भालित एव केवलं खनिगर्भे निधिरेष जीर्यतु । न तु सीदतु मूल्यहानितो वणिजाऽऽलोकनगोचरीकृतः ॥९॥ समुद्रेणान्तःस्थस्तटभुवि तरङ्गैरकरुणैः समुत्क्षिप्तोऽस्मीति त्वमिह परितापं त्यज मणे । अवश्यं कापि त्वद्गुणपरिचयाकृष्टहृदयो नरेन्द्रस्त्वां कुर्यान्निजमुकुटकोटिप्रणयिनम् ॥ १० ॥ पयोधेः सर्वस्वं शिरसि धृतवान्यं नृपगणः पणो यस्य क्षोणी चतुरुदधिसीमावधिरभूत् । स एवायं दैवाच्छबरवनितापाणिपतितो मणिर्मेषग्रीवाद्विगुणगुणबद्धो विहरति ॥ ११ ॥ आघ्रातं परिलीढमुग्रनखरैः क्षुण्णं च यच्चर्वितं क्षिप्तं यद्गत नीरसत्वकुपितेनेति व्यथां मा कृथाः । हे सद्रत्न तवैतदेव कुशलं यद्वानरेणाग्रहादन्तःसारविचारणव्यसनिना चूर्णीकृतं नाश्मना ॥१२॥ उत्तंसेषु न नर्तितः क्षितिभुजां न प्रेक्षकैर्लक्षितः साकाङ्क्षं लुठितो न च स्तनतटे लीलावतीनां क्वचित् । कष्टं भोश्चिरमन्तरेण जलधेर्दैवाद्विशीर्णोऽभवत्खेलव्यालकुलाङ्गवर्षणपरिक्षीणप्रमाणो मणिः ॥१३॥ ये गृह्णन्ति हठात्तृणानि मणयो ये चाप्ययःखण्डकं ते दृष्टाः प्रतिधाम दग्धमणयोऽविच्छिन्नसङ्घर्याश्चिरम् । नो जाने किमभावतः किमथवा दैवादहो श्रूयते नामाप्यत्र न तादृशस्य हि मणे रत्नानि गृह्णाति यः ॥ १४ ॥ यन्मुक्तामणयोऽम्बुधेरुदरतः क्षिप्ता महावीचिभिः पर्यन्तेषु लुठन्ति निर्मलरुचः स्पष्टाट्टहासा इव । तत्तस्यैव परिक्षयो जलनिधेर्द्वीपान्तरालम्बिनो रत्नानां तु परिग्रहव्यसनिनः सन्त्येव सांयात्रिकाः ॥ १५ ॥ यत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधेरुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा । याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपदस्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥ १६ ॥ काचाः काञ्चनभूषिताः कति न वा मुष्णन्ति रत्नश्रियं मौलौ वा कति नोद्वहन्त्यपधियस्तानेव रत्नभ्रमात् । अक्ष्णां ये पुनरुन्मृजन्ति तिमिरं येनाम रत्नाकरः सिन्धुस्ते पृथगेव हन्त मणयस्तेष्वप्यभिज्ञाः पृथक् ॥ १७ ॥

## हीरकान्योक्तिनिदर्शनम् ।

यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचयः । करोति तत्र किं नाम नारीनखविलेखनम् ॥ १ ॥

---

१ शाणोल्लेखनसंस्कारहीना । २ सुवर्णेन । ३ परिणाहो विशालता । ४ मृषा । ५ दैवेच्छया । ६ असमीक्षितः । ७ निष्ठुरैः । ८ मूल्यम् । ९ आस्वादितम् । १० क्रीडापराणां कान्तानाम् । ११ असङ्ख्याः । १२ इतस्ततः प्रदेशेषु । १३ पोतद्वारा वाणिज्यकर्तारः । १४ यत्र चिन्तामणौ सति विधेर्विधातुर्निखिलं निर्माणमनुल्लिखितार्थम् 'इदमेवं स्यात्' इत्यनिर्दिष्टपूर्वमेव, सर्वाभिलाषितपूरकत्वात्सम्भवति । तथोत्कर्षस्य प्रतियोगिनोऽवधेः सदृशस्य वा कल्पनमपि न्यक्कारकोटिः । १५ अपहरन्ति । १६ मूढाः । १७ हीरकरत्नस्य ।

## कौस्तुभान्योक्तिनिदर्शनम् ।

न श्वेतांशुवदन्धकारदलनादुद्द्योतिते रोदसी नाप्यैरावतवन्निरस्तदितिजैत्रासः कृतो वासवः । नो चिन्तामणिरत्नवत्त्रिभुवने छिन्ना विपद्वाऽर्थिनां भूत्वा तस्य हरेरुरः प्रणयिना किं कौस्तुभेनार्जितम् ॥ १ ॥

## सूर्यकान्तान्योक्तिनिदर्शनम् ।

शाठ्यं शठं प्रति न्याय्यमिति मार्गस्त्वयाऽऽदृतः । यत्सूर्यकान्त चण्डांशौ चण्डांशुत्वं प्रकटयते ॥ १ ॥

## चन्द्रकान्तान्योक्तिनिदर्शनम् ।

सुधाकरकरस्पर्शाद्बहिर्द्रवति सर्वतः । चन्द्रकान्तमणेस्तेन मृदुत्वं लोकविश्रुतम् ॥ १ ॥

## चन्द्रसूर्यकान्तान्योक्तिनिदर्शनम् ।

चन्द्रकान्तो मणिः स्वच्छः सूर्यकान्तस्तथैव च । किंतु सूते सुधामाद्यो ज्वालामन्य इयं भिदा ॥ १ ॥
खनिजत्वादिसाधर्म्ये हन्त सत्यपि सुस्फुटम् । उद्गारे केवलं भेदस्तयोरम्ब्वग्निहेतुके ॥ २ ॥

## स्फटिकान्योक्तिनिदर्शनम् ।

स्फटिकस्य गुणो योऽसौ स एवायाति दोषताम् । धत्ते स्वच्छतया छायां यतो मलवतामपि ॥ १ ॥

## मरकतान्योक्तिनिदर्शनम् ।

त्यज निजगुणाभिमानं मरकत पतितोऽसि पामरे वणिजि । काचमणेरपि मौल्यं लभसे यत्तदपि ते श्रेयः ॥ १ ॥ केनासीनः सुखमकरुणेनाकरादुद्धृतस्त्वं विक्रेतुं वा सममिलषितः केन वाऽस्मिन्कुदेशे । यस्मिन्वित्तव्ययभरसहो ग्राहकस्तावदास्तां नास्ति भ्रातर्मरकतमणे त्वत्परीक्षाक्षमोऽपि ॥ २ ॥ आसीत्पूर्वं विमलजलधौ मण्डनं भूपतीनां नारीणां च प्रबलमुकुटे काञ्चनेन प्रसङ्गात् । तन्त्रीबद्धः कथमिदमहो काचखण्डेन सार्धं भिल्लीकण्ठे मरकतमणे कामवस्थां गतोऽसि ॥ ३ ॥

## माणिक्यान्योक्तिनिर्शनम् ।

पौरस्त्यैर्दाक्षिणात्यैः स्फुरदुरुमतिभिर्मित्र पाश्चात्यसङ्घैरौदीच्यैर्यत्परीक्ष्य क्षितिपतिमुकुटे न्यासि माणिक्यमेकम् । यद्येतस्मिन्कथञ्चित्कथयति कृपणः कोऽपि मालिन्यमन्ये प्रेक्षावन्तस्तदा तं निरवधिजडतामन्दिरं संगिरन्ते ॥ १ ॥

## काचान्योक्तिनिदर्शनम् ।

अज्ञतया प्रेम्णा वा चूडामणिमाकलय्य काचमणिम् । नृपतिर्विहेत शिरसा तेनासौ न ह्यनर्घ्यमणिः १

## शङ्खान्योक्तिनिदर्शनम् ।

अन्तः कुटिलतां बिभ्रच्छङ्खः स खलु निष्ठुरः । हुङ्करोति यदा ध्मातस्तदैव बहु गण्यते ॥ १ ॥ उच्चैरुच्चरतु चिरं झिल्लीवर्त्मनि तरुं समारुह्य । दिग्व्यापिनि शब्दगुणे शङ्खः सम्भावनाभूमिः ॥ २ ॥ कीटगृहं कुटिलोऽन्तः कठिनः क्षाराम्बुसम्भवः शून्यः । शङ्खः श्रीपतिनिकटे केन गुणेन स्थितिं लेभे ॥ ३ ॥ जलनिधौ जननं धवलं वपुर्मुररिपोरपि पाणितले स्थितिः । इति समस्तगुणान्वित शङ्ख भो कुटिलता हृदये न निवारिता ॥ ४ ॥ ध्वनिरतिमधुरः शुचित्वमुच्चैर्जनिरपि

---

१ आकाशं पृथिवी च । २ दैत्य- । ३ तुच्छे । ४ समम् । ५ पूर्वदिग्भवैः । ६ दक्षिणदिग्भवैः । ७ पाश्चात्याः पश्चिमदिग्भवाः । ८ उत्तरदिग्भवा औदीच्याः । ९ स्थापितम् । १० विद्वांसः । ११ आहुः । १२ आदर- । १३ अभ्यन्तरभागे ।

शङ्ख [1]नदीनतस्तवाभूत्। अवगतमखिलं बहिस्तवेदं कुटिलतरं पुनरन्तरं न विद्मः ॥ ५ ॥ क वाऽम्भोधौ जन्म क च वपुरिदं कुन्द[2]धवलं क चावासस्थानं कृतमहह विष्णो करतलम्। क नीचानाम[3]आस्ये परिणतिरियं चुम्बनविधावितीवायं शङ्खः करुणै[4]करुणं रोदिति मुहुः ॥ ६ ॥ तातः क्षीरनिधिः स्वसा[5] भगवती[6] भ्राता सुरेश[7]द्रुमः सौजन्यं सह कौस्तुभेन शुचिता[8] यस्य द्विजेशा[9]-दपि। धिक्कर्माणि स एव कम्बु[10]रधुना पाखण्डकान्ताकरे विश्रान्तः प्रतिवासरं प्रतिगृहं भैक्ष्येण कुक्षिम्भरिः ॥ ७ ॥

## पाञ्चजन्यान्योक्तिनिर्देशः।

सर्वाशा[11]परिपूरिहुंकृतिमदो जन्मापि दुग्धोदधेर्गोविन्दाननचुम्बि सुन्दरतरं पूर्णेन्दुबिम्बाद्वपुः। [12]श्रीरेषा सहजा[13] गुणाः किमपरं भण्यन्त एते हि यत्कौटिल्यं हृदि पाञ्चजन्य भवतस्तेनातिलज्जामहे ॥ १ ॥ शङ्खाः सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टिताः पर्यन्तेषु[14] लुठन्ति ये दलशतैः कल्माषितक्ष्मातलाः। एकः कोऽपि स पाञ्चजन्य उदभूदाश्चर्यधामा सतां यः संवर्त[15]भरक्षमैर्मधुरिपोः श्वासानिलैः पूर्यते ॥ २ ॥

## सरिदन्योक्तिनिर्देशः।

विभूति[16]स्तव विश्वेषां[17] सेव्येति गिरिसम्भवे। भवतीव भवत्येव भवतीति सुनिश्चितम् ॥ १ ॥ दग्धा-नपि प्रदेशाञ्जीवन[18]पूर्णान्समन्ततः कुरुषे। इति गिरिजे[19] सञ्चारस्तव जगदुपकारको जयतात् ॥ २ ॥ तटिनि चिराय विचारय विन्ध्यभुव[20]स्तव पवित्रायाः। शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकादानम् ॥ ३ ॥ कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते। तटिनि तटद्रुमपातनपातकमेकं पुनः स्थायि ॥४॥ यास्यति जलधरसमयस्तव च समृद्धिर्लघीयसी भविता। तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ५ ॥ कुरु गम्भीराशयतां कल्लोलैर्जनय लोकविभ्रान्तिम्। वीतपयो[21]धरलक्ष्मीः कस्य न चरणैर्वि-लङ्घ्यासि ॥ ६ ॥ मलयस्य गिरेरपत्यमादौ तदनु भ्रातृमती पटीर[22]वृक्षैः। किमु चित्रमपांनिधेः कलत्रं तटिनी काचन मौक्तिकानि सूते ॥ ७ ॥ [23]नावर्तो न च तरलास्तरङ्गमाला नेदानीं जलर[24]यजा रवाः करालाः। सैव त्वं तटिनि तटद्रुमान्विपात्य प्रौढानामपयशसामिवासि पात्रम् ॥ ८ ॥ छायां प्रकुर्वन्ति नमन्ति पुष्पैः फलानि य[25]च्छन्ति तटद्रुमा ये। उन्मूल्य तानेव नदी प्रयाति तरङ्गिणां[26] क प्रतिपन्न[27]मस्ति ॥ ९ ॥ न वारयामो भवतीं विशन्तीं वर्षानदि स्रोतसि जह्नुजायाः[28]। न युक्तमेतत्तु पुरो यदस्यास्तरङ्गभङ्गान्प्रकटीकरोषि ॥ १० ॥

---

१ नदीनामिनः पतिः तस्मात्समुद्रात्। २ कुन्दं माघ्यपुष्पम्। ३ मुखे। ४ अतिकरुणम्। ५ सहोदरी। ६ लक्ष्मीः। ७ कल्पद्रुमः। ८ शुभ्रता, पवित्रता वा। ९ चन्द्रमसः, द्विजोत्तमाद्वा। १० शङ्खः। ११ आशा दिशः। १२ लक्ष्मीः। १३ सहोदरी। १४ इतस्ततस्तट-प्रदेशेषु। १५ संवर्त्तः प्रलयकालिको मेघः। १६ अवतारः, सम्पद्वा। १७ सर्वेषां लोकानाम्। १८ जलपूर्णान्, प्राणसम्पन्नांश्च। १९ पर्वतत उत्पन्ने नदीत्यर्थः। हे पार्वति देवीति तु ध्वन्यते। अत्रोपमाऽलङ्कारध्वनिरित्यालङ्कारिकाः। २० विन्ध्याचलतः सम्प्रवृत्ताया-स्तटिन्याः। २१ नष्टमेघसम्पत्तिः। गलितस्तनशोभेति तु प्रतीयत एव। २२ चन्दनतरुभिः। २३ भ्रमिविशेषः। २४ रयो वेगः। २५ सम्प्रददति। २६ तरङ्गसदृशं चाञ्चल्यं प्रत्याययितुमिदं वच-नम्। २७ अङ्गीकृतम्। २८ गङ्गायाः।

## गङ्गाऽन्योक्तिनिदर्शनम् ।

यद्यपि दिशि दिशि सरितः परितः परिपूरिताम्भसः सन्ति । तदपि पुरन्दरतरुणीसङ्गतिसुखदायिनी गङ्गा ॥ १ ॥ स किमु सहेत सुधांशुः स्मरहरभालानलज्वालाः । शिशिरैः शीकरनिवहैः सिञ्चति सुरनिम्नगा नो चेत् ॥ २ ॥ भगवति गङ्गे भवतीं प्रणमामि यतोऽसि शम्भुनाऽपि नता । तव जीवनममृतमेयं पावनरूपश्च सञ्चारः ॥ ३ ॥ सन्तु सहस्रश इतरा अपि जीवनदानतत्पराः सरितः । किंतु चिराय श्रीशानमरान् कर्तुं त्वमेवालम् ॥ ४ ॥ गङ्गे तव न विवेको यत्त्वं दिव्यान्करोषि पातकिनः । विधिधर्म्मराजशासनमपि स्थगयसि प्रसह्यात्र ॥ ५ ॥

## शोणभद्रान्योक्तिनिदर्शनम् ।

आजन्मस्थितयो महीरुह इमे कूले समुन्मूलिताः कल्लोलाः क्षणभङ्गुरा पुनरमी नीताः परामुन्नतिम् । अन्तर्ग्राहपरिग्रहो वहिरपि भ्राम्यन्ति गन्धद्विपा भ्रातः शोण न सोऽस्ति यो न हसति त्वत्संपदां विप्लवान् ॥ १ ॥

## यमुनाऽन्योक्तिनिदर्शनम् ।

मित्रसुते त्वं धन्या कृष्णमयत्वं रुचाऽपि या दधसे । या न सरूपा पत्युः कथमिव तस्या भवेत्साम्यम् ॥ १ ॥ न त्वं पितृवत्तापं न संहृतिं भ्रातृवत्करोषि लोकानाम् । वितरसि जीवनममृतं धन्ये यमुने चिरं जीयाः ॥ २ ॥ कृष्णाऽप्यन्तःशुद्धा जडाशयाऽपि प्रकृष्टजीवनभृत् । अधिकृतभुजङ्गसङ्गा पतिरुचिसुभगाऽसि कालिन्दि ॥ ३ ॥

## सरस्वत्यन्योक्तिनिदर्शनम् ।

गुप्तो भवत्याः सञ्चारः कलिदृक्पातसाध्वसात् । तथाऽपि केषां नो वन्द्या सरस्वति महेश्वरि ॥ १ ॥

## सरोऽन्योक्तिनिदर्शनम् ।

आगच्छतामपूर्णानां पूर्णानामपि गच्छताम् । यदध्वनि न संघट्टो घटानां किं सरोवरम् ॥ १ ॥ अहो पूर्णं सरः स्पष्टमसि नात्र विचारणा । लुठन्तस्त्वयि यत्सर्वे स्नान्ति जातु कथञ्चन ॥ २ ॥ अयमवसरः सरस्ते सलिलैरुपकर्तुमर्थिनामनिशम् । इदमतिसुलभं चाम्भो भवति न पुरा जलधराभ्युदये ॥ ३ ॥ कस्य तृषं न क्षपयति पिबति न कस्तव पयः प्रविश्यान्तः । यदि सन्मार्गसरोवर नक्रो न क्रोडमधिवसति ॥ ४ ॥ तानि तानि कमलानि तज्जलं तानि षट्पदकुलानि ते खगाः । सर्वमेकपद एव विच्युतं पङ्कशेषमचिरादभूत्सरः ॥ ५ ॥ विहगैर्गतं मधुकरैश्चलितं प्रकरैः प्रयातमपि पद्मदृशाम् । विभवे गते सकलमेव गतं ध्रुवमेकमञ्चति यशः सरसः ॥ ६ ॥ आपेदिरेऽम्बरपथं परितः पतङ्गा भृङ्गा रसालमुकुलानि समाश्रयन्ति । संकोचमञ्चति सरस्त्वयि दीनदीनो मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ ७ ॥ इयत्यां संपत्तावपि च सलिलानां त्वमधुना न तृष्णामार्तानां हरसि यदि कासार सहसा । निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरं कृशीभूतः केषामह परिहर्तासि खलु ताम् ॥ ८ ॥

---

१ इन्द्र– । २ जलकणपुञ्जैः । ३ जलम् । ४ सुधारूपं, मोक्षरूपं च । ५ सूर्य–, वयस्य । ६ यदुनन्दन–, मलिन– । ७ सूर्यवत् । ८ यमराजवत् । ९ डलयोः सावर्ण्यमिति जलाशयेऽपि वक्तव्यम् । १० कालियादिनाग–, जारजन– । ११ गगनमार्गम् । १२ प्रपद्यमाने क्षति ।

विपन्नं पद्मिन्या द्रुतमनिमिषं यातमलिभिः खगैरप्युड्डीनं रथचरणहंसप्रभृतिभिः । दशा दीना लेभे सरसि विषमैर्ग्रीष्मदिवसैः कुलीनत्वादास्ते तटरुहतरुः कोऽपि तदपि ॥ ९ ॥ क्रौञ्चः क्रीडतु कूर्दतां च कुररः कङ्कः परिष्वज्यतां मद्गुर्माद्यतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः । भेकाः सन्तु बका वसन्तु चरतु स्वच्छन्दमाटिस्तटे हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ॥ १० ॥ एतस्मिन्मरुमण्डले परिचलत्कल्लोलकोलाहलक्रीडत्कङ्कमपङ्कमङ्कविलसन्निःशङ्कमत्स्यव्रजम् । केनेदं विकसत्कुशेशयकुटीकोणक्वणत्षट्पदं क्षणप्रीणितपान्थमुज्ज्वलजलं चक्रे विशालं सरः ॥ ११ ॥ स्तोकाम्भःपरिवर्तिताङ्गशफरीग्रासार्थिनः सर्वतो लप्स्यन्ते बकटिट्टिभप्रभृतयः स्वल्पेषु साधु स्थितिम् । सद्यः शोषमुपागतेऽद्य सरसि श्रीसद्मपद्माकरे तस्मिन्पङ्कजिनीविलासरुचयो हंसाः क यास्यन्त्यमी ॥ १२॥ कर्दमवदात्मवैभवमुल्लास्य च मानवीं प्रजां सुचिरम् । तपनोत्तापप्लुष्टं स्ववपुः कृत्वा गतं सरसा ॥ १३ ॥ माद्यद्दिग्गजदानलिप्तकरटप्रक्षालनक्षोभिता व्योम्नः सीम्नि विचेरुरप्रतिहता यस्योर्मयो निर्मलाः । कष्टं भाग्यविपर्ययेण सरसः कल्पान्तरस्थायिनस्तस्याप्येकबकप्रचारकलुषं कालेन जातं जलम् ॥ १४ ॥ रे पद्माकर यावदस्ति भवतो मध्ये पयैः पूरितं तावच्चक्रचकोरकङ्ककुररश्रेणीं समुल्लासय । पश्चात्त्वं समटद्बकोटचटुलत्रोटीपुटव्याहतित्रुट्यत्कर्कटकर्परव्यतिकरैर्निन्दाऽऽस्पदं यास्यसि ॥ १५ ॥ याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला । एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १६ ॥ सोपानानि तिरोहितानि पदवी छन्ना तृणैर्नूतनैः कालुष्यं पयसां विलोक्य शनकैरुड्डीय हंसा गताः । माधुर्यं न मधुव्रतोदितगिरां पद्मानि मग्नानि के भेकानामिह गर्जितं परमहो वृष्ट्यैव नष्टं सरः ॥ १७ ॥ आपूर्येत पुनः स्फुरच्छफरिकासारोर्मिभिर्वारिभिर्भूयोऽपि प्रविजृम्भमाणनलिनं पश्येम तोयाशयम् । इत्याशाशततन्तुबद्धहृदयो नक्तन्दिनं दीनधीः शुष्यत्यातपशोषितस्य सरसस्तीरे जरत्सारसः ॥ १८ ॥ भीष्मउद्दामाम्बुदवर्धमानशिखिनीकेकातिरेकाकुले संप्राप्यं सलिलं स्थलेष्वपि सदा निस्तर्षवर्षागमे । ग्रीष्मभटे परस्परभयादालोच्यमानं मुहुर्दीनं मीनकुलं न पालयसि चेत्कासार का सारता ॥ १९ ॥ सर्वं सौवर्णः कमलाकरः शशिशिलासोपानबन्धक्रमो वारि क्षीरसहोदरं तटतरुश्रेणीसुखाः क्षोणयः । ते रुचिरं सरोवर परं निन्द्यः कुतोऽयं विधिः कूटग्राहभयात्प्रयान्ति विमुखाः पान्था निदाघेऽप्यमी ॥२०॥ उड्डीनं विहगैर्मृतं जलचरैः क्ष्मान्तर्गतं कच्छपैः पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्छितम् । तस्मिन्नेव सरस्यकालजलदेनागत्य तच्चेष्टितं येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥ २१ ॥ हंसैर्लब्धप्रशंसैस्तरलितकमलस्रस्तरङ्गैस्तरङ्गैर्नीरैरन्तर्गभीरश्चपलकुलत्रासलीनैश्च मीनैः । पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतैर्भाति प्रक्रीडदातिस्तवसलिलचलच्चक्रवाकस्तडागः ॥ २२ ॥

## मानससरोवरान्योक्तिनिदर्शनम् ।

मानस कमलं विदधद्विरचय मोदं सदैव हंसानाम् । एते मुक्तामोदा गताः पुनर्नागमिष्यन्ति ॥ १ ॥

---

१ कौ पृथिव्यां लीनो दृढमूलतया स्थितस्तत्त्वात् । सत्कुलसम्भवत्वाच्च । २ क्रीडतु । ३ जलकाकः । ४ हंसः । ५ क्षुद्रपक्षिविशेषः । ६ शरारिः । ७ लक्ष्मीनिवासस्थानरूप- । ८ कर्दमवत् ऋषिविशेषतुल्यम्, पङ्किलं च । ९ मनुसम्भूतां मनुष्यरूपां च । १० कमलोत्पत्तिस्थलरूपेति लक्ष्मीनिवासरूपेति च । ११ जलम् । १२ भास्कर- । १३ जन्म । १४ शफरिका क्षुद्रा मत्स्यी । १५ अहर्निशम् । १६ समीपप्रदेशाः । १७ क्ष्मा पृथिवी । १८ पद्मं,कम् ( सुखम् ) अलमिति च । १९ मुक्ताभिरामोदो येषामिति, मुक्त आमोदो यैस्त इति च ।

वितनु सदागतिमोदं मानस नित्यं समुन्नयेः कमलम्। अपयाताऽद्य रजस्ते भावी सुमनस्वितामहिमा ॥ २॥ नो वा कियन्तः परितः स्फुरन्ति जलाशया निर्मलभूरितोयाः। सद्भावदातं परमेकमेव हंसस्य विश्रामपदं वदन्ति ॥ ३ ॥

## कूपान्योक्तिनिदर्शनम्।

हे कूप त्वं चिरं जीव स्वल्पतोये बहुव्ययः। गुणवद्रिक्तपात्राणि प्राप्नुवन्ति हि पूर्णताम् ॥ १ ॥ रे कूप जीवनागार यदि दातृत्वमिच्छसि। तदा त्वं गुणवत्पात्रमेकं वा संनिधौ कुरु ॥ २ ॥ अमुना मरुकूपेन के के नाम न वञ्चिताः। रुदत्पथिकनेत्राम्बुपिच्छिलप्रान्तभूमिना ॥ ३ ॥ सगुणैः सेवितोपान्तो विनतैः प्राप्तदर्शनः। नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥ ४ ॥ न यदा गुणवत्पात्रमेकमप्यस्ति सन्निधौ। कस्तदा भवतः कूप जलमप्युपपद्यते ॥ ५ ॥ यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य। जयति तथाऽपि विवेको दानं पात्रानुमानेन ॥ ६ ॥ नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदाऽपि कृथाः। अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥७॥ चित्रं न तद्यदयमम्बुधिरम्बुदौघसिन्धुप्रवाहपरिपूरणया महीयान्। त्वं त्वर्थिनामुपकरोषि यदल्पकूप निष्पीड्य कुक्षिकुहरं हि महत्त्वमेतत् ॥ ८ ॥ दिनमेवसितं विश्रान्ताः स्म त्वया मरुकूप हे परमुपकृतं शेषं वक्तुं वयं न पुनः क्षमाः। भवति सुकृतैरध्वन्यानामशेषजलो भवानियमपि घनच्छाया भूयात्तवोपतटं शमी ॥ ९ ॥ भीमश्यामप्रतनुवदन क्रूरपातालकुक्षिक्रोडप्रान्तोपहितविभवस्याथ किं ते ब्रवीमि। येन त्वत्तः समभिलषितं वाञ्छतः क्षुद्र कूप क्राम्यन्मूर्तेर्भवति सहसा कस्य नाधोमुखत्वम् ॥ १० ॥

## मरुदेशान्योक्तिनिदर्शनम्।

मरौ नास्त्येव सलिलं कृच्छ्राद्यद्यपि लभ्यते। तत्कटु स्तोकमुष्णं च न करोति वितृष्णताम् ॥ १ ॥ जीवनाशां मरो त्वत्तः सफलीकर्तुमुद्यताः। मृगतृष्णिततां नीता न के हन्त त्वयाऽध्वगाः ॥ २ ॥ सत्पात्रैरपि सुलभं स्वल्पगुणैर्जीवनं न ते जातु। इति सुकृती त्वमनन्यो लोके प्रथितो मरो दिष्ट्या ॥ ३॥ सत्पादपान्विपुलपल्लवपुष्पपुञ्जसंपत्परीतवपुषः फलभारनम्रान्। यो मार्गसिञ्जितशकुन्तसमाश्रितोरुशाखान्मरौ मृगयते न ततोऽस्ति मुग्धः ॥ ४ ॥ पायं पायं पिब पिब पयः सिञ्च सिञ्चाङ्गमङ्गं भूयो भूयः कुरु कुरु सखे मज्जनोन्मज्जनानि। एषोऽशेषश्रमशमपटुर्दुःखिताध्वन्यबन्धुः सिन्धुर्दूरीभवतु भवतो मारवः पान्थ पन्थाः ॥ ५ ॥ कल्याणं नः किमधिकमितो जीवनार्थं यतस्त्वं छित्त्वा वृक्षानहह दहसि भ्रातरङ्गारकार। नन्वेतस्मिन्नशनिपिशुनैरातपैराकुलानामध्वन्यानामशरण मरुप्रान्त रे कोऽप्युपायः ॥ ६ ॥ किमसि विमनाः किं चोन्मादी क्षणादपि लक्ष्यसे पुनरपि सखे प्रेक्षापूर्वा न काञ्चन ते क्रियाः। स्वयमजलदां जानानोऽपि प्रविश्य मरुस्थलीं शिशिरमधुरं वारि प्राप्तुं यदध्वग

---

१ सतामागमने हर्षम्, पवनसौरभं च। २ पुष्पशालित्वम्, अत्युदारत्वं च। ३ जीवनं जलं प्राणनं च। ४ गुणो रज्जुः, सविद्यत्वादिश्च। ५ भाजनं, सज्जनश्च। ६ निम्नो निकृष्टश्च। ७ रसो जलं लोकोत्तराह्लादविशेषश्च। ८ व्यतीतम्। ९ शुष्कः, पूर्णश्च। १० अन्धकारपूर्णतया भीमं श्यामं प्रतनु अतिसङ्कुचितं च वदनं यस्य। ११ अल्पम्। १२ सशब्द-।

वाञ्छसि ॥ ७ ॥ भो भोः किं किमेकाण्ड एव पतितस्त्वं पान्थ काऽन्या गतिस्तत्ताद्दक्तृषितस्य मे खलमतिः सोऽयं जलं गूहते । अस्थानोपगतामकालसुलभां तृष्णां प्रति क्रुध्य हे त्रैलोक्यप्रथितप्रभाव-महिमा मार्गोऽस्त्यसौ मारवेः ॥ ८ ॥

## वाडवानलान्योक्तिनिदर्शनम् ।

तेजांसि यस्य प्रशमं प्रयान्ति वारां प्रवाहेण स वह्निरन्यः । अयं पुनर्वाडवनामधेयः समुद्रमापीय बिभर्ति तेजः ॥ १ ॥

## वनानलान्योक्तिनिदर्शनम् ।

हे दावानल शैलाग्रवासिनः साधुशाखिनः । मुग्ध व्यर्थं त्वया दग्धाः प्रेरितेन प्रभञ्जनैः ॥ १ ॥ यस्यां महत्त्वभाजो भवन्ति गुणिनोऽमिता धनुर्दण्डाः । दहतस्तां वंशालिं को वनवह्ने विवेकस्ते ॥ २ ॥ दवदहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तम् । यच्छमयति तद्युक्तं सोऽपि च दवमेव निर्दहति ॥ ३ ॥ अभ्युन्नतेऽपि जलदे जगदेकसारसाधारणप्रणयहारिणि हा यदेते । उल्लासलास्यललितं तरवो न यान्ति हे दावपावक स तावक एव दोषः ॥ ४ ॥ छायाफलानि मुकुलानि च यस्य विश्वमाह्लादयन्ति सह-कारमहीरुहस्य । आमृष्य तस्य शिखया नवपल्लवानि मश्नासि रे दवहुताश हताश कष्टम् ॥ ५ ॥ दुर्दैवप्रभवप्रभञ्जनभयादुद्भूतभूमीरुहानेतान्सत्त्वगुणाश्रयानकरुणः शुष्यन्किमुन्माद्यसि । ब्रूमस्त्वां वन-हव्यवाह यदमी दग्धार्धदग्धा अपि द्रष्टव्यास्तव तत्क्षणाद्विलयिनो नामापि न ज्ञायते ॥ ६ ॥ विध्वस्ता मृगपक्षिणो विधुरतां नीताः स्थलीदेवता धूमैरन्तरिताः स्वभावमलिनैराशामही तापिता । भस्मीकृत्य सपुष्पपल्लवफलैर्नम्रान्महापादपानुद्धूतेन दवानलेन विपिनं वल्मीकशेषं कृतम् ॥ ७ ॥ दिक्चक्रं तृण-भस्मना कवलितं मूलान्यपि क्ष्मारुहां निर्दग्धानि न चार्भकोऽपि हरिणीयूथस्य शेषीकृतः । आः कष्टं विपिनौकसोऽपि मुनयः प्लुष्टाः कृतान्तक्रियां कृत्वेत्थं वनवह्निना किमधुना शान्तेन दीप्तेन वा ॥ ८ ॥ रे वनानल यस्मात्त्वं समुद्भूतस्तदेव हा । वनं नयसि भस्मत्वमिति किं तव चेष्टितम् ॥ ९ ॥ भूभृतो दग्धुमुद्युक्तस्तानदग्ध्वा वनानल । स्वजन्मवंशसन्तानं दहसीति न साम्प्रतम् ॥ १० ॥ आत्मजन्मास्पदं वंशं कामं दह न वार्यसे । किंतु सन्निहितानेतानप्यग्ने किं दहस्यहो ॥ ११ ॥

## गरुडान्योक्तिनिदर्शनम् ।

दामोदरमुदराहितभुवनत्रितयं वहन्नसौ गरुडः । कस्य तरोरुपरिष्टात्खिन्नोऽसौ श्रान्तिमुपभवतु ॥१॥ अहिरहिरितिसंभ्रमपदमितरजनः किमपि कातरो भवतु । विहगपतेराहारे स तु सरलमृणालदल-रुचिरः ॥ २ ॥ विश्वम्भरं स्वपृष्ठे निवहन्गरुडः कृतार्थ एकाकी । भोगिकुटुम्बं सहसा निहंसि तूर्णं कृतान्तवद्यत्त्वम् ॥ ३ ॥ यद्यपि गरुडो भगवत्पादार्चनया समस्तनागारिः । कालिन्दीह्रदगानां भीरुर्वि-षधारिणां तदपि ॥ ४ ॥ अपि भोगिषु मणिधारिण एव निहंसि नतु यद्विषोऽपि परान् । तत्तव गरुड स्थाने दानवसंहारिवाहस्य ॥ ५ ॥

---

१ अस्थमये । २ मरुदेशसम्बन्धी । ३ उग्रैः पवनैः । ४ वेणुपङ्क्तिम् । ५ लास्यं नृत्यम् । ६ अतिसुरभिताम्र- । ७ विकलताम् । ८ प्रचण्डेन । ९ अवशिष्टमृत्पिण्डमात्रम् । १० तरूणाम् । ११ पर्वतान् । १२ युक्तम् । १३ उदर आहितं भुवनत्रितयं येन तम् । १४ श्रमं प्राप्तः । १५ पक्षि-राजस्य गरुडस्येति भावः ।

## मरालान्योक्तिनिदर्शनम् ।

कंसारिचरणोद्भूतसिन्धुकल्लोललालितम् । मन्ये हंस मनो नीरे कुल्यानां रमते न ते ॥ १ ॥ अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् । रमते न मरालस्य मानसं मानसं विना ॥ २ ॥ एकेन राजहंसेन या शोभा सरसो भवेत् । न सा बकसहस्रेण परितस्तीरवासिना ॥ ३ ॥ हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः । नीरक्षीरविभागे तु हंसो हंसो बको बकः ॥ ४ ॥ बककोयष्टिभिर्जुष्टे पल्वले मानसं कुतः । मोदते हि मरालस्य सन्मानसविहारिणः ॥ ५ ॥ अपसरणमेव शरणं मौनं वा तत्र राजहंसस्य । कटु रटति निकटवर्ती वाचाटष्टिट्टिभो यत्र ॥ ६ ॥ यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् । अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥ ७ ॥ नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् । विश्वस्मिन्नधुनाऽन्यः कुलव्रतं पालयिष्यति कः ॥८॥ यद्यपि बहवो दिशि दिशि मराल विलसन्ति पांथसां निधयः । तदपि मनस्ते मानस एव रतं मौक्तिकागारे ॥ ९ ॥ सैव सैव सरसी रमणीया यत्र यत्र वलते तव रागः । राजहंस रसिक स्मरणीया श्रीमता तदपि मानसकेलिः ॥ १० ॥ गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः । राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ ११ ॥ कंचिदेव समयं समागतं त्वां न विस्मरति शश्वदम्बुजम् । मानसे विहर हंस मानसे मा विमुञ्च पुनरस्य सौहृदम् ॥ १२ ॥ यत्रापि कुत्रापि भवन्ति हंसा हंसा महीमण्डलमण्डनानि । हानिस्तु तेषां हि सरोवराणां येषां मरालैः सह विप्रयोगः ॥ १३ ॥ अम्भोजिनीवननिवासविलासमेव हंसस्य हन्ति नितरां कुपितो विधाता । न त्वस्य दुग्धजलभेदविधिप्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १४ ॥ भृङ्गाङ्गनाजनमनोहरहारिगीतराजीवरेणुकणकीर्णपिशङ्गतोयाम् । रम्यां हिमाचलनदीं प्रविहाय हंस हे हे हताश वद कां दिशमुत्सुकोऽसि ॥१५॥ स्थित्वा क्षणं विततपक्षतिनाऽन्तरिक्षे मातङ्गसङ्गकलुषां नलिनीं विलोक्य । उत्पन्नमन्युपरिघर्घरनिःस्वनेन हंसेन साश्रु परिवृत्य गतं नलिन्याः ॥ १६ ॥ रे राजहंस किमिति त्वमिहागतोऽसि योऽसौ बकः स इह हंस इति प्रतीतः । तद्गम्यतामनुपदेन पुनः स्वभूसौ यावद्वदन्ति न बकं खलु मूढलोकाः ॥ १७ ॥ ये वर्धिताः कनकपङ्कजरेणुमध्ये मन्दाकिनीविमलनीरतरङ्गभङ्गैः । ते सांप्रतं विधिवशात्खलु राजहंसाः शैवालजालजटिलं जलमाश्रयन्ति ॥ १८ ॥ हा हन्त मानससरःसलिलावतंस रे राजहंस पयसोः प्रविवेचनाय । चेच्छक्तिमान्खलु भवान्न तदा किमु स्यात्किया कपोत उत वा कलविङ्कपोतः ॥ १९ ॥ नेदं सरः सरसवारि न वारिजं वा नैतन्मधूनि मधुपाः सहवासिनो वा । हेमारविन्दवनवासविलासभाजो भो हंस मानसजुषस्तव मानसेऽपि ॥ २० ॥ हंसः प्रयाति शनकैर्यदि यातु तस्य नैसर्गिकी गतिरियं नहि तत्र चित्रम् । गत्या तया जिगमिषुर्बक एष मूढश्वेतो दुनोति सकलस्य जनस्य नूनम् ॥ २१ ॥ भुक्ता मृणालपटली भवता निपीतान्यम्बूनि यत्र नलिनानि निषेवितानि । भो राजहंस वद तस्य सरोवरस्य

---

१ कृष्णचन्द्र-। २ गङ्गा-। ३ कृत्रिमनदीनाम्। ४ हंसस्य। ५ तटाकविशेषम्। ६ जलकुक्कुभः कोयष्टिः। ७ क्षुद्रे जलाशये। ८ वाचालो जलकुक्कुटः। ९ ताम्रचूडः। १० जलानाम्। ११ वर्धते। १२ क्षीयते। १३ चातुर्य-। १४ पक्षतिः पक्षः। १५ हस्ति-,चण्डाल-। १६ जलक्षीरयोः। १७ चटकः। १८ स्वाभाविकी। १९ पीडयति।

कृत्येन केन भवितासि कृतोपकारः ॥ २२ ॥ तरौ तीरोद्भूते क्वचिदपि दलाच्छादिततनुः पतद्धारा-
सारां गमय विषमां प्रावृषमिमाम् ॥ निवृत्तायां तस्यां सरसि सरसोत्फुल्लनलिने स एव त्वं हंसः
पुनरपि विलासास्त इह ते ॥ २३ ॥ गतं तद्गाम्भीर्यं तटमपि चितं जालिकशतैः सखे हंसो-
त्तिष्ठ त्वरितममुतो गच्छ सरसः । न यावत्पङ्कान्तःकलुषिततनुर्भूरिविलसद्बकोऽसौ वाचालश्चरण-
युगलं मूर्ध्नि कुरुते ॥ २४ ॥ पुरा सरसि मानसे विकचसारसालिस्खलत्परागसुरभीकृते पयसि
यस्य यातं वयः । स पल्वलजलेऽधुना मिलदनेकभेकाकुले मरालकुलनायकः कथय रे कथं वर्तताम्
॥ २५ ॥ वातान्दोलितपङ्कजस्थितरजःपुञ्जाङ्गरागोज्ज्वलो यः शृण्वन्कलकूजितं मधुलिहां सं-
जातहर्षः पुरा । कान्ताचञ्चुपुटापवर्जितबिसग्रासग्रहेऽप्यक्षमः सोऽयं संप्रति हंसको मरुगतः कौपं
पयो याचते ॥ २६ यो दिव्याम्बुजलोलमत्तमधुपप्रोद्गीतरम्यं सरस्त्यक्त्वा मानसमल्पवारिणि रतिं
बध्नाति कैदारिके । तस्यालीकसुखाशया परिभवक्रोडीकृतस्याधुना हंसस्योपरि टिट्टिभो यदि पदं
धत्तेऽत्र को विस्मयः ॥ २७ ॥ अन्या सा सरसी मराल मुनिभिर्यत्तीरसोपानिकाविन्यस्तांस्तिल-
तण्डुलान्कवलयन्दृष्टोऽसि हृष्टैर्मुखैः । एषा पक्कणवापिका कमलिनीखण्डेन गुप्तात्मभिर्व्याधैस्त्वद्विध-
मुग्धबन्धनविधौ कं नाम नो सूत्र्यते ॥ २८ ॥ कस्त्वं लोहितलोचनास्यचरणो हंसः कुतो
मानसात्किं तत्रास्ति सुवर्णपङ्कजवनान्यम्भः सुधासंनिभम् । रत्नानां निचयाः प्रवालमणयो वैदूर्यरोहाः
क्वचिच्छम्बूका अपि सन्ति नेति च बकैराकर्ण्य हीहीकृतम् ॥ २९ ॥ यः संतापमपाकरोति
जगतां यश्चोपकारक्षमः सर्वेषाममृतात्मकेन वपुषा प्रीणाति नेत्राणि यः । तस्याप्युन्नति
मम्बुदस्य सहसे यन्न त्वमेतावता वर्णेनैव परं मराल धवलः कृष्णश्चरित्रैरसि ॥ ३० ॥
आकारः कमनीयताकुलगृहं लीलालसा सा गतिः संपर्कः कमलालयैः कलतया लोकोत्तरं
कूजितम् । यस्येयं गुणसंपदस्ति महती तस्यातिभव्यस्य ते संरब्धत्वमसद्गुमद्गुकलहे नाहं सहे
हंस हे ॥ ३१ नद्यो नीचगता दुरापपयसः कूपाः पयोराशयः क्षारा दुष्टबकोटसंकटतटोद्देशास्तडागा-
दयः । इत्थं भूतल आकलय्य सकलानम्भोनिवेशानिति त्वां भो मानस संस्मरन्पुनरसौ हंसः सम-
भ्यागतः ॥ ३२ ॥ हंसी वेत्ति परागपिञ्जरतनुः कुत्रापि पद्माकरे प्रेयान्मे बिसकन्दलीकिसलयं भुङ्क्ते
ह्ययं निर्वृतः । नो जानाति तपस्विनी यदनिशं जम्बालमालोडयञ्शैवालाङ्कुरमप्यसौ न लभते हंसो
विशीर्णच्छदः ॥ ३३ ॥ प्रम्लाना नलिनी जलानि किरणैः सूर्यस्य शोषं ययुर्नाशं प्राप विहङ्गमावलि-
रियं तृष्णाविशीर्णेक्षणा । एते तीरमहीरुहा अपि पतत्पत्रश्रियोऽद्यापि रे कोऽयं राजमराल शुष्कसरसी-
तीरे रतिप्रक्रमः ॥ ३४ ॥ एषा पुष्करिणी मराल मलिनैश्छन्ना कुवीथीजलैर्यस्यामङ्गतया विधेरकृपया
चेद्वस्तुमाकाङ्क्षसे । विश्रम्भो बकमण्डलेषु विनयो भेकेषु संबन्धिता रात्र्यन्धेषु विधीयतां कृपणता
कोयष्टिकश्रेणिषु ॥ ३५ ॥ पीतं येन पुरा पुरन्दरपुरे रम्भोरुकेलिस्खलन्मन्दाराङ्कुरकर्णपूरसुरभि स्वर्गाप-
गायाः पयः । सोऽयं मौरववारि पामरवधूपादार्पणप्रोच्छलत्पङ्कातङ्कितमेकभिन्नमघृणो हंसः समाशंसते
॥ ३६ ॥ काके कार्ष्ण्यमलौकिकं[11] धवलिमा हंसे निसर्गस्थितो गाम्भीर्ये महदन्तरं वचसि यो भेदः स

---

१ वर्षर्तुम् । २ क्षुद्रजलाशय- । ३ धान्यादिक्षेत्रगतजलप्रवाहिकासम्बन्धिनि । ४ पक्कणस्य भिल्लावासस्य वापिका । ५ शम्बूकाः शुक्तयः । ६ मराला हि वर्षासु मानससरोवरं प्रपद्यन्ते इति कवीनां समयः । ७ कटुवाक्पक्षिविशेष- । ८ शैवालम् । ९ शतधनुः परिमितायामविस्तारा सरसी । १० मरुदेशसम्बन्धि- । ११ अतिशयितमितिभावः ।

किं कथ्यते । एतावत्सु विशेषणेष्वपि सखे यत्रेदमालोक्यते के काकाः खलु के च हंसशिशवो देशाय तस्मै नमः ॥ ३७ ॥ क्रुद्धोद्धकनखप्रपातविगलत्पक्षा अपि स्वाश्रयं ये नोज्झन्ति पुरीषपुष्टवपुषस्ते केचिदन्ये द्विजाः । ये तु स्वर्गतरङ्गिणीबिसलतालेशेन संवर्धिता गाङ्गं नीरमपि त्यजन्ति कलुषं ते राजहंसा वयम् ॥ ३८ ॥ भो हंसास्तावदम्भोरुहकुहररजोरञ्जिताङ्गाः सहेलं हंसीभिः पद्मखण्डे मधुरमधुकरारावरम्ये रमध्वम् । यावन्नायं दुरन्तो हरगलगरलव्यालजालालिनीलप्रोन्मीलन्मेघमालामलिनसकलदिङ्मण्डलोऽभ्येति कालः ॥ ३९ ॥

## भ्रमरान्योक्तिनिदर्शनम् ।

स[2]रजस्कां पाण्डुवर्णां कण्टकप्र[3]कराङ्किताम् । केतकीं सेवसे हन्त कथं रोल[4]म्ब निस्त्र[5]प ॥ १ ॥ फलानां च दलानां च सन्तु ते ते विवेकिनः । मकरन्दविशेषज्ञो मिलिन्द[6]मपहाय कः ॥ २ ॥ क्वचित्क्वचिदयं यातु स्थातु प्रेमवशंवदः । न विस्मरति तत्रापि राजीवं भ्रमरो हृदि ॥ ३ ॥ भ्रम भ्रमर यूथीषु मालतीषु चिरं मिल । मा पुनः पङ्कजारण्यस्नेहशून्यं मनः कृथाः ॥ ४ ॥ मधुपे मालतीपुष्पं सतृष्णं यातुमुद्यते । हन्त दैवादुपागम्योपात्तमारण्यकेन तत् ॥ ५ ॥ मधुकर तव करनिकरैः किं किं क्रान्तं वनं न कुसुमानाम् । तद्वद सरसिजकमले लब्धं किञ्चिद्यदन्यतस्तत्किम् ॥ ६ ॥ गौरीं[7] चम्पककलिकाममहाय भ्रान्त दुर्बुद्धे । शाल्मलिकुसुमदलेषु स्वैरं गुञ्जन्न लज्जसे मधुप ॥ ७ ॥ मर्दनमवलोक्य निष्फलमनित्यतां बन्धुजीवकुसुमानाम् । वनमुपगम्य भ्रमरः सम्प्रति जातो जपा[9]सक्तः ॥ ८ ॥ अपसर मधुकर दूरं परिमलबहुलेऽपि केतकीकुसुमे । इह नहि मधुलवलाभो भवति परं धूलिधूसरं वदनम् ॥ ९ ॥ कृत्वाऽपि कोशं[10]पानं भ्रमरयुवा पुरत एव कमलिन्याः । अभिलषति बकुलकलिकां मधुलिहि मलिने कुतः सत्यम् ॥ १० ॥ येनामन्दमर[11]न्दे दलद[12]रविन्दे दिनान्यनायिषत । कुटजे खलु तेनेहा[13] तेने[14] हा मधुकरेण कथम् ॥ ११ ॥ दिशिदिशि मधुकर सुमुदितसु[15]मनः कोशाञ्श्रियो[16] भ्रतानभितः । लब्ध्वाऽपि धावसीतस्तत इति किं लुब्धवान्वितथम् ॥ १२ ॥ मधुकर लघुरपि तृष्णागुरुरसि सुमनःश्रियं लब्ध्वा । आशाज्वालामलिनीकृतोऽभितो भ्राम्यसीत्यहह[17] ॥ १३ ॥ सुमनःश्रियमधिगतवानपि चेन्मधुकर न तृप्तिमायातः । गत्वा पला[18]शशरणं सुकृती भवितासि तत्सत्यम ॥ १४ ॥ वास[19]न्ती शत[20]पत्रं सहस्र[21]पत्रं च पारि[22]जातश्च । मधुप यदि न तव तृष्णां शमयितुमीशास्ततोऽसि कृती ॥ १५ ॥ लघुरसि मलिनोऽसि तथाऽप्यहो सुधन्योऽसि भो मधुप । सुमनःश्रियस्तदर्थं हन्त पुरस्तात्समुत्सुका भान्ति ॥ १६॥ अमरतरुकुसुमसौरभसेवनसंपूर्णकामस्य । पुष्पान्तरसेवेयं भ्रमरस्य विडम्बना महती ॥ १७ ॥ इह रूपमात्रसारे चित्रगते कनककह्लारे । न रसो नापि च गन्धो मधुकर बन्धो मुधा भ्रमसि ॥ १८ ॥ अपनीतपरिमलान्तरकथे पदं न्यस्य देवतरुकुसुमे । पुष्पान्तरेऽपि गन्तुं वाञ्छसि चेद्भ्रमर धन्योऽसि ॥ १९ ॥ मलिनेऽपि रागपूर्णां

---

१ गङ्गा- । २ परागयुक्तां, रजस्वलां च । ३ प्रकरः समुदायः । ४ भ्रमर । ५ निर्लज्ज । ६ भ्रमरम् । ७ सुवर्णाकाराम् । ८ बाणपुष्पम् । ९ जपायां जपाकुसुमे सक्त इति जपे आसक्त इति च । १० कुड्मल- । ११ अतिशयितमकरन्दशालिनि । १२ विकसत- । १३ ईहा मनोरथः । १४ विस्तारिता । १५ पुष्प- । १६ शोभया लक्ष्म्या च । १७ कष्टम् । १८ किंशुकमांसभक्षक- । १९ माधवी । २० कमलविशेषः । २१ कमलविशेषः । २२ कल्पतरुः ।

त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥ २० ॥ विकसितवदनामनल्पजल्पेऽपि । नन्दनजन्मा मधुपः सुरतरुकुसुमेषु पीतमकरन्दः । दैवादवनिमुपेतः कुटजे कुटजे समीहते वृत्तिम् ॥ २१ ॥ दूरतया स्थूलतया नीलतया दानलोलुपैर्मधुपैः । आमितमिभराजधिया हन्ताभूदन्ततो महिषः ॥ २२ ॥ नष्टे वारिजविपिने कष्टे नष्टेऽथ मालतीनिकरे । तत्किं जीवति लोके मूलकमकरन्दबिन्दुना यदलिः ॥ २३ ॥ पवनापनीतसौरभकूरोदकपूरपद्मिनीलुब्धः । अपरिक्षतस्वपक्षो गन्ता हन्तापदं मधुपः ॥ २४ ॥ कति कति ललिताः कलिताः संचरता चञ्चरीकरसिकेन । नलिनि भवन्मधु मधुरं यत्पीतं तत्तदेव परिपीतम् ॥ २५ ॥ मधुकर मा कुरु शोकं विचर करीरद्रुमस्य कुसुमेषु । घनतुहिनपातदलिता कथं नु सा मालती मिलति ॥ २६ ॥ यस्तोषं न गतः कमलेषु मल्लीचम्पकबकुलकुलेषु । तस्यालेर्यदि निम्बे वासः कथय कथं न भवत्युपहासः ॥ २७ ॥ आलिङ्गसे चारुलतां लवङ्गीमाचुम्बसे चाम्बुजिनीं क्रमेण । तां चूतवल्लीं मधुप प्रकामं सन्ताडयस्येव पदैः किमेतत् ॥ २८ ॥ वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि । भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥२९॥ किं न पश्यसि महेन्द्रदिङ्मुखे शीतदीधितिरसावुदञ्चति । मीलितैव नलिनीह मा कृथास्तन्मधुव्रत मुधा गतागतम् ॥ ३० ॥ चञ्चरीक चतुरोऽसि चन्द्रिकावैभवे कुमुदिनीं निषेवसे । भास्करे जयिनि पुष्करे नवे प्रोन्मिषन्नवदलेऽनुरज्यसि ॥ ३१ ॥ नीरजादपि निषेव्य निर्भरं नीरसानि कुटजानि वाञ्छसि । चञ्चलत्वमिह चञ्चरीक ते साहसं कथमिदं विमोक्ष्यसि ॥ ३२ ॥ पीतमत्र मधु यापिताः क्षपा भृङ्ग सर्वमचिरेण विस्मृतम् । हीयमानसुषमां हिमागमे पद्मिनीं यदिह नावलोकसे ॥३३॥ कुन्दकुड्मलमुपास्यता त्वया यत्र शीतसमयोऽतिवाहितः । चञ्चरीक परिहीन सौरभा रोचते न भवते सरोजिनी ॥ ३४ ॥ भ्रमर भ्रमता दिगन्तराणि क्वचिदासादितमीक्षितं श्रुतं वा । वद सत्यमपास्य पक्षपातं यदि जातीकुसुमानुकारि पुष्पम् ॥ ३५ ॥ अभिनवनलिनीविनोदलुब्धो मुकुलितकैरविणीवियोगभीरुः । भ्रमति मधुकरोऽयमन्तराले श्रयति न पङ्कजिनीं कुमुद्वतीं वा ॥ ३६ ॥ अलिरयं नलिनीदलमध्यगः कमलिनीमकरन्दमदालसः । विधिवशात्परदेशमुपागतः कुटजपुष्परसं बहु मन्यते ॥ ३७ ॥ अपि दलन्मुकुले बकुले यया पदमधायि कदाऽपि न हेलया । अहह सा सहसा विधुरे विधौ मधुकरी बदरीमनुसेवते ॥ ३८ ॥ यदपि भेकगणेन निषेवितं प्रकटकण्टककोटिसमन्वितम् । तदपि पङ्कजमेति मधुव्रतः सुरससौरभसुन्दरताऽऽश्रयम् ॥ ३९ ॥ आनम्राः स्तबकभरेण पल्लविन्यः शोभन्ते कति न लताः परागपूर्णाः । आमोदे मधुनि च मार्दवे च तासां यो भेदः स खलु मधुव्रतैकवेद्यः ॥ ४० ॥ निःशङ्कं गजपतिगण्डदानधारामाराध्य भ्रमर दिनान्यमून्यनैषीः । यावन्न स्फुरति करालकर्णतालस्तावत्त्वं नय नलिनीवनीमुपेत्य ॥ ४१ ॥ रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । इत्थं विचिन्तयति कोशगते द्विरेफे हा मूलतः कमलिनीं गज उज्जहार ॥ ४२ ॥ अन्यासु तावदुपमर्दसहासु भृङ्ग लोलं विनोदय मनः सुमनोलतासु । मुग्धामजातरजसं कलिकामकाले बालां कदर्थयसि किं नवमालिकायाः ॥ ४३ ॥ फुल्लेषु यः कमलिनीकमलोदरेषु

---

१ नन्दनं इन्द्रोपवनम् । २ कमलवने । ३ चूत आम्रः । ४ सावज्ञम् । ५ हे भ्रमर । ६ सुषमा परमा शोभा । ७ अभ्यन्तरे । ८ कोमलनूतनपत्रशालिन्यः । ९ मद- । १० कठोरासु प्रगल्भासु च । ११ तृष्णातरलम् । १२ अनुदितपरागाम्, अनुत्पन्नरजोविकारां च ।

चूतेषु यो विलसितः कलिकाऽन्तरस्थः। पश्चाच्च तस्य मधुपस्य शरद्व्यपाये कृच्छ्रेण वेणुविवरे दिवसाः प्रयान्ति ॥ ४४ ॥ ये वर्धिताः करिकपोलमदेन भृङ्गाः प्रोत्फुल्लपङ्कजरजःसुरभीकृताङ्गाः ते सांप्रतं प्रतिदिनं क्षपयन्ति कालं निम्बेषु चार्ककुसुमेषु च दैवयोगात् ॥ ४५ ॥ ऐणीदृशः श्रवणसीम्नि यदानयन्ति तेनैव तस्य महिमा नवचम्पकस्य। त्वं तत्र नो विहरसे यदि भृङ्ग तेन नैतस्य किंचिदपि तत्तु तवैव हानिः ॥ ४६ ॥ सानन्दमेष मकरन्दमिहारविन्दे विन्देत षट्पदयुवेति जनैरटङ्कि। दैवादकाण्डपरिमुद्रितपुण्डरीककोशादभूदहह निःसरणं पुमर्थः ॥ ४७ ॥ आजन्मकल्पतरुकाननकामचारी यत्कौतुकादुपगतः कुटजं मिलिन्दः। तत्कर्मणः सुसदृशं फलमेतदेव यत्प्राप साम्यमधुना मधुमक्षिकाभिः ॥ ४८ ॥ मा गा विषादमलिपोतक केतकीनामन्तर्निगूढमनवाप्य मधुप्रकर्षम्। लाभः स एव परमो ननु कण्टकानां श्रेणीभिरक्षतशरीरतया प्रयासि ॥ ४९ ॥ नालिङ्गिता नवलवङ्गलता न वाऽपि संभाविता विटपिनः कलगुञ्जितेन। आसादिता सपदि काचन रीतिरन्या माकन्दकोरकमुदीक्ष्य मधुव्रतेन ॥ ५० ॥ मन्दारमेदुरमरन्दरसालसाङ्गः स्वर्णागरीनयननन्दन एष भृङ्गः। दैवादुपेत्य जगतीमगतिर्विषीदञ्छाखोटकोटरकुटीषु निलीय शेते ॥ ५१ ॥ किं केतकीपरिमलोत्थितगन्धलुब्धो गुञ्जन्भ्रमन्भ्रमर वाञ्छसि रन्तुमेताम्। तत्कण्टकैः परिवृतामतुलामगम्यां संत्यज्यतां व्रज निकुञ्जलतां सपुष्पाम् ॥ ५२ ॥ इह सरसि सहर्षं मञ्जु गुञ्जाभिरामं मधुकर कुरु केलिं सार्धमम्भोजिनीभिः। अनुपममकरन्दामोददत्तप्रमोदा त्यजति बत न निद्रां मालती यावदेषा ॥ ५३ ॥ भ्रमर मरणभीतिं मुञ्च चाम्पेयपुष्पे विहर हर तदीयं सौरभं सौहृदेन। मधुकर सुकरं चेद्वस्तु हस्तेन लब्धुं भवतु तदुपभोगेऽनिष्टमिष्टं फलं वा ॥ ५४ ॥ गन्धैराढ्या जगति विदिता केतकी स्वर्णवर्णा पद्मभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात। अन्धीभूतस्तदनु रजसा कण्टकैश्छिन्नपक्षः स्थातुं गन्तुं क्षणमपि सखे नैव शक्तो द्विरेफः ॥ ५५ ॥ दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं चित्रं चित्रं किमिति किमिति व्याहरन्निष्पपात। नास्मिन्गन्धो न च मधुकणा नास्ति तत्सौकुमार्यं घूर्णन्मूर्ध्ना बत नतशिरा व्रीडया निर्जगाम ॥ ५६ ॥ सदम्भोजाम्भोजं परिवर्जति संभोगरहितो गतोऽमन्दे कुन्दे वहति मकरन्दं नहि मनः। ततो मन्येऽरण्ये क्वचिदधिकपुण्येऽपि ललितां लवङ्गीमासङ्गी भजति नवभङ्गीपरिवृढः ॥ ५७ ॥ निरानन्दः कौन्दे मधुनि विधुरो बालबकुले न साले सालम्बो लवमपि लवङ्गे न रमते। प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि रमते स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ ५८ ॥ श्रियोवासाम्भोजे त्रिदिवसरिदम्भोजकुहरे हरेर्नाभीपद्मे मधु मधुकरो यः किल पपौ। स दैवादुन्मीलत्तपनकरतापव्यतिकरव्यथाकम्पः संप्रत्यतरुमरुभूमौ विचरति ॥ ५९ ॥ लतास्तास्तास्तादृङ्मधुरसवतीः पङ्कजवनीः समालिङ्गंश्चुम्बन्नयमगमयद्भूरिसमयम्। इदानीं चेन्नीचे विचरति रुचेरेष लकुचे कुचेष्टेयं धातुर्भवति नहि वाच्यो मधुकरः ॥ ६० ॥ मधूके माध्वीकं पिबसि शतपत्रेऽभिरमसे मधूलीभिश्रान्तर्मधुप सहकारेऽपि रमसे। वसन्ते वासन्तीमधु मधुरमश्नासि बहुशो दुरावेशोऽयं ते तदपि कुटजे यद्विचरसि ॥ ६१ ॥ भ्रमन्स्वैरं भ्रातर्भ्रमर नवयूथेषु बहुशो मधूलीमन्विष्यन्कुमुदवनवीथीषु विचर। वसन्तप्रारम्भस्फुरितमधुसंभारसुभगो न ते विस्मर्तव्यः क्वचन सहकारव्यतिकरः ॥ ६२ ॥ अये मधुप मा कृथा बत वृथा मनोदीनतां तुषारसमये लताशतनिषेवणव्याकुलः। इयं पुरत एव ते सरसपुष्पमासोदये रसालनवमञ्जरी

---

१ मृगाक्ष्याः। २ अतिशयस्निग्ध-। ३ मधुरम्। ४ पीतवर्णा। ५ चिन्वित—। ६ आसक्तो भवति। ७ विकलः।

मधुझरी जरीजृम्भते ॥ ६३ ॥ नो मल्लीमयमीहते न भजते मत्तेभकुम्भस्थलीं वासन्तीं सहते न चन्दनवनीमालम्बते न क्वचित् । जातीमेव हृदीश्वरीमिव महानन्दैककन्दाङ्कुरां ध्यायन्निर्वृतिमेति षट्पदयुवा योगीव वीतश्रमः ॥ ६४ ॥ किं कापि प्रलयानलैर्विटपिनो निर्दह्य भस्मीकृताः किंस्विद्देवगजेन पङ्कजवनं निष्कन्दमुन्मूलितम् । किंवा हन्त कृ[2]तान्तकेसरिभयात्त्यक्तो मदः कुञ्जरैर्येनास्मिन्विरसे करीरकुसुमे हा भृङ्ग विश्राम्यसि ॥ ६५ ॥ यस्याः सङ्गमवाञ्छया न गणिता वाप्यो विनिद्रोत्पला यामालिङ्ग्य समुत्सुकेन मनसा यातः परां निर्वृतिम् । भग्नां तामवलोक्य चन्दनलतां भृङ्गेण यज्जीव्यते धैर्यं नाम तदस्तु तस्य न पुनः स्नेहानुरूपं कृतम् ॥ ६६ ॥ दग्धा सा बकुलावली [3]प्लुष्टास्तेऽपि विनिद्रपुष्पपटलीपीतातपाः पादपाः । भ्रातर्भृङ्ग दवाकवलितास्ते ते रसालद्रुमाः ग्निना वनमिदं वल्मीकशेषं कृतं किं त्वं संप्रति काननान्तरपरि[4]स्पन्दाय मन्दायसे ॥ ६७ ॥ नो जिघ्रत्यपि पाटलापरिमलं धत्ते न चूते दूरादुज्झति चम्पकं न च भजत्यम्भोजराजीरजो रतिम् । मन्दारे यदनादरो वि[5]चकिलोपान्ते न संतृप्यते तन्मन्ये क्वचिदङ्ग भृङ्गतरुणेनास्वादिता मालती ॥ ६८ ॥ येनामोदिनि केसरस्थ[6] मुकुले पीतं मधु स्वेच्छया नीता येन निशा शशाङ्कधवल पद्मोदरे शारदी । भ्रान्तं येन मदप्रवाहमलिने गण्डस्थले दन्तिनां सोऽयं भृङ्गयुवा करीरविटपे बध्नाति तुष्टिं कुतः ॥ ६९ ॥ भ्रातर्भ्राम्य लवङ्गवल्लिषु पिब स्वैरं नवाम्भोरुहं मा[7]ध्वीमाधविकामधूनि मधुराण्याकण्ठमास्वादय । कस्मादापतितोऽसि केतकमिदं यस्मिन्नुदीर्णं रजो दृष्टिं लुम्पति सूचयः प्रविचिताः कृ[8]न्तन्ति मर्माण्यपि ॥ ७० ॥ आस्वाद्यात्र मधूनि षट्पद मदं मा गाः कषायाङ्कुरैर्माकन्दस्य[9] पिकान्प्रतारितवतो मूर्धानमध्यासितः । प्रत्यासन्नतमे पिकेऽपि भवते येनार्पिता तादृशी माध्वी तस्य विवेकविच्युतिरियं साद्गुण्यमेतन्न ते ॥ ७१ ॥ नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया मालत्याः कुसुमेषु येन सततं केली कृता हेलया । तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः ॥ ७२ ॥ प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरीपुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् ॥ तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामश्नुति त्वं चेन्मुञ्चसि चञ्चरीक विनयं नीचस्त्वदन्योऽस्ति कः ७३॥ सोपूऽर्वो र[11]सनाविपर्ययविधिस्तत्कर्णयोश्चापलं दृष्टिः सा मदे[12]विस्मृतस्व[13]परदिक्किं भूयसोक्तेन वा।सर्वं विस्मृतवानसि भ्रमर हे य[14]द्वारणोऽद्याप्यसाव[15]न्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥ ७४ ॥ केतक्यः कटुकण्टकाः कुमुदिनी दोषोदयान्मोदते जायन्ते विकलाः कलावति पुनः पङ्केरुहां पङ्क्तयः । अन्यानि प्रसवानि षट्पदपदन्यासैरवाञ्छि क्वचिद्भृङ्गो भ्राम्यति कल्पवृक्ष विपदामन्तर्भवन्तं विना॥७५॥यद्यप्याम्रतरोरमुष्य वनिताकर्णावतंसोचितामाजिघ्रन्नवमञ्जरीं मधुप हे जातोऽसि पूर्णोत्सवः। विस्मर्तुं भवतस्तथाऽप्यनुचितं तद्वन्द्यमि[16]न्दीवरं यस्यास्वाद्य मधूनि चानतशिरो म[17]ञ्जु त्वयोद्गुञ्जितम् ॥ ७६ ॥ मा[18]कन्दे मधुपानमम्बु बकुले क्रीडा कदम्बद्रुमे दोलाखेलनकौतुकं कुवलये कः को न वा विभ्रमः । येनाकारि मधुव्रतेन सहसा सोऽयं मधूके म[19]धौ माध्वीकं परिपीय पीवरतनुर्जीवत्यहो

---

१ माधवीम् । २ कृतान्तो यमः सोऽसौ केसरी सिंहस्तस्य भयात् । ३ दग्धाः । ४ परिस्पन्दः सञ्चारः । ५ विचकिलः कुसुमविशेषः । ६ बकुलकुसुमस्य । ७ मधुरसाया वासन्त्या रसान् । ८ छिन्दन्ति । ९ आम्रस्य । १० वसन्तस्य । ११ जिह्वापरिवर्तनम्, असम्बद्धदुर्वचनं च । १२पक्षान्तरे दर्पोऽपि मदपदवाच्यः । १३ प्रियाप्रियेति, योग्यायोग्येति च । १४ हस्ती अवज्ञाता च । १५ सच्छिद्रशुण्डः, रिक्तहस्तश्च । १६ नीलाम्बुजम् । १७ मधुरम् । १८ आम्रे । १९ वसन्ते ।

जीवनम्॥ ७७॥पीतं पङ्कजकानने मधु मया नीपेऽपनीतं वयो बन्धूके वरबन्धुता विरचिता रक्तं रसालद्रुमे। किं चाकारि कुमुद्वतीपरिकरे क्रीडाकलाकौशलं कस्तद्वेत्तु विधीयतेऽद्य बदरीवृन्दस्य यन्द्वन्दनम् ॥ ७८ ॥

## कोकिलान्योक्तिनिदर्शनम् ।

समुद्गिरसि किं वाचः पुंस्कोकिल सुकोमलाः । श्वभ्रेऽस्मिञ्जडपाषाणगुरुनिर्घोषभैरवे ॥ १ ॥ तवैतद्वाचि माधुर्यं जाने कोकिल कृत्रिमम् । प्रपोषितो यैस्तानेव जातपक्षो जहासि यत् ॥ २ ॥रसालशेखराऽऽसीनाः शतं सन्तु पतत्रिणः । तन्मञ्जरीरसामोदं विदुरेते कुहूमुखाः ॥ ३ ॥ भद्रं भद्रं कृतं मौनं कोकिलैर्जलदागमे । वक्तारो दुर्दुरा यत्र तत्र मौनं हि शोभते ॥४॥ शृगालशशशार्दूलदूषितं दण्डकावनम् । पञ्चमं गायताऽनेन कोकिलेन प्रतिष्ठितम् ॥ ५ ॥ काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥ ६ ॥ तावन्मौनेन नीयन्ते कोकिलैश्चैव वासराः । यावत्सर्वजनानन्ददायिनी वाक्प्रवर्तते ॥७॥ कोकिलोऽहं भवान्काकः समानः कालिमाऽऽवयोः । अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥८॥ सहकारे चिरं स्थित्वा सलीलं बालकोकिल । तं हित्वाऽद्यान्यवृक्षेषु विचरन्न विलज्जसे ॥ ९ ॥ कलकण्ठ यथा शोभा सहकारे भवद्गिरः । खदिरे वा पलाशे वा किं तथा स्याद्विचारय ॥ १० ॥ कोकिल कलमालापैरलमलमालोकसे रसालं किम् । शरनिकरभरितशरधिः शबरः सरतीह परिसरे सधनुः ॥ ११ ॥ तत्किं स्मरसि न भुक्तं यत्पिक रे काकमन्दिरे पूर्वम् । सहकारकुसुमकाले हठेन कुरुषेऽधुना रावम् ॥ १२ ॥ तावत्कोकिल विरसान्यापय दिवसान्वनान्तरे निवसन् । यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ १३ ॥ एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः साजात्यशङ्कयाऽमी न त्वां निघ्नन्ति निर्दयाः काकाः ॥ १४ ॥ अथ कोकिल कुरु मौनं जलधरसमयेऽपि पिच्छिला भूमिः । विकसति कुटजकदम्बे वक्तरि मेके कुतस्तवावसरः ॥ १५ ॥ मलिनात्मना विरागः प्रकटीकृत एव कोकिलखलेन । जीवनदानामुन्नतिसमये वाचंयमीभवता ॥ १६ ॥ योगं विशेषयन् त्रातो जाते स्वपक्षपुष्टत्वे । रे कोकिल तं सहसा विहाय मुदितोऽसि न त्रपितः ॥ १७ ॥ रे रे कोकिलशावक यावत्पक्षप्रपोषणं न स्यात् । तावत् कथमपि मूको निवस च न निदर्शयात्मानम् ॥१८ ॥ वञ्चनकृत्त्वं कोकिल निसर्गसिद्धं मलीमसस्य तव । परिपोष्य येन गमितो दशामिमां तं त्यजन्मुदितः ॥ १९ ॥ मलिनैर्घातावसरे तदीयतैवोचिता प्रकाशयितुम् । कथमन्यथाऽभविष्यत्करटसमाजे पिकाभ्युदयः ॥ २० ॥ कोकिल कुटिलैः साकं जन्मन एकत्र सङ्गतिस्तव या । पिक तत्कृतमालिन्यं नशिता न स्वादुवाचैव ॥ २१ ॥ रे रे कोकिल मा भज मौनं किंचिदुदञ्चय पञ्चमरागम् । नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ २२ ॥ अस्यां सखे बधिरलोकनिवासभूमौ किं कूजितेन खलु कोकिल कोमलेन । एते हि दैवहतकास्तदभिन्नवर्णं त्वां काकमेव कलयन्ति कलानभिज्ञाः ॥ २३ ॥ रे बालकोकिल करीरमरुस्थलीषु किं दुर्विदग्धमधुरध्वनिमातनोषि । अन्यः स कोऽपि सहकारतरुप्रदेशो राजन्ति यत्र तव विभ्रमभाषितानि ॥ २४ ॥ किं

---

१ वर्षासु । २ मण्डूकाः । ३ हेमधुरवक्तः । कोकिलेति भावः । ४ "सहकारोऽतिसौरभः" इत्यमरोक्त्याऽतिसुगन्धित आम्रे । ५ अत्र तारकादित्वादितच्, न तु क्तः । ६ सन्निधौ । ७ विगमय । ८ श्यामवर्णेन, दुष्टान्तःकरणेन च । ९ मेघानां, प्राणदायिनां च । १० उपाय- । ११ स्वरूपं कोकिलपुत्रत्वमिति भावः । १२ काकेन । १३ तरुणावस्थारूपाम् । १४ न तु लज्जितः। १५ मलिन । ( काक ) सम्बन्धित्वम् । १६ काक- । १७ समूह- । १८ काकसमानम् । १९ गणयन्ति । २० अतिसुरभिताम्र- ।

कोमलैः कलरवैः पिक तिष्ठ तूष्णीमेते तु पामरनराः स्वरमाकलय्य । को वा रटत्ययमये निकटे कटूनि रे वध्यतामिति वदन्ति गृहीतदण्डाः ॥ २५ ॥ तावच्चकोरचरणायुध[1]चक्रवाकपारावतादिविहगाः कलमालपन्तु । यावद्वसन्तरजनीघटिकाऽवसानमासाद्य कोकिलयुवा न कुहूकरोति ॥ २६ ॥ येनोषितं रुचिरपल्लवमञ्जरीषु श्रीखण्ड[2]मण्डलरसालवने सदैव। दैवात्स कोकिलयुवा निपपात निम्बे तत्रापि रुष्टबलिपुष्ट[3]कुलैर्विवादः ॥ २७ ॥ हे कोकिलाखिललतासु फलानि सन्ति संत्यज्य तानि ननु चूतलतां सपुष्पाम् । किं काङ्क्षसीह रमणं फलभोक्तुकामो न ज्ञायसे नृपतिसेवकभीषणीयाम् ॥ २८ ॥ परभृत[4]शिशो मौनं तावद्विधेहि नभस्तलोत्पतनविषये पक्षौ स्यातां न यावदिमौ क्षमौ । ध्रुवमपरथा[5] द्रष्टव्योऽसि स्व[6]जातिविलक्षणध्वनितकुपितध्वाङ्क्षत्रोटीपुटाहतिजर्जरः ॥ २९ ॥ अहंयु[7]वरवर्णिनीजनमदायतोदञ्चत्स्फुरच्चतुरपञ्चमस्वरजितान्यपक्षिव्रजः । रसालतरुणा कृतामसमतुल्यतामात्मनो विहन्तुमिह कोकिलः फलिनमन्यमुद्वीक्षते ॥ ३० ॥ क्वचिज्झिल्लीनादः क्वचिदतुलकाकोल[8]कलहः क्वचित्कङ्कारावः क्वचिदपि कपीनां कलकलः । क्वचिद्घोरः फेरु[9]ध्वनिरयमहो दैवघटनात्कथंकारं तारं[10] रसति[11] चकितः कोकिलयुवा ॥ ३१ ॥ मूकीभूय तमेव कोकिल मधुं[12] बन्धुं प्रतीक्षस्व हे हेलोल्लासितमल्लिकापरिमलामोदानुकूलानिलम् । यत्रैतास्तव सूक्तयः सफलतामायान्त्यमी तूल्लसत्पांशूत्तंसयुतो निदाघदिवसाः संतापसंदायिनः ॥ ३२ ॥ येनानन्दमये वसन्तसमये सौरभ्यहेलामिलद्भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः । आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वा दिशः खेलद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्धावति ॥ ३३ ॥ दात्यूहाः[13] सरसं रसन्तु सुभगं गायन्तु केकाभृतः[14] कादम्बाः[15] कलमालपन्तु मधुरं कूजन्तु कोयष्टयः[16]। दैवाद्यावदसौ रसालविटपिच्छायामनासादयन्निर्विण्णः कुटजेषु कोकिलयुवा संजातमौनव्रतः ॥ ३४ ॥ भ्रातः कोकिल कूजितेन किमलं नाद्याप्यनर्घ्यो गुणस्तूष्णीं तिष्ठ विशीर्णपर्णपटलच्छन्नः क्वचित्कोटरे । प्रोद्दामद्रुमसंकटे कटुरटत्काकावलीसंकुलः कालोऽयं शिशिरस्य संप्रति सखे नायं वसन्तोत्सवः ॥ ३५ ॥ अम्भोजप्रकरोऽथ केतककुलं कुन्दोत्करः कैरवव्रातो मल्लि[17]गणोऽथ चम्पकचयो जातीसमूहोऽथवा । नो चेदादरमातनोति पिक ते खेदं वृथा मा कृथा यस्मात्कापि कदाऽपि कोऽपि भविता यस्त्वद्गुणाञ्ज्ञास्यति ॥ ३६ ॥ आसाद्याम्रवनीमिमां प्रति नवामास्वाद्य तन्मञ्जरीं मैवं पञ्चम[18]मञ्च नन्दनवनभ्रान्त्या तया कोकिल । एषा वायसमण्डली घनशिरःशूलाहतिव्याकुला कुध्वानैर्बधिरीकरिष्यति वृथा श्रोत्राणि सत्पत्रिणाम् ॥ ३७ ॥

## चातकान्योक्तिनिदर्शनम् ।

एक एव खगो मानी चिरं जीवतु चातकः । म्रियते वा पिपासायां याचते वा पुरन्दरम् ॥ १ ॥ पिपासाक्षाम[19]कण्ठेन याचितं चाम्बु पक्षिणा । नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥ २ ॥ शक्यते येन केनापि जीवनेनैव जीवितुम् । किंतु कौल[20]व्रतोद्भङ्गप्रसङ्गः परदुःसहः ॥ ३ ॥ अवश्यकारणैः प्राणान्धारयत्येव चातकः । प्रार्थनाभङ्गभीतोऽपि शक्रादपि न याचते ॥ ४ ॥ चातक धूमसमूहं दृष्ट्वा मा धाव वारिधरबुद्ध्या । इह हि भविष्यति भवतो नयनयुगादेव वारिणां पूरः ॥ ५ ॥ यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम् । तदपि न कुप्यति जलदो गतिरिह नान्या यतस्तस्य ॥ ६ ॥

---

१ कुक्कुट- । २ चन्दन- । ३ काक- । ४ कोकिल- । ५ अन्यथा । ६ काक- । ७ अहङ्कारि । ८ द्रोणकाक- । ९ शृगाल- । १० अत्युच्चैः । ११ कूजति । १२ वसन्तम् । १३ जलकाकाः । १४ मयूराः । १५ हंसाः । १६ टिट्टिभाः । १७ मल्लिका- । १८ पञ्चमस्वरम् । १९ शुष्केति नष्टस्वरेति वा । २० परम्पराप्राप्त- ।

दीनोन्नतचलपक्षतया बह्वपि लब्धमवस्तु । चातक सत्संभावनया किमपि यदस्ति तदस्तु ॥ ७ ॥ विश्वोपजीव्ये न पिबत्यपोऽयं पद्माकरे यद्यपि चातकश्चेत् । स्वार्थक्षतिस्तस्य तृषाऽऽतुरस्य लघुत्वमेवास्ति न किञ्चिदस्य ॥ ८ ॥ ऊर्ध्वीकृतग्रीवमहो मुधैव किं याचसे चातकपोत मेघम् । अत्यूर्जितं गर्जितमात्रमस्मिन्नम्भोधरे बिन्दुलवस्तु दूरे ॥ ९ ॥ चातक जलधिप्रमुखानपि विगणय्य किम्पचत्वेन । प्रार्थनमिन्द्रादथवा मरणं शरणं समाश्रयसे ॥ १० ॥ मेघं मेऽद्य भावय यत्तत एव जीवनं मतं सहजम् । गमय कथञ्चित्समयं तृषाऽऽकुलोऽन्ते मृतो भावी ॥ ११ ॥ भूरि ददत्यपि जलदे याचनवृत्तिस्तवोर्जिताऽद्यापि । लब्धिर्भवति न ते वा दैवस्यैव प्रभावोऽयम् ॥ १२ ॥ वृथा कथं नृत्यसि चातक त्वं न नीलमेघोऽथ गजो मदान्धः । स त्वादृशेभ्यो न ददाति नूनं मातङ्गदानं मधुपेभ्य एव ॥ १३ ॥ आत्मानमम्भोनिधिरेतु शोषं ब्रह्माण्डमासिञ्चतु वा तरङ्गैः । नास्ति क्षतिर्नोपचितिः कदाऽपि पयोदवृत्तेः खलु चातकस्य ॥ १४ ॥ रक्ताब्जपुञ्जरजसाऽरुणितान्विमुच्य स्वच्छान्सुधासमरसानपि वारिराशीन् । यच्चातकः पिबति वारिधरोदबिन्दूनन्ये तदानतिभयाच्छिरसोऽभिमानी ॥ १५ ॥ अन्येऽपि सन्ति बत तामरसावतंसा हंसावलीवलयिनो जलसन्निवेशाः । कोऽप्याग्रहो गुरुरयं बत चातकस्य पौरन्दरीं यदभिवाञ्छति वारिधाराम् ॥ १६ ॥ धिग्वारिदं परिहृतान्यजलाशयस्य यच्चातकस्य कुरुते न तृषाप्रशान्तिम् । धिक्चातकं तमपि योऽर्थितयाऽस्तलज्जस्तं तादृशं च यदुपैति पिपासितोऽपि ॥ १७ ॥ बीजैरङ्कुरितं लताभिरुदितं वल्लीभिरुज्जृम्भितं कन्दैः कन्दलितं जनैः प्रमुदितं धाराधरे वर्षति । भ्रातश्चातक पातकं किमपि ते सम्यङ्न जानीमहे येनास्मिन्न पतन्ति चञ्चुपुटके द्वित्राः पयोबिन्दवः ॥ १८ ॥ अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नन्ति ये भ्रातश्चातक किं वृथा विरुदितैः खिन्नोऽसि विश्रम्यताम् । मेघः शारद एष काशधवलः पानीयरिक्तोदरो गर्जत्येव हि केवलं भृशतरं नो बिन्दुमप्युज्झति ॥ १९ ॥ यः कृष्णं कुरुते मुखं जनयति त्रासं तडिद्भिस्तु यो यश्च प्रार्थयते परं दलयति श्रोत्रं निजैर्गर्जितैः । सत्यं चातक तं तथाविधमपि भ्रातस्त्वया याचता जीमूतं कृतमेव तुल्यवनयोरर्थित्वतिर्यक्त्वयोः ॥ २० ॥ रे रे चातक सावधानमनसा मित्र क्षणं श्रूयतामम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः । केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ २१ ॥ वापी स्वल्पजलाशयो विषमयो नीचावगाहो ह्रदः क्षुद्रात्क्षुद्रतरो महाजलनिधिर्गण्डूषमेकं मुनेः । गङ्गाद्याः सरितः पयोनिधिगताः संत्यज्य तस्मादिमान्संमानी खलु चातको जलमुचामुच्चैः पयो वाञ्छति ॥ २२ ॥ अन्ये ते विहगाः पयोद परितो धावन्ति तृष्णातुरा वापीकूपतडागसागरजले मज्जन्ति दत्तादराः । मामद्यापि न वेत्सि चातकशिशुं यच्छुष्ककण्ठोऽपि सन्नान्यं वाञ्छति नोपसर्पति न च प्रस्तौति न ध्यायति ॥ २३ ॥ उत्कूजन्तु वटे वटे बत बकाः काका वराका अपि क्राङ्कुर्वन्तु सदा निनादपटवस्ते पिप्पले पिप्पले । सोऽन्यः कोऽपि रसालपल्लवलवग्रासोल्लसत्पाटवक्रीडत्कोकिलकण्ठकूजनकलालीलाविलासक्रमः ॥ २४ ॥

---

१ वृथैव । २ गजमदः, चाण्डालदानं च । ३ भ्रमरेभ्यः, मद्यपानकर्तृभ्य एवेति च । ४ तामरसानि कमलान्येव अवतंसाः कर्णाभरणस्थानीयानि येषां ते । ५ मेघसम्बन्धिनीम् । ६ निर्लज्जः । ७ विलापैः । ८ मेघम् । ९ दीनाः ।

## मयूरान्योक्तिनिदर्शनम् ।

अहमस्मि नीलकण्ठस्तव खलु तुष्यामि शब्दमात्रेण । नाहं जलधर भवतश्चातक इव जीवनं याचे ॥ १ ॥ त्वमसि कलापिन्धन्यो यत्तव नादं निशम्य देवः शक्रोऽपि । झटिति ससम्भ्रममेत्य प्रमोदयति जीवनं वितरन् ॥ २ ॥ पक्षश्रीस्तव बर्हिन्विषधरहन्तुर्न कस्य सा प्रमुदे । श्रीपतिरपि मूर्ध्ना विविधाः केलीर्व्यधान्निवहन् ॥ ३ ॥ जलदे गर्जति मौलौ मयूर नृत्यसि किमर्थमुन्मत्तः । करकान्यदि पातयिता सोऽयं वद का दशा तर्हि ॥ ४ ॥ केकां श्रुत्वा नृत्यं दृष्ट्वा भवतो मयूर सम्मुदितः । जीवनमपि तद्वितरति साक्षाद्देवेश्वरः सहसा ॥ ५ ॥ अनुवादयिता वाद्यं नृत्यसि यत्त्वयि सुरेश्वरः साक्षात् । पक्षश्च तेऽजवन्द्यस्तदसि कलापिन्परं धन्यः ॥ ६ ॥ यत्नादपि कः पश्यति शिखिनामाहारनिर्गमस्थानम् । यदि जलदनिनदमुदितास्त एव मूढा न नृत्येयुः ॥ ७ ॥ वेगज्वलद्विटपिपुञ्जमहारयोऽयं गर्जिर्न तीव्रतरहेतिरियं न शम्पा । दावाग्निधूमनिवहोऽयमये न मेघः किं नृत्यसि द्रुतमितो व्रज तत्कलापिन् ॥ ८ ॥ अस्मान्विचित्रवपुषस्तव पृष्ठलग्नान्कस्माद्विमुञ्चति भवान्यदि वा विमुञ्च । रे नीलकण्ठ गुरुहानिरियं तवैव मौलौ पुनः क्षितिभृतो भविता स्थितिर्नः ॥९॥ अये नीलग्रीव क्व नु खलु सखे तेऽद्य मुनयः परं तोषं येषां तव रवविलासो वितनुते । अमी दूरात्क्रूराः कणितमिदमाकर्ण्य सहसा त्वरन्ते हन्तुं त्वामहह शबराः पुङ्खितशराः ॥ १० ॥ समन्तादाक्रान्ता दवदहनसङ्घैः शिखरिणः किरातैराकीर्णाः करकलितकाण्डैर्वनभुवः । बिडालैरालीढाः सपदि सरसीनां परिसराः शिखण्डी पाण्डित्यं निजमहह कुत्र प्रकटयेत् ॥ ११ ॥ एतस्मिन्मलयाचले बहुविधैः किं तैरकिञ्चित्करैः कालोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः । केकी कूजति चेत्तदा विघटितव्यालावलीबन्धनः सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ १२ ॥ हारीताः सरसं रसन्तु मधुरं कूजन्तु पुंस्कोकिलाः सानन्दं गिरमुद्गिरन्तु च शुकाः किं तैः शिरस्थैरपि । एकेनापि तलस्थितेन नदता श्रीखण्ड निस्तर्जनाद्व्यालानां च शिखण्डिना न तु महत्पाण्डित्यमुद्दण्डितम् ॥ १३ ॥ किं दूरेण पयोधरा उपरि किं नान्यैः रटन्तः श्रुता निर्व्यापारतया च पक्षिषु गता किंवा न पक्षा वृथा । रम्यं वा गगने न किं विहरणं किं तूग्रकाकावलीपर्यायप्रतिपत्तिलाघवभयाद्भूमौ स्थिता बर्हिणः ॥ १४ ॥ केका कर्णामृतं ते सकुसुमकबरीकान्तिहाराः कलापाः कण्ठच्छाया पुरारेर्गलरुचिरुचिरा सौहृदं मेघसङ्घैः । विश्वद्वेषिद्विजिह्वस्फुरदुरुपिशितैर्नित्यमाहारवृत्तिः कैः पुण्यैः प्राप्तमेतत्सकलमपि सखे चित्रवृत्तं मयूर ॥ १५ ॥

## चक्रवाकान्योक्तिनिदर्शनम् ।

त्यज चक्रवाकि शोकं बधान धैर्यं सहस्व समयममुम् । अयमेव वासरमणिर्हरिष्यते शापमूर्छां ते ॥ १ ॥ अस्तंगतोऽयमरविन्दवनैकबन्धुर्भास्वान्न लङ्घयति कोऽपि विधिप्रणीतम् । हे चक्र धैर्यमवलम्ब्य विमुञ्च शोकं धीरास्तरन्ति विपदं न तु दीनचित्ताः ॥ २ ॥

## कीरान्योक्तिनिदर्शनम् ।

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु । शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ १ ॥ किंशुके शुक मा तिष्ठ चिरं भाविफलेच्छया । बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ॥ २ ॥ काकाः

१ जलम् । २ पतत्रशोभा, सहाय्यसम्पत्तिश्च । ३ ध्वनिविशेषम् । ४ विद्युत् । ५ राज्ञो महत्त्वसूचकः पिच्छपुञ्जमयो चिह्नविशेषो भवतीति तथोक्तिः । ६ पर्वताः । ७ मयूरः । ८ विघटितं विच्छिन्नम् । ९ पक्षिविशेषाः । १० मयूरपिच्छाग्रभागविशेषाः ।

किं किं न कुर्वन्ति क्रोङ्कारं यत्र तत्र वा । शुक एव परं वक्ति नृपहस्तोपलालितः ॥ ३ ॥ शुक तव पठनं व्यसनं न गुणः स गुणाभासः । समजनि येनामरणं[2] शरणं पञ्जरवासः ॥ ४ ॥ कीर नीरसकरीरपादपे किं स्थितोऽसि कथयामि धीरतः । मामकीनसहकारपादपा दुःसमीरलहरीभिराहताः ॥ ५ ॥ सुभाषितस्याध्ययनेऽनुषक्तं शुकं वराकाः[3] प्रहसन्ति काकाः । तमेव संसत्सु[4] गिरं किरन्तं दृष्ट्वा भवन्ति त्रपया नतास्याः ॥ ६ ॥ द्राक्षां प्रदेहि मधु वा वदने निधेहि देहे विधेहि किमु वा करलालनानि । जातिस्वभावचपलः पुनरेष कीरस्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥ ७ ॥ हे कीर कैरवसुगीरिति संकलय्य मा माऽत्र संरससि सज्जनरञ्जनाय । बालोऽपि यत्र कलकण्ठसुकण्ठपीठः संलेढि कोमलकुहूकृतपूर्णकर्णः ॥ ८ ॥ इदमपटु कपाटं जर्जरः पञ्जरोऽयं विरमति न गृहेऽस्मिन्क्रूरमार्जारयात्रा । शुक मुकुलितजिह्वः स्थीयतां किं वचोभिस्तव वचनविनोदे नादरः पामराणाम् ॥ ९ ॥ अमृतवचनलीलाविभ्रमैरन्नपानं रचय चतुर कीर भ्रान्तचित्तेषु तेषु । अकलितपरसेवातापपापः पिकोऽसौ भजतु विपिनवाटीमेष पीयूषकण्ठः ॥ १० ॥ अमुष्मिन्नुद्याने विहगखल एष प्रतिकलं विलोलः कोलोलः क्वणति खलु यावत्कटुरतम् । सखे तावत्कीर द्रढय हृदि वाचंयमकलां[6] न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥ ११ ॥ इयं पल्लीभिल्लैरनुचितसमारम्भरसिकैः समन्तादाक्रान्ता विषविषमबाणप्रणयिभिः । तरोरस्य स्कन्धे गमय समयं कीर निभृतं न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥ १२ ॥ अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः स्फुटं नृत्यद्भृङ्गीविविधनवसंगीतकलनात् । परानन्दैः पूर्णाः क इव तव वर्णावलिपदक्रमश्रोता वेत्ता द्विजवर शुक भ्राम्यसि कुतः ॥ १३ ॥ अये कीरश्रेणीपरिवृढ[9] वृथा वासरशतं किमर्थं त्वं व्यर्थं क्षपयसि पलाशे रभसतः । यदा पुष्पारम्भे मुखमलिनिमा किंशुकतरोस्तदैवेदं ज्ञातं फलपरिचयो दुर्लभतरः ॥ १४ ॥ अपारः पाथोधिः[10] पुलिनपदवी योजनशतं निरालम्बो मार्गो वियति किल शून्या दश दिशः । इतीवायं कीरः कतिपयपदान्येव गगने मुहुर्भ्राम्यन्भ्राम्यन्पतति गुणवृक्षे[11] पुनरपि ॥ १५ ॥ द्विजकुलपते[12] मेधासिन्धो[13] सुभाषितकोविदं[14] त्वयि गृहमुपयाते जातं बहूपकृतं मम । यदिह नियतं बाला वृद्धाः स्त्रियः परिचारिकाः शुक भगवतो नाम प्रीता गृणन्ति मुहुर्मुहुः ॥ १६ ॥ वासः काञ्चनपञ्जरे नृपकराम्भोजैस्तनूमार्जनं भक्ष्यं स्वादुरसालदाडिमफलं पेयं सुधाऽऽभं पयः । पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे हा हा हन्त तथाऽपि जन्मविटपिक्रोडं मनो धावति ॥ १७ ॥ सत्सांगत्यं[15]मवाप्य यः पुरवने नानारसास्वादवत्कीरः शास्त्रविचारचारुवचनैरानन्दकारी जने । दैवेनास्फुटवाक्प्रपञ्चपिहितश्रोत्रस्य तस्याटवीं प्राप्तस्यात्मसभाप्रगल्भकपिषु स्यान्मौनमेवोचितम् ॥ १८ ॥ भ्रातः कीर कठोरचञ्चुकषणक्रोधायितैः कूजितैः किं माधुर्यनिविक्तसूक्तिविशदः कण्ठावटुः शोष्यते । सेयं दैववशाद्दशा परिणता राज्यन्यपात्रस्य ते भिल्लैश्छिद्रितभित्तिमुद्रितघटः प्राप्तो यतः पञ्जरः ॥ १९ ॥ माणिक्यद्रवलिप्तमौक्तिकतुलां बिभ्रन्ति नो दाडिमीबीजान्येष निरीक्षते न रमते हैमेऽप्यहो पञ्जरे । तत्तादृग्वनवाससंमर्द[16]महामोदैकमेदस्विनी[17] वृत्तिर्मे गलितानया हतगिरेत्येवं शुकः शोचति ॥ २० ॥ याते यातमधःस्थिते स्थितमुपर्यालोकिते लोकितं यद्युद्यानशुकोऽयमाकलयते शुद्धान्त[18]हस्तस्थितः । तत्सर्वं मणिभित्तिमध्य

---

१ दोषः । २ मरणं यावत् । ३ दुष्टाः । ४ सभासु । ५ द्रोणकाकः । ६ मौनि- । ७ अप्रकटं यथा भवेत्तथा । ८ रक्षोपायः । ९ परिवृढोऽधिपतिः । १० सागरः । ११ कूपकाख्ये नौकाचालनसाधनभूते दण्डे । १२ पक्षि- । विप्र- । १३ बुद्धि- । १४ चतुर । १५ सज्जनसङ्गम् । १६ प्रसन्नता । १७ मेदस्विनी पुष्टा- । १८ अन्तःपुरगतललनाजन- ।

भवता छायाशुकाङ्गीकृतं तस्मिन्कर्णसुधां वितन्वति गिरं तूष्णीं किमु स्थीयते ॥ २१ ॥ स्वस्वन्याप्रति-मग्नमानसतया मत्तो निवृत्ते जने चञ्चूकोटिविघट्टितारपुटो यास्याम्यहं पञ्जरात् । इत्थं कीरवरे मनोरथमयं पीयूषमास्वादयत्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥ २२ ॥ दृष्ट्वा शाखाऽवकीर्णफलभरनमितं भूमिभागावनद्धं त्यक्त्वा शालप्रकाण्डं पनसमुपगतश्चिन्तयित्वेति कीरः । हत्वा चञ्चुं प्रहर्षाद्विगलितपयसा संभृताशेषपक्षो भिन्नश्चोड्डीय गन्तुं गगनपरिचिता या गतिः साऽपि नष्टा ॥ २३ ॥

## करटान्योक्तिनिदर्शनम् ।

वयं काका वयं काका जल्पन्तीति प्रगे[1] द्विकाः[2] । तिमिरारिस्तमो हन्यादिति शंकितमानसाः ॥१॥ तुल्यवर्णच्छदः कृष्णः कोकिलैः सह संगतः । केन विज्ञायते काकः स्वयं यदि न भाषते ॥ २ ॥ अहो मोहो वराकस्य काकस्य यदसौ मुहुः । सरीसर्ति[3] नरीनर्ति पुरतः शिखिहंसयोः ॥ ३ ॥ आमरणादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः । किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ ४ ॥ तत्काक त्वयि युक्ताः कटुवाग्वैवर्ण्यधूर्तताशुचिताः । यदि विष्ठाकृमिपुष्टे तत्र न दोषा हि तच्चित्रम् ॥ ५ ॥ दुष्टस्यापि मृतिर्मे नास्तीति मदस्तवोर्जितस्तावत् । यावत्पक्षाघातं न गतो बलिभुक्पुनः कासि ॥ ६ ॥ ज्ञानिन इव तव सर्वे ग्राह्याग्राह्यत्वभेदनैर्गन्ध्यम् । करट तमप्यतिशेषे यन्न पुरीषादपि त्रपसे ॥ ७ ॥ सर्वत्र सर्वदैका दृष्टिस्ते काक नो विभिद्यते जातु । धन्यस्त्वमसि मतस्तन्मृषैव मलिनं वदन्ति त्वाम् ॥८॥ उत्तमपदार्थरसिकाः सुलभा लोके भवन्ति सर्वेऽपि । दूषितपदार्थरसिकस्त्वमिव मतस्त्वं पुनः करट॥ ९॥ [4]विधिरेव विशेषगर्हणीयः करट त्वं रट कस्तवापराधः । सहकारतरौ चकार यस्ते सह वासं सरलेन कोकिलेन ॥ १० ॥ काकस्य गात्रं यदि काञ्चनस्य माणिक्यरत्नं यदि चञ्चुदेशे । एकैकपक्षे ग्रथितं मणीनां तथाऽपि काको न तु राजहंसः ॥ ११ ॥ त्रोटीपुटं[6] करट कुड्मलयाद्य तात यावत्प्रतिव्रजति नाकमयं[7] मरालः[8] । नो चेदमङ्गलकठोररवा विहङ्गाः सर्वे भुवीति निजसंसदि शंसिता नः ॥ १२ ॥ प्रत्यङ्गणं प्रतितरु प्रतिवारितीरं काकाश्चरन्ति चलचञ्चुपुटा रटन्तः । नो यान्ति तृप्तिमथ मण्डित-पुण्डरीकखण्डे वसन्नहह तृप्यति राजहंसः ॥ १३ ॥ कृष्णं वपुर्वहतु चुम्बतु सत्फलानि रम्येषु संवसतु चूतवनान्तरेषु । पुंस्कोकिलस्य चरितानि करोतु कामं काकः पुनः कलविधौ न पिकः कदाऽपि॥१४॥ पथि निपतितां शून्ये दृष्ट्वा निरावरणाननां दधिभृतघटीं गर्वोन्नद्धः समुद्धतकन्धरः । निजसमुचितास्तास्ताश्चेष्टा विकारशताकुला यदि न कुरुते काणः काकः कदा नु करिष्यति ॥ १५ ॥ गात्रं ते मलिनं तथा श्रवणयोरुद्वेगकृत्केङ्कृतं भक्ष्यं सर्वमपि स्वभावचपलं दुश्चेष्टितं ते सदा । एतैर्वायससङ्गतोऽस्य विनयैर्दोषैरमीभिः परं यत्सर्वत्र कुटुम्बवत्सलमतिस्तेनैव धन्यो भवान् ॥ १६ ॥ रूक्षस्यामधुरस्य चातिमलिनच्छायस्य[9] धृष्टस्य च क्षुद्रस्य क्षतकारिणोऽतिचपलस्याह्लादविच्छेदिनः । येयं निम्बफलेषु काक भवतस्तिक्तेषु नैसर्गिकी प्रीतिस्तत्सदृशं विधेर्विलसितं निष्पन्नमेतच्चिरात् ॥ १७॥ कर्णारुन्तुद-[10]मन्तरेण रणितं[11] गाहस्व काक स्वयं माकन्दं[12] मकरन्दशालिनमिह त्वां मन्महे कोकिलम् । धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां नेपालक्षितिपालफालपतिते पङ्के न शङ्केत कः ॥ १८ ॥ काक त्वं फलनम्रमाम्रविपिनं दैवात्समासादयन्किं कर्णौ बधिरीकरोषि परुषक्रेङ्कारकोलाहलैः । मौनं

---

१ प्रातःकाले । २ द्वौ कौ येषां नाम्नि तादृशाः काका इत्यर्थः । ३ अतिशयेन पुनः पुनः प्रयाति । ४ विधाता । ५ काक । ६ चञ्चूपुटम् । ७ स्वर्गम् । ८ हंसः । ९ छाया-कान्तिः । १० कर्णमर्मपीडकम् । ११ शब्दम् । १२ आम्रतरुम् ।

चेदवलम्बसे रतभरप्रक्रान्तपुंस्कोकिलभ्रान्त्याऽपि त्वयि सञ्चरन्ति न कथं मुग्धाकटाक्षच्छटाः ॥१९॥ नो चारू चरणौ न चापि चतुरा चञ्चूर्न वाच्यं वचो नो लीलाचतुरा गतिर्न च शुचिः पक्षग्रहोऽयं तव । क्रूरक्रेङ्कृतिनिर्भरां गिरमिह स्थाने वृथैवोद्गिरन्मूर्ख ध्वाङ्क्ष न लज्जसेऽप्यसदृशं पाण्डित्यमुन्नाटयन्॥ २० ॥यस्याकर्ण्य वचः सुधाकवलितं वाँचंयमानामपि व्यग्राणि व्यथयन्ति मन्मथकथाश्चेतांसि चैत्रोत्सवे । रे रे काक वराक साकममुना पुंस्कोकिलेनाधुना स्पर्धाबन्धमुपेयुषस्तव तु किं लज्जाऽपि नोज्जागरा ॥ २१ ॥ आलापं कलकण्ठिका न कुरुते कीरा न धीरध्वनिं व्याहारं कलयन्ति कोमलगिरः कूजन्ति नो बर्हिणः । नीराडम्बरदुर्दिनाम्बरतले दूरे द्विरेफध्वनिः काकाः केवलमेव केङ्कृतरवैः कुर्वन्ति कर्णज्वरम् ॥ २२ ॥ अन्नं लब्धवतः परस्य वदनं भिक्षाऽऽशया पश्यतः स्वावासच्युतिवेदनां विदधतः कान्तां विना सीदतः । भ्राम्यन्तः सह भार्यया प्रतिदिशं प्रत्याँपगं प्रत्यगं कीरस्याध्ययनं हसन्ति विविधक्रीडालसा वायसाः ॥ २३ ॥ किं केकीव शिखण्डमण्डिततनुः किं कीरवत्पाठकः किंवा हंस इवाङ्गनागतिगुरुः साँरीव किं सुस्वरः । किंवा हन्त शकुन्तबालपिकवत्कर्णामृतं स्यन्दते काकः केन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ २४ ॥ अत्रस्थः सखि लक्षयोजनगतस्यापि प्रियस्यागमं वेत्त्याख्याति च धिक्शुकादय इमे सर्वे पठन्तः स्थिताः । मत्कान्तस्य वियोगतापदहनज्वालावलीवारिदः काकस्तेन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ २५ ॥ अस्मिन्नम्भोदवृन्दध्वनिजनितरुषि प्रेक्षमाणेऽन्तरिक्षे मा काक व्याकुलो भूस्तरुशिखरशवक्रव्यलेशानशान । धत्ते मत्तेभकुम्भव्यतिकरकरजग्राममञ्जाग्रजाग्रद्ग्रासव्यासक्तमुक्ताधवलितकवलो न स्पृहामत्र सिंहः ॥ २६ ॥

## बकान्योक्तिनिदर्शनम् ।

एष बकः सहसैव विपन्नः शाठ्यमहो क्व नु तद्गतमस्य । साधु कृतान्त न कश्चिदपि त्वां वञ्चयितुं सुशठोऽपि समर्थः ॥ १॥ यद्यपि जलोपजीवी मौनी वा लक्ष्यमात्रचेता वा । अयि बक तथाऽपि भेका बिभ्यति हन्त त्वदेवामी ॥ २ ॥ अवनौ शनैः शनैस्त्वं निदधासि पदद्वयं स्वस्य । लक्ष्यं पश्यसि न वदसि भजसि जलं बक ततोऽसि सितः ॥ ३ ॥ मौनव्रतं विधत्से पादन्यासं शनैः शनैरवनौ । धरसि तनौ विमलत्वं भो बक सुकृती त्वमेकाकी ॥ ४ ॥ यद्यपि तव बक वृत्तिर्विभाव्यते राजहंसवद्विमला । हन्त वराकान्भेकान्ग्रससीति न साम्प्रतं भूयः ॥ ५ ॥ न कोकिलानामिव मञ्जु गुञ्जितं न लब्धलास्यानि गतानि हंसवत् । न बर्हिणानामिव चित्रपक्षता गुणस्तथाऽप्यस्ति बकस्य मौनिता ॥ ६ ॥ बकोट[12] भ्रमस्त्वां लघुनि सरसि क्वापि शफरैस्तव न्याय्या वृत्तिर्न पुनरवगाढुं समुचितः । इतश्चेतश्चाभ्रंलिहलहरिहेलातरलितक्षितिध्रग्रासैकग्रहिलतिमिपोतः पतिरपाम् ॥ ७ ॥ नैर्मल्यं वपुषस्तवास्ति वसतिः पद्माकरे जायते मन्दं याहि मनोरमां वद गिरं मौनं च संपादय । धन्यस्त्वं बक राजहंसपदवीं प्राप्तोऽसि किं तैर्गुणैर्नीरक्षीरविभागकर्मनिपुणा शक्तिः कथं लभ्यते ॥ ८ ॥ जातिस्तस्य न मानसे न शुचिभिर्वृत्तिर्मृणालाङ्कुरैर्न ब्रह्मोद्वहनेन निर्मलयशः प्राप्ता न वाचः कला । जीवन्सत्त्ववधेन बाह्यधवलो भ्राम्यन्सगर्वं पुनर्मिथ्यैवोन्नतकंधरः शठबको हंसैः सह स्पर्धते ॥ ९ ॥ रे रे शिष्टबकोट नाकतटिनीतीरे तपस्विव्रतं ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम् । एवं

---

१ वाणीम् । २ हे काक । ३ मौनिनाम् । ४ वसन्तोत्सवे । ५ कोकिला । ६ प्रतिनदि । ७ सारी पक्षिभेदः । ८ मांस– । ९ नख– । १० सुन्दरम् । ११ लास्यं नृत्यम् । १२ बकोटेत्यपि बकस्यैव नाम । १३ पर्वत– । १४ जन्म । १५ पृष्ठोपरि ब्रह्मणो धारणम् ।

तन्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य सा ॥ १० ॥
यत्किल मानसस्य पदवीं काङ्क्षस्ययुक्तं हि तन्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य सा ॥ १० ॥ न यत्पक्षद्वयोत्क्षेपणम् ।
न भ्रूणां[1] स्फुरणं न चक्षुचलनं नो चूलिकाकम्पनं न ग्रीवाचलनं मनागपि न यत्पक्षद्वयोत्क्षेपणम् ।
नासाग्रेक्षणमेकपाददमनं कष्टैकनिष्ठं परं यावत्तिष्ठति हीनमीनवदनस्तावद्बकस्तापसः ॥ ११ ॥

## उलूकान्योक्तिनिदर्शनम् ।

अभवति कुवलय[2]मोदे नयनप्रसरो न मेऽधुना युक्तः । इति मीलितदृशि घूके तं कर्तुं प्रोद्यतश्चन्द्रः ॥ १ ॥ ज्योतिःप्रदानकुशलो भास्वानेवापरो न जातु तथा । इति घूक बत त्वमिमं किं काकपराभवं सहसे ॥ २ ॥ यद्यपि तरणेः[3] किरणैः सकलमिदं विश्वमुज्ज्वलं विदधे । तदपि न पश्यति घूकः पुराकृतं भुज्यते कर्म ॥ ३ ॥

## सारङ्गान्योक्तिनिदर्शनम् ।

अये वापींहंसा निजवसतिसंकोचपिशुनं कुरुध्वं मा चेतो वियति वहतो वीक्ष्य विहगान् । अमी सारङ्गास्ते भुवनमहनीयव्रतभृतो निरीहाणां येषां तृणमिव भवन्त्यम्बुनिधयः ॥ १ ॥

## ज्योतिरिङ्गणान्योक्तिनिदर्शनम् ।

जर्जरतृणाग्रमदहन्सर्षपकणमप्रकाशयन्नूनम् । कीटत्वमात्मतत्त्वात्खद्योतः ख्यापयन्भवति ॥ १ ॥ कीटमणे दिनमधुना तरणिकरान्तरितसितघनसन्तमसमलीमस दशदिशि निशि यद्विराजसि तदन्यत् । कीटमणे दिनमधुना तरणिकरान्तरितसित- घनसन्तमसमलींमस दशदिशि निशि यद्विराजसि तदन्यत् ॥
किरणम् ॥ २ ॥ क्वापि गतः पतिरह्नां जलदान्तरितः शशी सनक्षत्रः । शून्ये तमसि भवानपि
खद्योत द्योततां नाम ॥ ३ ॥ रे ज्योतिरिङ्गण त्वं क्रीड यथेष्टं निदर्शयात्मानम् । दोषोल्लासावसरं
विना प्रमोदो भवादृशः क इव ॥ ४ ॥ इन्दुः प्रयास्यति विनङ्क्ष्यति तारकश्रीः स्थास्यन्ति लीढ-
तिमिरा न मणिप्रदीपाः । अन्धं समग्रमपि कीटमणे भविष्यस्युन्मेषमेष्यति भवानपि दूरमेतत् ॥ ५ ॥
भ्राजिष्णवो[5] नभसि[4] मेघकृतान्तराले स्वल्पप्रभा अपि परैरनिरस्तभासः । खद्योतकाः प्रकटितोरुतरप्रभावा-
स्तावन्न सप्ततुरगः[6] समुदेति यावत् ॥ ६ ॥ अदृष्टव्यापारं[7] गतवति दिनानामधिपतौ यशः शेषीभूते
शशिनि गतधाम्नि[8] ग्रहगणे । तथा ध्वान्तं जातं जगदुपनते मेघसमये यथाऽमी गण्यन्ते तमसि पटवः
कीटमणयः ॥ ७ ॥

## मृगेन्द्रान्योक्तिनिदर्शनम् ।

एकोऽहमसहायो[9]ऽहं कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ १ ॥ मृगेभ्यो
मृगेन्द्रं वा मृगारिं वा सुखं व्याहरतां जनः । तस्योभयमपि व्रीडा क्रीडादलितदन्तिनः ॥ २ ॥ मृगैर्नष्टं शशैर्लीनं
रक्ष्यते क्षेत्रं नरैस्तृणमयैरपि । सिंहाक्रान्तं पुनर्मूढ न हयैर्न च दन्तिभिः ॥ ३ ॥ मृगैर्नष्टं शशैर्लीनं
वराहैश्चलितं स्थलात् । हयानां हेषितं श्रुत्वा सिंहैः पूर्ववदासितम्[10] ॥ ४ ॥ खनन्नाखुबिलं सिंहः
पाषाणशकलाकुलम् । प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ ५ ॥ जीर्णोऽपि क्रम[11]हीनोऽपि
कृशोऽपि यदि केसरी । तथाऽपि यूथनाथस्य[12] शङ्कातङ्काय कल्पते ॥ ६ ॥ नाभिषेको न संस्कारः सिंहस्य

---

१ भ्रकुटीनाम् । २ कुमुद- । पृथिवीमण्डल- । ३ दिनमणेः । ४ गगने । ५ प्रकाशशीलाः । ६ सूर्यः । ७ दर्शनव्यापारशून्यम् । ८ हतप्रकाशे । ९ परिवाररहितः । १० स्थितम् ११ क्रमः पराक्रमः । १२ गजराजस्य ।

क्रियते वने । विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ ७ ॥ वेतण्ड[1]गण्डकण्डूतिपाण्डित्यपरिपन्थिना[2] । हरिणा[3] हरिणालीषु[4] कथ्यतां कः पराक्रमः ॥ ८ ॥ उत्तुङ्गमत्तमातङ्गमस्तकन्यस्तलोचनः । आसन्नेऽपि च सारङ्गे न वाञ्छां कुरुते हरिः ॥ ९ ॥ जातः स्तन्यं न जग्राह कण्ठीरव[6]किशोरकः । चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥ १० ॥ वरमुन्नतलाङ्गूलात्सटाधूननभीषणात् । सिंहात्पादप्रहारोऽपि न शृगालाधिरोहणम् ॥ ११ ॥ शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक । कुले तस्मिन्प्रजातोऽसि गजो यत्र निहन्यते ॥ १२ ॥ यस्मिञ्जीवति सिंहे वनमिदमासीद्दुरासदं द्विरदैः[8] । घटयन्ते कटिसूत्रं तस्य सटाभिः शबरशिशवः ॥ १३ ॥ एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे । सत्त्वोच्छ्रिते मृगपतौ राजेति गिरः परिणमन्ति ॥ १४ ॥ अनिशं मतंगजानां[11] बृंहितमाकर्ण्यते[12] यथा विपिने । मन्ये तथा न जीवति गजेन्द्रपलकवलनः सिंहः ॥ १५ ॥ यद्यपि च दैवयोगात्सिंहः पतितोऽतिदुस्तरे कूपे । तदपि च वाञ्छति सततं करिकुम्भविदारणं मनसि ॥ १६ ॥ यद्यपि रटति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः । तदपि न कुप्यति सिंहोऽप्यसदृशपुरुषेषु कः कोपः ॥ १७ ॥ यद्यपि सिंह मृगेन्द्रस्त्वमसि प्रथितः स्वविक्रमादेव । तदपि गजेन्द्रपदं ते यावन्न कथं प्रतापः स्यात् ॥ १८ ॥ कामं शुनको नृपतिप्रसादतः स्याद्गजेन्द्रमौलिस्थः । भवतेव तेन सह रे नार्दयितुं शक्यते जातु ॥ १९ ॥ त्वत्त्रासान्मृगयूथे विलीयते क्वापि तन्न वैचित्र्यम् । यन्मदमत्ताः प्रथिताः करिणोऽपि क्वापि लीयन्ते ॥ २० ॥ जठरज्वलनज्ज्वलताऽप्यपगतशङ्कं समागताऽपि पुरः । करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम् ॥ २१ ॥ हेलाविदलितकरिकुलकण्ठीरव कीदृशः प्रकोपोऽयम् । लोले बालशृगाले केवलकोलाहलाधारे ॥ २२ ॥ गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि । हरिशिशुरुत्पतितुं द्राग्[13]गङ्गान्याकुञ्च्य लीयते निभृतम् ॥ २३ ॥ वयोऽभिमानादपमानता चेद्विधीयते फेरु[14]जरत्तरेण । हेलाहतानेककरीन्द्रयूनोर्हरीन्द्रसूनोर्नहि काऽपि हानिः ॥ २४ ॥ भिनत्ति भीमं करिराजकुम्भं बिभर्ति वेगं पवनादतीव । करोति वासं गिरिगह्वरेषु तथाऽपि सिंहः पशुरेव नान्यः ॥ २५ ॥ गम्यते यदि मृगेन्द्रमन्दिरे लभ्यते करिकपोलमौक्तिकम् । जम्बुकालयगतेन लभ्यते वत्सपुच्छखुरचर्मखण्डनम् ॥ २६ ॥ येन भिन्नकरिकुम्भविस्खलन्मौक्तिकावलिभिरञ्चिता[15] मही । अद्य तेन हरिणान्तिके कथं कथ्यतां नु हरिणा पराक्रमः ॥ २७ ॥ हरिरलसविलोचनः सहेलं बलम्[16]अवलोक्य पुनर्जगाम निद्राम् । अधिगतपतिविक्रमास्तभीतिर्न तु वनिताऽस्य[17] विलोकयाञ्चकार ॥ २८ ॥ उत्तुङ्गशैलशिखरस्थितपादपस्य काकोऽपि पक्वफलमालभते सपक्षः । सिंहो बली गजविदारणदारुणोऽपि सीदत्यहो तरुतले खलु हीनपक्षः ॥ २९ ॥ अन्तर्बलान्यहममुष्य मृगाधिपस्य वाचा निवेद्य कथमद्य लघूकरोमि । जानन्ति किंतु करज[18]क्षतकुम्भि[19]कुम्भनिर्मुक्तमौक्तिकमयानि वनान्तराणि ॥ ३० ॥ आबद्धकृत्रिमसटा[20]जटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा । मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य ॥ ३१ ॥ भिन्ना महागिरिशिलाः करजाग्रजाग्रदुद्दामशौर्यनिकरैः करटि[21]भ्रमेण । दैवे पराञ्चि[22] करिणामरिणा तथाऽपि कुत्रापि नापि खलु हा पिशितस्य[23] लेशः ॥ ३२ ॥ पारीन्द्र[24]शावक न तावकरीतिरेषा वेशान्तरैर्विहरसि श्वशृगालशावैः । कुम्भीन्द्र-

---

१ वेतण्डो गजः । २ परिपन्थी शत्रुः । ३ सिंहेन । ४ मृगश्रेणीषु । ५ मृगे । ६ कण्ठीरवः सिंहः । ७ सिंह्या इयमुक्तिः । ८ हस्तिभिः । ९ राजलक्ष्मभूतच्छत्रादिशून्ये । १० सत्त्वं विक्रमः । ११ हस्तिनाम् । १२ श्रूयते । १३ झटिति । १४ अतिवृद्धेन शृगालेन । १५ शोभिता कृता । १६ सैनिकगणम् । १७ सिंहस्य । १८ नख- । १९ गज- । २० सिंहकेसर-- । २१ हस्ति- । २२ प्रतिकूले । २३ मांसस्य । २४ पारीन्द्रः सिंहः ।

कुम्भदलनोत्पतनाक्रमेच्छां वंशोचितां न खलु रीतिमुरीकरोषि ॥ ३३ ॥ उत्प्लुत्य यः शिखरिणं मद-
कुम्भिकुम्भमुद्भिद्य सानुशतमायतमुल्ललङ्घे । पञ्चानँनो[1] नियतया जरयाऽभिभूतः सोऽयं करौ लिहति बृंहित-
लोहिताक्षः ॥ ३४ ॥ दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्या[2]स्पदमसमशीलाः
खलु मृगाः । इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः
॥ ३५ ॥ न यत्र स्थेमा[3]नं दधुरतिभयभ्रान्तनयना गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः । लुठन्मुक्ता-
भारे भवति परलोकं गतवतो हरेरद्य द्वारे शिव शिव शिवा[4]नां कलकलः ॥ ३६ ॥ कुरङ्गीणां यूथं
निभृतमिदमङ्गीकृतमयं निरातङ्को यन्निर्दयहृदयभावोऽर्दयतु तत् । निवेद्यो वा कस्मिन्नयमविनयः केसरि-
युवा हठान्मत्तेभानां युवतिषु विधत्ते नखपदम् ॥ ३७ ॥ स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण
सखे गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि । असौ कुम्भिभ्रान्त्या खरनखरनिर्दारितमहागुरुग्रावग्रामः
स्वपिति गिरिगर्भे हरिपं[5]तिः ॥ ३८ ॥ पिब स्तन्यं पोत त्वमिह मददन्तावलधिया दृगन्तानाधत्से
किमिति हरि[6]र्दन्तेषु परुषान् । त्रयाणां लोकानामपि हृदयतापं परिहरन्नयं धीरं धीरं ध्वनति नवनीलो
जलधरः ॥ ३९ ॥ क्षुद्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धतास्तस्यैकस्य पुनः स्तवीमहि महः
सिंहस्य विश्वोत्तरँम्[7] । केलिः कोलकुलैर्मदो मदकलैः कोलाहलो नाहलै[8]ः संहर्षो महिषैश्च यस्य मुमुचे
साहङ्कृते हुङ्कृते ॥ ४० ॥ कोलः केलिमलङ्करोतु करिणः क्रीडन्तु कान्तासखाः कासा[9]रे वनकासराः
सरभसं मज्जन्त्विह स्वेच्छया । अभ्यस्यन्त्विभ[10]योषितश्च हरिणा भूयोऽनुरूपां गतिं कान्तारान्तरसञ्चरिष्णु-
रधुना पञ्चाननो वर्तते ॥ ४१ ॥ नास्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घः क[11]रैः सत्यं वारण
नैष केसरिशिशुः स्वाडम्बरैः स्पर्धते । तेजोबीजमजेयमस्य हृदये न्यस्तं पुनर्वेधसा तादृक्त्वादृशमेव येन
सुतरां भोज्यं पशुं मन्यते ॥ ४२ ॥ क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशामापन्नोऽपि
विपन्नधीधृतिरपि प्राणेषु गच्छत्स्वपि । मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः किं जीर्णं तृणमत्ति
मानमहतामग्रेसरः केसरी ॥ ४३ ॥ येनानर्गलकालकेलिकलितप्रत्य[12]ग्रकादम्बि[13]नीधाराधोरणिधौतधातुषु
पुरा शैलेषु लीलायितम् । सोऽयं शृङ्गनिपातभग्नचरणः स्फारस्फुरत्फेर[14]वीफूत्कारैः कुपितोऽद्य खादति
मुहुः पाणी मृगग्राम[15]णीः ॥ ४४ ॥ ग्रामाणामुपशल्य[16]सीमनि मदोद्रेकस्फुरत्सौष्ठवाः फेत्कारध्वनिमुद्गिरन्ति
बहवः संभूय गोमायवः । सोऽन्यः कोऽपि घनाघनध्वनिघनः पारीन्द्र[17]गुञ्जारवः शुष्यद्गण्डमलोलशुण्ड-
मचलत्कर्णं गजैर्यः श्रुतः ॥ ४५ ॥ एणै[18]ः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते क्रोष्टा क्रन्दति
वल्गते च शशको वेगाद्रुरुर्धावति । निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया हंहो सिंह विना
त्वयाऽद्य विपिने कीदृग्दशा वर्तते ॥४६ ॥ हे मातङ्ग मदाम्बुडम्बरतया रोलम्बरोलं वहद्वन्यानामवलम्बनं
वनमिदं भङ्क्तुं यदुत्कण्ठसे । दृष्टस्तत्किमहो महोन्नतधराधौरेय[19]धात्रीधरप्रस्थप्रस्थितमेघयूथमथनोत्कण्ठी न
कण्ठीरवः ॥ ४७ ॥ यस्यावन्ध्य[20]रुषः प्रतापवसतेर्नादेन धैर्यद्रुहः शुष्यन्ति स्म मदप्रवाहसरितः सद्योऽपि
दिग्दन्तिनाम् । दैवात्कष्टदशावशं गतवतः सिंहस्य तस्याधुना कर्षन्त्येव करेण केसरसटाभारं जर[21]-
त्कुञ्जराः॥४८॥यः शौर्याम्बुधिरेव यस्य सहसा दिग्दन्तिनोऽप्यन्तिकं नायाताः किल येन विन्ध्यवसुधा
गम्या न कस्याप्यभूत् । तस्मिन्कौतुकिना त्वया करिपतौ लुप्ते कपोलस्थलीभङ्गः केसरिवीर संप्रति पुनः

---

१ सिंहः । २ 'वेदाः प्रमाणम्' इतिवदन्वयः । ३ स्थिरत्वम् । ४ शृगालीनाम् । ५ सिंह-वर्यः । ६ दिगन्तेषु । ७ अलौकिकम् । ८ म्लेच्छविशेषैः । ९ तटाके । १० हस्तिन्यः । ११ शुण्डा-दण्डः । १२ नवीन- । १३ 'कादम्बिनी मेघमाला' इत्यमरः । १४ शृगाली । १५ मृगराजः । १६ समीपभागे । १७ सिंह- । १८ मृगः । १९ धौरेयोऽग्रणीः । २० निष्फल- । २१ वृद्ध- ।

कुत्रैष विश्राम्यतु ॥ ४९ ॥ यूना येन विभिन्नवारणघटाकुम्भोच्छलन्मौक्तिकश्रेणीभिः परिपूरितास्तटभुवो भूमीभृतां कोटिशः । तस्यैवाद्य निवाससीम्नि कलभाः[1] क्रीडन्ति निःसाध्वसं[2] पारीन्द्रस्य[3] जराऽऽतुरस्य तदहो जीर्णो जिगीषारसः ॥५०॥कः कैः कुत्र न घुर्घरायितघुरीघोरो घुरेच्छूकरः कः कः कं कमलाकरं विमलकं कर्तुं करी नोद्यतः । के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ ५१ ॥ मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के । कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः[4] पुनः सिन्धुध्वानिनि[5] हुङ्कृते स्फुरति यत्तद्गर्जितं गर्जितं ॥ ५२ ॥ काकः पक्षबलेन भूपतिगृहे ग्रासं यदि प्राप्तवान्किंवा तस्य महत्त्वमस्य लघुता पञ्चाननस्यागता । येनाक्रम्य करीन्द्रगण्डयुगलं निर्भिद्य हेलालवाल्लब्ध्वा ग्रासवरं वराटकधिया मुक्तागणस्त्यज्यते ॥ ५३ ॥ निद्रामीलितलोचनो मृगपतिर्यावद्गुहां सेवते तावत्स्वैरममी चरन्तु हरिणाः स्वच्छन्दसंचारिणः । उन्निद्रस्य विधूतकेसरसटाभारस्य निर्गच्छतो नादे श्रोतृपथं गते गतधियः सन्त्वेव दीर्घायुषः ॥ ५४ ॥ स्मेराः सन्तु सभासदः करिचमूदर्पज्वरोत्सारिणा हर्यक्षेण[6] समं च जम्बुकयुवा युद्धाय बद्धादरः । तत्रापि प्रथयन्ति तुल्यबलतामेके तयोरुच्चकैरन्ये संशयशंसिनस्तदपरे बाढं विपर्यासिनः ॥ ५५ ॥ हे हर्यक्ष सहस्व संप्रति लघुर्गोमायुरग्रे सतां मत्साधारणवन्यजन्तुमनसा गुञ्जारवं संव्यधात् । नीचानां प्रकृतिर्भ्रमो मुखरता चातः कथं खिद्यसे शार्दूले द्विरदे मृगे शशकुले कस्ते विपक्षग्रहः ॥ ५६ ॥ दिङ्नागाः प्रतिपेदिरे प्रथमतो जात्यैव जेतव्यतां संभाव्य स्फुटविक्रमोऽथ वृषभो गौरेव गौरीपतेः । विक्रान्तेर्निकषं करोतु कतमं नाम त्रिलोकीतले कण्ठेकालकुटुम्बिनीकरुणया सिक्तः[9] स कण्ठीरवः[10] ॥ ५७ ॥

## गजान्योक्तिनिदर्शनम् ।

गजस्य पङ्कमग्नस्य त्रपाकरमिदं महत् । पादमुद्धृत्य यद्गच्छन्हरिणोऽपि हसत्यसौ ॥ १ ॥ मलोत्सर्गं गजेन्द्रस्य मूर्ध्नि काकः करोति चेत् । कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥ २ ॥ ग्रासाद्गलितसिक्थस्य[11] किं गतं करिणो भवेत् । पिपीलिका तु तेनैव सकुटुम्बाऽपि जीवति ॥ ३ ॥ बन्धनस्थो हि मातङ्गः सहस्रभरणक्षमः । अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः ॥ ४ ॥ अन्तर्वसति मार्जारी शुनी वा राजवेश्मनि । बहिर्बद्धोऽपि मातङ्गस्ततः किं लघुतां गतः ॥ ५ ॥ रवितप्तो गजः पद्मांस्तद्गृह्यान्बाधितुं ध्रुवम् । सरो विशति न स्नातुं गजस्नानं हि निष्फलम् ॥ ६ ॥ कौपे[12] पयसि लघीयसि तापेन करः प्रसारितः करिणा । सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥ ७ ॥ यदि मत्तोऽसि मतंगज किममीभिरसारसरलतरुदलनैः।हरिमनुसर[13] खरनखरं[14] व्यपनेष्यति ते स करटकण्डूतिम्[15] ॥ ८ ॥ कलभ तवान्तिकमागतमलिमेनं मा कदाऽप्यवज्ञासीः । अपि दानसुन्दराणां द्विपधुर्याणामयं शिरोधार्यः ॥ ९ ॥ लीलामुकुलितनयनं किं सुखशयनं समातनुषे । परिणामविषमहरिणा करिनायक वर्धते वैरम् ॥ १०॥ आपातालगभीरे मज्जति नीरे निदाघसन्तप्तः । न स्पृशति पल्वलाम्भः पञ्जरशेषोऽपि[16] कुञ्जरः क्वापि ॥ ११ ॥ सूते सूकरगृहिणी सुतशतमतिदुर्भगं झटिति ।

---

१ करिशिशवः । २ निर्भयं यथा भवेत्तथा । ३ सिंहस्य । ४ अत्र कस्कादित्वाद्विसर्जनीयस्य सत्त्वं यद्यपि युज्यते, तथाऽपि वाच्यसिंहौद्धत्यप्रतिकूलत्वं स्मरता कविना न कृतमिति बोध्यम् । ५ गजाः । ६ समुद्रसदृशे । ७ सिंहेन । ८ पराक्रमस्य । ९ कण्ठेकालो महादेवः । १० सिंहः । ११ सिक्थः क्षुद्रो भागः । १२ कूपसम्बन्धिनि । १३ सिंहम् । १४ तीक्ष्णनखम् । १५ गजगण्ड- । १६ शरीरास्थिपुञ्जमात्रावशिष्टः ।

कारिणीं चिराय सूते कमपि महीपाललालितं कलभम् ॥ १२ ॥ गजराज सिंहविक्रममवगन्तुमलं
चेत्त्वमेवैकः । तव विक्रममवगन्तुं सिंहोऽलं नेतरः कश्चित् ॥१३॥ यदि ननु विक्रममत्तः प्रथितो गज-
राज एव वा सिंहः । दानविशेषोत्सर्गे विशिष्यते सिंहतः स पुनः ॥ १४ ॥ मुक्ता बिभर्षि कुम्भे
दानकर त्वं ततस्तव स्थाने । लब्ध्वा त्वामेव करिन् हरिः पदं स्वं करोति मुक्ताऽऽढ्यम् ॥१५॥ यद्यपि
गजेन्द्रपदवीं न ददासि हरिं प्रति प्रभूतवीर्यं स्वाम् । तदपि स गजेन्द्र तव कुलहन्तृपदत्वं स्वसा-
त्कुरुते ॥ १६ ॥ गजराज दानसलिलं विसृजसि न तु मौक्तिकादीनि । इति तव दानं सफलं
कर्त्तुं वनराट् त्वयि क्रूरः ॥ १७ ॥ गिरिगह्वरेषु गुरुगर्वगुम्फितो गजराजपोत न कदाऽपि संचर । यदि
बुध्यते हरिशिशुः स्तनन्धयो भविता करेणुपरिशेषिता मही ॥ १८ ॥ केलिं कुरुष्व परिभुङ्क्ष्व सरो-
रुहाणि गाहस्व शैलतटनिर्झरिणीपयांसि । भावानुरक्तकरिणीकरलालिताङ्ग मातङ्ग मुञ्च मृगराजरणाभिलाषम्
॥ १९ भो भोः करीन्द्र दिवसानि कियन्ति तावदस्मिन्मरौ समतिवाहय कुत्रचित्त्वम् । रेवाजलै-
र्निजकरेणुकरप्रयुक्तैर्भूयः शमं गमयितासि निदाघदाहम् ॥ २० ॥ दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या । तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने चरन्ति
॥ २१ ॥ लाङ्गूलचालनमधश्चरणावपातं भूमौ निपत्य वदनोदरदर्शनं च । श्वा पिण्डदस्य कुरुते
गजपुङ्गवस्तु धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ २२ ॥ गण्डस्थले हि मदवारिजलौघलुब्धमत्तभ्रम-
भ्रमरपादतलाहतोऽपि । कोपं न गच्छति नितान्तबलोऽपि नागस्तुल्ये बले हि बलवान्परिकोपमेति॥२३॥
न स्वां करेणुमपि नापि निजान्किशोरानात्मानमेष परिशोचति वारणेन्द्रः । दावाग्निदग्धतनुरत्र यथोप-
सन्नान्दानार्थिनो मधुकरानविरूढभावान्॥२४॥दानं ददत्यपि जलैः सहसाऽधिरूढे को विद्यमानगति-
रासितुमुत्सहेत । यद्दन्तिनः कटकटाहतटान्मिमङ्क्षोर्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥ २५ ॥ न
गृह्णाति ग्रासं नवकमलकिञ्जल्किनि जले न पङ्केर्वाऽऽह्लादं विशति बिसभङ्गार्धशबलैः।ललन्तीं प्रेमार्द्रामपि
विषहते नान्यकरिणीं स्मरन्दावभ्रष्टां हृदयदयितां वारणपतिः ॥ २६ ॥ गले पाशस्तीव्रश्चरणयुगले
गाढनिगडो दृढं स्कन्धे बन्धः शिरसि सृणिपातः खरतरः । नरः स्कन्धारूढो बत मरणयोग्येऽपि
विषये न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः ॥ २७ ॥ निषेवन्तामेते वृषमहिषमेषाश्च हरिणा
गृहाणि क्षुद्राणां कतिपयतृणैरेव सुखिनः । गजानामास्थानं मदसलिलजम्बालितभुवां तदेकं विन्ध्याद्रे-
र्विपिनमथवा भूपसदनम् ॥२८ ॥ न कुर्याः प्राखर्यं किमपि करिपोत प्रतिभियाँ हरीणां हेलेयं यदिह बहु-
वेलं विहरसि । अकस्मादेतेषां कुटिलदशि रोषस्पृशि मनाङ् निरर्थं भाविन्योः मदकारिदारिद्रौ वनभुवः
॥ २९ ॥ जहीहि गुरुगर्जितं विजहि शुण्डया सीत्कृतं परिभ्रम शनैर्वनं किमु गजेन्द्र गर्वायसे । यथा न
किल केसरी गिरिदरीषु निद्रां त्यजन्विमूर्च्छयति जृम्भया सुभग तावकीनं मनः ॥ ३० ॥ रे चाञ्चल्य-
जुषो मृगाः श्रितनगाः कल्लोलमालाकुलामेतामम्बुधिगामिनीं व्यवसिताः संगाहितुं वा कथम् ।

---

१ गजशावकम् । २ हस्तिनी- । ३ निमज्जनं कुरु— । ४ निर्जलदेशे । ५ यापय । ६ मदाभिलाषिणः । उत्सर्गप्रार्थिन इति तु प्रतीतिमात्रम् । ७ प्रफुल्ल- । ८ पुङ्गवः श्रेष्ठः । ९ हस्तिनीम् । १० गजराजः । ११ प्रदानं, मदजलं च । १२ 'डलयोः' सावर्ण्यम्' इति नयेन पक्षान्तरे जडैरित्यप्यर्थः १३ आक्रान्ते । १४ सञ्जीवनोपायः, उपायज्ञश्च । १५ अवस्थातुम् । १६ गण्डरूपकटाहस्थलाघातात् । १७ मङ्क्तुमनसः । १८ झटिति । १९ उड्डयनमकारि । २० किञ्जल्किनि केसरिणि । २१ सृणिरङ्कुशः । २२ अतितीक्ष्णः । २३ गोष्ठीस्थलम् । २४ त्रासात् । २५ शून्याः ।

अत्रैवोच्छलदम्बुनिर्भरमहावर्तैः समावर्तितो यद्ग्रावेव रसातलं पुनरसौ यातो गजग्रामणीः ॥ ३१ ॥ नीवारप्रसवाग्रमुष्टिकवलैर्यो वर्धितः शैशवे पीतं येन सरोजपत्रपुटके होमावशेषं पयः । तं पश्चान्मदमन्थरालिवलयव्यालुप्तगण्डं गजं सानन्दं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः ॥ ३२ ॥ कर्णे चामरचारुकम्बुकलिका कण्ठे मणीनां गणा सिन्दूरप्रकरः शिरःपरिसरे पार्श्वान्तिके किङ्किणी । लब्धश्चेन्नृपवाहनेन करिणा बद्धेन भूषाविधिस्तत्किं भूधरधूलिधूसरतनुर्मान्यो न वन्यः करी ॥ ३३ ॥ पीतं यत्र हिमं[2] पयः कवलिता यस्मिन्मृणालाङ्कुरास्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तः श्रमः । त्वक्तस्यैव जलानि पङ्किलयतः पाथोजिनीं मश्नतो मूलान्युत्खनतः करीन्द्र भवतो लज्जाऽपि नो जायते ॥ ३४ ॥ तापो नापगतस्तृषा न च कृशा धौता न धूली तनोर्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा । दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी प्रारब्धो मधुपैरकारणमहो झाङ्कारकोलाहलः ॥ ३५ ॥ नाभूवन्भुवि यस्य कुत्रचिदपि स्पर्धाकराः कुञ्जराः सिंहेनापि न लङ्घिता किमपरं यस्योद्धता पद्धतिः । कष्टं सोऽपि कदर्थ्यते करिवरः स्फारारवैः फेरवैरापातालगभीरपङ्कपटलीमग्नोऽद्य भग्नोद्यमः ॥ ३६ ॥ पादाघातविघूर्णिता वसुमती त्रासाकुलाः पक्षिणः पङ्काङ्कानि सरांसि गण्डकषणक्षोदक्षताः शाखिनः । प्राप्येदं करिपोतकैर्विधिवशाच्छार्दूलशून्यं वनं तत्तन्नाम कृतं विशृङ्खलतया वक्तुं न यत्पार्यते ॥ ३७ ॥ आरामोऽयमनर्गलेन बलिना भग्नः समग्रो मयेत्यन्तः संभृतहर्षवर्धितमदोदग्रः किमुन्माद्यसि । मातङ्ग प्रतिवर्षमेव भवतो भावी निदाघज्वरस्तत्रापि प्रतिकारमर्हसि सखे सम्यक्समालोचितुम् ॥ ३८ ॥ कौपं वारि विलोक्य वारणपते किं विस्मितेनास्यते प्रायो भाजनमस्य संप्रति भवांस्तत्पीयतामादरात् । उन्मज्जच्छफरीपुलिन्द[6]ललनापीनस्तनास्फालनस्फारीभूतमहोर्मिनिर्मलजला दूरेऽधुना नर्मदा ॥ ३९ ॥ नो मन्ये दृढबन्धनात्क्षतमिदं नैवाङ्कुशाघातनं स्कन्धारोहणताडनात्परिभवं नैवान्यदेशागमम् । चिन्तां मे जनयन्ति चेतसि वृथा स्मृत्वा स्वयूथ्यान्वने सिंहत्रासितभीतभीरुकलभा यास्यन्ति कत्याश्रयम् ॥ ४० ॥ पत्युर्यत्पतितावशेषकवलग्रासेन वृत्तिः कृता पीतं यच्च करावगाहकलुषं तत्पीतशेषं पयः । प्राणान्पूर्वतरं विहाय तदिदं प्राप्तं करिण्या फलं यद्बन्धव्रणकातरस्य करिणः क्लिष्टं न दृष्टं मुखम् ॥ ४१ ॥ क्रीडाकारि तडागवारिणि गतातङ्कं न पङ्केरुहैर्वल्ली काचन शल्लकीतरुगता नाकर्षिता हर्षतः । नाश्लिष्टा करिणी करेण करिणा कामातुरेणामुना दंष्ट्राभिर्विकटेक्षणः शिव शिव व्यालोकि पञ्चाननः ॥ ४२ ॥ सान्द्रामोदवतीः स्वकीयवसतीः पङ्केरुहाणां ततीस्त्यक्त्वाऽयं भ्रमरः करीन्द्र भवतामभ्याशमभ्यागतः । एतच्चेतसि संप्रधार्य जगतीविख्यातदानैस्तथा युष्माभिः क्रियतां यथोपरमते हास्याय नास्यागमः ॥ ४३ ॥ त्यक्तो विन्ध्यगिरिः पिता भगवती माता च रेवोज्झिता त्यक्ताः स्नेहनिबद्धबन्धुरधियस्तुल्योदया दन्तिनः । त्वल्लोभान्नु हस्तिनि प्रतिदिनं बन्धाय दत्तं वपुस्त्वं दूरीक्रियसे लुठन्ति च शिरःपीठे कठोराङ्कुशाः ॥ ४४ ॥ स्पर्धन्तां सुखमेव कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा ग्राम्या वा वनवासिनो मदजलप्रस्निग्धगण्डस्थलाः । आः कालस्य कुतूहलं शृणु सखे प्राचीनपालीमलैः प्रायः स्निग्धकपोलपालिरधमः[11] कोलोऽपि संस्पर्धते ॥ ४५ ॥ यत्प्रत्यग्रदलावलीकवलनैर्जातोऽसि शैलोपमो यच्छायासु कदर्थितोऽसि न कदाप्यर्कांशुभिः कर्कशैः । घोराघातकिरातपत्रिपतने यैर्वीरबाणायितं तन्मातङ्ग मदान्ध पाटयसि किं विन्ध्याटवी

---

१ धान्यविशेष- । २ शीतलम् । ३ मार्गः । ४ न्यक्क्रियते । ५ पात्रम् । ६ पुलिन्दः शबरः । ७ निर्भयं यथा स्यात्तथा । ८ सिंहः । ९ समीपम् । १० जगती पृथिवी तत्र प्रसिद्धवितरणैः, प्रसिद्धमदैश्च । ११ सूकरः । १२ नवीन- । १३ बाण- ।

पादपान् ॥ ४६ ॥ ऊर्णा नैव दधाति नापि विषयो वाहस्य दोहस्य वा तृप्तिर्नास्य महोदरस्य बहुशो घासैः पेलालैरपि । हा कष्टं कथमस्य पृष्ठशिखरे गोणी समारोप्यते को गृह्णाति कपर्दकैरसुमिति ग्राम्यैर्गजो हस्यते ॥ ४७ ॥ घासग्रासं गृहाण त्यज करिकलभ प्रीतिबन्धं करिण्याः पाशग्रन्थिव्रणानामविरलमधुना देहि पङ्कानुलेपम् । दूरीभूतास्तवैते शबरवरवधूविभ्रमोद्भ्रान्तदृश्या रेवातीरोपकण्ठच्युतकुसुमरजोधूसरा विन्ध्यपादाः ॥ ४८ ॥ यूथान्यग्रे गतानि प्रबलवलभृतो बद्धवैरा मृगेन्द्रा मूलादाकृष्यमाणाः सपदि तटरुहो भूरुहा निष्पतन्ति । दृष्ट्वा हृष्यन्ति हन्त प्रतिदिनमखिला भिल्लपल्ल्या अधीशा हस्तालम्बाय केषां कलयतु वदनं पङ्कमग्नः करीन्द्रः ॥ ४९ ॥ मुक्ता गुता यथेष्टं कुरु न मधुलिहः कामुकाः सन्त्यमी ते दानाम्भोमात्रलाभात्परमुपकृततामानिनो नागराज । तत्किं त्वं पुच्छकर्णप्रखरनिहतितो हन्त नष्टाः क्रियन्ते नैतेभ्योऽन्ये त्वदीयांककुभिककुभि वा मञ्जु गास्यन्ति कीर्तिम् ॥ ५० ॥

## कुरङ्गान्योक्तिनिदर्शनम् ।

दूर्वाङ्कुरतृणाहारा धन्यास्तात वने मृगाः[1] । विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥ १ ॥ पिबसि जलं त्वं समये खादसि समये यथामनो भ्रमसि । स्वपसि च रहसि सुतुष्टस्तन्मृग सुकृतीति मन्येऽहम् ॥ २ ॥ इह विचरन्ति किरातास्त्वादृक्स्वच्छन्दतानिहन्तारः । तदमीषां गानादौ मा धाः श्रवणे कुरङ्गशाव त्वम् ॥ ३ ॥ इह किं कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि । तृणधन्वा तृणबाणस्तृणघटितः कपटपुरुषोऽयम् ॥ ४ ॥ तृणमुखमपि न खलु त्वां त्यजन्ति हे हरिण वैरिणः शबराः । यशसैव जीवितमिदं त्यज योजितशृङ्गसङ्ग्रामः ॥ ५ ॥ विद्धा मृगी व्याधशिलीमुखेन मृगस्तु तत्कातरवीक्षितेन । विहाय देहं विगतव्यथैका परस्य जीवावधिराधिरासीत् ॥ ६ ॥ कति कति न मदोद्धताश्चरन्ति प्रतिशिखरं प्रतिकाननं कुरङ्गाः । क्वचिदपि पुनरुत्तमा मृगास्ते मदयति यन्मद एव मेदिनीशान् ॥ ७ ॥ अयि कुरङ्गि तपोवनविभ्रमादुपगताऽसि किरातपुरीमिमाम् । इह न पश्यसि दारय मारय ग्रस पिबेति शुकानपि जल्पतः ॥ ८ ॥ अयि कुरङ्गि तुरङ्गमविक्रमे त्यज वनं जवने गमनं कुरु । इह वने विचरन्ति हि नायकाः सुरभिलोहितलोहितसायकाः ॥ ९ ॥ सेयं स्थली वनतृणाङ्कुरजालमेतत्सेयं मृगीति हृदि जातमुदः कुरङ्गः । नैवं तु वेत्ति यदिहान्तरितो लताभिरायाति सज्जितकठोरशरः किरातः ॥ १० ॥ रोमन्थमारचय मन्थरमेत्य निद्रां मुञ्च श्रमं तदनु संचर रे यथेच्छम् । दूरे स पामरजनो मुनयः किलैते निष्कारणं हरिणपोत बिभेषि कस्मात् ॥ ११ ॥ एणीगणेषु गुरुगर्वनिमीलिताक्षः किं कृष्णसार खलु खेलसि काननेऽस्मिन् । सीमामिमां कलय भिन्नकरीन्द्रकुम्भमुक्तामयी हरिविहारवसुंधरायाः ॥ १२ ॥ कस्तूरिकां हरिण मुञ्च वनोपकण्ठं मा सौरभेण ककुभः सुरभीकुरुष्व । आस्तां यशो ननु किरातशराभिघातात्त्राताऽपि हन्त भविता भवतो दुरापः ॥ १३ ॥ द्रुततरमितो गच्छ प्राणैः कुरङ्ग वियुज्यसे किमिति वलितग्रीवं स्थित्वा मुहुर्मुहुरीक्षसे । विदधति हत-

---

१ धान्यत्वग्भिः । २ विन्ध्यसन्निहिताः पर्वताः । ३ प्रतिदिशम् । ४ सुन्दरं यथा तथा । ५ किरातानाम् । ६ धान्यमञ्जरीम् । ७ 'आधिर्ना मानसी व्यथा ।' इत्यमरः । ८ हे मृगि । ९ विभ्रमो भ्रान्तिः । १० तुरङ्गमस्य विक्रमो धावनमिव विक्रमो धावनं यस्तास्तत्सम्बुद्धौ यथोक्ते । ११ पलायनविषये । १२ रोमन्थश्चर्वितचर्वणम् । १३ एण्यो हरिण्यः । १४ कस्तूरीमृग । १५ निश्चिनुहि । १६ सिंह- । १७ वनसमीपे । १८ दिशः । १९ सुगन्धिताः कुरु ।

व्याधानां ते मनागपि नार्द्रतां कठिनमनसामेषामेते विलोकितविभ्रमाः ॥ १४ ॥ स्थलीनां दग्धानामुपरि मृगतृष्णा[1]मुपसरंस्तृषार्तः सारङ्गो[2] विरमति न खिन्नेऽपि मनसि। अजानानस्तत्त्वं न स मृगयतेऽन्यत्र सरसी-मभूमौ प्रत्याशा न च फलति विघ्नं च कुरुते ॥ १५ ॥ पुरो रेवापारे गिरिरतिदुरारोहशिखरो धनुष्पाणिः पश्चाच्छबरनिकरो धावति पुनः। सरः सव्येऽसव्ये दवदहनदाहव्यतिकरः क्व यामः किं कुर्मो हरिणशिशुरेवं विलपति ॥ १६ ॥ अग्रे व्याधः करधृतशरः पार्श्वतो जालमाला पृष्ठे वह्निर्दहति नितरां संनिधौ सारमेयाः[3]। एणी गर्भादलसगमना बालकै रुद्धपादा चिन्ताविष्टा वदति हरिणं किं करोमि क्व यामि ॥ १७ ॥ सौरभ्येण त्रिभुवनमनोहारिणा काननेऽस्मिन्सत्कस्तूरी-हरिण भवता वासितो[4] दिग्विभागः। तस्यैतत्ते फलमुपगतं पत्रिभिर्लुब्धकानां विद्धः प्राणांस्त्यजसि न गुणः श्रेयसे निर्गुणेषु ॥ १८ ॥ अल्पायासबलेन यत्र पतनं कृच्छ्रेण यत्रोन्नतिर्द्वारे वेत्रलता-वितानगहने कष्टः प्रवेशक्रमः। हे सारङ्ग मनोरमा वनभुवस्त्यक्त्वा विशेषार्थिना किं भूभृत्[5]कटक-स्थितिव्यसनिना व्यर्थं खुराः शातिताः[6] ॥ १९ ॥ सारङ्गो न लतागृहेषु रमते नो पांसुले भूतले नो रम्यासु वनोपकण्ठहरितच्छायासु शीतास्वपि। तामेवायतलोचनामनुदिनं ध्यायन्मुहुः प्रेयसीं[7] शैलेन्द्रोदरकन्दरासु गतधीः[8] शृङ्गावशेषः स्थितः ॥ २० ॥ आः कष्टं वनवाससाम्यकृतया सिद्धाश्रम-श्रद्धया पल्लीं बालकुरङ्ग संप्रति कुतः प्राप्तोऽसि मृत्योर्मुखम्। यत्रानेककुरङ्गकोटिकदनक्रोडोल्लस-ल्लोहितस्रोतोभिः परिपूरयन्ति परिखामुड्डामराः पामराः ॥ २१ ॥ स्वच्छन्दं हरिणेन या विहरता दैवात्समासादिता भङ्गप्रस्नुतदुग्धबिन्दुमधुरा शालेर्[9]नवा मञ्जरी। निःश्वासानलदग्धकोमल-तृणप्रत्यर्पितान्तर्व्यथस्तामेव प्रतिवासरं मुनिरिव ध्यायन्वने शुष्यति ॥ २२ ॥ त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली विश्रान्तिस्थितिहेतवो न गणिता बन्धूपमाः पादपाः। बाला-पत्यवियोगकातरमुखी त्यक्ताऽर्धमार्गे मृगी मृग्यन्तः[10] पदवीं तथाऽप्यकरुणा व्याधा न मुञ्चन्ति माम् ॥ २३ ॥ यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्[11]मृषा[12] नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि। काले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ २४ ॥ नात्र व्याधशराः पतन्ति परितो नैवात्र दावानलो नाप्युच्चावचभीतिरस्ति कुहचि[13]न्नो वागुरा[14] भङ्गुरा। पर्यालोच्य कुरङ्गकेण विहितो नक्षत्रनाथाश्रयो[15] नो जानाति यदत्र दास्यति विधिः स्व-र्भानु[16]दन्तव्रणम् ॥ २५ ॥ व्योमार्धे ज्वलितो रविः कवलितं दावानलैः काननं धूम्याभिर्न दिशः स्फुरन्ति परितः पन्थाः शिला[17]दन्तुरः। इत्थं लोहितसिक्तसृक्किणि[18] यथाप्राणं मृगे धावति व्याधेनापि शरासने करुणया नारोपितः सायकः ॥ २६ ॥ भुक्त्वा भव्यतृणानि नव्यसलिलान्यापीय वापीतलान्निःशङ्कं परिशील्य शीतलतरून्रोमन्थमभ्यस्यति। या सैवाद्य मृगी मृगारि[19]मुखप्राप्ता शिशुं शोचते तद्वेधा बहुधा विपद्विरचने बीजानि नापेक्षते ॥ २७ ॥ पाशक्षुण्णखुरस्य बाणपतनप्रव्यक्तरक्तच्छटाछन्नाङ्गस्य दवाग्नि-दाहविकलस्यासेदुषो[20]ऽप्याश्रमम्। धिग्दैवं विषमा मृगस्य दिवसाः सर्गानुकम्पामयो मा भैषीरिति भाषणेऽपि यदभूद्वाचंयमोऽयं मुनिः ॥ २८ ॥ अग्रे कुग्रामवर्गः पिशितै[21]रसलसच्चण्डचण्डायमानः

---

१ मृषालिप्साम्। २ मृगः। ३ शुनकाः। ४ सुगन्धितः। ५ पर्वत-। ६ घातिताः। ७ मृगीम्। ८ आसक्तान्तकरणः। ९ धान्यस्य। १० अन्वेषणपराः। ११ प्ररोचनशब्दान्। १२ व्यर्थम्। १३ कुत्रापि। १४ बन्धनजालम्। १५ नक्षत्रनाथश्चन्द्रः। १६ राहु-। १७ तीक्ष्णपाषाणदुर्गमः। १८ सृक्कौष्ठप्रान्तभागः। १९ व्याघ्र-। २० आगच्छतः। २१ पिशितं मांसम्।

पश्चाद्व्याधो वधार्थी निशितशरकरः पादमुद्रानपायी । विष्वग्दीप्तो वनाग्निर्वनमतिगहनं धूमवात्या च दृष्टिः संरोद्धी कान्दिशीको हरि हरि हरिणः कं शरण्यं प्रयातु ॥ २९ ॥

## उष्ट्रान्योक्तिनिदर्शनम् ।

वपुर्विषमसंस्थानं कर्णज्वरकरो रवः । करभस्याशुगत्यैव छादिता दोषसंहतिः ॥ १ ॥ दासेरको रसत्येष युक्तं भारेऽधिरोहति । उत्तार्यमाणोऽपि पुनर्यत्तत्र किमु कुर्महे ॥ २ ॥ तुभ्यं दासेर दासीयं बदरी यदि रोचते । एतावता हि किं द्राक्षा न साक्षादमृतप्रिया ॥ ३ ॥ दुष्प्रापमम्बु पवनः परुषोऽतितापी छायाभृतो न तरवः फलभारनम्राः । इत्थं सखे करभ वच्मि भवन्तमुच्चैः का संगतिः खलु मरौ रमणीयतायाः ॥ ४ ॥ अस्याननस्य भवतः खलु कोटिरेषा कण्टारिका यदि भवेदविशीर्णपर्णा । योग्या कथं करभ कल्पतरोर्लतायास्ते पल्लवा विमलविद्रुमभङ्गभाजः ॥ ५ ॥ रूक्षं वपुर्न च विलोचनहारि रूपं न श्रोत्रयोः सुखदमारटितं कदाऽपि । इत्थं न साधु तव किंचिदिदं च साधु तुच्छे रतिः करभ कण्टकिनि द्रुमे यत् ॥ ६ ॥ कुमुदशबलैः फुल्लाम्भोजैः सरोभिरलंकृतां मरकतमणिश्यामां शष्पैर्विहाय वनस्थलीम् । स्मरति करभो यद्वृक्षाणां चरन्मरुधन्वनां परिचयरतिः सा दुर्वारा न सा गुणवैरिता ॥ ७ ॥ करभदयिते योऽसौ पीलुस्त्वया मधुलुब्धया व्यपगतघनच्छायस्त्यक्तो न सादरमीक्षितः । चलकिसलयः सोऽपीदानीं प्ररूढनवाङ्कुरः करभदयितावृन्दैरन्यैः सुखं परिभुज्यते ॥ ८ ॥ करभदयिते यत्तत्पीतं सुदुर्लभमेकदा मधु वनगतं तस्यालाभे विरौषि[10] किमुत्सुका । कुरु परिचितैः पीलोः पत्रैर्धृतिं मरुगोचरैर्जगति सकले कस्यावाप्तिः सुखस्य निरन्तरा ॥ ९ ॥ यस्मिन्नुच्चैर्विषमगहनान्तर्गता स्वादुवल्ली स्वेच्छं भुक्ता सरलितगलेनात्मचेतोऽनुलग्ना । तत्तारुण्यं करभ गलितं कुत्र ते प्राग्विलासा यत्स्वाधीनं यदपि सुलभं तेन तुष्टिं विधेहि ॥ १० ॥ चिन्तां मुञ्च गृहाण पल्लवमिदं प्लक्षस्य शालस्य वा गाङ्गस्यास्य जलस्य चन्द्रवपुषो गण्डूषमेकं पिब । जीवन्द्रक्ष्यसि ताः पुनः करभ हे दासेरकीया भुवो रम्याः पीलुशमीकरीरबदरीकूजत्कपोताकुलाः ॥ ११ ॥ यस्यासीन्नवपीलुपत्रबदरग्रासोऽपि संतुष्टये दीर्घाध्वन्यनुगम्यते न पदवी यस्य स्वयूथ्यैरपि । सोऽयं संप्रति याति बालकरभः क्षीणोद्यमः क्षामतां मन्ये नूनमनेन दैवहतकेनास्वादितं तन्मधु ॥ १२ ॥ पीलूनां फलवल्कषायमधुरं रोमन्थयित्वा मरौ शाखाऽग्रं यदखादि चारु करभीवक्त्रार्पितं प्रेमतः । तत्स्मृत्वा करभेण खेदविधुरं दीर्घं तथा फूत्कृतं प्राणानामभवत्तदेव सहसा प्रस्थानतूर्यं यथा ॥ १३ ॥ यस्याः संभृतमालवालवलयं भूपालशृङ्गारिणीभृङ्गारोदरविप्रलम्भविधुरैर्नीरैः सुधाबन्धुभिः । तामेतां मृदुलप्रवाललुलितां द्राक्षालतामारटन्नुद्ग्रीवः प्रकटीकृतार्धदशनो दासेरकः कृन्तति ॥ १४ ॥

## गर्दभान्योक्तिनिदर्शनम् ।

रे रे गर्दभ वामः शब्दस्ते सम्मतो मुदे नृणाम् ॥ पुनरपि कथमिव निन्द्यो निगद्यसे तन्न जानीमः ॥ १ ॥ गर्दभ रसिको नान्यो भवानिवात्रावलोक्यते कश्चित् । पादाहतिं न गणयन्ननुधावसि यत्प्रियां स्तुवन्नुच्चैः ॥ २ ॥ रे रे रासभ[11] वस्त्रभारवहनात्कुग्रासमश्नासि किं राजाश्वावसथं[12] प्रयाहि चणका[13]भ्यूषा-

---

१ उष्ट्रशिशोः । २ वेगगमनेनैव । ३ उष्ट्रः । ४ अनिपतितपत्रा । ५ आरटितं शब्दः । ६ कुमुदमिश्रितैः । ७ हरिततृणैः । ८ वृक्षविशेषः । ९ चञ्चलकोमलंनूतनपत्रः । १० नदसि । ११ गर्दभ । १२ स्थानम् । १३ हरितचणकान् ।

न्सुखं भक्षय । सर्वान्पुच्छवतो हया इति वदन्त्यत्राधिकारे स्थिता राजा तैरुपदिष्टमेव मनुते सत्यं तटस्थाः परे ॥ ३ ॥

## वृषभान्योक्तिनिदर्शनम् ।

नास्य भारग्रहे शक्तिर्न च वाहगुणः क्वचित् । देवागारे बलीवर्दस्तथाऽप्यश्नाति भोजनम् ॥ १ ॥ वृषभ त्वमसि महीयान्धर्ममयस्त्वं निगद्यसे निगमैः । शिववाहकता तेन स्थाने ते शोभते दिष्ट्या॥ २॥ त्वमसि गवीशो लोके दृष्टचरो विश्रुतो विधाता वा । इति तव धर्ममयत्वं साम्प्रतमिति मन्यते कैर्न॥ ३॥ गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते । असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥ ४ ॥ जाल्मो गुरुः सुदृष्टो वामेतरचरणभेद उपदेशः । ख्यातिर्गुणधवल इति भ्रमसि सुखं वृषभ रथ्यासु ॥ ५ ॥ अनसि सीदति सैकतवर्त्मनि प्रचुरभारभरक्षपितोक्षके । गुरुभरोद्धरणोद्धरकन्धरं स्मरति सारथिरेष धुरन्धरम् ॥ ६ ॥ एतानि बालधवल प्रविहाय कामं गोष्ठाङ्गणे तरलतर्णकचेष्टितानि । स्कन्धं निधेहि धुरि पूर्वधुरीणमुक्ते नेतव्यतामुपगतोऽस्ति तवैव भारः ॥ ७ ॥ गुरुर्नायं भारः क्वचिदपि न पन्थाः स्थपुटितो न ते कुण्ठा शक्तिर्वहनमपि तेऽङ्ग न विकलम् । इह त्वङ्ग नान्यस्तव गुणसमानस्तदधुना धुनानेन स्कन्धं धवल किमु मुक्तः पथि भरः ॥ ८ ॥ मार्गे कर्दमदुर्गमे जलभृते गर्ताशतैराकुले खिन्ने शाकटिके भरेऽतिविषमे दूरं गते रोधसि । शब्देनैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनीमीदृक्षे विषमे विहाय धवलं वोढुं क्षमः को धुरम् ॥ ९ ॥ दन्ताः सप्त चलं विषाणयुगलं पुच्छाञ्चलः कर्बुरः कुक्षिश्चन्द्रकितो वपुः कुसुमितं संघूर्णितं चेष्टितम् । अस्मिन्दुष्टवृषे मृषा मितगुणग्रामानभिज्ञात्मनो ग्रामीणस्य तथाऽपि चेतसि चिरं धुर्यभ्रमः स्फूर्जति ॥ १० ॥ केषांचिद्धवलाश्चिरं निवसिताश्चित्ते परेषां पुनर्नीलो वा कपिलोऽथवा वरवृषो रक्तोऽथवा मेचकः । ग्रामीणैरवधीरितोऽपि शिथिलस्कन्धोऽप्यनुच्चैःश्रवाः स्वान्ते मे परतन्त्रतुन्दिलतनूर्जागर्त्ययं कर्बुरः ॥ ११ ॥ न ध्वानं कुरुषे न यासि विकटं नोच्चैर्वहस्याननं दर्पान्नोल्लिखसि क्षितिं खुरपुटैर्नावज्ञया वीक्षसे । किंतु त्वं वसुधातलैकधवलः स्कन्धाधिरूढे भरे तीराण्युच्चतटीविटङ्कविषमाण्युल्लङ्घयन्क्षीयसे ॥ १२ ॥ यस्यादौ व्रजमण्डनस्य वहतो गुर्वीं धुरं धैर्यतो धौरेयैः प्रगुणीकृतो न युगपत्स्कन्धः समस्तैरपि । तस्यैव श्लथकम्बलस्य धवलस्योत्थापने सांप्रतं व्रेङ्गेऽत्रैव जरावसादिततनोर्गोः पुण्यमुद्घोष्यते ॥ १३ ॥

## वानरान्योक्तिनिदर्शनम् ।

हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः । लेढि जिघ्रति संक्षिप्य करोत्युन्नतमाननम् ॥ १ ॥ वानर रामकृपातश्चपलत्वं नातिनिन्द्यते लोकैः । पर्यट भुङ्क्ष्व यथेष्टं फलानि पक्वानि वृक्षाणाम् ॥ २ ॥ लुभ्यसि दशसि च खादसि हंसि च पात्राणि दर्शयस्यौग्र्यम् । इति बत बहुविधदोषाकरः कपे त्वं परं जगति ॥ ३ ॥ कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः । अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥ ४ ॥ वृक्षान्दोलनमद्य ते क नु गतं नर्म स्वयूथस्य वा यूकान्वेषणरोष-

---

१ अलसो वृषोवत्सवारो वा । २ दोषात् । ३ धुर्वहनक्षमः । ४ क्षुद्रमार्गेषु । ५ शकटे । ६ वालुकाप्रचुरे मार्गे । ७ चञ्चलवत्स- । ८ शकटाधीश्वरे । ९ अत्र सम्प्रसारणाभावश्छन्दोभङ्गभियैव । १० तिरस्कृतः । ११ नगराभ्यन्तरे । १२ खादति । १३ मद्य- ।

सौख्यबहुलाश्चेष्टा मुखोत्थाः क ताः । कारण्ये फलपूर्णगल्लकुहरस्यान्येषु ता भीषिका भीतः संप्रति कौशिकाद्गलवलद्व्यालः कपे नृत्यसि ॥ ९ ॥

## सूकरान्योक्तिनिदर्शनम् ।

उदरम्भरिता लोके तवैव नान्यस्य दुःशका दृष्टा । उत्सृष्टपुरीषमपि स्वादूकुर्वन्वराह यद्भुङ्क्षे ॥ १ ॥ सर्वलोकपरितोषकारिणि स्वर्धुनीविमलवारिणि स्थिते । पूतिगन्धवति पल्वलोदके सूकरः सुखमतीव मन्यते ॥ २ ॥ आकर्ण्य गर्जितरवं घनगर्जतुल्यं सिंहस्य यान्ति वनमन्यदिभा भयार्ताः । तत्रैव पौरुषनिधिः स्वकुलेन सार्धं दर्पोद्धुरो वसति वीतभयो वराहः ॥ ३ ॥

## आदिवराहान्योक्तिनिदर्शनम् ।

निष्कन्दामरविन्दिनीं स्थपुटितोद्देशां कसेरुस्थलीं जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान् दंष्ट्रायां प्रलयार्णवोर्मिसलिलैराप्लावितायामियं यस्या एव शिशोः स्थिता विपदि भूः सा पौत्रिणी पुत्रिणी ॥ १ ॥

## शुनकान्योक्तिनिदर्शनम् ।

पिब पयः प्रसर क्षितिपान्तिकं कलय कांचन काञ्चनशृङ्खलाम् । इदमवद्यतमं हि यदीहसे शुनक संप्रति केसरिणस्तुलाम् ॥ १ ॥ पुच्छं चपलय दर्शय निजोदरं पादयोर्मुहुर्निपत । कथमन्यथा त्वदीयो निर्वाहः कुक्कुर प्रभवेत् ॥ २ ॥ द्वारे तिष्ठ निबोधय जनागमं स्वामिनं प्रति त्वरितम् । इत्थं तवोदरस्य प्रपुष्टता भाविनी साध्वी ॥ ३ ॥

## वृश्चिकान्योक्तिनिदर्शनम् ।

विषभारसहस्रेण गर्वं नायाति वासुकिः । वृश्चिको बिन्दुमात्रेण ऊर्ध्वं वहति कण्टकम् ॥ १ ॥

## भेकान्योक्तिनिदर्शनम् ।

दिव्यं चूतरसं पीत्वा गर्वं नो याति कोकिलः । पीत्वा कर्दमपानीयं भेको रटरटायते ॥ १ ॥ गङ्गाऽऽदीनां सकलसरितां प्राप्य तोयं समुद्रः किंचिद्गर्वी न भवति वपुर्दिव्यरत्नाकरोऽपि । एको भेकः परममुदितः प्राप्य गोष्पादनीरं को मे को मे रटति बहुधा स्पर्धया विश्वमुच्चैः ॥ २ ॥

## शृगालान्योक्तिनिदर्शनम् ।

जलस्योच्चैः पुच्छं शिरसि निहितं जीर्णजटिलं यदृच्छाव्यापन्नद्विपपिशितलेशाः कवलिताः । गुहागर्ते शून्ये सुचिरमुषितं जम्बुक सखे किमेतस्मिन्कुर्मो यदसि न गतः सिंहसमताम् ॥ १ ॥

## भुजगान्योक्तिनिदर्शनम् ।

तावद्गर्जन्ति मण्डूकाः कूपमाश्रित्य निर्भयाः । यावत्करिकराकारः कृष्णसर्पो न विद्यते ॥ १ ॥ यस्मै ददाति विवरं भूमिः फूत्कारमात्रभीतेव । आशीविषः स दैवाद्भौमकरण्डे स्थितिं सहते ॥ २ ॥ मौलौ सन्मणयो गृहं गिरिगुहा त्यागः किलात्मत्वचो निर्यत्नोपनतैश्च वृत्तिरनिलैरेकत्र चर्यैदृशी । अन्यत्रानृजुवर्त्मता द्विरसनौ वक्रे विषं वीक्षणं सर्वामङ्गलसूचकं कथय भो भोगिन्सखे किं न्विदम् ॥ ३ ॥

---

१ उलूकात् । २ पूतिगन्धो दुष्टो गन्धः । ३ क्षुद्रजलाशयजलाभ्यन्तरे । ४ अवनतोन्नतदेशाम् । ५ कसेरुः कन्दविशेषः । ६ पङ्किल- । ७ पौत्रयुक्ता । ८ निवासः कृतः । ९ भुजगः । १० गारुडिक- । ११ स्वकञ्चुकस्य । १२ जीवनम् । १३ कुटिल- । १४ द्विरावृत्ता जिह्वा, द्विभाषित्वं च । १५ हे सर्प

## शेषान्योक्तिनिदर्शनम् ।

अनेके फणिनः सन्ति भेकभक्षणतत्पराः । एक एव हि शेषोऽयं धरणीधरणक्षमः ॥ १ ॥ युक्तोऽसि भुवन[1]भारे मा वक्रां वितनु कन्धरां शेष । त्वय्येकस्मिन्दुःखिनि सुखितानि भवन्ति भुवनानि ॥ २ ॥

## मत्स्यान्योक्तिनिदर्शनम् ।

क्षारं वारि न चिन्तितं न गणिताः क्रूराश्च नक्रादयश्चञ्चद्वीचि[2]कदम्बडम्बरमिलत्त्रासोऽपि दूरीकृतः । मध्येऽम्भोनिधि मत्स्यरङ्क भवता झम्पा[3]ः कृतो लीलया संपत्तिर्मकराजनं विपदिह प्राणप्रयाणावधिः ॥ १ ॥

## रोहितान्योक्तिनिदर्शनम् ।

अगाधजलसंचारी न गर्वं याति रोहित[4]ः । अङ्गुष्ठोदकमात्रेण शफ[5]री फुर्फुरायते ॥ १ ॥

## राघवान्योक्तिनिदर्शनम् ।

यस्मिन्वेल्लति सर्वतः परिचलत्कल्लोलकोलाहलैर्मन्थाद्रिभ्रमणभ्रमं हृदि हरिदन्तावलाः पेदिरे । सोऽयं तुङ्गतिमिङ्गिलाङ्गकवलीकारक्रियाकोविदः क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघव[6]ः ॥ १ ॥

## कच्छपान्योक्तिनिदर्शनम् ।

भ्रमति गिरिरा[7]ट् पृष्ठे गर्जत्युपर्यति सागरो दहति विततज्वालाजालो जगन्ति विषानलः । स तु विनिहितग्रीवाकाण्डः कटाह[8]कुटोदरे स्वपिति भगवान्कूर्मो निद्राभरालसलोचनः ॥ १ ॥ पुत्रिण्यः कति नात्र सन्ति भुवनेऽभूवन्कियन्त्योऽथवा सौभाग्यैकमठी तथाऽऽदि[9]कमठी स्त्रीषु प्रशंसाऽऽस्पदम् । भग्ने भोगि[10]नि भङ्गुरेषु क[11]रिषु भ्रष्टोत्सवे [12]दंष्ट्रिणि क्षोणीं सिंहसिकाग्रणीस्तुलयितुं जागर्ति यस्याः सुतः ॥ २ ॥

## महीरुहान्योक्तिनिदर्शनम् ।

अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् । धन्या महीरुहा येभ्यो निराशा यान्ति नार्थिनः ॥ १ ॥
पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । गन्[13]धनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते ॥ २ ॥
प्रत्[14]यग्रैः पत्रनिचयैस्तरुर्यैरेव शोभितः । जहाति जीर्णास्तानेव किंवा चित्रं कुज[15]न्मनः ॥ ३ ॥
छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे । फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ ४ ॥
परोपसर्पणानन्तचिन्तानलशिखाशतैः । अचुम्बितान्तःक[17]रणाः साधु जीवन्ति पादपाः ॥ ५ ॥
मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी । फल[18]संदोहगुरुणा तरुणा किं प्रयोजनम् ॥ ६ ॥

---

१ भुवनधारणे । २ प्रचलत्तरङ्गगण । ३ मज्जनम् । ४ महामत्स्यविशेषः । ५ क्षुद्रा मत्स्यी । ६ अयं हि तिमिङ्गिलापेक्षयाऽपि महान् भवतीति बोध्यम् । ७ मन्दराचलः । ८ कटाहाकारब्रह्माण्डरूपे कुटे ( गृहे ) इत्यर्थः । ९ आदिककच्छपाङ्गना । १० वासुकिनागराजरूपे नेत्रे । ११ दिशामिति शेषः । १२ आदिवराहे । १३ अन्याशक्यकर्म्मकरणक्षमः । १४ गन्धः पत्रपुष्पादिगतः, निर्यासः क्षरन्मदविशेषः, भस्म दाहजन्यम्, अस्थि अन्तर्गतः काष्ठविशेषः, तोक्मं हरिताङ्कुरविशेषः । १५ नूतनैः । १६ महीरुहस्य, अकुलीनस्य च । कोः पृथिव्या जन्म यस्य तस्येति, कुत्सितं जन्म यस्येति तस्येति वा । १७ अग्रस्तान्तःकरणाः । १८ फलसमुदायदुर्भरेण ।

शाखाशतचितवियतः[1] सन्ति कियन्तो न कानने तरवः । परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः ॥ ७ ॥ तीव्रो निदाघसमयो बहुपथिकजनश्च मारवः[2] पन्थाः । मार्गस्थिततरुरेकः कियतां संतापमपहरति ॥ ८ ॥ हिमसमयो वनवह्निर्जवनः पवनस्तडिल्लता विभवः । हन्त सहन्ते यावत्तावद्द्रुम कुरु परोपकृतिम् ॥ ९ ॥ अध्वन्यध्वनि तरवः पथि पथि पथिकैरुपास्यते छाया । विरलः स कोऽपि विटपी यमध्वगो गृहगतः[3] स्मरति ॥ १० ॥ कश्चिन्नवं पल्लवमादधाति कश्चित्प्रसूनानि फलानि कश्चित् । परं करालेऽस्य निदाघकाले मूले न दाता सलिलस्य कश्चित् ॥ ११ ॥ व्यागुञ्जन्[4]मधुकरपुञ्जमञ्जु[5]गीतान्याकर्ण्य श्रुतिमदजालयातिरेकात् । आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥ १२ ॥ भुक्तानि यैस्तव फलानि पचेलिमानि[6] क्रोडस्थितैरहह वीतभयैः प्रसुप्तम् । ते पक्षिणो जलरयेण विकृष्यमाणं पश्यन्ति पादप भवन्तममी तटस्थाः ॥ १३ ॥ धत्ते भरं कुसुमपत्रफलावलीनां धर्मव्यथां वहति शीतभवां रुजं च । यो देहमर्पयति चान्यमुखस्य हेतोस्तस्मै वदान्य[7]गुरवे तरवे नमस्ते ॥ १४ ॥ इहोद्याने संप्रत्यहह परिशिष्टाः क्रमवशादमी वल्मीकास्ते भुजगकुललीलावसतयः । गतास्ते विस्तीर्णस्तबकभरसौरभ्यलहरीपरीत[8]व्योमानः प्रकृतिगुरवः[9] केऽपि तरवः ॥ १५ ॥ विपन्नं पद्मिन्या मृतमनिमिषैर्यातमलिभिः खगैरप्युड्डीनं रथचरण[10]हंसप्रभृतिभिः । दशां[11] दीनां नीते सरसि विषमग्रीष्मदिवसैः कुलीन[12]स्त्वादास्ते तटरुहतरुः कोऽपि तदपि ॥ १६ ॥ इयं बाला वल्ली मृदुकिसलयं तापविलयं घनच्छायं शालं नवमतिविशालं परिगताः । परं त्वस्याभ्यन्तर्गरललवभस्मीकृतवनं भुजङ्गं प्रोत्तुङ्गं कथमिव वराकी कलयतु[13] ॥ १७ ॥ किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं संनतः । हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षणक्षोभामोटन[14]भञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ १८ ॥ छायासुप्तमृगाः शकुन्त[15]निवहैर्विष्वग्विलुप्तच्छदः[16] कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः[17] । विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एकस्तरुर्यत्राङ्गीकृतसत्त्वसंप्लवभरे भग्नापदोऽन्ये द्रुमाः ॥ १९ ॥ भुक्तं स्वादुफलं कृतं च शयनं शाखाग्रजैः पल्लवैस्त्वच्छायापरिशीतलं सुसलिलं पीतं व्यपेतश्रमैः । विश्रान्ताः सुचिरं परं सुमनसः[18] प्रीतिः किमत्रोच्यते त्वं सन्मार्गतरुर्वयं च पथिका यामः पुनर्दर्शनम् ॥ २० ॥ पान्थाधार इति द्विजाश्रय[19] इति श्लाघ्यस्तरूणामिति स्निग्धच्छाय इति प्रियो दृश इति स्थानं गुणानामिति । पर्यालोच्य महातरो तव घनच्छायां वयं संश्रितास्तत्त्वत्कोटरवासिनो द्विरसना[20] दूरीकरिष्यन्ति नः ॥ २१ ॥ मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला[21] वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव । एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरं ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः[22] ॥ २२ ॥ ये पूर्वं परिपालिताः फलभरच्छायादिभिः प्राणिनो विश्रामद्रुम कथ्यतां तव विपत्काले क ते सांप्रतम् । एताः संगतिमात्रकल्पितपुरस्कारस्तु धन्यास्त्वचो यासां छेदनमन्तरेण[23]

---

१ वियदाकाशम् । २ निर्जलदेशसम्बन्धी । मरोरयमिति मारवः । ३ गृहं प्राप्य स्थितोऽपीति भावः । ४ शब्दायमान- । ५ सुन्दर- । ६ परिपक्वानि । ७ अत्युदाराय । ८ आकाशमभिव्याप्य प्रवृद्धशरीराः, अतिपरिणाहा इति भावः । ९ स्वभावतो महान्तः । १० चक्रवाक- । ११ अवस्थाम् । १२ स्वकुलप्रभूतत्वात् मह्यां निगूढत्वाच्च । कौ लीनस्तत्त्वात् । १३ जानताम् । १४ त्रोटन- । १५ पक्षिगणैः । १६ नष्टपक्षः । १७ अवनतः । १८ प्रसन्नाः । १९ ब्राह्मणादिरक्षक, पक्षिनिवासभूतेति च । २० द्विजिह्वाः सर्पाः, द्विभाषिणः पिशुनाश्च । २१ परिपुष्टाः । २२ भक्षकः । २३ विना ।

पतितो नायं कुठारस्त्वयि ॥ २३ ॥ वृद्धिर्यस्य तरोर्मनोरथशतैराशावता प्रार्थिता जातोऽसौ सरसप्रकामफलदः सर्वाश्रितोपाश्रयः । नानादेशसमागतैरविदितैराक्रान्तमन्यैः खगैस्तं लब्धावसरोऽपि वृद्धशकुनिर्दूरे स्थितो वीक्षते ॥ २४ ॥ छायाभिः प्रथमं ततस्तु कुसुमैः पश्चात्फलैः स्वादुभिः प्रीणात्येव तरुः पथीति पथिकैः श्रान्तैः सुखं स्थीयते । को जानाति यदत्र कोटरगतः प्रत्यग्रहालाहलज्वालाजालकरालवक्रकुहरः कृष्णः फणी वर्तते ॥ २५ ॥ आमोदैर्मरुदो मृगः किसलयोल्लासैस्त्वचा तापसाः पुष्पैः षट्चरणाः फलैः शकुनयो घर्मार्दिताश्छायया । स्कन्धैर्गन्धगजोस्त्वयैव विहिताः सर्वे कृतार्थास्ततस्त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नापदोऽन्यद्रुमाः ॥ २६ ॥ रोलम्बैर्निर्मितं गृहं विघटितं धूमाकुलैः कोकिलैर्मायूरैश्चलितं पुरैव रभसा कीरैरधीरैर्गतम् । एकेनापि सपल्लवेन तरुणा दावानलोपप्लवः सोढः को न विपत्सु मुञ्चति जनो मूर्धापि यो लालितः ॥ २७ ॥ एकस्त्वं मरुभूरुहेन्द्र विततैः शाखाशतैरञ्चितः पुष्प्यत्पुष्पफलान्वितैरमुदितैर्जीव्याः सहस्रं समाः । आश्रान्तं श्रमरुग्णपान्थजनतासर्वार्थनिर्वाहणं कस्त्वां सात्त्विकमन्तरेण भुवनं निर्मातु धर्माशयः ॥ २८ ॥ धत्से मूर्धनि दुःसहा दिनमणेरुद्दामधामच्छटाश्छायाभिः पथिकान्निदाघमथितान्पुष्णासि पुष्पैः फलैः । धैर्यं मुञ्चसि नैव येन भवता शाखा सुविस्तारिता तेनाशासु वनस्पते तव यशस्तोमः समुज्जृम्भते ॥२९॥तीव्रोऽयं नितरां निदाघसमयः प्रोद्यत्प्रचण्डद्युतिर्मार्गो मारव एष तत्र पथिकाः संचारिणः कोटिशः । तेषां कश्चिदिहाश्रयस्त खरो दैवेन संपादितः सोऽप्येकः सुकृती करोतु कियतां संतापनिर्वापणम् ॥ ३० ॥

## मन्दारान्योक्तिनिदर्शनम् ।

भो मन्दार सुधन्यस्त्वमसि यतःस्वैःसुमामोदैः। न परं मनुजानेव प्रमोदयसि किंतु दैवतान्यपि च॥ १॥

## कल्पवृक्षान्योक्तिनिदर्शनम् ।

कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः । को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥ १॥ न मयारचितं तवालवालं पयसा वा विहितस्तवाभिषेकः । अयि कल्पतरो परोपकारे भवतो विश्वविलक्षणप्रकारः ॥ २ ॥ किं न द्रुमा जगति जाग्रति लक्षसंख्यास्तुल्योपनीतपिककाकफलोपभोगाः । धन्यस्तु कल्पविटपी फलसंप्रदानं कुर्वन्सदैव विबुधानमृतैकवृत्तीन् ॥ ३ ॥ स्वर्णैः स्कन्धपरिग्रहो मरकतैरुल्लासिताः पल्लवा मुक्ताभिः स्तबकश्रियो मधुलिहां वृन्दानि नीलोत्पलैः । संकल्पानुविधायि यस्य फलितं कस्तस्य धत्ते तुलां धिग्जातु द्रुमसंकथासु यदयं कल्पद्रुमोऽपि द्रुमः ॥ ४ ॥ औदार्यं भुवनत्रयेऽपि विदितं संभूतिरम्भोनिधेर्वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः । एवं दातृगुणोत्करः सुरतरोः सर्वोऽपि लोकोत्तरः स्यादार्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥ ५ ॥ न द्वारि द्विरदावली न परितो वाजीयुजश्रेणयः किंवा शौक्तिकमौक्तिकैर्मृगदृशां तारा न हारावलिः । हे कल्पद्रुम दूरतोऽस्तु भवतः सेवाभवं वैभवं तुष्यामि त्वयि तावताऽपि यदि न स्मेरा भवन्ति द्विषः ॥ ६ ॥ जन्माभूदुदधौ विधौ सहजतां वृन्दारकैर्वन्द्यतां तत्तत्कामफलाय शक्तिरतुला यस्यास्ति वश्याऽनिशम्। विश्रामाय चिराय कल्पलतिका भूयोऽयमालम्बते कस्त्वां स्तोतुमपि क्षमोऽस्ति तदपि त्वं जल्प कल्पद्रुम ॥ ७ ॥

---

१ प्रवृद्धमहागरलः । २ महान्तो गजाः । ३ क्षुद्राः । ४ भ्रमरैः । ५ बद्धम् । ६ मयूरा एव मायूरास्तैः । ७ संवत्सराणि यावत् । ८ दिक्षु । ९ प्रदहत्सूर्यः । १० कोकिल- । ११ सादृश्यम् । १२ जन्म । १३ निवासः । १४ इन्द्रोद्याने । १५ देवानां तृप्त्युपस्थापकः । १६ बन्दिजन- । १७ शक्त्युद्भव-। इदमेषां कृत्रिमत्वशङ्कानिरासायोक्तम् । १८ चन्द्रे । १९ सहोदरत्वम् । २० देवैः २१ पूज्यमानत्वम् । २२ अधीना । २३ सदा । २४ कथय ।

## पारिजातान्योक्तिनिदर्शनम् ।

पारिजाततरुं यावन्न लभेत मधुव्रतः । भ्रमणं तावदेवास्य कुञ्जे कुञ्जे तरौ तरौ ॥ १ ॥ परिमल-
सुरभितनभसो बहवः कनकाद्रिपरिसरे तरवः । तदपि सुराणां चेतसि समुषितमिव पारिजातेन ॥ २ ॥

## चन्दनान्योक्तिनिदर्शनम् ।

सन्त्येव लिखिता[1]काशा महीयांसो महीरुहः । तथाऽपि जनता[2]चित्तानन्दनश्चन्दनद्रुमः ॥ १॥ यद्यपि
चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः । निजवपुषैव परेषां तथाऽपि संतापमपहरति ॥ २ ॥
अयि मलयज महिमाऽयं कस्य गिरामस्तु विषयस्ते । उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः
॥ ३ ॥ पाटीर[3] तव पटीया[4]न्कः परिपाटीमिमामुरीकर्तु[5]म् । यत्पिष[6]तामपि नृणां पिष्टोऽपि परिमलैः
पुष्टिम् ॥ ४ ॥ यैस्त्वं गुणगणवानपि सतां [7]द्विजिह्वैरसेव्यतां नीतः । तानपि वहसि पटीर[8]ज किं
कथयामस्त्वदीयमौन्नत्यम् ॥ ५ ॥ जनकः सानु[9]विशेषो जातिः काष्ठं भुजङ्गमैः सङ्गः । स्वगुणैरेव पटीरज
यातोऽसि तथाऽपि महिमा[10]नम् ॥ ६ ॥ मूलं भुजङ्गैः शिखरं प्लवङ्गैः[11] शाखा विहङ्गैः कुसुमानि भृङ्गैः ।
नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं सत्त्वभरैः समन्तात् ॥ ७ ॥ कति न सन्ति महीषु मही-
रुहः सुरभिपुष्परसाले[12]फलालयः । सुरभयन्ति न केऽपि च भूरुहानिति यशोऽस्ति परं तव
चन्दन ॥ ८ ॥ धिक्चेष्टितानि परशो परिशोचनीयबालप्रवालमलयाद्रिरुहद्रुहस्ते । निर्भिद्यमानहृदयोऽपि
महानुभावः स त्वन्मुखं पुनरभीः सुरभी[13]करोति ॥ ९ ॥ कालागरौ सुरभितातिशयेऽपि सङ्गा-
दारभ्यते सुरभितापरपादपेऽपि । पाटीर पाटवमिदं तव सङ्गिवातैस्तादात्म्यमेति कतरो न तरोः समूहः
॥ १० ॥ उपानीतं दूरात्परिमलमुपाघ्राय मरुता समायासीदस्मिन्मधुरमधुलोभान्मधुकरः । परो दूरे
लाभः कुपितफणिनश्चन्दनतरोः पुनर्जीविन्यायाद्यदि तदिह लाभोऽयमतुलः ॥ ११ ॥ कान्ताकेलिं
कलयतु तरुः कोऽपि कश्चित्प्रभूणामत्यानन्दं जनयतु फलैः कोऽपि लोकान्धिनो[14]तु । धन्यं मन्ये मल-
यजमहो यः प्रभूतोपतापं संसारस्य द्रुतमपनय[15]त्यात्मदेहव्ययेन ॥ १२ ॥ आमोदैस्ते दिशि दिशि
गतैर्दूरमाकृष्यमाणाः साक्षाल्लक्ष्मीं तव मलयज द्रष्टुमभ्यागताः स्मः । किं पश्यामः सुभग भवतः
क्रीडति क्रोड एव व्यालस्तुभ्यं भवतु कुशलं मुञ्च नः साधु यामः ॥ १३ ॥ केचिल्लोचनहारिणः
कतिपये सौरभ्यसंभारिणः केऽप्यन्ये फलधारिणः प्रतिदिनं ते सन्तु हन्त द्रुमाः । धन्योऽयं हरिचन्दनः
परिसरे[16] यस्य स्थितैः शाखिभिः शाखोटादिभिरप्यहो मृगदृशामङ्गेषु लीलायितम् ॥ १४ ॥ भ्रात-
श्चन्दन किं ब्रवीमि विटपस्फूर्जत्फणाभीषणा गन्धस्यापि महाविषाः फणभृतो गुप्त्यै यदेते कृताः । दैवा-
त्पुष्पफलान्वितो यदि भवानत्राभविष्यत्तदा नो जाने किमकल्पयिष्यदधिकं रक्षाऽर्थमस्यात्मनः ॥ १५ ॥
एतैर्दक्षिणगन्धवाहचलनैः श्रीखण्ड किं सौरभं ब्रूमस्ते परितो मधुव्रतयुवा येनायमानीयते । माकन्दादप-
हृत्य पङ्कजवनादुद्धूय कुन्दोदरादुद्भ्राम्य द्विप[17]गण्डमण्डलदलादाकृष्य हृष्यन्मनाः ॥ १६ ॥ वासः शैल-
शिलान्तरेषु सहजः सङ्गो भुजङ्गैः सह प्रेङ्खत्क्षारपयोधिवीचिभिरभूदुद्धूतसेकक्रिया । जानीमो न वयं प्रसीदतु

---

१ अत्युच्छ्रिता इति भावः । २ जनता जनसमूहः । ३ हे चन्दन । ४ अतिशयेन पटुः ।
५ स्वीकर्तुम् । ६ चूर्णं कुर्वताम् । ७ भुजगैः । ८ हे चन्दन । ९ सानुः शिखरम् । १० प्रशंस-
नीयत्वम् । ११ कपिभिः । यद्यपि प्लवङ्गास्तत्र न भवन्ति किंतु प्लवङ्गानां शाखामृगत्वसाधारण्य-
मादायेदमभिहितम् । १२ रसाल आम्रः सरलो वा तरुः । १३ निर्भयः निःसङ्कोच इति यावत् ।
१४ सन्तर्पयतु । १५ निवर्तयते । १६ सन्निहितदेशे । १७ हस्ति- ।

भवाञ्श्रीखण्ड तत्कथ्यतां कस्मात्ते परतापखण्डन महो पाण्डित्यमभ्यागतम् ॥१७॥ लोकानन्दन चन्दनद्रुम सखे नास्मिन्वने स्थीयतां दुर्वंशैः[1] परुषैरसारहृदयैराक्रान्तमेतद्वनम् । ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम् ॥ १८ ॥ सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं नु लोकोत्तरं कीर्तिः किं च दिगङ्गनाऽङ्गनगता किं त्वेतदेकं शृणु । सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरानुज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली[2] ॥ १९ ॥ श्रीमचन्दनवृक्ष सन्ति बहवस्ते शाखिनः कानने येषां सौरभमात्रकं निवसति प्रायेण पुष्पश्रिया । प्रत्यङ्गं सुकृतेन तेन शुचिनां[3] ख्यातः प्रसिद्धात्मना योऽसौ गन्धगुणस्त्वया प्रकटितः क्वासाविह प्रेक्ष्यते ॥ २० ॥ जातः केलिकलावतीकुचतटीसौभाग्यमासादितुं त्रैलोक्याधिपतेर्यशः कथयितुं भाले विपद्व्यापितुम् । किं वाच्यं गुणगौरवस्य महिमा ख्यातोऽखिले भूतले दिग्दैवं कलये यदत्र मलये भग्नः पटीरद्रुमः[4] ॥ २१ ॥ एकस्मिन्मलयाचले बहुविधैः किं तैरकिंचित्करैः कालोद्धकपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः । केकी कूजति चेत्तदा विघटितव्यालावलीबन्धनः सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ २२ ॥

## अगुरुमहीरुहान्योक्तिनिदर्शनम् ।

अगुरुरिति वदतु लोको गौरवमत्रैव पुनरहं मन्ये । दर्शितगुणैव वृत्तिर्यस्य जने जनितदाहेऽपि ॥१॥ न गुरुर्यस्मात्सुरभावित्यगुरुस्त्वं मतो विबुधैः । न गुरुरितिं त्वयि भूयो भ्रम एव मृषा जघन्यानाम् ॥२॥ एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी संचारोऽस्ति न नागरस्य विषयोच्छिन्नं मुनीनां मनः । धूमेनातिसुगन्धिनाऽत्र विपिने दिक्चक्रमामोदयन्नामूलं परिदह्यतेऽगुरुतरुः कस्मै किमाचक्ष्महे ॥ ३ ॥

## चम्पकान्योक्तिनिदर्शनम् ।

साधारणतरुबुद्ध्या न मया बद्धस्तवालवालोऽपि । लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः ॥१॥ यद्यपि खदिरारण्ये गुप्ता चम्पक महीरुहो वसतिः । तदपि च परिमलमतुलं[5] दिशि दिशि कथयेत्समीरणस्तस्य ॥ २ ॥ रूपसौरभसमृद्धिसमेतं चम्पकं प्रति ययुर्न मिलिन्दाः[7] । कामिनस्तु जगृहुस्तदशेषा ग्राहका हि गुणिनां कति न स्युः॥३॥ केनात्र चम्पकतरो बत रोपितोऽसि कुग्रामपामरजनान्तिकवाटिकायाम् । यत्र प्रवृद्धवनशाकविवृद्धिलोभाद्गो भग्नवाटघटनोचितपल्लवोऽसि ॥४॥ उद्यानपाल कलशाम्बुनिषेचनानामेतस्य चम्पकतरोरयमेव कालः । अस्मिन्निदाघनिहते वनवारिणा वा संवर्धिते तव वृथोभयथोपयोगः ॥ ५ ॥ यन्नादृतस्त्वमलिना[8] मलिनाशयेन किं तेन चम्पक विषादमुरीकरोषि । विश्वाभिराममनवनीरदनीलवेषाः केशाः कुशेशयदृशः कुशलीभवन्तु ॥ ६ ॥ कोपं चम्पक मुञ्च याचकजनैरार्यासितस्त्वं सखे मा ग्लासीः परितो विलोकय तरुः कस्तेऽधिरूढस्तुलाम् । कोपश्चेन्नियतस्तवास्ति हृदये धात्रे तथा कुप्यतां येन त्वं हि सुवर्णवर्णकुसुमामोदोऽद्वितीयः कृतः ॥७॥ सन्त्येकेऽपि महीरुहाः प्रतिदिनं संसक्तमत्तालयस्तत्तादृग्गुणिनो लवङ्गलवलीमाकंन्दकुन्दादयः । आशास्यं जनुरस्य चम्पकतरोर्यत्कोरकान्तर्दलं स्वैरङ्गैरुपमीय राजरमणी सासूयमालोकते ॥ ८ ॥

---

१ दुष्टैर्वेणुभिः, अकुलीनैश्च । २ भुजङ्गश्रेणी पिशुनपङ्क्तिश्च । ३ शुद्धेन । ४ चन्दनवृक्षः । ५ क्षुद्रः एतन्नामा च । ६ विमर्दोत्थं सौरभम् । ७ भ्रमराः । ८ भ्रमरेण । ९ पीडितः । १० माकन्द आम्रः ।

## बकुलान्योक्तिनिदर्शनम् ।

निसर्गोदारामे तरुकुलसमारोपसुकृती कृती[1] मालाकारो बकुलमपि कुत्रापि विदधे । इदं को जानीते यदयमिह कोणान्तरगतो जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम्[2] ॥ १ ॥ दधानः प्रेमाणं तरुषु समभावेन विपुलं न मालाकारोऽसावकृत करुणां बालबकुले । अयं तु द्राग्[3] उद्यत्कुसुमनिकराणां परिमलैर्दिगन्तानातेने मधुपकुलझङ्कारभरितान् ॥ २ ॥

## अशोकान्योक्तिनिदर्शनम् ।

गर्वायसे विकच[4]कोरकमञ्जुगुञ्जदुद्दामषट्पदघटाविभवेन किं नु । वामभ्रुवां चरणताडनदोहदानि किं नाम न स्मरसि तावदशोक तानि ॥ १ ॥ उन्मीलयन्ति कुसुमानि मनोरमाणि के माम नात्र तरवः समयोचितानि । कस्येदृशं कथय दोहदमस्ति तस्य यादृग्विनिर्मितमशोकमहीरुहस्य ॥ २ ॥ मृदूनां स्वादूनां लघुरपि फलानां न विभवस्तवाशोक स्तोकैः[5] स्तबकमहिमा सोऽप्यसुरभिः[6] । यदेतन्नो तन्वीकरचरणलावण्यसुभगं प्रवालं बालं स्यात्तरुषु स कलङ्कः किमपरः ॥ ३ ॥ किं ते नम्रतया किमुन्नततया किं वा घनच्छायया किं वा पल्लवलीलया किमनया वाऽशोक पुष्पश्रिया । यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमैः[7] स्तुवन्नन्वहं न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ ४ ॥

## यूथीलताऽन्योक्तिनिदर्शनम् ।

यूथि यथोचितविधिना विधेयमातिथ्यमेतस्मिन् । मालतिकाप्राणेशः प्राघुणिकः[8] ते घुणाक्षरन्यायात् ॥ १ ॥

## मालतीलताऽन्योक्तिनिदर्शनम् ।

कुसुमस्तबकानम्राः सन्त्येव परितो लताः । तथाऽपि भ्रमरभ्रान्तिं हरत्येकैव मालती ॥ १ ॥ मालतीकुसुमे भाति गुञ्जन्मत्तमधुव्रतः । प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥ २ ॥ गुञ्जति मञ्जु[9] मिलिन्दे[10] मालति मा मौनमुपयासीः । शिरसा वदान्यगुरवः[11] सादरमेनं वहन्ति सुरतरवः ॥ ३ ॥ अयि किं गुणवति मालति जीवति भवतीं विना मधुपः । अथ यदि जीवति जीवतु जीवितमपि तस्य जीवनाभासः ॥ ४ ॥ मा मालति म्लायसि येद्यं[12] विघ्रश्चुचुम्ब तुम्बीकुसुमं षडङ्घ्रिः[13] । पदैश्चतुर्भिर्हि युतः पशुश्चेत्स षड्भिरभ्यर्धपशुः कथं नो ॥ ५ ॥ कति सन्ति लवङ्गलता ललिता नवकोरकिता धरणीसुतले । कति बन्धुरगन्धभृतस्तरवो गुरवो निवसन्ति गिरौ मलये ॥ ६ ॥ अयि मालति सौरभसारविनिर्जितसंविकसत्कमलानिलये । मधुपानविधौ मधुपस्य पुनर्भुवने भवतीमहमाकलये ॥ ७ ॥ किं मालतीकुसुम ताम्यसि[14] निष्ठुरेण केनापि यत्किल विलूनमितो[15] लताऽग्रात् । लोकोत्तरेण विलसद्गुणगौरवेण को नामुना शिरसि नाम करिष्यति त्वाम् ॥ ८ ॥ म्रदीयस्त्वाधिक्यान्न[16] भवति विमर्दक्षममिदं न चान्येभ्यो रूपं भवति कुसुमेभ्योऽधिकतरम् । प्रसूनं मालत्यास्तदपि हृदयाह्लादकरणं प्रवीणैरामोदैर्भवति जगतो मौलिनिलयम् ॥ ९ ॥ अस्मिन्केलिवने[17] सुगन्धपवने क्रीडत्पुरन्ध्रीजने

---

१ चतुरः । २ सौरभपूर्णम् । अत्र तारकादित्वादितच् । ३ झटिति । ४ विकसित- । ५ स्वल्पः । ६ सौरभहीनः । ७ स्तोमः समूहः । ८ अतिथिः । ९ मधुरम् । १० भ्रमरे । ११ अत्युदाराः । १२ मूढः । १३ भ्रमरः । १४ खिद्यसि । १५ छिन्नम् । १६ अतिशयितमृदुताया आधिक्यात् । १७ क्रीडावने ।

गुञ्जद्भृङ्गकुले विशालबकुले कूजत्पिकी[1]संकुले । उन्मीलन्नवपाटलापरिमले मल्लीप्रसूनाकुले यद्येकापि न मालती विकसिता तत्किं न रम्यो मधुः[2] ॥ १० ॥

## मल्लिकालताऽन्योक्तिनिदर्शनम् ।

न च गन्धवहेन[3] चुम्बिता न च पीता मधुपेन मल्लिका । विहितैव[4] कठोरशाखया परिणामस्य जगाम गोचरम् ॥ १ ॥

## दमनकान्योक्तिनिदर्शनम् ।

वद प्रादुर्भावावधि परीमलावस्थितदशा जगत्या विख्याता दमनक प्रतीपास्तव गुणाः । तथाप्यस्मिन्भृङ्गे मधुलवपिपासापरवशे दृढप्रेमाबद्धे कथय कथमौदास्यमकरोः ॥ १ ॥

## केतकीवृक्षान्योक्तिनिदर्शनम् ।

कालक्रमकमनीय[5]क्रोडेयं केतकीति का शङ्का । वृद्धिर्यथा यथास्यास्तथा तथा कण्टकोत्कर्षः ॥ १ ॥ पत्राणि कण्टकशतैः परिवेष्टितानि वार्ताऽपि नास्ति मधुनो[6] रजसान्धकारः । आमोदमात्ररसिकेन मधुव्रतेन नालोकितानि तव केतकि दूषणानि ॥ २ ॥ एतासु केतकिलतासु विकासिनीषु सौभाग्यमद्भुततरं भवती बिभर्ति । यत्कण्डकैर्व्यथितमात्मवपुर्न जानंस्त्वामेव सेवितुमुपक्रमते द्विरेफः[7] ॥ ३ ॥ एकेन चेत्परिहृतोऽसि महेश्वरेण किं तेन केतक विषाद[8]मुरीकरोषि । अन्ये न किं जगति सन्ति महागुणज्ञा ये त्वां वहन्ति शिरसा नरदेवदेवाः ॥ ४ ॥ हे हेमकेतकि कथं बहु गर्वितासि संसेव्यसे मधुकरैरखिलैरितीव । नैषा रसातिशयता नलिनीवियोगात्तैर्दीयते निकटकण्टकशूलझम्पः ॥ ५ ॥ रोलम्बस्य[9] चिराय केतकपरिष्वङ्गेष्व[10]भङ्गो[11] रसः सुज्ञातं बत केतकस्य च मनो भृङ्गप्रसङ्गोत्सुकम् । जानात्येव मिथोऽनुरागमनयोः सर्वोऽपि नैसर्गिकं[12] प्रत्यूहाय[13] दलेषु धिक्समभवन्मर्माविधः कण्टकाः ॥ ६ ॥

## पाटलाऽन्योक्तिनिदर्शनम् ।

पाटलया वनमध्ये कुसुमितया मोहितस्तथा भ्रमरः । सेवेयमिति यथाऽभूत्प्रतीतिरस्यान्यपुष्पेऽपि ॥ १ ॥ पाटलयैव कृतसङ्गो न परत्र पुनर्मधुव्रतो रमते । अननयमिव ननु विदधद्गुञ्जति निपतति च तत्रैव ॥ २ ॥

## रसालान्योक्तिनिदर्शनम् ।

अरविन्देषु कुन्देषु क्रीडितं कालयोगतः । अये माकन्द जानीहि तवैवायं मधुव्रतः ॥ १ ॥ यद्यपि दिशि दिशि तरवः परिमलबहुलाश्च पारिजाताद्याः । तदपि रसालोऽप्येकः कोकिलहृदये सदा वसति ॥ २ ॥ सन्तु सहस्रश इतरे कुसुमभृता वा फलान्वितास्तरवः । किंतु द्विजजनै[15]र्दैवततोषकृदेको रसालोऽसौ ॥ ३ ॥ सहकारः[16] सहकारो[17] मदनवसन्तोभयस्य नान्योऽस्मात् । सुरभि[18]फलोभय सम्प-

---

१ कोकिला- । २ वसन्तः । ३ पवनेन । ४ निहुतस्वरूपा । ५ वाञ्छनीय- । ६ रजविशेषस्य । ७ भ्रमरः । ८ अवज्ञाजन्यं दुःखम् । ९ भ्रमरस्य । १० परिष्वङ्गेषु आलिङ्गनेषु । ११ अक्षुण्णः । १२ स्वाभाविकम् । १३ विघाताय । १४ अत्र समासोक्तिरपि । १५ द्विजाः कोकिलाद्याः पक्षिणः, जना मनुष्याः । १६ सहकारः सुरभित आम्रः । १७ सहकारः सहायकः । १८ सुरभिः सौगन्ध्यम् ।

कस्य परस्याथवा विदितः ॥ ४ ॥ निन्दति पिकः सरोजं दाडिममलिरप्यपाकुरुते । सहकारमुपेत्य पुनस्तदुभयमेव प्रसादमायाति ॥ ५ ॥ एकपदं निरवद्यं[1] न किमपि भवतीति माकन्दः[2] । सुमधुररसोऽपि भवन्साम्लत्वं नो परित्यजति ॥ ६ ॥ वेत्ता[3] कोकिल एव ज्ञाता च रसाल एव नियतमिदम् । यः पञ्चममुद्गायति यस्यास्थिषु पुलकमुकुलानि[4] ॥ ७ ॥ लोडितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे । सहकार न प्रपेदे मधुपेन तवोपमा जगति ॥ ८ ॥ कुन्दे कदम्बे कुमुदेऽरविन्दे[5][6] यथाकथं-चित्समयं नयन्ति । प्राप्ते वसन्ते पुनरुत्तरङ्गा[7] रसाल जानीहि तवैव भृङ्गाः ॥ ९ ॥ भूरिशोऽपि च वसन्ति कानने शाखिनो[8] फलविशेषशालिनः । कोकिलस्य तदपीह मानसं नो रसालमपहाय[9] तुष्यति ॥ १० ॥ आम्र यद्यपि गता दिवसास्ते पुष्पसौरभफलप्रचुरा ये । हन्त संप्रति तथाऽपि जनानां छाययैव दलयस्यतितापम् ॥ ११ ॥ फलितस्य रसाल शाखिनः फलदानव्यसनैकशालिनः । विनिपत्य ददातु कः फलं श्रमसुप्ताध्वगपाणिपल्लवे ॥ १२ ॥ कति पल्लविता न पुष्पिता वा तरवः सन्ति समन्ततो वसन्ते । जगतीविजये तु पुष्पकेतोः सहकारी सहकार एक एव ॥१३॥ वहसि बलिभुजां[11] कुलानि मौलौ यदि सहकार तदत्र किं निषिद्धा । परमुदयति पल्लवाञ्चलेषु स्फुरदलिभिस्तव सौरभप्रसिद्धिः ॥ १४ ॥ दिङ्मण्डलं परिमलैः सुरभीकरोषि सौन्दर्यमावहसि लोचनलोभनीयम् । हंहो रसाल फलवर्य तथाऽपि दूये[12] यद्ग्रन्थिलं च कठिनं हृदयं बिभर्षि ॥ १५ ॥ उत्तंसकौतुकरसेन[13] विलासिनीभिर्लूनानि यस्य न नखैरपि पल्लवानि । उद्यानमण्डनतरो सहकार स त्वामङ्गारकारकरगोचरतां गतोऽसि ॥ १६ ॥ यावत्फलोदकमुखः सहकार जातः प्रागेव कण्टकचयेन वृतोऽसि तावत् । छायाऽपि ते न सुलभा फलमस्तु दूरे तन्निष्फलोऽपि हि वरं सुखसेवनीयः ॥ १७ ॥ उत्फुल्लरम्य सहकार रसाल बन्धो कूजत्पिकावलिनिवास तथा विधेहि । गुञ्जन्मधुव्रतकस्त्वयि बद्धतृष्णो नान्यान्प्रयाति पिचुमन्दकरीरवृक्षान्[14] ॥ १८ ॥ शश्वन्निसर्गमलिना सहकार कामं लुण्ठन्ति तान्यपि मधूनि तव द्विरेफाः । युक्तं न तत्तव कषायरसप्ररोहैरेतान्प्रतारयसि किं कलकण्ठयूनः ॥ १९ ॥ रे रे रसाल तरुसार वचो विधेहि वासन्तिकीं स्वफलपल्लवपुष्पलक्ष्मीम् । तावद्विकस्वरपिकद्विजसात्कुरु[15]-द्राङ् न व्यग्रितोऽसि कलभैः शलभैश्च यावत् ॥ २० ॥ यद्यध्वनीन[16] चिरमध्वनि घर्मखिन्नः कासारतीररुहमाश्रय नम्रमाम्रम् । छायां न केवलमितः श्रमिता लभन्ते कामं पचेलिमफलं[17] विमलं जलं च ॥ २१ ॥ सौरभ्यगर्भमकरन्दकरम्बितानि[18] पङ्केरुहाण्यपि विहाय समागतस्त्वाम् । संसारसार सहकार तथा विधेहि येनोपहासविषयो न भवेद्द्विरेफः ॥ २२ ॥ कति कति न वसन्ते वल्लयः शाखिनो वा किसलयसुमनोभिः शोभमाना बभूवुः । तदपि युवजनानां प्रीतये केवलोऽभूदभिनवकलिकालीभारशाली रसालः ॥ २३ ॥ यदेकस्मिन्वर्षे न फलति रसालस्तरुरयं पिकः किं काकेष्टं फलितमपि निम्बं व्रजति किम् । व्रजन्म्लानिं ग्लानिं न वदति च कस्यापि पुरतः स्मरन्वारंवारं पुनरपि रसालं मृगयते ॥ २४ ॥ अधिश्रीरुद्याने[19] त्वमसि भवतः पल्लवचयो धुरीणः[20] कल्याणे तव जगति शाखा श्रमहरा । मुदे पुष्पोल्लेखः फलमपि च तुष्ट्यै तनुभृतां रसाल त्वां तस्माच्छ्रयति शतशः कोकिल-

---

१ निर्दोषम् । २ आम्रः । ३ ज्ञाता । ४ रोमाञ्च- । ५ रात्रिविकासिनि कमले । ६ दिवाविकासिनि कमले । ७ उन्मत्ताः । ८ वृक्षाः । ९ त्यक्त्वा । १० वसन्तस्य । ११ काकानाम् । १२ दुःखिता भवामि । १३ कर्णाभरण- । १४ निम्ब- । १५ सुमुदितकोकिलाधीनाम् । १६ मार्गवर्त्तिन् । १७ पक्व- । १८ करम्बितं व्याप्तम् । १९ अधिगता श्रीः शोभा येनेति । २० मुख्यः ।

कुलम् ॥ २५ ॥ न तादृक्कर्पूरे न च मलयजे नो मृगमदे फले वा पुष्पे वा तव मिलति यादृक्परिमलः । परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः पिके वा काके वा लघुगुरुविशेषं न मनुषे ॥ २६ ॥ चिरश्रान्तो दूरादहमुपगतो हन्त मलयात्तदेकं त्वद्गेहे तरुणि परिणेष्यामि दिवसम् । समीरेणोक्त्वैवं नवकुसुमिता चूतलतिका धुनाना मूर्धानं नहि नहि नहीत्येव वदति ॥ २७ ॥ वियुक्ता वासन्ती बकुलमुकुले नापि मिलितं व्यलोकि व्याकोशः क्षणमपि न कोऽपि क्षितिरुहः । यमालोक्योत्कण्ठातरलमिह भृङ्गेन चलितं विदूरान्माकन्दः स खलु दलितो यूथपतिना ॥ २८ ॥ येऽभिज्ञाः कुसुमोद्गमादनुदिनं त्वामाश्रिताः षट्पदास्ते भ्राम्यन्ति फलाद्बहिर्बहिरहो दृष्ट्वा न संभाषसे । ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यन्तरे धिक्त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥ २९ ॥ आकर्ण्याम्रफलस्तुतिं जलमभूत्तन्नारिकेलान्तरं प्रायः कण्टकितं तथैव पनसं जातं द्विधोर्वारुकम् । आस्तेऽधोमुखमेव कादलफलं द्राक्षाफलं क्षुद्रतां श्यामत्वं वत जाम्बवं गतमहो मात्सर्यदोषादिह ॥ ३० ॥ यो दृष्टः स्फुरदस्थिसंपुटवशात्तिर्यक्प्रवालाङ्कुरो दैवात्स द्विदलादिकक्रमवशादारूढशाखाशतः । स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छदं पुष्पितः सोत्कर्षं फलितो भृशं च विनतः कोऽप्येष चूतद्रुमः ॥ ३१ ॥ एतस्मिन्वनमार्गभूपरिसरे सौन्दर्यमुद्राऽङ्कितः प्रोद्यद्भिः फलपुष्पपत्रनिचयैश्चूतः स एकः परम् । यं वीक्ष्य स्मितवक्त्रमुद्रितमहासन्तोषमुल्लासितस्फारोत्कण्ठमकुण्ठितक्रमममी धावन्ति पान्थव्रजाः ॥ ३२ ॥ कूष्माण्डीफलवत्फलं न यदपि न्यग्रोधवन्नोच्चता रम्भापत्रनिभं दलं न कुसुमं नो केतकीपुष्पवत् । सौरभ्यं कुसुमे फले तदपि तत्किंचित्समुज्जृम्भते लोको येन रसाल शैलनिकरांस्त्यक्त्वा गुणान्स्तौति ते ॥ ३३ ॥ गर्वं मा कुरु शर्करे तव गुणाञ्जानन्ति राज्ञां गृहे ये दीना धनवर्जिताश्च कृपणाः स्वप्नेऽपि पश्यन्ति नो । आम्रोऽहं मधुकूपकैर्मम फलैस्तृप्ता हि सर्वे जना हे रण्डा तव किं गुणा मम फलैस्तुल्यं न किंचित्फलम् ॥ ३४ ॥ उन्मीलद्रसबिन्दुगन्धकुसुमावल्लयो वसन्तोदये कान्ताः कोमलपल्लवाः कति कति क्रीडावने सन्ति न । सौभाग्यैकनिधे रसाल तदपि श्रीमञ्जरीशालिनस्त्वत्तोऽन्यत्र च कुत्रचिन्मधुकरश्रेणी न विश्राम्यति ॥ ३५ ॥ स्निग्धाम्राः फलिनो वृताः परिमलैः पौष्पैर्मधुस्यन्दिनो नानन्दाय भवन्ति किं वनभुवां भूमीरुहो भूरिशः । माधुर्यं मधुनस्तवैव परमं माकन्द मन्यामहे माध्वीमर्मविदो दृढं मधुलिहः स्यूता यतो मर्मणि ॥ ३६ ॥ आस्तां गाढतरानुशीलनविधिः संस्पर्शनं दूरतः संभाषाविषयीकृतोऽसि न मनागक्ष्णोः पदं प्रापितः । किं ब्रूमः सहकार तावकगुणानन्यादृशैर्दुर्लभान्सौरभ्येण यदध्वगानपि मुहुः प्रीणासि दूरादपि ॥ ३७ ॥ त्वं सामान्यतरुभ्रमेण सकलक्षोणीरुहक्ष्मापतौ माकन्देऽपि किरात पातय मुधा माऽस्मिन्कुठारं हठात् । एष श्लाघ्यजनस्य जीवितमलिव्यूहस्य बन्धुर्मधोः सर्वस्वं कुसुमायुधस्य विजयामात्यः पिकानां गुरुः ॥ ३८ ॥ शान्ता घर्मकणाः श्रमः शिथिलितस्तीर्णस्तृषामुद्गमो वारंवारमुदारकोकिलरवैरानन्दितं मानसम् । सर्वं प्राप्तमभीप्सितं तव तले चूत प्रसन्ना द्विजश्रेणीकूजितरञ्जिताखिलमनो यामो वयं स्वस्ति ते ॥ ३९ ॥

---

१ चन्दने । २ कस्तूर्याम् । ३ प्रफुल्लः । ४ उर्वारोः कर्कटया इदमिति तथोक्तम् । कर्कटीफलम् । ५ कदल्या इदं कादलम् । ६ जम्ब्वा इदमिति जाम्बवम् । ७ विशदपत्रम् । ८ वटवत् । ९ कदली- । १० वृक्षान्तरपुञ्जान् । ११ वनवासिनाम् । १२ भ्रमरपुञ्जस्य ।

## पनसान्योक्तिनिदर्शनम्।

गैरीयः सौरभ्यं रसपरिचये नार्हति सुधा सिता[2] मृद्वीकाऽपि[3] प्रथिमनि[4] निमग्नः फलभरः । परार्थे कोशश्रीरिति पुलकितं कण्टकमिषादहो ते चारित्रं पनस मनसः कस्य न मुदे ॥ १ ॥

## तमालान्योक्तिनिदर्शनम्।

पास्यन्ति कस्य कुसुमे मधुपा मधूनि स्थास्यन्ति कस्य शिखरेषु विहङ्गमालाः । इत्येव शोचति परं परितोविसारिदावाग्निमग्नवपुरेव तरुस्तमालः ॥ १ ॥

## रम्भाऽन्योक्तिनिदर्शनम्।

रम्भे सफला विनमसि तर्पयसि च सेविनः सर्वान् । अफलामपि भवतीं को दृष्ट्वा स्मरति न मृगाक्ष्यूरू ॥ १ ॥ तालीतरोरनुपकारि फलं फलित्वा लज्जावशादुचित एव विनाशयोगः । एतत्तु चित्रमुपकृत्य फलैः परेभ्यः प्राणान्निजाञ्झटिति यत्कदली जहाति ॥ १ ॥

## द्राक्षाऽन्योक्तिनिदर्शनम्।

दासेरकस्य[6] दासीयं बदरी यदि रोचते । एतावतैव किं द्राक्षा न साक्षादमृतप्रदा ॥ १ ॥ यद्यपि न भवति हानिः परकीयां चरति रासभे[7] द्राक्षाम् । असमञ्जसमिति मत्वा तथाऽपि खलु खिद्यते चेतः ॥२॥

## दाडिमान्योक्तिनिदर्शनम्।

मयि जीवति बीजाढये किमन्ये बीजपूरकाः । इति संचिन्त्य मनसा विदद्रे दाडिमीफलम् ॥ १ ॥ द्विजगणमवलोकयतो भवतो हृदयं विदीर्णमिव । किमु भवतीति न जाने दाडिम तद्ब्रूहि दुःखं स्वम् ॥ २ ॥ आ पुष्पप्रसवान्मनोहरतया विश्वास्य विश्वं[8] जनं हंहो दाडिम तावदेव सहसे वृद्धिं स्वकीयामिह । यावन्नैति परोपभोगसहतामेषा ततस्तां तथा ज्ञात्वा ते हृदयं द्विधा दलति यत्तेनातिवन्द्यो भवान् ॥ ३ ॥

## नालिकेरान्योक्तिनिदर्शनम्।

उच्चैरेष तरुः फलं च विपुलं दृष्ट्वैव हृष्टः शुकः पक्वं शालिवनं विहाय जडधीस्तं[10] नालिकेरं गतः । तत्रारुह्य बुभुक्षितेन मनसा यत्नः कृतो भेदने तस्यैवास्य न केवलं विगलिता चञ्चूर्गता चूर्णताम् ॥१॥

## तालान्योक्तिनिदर्शनम्।

अये ताल व्रीडां व्रज गुरुतया भाति न भवान्फले न च्छाया नो कठिनपरिवारो हि भवतः । इयं धन्या धन्या सरलकदली सुन्दरदला परात्मानं[11] मन्ये सुखयति फलेनामृतवता ॥ १ ॥ अध्वन्यध्वनि भूरुहः फलभृतो नम्रानुपेक्ष्यादराद्दूरादुन्नतिसंश्रयव्यसनिनः पान्थस्य मूढात्मनः । यन्मूलं समुपागतस्य मधुरच्छायाफलैः का कथा क्षीणेनापि हि नोपयोगमगमत्पर्णेन तालद्रुमः ॥ २ ॥

---

१ गुरुतरम् । २ शर्करा । ३ द्राक्षा । ४ स्थूलतायाम् । ५ समन्ततो व्यापी । ६ उष्ट्रस्य । ७ गर्दभे । ८ आरभ्य । ९ समस्तम् । १० मूढः । ११ परेषामन्तःकरणं, शरीरं वा ।

## भूर्जान्योक्तिनिदर्शनम् ।

दौर्जन्यमात्मनि परं प्रथितं विधात्रा भूर्जद्रुमस्य विफलत्वसमर्पणेन । किं चर्मभिर्निशित[1]शस्त्रशतावकृत्तैराशां न पूरयति सोऽर्थिपरम्पराणाम् ॥ १ ॥ कुर्वन्तु नाम जनतोपकृतिं प्रसूनच्छायाफलैरविकलैः सुलभैर्द्रुमास्ते । सोढास्तु कर्तनरुजः पररक्षणार्थमेकेन भूर्जतरुणा करुणापरेण ॥ २ ॥

## अश्वत्थान्योक्तिनिदर्शनम् ।

वर्धितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः । वर्धितो नरकाद्रक्षेत्स्पृष्टोऽरिष्टानि हन्ति यः ॥१॥ अश्वत्थस्य महत्त्वं को ननु वक्तुं नरः प्रभवेत् । सवितरि[2] यत्रालक्ष्मीर्मन्दे[3] लक्ष्मीरमन्दाऽऽस्ते ॥२॥

## वटान्योक्तिनिदर्शनम् ।

महातरुर्वा भवति समूलो वा विनश्यति । अन्तरा प्रत्ययं नैति न्यग्रोध[4]कणिकाङ्कुरः ॥ १ ॥ तृप्तिः पिपीलिकाया अपि येन भवेन्न तद्बीजम् । भो वट संश्रित्य भवानियान्महानद्य सम्पन्नः॥२॥ न्यग्रोधे फलशालिनि स्फुटतरं किंचित्फलं पच्यते बीजान्यङ्कुरगोचराणि कतिचित्सिध्यन्ति तस्मिन्नपि । एकस्तेष्वपि कश्चिदङ्कुरधरः प्राप्नोति तामुन्नतिं यामासाद्य निदाघपीडिततनुर्ग्लानिच्छिदे धावति ॥ ३ ॥ विस्तीर्णो दीर्घशाखाऽऽश्रितशकुनिशतः शाखिनामग्रणी[5]स्त्वं न्यग्रोध क्रोधमन्तः प्रकटयसि न चेद्वच्मि किंचित्तदल्पम् । जल्पो[6]ऽप्येष त्रपाकृत्[7]प्रलघुपरिकरा कापि कूष्माण्डवल्ली पल्ली[8]पृष्ठप्रतिष्ठा हसति हि फलनैस्त्वत्फलानां किमन्यत् ॥ ४ ॥

## मधूकान्योक्तिनिदर्शनम् ।

तत्तेजस्तरणेर्निदाघसमये तद्वारि मेघागमे तज्जाड्यं शिशिरे यदेकशरणैः सोढं पुरा यैर्दलैः । आयातोऽप्यधुना फलस्य समयः कोऽयं विना तैरिति स्मृत्वा तानि शुचे[9]व रोदिति गलत्पुष्पैर्मधूकद्रुमः ॥ १ ॥ मूलादेव यदस्य विस्तृतिभरच्छायाऽप्यनन्यादृशी ते यस्य प्रसवाः[10] सुमञ्जुलरसैरानन्दयन्तः प्रजाः । स्नेहं च प्रकटीकरोति परमं भूयः फलानां गुणैर्हित्वै[11]कैकगुणांस्तरून्भज सखे तस्मान्मधूकद्रुमम् ॥ २ ॥

## शाल्मलिवृक्षान्योक्तिनिदर्शनम् ।

विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं शुकस्यासीद्बुद्धिः फलमपि भवेत्त । दृशमिति । चिरं तत्र स्थित्वा फलमपि च काले परिणतं विपाके[12] तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥ १ ॥ दूरे मार्गान्निवहसि पुनः कण्टकैरावृतोऽसि च्छायाशून्यः फलमपि च ते वानरैरप्यभक्ष्यम् । निर्गन्धस्त्वं मधुपरहितः शाल्मले सारशून्यः सेवाऽस्माकं भवति विफला तिष्ठ निःश्वस्य यामः ॥ २ ॥ हंसाः पद्मवनाशया मधुलिहः सौरभ्यलाभाशया पाथाः स्वादुफलाशया बलिभुजो[13] गृध्राश्च मांसाशया । दूरादुत्तमपुष्परागनिकरैर्निःसारमिथ्योन्नते रे रे शाल्मलिपादप प्रतिदिनं के न त्वया वञ्चिताः[14] ॥ ३ ॥ कायः कण्टकभूषितो न च घनच्छायीकृताः पल्लवाः पुष्पाणि च्युतसौरभाणि न दलश्रेणी मनोहारिणी । किं ब्रूमः फलपाकमस्य यदुपन्यासेऽपि लज्जामहे तद्भोः केन गुणेन शाल्मलितरो जातोऽसि सीमद्रुमः ॥ ४ ॥

---

१ तीक्ष्ण- । २ पालनादिकृति, रविवारे च । रविवारेऽश्वत्थस्पर्शेऽलक्ष्मीः स्यादिति कथामुपजीव्येदमभिहितम् । ३ मूढे, शनैश्चरवारे च । शनिवारे हि अश्वत्थस्पर्शिनं लक्ष्मीर्वृणुत इति तथा वचनम् । ४ वट- । ५ मुख्यः । ६ कथनम् । ७ लज्जावहम् । ८ भिल्लादिस्थानोपरिगता । ९ शोकेन । १० पत्रपुष्पादयः । ११ त्यक्त्वा । १२ परिपाकसमये । १३ काकाः । १४ प्रतारिताः ।

## निम्बान्योक्तिनिदर्शनम् ।

निम्ब किं बहुनोक्तेन निष्फलानि फलानि ते । यानि संजातपाकानि काका निःशेषयन्त्यमी ॥ १ ॥ यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥ २ ॥ पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः । अपि च पिचुमन्दमुकुले मौकुलिकुलमाकुलं मिलति ॥ ३ ॥ यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितघटनासंविधाता विधाता । यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ४ ॥ यस्मादर्थिजनो मनोऽभिलषितं लब्ध्वा मुदा मेदुरः सार्धं बन्धुजनैश्चकार विविधान्भोगान्विलासोद्धुरः । तं दैवेन विवेकशून्यमनसा निर्मूल्य चूतद्रुमं स्थाने तस्य तु काकलोकवसतिर्निम्बः समारोपितः ॥ ५ ॥

## बब्बुलान्योक्तिनिदर्शनम् ।

पत्रफलपुष्पलक्ष्म्या कदाऽप्यदृष्टं वृतं च खलु शूकैः । उपसर्पेम भवन्तं बब्बुल वद कस्य लोभेन ॥ १ ॥ गात्रं कण्टकसंकटं प्रविरलच्छाया न चायासहृन्निर्गन्धः कुसुमोत्करस्तव फलं न क्षुद्विनाशक्षमम् । बब्बूलद्रुम मूलमेति न जनस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥ २ ॥ आमूलाग्रनिबद्धकण्टकतनुर्निर्गन्धपुष्पोद्गमश्छाया न श्रमहारिणी न च फलं क्षुत्क्षामसंतोषकृत् । रे रे बब्बुल साधुसङ्गरहितस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥ ३ ॥ शाखाः कण्टककोटिभिः परिवृता बत्र फलं कुत्सितं पत्रं क्षुद्रतरं न चास्ति गहना छायाऽपि पान्थप्रिया । अन्येषामपि शाखिनां फलभृतां रक्षाऽर्थमानीयसे बर्बूरद्रुम कैर्गुणैर्गुरुतरैर्वृक्षेषु संभाव्यसे ॥ ४ ॥

## खदिरान्योक्तिनिदर्शनम् ।

बिना खदिरसारेण हारेण हरिणीदृशाम् । नाधरे जायते रागो नानुरागः पयोधरे ॥ १ ॥ चन्दते विषधरैरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः । रक्षितुं वद किमात्मसौष्ठवं संचिताः खदिर कण्टकास्त्वया ॥ २ ॥ परं तदिह नास्ति यन्न खदिरैः खरैरावृतं न तेऽपि खदिरा न ये कुटिलकण्टकैरावृताः । न ते कुटिलकण्टकाः किमपि ये न मर्मच्छिदः समुज्झत वृथास्थितिं बत सहध्वमध्वश्रमम् ॥ ३ ॥

## पलाशान्योक्तिनिदर्शनम् ।

किंशुक किं शुकमुखवत्कुसुमानि विकासयस्यनिशम् । यस्यां जनोऽनुरागी सा गीरेतैः कदाऽपि नोच्चार्या ॥ १ ॥ त्यज किंशुक पुष्पिताभिमानं निजशिरसि भ्रमरोपसेवनेन । विकसन्नवमालतीवियोगात्कुरुते वह्निधियैव त्वयि प्रवेशम् ॥ २ ॥ उपनदिपुलिने महापलाशः पवनसमुच्छलदेकपत्रपाणिः । दवदहनविनष्टजीवितानां सलिलमिवैष ददाति पादपानाम् ॥ ३ ॥

---

१ यो निम्बं परशुना वृश्चति (छिनत्ति) यश्च निम्बं मधुना सर्पिषा( घृतेन )वा सिञ्चति, यश्च गन्धमाल्याद्यैरर्चति तेषां सर्वेषामपि कृते निम्बः कटुरेवेति वृश्चतीत्यादिक्रियापदाध्याहारेणायं श्लोकः समर्थनीयः । २ इन्दिन्दिरो भ्रमरः । ३ माकन्द आम्रः । ४ निम्बकुड्मले । ५ मौकुलीनां काकानां कुलम् । ६ स्फीतिः सम्पत्तिः । ७ ग्रसन- । ८ पुष्टः । ९ विनाश्य । १० अवरोधः । ११ सर्पान् । १२ रक्षणाभाव- । १३ हे पलाश । १४ वचनम् । १५ मालतीविरहे मया जीवताऽपि किमिति त्वां च वह्निं सम्भाव्य स्वं शरीरं दाहयितुमेव त्वयि मधुपः प्रविशति, न तु त्वत्तो मधुलाभेन स्वप्रमोदायेति हेतूत्प्रेक्षा भ्रान्तिमदुपमाणिता ।

## शाखोटान्योक्तिनिदर्शनम् ।

शाखोट शाल्मलिपलाशकरीरकाद्याः शृण्वन्तु पुण्यनिलयौ यदसौ वसन्तः । युष्मभ्यमर्पयति पल्लव-पुष्पलक्ष्मीं सौरभ्यसंभवविधिस्तु विधेरधीनः ॥ १ ॥ कस्त्वं भोः कथयामि दैवहतकं[1] मां विद्धि शाखोटकं[2] वैराग्यादिव वक्षि[3] साधु विदितं कस्मादिदं कथ्यते । वामेना[4]त्र वटस्तमध्वगजनः सर्वात्मना सेवते न च्छायापि[5] परोपकारकृतये मार्ग[6]स्थितस्यापि मे ॥ २ ॥

## पीलुवृक्षान्योक्तिनिदर्शनम् ।

धन्याः सूक्ष्मफला अपि प्रियतमास्ते पीलुवृक्षाः क्षितौ क्षुत्[7]क्षीणेन जनेन हि प्रतिदिनं येषां फलं भुज्यते । किं तैस्तत्र महाफलैरपि पुनः कल्पद्रुमाद्यैर्द्रुमैर्येषां नाम मनाग[8]पि श्रमनुदे छायाऽपि न प्राप्यते ॥ १ ॥

## करीरान्योक्तिनिदर्शनम् ।

फलं दूरतरेऽप्यास्तां पुष्णासि कुसुमैर्जनान् । इतरे तरवो मन्ये करीर तव किंकराः ॥ १ ॥ किं पुष्पैः किं फलैस्तस्य करीरस्य दुरात्मनः । येन वृद्धिं समासाद्य न कृतः पत्रसंग्रहः ॥ २ ॥

## बिल्वान्योक्तिनिदर्शनम् ।

आमोदी[9]नि सुमेदुरा[10]णि च मृदुस्वादूनि च क्ष्मारुहा[11]मुद्यानेषु वनेषु लब्धजनुषां सन्[12]तीतरेषामपि । किंतु श्रीफलता तवैव जयि[13]नी मालूर[14] दिङ्मण्डले यस्यैतानि फलानि यौवनवतीवक्षोजलक्ष्मीगृहाः ॥ १ ॥

## शालिवृक्षान्योक्तिनिदर्शनम् ।

शाखासंततिसंनिरुद्धनभसो भूयांस एवाव[15]नौ विद्यन्ते तरवः फलैरविकलैरार्तिच्छिदः प्राणिनाम् । किंतु द्वित्रदलैरलङ्कृततनोः शाले स्तुमस्तुङ्गतां दत्वा येन निजं शिरःसुकृतिना को नाम न प्रीणितः[16]॥ १ ॥

## कुटजान्योक्तिनिदर्शनम् ।

समुपागतवति दैवादवहेलां[17] कुटज मधुकरे मा गाः । मकरन्दतुन्दिला[18]नामरविन्दानामयं महामान्यः १

## इक्षोरन्योक्तिनिदर्शनम् ।

कान्तोऽसि नित्यमधुरोऽसि रसाकुलोऽसि किंचासि पञ्चशर[19]कार्मुकमद्वितीयम् । इक्षो तवास्ति सकलं परमेकमू[20]नं यत्सेवितो भजसि नीरसतां क्रमेण ॥ १ ॥ परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो यदीयः सर्वेषामिह खलु विका[21]रोऽप्यभिमतः । न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः किमिक्षो र्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥२॥ मुखे[22] यद्वैरस्यं वपुरपि पुनर्ग्रन्थि[23]निचितं न संतप्तः कोऽपि क्षण

---

१ हतभाग्यम् । २ श्मशानादिपावकप्लुष्टपत्रम् । ३ कथयसि । ४ वामोपलक्षितेन मार्गेणेत्यर्थः । वाममार्गोपलक्षित इति प्रत्यायनं च । ५ छायाऽऽरोहणभोजनशयनादिना समित्पत्रादिना चेति । गाढानुरागेणेति तु प्रत्यायनम् । ६ जनसंचारोचितदेशे स्थितस्य । सदाचारेण सम्पन्नस्येति प्रत्यायनम् । कस्यापि विपदा ग्रस्तस्य निर्विण्णस्ववचनमत्र ध्वन्यत इति बोध्यम् । ७ बुभुक्षा-पीडितेन । ८ किञ्चिदपि । ९ सुगन्धितानि । १० सुपुष्टानि । ११ तरूणाम् । १२ फलानीत्यर्थात् । १३ सर्वेभ्य इतरेभ्योऽतिशायिनीत्यर्थः । १४ बिल्वेत्यर्थः । १५ पृथिव्याम् । १६ प्रसादितः । १७ अव-ज्ञाम् । १८ मकरन्दरसेन समृद्धानाम् । १९ कामदेव- । २० त्रुटितम् । २१ गुडशर्कराऽऽत्मिक विकृतिः । २२ अग्रभागे प्रथममिति यावत् । २३ ग्रन्थयः पर्वाणि, तैर्निचितं व्याप्तम्

मपि भजेन्मूलमभितः । फलं चैवाप्राप्य वितथैरसलिप्सस्य भवतस्तदिक्षोर्नायुक्तं विहितमितरैर्यत्तु
दलनम् ॥ ३ ॥

## लवङ्गीलताऽन्योक्तिनिदर्शनम् ।

अयि दुष्कृतकेन केन वत्से हलिकद्वारि लवङ्गि पुष्पिताऽसि । स्तबकास्तव पांसुभिः परीताः परितः
प्राङ्गणसीम्नि यल्लुठन्ति ॥ १ ॥ लूनं[2] मत्तमतङ्गजैः कियदपि च्छिन्नं तुषारार्दितैः[3] शिष्टं ग्रीष्मजतीक्ष्ण-
भानुकिरणैर्भस्मीकृतं काननम् । एषा कोणगता मुहुः परिमलैरामोदयन्ती[4] दिशो हा कष्टं ललिता
लवङ्गलतिका दावाग्निना दह्यते ॥ २ ॥ सौरभ्येण समावृणोषि ककुभः[5] पुष्णासि पुष्पन्धयाँल्[6]लूतातन्तु[7]
वृथा तथाऽपि कियतीस्त्वं यापयेर्यामिनीः । अस्मिन्दासपुरे परस्तत इतो विन्यस्तविस्रामिषे मालाकार-
मृते लवङ्गि ललितान्कस्ते गुणाञ्ज्ञास्यति ॥ ३ ॥

## कार्पासान्योक्तिनिदर्शनम् ।

नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे । येषां गुणमयं[9] जन्म परेषां गुह्यगुप्तये[10] ॥ १ ॥ श्लाघ्यं
कार्पासफलं यस्य गुणै रन्ध्रवन्ति[11] विहितानि । मुक्ताफलानि तरुणीकुचकलशतटेषु विलसन्ति ॥ २ ॥
निष्पेषोऽस्थिचयस्य दुःसहतरः प्राप्तस्तुलारोहणं ग्राम्यस्त्रीनखचुम्बनव्यतिकरस्तन्त्रीप्रहारव्यथा । मातङ्गो[12]-
क्षितमण्डवारिकणिकापानं च कूर्चाहतिः कार्पासेन परार्थसाधनविधौ किं किं न चाङ्गीकृतम् ॥ ३ ॥

## शणान्योक्तिनिदर्शनम् ।

भूर्जः परोपकृतये निजकवचविकर्तनं सहते । परबन्धनाय तु शणः प्रेक्षध्वमिहान्तरं[13] कीदृक् ॥ १ ॥

## कण्टकारिकाऽन्योक्तिनिदर्शनम् ।

उचितं नाम नारङ्ग्यां केतक्यामपि कण्टकाः । रसगन्धोज्झिते किं ते कण्टकाः कण्टकारिके ॥१॥

## धत्तूरान्योक्तिनिदर्शनम् ।

माधुर्यसाराऽधरितामृतस्य[14] तत्कण्टकित्वं पनसस्य सह्यम् । उन्मादिनो[15] मातुलपुत्रकस्य[16] कथं सहामो बत
कण्टकित्वम् ॥ १ ॥ धत्तूर धूर्त तरुणेन्दुनिवासयोग्ये स्थाने पिशाचपतिना[17] विनिवेशितोऽसि । किं
कैरवाणि विकसन्ति तमः प्रयाति चन्द्रोपलो[18] द्रवति वार्धिरुपैति वृद्धिम् ॥ २ ॥ धत्तूरकण्टक फल-
प्रतिरोधबुद्ध्या[19] वैरं वृथैव कुरुषे पनसेन सार्धम् । सन्तो हसन्ति न भजन्ति च चेतसा त्वां भ्रान्ता
भवन्ति पुरुषास्तव सेवनेन ॥ ३ ॥ महेशस्त्वां धत्ते शिरसि रसराजस्य[20] जयिनी[21] विशुद्धिस्त्वत्सङ्गात्

---

१ दलनमन्तरा रसलाभासम्भवादिति तत्त्वम् । २ छिन्नम् । ३ हिमपीडितैः । ४ सुग-न्धिताः कुर्वाणा । ५ दिशाः, तदन्तःप्रदेशान् । ६ भ्रमरान् । ७ इदं सम्बुद्धिपदम् । ८ पामर-जनप्राये देशे । ९ सूत्ररूपं धर्मरूपं च । १० गुद-, गोप्य- । ११ सच्छिद्राणि । १२ मातङ्गेन चाण्डालेन उक्षितं सिक्तं यन्मण्डवारि ओदनजलविशेषस्तत्कणिका तस्याः पानम् । १३ भेदः । १४ माधुर्यस्य सारं तत्त्वं तेनाधरितं पराभूतम्, अमृतं येन तथाभूतस्य । १५ प्रमोहवर्ध-कस्य, प्रमत्तस्य च । १६ धत्तूरस्य । १७ महादेवेन, पिशाचराजेन च । १८ चन्द्रकान्तमणिः । १९ मम फलानि न कश्चिद् गृह्णीयादिति भ्रमेण । २० पारदस्य । २१ उत्कर्षशालिनी । दुःशका सम्पन्नत्वे चातिशयितोत्कृष्टफलदेति तथोक्तिः ।

कनकमयमेतत्त्रिभुवनम् । तनोति त्वत्सेवां ननु कनकवृक्ष त्वदपरः परः को नु स्यात्तद्यदि न सुलभीभावमभजः ॥ ४ ॥

## पलाण्डुराजान्योक्तिनिदर्शनम् ।

कर्पूरधूलीरचितालवालः कस्तूरिकाकुङ्कुमलिप्तदेहः । सुवर्णकुम्भैः परिषिच्यमानो निजं गुणं मुञ्चति किं पलाण्डुः ॥ १ ॥ पलाण्डुराज त्वयि चेन्न जातु चिदुग्रता स्यान्न भवेः प्रियस्त्वम् । गुणास्तु सर्वे विदिताः परेषामनेकपीडाप्रशमप्रवीणाः ॥ २ ॥

## तृणान्योक्तिनिदर्शनम् ।

रूढस्य सिन्धुतटमनु तस्य तृणस्यापि जन्म कल्याणम् । यत्सलिलमज्जदाकुलजनस्य हस्तावलम्बनं भवति ॥ १ ॥ उत्तुङ्गैस्तरुभिः किमेभिरखिलैराकाशसंस्पर्शिभिर्धन्योऽसौ नितरामुलपविटपी नद्यास्तटेऽवस्थितः । एवं यः कृतबुद्धिरुज्झितजलव्यालोलवीचीवशान्मज्जन्तं जनमुद्धरामि सहसा तेनैव मज्जामि वा ॥ २ ॥

## कलमान्योक्तिनिदर्शनम् ।

कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकह्लाराः । पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ १ ॥ अस्मानवेहि कलमानलमाहतानां येषां प्रचण्डमुसलैरवदाततैव । स्नेहं विमुच्य सहसा खलतां प्रयान्ति ये स्वल्पपीडनवशान्न वयं तिलास्ते ॥ २ ॥

## ताम्बूलान्योक्तिनिदर्शनम् ।

किं वीरुधो भुवि न सन्ति सहस्रशोऽन्या यासां दलानि न परोपकृतिं भजन्ते । एकैव वल्लिषु विराजति नागवल्ली या नागरीवदनचन्द्रमलंकरोति ॥ १ ॥ वल्लीनां कति न स्फुरन्ति परितः पत्राणि किं तैरिह स्निग्धैरप्यतिकोमलैरपि निजामेवाश्रयद्भिः श्रियम् । तानेव स्तुमहे महाजनमुखश्रीकारिजन्मव्रतान्यासूते नवनागरीप्रियतमांस्ताम्बूलवल्लीदलान् ॥ २ ॥

## तुम्बिकान्योक्तिनिदर्शनम् ।

सर्वास्तुम्ब्यः समकटुरसास्तुम्बिवल्लीप्रसूतास्ताः संबद्धा अपि कतिपया दुस्तरं तारयन्ति । शब्दायन्ते सरसमपराः शुष्ककाष्ठे निषण्णास्तन्मध्येऽन्या ज्वलितहृदयाः शोणितं संपिबन्ति ॥ १ ॥ एके तुम्बा व्रतिकरगताः पात्रतामानयन्ति गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः । एके तावद्ग्रथितसगुणा दुस्तरं तारयन्ति तेषां मध्ये ज्वलितहृदया रक्तमेके पिबन्ति ॥ २ ॥

## वंशान्योक्तिनिदर्शम् ।

छिन्नः सुनिशितैः शस्त्रैर्विद्धश्च नवसप्तधा । तथाऽपि हि सुवंशेन विरसं नापजल्पितम् ॥ १ ॥

---

१ सुवर्णरूपम् । विशुद्धे हि पारदे सेविते सर्वस्यापि दिव्यशरीरत्वं स्वर्णमयत्वं च सम्पद्यत इति तथोक्तिः । २ उग्रगन्धत्वरूपोऽसह्यत्वरूपो वा दोषः । ३ विषूचिकादिरोग- । ४ शालिविशेषान् । ५ कण्डितानाम् । ६ शुभ्रत्वं, निर्मलत्वं च । ७ तैलं, सौहार्दं च । ८ खलात्मतां, पिशुनतां च । ९ लताः । १० रुधिरम् । ११ ब्रह्मचारिहस्तगताः । १२ जलभाजनत्वं योग्यत्वं च ।

## कुन्दान्योक्तिनिदर्शनम् ।

यापयति यामिनीस्त्वयि । दुर्वहा तदपि नापचीयते पद्मिनीविरह-
एष षट्पदयुवा मदायतः कुन्द मधुवैभवमस्ति यत्ते रे कुन्द किं दुरभिमानमुरीकरोषि । एतन्न चेतसि
वेदना हृदि ॥ १ ॥ संदर्शयस्व
करोषि सरोजबन्धुः पुष्पन्धयोऽपि मम सौरभमातनोति ॥ २ ॥

## कमलान्योक्तिनिदर्शनम् ।

इतीव कुमुदोद्भेदे कमलैर्मुकुलायितम् ॥ १ ॥ प्रसारितकरे
वरमश्रीकता लोके नासमानसमानता । किं न कैरव लज्जा ते कुर्वतः कोशसंवृतिम् ॥ २ ॥ लक्ष्मीसंपर्कजातोऽयं
मित्रे जगदुद्द्योतकारिणि । यदेव गुणसंदोहधाम्नि चन्द्रे पराङ्मुखः ॥ ३ ॥ अन्तश्छिद्राणि[3] भूयांसि कण्टका
दोषः पद्मस्य निश्चितम् । कथं कमलनालस्य नाभूवन्भङ्गुरा गुणाः ॥ ४ ॥ मालतीमुकुला याताः कुन्दा मन्दा-
बहवो बहिः । पङ्कज त्वामिदं ब्रूमः कुत्र यातु मधुव्रतः ॥ ५ ॥ पङ्कज जलेषु[6] वासः प्रीतिर्मधुपेषु
यितास्तथा । यद्यपि तदपि तवैतच्चित्रं मित्रोदये हर्षः ॥ ६ ॥ कुसुमं कोशातक्या विकसति रात्रौ
कण्टकैः सङ्गः । अलिकुलनिचयै रुचिरं किंतु यशः कुमुदकमलयोरेव ॥ ७ ॥ उदितवति
दिवा च कूष्माण्ड्याः । संकुचसि कमल यदयं हर हर बामो विधिर्भवतः ॥ ८ ॥
द्विजराजे कस्य न हृदये मुदः पदं दधति । यल्लक्ष्मीवसतेस्ते मधुपैरुपजीव्यते कोशैः
एते हि गुणाः पङ्कज सन्तोऽपि न ते प्रकाशमायान्ति । हर हर विस्मृत्योक्तं क्व नु
॥ ९ ॥ पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि नहि किं ते । यस्य कृते शत-
लज्जा सवितृरक्तायाः[14] ॥ १० ॥ किं कुप्यसि कस्मैचन सौरभसाराय कुप्य निजमधुने । अयि मकरन्दस्यन्दिनि पद्मिनि मन्ये तवैव सुभग-
पत्र प्रतिपत्रं तेऽद्य मृग्यते[15] भ्रमरैः ॥ ११ ॥ मधुप इव मारुतेऽस्मिन्मा सौरभ
त्वम् । पुष्पवतीमपि[16] भवतीं त्यजति न वृद्धः शुचिर्हंसैः ॥ १२ ॥ न कुले वाऽपि
लोभमम्बुजिनि मंस्थाः । लोकानामेव मुदे महितोऽप्यात्माऽमुनाऽर्थितां नीतः ॥ १३ ॥ यत्पुष्णाति मिलिन्दानरविन्द महत्त्वमेतत्ते ॥ १४ ॥
न शीले न वास्ति रूपेऽपि कश्चिदुत्कर्षः । त्वं पङ्कजन्माऽपि यदृच्छभावादपि स्पृशस्यम्बु न
रे पद्मिनीपत्र भवच्चरित्रं चित्रं प्रतीमो वयमत्र किंचित् । यद्यल्लोलुपैर्वा मधुपैर्विहारः । कलङ्क एवैष कुमुद्व-
पङ्कसङ्गि ॥ १५ ॥ जनिः[20] सरोङ्कादतिपङ्किनो[21] अपि त्वया कैरविणि व्यधायि मुधा सुधाबन्धुनि
तीनां कलङ्किनः[24] किंतु कलावतीनाम् ॥ १६ ॥ कमलिनि मलिनी-
बन्धुभावः । जनापवादः परितः प्रयातः समागमो हन्त न जातु जातः ॥ १७ ॥ परिणतमकरन्दमार्मिकास्ते जगति भवन्तु चिरायुषो
करोषि चेतः किमिति बकैरवहेलितानभिज्ञैः । स्वयमेव शंकरेण । कमलिनि
मिलिन्दाः ॥ १८ ॥ रुचिरतिरुचिराशुचित्वमुच्चैः शिरसि धृतः नलिनि निपुणतां वदामि किं ते
मलिनीकरोषि कस्मान्मुखमिदमिन्दुमुदीक्ष्य लोककान्तम् ॥ १९ ॥

---

१ पुष्परसमात्रलुब्धो मधुव्रतः । २ कुड्मल- । निधि- । ३ रन्ध्राणि दोषाश्च । ४ शूकाः,
शत्रवश्च । ५ तन्तवः, सम्पन्नत्वादयश्च धर्माः । ६ नीरेषु, डलयोः सावर्ण्यान्मूढेष्विति चार्थः ।
७ भ्रमरेषु, मदिरापानकृत्सु च । ८ अङ्गरुहैः शत्रुभिश्च । ९ सूर्यस्य, प्रियस्य चोन्नतौ । १० चन्द्र-
मसि, ब्राह्मणश्रेष्ठे च । ११ लक्ष्मीर्हि कमलालयेति । १२ भ्रमरैः, मद्यपैश्च । १३ कुड्मलं, निधिश्च ।
१४ सूर्येऽरागवत्याः, पितृकामिन्याश्च । १५ अन्विष्यते । १६ विकसितपुष्पां, रजस्वलां च ।
१७ श्वेतः, पवित्रश्च । १८ मरालः, सूर्यश्च । १९ भ्रमरान् । २० उत्पत्तिः । २१ पङ्कः कर्दमः,
दोषश्च । २२ लुब्धैः । २३ भ्रमरैः, मद्यपैश्च । २४ मृगाङ्कस्य, दूषितस्य च । २५ चन्द्रबिम्बे
२६ कलुषीकुरुषे । २७ तिरस्कृता । २८ मूढः । २९ भ्रमराः ।

भ्रमरविलासिनि लास्यलालसायाः । त्रिभुवननयनोत्सवं यदिन्दुं नयसि न हन्त दगन्तवर्त्मसीमाम् ॥२०॥
स्वच्छन्दं दल[1]दरविन्द ते मरन्दं[2] विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः । आमोदानथ हरिदन्तराणि[3]
नेतुं नैवान्यो जगति समीरणात्[4]प्रवीणः ॥ २१ ॥ यावत्त्वां न खलु हसन्ति कैरविण्यो यावत्त्वां
तरणिकराः परामृशन्ति । यावत्ते मधुविभवो नवोऽस्ति तावन्माध्वीकं वितर सरोज षट्पदेभ्यः
॥ २२ ॥ रे पद्मिनीदल तवात्र मया चरित्रं दृष्टं विचित्रमिव यद्विदितं ध्रुवं तत् । यैरेव शुद्धसलिलैः
परिपालितस्त्वं तेभ्यः पृथग्भवसि पङ्क[5]भवोऽसि यस्मात् ॥२३॥ कामं भवन्तु मधुलम्पटषट्पदौघसङ्घट्ट-
घर्घरघनध्वनयोऽब्जखण्डाः[6] । गायन्नपि श्रुतिमुखं विधिरेष यत्र भृङ्गः स कोऽपि धरणीधरनाभिपद्मः॥२४॥
विश्रम्य काननमसौ दिवसावसाने त्वय्येव षट्पदयुवा हृदयं बबन्ध । राजीव चेन्मलिनिमानमुरीकरोषि[7]
कः स्यादहो मधुलिहां[8]मधुनाऽवलम्बः ॥ २५ ॥ स्वामोदवासितसमग्रदिगन्तराला रक्ता मनोहरशिखा
सुकुमारमूर्तिः । सेव्या सरोजकलिका तु यदैव जाता नीतस्तदैव विधिना मधुपोऽन्यदेशम् ॥ २६ ॥
किं बान्धवेन रविणा हरिणाऽथ किंवा लक्ष्म्या च किंच जलजोदरजेन किंवा । एतस्य शुद्धचरितस्य
सरोरुहस्य नैषा तुषारजनिता शमितां[10] विपत्तिः ॥ २७ ॥ लक्ष्मीनिवास इति वारिरुहां प्रसिद्धिरन्वेषिताः
कतिपया वरटा[11]स्तु सन्ति । राज्ञि प्रसारितकरे किमहं ददामि संकोचितं वदनमम्बुरुहैरितीव ॥ २८ ॥
॥ २८ ॥ लक्ष्मीः स्वयं निवसति त्वयि लोकधात्री[12] मित्रेण[13] चापि विहितोऽस्ति दृढोऽनुरागः ।
वन्दीव गायति गुणांस्तव चञ्चरीकः[14] कः पुण्डरीक[15] तव साम्यमुरीकरोति ॥ २९ ॥ अयि दलदरवि-
दस्यन्दमानं[16] मरन्दं[17] तव किमपि लिहन्तो मञ्जु[18] गुञ्जन्तु भृङ्गाः । दिशि दिशि निरपेक्षस्तावकीनं
विवृण्वन्परिमलमयमन्यो बाधन्वो गन्धवाहः ॥३०॥ समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं निवासः
पर्यायः[19] सुरहृदयहारी परिमलः । गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव [20]द्विजोत्तंसे हंसे यदि रतिरती-
वोन्नतिरियम् ॥ ३१ ॥ नालस्य प्रसरो जलेष्व[21]पि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखेऽतिमृदु-
ता मित्रे[22] महान्प्रश्रयः[23] । आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे[24] यस्यैषा स्थितिरम्बुजस्य वसति-
र्युक्तैव तत्र श्रियः ॥ ३२ ॥ नीरान्निर्मलतो जनिर्मधुरता वामामुखस्पार्धिनी वासो यस्य हरेः करे परि-
मलो गीर्वाण[25]चेतोहरः । सर्वस्वं तदहो महाकविगिरां कामस्य चाम्भोरुह त्वं चेत्प्रीतिमुरीकरोषि मधुपे किं
त्वां प्रति ब्रूमहे ॥ ३३ ॥ एकस्मिञ्जनिरावयोः समजनि स्वच्छे सरोवारिणि भ्रातः कानिचिदिहैव कानि
चिदहान्यत्र व्यतीतानि नौ[26] । लब्धं तामरस त्वया मृगदृशां लीलावतंसास्पदं शैवालं विलुठामि पामरवधू-
पादाहते पाथसि[27]॥३४॥वैमुख्यं मृगलाञ्छनस्य मनसो निर्माति मे न व्यथां नो दूये चिरलालिता मधु-
लिहः सर्पन्ति[28] यन्नान्तिकम् । जल्पन्तीव दुरक्षराणि मधुपश्रेणीरवच्छद्मना यत्कादम्ब कुमुद्वती
हसति मां तन्मे मनस्ताम्यति ॥ ३५ ॥ संभूति[29]स्तव मानसे सरसिज त्वत्सौरभैर्वासिताः सर्वास्ताः
ककुभस्तवास्ति परमो बन्धुर्विवस्वानिति । त्वं चेदद्य गुणानवद्य शिशिरे शीतानिलैः शीर्यसि
प्रायः प्राप्तमिदं तदत्र परमं दिष्टेऽब्ददृष्टं बलम् ॥ ३६ ॥ खद्योतास्तरला भवन्ति भगवानस्तंगतो

---

१ विकसत्कमल । २ मकरन्दम् । ३ दिगन्तरभागान् । ४ पवनात् । ५ पङ्कः कदर्मः, पापं च । ६ कमलपुञ्जाः । ७ स्वीकरोति । ८ मधुलिहां भ्रमराणाम् । ९ ब्रह्मणा, तस्यापि भगवन्नारायणनाभिकमलात्सम्भूतत्वात् । १० प्रशमं नीता । ११ हंसाङ्गनाः, कपर्दिकाश्च । १२ जगत्पुष्टिकर्त्री । १३ सूर्येण, प्रियेण च । १४ भ्रमरः । १५ श्वेतकमल । १६ प्रवहत् । १७ मकरन्दम् । १८ सुन्दरं, मधुरमिति यावत् । १९ लक्ष्म्याः । २० पक्षिपूणि, विप्रे च । २१ अम्बुषु जडेषु च । डलयोः सावर्ण्यम् । २२ सूर्ये, च प्रिये । २३ प्रेम । २४ चन्द्रमसि, अतिदूषिते च । २५ गीर्वाणा देवाः । २६ आवयोः । २७ जले । २८ गच्छन्ति । २९ जन्म । ४० चक्रवाकः ।

भानुमान्कोकः शोकमुपैति मत्तमनसः क्रेङ्कुर्वते कौशिकाः[1] । इत्थं चेत्सदसद्विवेकविधुरो धाता तदेता-दृशं न द्रष्टव्यमितीव मुद्रितवती पद्मेक्षणं पद्मिनी ॥ ३७ ॥ पौलोमीपति[2]कानने विलसतां गीर्वाण-भूमीरुहां येन घ्रातसमुज्झितानि कुसुमान्याजघ्निरे निर्जरैः । तस्मिन्नद्य मधुव्रते विधिवशा[3]न्माध्वीकमा-काङ्क्षति त्वं चेदञ्चसि लोभमम्बुज तदा किं त्वां प्रतिब्रूमहे ॥ ३८ ॥

## लतान्योक्तिनिदर्शनम् ।

लतानामेतासामुदितकुसुमानां मरुदयं मतं लास्यं[4] दत्त्वा श्रयति भृशमामोदं[5]मसमम् । लतास्त्व-ध्वन्यानाम[6]हह दृशमादाय सहसा ददत्याधि[7]व्याधिभ्रमिरुदितमोहव्यतिकरम्[8] ॥ १ ॥

## महेश्वरान्योक्तिनिदर्शनम् ।

भस्मनि स्मरारिपोरनुरागो हीयते न घनसार[9]परागः । भूषणं यदि फणी[10] न मणीनां काचिदप्य[11]पचि-तिर्न च हेम्नः ॥ १ ॥ उरसि फणिपतिः शिखी[12] ललाटे शिरसि विधुः सुरवाहिनी[13] जटायाम् । प्रिय-सखि कथयामि किं रहस्यं पुरमथनस्य रहोऽपि संसदेव[14] ॥ २ ॥ इयं तावल्लीला यदधिरुरुहे वृद्ध-वृषभो यदुन्नह्ने[15] रुण्डं यदिह चितिभस्मापि लिलिपे । अयं को व्यापारो यदतिलकि[16] भाले हुतवहो यदग्रैवि[17] व्यालो यदकवलि[18] हालाहलमपि ॥ ३ ॥ बिभ्राणे त्वयि भस्म कः सममवन्मन्दादरश्चन्दने कः क्षौमं कलयाञ्चकार न कृती कृत्तिं[19] वसाने[20] त्वयि । धत्तूरस्पृहहयालुतां त्वयि गते तत्याज[21] कः केतकीं स्वातन्त्र्याज्जहिहि त्वमीश्वर गुणांल्लोकोऽस्ति तद्ग्राहकः ॥ ४ ॥ त्वं चेत्संचरसे वृषेण[22] लघुता का नाम दिग्दन्तिनां[23] व्यालैः काञ्चनकुण्डलानि कुरुषे हानिर्न हेम्नः पुनः । मूर्ध्ना चेद्वहसे जडांशुम[24]-यशः किं नाम लोकत्रयीदीपस्या[25]म्बुजबान्धवस्य[26] जगतामीशोऽसि किं ब्रूमहे ॥ ५ ॥ छेत्सि ब्रह्मशिरो[27] यदि प्रथयति प्रेतेषु सख्यं[28] यदि क्षीबैः[29] क्रीडसि मातृभि[30]र्यदि रतिं धत्से श्मशाने यदि । सृष्ट्वा[31] संहरसि प्रजा यदि तथाप्याधाय भक्त्या मनः कं सेवे करवाणि किं त्रिजगती शून्या त्वमेवेश्वरः ॥ ६ ॥

## परशुरामान्योक्तिनिदर्शनम् ।

त्वं जामदग्न्य[32] जननी[33]वधपातकेन संदूषितः क्रतुविदां[34] धुरि नाभविष्यः । गीर्वाणवन्द्यचरणस्तव चन्द्रमौलिराचार्यकं[35] स भगवान्यदि नाकरिष्यत् ॥ १ ॥

---

१ उलूकाः । २ पौलोमी इन्द्राणी तत्पतिरिन्द्रस्तत्काननं नन्दनवनं तत्र । ३ दैवात् । ४ नृत्यम् । ५ आनन्दं, सौरभं च । ६ प्रवासिनाम् । ७ 'आधिर्ना मानसी व्यथा ।' इत्यमरः । ८ साङ्कर्यम् । ९ चन्दनचूर्णक्षेपः । १० सर्पः । ११ ह्रासः । १२ अग्निः । १३ गङ्गा । १४ सभा । १५ अबन्धि । १६ तिलकवद्भाले न्यस्तः । १७ ग्रीवामयः कृतः । १८ पीतम् । १९ हस्तिनश्चर्म । २० दधाने । २१ त्यज । २२ वृषभेण । २३ दिग्गजानाम् । २४ जडीभूतप्रकाशम्, 'डलयोः सावर्ण्यम्' इति जलांशुमिति चन्द्रमसमित्यर्थः । चन्द्रमा हि जलमय इति तथोक्तिः । २५ दीपः प्रकाशकः । २६ दिनकरस्य । २७ ब्रह्मणः पञ्च शिरांस्यासन् तेष्वेकं महादेवेन च्छिन्नमिति कथाऽपि पुराणे । २८ प्रेम । २९ मत्तः । ३० जननीभिरिति तु प्रतीतिमात्रम् । जगन्मातृ-रूपाभिर्देवीभिरिति वास्तविकोऽर्थः । ३१ विष्णोः प्रद्युम्नानिरुद्धसङ्कर्षणवासुदेवेति भेदवन्महे-श्वरस्यापि स्वयम्भूशङ्कररुद्रसदाशिवेतिभेदचतुष्टयं जगत्सृष्टिपालनसंहरणकर्तृनिर्मायरूपं भक्ता मन्यन्ते तन्मतमादायैव सृष्ट्वेत्यादि वचनम् । ३२ जमदग्निनन्दन । ३३ कदाचित्पितुराज्ञया मातरं सोदरांश्च जघानेति तथोक्तिः । ३४ ऋषीणां मन्त्रदृशाम् । ३५ अध्यापनम् ।

## रामचन्द्रान्योक्तिनिदर्शनम् ।

सङ्ग्रामाङ्गणमागते दशमुखे सौमित्रिणा[1] विस्मितं सुग्रीवेण विवर्तितं हनुमता व्यालोलमालोकितम् । श्रीरामेण परन्तु पीनपुलक[2]स्फूर्जत्कपोलश्रिया सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥ १ ॥

## सीतान्योक्तिनिदर्शनम् ।

वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या । अहो सेयं सीता दश[3]वदननीता हल[4]रदैः परीता रक्षोभिः श्रयति विवशां कामपि दशाम्[5] ॥ १ ॥

## इन्द्रान्योक्तिनिदर्शनम् ।

जम्भारिरेव जानाति रम्भासंयोगविभ्रमम् । घटीचेटीविटैः[6] किंस्विज्जानात्यमरकामिनीम् ॥ १ ॥

## मदनान्योक्तिनिदर्शनम् ।

पुरो गीर्वाणानां[7] निजभुजबलाहोपुरुषिकाम्[8] अहो कारंकारं[9] पुरभिदि शरं संमुखयतः । स्मरस्य स्वर्बाला-नयनशुभमालार्चनपदं वपुः सद्यो भालानलभसितज्वाला[10]स्पदमभूत् ॥ १ ॥

## आकाशान्योक्तिनिदर्शनम् ।

यः पीयूषसहोदरैः[11] स्नपयति ज्योत्स्नाजलैः सर्वतो यश्च त्वामधिकाधिकं ज्वलयति प्रोद्दामतापैः करैः । भ्रातर्व्योम तयोरपि स्थितिमिह व्यातन्वतो विक्रियानिर्मुक्तस्य महत्त्वमेतदसमं[12] दूरेऽधिरूढं तव ॥ १ ॥

## वसुन्धराऽन्योक्तिनिदर्शनम् ।

विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतमाः । तानपि दधासि मातः[13] काश्यपि यातस्तवापि च विवेकः ॥ १ ॥

## जलान्योक्तिनिदर्शनम् ।

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे । किं वाऽतःपरमुच्यते स्तुतिपदं यज्जीवनं[14] देहिनां त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ १ ॥ अब्जं[15] त्वदब्जं[16] मतो[17]ऽब्जभूः[18] स्ततः[19] इदं ब्रह्माण्डमण्डात्पुनर्विश्वं स्थावरजंगमं तदितर-त्त्वन्मूलमित्थं पयः । धिक्त्वां चोर इव प्रयासि निभृतं[20] निर्गत्य जालान्तरैर्बध्यन्ते विवशास्त्वदेकशरणा-स्त्वामाश्रिता जन्तवः ॥ २ ॥

---

१ लक्ष्मणेन । २ रोमाञ्च- । ३ दशवदनो रावणः । ४ कालसदृशरदनैः । ५ अवस्थाम् । ६ घटी ( वाहिका ) चेटी तस्या विटो जारः । ७ देवानाम् । ८ स्वपौरुषातिशयम् । ९ अहो कारंकारं पुनः पुनः प्रथयित्वेति भावः । १० दाहप्रसार- । ११ अमृतसमैः १२ अनुपमम् । १३ हे पृथिवि ! १४ यद्देहिनां प्राणिनां जीवनमित्यर्थः । १५ जलाज्जातम् । १६ कमलम्, भगवन्नाभिजत्वेऽपि जात्याब्जत्वाशून्यत्वादब्जान्तरवज्जलजमेवेति भावः । १७ एवं नाभिकमलस्यापि जलजत्वे सिद्धे इत्यर्थः । 'अथ' इति पाठान्तरम् । १८ ब्रह्मा । १९ ब्रह्मणः । २० गुप्तं यथा भवेत्तथा ।

## मारुतान्योक्तिनिदर्शनम् ।

संत्रा नाविकधोरणी निपतिता मध्येजलं क्षेपणी पन्थाः पर्वतदुर्गमो वनघनच्छन्नश्च तारापथः । हंहो
मारुत दुस्तरो जलनिधिः शीर्णा च नौः सांप्रतं मध्ये मज्जय वा तटं गमय वा हस्ते तवास्ते द्वयम् ॥ १ ॥

## मृगतृष्णिकान्योक्तिनिदर्शनम् ।

जलभ्रमोत्पत्तिकृतो गुणौघान्प्रकाशयन्त्यां मृगतृष्णिकायाम् । जलाशयभ्रान्तिरभून्ममैषा प्रभूतसंता-
पकरी पिपासा ॥ १ ॥

## सुवर्णान्योक्तिनिदर्शनम् ।

अग्निदाहे न मे दुःखं छेदे न निकषे न वा । यत्तदेव महद्दुःखं गुञ्जया सह तोलनम् ॥ १ ॥ न वै
ताडनात्तापनाद्वह्निमध्ये न वै विक्रयात्क्लिश्यमानोऽहमस्मि । सुवर्णस्य मे मुख्यदुःखं तदेकं यतो मां जना
गुञ्जया तोलयन्ति ॥ २ ॥

## मौक्तिकान्योक्तिनिदर्शनम् ।

अत्यच्छेनाविरुद्धेन सुवृत्तेनातिचारुणा । अन्तर्भिन्नेन संप्राप्तं मौक्तिकेन निबन्धनम् ॥ १ ॥ हृदये
कुरु संचयं गुणानां यदि रे वाञ्छसि नासिके निवासम् । इति मौक्तिक ते वदामि नूनं गुणहीनो नहि
नासिके विभाति ॥ २ ॥ रत्नाकरे परिहृता वसतिः किमन्यदङ्गीकृतः कठिनवेधनदुःखभारः । वक्षोज-
कुम्भपरिरम्भणलोलुपेन किं किं न तेन विहितं बत मौक्तिकेन ॥ ३ ॥

## सुवर्णकारान्योक्तिनिदर्शनम् ।

हे हेमकार परदुःखविचारमूढ किं मां मुहुः क्षिपसि वारशतानि वह्नौ । संदीप्यते मयि सुवर्णगुणा-
तिरेको लाभः परं तव मुखे खलु भस्मपातः ॥ १ ॥

## हारान्योक्तिनिदर्शनम् ।

मुक्ताहार गुणीभूय नोपसर्प्यः स्तनस्त्वया । विभवे यस्य काठिन्यं व्यर्थं तदुपसर्पणम् ॥ १ ॥ गुण-
वतस्तव हार न युज्यते परकलत्रकुचेषु विलुण्ठनम् । स्पृशति शीतकरो जघनस्थलीमुचितमस्ति तदेव
कलङ्किनः ॥ २ ॥ सद्वृत्तसद्गुणविचित्रमहार्हकान्ते कान्ताघनस्तनतटाञ्चितचारुमूर्ते । आः पामरीकठिन-
कण्ठविलग्नभग्न हा हार हारितमहो भवता गुणित्वम् ॥ ३ ॥ दीर्णोऽसि चेत्कनकसूत्रनिवेशनाय
मुक्ताकलाप किमतो भवतो विषादः । यत्पञ्चबाणजयमङ्गलहेमकुम्भकुम्भस्तनीस्तनतटे भविताऽनुषङ्गः
॥ ४ ॥ अन्येऽपि सन्ति कति नो गुणिनो जगत्यां हार त्वमेव गुणिनामुपरि स्थितोऽसि । एणीदृशां
मुरसि नित्यमवस्थितस्य सद्वृत्तता च शुचिता च न खण्डिता यत् ॥ ५ ॥ येनाकारि महीभृतामविरलं

---

१ गलिता । २ दण्डविशेषः । ३ गगनम् । ४ परीक्षोपले । ५ अतिवर्तुलेन, सदाचारपरा-
यणेन च । ६ निवासः । ७ कुचरूप- । ८ तन्तुमतः, सौन्दर्यादिधर्मयुक्तस्य च । ९ चन्द्रमाः ।
१० चन्द्रमसः कलङ्कित्वकल्पनात् । ११ सुवर्तुल- । सदाचार च । १२ कन्दर्प- । १३ पृथिव्याम् ।
१४ मृगाक्षीणां स्त्रीणाम् । १५ राज्ञाम् ।

कण्ठेषु लीलायितं येन प्रापि सरोजसुन्दरदृशां तुङ्गस्तनालिङ्गनम् । जातं येन गजेन्द्रगण्डपुलिने साधारणं गुञ्जया मुक्तादाम तदेव पामरपुरे नावाप कां कां दशाम् ॥ ६ ॥

## कञ्चुकान्योक्तिनिदर्शनम् ।

श्रीमता कथय कञ्चुक पूर्वं कानि कानि सुकृतानि कृतानि । जन्म यापयसि येन समस्तं हारहृद्यहृदये हरिणाक्ष्याः ॥ १ ॥

## कुण्डलान्योक्तिनिदर्शनम् ।

यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुष्करं तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः । मुग्धापाण्डुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः प्राप्तं कुण्डल वाञ्छसे किमपरं यन्मूढ दोलायसे ॥ १ ॥

## नासाभूषणान्योक्तिनिदर्शनम् ।

हारस्यातिदुरापमस्ति भुवने हे नासिकाभूषण त्वत्सौभाग्यमिति प्रतीहि वनिताचक्रेन्दुकान्तिप्रद । यत्कान्तातनुसंगमाय सहते सोऽन्तर्विभेदव्यथां सा नासापुटभेदनादपि भवत्सङ्गं यतो वाञ्छति ॥ १ ॥

## वलयान्योक्तिनिदर्शनम् ।

गुणानामज्ञानादनुभवतु तावत्प्रतिपदं मुहुर्वाह्वुच्छेदव्यतिकरमसौ स्वर्णवलयः । अपि ज्ञाते तत्त्वे तव गुणसमुद्रस्य पुरतः समं गुञ्जापुञ्जैस्तुलितेमतिलज्जाकरमिदम् ॥ १ ॥

## रङ्गान्योक्तिनिदर्शनम् ।

हे रङ्ग हेमतुलया तुलितोऽसि नित्यं मानं जहीहि किमु पश्यसि नो विशेषम् । स्वर्णं सरत्नघटितं नृपशेखरेषु त्वं पाप पामरवधूचरणेषु लीनः ॥ १ ॥

## वीणादण्डान्योक्तिनिदर्शनम् ।

यदेतत्कामिन्याः सुरतविरतौ पल्लवरुचा करेणानीतस्त्वं वससि सह हारेण गुणिना । मुहुः कुर्वन्गीतं कुचकलशपीठोपरि लुठन्नये वीणादण्ड प्रकटय फलं कस्य तपसः ॥ १ ॥

## मुरल्यन्योक्तिनिदर्शननम् ।

माधवस्य मुरली मुखलग्ना रागमावहतु किंतु वयस्ये । वंशजाहमिति मास्तु सगर्वा या बिभर्ति बहुशो विवराणि ॥ १ ॥ परिपीड्य करद्वयेन गाढं परपुंसा परिचुम्बितानना‌पि । मुरली महनीयवंशजाता मुहुराक्रन्दमन्दमातनोति ॥ २ ॥

---

१ स्वर्णरूपं दिव्यरूपं च । २ अत्र भावे क्तः, तेन तुलितमिति पदं तोलितमित्यर्थकम् । तुलनमिति पाठान्तरं त्वसाध्वेव । ३ नवदलसमकोमलेन । ४ सूत्रवता, धर्म्मविशेषवता च । ५ शब्दं दुःखावेदकं शब्दविशेषं च ।

## कुविन्दान्योक्तिनिदर्शनम् ।

भ्रातर्ग्राम्यकुविन्द[1] कन्दलयता वस्त्राण्यमूनि त्वया गोणीविभ्रमभाजनानि सुबहून्यात्मा किमायास्यते । किं त्वेकं रुचिरं चिरादभिनवं वासस्तदासूत्र्यतां यन्नोज्झन्ति कुचस्थलात्क्षणमपि क्षोणीभुजां वल्लभाः[2] ॥ १ ॥

## लाङ्गलिकान्योक्तिनिदर्शनम् ।

रे लाङ्गलिक निषयाक्रोडे लोहं पुरा यदद्राक्षीः । स्पर्शास्पर्शविशेषात्तदखिलमजनिष्ट हेम नृपयोग्यम् ॥ १ ॥

## कर्णधारान्योक्तिनिदर्शनम् ।

दुर्गा नदी शिथिलबन्धविडम्बिनी नौरभ्युन्नता जलमुचो विषमः समीरः[3] । आरूढवान्निजकुटुम्बयुतोऽध्वनीनस्तत्कर्णधार कुरु यत्सदृशं कुलस्य ॥ १ ॥ जीर्णा तरिः सरिदियं च गभीरनीरा नक्राकुला[5] वहति वायुरतिप्रचण्डः । तार्याः स्त्रियश्च शिशवश्च तथैव वृद्धास्तत्कर्णधारभुजयोर्बलमाश्रयामः ॥ २ ॥

## तैलिकान्योक्तिनिदर्शनम् ।

अमी तिलास्तैलिक नूनमेतां स्नेहादवस्थां भवतोपनीताः । द्वेष्योऽभविष्यद्यदमीषु नूनं तदा न जाने किमिवाकरिष्यः ॥ १ ॥

## पञ्जरलावकान्योक्तिनिदर्शनम् ।

भ्रातः पञ्जरलावक मा कुरु संतोषमन्यनिधनेन[6] । प्रातस्तवैव धातुः स्वामित्वं किं न जानासि ॥१॥

## व्याधान्योक्तिनिदर्शनम् ।

एको विश्वसतां हराम्यपघृणः[7] प्राणानहं प्राणिनामित्येवं परिचिन्त्य मा स्वमनसि व्याधानुतापं कृथाः। भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः साधूनामरयो वसन्ति कति नो त्वत्तुल्यकक्षाः खलाः॥१॥ सर्वोद्वेगकरं मृगादनममुं संत्यज्य हा धिक्त्वया लोकस्यानपकारिणं गिरिनदीतीराटवीनिर्वृतम् । अश्नन्तं तृणमेणशावमदयं[10] व्याध घ्नताऽमुं वृथा देवो दुर्बलघातकोऽयमिति सा गाथा यथाऽर्थीकृता ॥ २ ॥

## विषमन्त्र्यन्योक्तिनिदर्शनम् ।

भेकेन[11] क्वणता सरोषपरुषं यत्कृष्णसर्पानने दातुं कर्णचपेटमुज्झितभिया[12] हस्तः समुल्लासितः । यच्चाधोमुखमक्षिणी विदधता नागेन तूष्णीं स्थितं तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥ १ ॥

---

१ कुविन्दस्तन्तुवायः । २ प्रियाः । ३ पवनः । ४ पथिकः । ५ ग्राहसङ्कुला । ६ निधनं मरणम् । ७ अपघृणो निष्करुणः । ८ स्वनीचतां निगूह्य धर्मध्वजिनो भूत्वा बकवन्निरपराधिनो निहन्तुमेव कृतसमाधय इति भावः । ९ भुञ्जानम् । १० निर्दयम् । ११ मण्डूकेन । १२ उज्झिता त्यक्ता भीर्भयं येनेति तेन ।

## मालाकारान्योक्तिनिदर्शनम् ।

तोयैरल्पैरपि करुणया भीमभानौ[1] निदाघे मालाकार व्यरचि भवता या तरोरस्य पुष्टिः । सा किं शक्या जनयितुमिह प्रावृषेण्येन[2] वारां[3] धारासारानपि विकिरता विश्वतो वारिदेन ॥ १ ॥

## कायस्थान्योक्तिनिदर्शनम् ।

विप्रेभ्यः साधुदानं रिपुजनसुहृदां चोपकारान्कुरु त्वं सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्यं यथाऽर्थम् । श्रोत्रे ते तथ्यमेतत्कथयति सततं लेखिनी भाग्यशालिन्नो चेन्नष्टेऽधिकारे मम मुखसदृशं ताव-कास्यं भवेद्धि ॥ १ ॥

## कविजनान्योक्तिनिदर्शनम् ।

कस्त्वं भोः कविरस्मि तत्किमु सखे क्षीणोऽस्यनाहारतो धिग्देशं गुणिनोऽपि दुर्गतिरियं देशं न मा-मेव धिक् । पाकार्थी क्षुधितो यदैव विदधे पाकाय बुद्धिं तदा विन्ध्ये नेन्धनमम्बुधौ न सलिलं नान्नं धरित्रीतले ॥ १ ॥

## चिकुरान्योक्तिनिदर्शनम् ।

ये शिरसा निहिता अपि न भवन्ति सखे समानसुखदुःखाः । चिकुरा[4] इव ते बाला एव जरा[5]पाण्डु-भावेऽपि ॥ १ ॥

## शैलूषान्योक्तिनिदर्शनम् ।

वंशः प्रांशुरसौ घुणव्रणमयो जीर्णा वरत्रा इमाः कीलाः कुण्ठतया विशन्ति न महीमाहन्यमाना अपि । आरोहव्यवसायसाहसमिदं शैलूष संत्यज्यतां दूरे श्रीर्निकटे कृतान्तमहिषग्रैवेयघण्टारवः ॥ १ ॥

## कुशीलवान्योक्तिनिदर्शनम् ।

मौलिः स्वर्णकिरीटकान्तिरुचिरः केयूरभव्यौ भुजौ त्वद्भृत्याः किल कञ्चुकिप्रभृतयो देवेति विज्ञाप्यसे । इत्थं कल्पनया कुशीलवनृपा[6]हंकारदार्ढ्यं वृथा नृत्यान्ते भवतो भविष्यति मसीमात्रावशेषं वपुः ॥ १ ॥

## बालिकान्योऽक्तिनिदर्शनम् ।

स्रग्दाम[7] मूर्धनि निधेहि गवेधुकानां[8] गुञ्जामयीमुरसि धारय हारयष्टिम् । बाले कलावति चिरं पति ताऽसि पल्लौ तल्लौहम्[9]न्यदपि भूषणमेषणीयम्[10] ॥ १ ॥

## पल्लीपतिपुत्र्यन्योक्तिनिदर्शनम् ।

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर[11]प्रान्तं हन्त पुलिन्दसुन्दर[12]करस्पर्शक्षमं लक्ष्यते । तत्पल्ली-पतिपुत्रि कुञ्जरकुलं कुम्भा[13]भयाभ्यर्थनादीनं त्वामनुनाथते[14] कुचयुगं पत्रावृतं मा कृथाः ॥ १ ॥

---

१ तिग्मांशौ । २ वर्षाकालिकेन । ३ जलानाम् । ४ केशाः । ५ वार्धक्यसमर्पिते श्वेतत्वेऽपि । ६ कुशीलवनृपा नटप्रधानाः । ७ माला । ८ धान्यविशेषाणाम् । ९ लोहमयम् । १० अभि-लषणीयम् । ११ आपाण्डुरमीषत्पाण्डुरवर्णम् । १२ पुलिन्दा भिल्लविशेषाः ।१३ कुञ्जराणां गण्डाः कुचसमाः, तव कुचयुगे च पुलिन्दा निहितप्रणया इति गण्डदर्शने कुचस्मृत्या सन्निहननशै-थिल्ये गण्डानां भयशून्यत्वं सम्पद्यत इति तथोक्तिः । १४ "अनुनाथति स्तनयुगम्" । इत्येव प्रयोक्तुमुचितम्, अन्यथा च्युतसंस्कृतत्वापत्तेः । नह्यत्राशीरर्थोऽभिमतः, येनात्मनेपदं सम्पद्येत नाथते राशिष्येवात्मनेपदशासनमिति काव्यप्रकाशादौ स्पष्टम् । 'अनुनाधते' इति वा युक्त मित्यस्माकं काव्यप्रकाशादिव्याख्यायां स्पष्टं च ।

## पथिकान्योक्तिनिदर्शनम् ।

न यत्र गुणै[1]र्वरत्रमेकमप्यस्ति संनिधौ । कस्तत्र भवतः पान्थ जीवे[2]नस्पृहयालुता ॥ १॥ वापी काऽपि कदापि न श्रुतचरी को वेद कीदक्सरो व्योमाम्भोजवनीव चात्र त[3]टिनी कै[4]र्नाम विज्ञायते । हंहो पान्थ दुरन्तसाहसभरैरत्रागतं चेन्मरौ मण्डूकाकुलपङ्कसंकुलजलाद्[4]न्वोः क[5]बन्धं पिब ॥ २ ॥

## कस्तूरिकाऽन्योक्तिनिदर्शनम् ।

अयि त्यक्तासि कस्तूरि पामरैः पङ्कशङ्कया । अलं खेदेन भूपालाः किं न सन्ति महीतले ॥ १ ॥ यद्यपि दैवा[6]ल्लब्धा कस्तूरीभू[7]मिरत्र भूरितरम् । नेया किमसौ तदपि हि शौ[8]चार्थं जा[9]नता पुंसा ॥ २ ॥ दु[10]र्भिल्लपल्लीपतिपुत्रहस्ते कस्तूरि कस्ते वद दुर्विपा[11]कः । आरभ्य सौरभ्यकथासु मौनं मालिन्यमात्रे वचसोऽवकाशः ॥ ३ ॥ अयि बत गुरुगर्वं मा स्म कस्तूरि यासीरखिलपरिमलानां मौलिना सौरभेण । गिरिगहनगुहायां लीनमत्यन्तदीनं स्वजनकम[12]मुनैव प्राणै[13]र्हीनं करोषि ॥ ४ ॥ जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो दूरे पुंसां वपुषि रचना पङ्कशङ्कां करोति । यद्यप्येवं सकलसुरभिद्रव्यगर्वापहारी को जानीते परिमलगुणः कोऽपि कस्तूरिकायाः ॥ ५ ॥

## दीपान्योक्तिनिदर्शनम् ।

रक्ष पात्रगतं स्नेहं प्रदीप [14]श्रीविवर्धनम् । प्रयास्यन्ति विना तेन भस्मत्वं यद्वद्गुणाः ॥ १ ॥ बहिरतिनिर्मलरूपं वहतस्ते दीप दैवतो जगति । अवगतमचिरादा[15]न्तरमौज्ज्व[16]ल्यं कज्जलद्वारा ॥ २ ॥ न मणेरितोऽधिका भा नो मृदुता न प्रकाशसमता वा । अचिरस्थितिरिति दीपो नहि बहुमूल्योऽभवत्प्रायः ॥ ३ ॥ यां कान्तिं वहसि परां प्रदीप भद्र स्वीयाऽसाविति हृदि मा स्म मन्यथास्त्वम् । स[17]स्नेहे त्वयि निशि भानुनाहि[18]तोऽसौ नैवं चे[19]दहनि सति क्व वा गता सा ॥ ४ ॥ प्रदीप किमु कुप्यसि प्रलयमारुतप्रज्वलत्प्रभापटलपा[20]टलप्रकटपावकव्यक्तये । त्वमङ्ग किमु कामिनीकुचतटीपटीपल्लवप्रकम्पनपरिस्फुरत्पवनलेशपारं गतः ॥ ५ ॥ रे रे दीप तिरस्कृताखिलतमःस्तोमारिवर्गस्य ते रात्रौ गूढनिजाङ्गपातिशलभाघातेन किं पौरुषम् । तत्कर्माचर येन तावकयशो भूयात्प्रभाते पुनर्न स्नेहो न च सा दशा नहि परं [21]ज्योतिः परं स्थास्यति ॥ ६ ॥

## तुलान्योक्तिनिदर्शनम् ।

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु तुला । उचितज्ञाऽसि तुले किं तुलयसि गुञ्जाफलैः कनकम् ॥ १ ॥ प्राप्य प्रमाणपदवीं को नामास्ते तुलेऽव[22]लेपस्ते । नयसि गरिष्ठमधस्तात्तदि[23]तरमुच्चैस्तरां कुरुषे ॥ २ ॥

---

१ रज्जुविशेषयुक्त, कलशादिभाजनं, पाण्डित्यादिधर्म्मविशेषशाली सत्पुरुषश्च । २ जीवनं जलं, प्राणरक्षणं च । ३ नदी । ४ कूपात् । ५ सलिलम् । "कबन्धमुदकं पाथः" इत्यमरः । ६ दैवादित्यसम्भवस्य सम्भवित्वकादाचित्कतां द्योतयितुमिदं वचनम् । ७ अने केषां कस्तूरी मृगाणामेकत्र समवायस्त त्रैव च तत्तन्नाभितः कस्तूरी पतिता स्यात्तदा तदुपलक्षिता भूमिः कस्तूरीभूमिः । ८ हस्तपादादिशोधनाय । ९ नेयं मृत्तिकेति जानता, अजानता तु श्याममृत्स्नेतिनीयत एवेति बोध्यम् । १० दुष्टशबर- । ११ दुर्भाग्यम् । १२ सौरभेणैव निमित्तेन । १३ प्राणत्याजितम् । १४ श्रीः शोभा, सम्पत्तिश्च । १५ अन्तः स्थितम् । १६ लक्षणया मालिन्यमित्यर्थः । १७ सतैले, सप्रणये च । १८ आहिता स्थापितेत्यर्थः । १९ दिने । २० "श्वेतरक्तस्तु पाटल" इति कोशकाराः । २१ प्रकाशः प्रभावश्च । २२ अभिमानः । २३ लघिष्ठम् ।

## जलकुम्भान्योक्तिनिदर्शनम् ।

दृढतरगलकनिबन्धः कूपनिपातोऽपि कलश ते धन्यः । यज्जीवन[1]दानैस्त्वं तर्षमपि नृणां हरसि ॥ १ ॥

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहानलः । यत्कान्ताकुचपार्श्वबाहुलतिकाहिन्दोल[2]लीलासुखं लब्धं कुम्भवर त्वया नहि सुखं दुःखैर्विना लभ्यते ॥ २ ॥

## कलसान्योक्तिनिदर्शनम् ।

भ्रातः काञ्चन[3]लेपगोपितबहिस्ताम्राकृते सर्वतो मा भैषीः कलश स्थिरो भव चिरं देवालयस्योपरि । ताम्रत्वं गतमेव काञ्चनमयी कीर्तिः स्थिरा तेऽधुना नान्तस्तत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः ॥ १ ॥

## दुग्धान्योक्तिनिदर्शनम् ।

को हि तुलामधिरोहति शुचिर्ना[4] दुग्धेन सहजमधुरेण । तप्तं विकृतं मथितं तथाऽपि यः स्नेह[5]मुद्गिरति ॥ १ ॥

## बडिशदण्डान्योक्तिनिदर्शनम् ।

यत्सद्गुणोऽपि सरलोऽपि तटस्थितोऽपि वंशो[6]द्भवोऽपि विदधासि नृशंसकर्म[7] । वक्रात्मनो बडिशदण्ड तदेव तस्य जानामि संगतिफलं तव कण्टकस्य ॥ १ ॥

## शरान्योक्तिनिदर्शनम् ।

कोटिद्वयस्य लाभेऽपि नतं सद्वंशजं धनुः । असद्वंश्यः शरः स्तब्धो लक्ष[8]लाभाभिकाङ्क्षया ॥ १ ॥

## लम्पाकान्योक्तिनिदर्शनम् ।

प्रागल्भ्यं प्रथयन्यशो विशदयन्धाटीं मुखे योजयन्भूपानां कलयन्कथां विरचयन्हस्ताङ्गुलीः स्फोटयन् । दानं पल्लवयन्गुणं द्विगुणयन्नेत्राञ्चलं चूर्णयँल्लम्पाकः[9] सविधं समेत्य सुदृशः किं नाम नो भाषते ॥ १ ॥

## खलान्योक्तिनिदर्शनम् ।

किमहं वदामि खल दिव्यमतं गुणपक्षपातमभितो भवतः । गुणशालिनो निखिलसाधुजनान्यदहर्निशं न खलु विस्मरसि ॥ १ ॥

## कण्टकान्योक्तिनिदर्शनम् ।

सुमुखोऽपि सुवृत्तो[10]ऽपि सन्मार्ग[11]पतितोऽपि सन् । सतां वै पादलग्नो[12]ऽपि व्यथयत्येव कण्टकः[13] ॥ १ ॥

## कालकूटान्योक्तिनिदर्शनम् ।

नन्वाश्रय[14]स्थितिरियं तव कालकूट केनोत्तरोत्तरविशिष्टपदो[15]पदिष्टाः । प्रागर्णवस्य हृदये[16] वृषलक्ष्मणो[17]ऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ १ ॥

---

१ जीवनं जलं प्राणाश्च । २ दोला- । ३ द्रवितसुवर्णपरिष्कृतबहिर्भाग- । ४ जलासम्पृक्तेन । ५ घृतं, प्रीतिं च । ६ वंशः समानं कुलं वेणुश्च । ७ क्रूरं कर्म्म । ८ लक्षं लक्षगुणितं द्रव्यं, लक्ष्यं च । ९ वञ्चको लम्पटो वा । १० सुवर्तुलाकारः, सच्चारित्र इति तु प्रत्यायनमात्रम् । ११ शोधिते पथ्यपि च्युतः । सन्मार्गनिष्ठ इति तु प्रत्यायनम् । १२ चरणतलान्तः कृतः प्रवेशः, चरणयोः प्रणत इति प्रत्ययानम् । १३ शूकः शत्रुर्दुष्टो वेति तु प्रकृतम् । १४ आश्रयो गृहम् । १५ पदं स्थानम् । १६ अभ्यन्तरभागे, अन्तःकरणे च । १७ वृषलक्ष्मणः शङ्करस्य ।

## जिह्वाऽन्योक्तिनिदर्शनम्।

द्वात्रिंशद्दशनद्वेषिमध्ये भ्रमसि नित्यशः। तदिदं शिक्षितं केन जिह्वे संचारकौशलम् ॥ १ ॥

## नन्दनवनान्योक्तिनिदर्शनम्।

स्वर्लोकस्य शिखामणिः सुरतरुग्रामस्य धामाद्भुतं पौलोमीपुरुहूतयोः परिणतिः पुण्यावलीनामसि। सत्यं नन्दन किं त्विदं सहृदयैर्नित्यं विधिः प्रार्थ्यते त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥१॥

## वसन्तान्योक्तिनिदर्शनम्।

धूमायिता दश दिशो दलितारविन्दा देहं दहन्ति दहना इव गन्धवाहाः। त्वामन्तरेण मृदुताम्रदलाम्रमञ्जुगुञ्जन्मधुव्रत मधो किल कोकिलस्य ॥ १ ॥

## मुसलान्योक्तिनिदर्शनम्।

जगति विदितमेतत्काष्ठमेवासि नूनं तदपि च किल सत्यं कानने वर्धितोऽसि। नवकुवलयनेत्रापाणिसङ्गोत्सवेऽस्मिन्मुसल किसलयं ते तत्क्षणाद्यन्न जातम् ॥ १ ॥

## अन्योक्तिसाङ्कर्यम्।

गतास्ते दिवसा यत्र ह्यवज्ञा[१] कल्पशाखिनाम्। औदुम्बरफलेभ्योऽपि स्पृहयामोऽद्य जीवितुम् ॥ १ ॥ एका नौकां वै भजते तावद्यावत्पारं न गच्छति। उत्तीर्णे तु नदीपारे नौकायाः किं प्रयोजनम् ॥ २ ॥ भूरुभयोरैक्यमुभयोर्दलकाण्डयोः। शालिश्यामाकयोर्भेदः फलेन परिचीयते ॥ ३ ॥ कौस्तुभमुरसि मुरारेः शिरसि शशी द्योतते पुरंजयिनः[७]। ननु जन्मना नु जलधेर्जग्मतुरियतीं गतिं पश्य ॥४॥ साधो कुण्डलघटनापरिश्रमादलमविद्धकर्णा पूः[८]। वसति दिगम्बरनगरे रजकश्चतुरोऽपि किं कुरुते ॥ ५ ॥ शतपदी सति पादशते क्षमा यदि न गोष्पदमप्यतिवर्तितुम्। किमियता द्विपदस्य हनूमतो जलनिधेः क्रमणे विवदामहे ॥ ६ ॥ हे मल्लि हे मालति हे लवङ्गि न तादृशी कापि भवादृशीनाम्। क्षणं समाधाय मधुव्रतं या विस्मारयेदम्बुजिनीवियोगम् ॥ ७ ॥ यः कुन्तपाणिरिह भूप इति प्रसिद्धो भूखण्डमात्रविभवः परसेवकश्च। तस्यात्मजः सततमिच्छति राजशब्दं व्रीडे जगज्जननि हन्त निराश्रयासि ॥ ८ ॥ इन्द्रो यमोऽसि वरुणोऽसि हुताशनोऽसि ब्रह्मा हरो हरिरसीत्यसकृद्यदुक्तिः। भूपालमौलिमणिरञ्जितपादपीठ तस्यानृतस्य फलमिन्धनमुद्वहामि ॥ ९ ॥ आः सर्वतः स्फुरतु कैरवमाः पिबन्तु ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः[९][१०]। यातो यदेष चरमाचलमूलचुम्बी पङ्केरुहप्रकरजागरणप्रदीपः[११] ॥१०॥ खरनखरविमुक्ता रक्तरक्ताश्च मुक्ताः परिणतबदराणां[१२] विभ्रमेणोपगृह्य। सपदि सरसि धौताः प्रत्यभिज्ञाय मुक्ता इति किरति किराती हन्त कान्तार एव ॥ ११ ॥ यद्यपि बहवो विटपाः प्रसूनगुच्छच्छटाङ्कुरिताः। तदपि त्वमेव दक्षश्चूतविटप मानमर्दने स्त्रीणाम् ॥ १२ ॥ दृष्टेऽपि मित्रे चेत्पद्मे मुखमुद्रणमापतेत्[१३]। तदाऽस्य वसुवैधुर्यं[१४] को नाम निहनिष्यति ॥ १३ ॥ विधुः सुधाचन्दिरचन्द्रिकाचयैश्चकोरचञ्चूपुटमाशु पूरयेत। परन्तु दैवान्मुदिरोऽन्तराभवन्रुणद्धि नूनं भवितव्यतेदृशी ॥ १४ ॥ प्रशस्य शिरसा धृतो यदि न हीरक त्वं भ्रमाद्विवेकविकलैर्गुणागुणविधौ किमेतावता। अयं गुणवशीकृतस्तव दिदृ-

---

१ दशना दन्ताः। २ पारिजातादिपुञ्जस्य। ३ शचीन्द्रयोः। ४ फलम्। ५ अर्जुनसाहाय्येनाग्निना खाण्डववनं दग्धमिति महाभारते। ६ अवज्ञा अपमानः। ७ 'पुरंजयिनः' इत्यत्र "पुरारातेः" इति पठनीयम्, शङ्करस्येत्यर्थः। ८ पुरी। ९ ज्योत्स्नापुञ्जम्। १० उदरभरणमात्रपराः। ११ कमलवन-। १२ परिपक्व-।१३ आपेति तदिति च च्छेदः।१४ द्रव्यं किरणाश्च वसुपदवाच्याः।

क्षया दूरतः समेति भवता निजं किमु न दर्शनं दीयते ॥ १५ ॥ सन्मित्रं वसुसन्ततीः समतया दृष्ट्वा किरन्तं मुहुः केषामाननमण्डलानि न मुदा मुञ्चन्ति मुद्रामिह । चेद्दोषाऽतिविकाशिना जलजेन कस्यापि नो मुद्रणाभङ्गस्तर्हि स तस्य भाग्यविभवो नैतद्वसुव्यर्थता ॥ १६ ॥ दोषोत्सारिणि धीप्रसारिणि महानैर्बल्यसंहारिणि श्लेष्मच्छेदिनि वातभेदिनि भृशं भग्नास्थिसम्मेलिनि । रक्तोद्रेकिणि पित्तहेलिनि लघावप्योषधीनां गुरौ दुर्गन्धः सुगुणे किमत्र लशुने धातस्त्वया स्थापितः ॥ १७ ॥ देवाज्ञामधिगम्य शब्दरचनां कर्णप्रियां कुर्वतो दूराद्वीक्ष्य तवोन्नतिं वितरतः संजीवनानि क्षितौ । सन्तोषेण वशीकृतो द्विजशिशुः[२] प्राप्तोऽस्म्यनन्याश्रयः स्वल्पं याचितमब्द[३] विज्ञ मयि किं कार्पण्यमालम्बसे ॥ १८ ॥ श्रुत्वा चूत तव श्रियं नु विधृतो जम्ब्वा रुषा कालिमा कालिङ्गं त्रपयेव लीनमवनौ दीर्णं शुचा दाडिमम् । मृद्वीका मृदुतां दधार पनसं रोमाञ्चितं भीतितः सन्तापादिव नालिकेरजठरे जातं जलानां भरैः ॥ १९ ॥ आख्यास्तदीया रुचिराऽर्थपोषा गायन्ति कोशाधिकृताः सतोषाः । परंतु पुण्यैरिह हर्षधाम प्राप्तं त्वया सम्प्रति चूतनाम ॥ २० ॥ इयत्येतस्मिन्वा निरवधिचमत्कृत्य[४]तिशये वराहो वा राहुः प्रभवति चमत्कारविषयः । महीमेको मग्नां यदयमवहद्दन्तमुसलैः शिरः शेषः शत्रुं निगिलति परं संत्यजति च ॥ २१ ॥ श्रुत्वा कुम्भसंमुद्भवेन[५] मुनिना किंचित्तदत्र्याहितं[६] सिन्धावन्धुं[७]कुटुम्बदर्दुरकुलं हर्षादिदं ध्यायति । गाम्भीर्याद्यदि ते न बिभ्यति न वा त्रस्यन्ति भेकीशिशोरत्रागत्य सुखं वसन्तु तिमयो जातानुकम्पा वयम् ॥ २२ ॥ वक्त्रां नैष तनूविवर्तनगतिं गृह्णाति साचिस्मितस्मेरैर्दृग्वलनैरमुष्य न मनाक्चेतः परावर्तते । हस्ते त्वं मुनिदारकस्य पतिता कल्याणि तन्नीयतां वेदीमार्जनबर्हिरर्पणवषट्कर्तव्यपाकैर्वयः ॥ २३ ॥ सन्त्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषास्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते । द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भासुरौ[१०] भ्रातः पर्वणि पश्य दानव[११]पतिः शीर्षावशेषीकृतः ॥ २४ ॥ वीणाप्येकगुणेन[१२] राजी[१३]रमणीनीरन्ध्रपीनस्तनद्वन्द्वे खेलति शुष्कदारुनिचया निःसारतुम्बीफला । चञ्चत्पार्विकशर्वरी[१४]परिवृढप्रौढप्रथाभासुरं मुक्ताजातमपीह निर्गुणतया योग्यं न संभाव्यते ॥ २५ ॥ तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे मौनं मुञ्चति किं च कैरवकुले कामे धनुर्धुन्वति । माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना धातः किं नु विधौ विधातुमुचितो धाराधराडम्बरः ॥ २६ ॥ कस्मै हन्त फलाय सज्जनगुणग्रामार्जने सज्जसि स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय[१५] । ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृतास्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्धनम् ॥ २७ ॥ मर्यादानिलयो महोदधिरयं रत्नाकरो निश्चितः सर्वाशापरिरक्षोऽनुगमितः संपत्तिहेतोर्मया । शम्बूको[१६]ऽपि न लभ्यते किमपरं रत्नं महार्घं[१७] परं दोषोऽयं न महोदधेः फलमिदं जन्मान्तरीयं मम ॥ २८ ॥ एकः कर्णमहीपतिः प्रतिदिनं लक्षाधिका याचकाः कस्मै किं वितरिष्यतीति मनसा चिन्तां वृथा मा कृथाः । आस्ते किं प्रतिर्याचकं[१८] सुरतरुः प्रत्यम्बुजं किं रविश्चन्द्रः किं प्रतिकैरवं[१९] प्रतिलतागुल्मं किमम्भोधरः ॥ २९ ॥

इति श्रीसुभाषितसुधारत्नभाण्डागारस्य षष्ठं भाण्डम् ।

---

१ कमलस्य, मूढस्य च । डलयोः सावर्ण्यम् । जनिरुत्पत्तिः । २ चातको ब्राह्मणश्च । ३ हे मेघ ! ४ चमत्कृतिश्चमत्कारः । ५ अगस्त्येन । ६ कृतमनर्थम् । ७ कूपरूपकुटुम्ब । ८ मण्डूकस्य । ९ ईषत् । १० प्रकाशमानौ । ११ सैंहिकेयः । १२ गुणस्तन्तुविशेषः, मधुरस्वरोद्भावनं क्षमत्वं च । १३ राजी- । १४ पूर्णचन्द्र- । १५ शृणु । १६ पङ्कः । १७ अत्युत्कृष्टमिति भावः । १८ सर्वान् याचकान् । १९ प्रतिकुवलयम् ।

# सुभाषितसुधारत्नभाण्डागारस्य सप्तमं भाण्डम्।

## विशिष्टरत्नमयम्।

अकरो हन्त सूर्योऽपि भ्रश्यतीति न संशयः।
( काव्यरसायने। )
अकाण्डपातोपनता न कं लक्ष्मीर्विमोहयेत्।
( कथासरित्सागरे। )
अकालमेघवद्वित्तमकस्मादेति याति च। ( कथासरित्सागरे। )
अकृत्यं मन्यते कृत्यम्।
अक्षोभ्यतैव महतां महत्त्वस्य हि लक्षणम्।
( कथासरित्सागरे। )
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति।
अगम्यं मन्यते सुगम्।
अगाधजलसंचारी न गर्वं याति रोहितः।
अगुणस्य हतं रूपम्।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम्।
अङ्गीकृतं सुकृतिनः परिपालयन्ति।
अचिन्त्यं शीलगुप्तानां चरितं कुलयोषिताम्।
( कथासरित्सागरे। )
अचिन्त्यं हि फलं सूते सद्यः सुकृतपादपः।
कथासरित्सागरे। )
अचिन्त्यो बत दैवेनाप्यापातः सुखदुःखयोः।
( कथासरित्सागरे। )
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम्।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्।
अजानतो हठात्कुर्वन्प्राज्ञमानी विनश्यति। ( कथासरित्सागरे। )
अजीर्णे भोजनं विषम्।
अजीर्णे भेषजं वारि।
अज्ञता कस्य नामेह नोपहासाय जायते। ( कथासरित्सागरे। )
अज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः।
अतर्क्या कुट्टनीकूटरचना हि विधेरपि। ( कथासरित्सागरे। )

अतिदानाद्बलिर्बद्धः।
अतिपरिचयादवज्ञा संततगमनादनादरो भवति।
अतिभुक्तिरतीवोक्तिः सद्यः प्राणापहारिणी।
अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके।
अति सर्वत्र वर्जयेत्।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति।
अत्यारूढो हि नारीणामकालज्ञो मनोभवः।
( रघुवंशे। )
अत्युच्चैर्भवति लघीयसां हि धाष्ट्र्यम्। ( शिशुपालवधे। )
अथास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः।
अदाता वंशदोषेण।
अधरेष्वमृतं हि योषितां हृदि हालाहलमेव केवलम्।
अधर्मयुद्धेन जयं को हीच्छेत्क्षत्रियो भवन्।
( कथासरित्सागरे। )
अधर्मविषवृक्षस्य पच्यते स्वादु किं फलम्। ( कथासरित्सागरे। )
अधिकस्याधिकं फलम्।
अनध्वा वाजिनां जरा।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा। ( कुमारसंभवे। )
अनन्यगामिनी पुंसां कीर्तिरेका पतिव्रता।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी।
( कुमारसंभवे। )
अनपेक्ष्य गुणागुणौ जनः स्वरुचिं निश्चयतोऽनुधावति। ( शिशुपालवधे। )
अनवसरे याचितमिति सत्पात्रमपि कुप्यते दाता।
अनाथा कृच्छ्रपतिता विदेशे स्त्री करोति किम्।
( कथासरित्सागरे। )
अनार्यः परदारव्यवहारः। (अभिज्ञानशाकुन्तले।)

अनार्यजुष्टेन पथा प्रवृत्तानां शिवं कुतः । (कथासरित्सागरे ।)

अनार्यसंगमाद्वरं विरोधोऽपि समं महात्मभिः । (किरातार्जुनीये ।)

अनाश्रया न शोभन्ते पण्डिता वनिता लता ।

अनियुक्तोऽपि च ब्रूयाद्यदीच्छेत्स्वामिनो हितम् । (कथासरित्सागरे ।)

अनिर्वर्णनीयं परकलत्रम् ।(अभिज्ञानशाकुन्तले।)

अनिश्चितावधिं धीराः सहन्ते विरहं चिरम् । (कथासरित्सागरे ।)

अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ।

अनुगृह्णन्ति हि प्रायो देवता अपि तादृशम् । कथासरित्सागरे ।)

अनुत्सेकः खलु विक्रमालंकारः ।

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् । (अभिज्ञानशाकुन्तले ।)

अनुरागपरायत्ताः कुर्वते किं न योषितः । (कथासरित्सागरे ।)

अनुरागान्धमनसां विचारसहता कुतः । (कथासरित्सागरे ।)

अनुसृत्य सतां वर्त्म यत्स्वल्पमपि तद्बहु ।

अनुहुंकुरुते घनध्वनिं नहि गोमायुरुतानि केसरी । (शिशुपालवधे ।)

अन्तरापाति हि श्रेयः कार्यसंपत्तिसूचकम् । (कथासरित्सागरे ।)

अन्तःसारविहीनानामुपदेशो न विद्यते ।

अन्धस्य दीपः ।

अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ।

अन्यायं कुरुते यदा क्षितिपतिः कस्तं निरोद्धुं क्षमः ।

अन्योऽन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ।

अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः । (रघुवंशे ।)

अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति । (अनर्घराघवे ।)

अपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ।

अपायो मस्तकस्थो हि विषयग्रस्तचेतसाम् । (कथासरित्सागरे ।)

अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिःस्वदते तुषाराः । (नैषधीयचरिते ।)

अपि गङ्गाजलस्नानादधःकेशः कुशायते ।

अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ।

अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ।

अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः ।

अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः । (रघुवंशे ।)

अपुत्रस्य गृहं शून्यम् ।

अपुत्रस्य गतिर्नास्ति ।

अपेक्षन्ते हि विपदः किं पेलवमपेलवम् । (कथासरित्सागरे ।)

अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म । (कुमारसंभवे ।)

अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।

अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः । (कथासरित्सागरे ।)

अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ।

अबला यत्र प्रबला ।

अबुद्ध्वा चित्तमप्राप्य विस्रम्भं प्रभविष्णुषु । (कथासरित्सागरे ।)

अभक्ष्यं मन्यते भक्ष्यम् ।

अभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ।

अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु । (रघुवंशे ।)

अभोगस्य हतं धनम् ।

अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थमिष्टेऽप्यवलम्बतेऽर्थे । (कुमारसंभवे ।)

अभ्यागतो यत्र न तत्र लक्ष्मीः ।

अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ( रघुवंशे । )
अमृतं क्षीरभोजनम् ।
अमृतं प्रियदर्शनम् ।
अमृतं राजसंमानम् ।
अमृतं शिशिरे वह्निः ।
अमृतायते हि स्तुतयः सुकर्मणाम् । ( किराता-र्जुनीये । )
अमोघो देवतानां च प्रसादः किं न साधयेत् । कथासरित्सागरे । )
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते । (रघुवंशे।)
अयमश्वः पताकेयमथवा परिघोषणम् ।
अयशोभीरवः किं न कुरुते बत साधवः । (कथा-सरित्सागरे । )
अयाच्यो नार्तानामनुपकरणीयो न महताम् ।
अयातपूर्वा परिवादगोचरं सतां हि वाणी गुणमेव भाषते । ( किरातार्जुनीये । )
अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ।
अयोविकारे स्वरितत्वमिष्यते कुतोऽयसां सिद्धरस-स्पृशामपि । ( नैषधीयचरिते । )
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि । ( किरातार्जुनीये । )
अरुन्तुदत्वं महतां ह्यगोचरः । (किरातार्जुनीये ।)
अर्थभारवती वाणी भजते कामपि श्रियम् ।
अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् । ( शङ्कराचार्ययस्य । )
अर्थातुराणां न गुरुर्न बन्धुः ।
अर्थिनि जने त्यागं विना श्रीश्च का ।
अर्थो हि कन्या परकीय एव ( अभिज्ञान-शाकुन्तले । )
अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः । ( परिभाषेन्दुशेखरे । )
अर्धो घटो घोषमुपैति नूनम् ।
अलब्धशाणोत्कषणा ।
नृपाणां न जातु मौलौ मणयो वसन्ति ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् । ( कुमारसंभवे । )
अल्पबीजं हतं क्षेत्रम् ।
अल्पविद्यो महागर्वी ।
अल्पश्च कालो बहवश्च विघ्नाः ।
अल्पसत्त्वेषु धीराणामवज्ञैव हि शोभते । ( कथा-सरित्सागरे । )
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् । ( रघुवंशे । )
अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी ।
अल्पारम्भः क्षेमकरः ।
अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकाराय रिपोर्वि-वृद्धिः । ( किरातार्जुनीये । )
अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसंपदः । ( किरातार्जुनीये । )
अवस्तुनि कृतक्लेशो मूर्खो यात्यवहास्यताम् । ( कथासरित्सागरे । )
अविचार्य प्रभूणां हि शुचेर्वाक्यं स्वमन्त्रिणः । ( कथासरित्सागरे । )
अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः । ( किरातार्जुनीये । )
अविद्याजीवनं शून्यम् ।
अविनीता रिपुर्भार्या ।
अविश्रमो लोकतन्त्राधिकारः । ( शाकुन्तले । )
अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् । ( रघुवंशे । )
अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः । ( कुमारसंभवे । )
अशीलं कस्य नाम स्यान्न खलीकारकारणम् । ( कथासरित्सागरे । )
अशीलं कस्य भूतये । ( कथासरित्सागरे । )
अशीलस्य हतं कुलम् ।

अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता । ( कुमारसंभवे । )
अश्नुते स हि कल्याणं व्यसने यो न मुह्यति । ( कथासरित्सागरे । )
अश्रेयसे न वा कस्य विश्वासो दुर्जने जने । ( कथासरित्सागरे । )
अश्वा यस्य जयस्तस्य ।
अश्वा यस्य यशस्तस्य ।
असंतुष्टा द्विजा नष्टाः ।
असन्मैत्री हि दोषाय कूलच्छायेव सेविता । ( किरातार्जुनीये । )
असंभाव्या अपि नृणां भवन्तीह समागमाः । ( कथासरित्सागरे । )
असंभोगो जरा स्त्रीणाम् ।
असाध्यं सत्यसाध्वीनां किमस्ति हि जगत्त्रये । ( कथासरित्सागरे । )
असाध्यं साधयत्यर्थं हेलयाऽभिमुखो विधिः । ( कथासरित्सागरे । )
असारे दग्धसंसारे सारं सारङ्गलोचनाः ।
असारेऽस्मिन्भवे तावद्भवाः पर्यन्तनीरसाः । ( कथासरित्सागरे । )
असिद्धार्था निवर्तन्ते नहि धीराः कृतोद्यमाः । ( कथासरित्सागरे । )
असिद्धस्तु हता विद्या ।
अस्थाने पतिता सतीव महतामेतादृशी स्याद्गतिः ।
अस्थिरं जीवितं लोके ।
अस्थिराः पुत्रदाराश्च ।
अस्थिरे धनयौवने ।
अस्वर्ग्यं लोकविद्विष्टम् ।( श्रीमद्भगवद्गीतायाम् )
अहह कलिकालः प्रभवति ।
अहह कष्टमपण्डितता विधेः ।
अहह महतां निःसीमानश्चरित्रविभूतयः ।
अहितो देहजो व्याधिः ।
अहो अतीव भोगाशा कं नाम न विडम्बयेत् ( कथासरित्सागरे । )
अहो चित्राकारा नियतिरिव नीतिर्नयविदः ।
अहो दुरन्ता बलवद्विरोधिता । (किरातार्जुनीये।)
अहो दैवाभिशप्तानां प्राप्तोऽप्यर्थः पलायते । ( कथासरित्सागरे । )
अहो नवनवाश्चर्यनिर्माणे रसिको विधिः । (कथासरित्सागरे । )
अहो रूपमहो ध्वनिः ।
अहो विधेरचिन्त्यैव गतिरद्भुतकर्मणाम् । ( कथासरित्सागरे । )
अहो विधौ विपर्यस्ते न विपर्यस्यतीह किम् । ( कथासरित्सागरे । )
अहो विनेन्द्रजालेन स्त्रीणां चेष्टा न विद्यते । ( कथासरित्सागरे । )
अहो विश्वास्य वञ्च्यन्ते धूर्तैश्छद्मभिरीश्वराः । ( कथासरित्सागरे । )
अहो सहन्ते बत नो परोदयम् ।
आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ।
आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवासः । ( नैषधीयचरिते । )
आकृष्टः कामलोभाभ्यामपायं को हि पश्यति । ( कथासरित्सागरे । )
आचारः प्रथमो धर्मः ।
आज्ञा गुरूणां ह्यविचारणीया । ( रघुवंशे । )
आत्मबुद्धिः सुखायैव ।
आत्मार्थे पृथिवीं त्यजेत् ।
आत्मानं सततं रक्षेत् । ( हितोपदेशे ।)
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ।( कुमारसंभवे । )
आदानं हि विसर्गाय सतां वारिमुचामिव ।(रघुवंशे)
आदावसत्यवचनं पश्चाज्जाता हि कुस्त्रियः । ( कथासरित्सागरे । )
आपत्काले च कष्टेऽपि नोत्साहस्त्यज्यते बुधैः । ( कथासरित्सागरे । )

आपत्सु धीरान्पुरुषान्स्वयमायान्ति संपदः।
(कथासरित्सागरे।)
आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि।
(कथासरित्सागरे।)
आपदेत्युभयलोकदूषणी वर्तमानमपथे हि दुर्मतिम्।
(किरातार्जुनीये।)
आपद्यपि परित्याज्यं न सत्त्वं संपदैषिभिः। (कथासरित्सागरे।)
आपद्यपि सतीवृत्तं न मुञ्चन्ति कुलस्त्रियः।
(कथासरित्सागरे।)
आपन्नत्राणविकलैः किं प्राणैः पौरुषेण वा।
(कथासरित्सागरे।)
आपन्नस्य विषयवासिन आर्तिहरेण राज्ञा भवितव्यम्। (शाकुन्तले।)
आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम्।
(मेघसन्देशे।)
आपो वहन्तीह हि लोकयात्रां यथा न भूतानि तथापराणि। (नैषधीयचरिते।)
आमुखापाति कल्याणं कार्यसिद्धिं हि शंसति।
(कथासरित्सागरे।)
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः।
आरब्धा ह्यसमाप्तैव किं धीरैस्त्यज्यते क्रिया।
(कथासरित्सागरे।)
आरब्धे हि सुदुष्करेऽपि महतां मध्ये विरामः कुतः।
(कथासरित्सागरे।)
आर्जवं हि कुटिलेषु न नीतिः। (नैषधीयचरिते।)
आलस्योपहता विद्या।
आवेष्टितो महासर्पैश्चन्दनः किं विषायते।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि (मेघसन्देशे।)
आशु बध्नाति हि प्रेम प्राग्जन्मान्तरसंस्तवः।
(कथासरित्सागरे।)
आश्वस्तो वेत्ति कुसृतिं प्रभुः को हि स्वमन्त्रिणाम्।
(कथासरित्सागरे।)

आसुरं कुलमनादरणीयम्।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत्।
आहुः सप्तपदी मैत्री।
आहृता हि विषयैकतानता ज्ञानधौतमनसं न लिम्पति। (नैषधीयचरिते।)
इच्छादानपरोपकारकरणं पात्रानुरूपं फलम्।
इतो भ्रष्टस्ततो भ्रष्टः।
इदं च नास्ति न परं च लभ्यते।
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्[1]।
(शिशुपालवधे।)
इष्टं धर्मेण योजयेत्।
इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि। (शाकुन्तले।)
इष्टवियोगमूलाः शोकाः।
इहामुत्र च नारीणां परमा हि गतिः पतिः।
(कथासरित्सागरे।)
ईर्ष्या हि विवेकपरिपन्थिनी। (कथासरित्सागरे।)
ईश्वराणां हि विनोदरसिकं मनः। (कथासरित्सागरे।)
उच्छ्रायं नयति यदृच्छयाऽपि योगः। (किरातार्जुनीये।)
उत्पद्यन्ते विलीयन्ते।
उत्तरोत्तरशुभो हि विभूनां कोऽपि मञ्जुलतमः क्रमवादः। (नैषधीयचरिते।)
उत्सवप्रियाः खलु मनुष्याः (अभिज्ञानशाकुन्तले।)
उत्सहन्ते नहि द्रष्टुमुत्तमाः स्वजनापदम् (कथासरित्सागरे।)
उत्साहैकधने हि वीरहृदये नाप्नोति खेदोऽन्तरम्।
(कथासरित्सागरे।)
उदारचरितानां तु वसुधैव कुटुम्बकम्।

---
[1] सूर्यम्।

उदारसत्त्वं वृणुते स्वयं हि श्रीरिवाङ्गना । ( कथासरित्सागरे । )
उदारस्य तृणं वित्तम् ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ।
उदिते परमानन्दे नाहं न त्वं न वै जगत् ।
उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः । निमित्तनैमित्तिकयोरयं क्रमः । ( शाकुन्तले । )
उद्धृतौ भवति कस्य वा भुवः श्रीवराहमपहाय योग्यता । ( शिशुपालवधे । )
उद्योगः पुरुषलक्षणम् ।
उद्वृत्तः क इव सुखावहः परेषाम् । ( शिशुपालवधे )
उन्नतो न सहते तिरस्क्रियाम् ।
उन्मादो मातृदोषेण ।
उपकृत्य निसर्गतः परेषामुपरोधं नहि कुर्वते महान्तः । ( शिशुपालवधे । )
उपदेशपराः परेष्वपि स्वविनाशाभिमुखेषु साधवः । ( शिशुपालवधे । )
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । ( चाणक्यनीतौ । )
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी । ( अभिज्ञानशाकुन्तले । )
उपभुक्ते हि तारुण्ये प्रशमः सद्भिरिष्यते । ( कथासरित्सागरे । )
उपहितपरमप्रभावधाम्नां नहि जयिनां तपसामलङ्घ्यमस्ति ( किरातार्जुनीये । )
उप्तं सुकृतबीजं हि सुक्षेत्रेषु महत्फलम् । कथासरित्सागरे ।)
उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य । ( रघुवंशे । )
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ।
ऋणकर्त्ता पिता शत्रुः । ( चाणक्यनीतौ । )
ऋते कृशानोर्नहि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् । ( कुमारसंभवे । )
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः । ( शिशुपालवधे । )
ऋद्धिश्चित्तविकारिणी ।
एकं मित्रं भूपतिर्वा यतिर्वा ।
एकाग्रो हि बहिर्वृत्तिनिवृत्तस्तत्त्वमीक्षते । ( कथासरित्सागरे । )
एका भार्या सुन्दरी वा दरी वा ।
एको देवः केशवो वा शिवो वा ।
एकोऽप्याश्रमहीनोऽपि लक्ष्मीं प्राप्नोति सत्त्ववान् । ( कथासरित्सागरे । )
एको वासः पत्तने वा वने वा ।
एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः । ( कुमारसंभवे । )
एते गुणाः कामदुघाः क्रियासु ।
ऐकचित्ते द्वयोरेव किमसाध्यं भवेदिति । ( कथासरित्सागरे । )
औचित्यं गणयति को विशेषकामः । ( शिशुपालवधे । )
क उष्णोदकेन नवमल्लिकां सिञ्चति । (शाकुन्तले।)
कठिनाः खलु स्त्रियः । ( कुमारसंभवे । )
कणशः क्षणशश्चैव विद्यामर्थं च साधयेत् ।
कण्ठे सुधा वसति वै भगवज्जनानाम् ।
कथं हि लङ्घ्यते भृत्यैर्वृत्तिदस्य प्रभोर्वचः । ( कथासरित्सागरे । )
कथंचिन्नहि दिव्यानां वीर्यं भजति मोघताम् । ( कथासरित्सागरे । )
कथमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति ।
कदर्याणां परे प्राणाः प्रायेण ह्यर्थसंचयाः । ( कथासरित्सागरे । )
कदापि सत्पुरुषाः शोकवास्तव्या न भवन्ति । ( शाकुन्तले । )
कन्या नाम महद्दुःखं धिगहो महतामपि । ( कथासरित्सागरे । )
कमलवनभूषा मधुकरः ।
कमिवेशते रमयितुं न गुणाः ।( किरातार्जुनीये ।)

करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः । ( कथासरित्सागरे । )
कर्तव्यं हि सतां वचः । ( कथासरित्सागरे । )
कर्तव्यो महदाश्रयः ।
कर्मणो गहना गतिः ।
कर्मणो ज्ञानमतिरिच्यते ।
कर्मदोषाद्दरिद्रता ।
कर्मानुगो गच्छति जीव एकः ।
कर्मायत्तं फलं पुंसाम् ।
कलहान्तानि हर्म्याणि
कलारत्नं गानम् ।
कलासीमा काव्यम् ।
कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ।
कल्पवृक्षोऽप्यभव्यानां प्रायो याति पलाशताम् । ( कथासरित्सागरे । )
कवयः किं न पश्यन्ति ।
कवले पतिता सद्यो वमयति मक्षिकाऽन्नभोक्तारम् ।
कष्टं शिष्टक्षतिकृति कलौ कार्यमृच्छन्ति विद्याः ।
कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ।
कष्टः खलु पराश्रयः ।
कष्टाः कुलखलीकारहेतवो बत कुस्त्रियः । ( कथासरित्सागरे । )
कष्टादपि कष्टतरं परगृहवासः परान्नं च ।
कष्टा हि कुटिलश्वश्रूपरतन्त्रवधूस्थितिः । ( कथासरित्सागरे । )
कष्टो हि बान्धवस्नेहं राज्यलोभेऽतिवर्तते । ( कथासरित्सागरे । )
कष्टो ह्यविनयक्रमः ( कथासरित्सागरे । )
कस्त्यागः स्वकुटुम्बपोषणविधावर्थव्ययं कुर्वतः ।
कस्मिन्वा सजलगुणे गिरां पटुत्वम् । ( शिशुपालवधे । )
कस्य नेष्टं हि यौवनम् । ( कथासरित्सागरे । )
कस्यचित्किमपि नो हरणीयम् ।
कस्य नाभ्युदये हेतुर्भवेत्साधुसमागमः । ( कथासरित्सागरे । )
कस्य नोच्छृङ्खलं बाल्यं गुरुशासनवर्जितम् । ( कथासरित्सागरे । )
कस्य सत्सङ्गो न भवेच्छुभः ( कथासरित्सागरे । )
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण । ( मेघसन्देशे । )
कस्याश्वसिति चेतो हि विहितस्वैरसाहसम् । ( कथासरित्सागरे । )
कः कालस्य न गोचरान्तरगतः ।
कः परः प्रियवादिनाम् ।
कः पैतामहगोलकेऽत्र निखिलैः संमानितो वर्तते ।
कः प्राज्ञो वाञ्छति स्नेहं वेश्यासु सिकतासु च । ( कथासरित्सागरे । )
कः शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयिष्यति । ( शाकुन्तले । )
कः सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते । ( शाकुन्तले । )
कः सूतुर्विनयं विना ।
का कस्य परिदेवना ।
काकः पिकं न सहते न च विघ्नमङ्गः
काकाः किमपराध्यन्ति हंसैर्जग्धेषु शालिषु । ( कथासरित्सागरे । )
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ।
का नाम कुलजा हि स्त्री भर्तृद्रोहं करिष्यति । ( कथासरित्सागरे । )
कान्ता रूपवती शत्रुः ।
कान्ते कथं घटितवानुपलेन चेतः ।
कामक्रोधौ हि विप्राणां मोक्षद्वारार्गलावुभौ । ( कथासरित्सागरे । )
कामं न श्रेयसे कस्य संगमः पुण्यकर्मभिः । ( कथासरित्सागरे । )
कामं व्यसनवृक्षस्य मूलं दुर्जनसंगतिः । ( कथासरित्सागरे । )
कामातुराणां न भयं न लज्जा ।
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु । ( मेघसन्देशे । )

कामिनश्च कुतो विद्या ।
कायः कस्य न वल्लभः ।
कार्यं निदानाद्धि गुणानधीते । ( नैषधीयचरिते । )
कार्यान्ते ते च शष्पवत् ।
कालप्रयुक्ता खलु कर्मविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति । ( कुमारसंभवे । )
कालयुक्त्या ह्यरिर्मित्रं जायते न च सर्वदा । ( कथासरित्सागरे । )
कालस्य कुटिला गतिः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः । ( रघुवंशे । )
काले दत्तं वरं ह्यल्पमकाले बहुनाऽपि किम् । ( कथासरित्सागरे । )
कालेन फलते तीर्थं सद्यः साधुसमागमः ।
कालो ह्ययं निरवधिर्विपुला च पृथ्वी । ( मालतीमा धवे । )
का विद्या कवितां विना ।
काश्मीरजस्य कटुताऽपि नितान्तरम्या ।
का ह्यब्जिनी विना हंसं कश्च हंसोऽब्जिनीं विना । ( कथासरित्सागरे । )
किं वा धाराऽधिरूढं हि जाड्यं वेदजडे जने । ( कथासरित्सागरे । )
किं वा भविष्यदरुणस्तमसां विभेत्ता तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् । ( अभिज्ञानशाकुन्तले । )
किं वा सुलभपापा हि भवन्त्युन्मार्गवृत्तयः । ( कथासरित्सागरे । )
किं हि न भवेदीश्वरेच्छया । ( कथासरित्सागरे । )
किं किं करोति न निरर्गलतां गता स्त्री ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ।
किं जीवितेन पुरुषस्य निरक्षरेण ।
किं तदस्ति हि संसारे पर्यन्तविरसं न यत् । ( कथासरित्सागरे । )
किं दूरं व्यवसायिनाम् ।
किं न कुर्वन्ति योषितः । ( पञ्चतन्त्रे । )
किं न भक्षन्ति वायसाः ।
किं नाम न सहन्ते हि भर्तृभक्ताः कुलाङ्गनाः । ( कथासरित्सागरे । )
किमज्ञेयं हि धीमताम् । ( कथासरित्सागरे । )
किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते । ( शाकुन्तले । )
किमदेयमुदाराणामुपकारिषु तुष्यताम् । ( कथासरित्सागरे । )
किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ।
किमिव हि मधुराणां मण्डनं नाकृतीनाम् । ( अभिज्ञानशाकुन्तले । )
किमिव हि शक्तिहरं ससाध्वसानाम् । ( शिशुपालवधे । )
किमिवावसादकरमात्मवताम् । ( किरातार्जुनीये । )
किमिवास्ति यन्न सुकरं मनस्विभिः । ( किरातार्जुनीये । )
किमु चोदिताः प्रियहितार्थकृतः कृतिनो भवन्ति सुहृदः सुहृदाम । ( शिशुपालवधे । )
किं परस्य स गुणः समश्नुते पथ्यवृत्तिरपि यद्यरोगिताम् । ( शिशुपालवधे । )
किं मार्दितोऽपि कस्तूर्या लशुनो याति सौरभम् ।
किं मिष्टमन्नं खरसूकराणाम् ।
कुकर्मान्तं यशो नृणाम् ।
कुकृत्ये को न पण्डितः ।
कुगेहिनीं प्राप्य गृहे कुतः सुखम् ।
कुण्डे कुण्डे नवं पयः ।
कुतः परस्मिन्पुरुषे विकारः । ( किरातार्जुनीये । )
कुतः शङ्का कलङ्किनः ।
कुतः सत्यं च कामिनाम् ।
कुतो विद्यार्थिनः सुखम् ।
कुदेशमासाद्य कुतोऽर्थसंचयः ।
कुदेशेष्वपि जायन्ते क्वचित्केचिन्महाशयाः । ( कथासरित्सागरे । )
कुपात्रदानाच्च भवेद्दरिद्रः ।
कुपुत्रमासाद्य कुतो जलाञ्जलिः ।

कुपुत्रेण कुलं नष्टम् ।
कुप्येत्को नातियाचितः ।
कुभोजनं पापकृतां हि तुष्ट्यै ।
कुभोज्येन दिनं नष्टम् ।
कुरहस्यसहाये हि भृत्ये भृत्यायते प्रभुः । ( कथासरित्सागरे । )
कुराजान्तानि राष्ट्राणि ।
कुरूपता शीलतया विराजते ।
कुरूपी बहुचेष्टिकः ।
कुर्वन्त्यकालेऽभिव्यक्तिं न कार्यापेक्षिणो बुधाः । ( कथासरित्सागरे । )
कुलवधूः का स्वामिभक्तिं विना ।
कुले कश्चिद्धन्यः प्रभवति नरः श्लाघ्यमहिमा ।
कुवस्त्रता शुभ्रतया विराजते ।
कुवाक्यान्तं च सौहृदम् ।
कुशिष्यमध्यापयतः कुतो यशः ।
कृतघ्ना धनलोभान्धा नोपकारेक्षणक्षमाः । ( कथासरित्सागरे । )
कृतघ्नानां कुतः शिवम् । ( कथासरित्सागरे । )
कृतघ्नाश्चिरसिद्धार्था अपि भ्रश्यन्ति निश्चितम् । ( कथासरित्सागरे । )
कृतज्ञे सत्परीवारे प्रभौ सेवाफला कुतः । ( कथासरित्सागरे । )
कृतार्थः स्वामिनं द्वेष्टि ।
कृपणानुसारि च धनम् ।
कृशे कस्यास्ति सौहृदम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति । ( रघुवंशे । )
केचिदज्ञानतो नष्टाः ।
केचिन्नष्टाः प्रमादतः ।
केचिन्नष्टैस्तु नाशिताः ।
केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः । ( रघुवंशे । )
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः । ( मेघसन्देशे । )
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु । ( मेघसंदेशे । )
केषां नैषा कथय कविताकामिनी कौतुकाय ।
केषां हि नापदां हेतुरतिलोभान्धबुद्धिता । ( कथासरित्सागरे । )
को जानाति जनार्दनमनोवृत्तिः कदा कीदृशी ।
कोऽतिभारः समर्थानाम् ।
को धर्मः कृपया विना ।
को न तृप्यति वित्तेन ।
को न याति वशं लोके मुखे पिण्डेन पूरितः ।
को नाम राज्ञां प्रियः ।
कोऽन्यो हुतवहाद्दग्धुं प्रभविष्यति । ( अभिज्ञानशाकुन्तले । )
कोऽर्थान्प्राप्य न गर्वितः ।
कोऽर्थी गतो गौरवम् ।
कोऽवकाशो विवेकस्य हृदि कामान्धचेतसः । ( कथासरित्सागरे । )
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ।
को विदेशः समर्थानाम् ।
को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ । ( शिशुपालवधे । )
को हि मार्गममार्गं वा व्यसनान्धो निरीक्षते । ( कथासरित्सागरे । )
को हि वित्तं रहस्यं वा स्त्रीषु शक्नोति गूहितुम् । ( कथासरित्सागरे । )
को हि संपत्सु चपलास्वाश्वास्ये वनितासु च । ( कथासरित्सागरे । )
को हि स्वशिरसश्छायां विधेश्चोल्लङ्घयेद्गतिम् । ( कथासरित्सागरे )
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् । ( कुमारसंभवे । )
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ।

क्रिया हि वस्तूपहिता प्रसीदति । ( रघुवंशे । )
क्रुद्धे विधौ भजति मित्रममित्रभावम् ।
क्रोधः संसारबन्धनम् ।
क्रोधो मूलमनर्थानाम् ।
क्लेशः फलेन हि पुनर्नवतां विधत्ते । ( कुमारसंभवे । )
क्वचिद्वै नास्ति विश्वासः क्षुद्रकर्मणि दुर्जने । ( कथासरित्सागरे । )
क वा निधिर्निर्धनमेति किं च तं स याककवाटं घटयन्निरस्यति । ( नैषधीयचरिते )
काश्रयोऽस्ति दुरात्मनाम् ।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ।
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः । ( शिशुपालवधे । )
क्षमन्ते न विचारं हि मूर्खा विषयलोलुपाः । ( कथासरित्सागरे । )
क्षमया किं न सिध्यति ।
क्षान्तितुल्यं तपो नास्ति ।
क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ।
क्षितितले किं जन्म कीर्तिं विना ।
क्षितिपतिः को नाम नीतिं विना ।
क्षीणा नरा निष्करुणा भवन्ति ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव । ( कुमारसंभवे । )
क्षुधातुराणां न रुचिर्न पक्वम् ।
क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतोर्लीलाभिः किमु सति कारणे रमण्यः । ( शिशुपालवधे । )
खण्डिता एव शोभन्ते वीराधरपयोधराः ।
खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ।
गणयन्ति न राज्यार्थेऽपत्यस्नेहं महीभुजः । ( कथासरित्सागरे । )
गतं न शोचामि कृतं न मन्ये ।
गतस्य शोचनं नास्ति ।
गतानुगतिको लोको न लोकः पारमार्थिकः ।
गन्तव्यं राजमार्गेण ।
गुणलुब्धाः स्वयमेव संपदः । ( वृणते )
गुणसंहतेः समतिरिक्तमहो निजमेव सत्त्वमुपकारि सताम् । ( किरातार्जुनीये । )
गुणवानपि नोपयाति पूजां पुरुषः सत्पुरुषैरकथ्यमानः ।
गुणा लक्ष्म्या न हेतवः । ( नीतिसर्वस्वे । )
गुणान्भूषयते रूपम् ।
गुणार्जनोच्छ्रायविरुद्धबुद्धयः प्रकृत्यमित्रा हि सतामसाधवः । ( किरातार्जुनीये )
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ।
गुणाः स्थाने पूज्या नरवर न तु स्थानविकलाः ।
गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
गुणी गुणं वेत्ति न वेत्ति निर्गुणः ।
गुणैर्विहीना बहु जल्पयन्ति ।
गुरुतां नयन्ति हि गुणा,न संहतिः । ( किरातार्जुनीये । )
गुर्वपि विरहदुःखमाशाबन्धः साहयति । ( अभिज्ञानशाकुन्तले । )
गृहिणी गृहमित्याहुः ।
गृहं पुत्रेण शोभते । ( नीतिसर्वस्वे )
गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः । ( शिशुपालवधे । )
गृहे या पुण्यनिष्पत्तिः साऽध्वनि भ्रमतः कुतः । ( कथासरित्सागरे । )
ग्रसते हि तमोऽपहं मुहुर्न तु राहुर्महर्पतिं तमः । ( शिशुपालवधे । )
ग्रहणं दुरितोदयः । ( कथासरित्सागरे । )
ग्रहीतुमार्यान्परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः । ( शिशुपालवधे । )
ग्रामनाशाय कुञ्जरः । ( पञ्चतन्त्रे )
ग्रामस्यार्थे कुलं त्यजेत् । ( पञ्चतन्त्रे )
ग्रावाणोऽप्यार्द्रतां सम्यग्भजन्त्यभिमुखे विधौ ( कथासरित्सागरे । )
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं

( अभिज्ञानशाकुन्तले । )
दिवसः । ( अभिज्ञानशाकुन्तले । )
घटाटोपो भयंकरः ।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद्बुधैरप्यपथेन गम्यते । ( नैषधीयचरिते । )
घनाम्बुभिर्बहुलितनिम्नगाजलैर्जलं नहि व्रजति विकारमम्बुधेः । ( शिशुपालवधे । )
घृतमायुर्घृतं ज्योतिः ।
घ्नन्ति सहजमपि भूरिभियः सममागताः सपदि वैरमापदः । ( किरातार्जुनीये । )
चकास्ति योग्येन हि योग्यसंगमः । ( नैषधीयचरिते । )
चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ।
चक्षुः पूतं न्यसेत्पादम् ।
चन्द्रो द्रावयतेऽश्मानं समुद्दीपयते रविः । ( कविकङ्कणे । )
चन्द्रचन्दनयोर्मध्ये शीतला साधुसंगतिः ।
चपलौ किल शूराणां रणे जयपराजयौ । ( कथासरित्सागरे । )
चाण्डालो पक्षिणां काकः ।
चाण्डालोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
चाराज्जानन्ति राजानः ।
चिता चिन्तासमा प्रोक्ता बिन्दुमात्रे विशेषता ।
चित्तं जानाति जन्तूनां प्रेम जन्मान्तरार्जितम् । ( कथासरित्सागरे । )
चित्तमेतदमलीकरणीयम् ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ।
चित्रा गतिः कर्मणाम् ।
चिन्ता जरा मनुष्याणाम् ।
चिन्तासमं नास्ति शरीरशोषणम् ।
चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । ( अभिज्ञानशाकुन्तले । )
चोराणामनृतं बलम् ।
चोराणां चन्द्रमा रिपुः ।
चौरे गते वा किमु सावधानताम् ।
छाया न मूर्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा । ( अभिज्ञानशाकुन्तले । )
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः । ( रघुवंशे । )
छायेव मैत्री खलुसज्जनानाम् ।
छिद्रेष्वनर्था बहुलीभवन्ति ।
जठरं को न बिभर्ति केवलम् ।
जनानुरागप्रभवा हि संपदः ।
जनो बहु क्षपयति स्वल्पस्यार्थे धनान्धधीः । ( कथासरित्सागरे । )
जपतो नास्ति पातकम् ।
जरा रूपं हरति ।
जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
जातं तु जातं न पुनः प्रयाति ।
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । ( भागवते । )
जातापत्या पतिं द्वेष्टि ।
जातौ जातौ नवाचाराः ।
जानन्ति पशवो गन्धात् ।
जामाता दशमो ग्रहः ।
जायन्ते बत मूढानां संवादा अपि तादृशाः । ( कथासरित्सागरे । )
जारस्त्रीणां पतिः शत्रुः ।
जितक्रोधेन सर्वं हि जगदेतद्विजीयते । ( कथासरित्सागरे । )
जितक्रोधो न दुःखस्यास्पदीभवेत् । ( कथासरित्सागरे । )
जितशान्तेषु धीराणां स्नेह एवोचितोऽरिषु । ( कथासरित्सागरे । )
जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ।
जीवन्तमेव कुष्णाति काकीव कुकुटुम्बिनी । ( कथासरित्सागरे । )
जीवन्नोऽसति मूढोऽर्थान्यावदर्थैः स नोज्झितः । ( कथासरित्सागरे । )
जीवन्प्राप्नोति भद्रकम् ।

जीवन्हि धीरोऽभिमतं किं नाम न यदाप्नुयात् । ( कथासरित्सागरे । )

जीवो जीवस्य जीवनम् ।

ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः । ( मेघसन्देशे । )

ज्ञानमार्गे ह्यहंकारः परिघो दुरतिक्रमः । ( कथासरित्सागरे । )

ज्ञानमेव परा शक्तिः ।

ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ।

ज्ञानस्याभरणं क्षमा ।

ज्ञानाग्निः सर्वकर्म्माणि भस्मसात्कुरुतेऽर्जुन । ( श्रीमद्भगवद्गीतायाम् । )

ज्ञानेनैव विमुच्यते ।

ज्येष्ठभ्राता पितुः समः ।

ज्वलयति महतां मनांस्यमर्षे न हि लभतेऽवसरं सुखाभिलाषः । ( किरातार्जुनीये । )

झटिति पराशयवेदिनो हि विज्ञाः । ( नैषधीयचरिते । )

तक्रान्तं खलु भोजनम् ।

तत्कार्मुकं कर्मसु यस्य शक्तिः ।

तत्क्षणं किं नु कुर्याद्धि प्रसादः पारमेश्वरः । ( कथासरित्सागरे । )

तत्र सौरभनिर्माणे चतुरश्चतुराननः ।

तदेव दुःसहं स्त्रीणामिह प्रणयखण्डनम् । ( कथासरित्सागरे )

तपःसीमा मुक्तिः ।

तपोऽधीना हि श्रेयांसि ह्युपायोऽन्यो न विद्यते । ( कथासरित्सागरे । )

तपोऽधीना हि संपदः । ( कथासरित्सागरे । )

तमस्तपति घर्मांशौ कथमाविर्भविष्यति । ( अभिज्ञानशाकुन्तले । )

तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ।

तस्करस्य कुतो धर्मः ।

तस्मात्पुत्रं च शिष्यं च ताडयेन्नतु लालयेत् ।

तस्माच्छेषं न रक्षयेत् ।

तस्माज्जात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ते ।

तस्मात्सर्वं परित्यज्य पतिमेकं भजेत्सती ।

तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ।

तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ।

तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ।

तावन्महतां महिमा यावत्किमपि हि न याचते लोकम् ।

तिष्ठत्येकां निशां चन्द्रः श्रीमान्संपूर्णमण्डलः ।

तीव्रसत्त्वस्य न चिराद्भवन्त्येव हि सिद्धयः । ( कथासरित्सागरे । )

तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ।

तुष्यन्ति भोजनैर्विप्राः ।

तृष्णैका तरुणायते ।

तेजसां हि न वयः समीक्ष्यते । ( रघुवंशे । )

तेजीयसां न दोषाय ( भागवते । )

ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ।

तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरम् ।

त्यजन्त्युत्तमसत्त्वा हि प्राणानपि न सत्पथम् । ( कथासरित्सागरे । )

त्यजेदेकं कुलस्यार्थे ।

त्यागाज्जगति पूज्यन्ते पशुपाषाणपादपाः ।

त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् । ( रघुवंशे । )

त्रिभुवनविषये कस्य दोषो न चास्ति ।

त्रैलोक्ये दीपको धर्मः ।

दण्ड एव हि मूर्खाणां सन्मार्गप्रापकः प्रभोः ।

ददाति तीव्रसत्त्वानामिष्टमीश्वर एव हि । ( कथासरित्सागरे । )

दया मांसाशिनः कुतः ।

दयितं जनः खलु गुणीति मन्यते । ( शिशुपालवधे । )

दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने । ( कुमारसंभवे । )

दरिद्रता धीरतया विराजते ।

दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ।
दशाननोऽहरत्सीतां बध्यते स्म महोदधिः ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ।
दारिद्र्यदोषेण करोति पापम् ।
दारिद्र्यदोषो गुणराशिनाशी ।
दारिद्र्यं परमाञ्जनम् । ( श्रीमद्भागवते ) ।
दावानलप्लोषविपत्तिमन्योऽरण्यस्य हर्तुं जलदाऽप्रभुः किम् । ( कुमारसंभवे । )
दिक्शून्या चेन्नबान्धवाः ।
दिवि गगनरत्नं दिनकरः ।
दिशत्यपायं हि सतामतिक्रमः । (किरातार्जुनीये।)
दुःखान्धा हि पतन्त्येव विपच्छ्वभ्रेषु कातराः । ( कथासरित्सागरे । )
दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ।
दुरधिगमा हि गतिः प्रयोजनानाम् । ( किरातार्जुनीये । )
दुरधीता विषं विद्या ।
दुरितावतपःशुद्धिः सव्यपेक्षा हि सिद्धयः । ( कथासरित्सागरे । )
दुर्गहीनो नृपो जय्यः ।
दुर्जनस्य कुतः क्षमा ।
दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ।
दुर्जया हि विषया विदुषाऽपि । (नैषधीयचरिते।)
दुर्बलस्य बलं राजा ।
दुर्मन्त्री राज्यनाशाय ।
दुर्लक्ष्यचिह्ना महतां हि वृत्तिः (किरातार्जुनीये ।)
दुर्लभं क्षेमकृत्सुतः ।
दुर्लभं भारते जन्म मानुष्यं तत्र दुर्लभम् ।
दुर्लभः स गुरुर्लोके शिष्यचिन्तापहारकः ।
दुर्लभः स्वजनप्रियः ।
दुष्टं हि जन्तुमुत्थाप्य कस्यात्मनि सुखं भवेत् । ( कथासरित्सागरे । )
दुष्टे दुष्टं समाचरेत् ।
दुष्टेऽपि पत्यौ साध्वीनां नान्यथावृत्ति मानसम् । ( कथासरित्सागरे । )
दूरतः पर्वता रम्याः ।
दूरारोहपरिभ्रंशविनिपातो हि दारुणः ।
दृष्टतत्त्वश्च न पुनः कर्मजालेन बध्यते । ( कथासरित्सागरे )
दृष्टो हि वृण्वन्कलभप्रमाणोऽप्याशाः पुरोवातमवाप्य मेघः । ( रघुवंशे । )
देवद्विजसपर्या हि कामधेनुर्मता सताम् । ( कथासरित्सागरे ) ।
देवा हि नान्यद्वितरन्ति किं तु प्रसद्य ते साधुधियं ददन्ते । ( नैषधीयचरिते । )
देवो दुर्बलघातकः ।
देहपातमपीच्छन्ति सन्तो नाविनयं पुनः । ( कथासरित्सागरे । )
देहस्नेहो हि दुस्त्यजः । ( कथासरित्सागरे । )
दैवं फलति सर्वत्र न विद्या नच पौरुषम् । )
दैवं हि फलसाधकम् ।
दैवानुरूपं फलम् ।
दैवमेव हि साहाय्यं कुरुते सत्त्वशालिनाम् । ( कथासरित्सागरे । )
दैवी विचित्रा गतिः ।
दैवे दुर्जनतां गते तृणमपि प्रायेण वज्रायते ।
दैवेनैव हि साध्यन्ते सदर्थाः शुभकर्मणाम् । ( कथासरित्सागरे । )
दोषग्राही गुणत्यागी पल्लोलीव हि दुर्जनः ।
दोषाय निर्विमर्शेयं भीतप्रश्नोत्तरक्रिया । ( कथासरित्सागरे । )
दोषोऽपि गुणतां याति प्रभोर्भवति चेत्कृपा ।
द्यौर्न काचिदथवाऽस्ति निरूढा सैव संचलति यत्र हि चित्तम् । ( नैषधीयचरिते । )
द्रव्येण सर्वे वशाः ।
धनं सर्वप्रयोजनम् ।
धनसंचयकर्तॄणि भाग्यानि पृथगेव हि ।
धन्योगृहस्था श्रमः ।
धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।

धनिनामितरः सतां पुनर्गुणवत्संनिधिरेव संनिधिः । ( शिशुपालवधे । )

धन्यास्ते भुवि ये निवृत्तमनसो धिग्दुःखितान्कामिनः ।

धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः । ( स्मृतौ । )

धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः । (रघुवंशे ।)

धर्मस्य तत्त्वं निहितं गुहायाम् ।

धर्मस्य त्वरिता गतिः ।

धर्म्मस्य सूक्ष्मा गतिः । ( स्मृतौ )

धर्मकीर्तिद्वय स्थिरम् ।

धर्मः सत्येन वर्धते ।

धर्मः स नो यत्र न सत्यमस्ति ।

धर्मेण चरतां सत्ये नास्त्यनभ्युदयः क्वचित् । ( कथासरित्सागरे । )

धर्मेण हीनाः पशुभिः समानाः । ( हितोपदेशे )

धर्मो मित्रं मृतस्य च ।

धर्मो हि सततं विष्वक् सांनिध्यं कुरुते सताम् । ( कथासरित्सागरे )

धर्मो ह्यसम्यङ्निर्णीतो निहन्त्युभयलोकयोः ।(कथासरित्सागरे । )

धिक्कलत्रमपुत्रकम् ।

धिक्पुत्रमविनीतं च ।

धिगस्तु परवश्यताम् । ( पञ्चतन्त्रे )

धिगाशा सर्वदोषभूः ।

धिगिमां देहभृतामसारताम् । ( रघुवंशे । )

धिग्गृहं गृहिणीशून्यम्

धिग्जीवितं चोद्यमवर्जितस्य ।

धिग्जीवितं ज्ञातिपराजितस्य ।

धिग्जीवितं व्यर्थमनोरथस्य ।

धिग्जीवितं शास्त्रकलोज्झितस्य ।

धिग्ज्योतिषमजातकम् ।

धीराणां व्रजति हि सर्व एव नान्तःपातित्वादभिभवनीयतां परस्य । ( शिशुपालवधे । )

धीराश्च सोढविरहाः प्राप्नुवन्तीष्टसंगमम् । (कथासरित्सागरे । )

धीर्न चित्रीयते कस्मादभित्तौ चित्रकर्मणा । ( कथासरित्सागरे । )

धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः । ( रघुवंशे । )

धूर्ताः क्रीडन्ति बालिशैः । ( कथासरित्सागरे । )

ध्रुवमभिमते को वा पूर्णे मृदा न हि माद्यति । ( कुमारसंभवे । )

ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ।

ध्रुवं फलाय महते महतां सहसङ्गमः । ( कथासरित्सागरे । )

न कश्चिन्मर्म्मणि स्पृशेत् । ( कथासरित्सागरे । )

न कस्य वीर्याय वरस्य संगतिः । ( कुमारसंभवे । )

न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः । ( कथासरित्सागरे । )

न कामसदृशो रिपुः ।

न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ।

न क्वापि सौख्यमपराधकृतः प्रभूणाम् ।

नक्षत्रभूषणं चन्द्रः ।

न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय प्राप्ते मित्रे भवति विमुखः । ( मेघदूते । )

न खलु धीमतां कश्चिदविषयो नाम । (शाकुन्तले)

न खलु स उपरतो यस्य वल्लभो जनः स्मरति ।

न गायत्र्याः परो मन्त्रः ।

न च दैवात्परं बलम् । ( चाणक्यनीतौ )

न च धर्मो दयापरः ।

न चलति खलु वाक्यं सज्जनानां कदाचित् ।

न च विद्यासमो बन्धुः ।

न च धैर्यसमं बलम् ।

न च व्याधिसमो रिपुः ।

न च चित्तसमं चलम् ।

न च पुत्रसमः स्नेही ।

न च जात्ववसरे प्राप्ते सत्त्ववानवसीदति। ( कथासरित्सागरे। )
न जाने संसारः किममृतमयः किं विषमयः।
न ज्ञानात्परमं चक्षुः।
न तथा कृतवेदिनां करिष्यन्प्रियतामेति यथा कृतावदानः।( किरातार्जुनीये। )
न तोषात्परमं सुखम्।
न तोयो महतां मृषा। ( कथासरित्सागरे। )
न दयासदृशं ज्ञानम्।
न दरिद्रस्तथा दुःखी लब्धक्षीणधनो यथा।
न दुष्प्रापं परच्छिद्रं जाग्रद्भिर्निपुणैर्यतः। ( कथासरित्सागरे। )
न देवः परमो विष्णोः।
न धर्मवृद्धेषु वयः समीक्ष्यते। ( कुमारसंभवे। )
न धर्मसदृशं मित्रम्।
न धर्मात्परमं श्रेयः।
न नन्दनालोकनमङ्गलेषु क्षणं क्षणं हृष्यति कस्य चेतः। ( कुमारसंभवे )
न नश्यति तमो नाम कृतया दीपवार्तया।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम्। ( रघुवंशे। )
ननु प्रवातेऽपि निष्कम्पा गिरयः। ( अभिज्ञानशाकुन्तले। )
ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः। ( किरातार्जुनीये। )
ननु विमृश्य कृती कुरुतेऽखिलम्।
न पतिव्यतिरेकेण सुस्त्रीणामपरा गतिः। ( कथासरित्सागरे। )
न परिचयो मलिनात्मनां प्रधानम्। ( शिशुपालवधे। )
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव। ( शिशुपालवधे। )
न परोदितं हि कलयन्ति कुमाराः।(हरिविलासे।)
न पादेन स्पृशेत्सर्पम्।
न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य। ( रघुवंशे। )
न पुत्रात्परमो लाभः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्। ( अभिज्ञानशाकुन्तले। )
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम्।
न भयं चास्ति जाग्रतः।
न भवति पुनरुक्तं भाषितं सज्जनानाम्।
न भवति महतां हि क्वापि मोघः प्रसादः। ( हरिविलासे। )
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः। ( रघुवंशे। )
न भार्यायाः परं सुखम्।
न भूतो न भविष्यति।
न भेकः कोकनदिनीकिञ्जल्कास्वादकोविदः। ( कथासरित्सागरे। )
नभोभूषा पूषा।
न मातुर्दैवतं परम्।
न मुक्तेः परमा गतिः
नयनसुखं को निवारयति।
नयवर्त्मगाः प्रभवतां हि धियः।
न युक्तं ते रोषादतिथिमिव धिक्कृत्य गमनम्।
नये च शौर्ये च वसन्ति संपदः।
नयेन चालङ्क्रियते नरेन्द्रता।
नरः प्रत्युपकारार्थी विपत्तिमभिवाञ्छति।
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम्।
न रत्नमन्विष्यति मृग्यते हि तत्।( कुमारसंभवे। )
नराणां नापितो धूर्तः।
नर्मैकसादरं हि नवं वयः। ( कथासरित्सागरे। )
न वस्तु दैवस्वरवाद्विनश्वरं सुरेश्वरोऽपि प्रतिकर्तुमीश्वरः। ( नैषधीयचरिते। )
नवाङ्गनानां नव एव पन्थाः।
नवा वाणी मुखे मुखे।
न विवेकं विना ज्ञानम्।
न वैराग्यात्परं भाग्यम्।

न शरीरं पुनः पुनः ।
न शान्तेः परमं सुखम् ।
न शास्त्रं वेदतः परम् ।
न शिक्षितः प्रयत्नो हि धीराणां हृदये भिया । ( कथासरित्सागरे । )
न शूरा विसहन्ते हि स्त्रीनिमित्तं पराभवम् । ( कथासरित्सागरे । )
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते । ( कुमारसंभवे । )
न स शक्नोति किं यस्य प्रज्ञा नापदि हीयते । ( कथासरित्सागरे । )
न सा सभा यत्र न सन्ति वृद्धाः । ( रामचरिते । )
न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ।
न सेव्यः केवलं नृपः ।
न स्त्री चलितचारित्रा निम्नोन्नतमवेक्षते । ( कथासरित्सागरे । )
न स्त्री स्वातन्त्र्यमर्हति ।
न स्नेहो न च दाक्षिण्यं स्त्रीष्वहो चापलादृते । ( कथासरित्सागरे । )
न स्पृशति पल्वलाम्भः पञ्जरशेषोऽपि कुञ्जरः क्वापि ।
न स्वेच्छं व्यवहर्तव्यमात्मनो भूतिमिच्छता । ( कथासरित्सागरे । )
नहि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते ।
नहि विद्यासमो बन्धुः ।
नहि कृतमुपकारं साधवो विस्मरन्ति ।
नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ।
नहि तापयितुं शक्यं सागराम्भस्तृणोल्कया ।
नहि दुर्बलदग्धानां काले किंचित्प्ररोहति ।
नहि दुष्करमस्तीह किञ्चिदध्यवसायिनाम् । ( कथासरित्सागरे । )
नहि नार्यो विनेर्ष्यया ।
नहि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली । ( रघुवंशे । )
नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः । ( किरातार्जुनीये । )
नहि मूला प्रसिद्ध्यति ।
नहि वन्ध्याश्नुते दुःखं यथा हि मृतपुत्रिणी ।
नहि विचलति मैत्री दूरतोऽपि स्थितानाम् ।
नहि शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् । ( श्रीमद्भागवते । )
नहि सत्त्वावसादेन स्वल्पाप्यापद्विलङ्घ्यते । ( कथासरित्सागरे । )
नहि सर्वविदः सर्वे ।
नहि सर्वेऽपि कुर्वन्ति सभ्या युक्तिविवेचनम् ।
नहि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः । ( रघुवंशे । )
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।
नहीङ्गितज्ञोऽवसरेऽवसीदति ( किरातार्जुनीये । )
नहीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् । ( कुमारसंभवे । )
नाकाले म्रियते जन्तुः ।
नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः । ( किरातार्जुनीये । )
नाधर्मश्चिरमृद्धये ( कथासरित्सागरे । )
नानातत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः ।
नानाफलैः फलति कल्पलतेव भूमिः । ( विद्या । )
नान्नोदकसमं दानम् ।
नानृतात्पातकं परम् ।
नारीणां भूषणं पतिः ।
नारुद्रः क्रमपाठकः ।
नार्कातपैर्जलजमेति हिमैस्तु दाहम् । ( नैषधीयचरिते । )
नार्यः समाश्रितजनं हि कलङ्कयन्ति ।
नाल्पीयान्बहु सुकृतं हिनस्ति दोषः । ( किरातार्जुनीये । )
नाविष्णुः पृथिवीपतिः ।
नासद्भिः किंचिदाचरेत् ।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ।

नास्ति कामसमो व्याधिः ।
नास्ति क्रोधसमो वह्निः ।
नास्ति चक्षुःसमं तेजः ।
नास्ति चात्मसमं बलम् ।
नास्ति ज्ञानात्परं सुखम् ।
नास्ति तृष्णासमो व्याधिः ।
नास्ति धान्यसमं प्रियम् ।
नास्ति प्राणसमं भयम् ।
नास्ति बन्धुसमं बलम् ।
नास्ति बन्धुसमो रिपुः ।
नास्ति मेघसमं तोयम् ।
नास्ति मोहसमो रिपुः ।
नास्ति व्यसनिनां किंचिद्भुवि पर्याप्तये धनम् । ( कथासरित्सागरे । )
नास्ति हस्तिसमः सखा ।
नास्ति विद्यासमो बन्धुः ।
नास्त्यदेयं महात्मनाम् ।
नास्त्यहो स्वामिभक्तानां पुत्रे वाऽऽत्मनि वा स्पृहा । ( कथासरित्सागरे । )
निजामृतैर्लोचनसेचनाद्वा पृथक्किमिन्दुः सृजति प्रजानाम् । ( नैषधीयचरिते । )
निपातनीया हि सतामसाधवः । ( शिशुपालवधे ) ।
निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
नियतिः केन लङ्घ्यते ।
निःस्पृहस्य तृणं जगत् ।
निजेऽप्यपत्ये करुणा कठिनप्रकृतेः कुतः । ( प्रसन्नराघवे । )
निन्दति कञ्चुकिकारं प्रायः शुष्कस्तनी नारी ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ।
निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि । ( रघुवंशे । )
निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्तये । ( रघुवंशे । )
निर्जीवं दहते चिता ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिकाः ।
निर्द्रविणता सर्वापदामास्पदम् ।
निर्धनस्य कुतः सुखम् ।
निर्बुद्धेस्तु कुतो बलम् ।
निर्वाणदीपे किमु तैलदानम् ।
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ।
निर्विमर्शा हि भीरवः । ( कथासरित्सागरे । )
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः । ( किरातार्जुनीये । )
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ।
निवदतु नाम ननान्दा ।
निवृत्तपापसंपर्का सन्तो यान्ति हि निर्वृतिम् । ( कथासरित्सागरे । )
निवृत्तरागस्य गृहं तपोवनम् ।
निशारत्नं चन्द्रः ।
निष्प्रज्ञास्त्ववसीदन्ति लोकोपहसिताः सदा । ( कथासरित्सागरे । )
निसर्गः स हि धीराणां यदापद्यधिकं दृढम् । ( कथासरित्सागरे । )
निसर्गचपलानां हि मादृशां संयमः कुतः । ( कथासरित्सागरे । )
निसर्गतोऽन्तर्मलिना ह्यसाधवः ।
निसर्गसिद्धो नारीणां सपत्नीषु हि मत्सरः । ( कथासरित्सागरे । )
निर्द्रव्यं पुरुषं सदैव विकलम् ।
निष्कण्टकं मृगधने विपिनेऽपि राज्यम् । ( सत्यहरिश्चन्द्रे । )
नीचाश्रयो न कर्त्तव्यः कर्त्तव्यो महदाश्रयः ।
नीचाश्रयो हि महतामपमानहेतुः ।
नीचैरनीचैरतिनीचनीचैः सर्वैरुपायैः फलमेव साध्यम् ।
नीचो वदति न कुरुते वदति न साधुः करोत्येव ।
नूनं विरूपैरधिकं हासनैः क्रीडति स्मरः । ( कथासरित्सागरे । )

नृपतिजनपदानां दुर्लभः कार्यकर्ता । ( कथासरित्सागरे । )
नृपस्य वर्णाश्रमपालनं यत्स एव धर्मः । (रघुवंशे)।
नेन्दुः क्षिपति किं कालं परिक्षीणोऽर्कमण्डले । ( कथासरित्सागरे ) ।
नेर्ष्या भर्तृहितैषिण्यो गणयन्ति हि सुस्त्रियः । ( कथासरित्सागरे । )
नैकत्र सर्वो गुणसन्निपातः ।
नैवात्मनीनमथना क्रियते मदान्धैः । ( शिशुपालवधे । )
नैवान्यथा भवति यल्लिखितं विधात्रा ।
नैवाश्रितेषु महतां गुणदोषशङ्का ।
न्याय्यमुपेक्षते हि कः । ( नैषधीयचरिते । )
न्याय्यां वृत्तिं समाचरेत् ।
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ।
पङ्को हि नभसि क्षिप्तः क्षेप्तुः पतति मूर्धनि । ( कथासरित्सागरे । )
पत्रिभिर्मिलितैः किं यज्जगतीह न साध्यते । ( नैषधीयचरिते । )
पठतो नास्ति मूर्खत्वम् ।
पण्डिता एव जानन्ति सिंहसूकरयोर्बलम् ।
पण्डिताः समदर्शिनः ( श्रीमद्भगवद्गीतायाम् ।)
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् । ( रघुवंशे । )
पथि शूद्रवदाचरेत्[1] ।
पदं हि सर्वत्र गुणैर्निधीयते ।( रघुवंशे ।)
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः । ( कुमारसंभवे । )
पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ।
पद्मानां शिशिराद्भयम् ।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ।
पयसि गते को ननु सेतुबन्धः ।
पयोमुचां पङ्क्तिषु विद्युतेव ।

परदुःखेनापि दुःखिता विरलाः ।
परबुद्धिर्विनाशाय ।
परबुद्धिषु बद्धमत्सराणां किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् । ( किरातार्जुनीये । )
परभुक्ते हि कमले किमलेर्जायते रतिः । ( कथासरित्सागरे । )
परमं लाभमरातिभङ्गमाहुः। ( किरातार्जुनीये । )
परमार्थमविज्ञाय न भेतव्यं कचिन्नृभिः । ( कथासरित्सागरे । )
परलोकगतस्य को बन्धुः ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्। ( रघुवंशे । )
परवृद्धिमत्सरि मनो हि मानिनाम्।(शिशुपालवधे।)
परसदननिविष्टः को लघुत्वं न याति ।
परसेवैकसक्तानां को हि स्नेहो निजे जने । ( कथासरित्सागरे । )
परस्परं क्षयं यान्ति वल्मीकोदरसर्पवत् ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथाः । ( श्रीमद्भगवद्गीतायाम् । )
परहस्तगताः स्त्रियः ।
परहितनिरतानामादरो नात्मकार्ये ।
परान्नं सुकृतं हन्ति ।
पराभवोऽप्युत्सव एव मानिनाम् ।
परार्थप्रतिपन्ना हि नेक्षन्ते स्वार्थमुत्तमाः । ( कथासरित्सागरे । )
परिजनताऽपिगुणायसद्गुणानाम्।(किरातार्जुनीये।)
परिवर्तिनि संसारे मृतः को वा न जायते ।
परेङ्गितज्ञानफला हि बुद्धयः ।
परैरनिन्द्यं चरितं मनस्विनां वयोऽनुसारोचितमेव शोभते । ( कथासरित्सागरे । )
परैरपर्यासितवीर्यसंपदां पराभवोऽप्युत्सव एव मानिनाम् । ( किरातार्जुनीये । )
परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ।
परोपकाराय सतां विभूतयः ।

१ 'पथि सत्रवदाचरेत् ।' इति पाठान्तरम् ।

परोपकारार्थमिदं शरीरम्।
परोपदेशे पाण्डित्यम्।
परोपदेशसमये जनाः सर्वेऽपि पण्डिताः।
परोऽपि हितवान्बन्धुः।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः। ( रघुवंशे। )
पर्वतानां भयं वज्रात्।
पलालजालैः पिहितः स्वयं हि प्रकाशमासादयतीक्षुडिम्भः। ( नैषधीयचरिते। )
पवनः परागवाही रथ्यासु वहन्रजस्वलो भवति।
पश्यन्तु लोकाः कलिकौतुकानि।
पश्यन्तु लोका महतां कृतानि।
पाणौ पयसा दग्धे तक्रं फूत्कृत्य बालकः पिबति।
पात्रत्वाद्धनमाप्नोति। ( हितोपदेशे। )
पात्रानुसारं फलम्।
पादपानां भयं वातात्।
पादाभ्यां न स्पृशेदग्निं न गुरुं ब्राह्मणं तथा। न गां च न कुमारीं च न शिशुं न च देवताम्॥
पापप्रभावान्नरकं प्रयाति।
पापे कर्मण्यवज्ञातहितवाक्ये कुतः सुखम्। ( कथासरित्सागरे। )
पिण्डे पिण्डे मतिर्भिन्ना।
पिण्डेष्वनास्था खलु भौतिकेषु।
पितृदोषेण मूर्खता।
पितृपूर्वार्जिता भूमिर्दरिद्राऽपि सुखावहा।
पिपासितैः काव्यरसो न पीयते।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसान्।
पिशुनजनं खलु बिभ्रति क्षितीन्द्राः।
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत्।
पुंसामदृष्टे दृष्टे वा श्रेयोऽहंकारिणां कुतः। ( कथासरित्सागरे। )
पुण्यवन्तो हि संतानं पश्यन्त्युच्चैः कृतान्वयम्। ( कथासरित्सागरे। )
पुण्यैरेव हि लभ्यते सुकृतिभिः सत्संगतिर्दुर्लभा।
पुत्रः पिण्डप्रयोजनः।
पुत्रः शत्रुरपण्डितः।
पुत्रप्रयोजना दाराः।
पुत्रहीनं गृहं शून्यम्।
पुत्रादपि भयं यत्र तत्र सौख्यं हि कीदृशम्।
पुत्रोदये माद्यति का न हर्षात्। ( कुमारसंभवे )
पुनर्दरिद्री पुनरेव पापी।
पुनर्धनाढ्यः पुनरेव भोगी।
पुरुषत्वं न पुनः पुनः।
पुरुषः पञ्चलक्षणः।[1]
पुरुषा अपि बाणा अपि गुणच्युताः कस्य न भयाय।
पुष्पं पर्युषितं त्यजन्ति मधुपाः।
पूज्यं वाक्यं समृद्धस्य।
पूर्वपुण्यतया विद्या।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते। ( अभिज्ञानशाकुन्तले। )
पृथिवीभूषणं राजा।
पेशलं हि सतीमनः। ( कथासरित्सागरे। )
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया।
प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे।
प्रकृतिरियं सत्त्ववताम्।
प्रकृतिसिद्धमिदं हि दुरात्मनाम्।
प्रकृतिसिद्धमिदं हि महात्मनाम्।
प्रकृत्या ह्यमणिः श्रेयान्नालंकारश्च्युतोपलः। ( किरातार्जुनीये। )
प्रच्छन्नमप्यूहति हि चेष्टितं बुधः।
प्रजानामपि दीनानां राजैव सदयः पिता।
प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धकम्।
प्रक्षालनाद्धि पङ्कस्य दूरात् प्रक्षालनं वरम्।
प्रजापतेर्विसर्गो हि प्राणिसर्गोऽधिकाधिकः। ( कथासरित्सागरे। )

---

१ "पात्रे त्यागी गुणे रागी संविभागी च बन्धुषु। शास्त्रे बोद्धा रणे योद्धा" इति पूर्वपाठः।

प्रज्ञा नाम बलं ह्येवं निष्प्रज्ञस्य बलेन किम् । ( कथासरित्सागरे । )
प्रज्ञाबलं च सर्वेषु मुख्यं कार्येषु साधनम् । ( कथासरित्सागरे । )
प्रणामान्तः सतां कोपः ।
प्रतिक्षणे मृत्युकरं निजायुर्न वेद मूढो विषयेषु सक्तः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् । ( रघुवंशे । )
प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते । ( रघुवंशे । )
प्रतिक्षणं यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।
प्रतिपन्नसुहृत्कार्यनिर्वाहं धीरसत्त्वता । ( कथासरित्सागरे । )
प्रतिपन्नार्थनिर्वाह सहजं हि सतां व्रतम् । ( कथासरित्सागरे । )
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः । ( रघुवंशे । )
प्रतिभातश्च पश्यन्ति सर्वं प्रज्ञावतां धियः। ( कथासरित्सागरे । )
प्रतीयन्ते न नीतिज्ञा कृतावज्ञस्य वैरिणः । ( कथासरित्सागरे । )
प्रज्वालितानि शष्पाणि नाङ्गाराय न भस्मने ।
प्रत्यक्षे गुरवः स्तुत्याः ।
प्रत्ययः स्त्रीषु मुष्णाति विमर्शं विदुषामपि । ( कथासरित्सागरे । )
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ।
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव । ( मेघसंदेशे । )
प्रत्युत्पन्नमति स्त्रैणम् । (अभिज्ञानशाकुन्तले ।)
प्रथमालीढमधुराः पिबन्ति कटु भेषजम् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया । ( अभिज्ञानशाकुन्तले । )

प्रभुचित्तमेव हि जनोऽनुवर्तते । (शिशुपालवधे ।)
प्रभुप्रसादो हि मुदे न कस्य । ( कुमारसंभवे । )
प्रभुश्च निर्विचारश्च नीतिज्ञैर्न प्रशस्यते । ( कथासरित्सागरे । )
प्रभुस्तु विबुधाश्रयः कति न सन्ति कुक्षिंभराः ।
प्रभूणां हि विभूत्यन्धा धावत्यविषये मतिः । ( कथासरित्सागरे । )
प्रभौ हठप्रवृत्ते हि कस्य प्रत्यायना भवेत् । ( कथासरित्सागरे । )
प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम् ।
प्रमाणं परमं श्रुतिः ।
प्रमाद्यतां संवृणोति खलु दोषमसङ्गता । ( किरातार्जुनीये । )
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु । ( कुमारसंभवे । )
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते ।
प्रलयोल्लसितस्य वारिधेः परिवाहो जगतः करोति किम् । ( शिशुपालवधे । )
प्रवादमोहितः प्रायो न विचारक्षमो जनः । ( कथासरित्सागरे । )
प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ।
प्रसन्ने हि किमप्राप्यमस्तीह परमेश्वरे । ( कथासरित्सागरे । )
प्रसादचिह्नानि पुरःफलानि । ( रघुवंशे । )
प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंषि न दारुणाः शराः । ( अभिज्ञानशाकुन्तले । )
प्रसूतान्तं च यौवनम् ।
प्रस्तुतार्थविरुद्धं हि कोऽभिदध्यादबालिशः । ( कथासरित्सागरे । )
प्रहर नमतु चापं प्राक्प्रहारप्रियोऽहम् ।
प्रह्वेष्वनिर्बन्धरुषो हि सन्तः । ( रघुवंशे । )
प्रागेव मुक्ता नयनाभिरामाः प्राप्येन्द्रनीलं किमुतोन्मयूखम् । ( रघुवंशे । )
प्राचीनकर्म बलवन्मुनयो वदन्ति ।

प्राज्ञः सत्त्वहितं कुर्यात्सम्यक्संबोधलब्धये ।
( कथासरित्सागरे। )
प्राणव्ययाय शूराणां जायते हि रणोत्सवः ।
( कथासरित्सागरे। )
प्राणप्रयाणसमये न सतां प्रमोहः ।
प्राणानुदारा विसृजन्त्यर्थितो न पराङ्मुखाः ।
( कथासरित्सागरे। )
प्राणिनां हि निकृष्टाऽपि जन्मभूमिः परा प्रिया ।
( कथासरित्सागरे। )
प्राणेभ्योऽपि हि धीराणां प्रिया शत्रुप्रतिक्रिया ।
( नैषधीयचरिते। )
प्राणेभ्योऽप्यर्थमात्रा हि कृपणस्य गरीयसी ।
( कथासरित्सागरे। )
प्राणैरपि हि भृत्यानां स्वामिसंरक्षणव्रतम् ।
( कथासरित्सागरे। )
प्राप्तोऽप्यर्थः क्षणादेव हार्यते मन्दबुद्धिना ।
( कथासरित्सागरे। )
प्राप्नोतीष्टमविक्लवः। ( कथासरित्सागरे। )
प्राप्यते किं यशः शुभ्रमनङ्गीकृत्य साहसम् ।
( कथासरित्सागरे। )
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः। ( कुमारसंभवे। )
प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ।
प्रायः सज्जनसंगतौ हि लभते दैवानुरूपं फलम् ।
प्रायः सत्पुरुषाश्रितोऽपि लभते दैवानुरूपं फलम् ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ।
प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति ।
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ।
( मेघसन्देशे। )
प्रायः स्त्रियो भवन्तीह निसर्गविषमाः शठाः ।
( कथासरित्सागरे। )
प्रायः स्वं महिमानं क्रोधात् कामाच्च नाशयेत्पुरुषः ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ।
( कुमारसंभवे। )
प्रायेण भार्यादौःशील्यं स्नेहान्धो नेक्षते जनः ।
कथासरित्सागरे। )
प्रायेण भूमिपतयः प्रमदा लताश्च यः पार्श्वतो भवति तं परिवेष्टयन्ति ।
प्रायेण सत्यपि हितार्थकरे विधौ हि श्रेयांसि लब्धुमसुखानि विनाऽन्तरायैः। (किरातार्जुनीये)
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः। ( कुमारसंभवे। )
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ।
प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां सन्ततिः ।
प्रायो गच्छति यत्र यत्र मतिमांस्तत्रैव सत्सम्पदः ।
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव सन्त्यापदः ।
प्रायो वारितवामा हि प्रवृत्तिर्मनसो नृणाम् ।
( कथासरित्सागरे। )
प्रायोऽशुभस्य कार्यस्य कालहारः प्रतिक्रिया ।
( कथासरित्सागरे। )
प्रारभ्य चोत्तमजना न परित्यजन्ति ।
प्रासादशिखरस्थायी काकः किं गरुडायते ।
प्रियबन्धुविनाशोत्थः शोकाग्निः कं न तापयेत् ।
( कथासरित्सागरे। )
प्रियमनु सुकृतां हि स्वस्पृहाया विलम्बः। ( नैषधीयचरिते। )
प्रियं ब्रूयाद्धितं ब्रूयात्।
प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः। ( शिशुपालवधे। )
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
प्रियेषु सौभाग्यफला हि चारुता । ( कुमारसंभवे। )
प्रिये सीमाह्लादः ।
प्रौढं विक्रान्तमासीद्वन इव भवता शूरशून्ये रणेऽस्मिन् ।
फलं भाग्यानुसारेण ।
फलेन साध्यमादिशेत् ।

बकवद्ध्यानमाचरेत् ।
बत स्त्रीणां प्रगल्भानां चञ्चलाश्चित्तवृत्तयः । (कथासरित्सागरे । )
बताश्रितानुरोधेन किं न कुर्वन्ति साधवः । ( कथासरित्सागरे । )
बधिरस्य कुतो गानम् ।
बधिरान्मन्दकर्णः श्रेयान् ।
बध्नात्यार्यपरीवादं खलसंवादशृङ्खला । ( कथासरित्सागरे । )
बन्धुः को नाम दुष्टानाम् ।
बन्धुरप्यहितः परः ।
बलवति सति दैवे बन्धुभिः किं विधेयम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः । ( शाकुन्तले । )
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति । ( श्रीमद्भगवद्गीतायाम् । )
बलं मूर्खस्य मौनित्वम् ।
बालानां रोदनं बलम् ।
बली बलं वेत्ति न वेत्ति निर्बलः ।
बलीयसी केवलमीश्वरेच्छा ।
बहुरत्ना वसुन्धरा ।
बहुवचनमल्पसारं यः कथयति विप्रलापी सः ।
बहुविघ्नास्तु सदा कल्याणसिद्धयः । ( कथासरित्सागरे । )
बह्वाश्चर्या हि मेदिनी । ( कथासरित्सागरे । )
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ।
बुद्धिः कर्मानुसारिणी ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ।
बुद्धिर्नाम च सर्वत्र मुख्यं मित्रं न पौरुषम् । ( कथासरित्सागरे । )
बुद्धेः फलमनाग्रहः ।
बुद्ध्या वा जितमपरेण काममाविष्कुर्वीत स्वगुणमपत्रपः क एव । ( शिशुपालवधे । )
बुभुक्षितः किं न करोति पापम् ।
बुभुक्षितः किं द्विकरेण भुङ्क्ते ।
बुभुक्षितं न प्रतिभाति किञ्चित् । ( पञ्चतन्त्रे )
बुभुक्षितैर्व्याकरणं न भुज्यते ।
बोधे बोधे सच्चिदानन्दभासः ।
ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् । ( नैषधीयचरिते । )
भक्तानामनिर्वाच्यं हि चेष्टितम् । ( कथासरित्सागरे । )
भक्त्या कार्यधुरं वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ।
भक्त्या हि तुष्यन्ति महानुभावाः ।
भक्ष्यमाणो निरुपायश्चेत् सुमेरुरपि हीयते ।
भङ्गेऽपि हि मृणालानामनुबध्नन्ति तन्तवः ।
भजन्ति वैतसीं वृत्तिं विद्वांसः कालवेदिनः । ( कथासरित्सागरे । )
भजन्त्यात्मम्भरित्वं हि दुर्लभेऽपि न साधवः । ( कथासरित्सागरे । )
भद्रकृत्प्राप्नुयाद्भद्रमभद्रं चाप्यभद्रकृत् । ( कथासरित्सागरे । )
भद्रमद्भं वा कृतमात्मनि कल्प्यते । ( कथासरित्सागरे । )
भयकार्कश्यकोपानां गृहं हि छान्दसा द्विजाः । ( कथासरित्सागरे । )
भये सीमा मृत्युः ।
भर्ता च स्त्रीकृतं पापं विन्दत्येव ।
भर्तारं हि विना नान्यः सतीनामस्ति बान्धवः । ( कथासरित्सागरे । )
भर्तृमार्गानुसरणं स्त्रीणां च परमं व्रतम् ।(कथासरित्सागरे । )
भवति महत्सु न निष्फलः प्रयासः । ( शिशुपालवधे । )
भवति योजयितुर्वचनीयता ।
भवति हि विक्लवता गुणोऽङ्गनानाम् । ( शिशुपालवधे । )

सिद्धय: ।
भवन्ति क्लेशबहुलाः सर्वस्यापीह
( कथासरित्सागरे । )
भवन्ति भाग्येन सुखानि देहिनाम् ।
भवन्ति वाचोऽवसरे प्रयुक्ता ध्रुवं प्रविस्पष्टफलोदयाय । ( कुमारसंभवे । )
भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषे सति गौरवाः क्रियाः । ( कुमारसंभवे । )
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः । ( कुमारसंभवे । )
भवन्त्युदयकाले हि सत्कल्याणपरम्पराः । ( कथासरित्सागरे । )
भवन्त्येव हि भद्राणि धर्मादेव यदादरात् । ( कथासरित्सागरे । )
भवितव्यता बलवती । ( अभिज्ञानशाकुन्तले । )
भवितव्यं भवत्येव कर्मणामीदृशी गतिः ।
भवितव्यस्य नाशाश्यं दृश्यते बत दृश्यताम् ।
( कथासरित्सागरे । )
भवितव्यानां द्वाराणि भवन्ति सर्वत्र ।(शाकुन्तले)
भवेन्न यस्य यत्कर्म स तत्कुर्वन्विनश्यति ।
( कथासरित्सागरे । )
भवो हि लोकाभ्युदयाय तादृशाम् ।
भस्मीभूतस्य भूतस्य पुनरागमनं कुतः । ( नैषधीयचरिते । )
भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ।
भार्या मित्रं गृहेषु च ।
भार्या रूपवती शत्रुः ।
भार्यासमं नास्ति शरीरतोषणम् ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं मतम् ।
भावस्थिराणि जननान्तरसौहृदानि । ( अभिज्ञानशाकुन्तले । )
भिक्षुको भिक्षुकं दृष्ट्वा श्वा यथा घुर्घुरायते ।
भिन्नरुचिर्हि लोकः । ( रघुवंशे । )
भीता इव हि धीराणां यांति दूरे विपत्तयः ।
( कथासरित्सागरे । )

भुञ्जीत गरलं प्राज्ञो न कदाचिद्रिपोर्गृहे ।
भूतार्थकथने यस्य स्थेयस्येव सरस्वती ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ।
भूभृद्रत्नं कनकशिखरी ।
भूमिर्दारा हिरण्यं वा विग्रहस्य फलत्रयम् । (विग्रह त्रय कारणम्)
भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति । - इति कश्चित्
भोगरत्नं मृगाक्षी ।
भोगो भूषयते धनम् ।
भोग्यं किं रमणीं विना ।
भ्रष्टस्य का वा गतिः ।
मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ।
मतिरेव बलाद्गरीयसी ।
मदमूढबुद्धिषु विवेकिता कुतः । ( शिशुपालवधे । )
मद्यपस्य कुतः सत्यम् ।
मद्यपाः किं न जल्पन्ति ।
मध्ये मारैकसुहृदि प्रसक्ता स्त्री सती कुतः । ( कथासरित्सागरे । )
मधुमयभूषा मनसिजः ।
मधुरविधुरमिश्राः सृष्टयो हा विधातुः । ( प्रसन्नराघवे । )
मधुराऽपि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ।
मनःपूतं समाचरेत् ।
मनसैव कृतं पापं न शरीरकृतं कृतम् ।
मनस्यन्यद्वचस्यन्यत्कर्म्मण्यन्यद्दुरात्मनाम् ।
मनसा चिन्तितं कार्यं वाचा नैव प्रकाशयेत् ।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
( श्रीमद्भगवद्गीतायाम् । )
मनसो निग्रहं मन्ये वायोरिव सुदुष्करम् ।
( श्रीमद्भगवद्गीतायाम् । )
मनस्येकं वचस्येकं कर्मण्येकं महाधियाम् ।
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ।
मनीषिणः सन्ति न ते हितैषिणः ।
मनोभूषा मैत्री ।

मनोरथानामगतिर्न विद्यते । ( कुमारसंभवे । )
मनो हि जन्मान्तरसंगतिज्ञम् । ( रघुवंशे । )
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः । ( मेघसंदेशे । )
मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः ।
मयि तु कृतनिधाते किं विदध्याः परेण ।
मय्युल्लङ्घितमर्यादे को हि तिष्ठेत्स्ववर्त्मनि । ( कथासरित्सागरे । )
मरणं प्रकृतिः शरीरिणाम् ।
मरणान्तानि वैराणि । ( वाल्मीकीये । )
मर्दनं गुणवर्धनम् ।
मर्मवाक्यमपि नोच्चरणीयम् ।
महतां हि धैर्यमभिभाव्य वैभवम् । ( किरातार्जुनीये । )
महतां हि सर्वमथवा जनातिगम् । ( माघे । )
महतामनुकम्पा हि विरुद्धेषु प्रतिक्रिया । ( कथासरित्सागरे । ) ।
महतीमपि श्रियमवाप्य विस्मयः सुजनो न विस्मरति जातु किंचन । ( माघे । )
महते रुजन्नपि गुणाय महान् । (किरातार्जुनीये)
महाजनो येन गतः स पन्थाः ( स्मृतौ । )
महानपि प्रसङ्गेन नीचं सेवितुमिच्छति ।
महानुभावः प्रतिहन्ति पौरुषम् । ( किरातार्जुनीये । )
महान्महत्येव करोति विक्रमम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः । ( रघुवंशे । )
महीपतीनां विनयो हि भूषणम् ।
महेश्वरमनाराध्य न सन्तीप्सितसिद्धयः । ( कथासरित्सागरे । )
महोदयानामपि सङ्घवृत्तितां सहायसाध्याः प्रदिशन्ति सिद्धयः । ( किरातार्जुनीये । )
मातर्लक्ष्मि तव प्रसादवशतो दोषा अपि स्युर्गुणाः । ( लक्ष्मीस्तोत्रे । )

माता दुश्चारिणी[1] रिपुः ।
मातापितृभ्यां शप्तः सन्न जातु सुखमश्नुते । ( कथासरित्सागरे । )
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने । ( हितोपदेशे । )
मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि । ( किरातार्जुनीये । )
मात्सर्येण दुरात्मकोऽपि सुजनं दृष्ट्वा सदा गर्हते ।
मात्रा समं नास्ति शरीरपोषणम् ।
मादृशा हि कथं कुर्युः सत्त्वोल्लङ्घनसाध्वसम् । ( कथासरित्सागरे । )
मानो हि महतां धनम् ।
माने म्लाने कुतः सुखम् ।
मार्गस्थो नावसीदति । ( नीतिसर्वस्वे । )
मा ब्रूहि दीनं वचः । ( भामिनीविलासे । )
मासरत्नं वसन्तः ।
मितं च सारं च वचो हि वाग्मिता । ( नैषधीयचरिते । )
मित्रार्थं गमितप्राणा दुर्लभा हि महोदयाः । ( कथासरित्सागरे । )
मिथ्या परोपकारो हि कुतः स्यात्कस्य शर्मणे । ( कथासरित्सागरे । )
मिष्टान्नमितरे जनाः ।
मुक्त्वा बलिभुजं काकी कोकिले रमते कथम् । ( कथासरित्सागरे । )
मुखं विमुच्य श्वसितस्य धारया वृथैव नासापथधावनश्रमः । ( नैषधीयचरिते । )
मुखरताऽवसरे हि विराजते । ( किरातार्जुनीये । )
मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः ।
मुख्यमङ्गं हि मन्त्रस्य विनिपातप्रतिक्रिया । ( कथासरित्सागरे । )
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः ।

---

१ "माता च व्यभिचारिणी ।" इति पाठान्तरम् ।

( किरातार्जुनीये । )

मुह्यन्मार्गममार्गं वा रागान्धः को हि पश्यति ।

( कथासरित्सागरे । )

मूढः परप्रत्ययनेयबुद्धिः ।

मूर्खस्य नास्त्यौषधम् ।

मूर्खस्य किं शास्त्रकथाप्रसङ्गैः ।

मूर्खः सुखं जीवति वाऽऽत्मविज्ञः ।

मूर्खस्य हृदयं शून्यम् ।

मूर्खाणां बोधको रिपुः ।

मूर्खैर्हि सङ्गे कस्यास्ति परिणामोऽपि शर्म्मणे ।(कथासरित्सागरे। )

मूर्खो दृष्टव्यलीकोऽपि व्याजसान्त्वेन तुष्यति ।

( कथासरित्सागरे । )

मूर्खोऽनुभवति क्लेशं न कार्यं कुरुते पुनः ।

( कथासरित्सागरे । )

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ।

( शाकुन्तले । )

मृत्योः सर्वत्र तुल्यत्वम् ।

मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ।

( मेघसन्देशे । )

मेघो जलधिवर्षी च सम्पन्नेषु महामनाः ।

मोघा हि नाम जायेत महत्सूपकृतिः कुतः ।

( कथासरित्सागरे । )

मोहान्धमविवेकं हि श्रीश्चिराय न सेवते ।

( कथासरित्सागरे । )

मौनमुन्नतिकारकम् ।

मौनं विधेयं सततं सुधीभिः ।

मौनं सर्वोष्टसाधकम् ।

मौनिनः कलहो नास्ति मानिनो न चिरं स्थितिः ।

म्लायति श्रीः कुलस्त्रीव गृहे बन्धक्यधिष्ठिते ।

( कथासरित्सागरे । )

यः स्वभावो हि यस्य स्यात्तस्यासौ दुरतिक्रमः ।

यतः सतां सङ्गतिरिष्टपूर्त्तये ।

यतः सत्यं ततो धर्मः ।

यतस्ते कृतिनो लोके परस्मै श्रेयसे सदा ।

( नीतिसर्वस्वे । )

यतो धर्मस्ततो धनम् ।

यतो धर्म्मस्ततो जयः ।

यतो नागास्ततो जयः ।

यतो रूपं ततः शीलम् ।

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।

यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ।

( हितोपदेशे । )

यत्र विद्वज्जनो नास्ति तत्र श्लाघ्योऽल्पधीरपि ।

यत्राकृतिस्तत्र गुणा सुदुर्लभाः ।

यत्रास्ति लक्ष्मीर्विनयो न तत्र ।

यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः

यथा देशस्तथा भाषा ।

यथा बीजं तथाऽङ्कुरः ।

यथा भूमिस्तथा तोयम् ।

यथा शास्त्रं तथा कर्म ।

यथा राजा तथा प्रजा । ( चाणक्यनीतौ । )

यथा वाक्यं तथा कर्म यथा कर्म तथा फलम् ।

यथा वृक्षस्तथा फलम् ।

यथाशक्त्यतिथेः पूजा धर्मोऽस्ति गृहमेधिनाम् ।

( कथासरित्सागरे । )

यथोत्तरेच्छा हि गुणेषु कामिनः । ( किरातार्जुनीये । )

यथौषधं स्वादु हितं च दुर्लभम् ।

यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते । ( कुमारसम्भवे । )

यदनुद्वेगतः साध्यः पुरुषार्थः सदा बुधैः । ( कथासरित्सागरे । )

यदन्नं भक्षयेन्नित्यं जायते तादृशी मतिः ।

यद्ददाति यदश्नाति तदेव धनिनां धनम् । ( हितोपदेशे । )

यद्यदाचरति श्रेष्ठो लोकस्तदनुवर्त्तते । ( श्रीमद्भग.

वद्गीतायाम् ।)

यदि वाऽत्यन्तमृदुता न कस्य परिभूतये ।
( कथासरित्सागरे ।)

यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ।

यद्देवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ।

यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः ।

यद्भावितात्मा म्रियते जन्तुस्तद्रूपमश्नुते ।
( कथासरित्सागरे ।)

यद्यपि शुद्धं लोकविरुद्धं नाचरणीयं नाचरणीयम् ।

यद्वा तद्वा भविष्यति ।

यशः पुण्यैरवाप्यते ।

यशस्तु रक्ष्यं परतो यशोधनैः । (रघुवंशे ।)

यस्याश्वास्तस्य काञ्चनम् ।

यस्य वर्णस्य यो राजा स वर्णः सुखमेधते ।

यस्याश्वास्तस्य मेदिनी ।

यः क्रियावान्स पण्डितः ।

या गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी ।

याचको याचकं दृष्ट्वा श्वा यथा घुर्घुरायते ।

याचनान्तं हि गौरवम् ।

याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ।
( मेघसन्देशे ।)

यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।

यादृशो यः कृतो धात्रा भवेत्तादृश एव सः ।
( कथासरित्सागरे ।)

यादृशास्तन्तवः कामं तादृशो जायते पटः ।
( कथासरित्सागरे ।)

यानरत्नं तुरङ्गमः ।

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
( अनर्घराघवे ।)

या यस्य प्रकृतिर्न सा जनिमता केनापि सन्त्यज्यते ।

या राका शशिशोभना गतधना सा यामिनी यामिनी ।

या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ।

या सौन्दर्यगुणान्विता पतिरता सा कामिनी कामिनी ।

युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात् ।

युक्तानां खलु महतां परोपकारे कल्याणी भवति रुजत्स्वपि प्रवृत्तिः । ( किरातार्जुनीये ।)

युक्तानां विमलतया तिरस्क्रियायै नाक्रामन्नपि हि भवत्यलं जलौघः । ( शिशुपालवधे ।)

युक्तियुक्तं सता ग्राह्यं बालस्यापि सुभाषितम् ।

ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने ।

युद्धस्य वार्ता रम्या स्यात् ।

ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे )
( भर्तृहरेः ।)

येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ।

येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ।

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः । ( मालतीमाधवे ।)

येनेष्टं तेन गम्यताम् ।

योगस्तडित्तोयदयोरिवास्तु ।

योगो भवति दुःखहा । ( श्रीमद्भवद्गीतायाम् )

योजकस्तत्र दुर्लभः ।

यो यद्वपति बीजं स लभते तादृशं फलम् ।
( कथासरित्सागरे ।)

रक्षन्ति पुण्यानि पुरा कृतानि ।

रङ्गः शुक्लपटे यथा ।

रत्नदीपस्य हि शिखा वात्यया नैव नश्यते ।

रत्नव्ययेन पाषाणं को हि रक्षितुमर्हति ।
( कथासरित्सागरे ।)

---

१ "यस्य कस्य तरोर्मूलं येन केनापि मिश्रितम् । यस्मै कस्मै प्रदातव्यम् ।" इति पूर्वपादत्रयम् ।

१ " घटं भित्त्वा पटं छित्त्वा कृत्वा रासभवाहनम् ।" इति पूर्वार्द्धम् ।

रत्नं समागच्छतु काञ्चनेन ।
रत्नाकरे युज्यत एव रत्नम् । ( कुमारसंभवे । )
रन्ध्रोपनिपातिनोऽनर्थाः । ( शाकुन्तले । )
रम्याणां विकृतिरपि श्रियं तनोति । ( किराता-
र्जुनीये । )
रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ।
( कुमारसंभवे । )
रसमूला हि व्याधयः ।
रहस्यं साधूनामनुपदमुपास्यं विजयते ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ।
( चाणक्यनीतौ । )
राजसेवा मनुष्याणामसिधाराऽवलेहनम् ।
राजा कालस्य कारणम् ।
राजा प्रकृतिरञ्जनात् । ( रघुवंशे । )
राजा राष्ट्रकृतं पापम् ।
राजा मित्रं केन दृष्टं श्रुतं वा ।
राजा सहायवाञ्शूरः सोत्साहो जयति द्विषः ।
( कथासरित्सागरे । )
राज्ञः पापमुपादत्ते पुरोधा नानुशास्ति चेत् ।
रामधाम शरणीकरणीयम् ।
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।
( मेघसन्देशे । )
रिक्तपाणिर्न ना पश्येद्राजानं देवतां गुरुम् ।
रिक्ता भवन्ति विभृता विभृताश्च रिक्ताः ।
रिपुष्वपि हि भीतेषु सानुकम्पा महाशयाः ।
( कथासरित्सागरे । )
लक्ष्मीरनुसरति नयगुणसमृद्धिम् ।
लक्ष्मीर्यस्य गृहे स एव लभते प्रायो जगद्वन्द्यताम् ।
लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धमथ
दक्षिणसिन्धुराजः ।
लब्धदिव्यरसास्वादः को हि रज्येद्रसान्तरे ।
कथासरित्सागरे । )
लब्धस्पर्शानां भवति कुतोऽथवा व्यवस्था ।
( शिशुपालवधे । )

ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते ।
लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः
कथमीप्सितो भवेत् । ( शाकुन्तले । )
ललितान्तानि गीतानि ।
लाभः परं खलु मुखे तव भस्मपातः ।
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ।
( हितोपदेशे । )
लीलया भवजलं तरणीयम् ।
लुब्धमर्थेन गृह्णीयात् ।
लुब्धानां याचकः शत्रुः ।
लोके पशुश्च मूर्खश्च निर्विवेकमती समौ । (कथा-
सरित्सागरे । )
लोकानुग्रहकर्त्तारः प्रवर्धन्ते नरेश्वराः । ( नीति-
सर्वस्वे । )
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ।
लोकोत्तरचरित्रा न केषां स्तुत्या धरातले ।
लोकोपहसिताः शश्वत्सीदन्त्येव ह्यबुद्धयः । ( कथा-
सरित्सागरे । )
लोभः पापस्य कारणम् ।
लोभमूलानि पापानि ।
लाभाल्लोभो विवर्धते ।
लोभाविष्टो नरो वित्तं वीक्षते नैव चापदम् ।
लोकाचारं च सन्मार्गं मनसाऽपि न लङ्घयेत् ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ।
वक्ति जन्मान्तरप्रीतिं मनः स्निग्धदकारणम् ।
( कथासरित्सागरे । )
वक्रे विधौ वद कथं व्यवसायसिद्धिः ।
वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत् ।
वचने का दरिद्रता ।
वचोभूषा सत्यं हृदयरमणीयत्वमृजुता ।
वञ्च्यन्ते हेलयैवेह कुट्टनीभिः सरलाशयाः ।
( कथासरित्सागरे । )

---

१ चन्द्रे 'दैवे' च ।

वज्रादपि हि वीराणां चित्तरत्नमखण्डितम् ।
( कथासरित्सागरे । )
वक्ता दशसहस्रेषु दाता भवति वा न वा ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते । ( कुमारसंभवे । )
वनेषु दोषाः प्रभवन्ति रागिणाम् ।
वयं काका वयं काका इति जल्पन्ति वायसाः ।
वयसि गते कः कामविकारः शुष्के नीरे कः कासारः।
क्षीणे वित्ते कः परिवारो ज्ञाते तत्त्वे कः संसारः
( शङ्कराचार्यस्य । )
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ।
वरं हि मानिनो मृत्युर्न दैन्यं स्वजनाग्रतः ।
( कथासरित्सागरे । )
वरं क्लैव्यं पुंसां न च परकलत्राभिगमनम् ।
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिः ।
वरं भिक्षाऽशित्वं न च परधनास्वादनसुखम् ।
वरं मौनं कार्यं न च वचनमुक्तं यदनृतम् ।
वरविभवभूषा वितरणम् ।
वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ।
वशिनां न निहन्ति धैर्यमनुभावगुणः । ( किराता-र्जुनीये । )
वसुमत्या हि नृपाः कलत्रिणः । ( रघुवंशे । )
वस्त्रपूतं पिबेत्तोयं मनः पूतं समाचरेत् ।
वस्त्राणामातपो जरा ।
वाङ्मात्रोत्पादिता सद्यवैरात्को नानुतप्यते ।
( कथासरित्सागरे । )
वाञ्छारत्नं परमपदवी ।
वाते वाति कदम्बपुष्पसुरभौ केन प्रतारिष्यते ।
वादे वादे जायते तत्त्वबोधः । ( शङ्कराचार्यस्य । )
बोधे बोधे भासते चन्द्रचूडः ।
वामे[1] विधौ[2] न हि फलन्त्यभिवाञ्छितानि ।
वासः प्रधानं खलु योग्यतायाः ।

वासोविहीनं विजहाति लक्ष्मीः ।
विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतिकारस्य ।
( शाकुन्तले । )
विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः । ( कुमारसंभवे । )
विक्रीते करिणि किमङ्कुशे विवादः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ।
( कुमारसंभवे । )
विश्वस्ते ननु हनने बलं नु कीदृक् ।
विद्ययातः पुरुषो भवेत् ।
विघ्नवत्यः प्रार्थितार्थसिद्धयः । ( शाकुन्तले । )
विचित्रमायाः कितवा ईदृशा एव सर्वदा ।
( कथासरित्सागरे । )
विचित्ररूपाः खलु चित्तवृत्तयः । (किरातार्जुनीये)
विचित्रविधये तस्मै सर्वदा विधये नमः । ( कथा-सरित्सागरे । )
विचित्रा वासनाः पुंसां स्मारयन्ति पुरा कृतम् ।
विचित्रो बत कायस्य विपाकविषमः क्रमः ।
( कथासरित्सागरे । )
विजानतोऽपि ह्यनयस्य रौद्रतां भवत्यपाये परिमो-हिनी मतिः । ( किरातार्जुनीये । )
विदग्धा अपि वञ्च्यन्ते विटवर्णनया स्त्रियः ।
( कथासरित्सागरे । )
विदेशे बन्धुलाभो हि मरावमृतनिर्झरः ।
( कथासरित्सागरे । )
विद्याऽर्थिनां नो शयनं न भोजनम् ।
विद्या ददाति विनयम् ।
विद्याऽभ्यसनं व्यसनं ह्यथवा हरिपादसेवनं व्यसनम् ।
विद्या मित्रं प्रवासेषु ।
विद्यारत्नं सरसकविता ।
विद्या रूपं कुरूपाणाम् ।
विद्यासमं नास्ति शरीरभूषणम् ।
विद्या सर्वस्य भूषणम् ।
विद्या स्तब्धस्य निष्फला ।

---

१ वामस्थे प्रतिकूले च । २ चन्द्रमसि, दैवे च ।

विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् । ( कुवलयानन्दे । )
विद्वान्कुलीनो न करोति गर्वम् ।
विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ।
विद्वान्सर्वत्र पूज्यते ।
विधिरहो बलवानिति मे मतिः ।
विधिरुच्छृङ्खलो नृणां विदधाति शुभाशुभम् ।
विधिर्हि घटयत्यर्थानचिन्त्यानपि संमुखः । ( कथासरित्सागरे । )
विधिलिखितमनुसरति मतिरघसुकृतयोः ।
विधेर्विचित्राणि विचेष्टितानि ।
विधेर्विलासानब्धेश्च तरङ्गान्को हि तर्कयेत् । (कथासरित्सागरे । )
विनयाद्याति पात्रताम् । ( हितोपदेशे । )
विनयो हि सतीव्रतम् । ( कथासरित्सागरे । )
विनाऽप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ।
विना मलयमन्यत्र चन्दनं न प्ररोहति ।
विनाशमभिकाङ्क्षन्ति ज्ञातीनां ज्ञातयोऽप्यहो ।
विनाशकाले विपरीतबुद्धिः । ( हितोपदेशे । )
विनाऽश्रयं न शोभन्ते पण्डिता वनिता लताः ।
विना हि गुर्वादेशेन संपूर्णाः सिद्धयः कुतः । ( कथासरित्सागरे । )
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ।( कुमारसंभवे । )
विनीतनागः किल सूत्रधारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते । ( रघुवंशे । )
विपदा परिभूताः किं व्यवस्यन्ति विलम्बितुम् । ( कुमारसम्भवे । )
विपदि न दूषितातिभूमिः । ( शिशुपालवधे । )
विपदि धैर्यमथाभ्युदये क्षमा प्रकृतिसिद्धमिदं शरीरिणाम् ।
विपदोऽपि परं श्लाघ्योऽपकारयति नो हि सः । ( कुमारसम्भवे ।)
विप्रतिषेधे परं कार्यम् ।
विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः ।
विभूषणं मौनमपण्डितानाम् ।
विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा । ( किरातार्जुनीये । ).
विरक्तस्य तृणं भार्या धनं राज्यं च वैभवम् ।
विलम्बितुं न खलु सदा मनस्विनो विधित्सवः कलहमवेक्ष्य विद्विषः । ( शिशुपालवधे । )
विलासिनी हि सर्वस्य सन्ध्येव क्षणरागिणी।(कथासरित्सागरे । )
विवक्षितं ह्यनुक्तमनुतापं जनयति । ( अभिज्ञानशाकुन्तले । )
विवेकधाराशतधौतमन्तः सतां न कामः कलुषीकरोति । ( नैषधीयचरिते । )
विशाखान्ता मेघाः ।
विश्वासं वर्जयेत् स्त्रीणाम् ।
विश्वासः कुटिलेषु कः । ( कथासरित्सागरे । )
विश्वासयत्याशु सतां हि योगः । ( किरातार्जुनीये ।)
विश्वासघातुकानां तु निष्कृतिर्नास्ति कुत्रचित् ।
विषं गोष्ठी दरिद्रस्य ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया । ( रघुवंशे । )
विषयाकृष्यमाणा हि तिष्ठन्ति सुपथे कथम् । कथासरित्सागरे । )
विषयिणः कस्यापदोऽस्तं गताः ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ।(कुमारसम्भवे । )
विषस्य विषमौषधम् ।
वीरसाहाय्यनिर्विघ्नाः सुखलभ्या हि सिद्धयः । ( कथासरित्सागरे । )
वीरो हि श्लाघ्यमर्हति । ( कथासरित्सागरे ।
वृक्षं क्षीणफलं त्यजन्ति विहगाः ।
वृत्तं हि राज्ञामुपरुद्धवृत्तम् । ( रघुवंशे । )
वृथा तृप्तस्य भोजनम् ।

वृथा दानं समर्थस्य ।
वृथा दीपो दिवाऽपि च ।
वृथा भवेदसद्ग्रहान्धस्य हितोपदेशना । ( कुमारसंभवे । )
वृथा वृष्टिः समुद्रेषु ।
वृद्धस्य तरुणी विषम् ।
वृद्धा न ते येन वदन्ति धर्मम् ।
वृद्धा नारी पतिव्रता ।
वेदाञ्जानन्ति पण्डिताः ।
वेश्याङ्गनेव नृपनीतिरनेकरूपा ।
वेश्यानां च कुतः स्नेहः ।
वैश्यानां च कुतः सत्यम् ।
व्याघ्रस्य चोपवासस्य पारणं पशुमारणम् ।
व्याजसप्रणयैर्वाक्यैर्जनन्या को न वञ्च्यते । ( कथासरित्सागरे । )
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः । ( कुमारसंभवे । )
व्याधितस्यौषधं मित्रं विपन्नस्य धृतिः सुधा ।
व्रताभिरक्षा हि सतामलंक्रिया । ( किरातार्जुनीये । )
शक्तयो नियता वारि वैद्युताग्निं नु हन्ति किम् । ( कथासरित्सागरे । )
शक्या हि केन निश्चेतुं दुर्ज्ञाना नियतेर्गतिः । ( कथासरित्सागरे । )
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
शठं प्रति शठं कुर्यात् ।
शतं विहाय भोक्तव्यम् ।
शपथैः सन्धितस्यापि विश्वासं न व्रजेद्रिपोः । ( कथासरित्सागरे । )
शयनतलरत्नं शशिमुखी ।
शरीरमूला हि नृपा मन्त्रमूला च राजता । ( कथासरित्सागरे । )
शरीरमाद्यं खलु धर्मसाधनम् । ( कुमारसंभवे । )
शस्त्राघाता न तथा सूचीक्षतवेदना यादृक् ।

शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ( रघुवंशे । )
शाम्येत् प्रत्युपकारेण नोपकारेण दुर्जनः । ( कुमारसंभवे । )
शास्त्रं हि निश्चितधियां क न सिद्धिमेति । ( शिशुपालवधे । )
शास्त्राद्रूढिर्बलीयसी ।
शिरसि लिखितं धात्रा नृणां विलङ्घते हि कः ।
शिष्यपापं गुरुर्भुङ्क्ते बालपापं पिता तथा ।
शीलं परं भूषणम् ।
शीलं भूषयते विद्यां शीलं भूषयते कुलम् ।
शीलं हि विदुषां धनम् । ( कथासरित्सागरे ।)
शीलं हि सर्वस्य जनस्य भूषणम् ।
शुचिः क्षेमकरो राजा ।
शुचिर्नारी पतिव्रता ।
शुचि भूमिगतं तोयम् ।
शुचि विप्रार्पितं धनम् ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते । ( श्रीमद्भगवद्गीतायाम् ।)
शुनः पुच्छमिव व्यर्थं जीवनं विद्यया विना ।
शुभकृन्नहि सीदति । ( कथासरित्सागरे । )
शुभस्य शीघ्रम् ।
शुभाचारस्य कः कुर्यादशुभं हि सचेतनः । ( कथासरित्सागरे । )
शुष्केन्धने वह्निरुपैति वृद्धिम् ।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ।
शूरस्य मरणं तृणम् ।
शूराणां मृतमारणे नहि परो धर्मः प्रयुक्तो बुधैः ।
शूरा हि प्रणतिप्रियाः । ( कथासरित्सागरे । )
शोककन्दः क कन्या हि कानन्दः कायवान्सुतः । ( कथासरित्सागरे ।)
शोभन्ते धरया नृपाः ।
शोभन्ते विद्यया विप्राः ।

शोभन्ते वाणिजो लक्ष्म्या ।
शोभन्ते वयसाऽङ्घ्रिजाः ।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः ।
श्यालको गेहनाशाय ।
श्रद्धया न विना दानम् ।
श्रद्धया फलमश्नुते ।
श्रवणपुटरत्नं हरिकथा ।
श्रवणपुटसुधा स्याद्विश्वनाथस्य चर्चा ।
श्रवणसुखसीमा हरिकथा ।
श्रीकृष्णस्य कृपालवो यदि भवेत्कः कं निहन्तुं क्षमः।
श्रीपतेः पदयुगं स्मरणीयम् ।
श्रुतिस्मृती उभे नेत्रे ।
श्रेयसि केन तृप्यते । ( शिशुपालवधे । )
श्रेयान्हि मानिनो मृत्युर्नेदृगात्मप्रकाशनम् ।
( कथसरित्सागरे । )
श्रोत्रस्य भूषणं शास्त्रम् ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ।
संस्कारैर्द्विज उच्यते । ( याज्ञवल्क्यस्मृतौ । )
संसर्गजा दोषगुणा भवन्ति ।
संहर्षिणा सह गुणाभ्यधिकैर्दुरासम् । ( शिशुपालवधे । )
सकलं शीलेन कुर्याद्वशम् ।
सकलकृतिसीमा श्रुतिभृतिः ।
सकलगुणभूषा च विनयः ।
सकलगुणसीमा वितरणम् ।
सकलसुखसीमा सुवदना ।
सकृद्विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान्ग्रहीतुम् । ( रघुवंशे । )
स क्षत्रियस्त्राणसहः सतां यः ।
सखि साहजिकं प्रेम दूरादपि विजायते ।
संकटे हि परीक्ष्यन्ते प्राज्ञाः शूराश्च सङ्गरे ।
( कथासरित्सागरे । )
संकल्पैकप्रधाना हि दिव्यानामखिलाः क्रियाः ।
( कथासरित्सागरे । )
सङ्गः खलानां किमु नो तनोति दुःखानि पापानि चिराय लोके ।
सङ्गः सतां किमु न मङ्गलमातनोति ।
संग्रामो नाम शूराणामुत्सवो हि महानयम् ।
( कथासरित्सागरे । )
सजीवं दहते चिन्ता ।
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ।
सतां महत्सम्मुखधावि पौरुषम् । ( नैषधीयचरिते ।
सतां हि चेतःशुचितात्मसाक्षिका । ( नैषधीयचरिते । )
सतां हि सङ्गः सकलं प्रसूते ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।
( शाकुन्तले । )
सतां हि साधुशीलत्वात्स्वभावो न निवर्तते ।
सतां गुरुजिगीषे हि चेतसि स्त्रीतृणं कियत् ।
( कथासरित्सागरे । )
सतां माने म्लाने मरणमथवा दूरगमनम् ।
सतीधर्मो हि सुस्त्रीणां चिन्त्यो न सुहृदादयः ।
( कथासरित्सागरे । )
स तु निरवधिरेकः सज्जनानां विवेकः ।
सत्त्वाधीना हि सिद्धयः । ( कथासरित्सागरे । )
सत्त्वानुरूपं सर्वस्य धाता सर्वं प्रयच्छति ।
( कथासरित्सागरे । )
सत्पुत्र एव कुलसद्मनि कोऽपि दीपः ।
सत्यः प्रवादो यच्छिद्रेष्वनर्था यान्ति भूरिताम् ।
( कथासरित्सागरे । )
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते । ( शिशुपालवधे । )
सत्यपूतां वदेद्वाणीं सत्यपूतं समाचरेत् ।
सत्यं सम्यक्कृतोऽल्पोऽपि धर्मो भूरिफलो भवेत् ।
( कथासरित्सागरे । )
सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ।
सत्यं कण्ठस्य भूषणम् ।
सत्यं न तद्यच्छलमभ्युपैति ।
सत्यमेव जयते ।
सत्येन तपते रविः ।
सत्येन धार्यते पृथ्वी ।

सत्येन पूयते साक्षी ।
सत्येन वाति वायुश्च ।
सदसद्वा नहि विदुः कुस्त्रीवचनमोहिताः । ( कथासरित्सागरे । )
सदाऽभिमानैकधना हि मानिनः । ( शिशुपालवधे । )
सदा स्याद्योऽत्र यच्चित्तस्तन्मयत्वमुपैति सः । ( कथासरित्सागरे । )
सदोभूषा सूक्तिः ।
सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु । ( मेघसन्देशे । )
सद्भिः कुर्वीत संगतिम् ।
सद्भिरेव सहासीत ।
सद्भिर्व्यवहरेत्सदा ।
सद्भिर्विवादो मैत्री च ।
सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् ।
सद्यः फलति गान्धर्वम् ।
सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि काङ्क्षितम् । ( रघुवंशे । )
स धार्मिको यः परमर्म न स्पृशेत् ।
स धीरो यो न संमोहमापत्कालेऽपि गच्छति । ( कथासरित्सागरे । )
संशयात्मा विनश्यति । ( श्रीमद्भगवद्गीतायाम् )
सन्तः परीक्ष्यान्यतरद्भजन्ते ।
संततिः शुद्धवंश्या हि परत्रेह च शर्मणे । ( रघुवंशे । )
संतोष एव पुरुषस्य परं निधानम् ।
संतोषं जनयेत्प्राज्ञस्तदेवेश्वरपूजनम् ।
संतोषतुल्यं धनमस्ति नान्यत् ।
संतोषान्न परं सुखम् ।
सन्तोषी ब्राह्मणः शुचिः ।
संतोषी क्षत्रियो नष्टः ।
संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ।
संधत्ते भृशमरतिं हि सद्वियोगः ।
सन्धिं कृत्वा तु हन्तव्यः संप्राप्तेऽवसरे रिपुः । ( कथासरित्सागरे । )

निकृष्टे निकृष्टेऽपि कष्टं रज्यन्ति कुस्त्रियः । ( कथासरित्सागरे । )
सद्यः शुक्रकरं पयः ।
सभारत्नं विद्वान् भवति कुलरत्नं सुतनयः ।
समये हि सर्वमुपकारि कृतम् । ( शिशुपालवधे । )
समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ।
समानशीलव्यसनेषु सख्यम् ।
समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य । ( कुमारसंभवे । )
संपत्सु हि सुसत्त्वानामेकहेतुः स्वपौरुषम् । ( कथासरित्सागरे । )
संपूर्णकुम्भो न करोति शब्दम् ।
संभवत्यभिजातानामभिमानो ह्यकृत्रिमः । ( कथासरित्सागरे । )
संभावना ह्यधिकृतस्य तनोति तेजः । ( किरातार्जुनीये । )
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते । ( श्रीमद्भगवद्गीतायाम् । )
संमुखीनो हि जयो रन्ध्रप्रहारिणाम् । ( रघुवंशे । )
समानशीलव्यसनेषु सख्यम् ।
स रक्षिता रक्षति यो हि गर्भे । ( श्रीमद्भागवते )
सर्वदा स्वहितमाचरणीयम् ।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ।
संमीलने नयनयोर्नहि किञ्चिदस्ति । ( भोजप्रबन्धे । )
सरित्पतिर्नहि समुपैति रिक्तताम् । ( शिशुपालवधे । )
सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ।
सर्वः कान्तमात्मानं पश्यति । ( अभिज्ञानशाकुन्तले । )
सर्वः कालवशेन नश्यति ।
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् । ( पञ्चतन्त्रे । )
सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव । ( अभिज्ञानशाकुन्तले । )
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः । ( शिशुपालवधे । )

सर्वः कार्यवशाज्जनोऽभिरमते तत्कस्य को वल्लभः। (कथासरित्सागरे।)
सर्वं जीवद्भिराप्यते। (कथासरित्सागरे।)
सर्वं परवशे दुःखम्।
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः।
सर्वं रत्नमुपद्रवेण सहितं निर्दोषमेकं यशः।
सर्वं शून्यं दरिद्रस्य।
सर्वं सत्ये प्रतिष्ठितम्।
सर्वंसहा न सहते युवतीकुचमण्डलम्।
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम्।
सर्वत्र जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम्।
सर्वनाशाय मातुलः।
सर्वमत्यन्तगर्हितम्।
सर्वमात्मवशे सुखम्।
सर्वलोकप्रतिष्ठायां यतन्ते बहवो जनाः।
सर्वस्यापि जनस्य भाग्यवशतो भद्राणि दुःखानि च।
सर्वथा कृतविद्योऽपि प्रमादात्परिभूयते।
सर्वश्चित्तप्रमाणेन सदसद्वाऽभिवाञ्छति। (कथासरित्सागरे।)
सर्वाङ्गे दुर्जनो विषम्।
सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः।
सर्वस्यापि विनाशकालसमये बुद्धिः परिभ्रश्यति।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः। (श्रीमद्भगवद्गीतायाम्।)
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः। (वाल्मीकीये रामायणे।)
सर्वारम्भास्तण्डुलप्रस्थमूलाः।
सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम्। (अभिज्ञानशाकुन्तले।)
सर्वे गुणाः काञ्चनमाश्रयन्ते।
सर्वेऽपि काम्या गुणाः। (नीतिसर्वस्वे।)
सर्वो हि नोपगतमप्यपचीयमानं वर्धिष्णुमाश्रयमनागतमभ्युपैति। (शिशुपालवधे।)
सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना।
स वै स्वामी स वै भृत्यो गुणलब्धौ न कामुकौ।
स सुहृद्व्यसने यः स्यात्।
सहते मादृशः को हि तादृशं धर्मविप्लवम्। (कथासरित्सागरे।)
सहते विपत्सहस्रं मानी नैवापमानलेशमपि।
सहते विरहक्लेशं यशस्वी नायशः पुनः। (कथासरित्सागरे।)
सहवासी विजानाति चरित्रं सहवासिनः।
सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। (किरातार्जुनीये।)
सहसा हि कृतं पापं कथं माभूद्विपत्तये। (कथासरित्सागरे।)
सहसि प्लवगैरुपासितं नहि गुञ्जाफलमेति सोष्मताम्। (शिशुपालवधे।)
सहस्रेषु च पण्डितः।
सहायकृत्यैर्महतां न संगतं भवन्ति[1] गोमायुसखा न दन्तिनः। (किरातार्जुनीये।)
सागरं वर्जयित्वा कुत्र महानद्यवतरति। (अभिज्ञानशाकुन्तले।)
साधनेषु हि रतेरुपधत्ते रम्यतां प्रियसमागम एव। (किरातार्जुनीये।)
साधने हि नियमोऽन्यजनानां योगिनां तु तपसाऽखिलसिद्धिः। (नैषधीयचरिते।)
साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे।
साधूनां दुर्जनाद्भयम्।
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः।
साध्यासाध्यविचारं हि नेक्षते भवितव्यता। (कथासरित्सागरे।)
सानुकूले जगन्नाथे विप्रियः सुप्रियो भवेत्।
सामसिद्धानि कार्याणि विक्रियां यान्ति न क्वचित्।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः। (शिशुपालवधे।)
सारं गृह्णन्ति पण्डिताः।
साहसं नैरपेक्ष्यं च कितवानां निसर्गजम्। (कथासरित्सागरे।)
सिते हि जायेत शितेः सुलक्ष्यता। (नैषधीयचरिते।)

---

[1] मार्गशीर्षे।

सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः ।
सिद्धिर्भूषयते विद्याम् ।
सिद्ध्यन्ति कुत्र सुकृतानि विना श्रमेण ।
सीमन्तिनीनां कान्तोदन्तः सुहृदुपगतः संगमात्किंचिदूनः । ( मेघसन्देशे । )
सुकविता यद्यस्ति राज्येन किम् ।
सुकृती चानुभूयैव दुःखमप्यश्नुते सुखम् । ( कथासरित्सागरे । )
सुखं च मे शयनं च मे ।
सुखं शान्तिश्च सर्वस्य लोकस्य प्रभवेत्सदा ।
सुखमध्ये स्थितं दुःखं दुःखमध्ये स्थितं सुखम् ।
सुखमास्ते निःस्पृहः पुरुषः ।
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखस्य दुःखस्य न कोऽपि दाता ।
सुखार्थिनः कुतो विद्या ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ।
सुदुर्ग्रहान्तःकरणा हि साधवः । ( किरातार्जुनीये । )
सुदुर्लभं नार्हति कोऽभिनन्दितुं प्रकर्षलक्ष्मीमनुरूपसङ्गमे । ( किरातार्जुनीये । )
सुन्दरमणिमयभवने पश्यति रन्ध्रं पिपीलिका सततम् ।
सुपुत्रः कुलदीपकः ।
सुपर्वणो हि स्फुटभावना या सा पूर्वरूपं फलभावनायाः । ( शिशुपालवधे । )
सुरेषु हि श्रद्दधतां नमस्या सर्वार्थसिद्ध्यङ्गमिथः समस्या । ( शिशुपालवधे । )
सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् । ( किरातार्जुनीये । )
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता । ( किरातार्जुनीये । )
सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि । ( शिशुपालवधे । )
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् । ( मेघसंदेशे । )
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा । ( रघुवंशे । )
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ।
सेवाधर्मः परमगहनो योगिनामप्यगम्यः । ( हितोपदेशे । )
सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ।
स्तवे रवेरप्सु कृताप्लवैः कृते न मुद्वती जातु भवेत्कुमुद्वती । ( नैषधीयचरिते । )
स्तोत्रं कस्य न तुष्टये । ( कुमारसंभवे । )
स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ।
स्त्रियो नष्टा ह्यभर्तृकाः ।
स्त्रियो हि मूलं निधनस्य पुंसाम् ।
स्त्रियो हि मूलं व्यसनस्य पुंसाम् ।
स्त्रियो हि मूलं नरकस्य पुंसाम् ।
स्त्रियो यथा विचेष्टन्तां निष्कम्पं हि सतां मनः । ( कथासरित्सागरे । )
स्त्रिचित्तमहो विचित्रमिति । ( कथासरित्सागरे । )
स्त्रीचित्तस्येव दैवस्य को वेत्ति गहनां गतिम् । ( कथासरित्सागरे । )
स्त्रीणां पतिः प्राणा न बान्धवाः । ( कथासरित्सागरे । )
स्त्रीणां प्रियालोकफलो हि वेषः ( कुमारसंभवे । )
स्त्रीणां भावानुरक्तं हि विरहासहनं मनः । ( कथासरित्सागरे । )
स्त्रीणामलीकमुग्धं हि वचः को मन्यते मृषा । ( कथासरित्सागरे । )
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु । ( मेघसन्देशे । )
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् । ( कुमारसंभवे । )
स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ।
स्त्रीबुद्धिः प्रलयावहा ।
स्त्रीभिः कस्य न खण्डितं भुवि मनः ।
स्त्रीवचः प्रत्ययो हन्ति विचारं महतामपि । ( कथासरित्सागरे । )
स्त्री विनश्यति रूपेण ।
स्त्रीषु वाक्संयमः कुतः । ( कथासरित्सागरे । )

स्त्रीष्वनर्गलचेष्टासु कस्येच्छा नोपजायते। ( कथासरित्सागरे। )
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन। ( रघुवंशे। )
स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नृपाः।
स्थानभ्रष्टास्तु शोभन्ते सिंहाः सत्पुरुषा गजाः।
स्थितः पृथिव्या इव मानदण्डः। (कुमारसंभवे।)
स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्कचित्।
स्निग्धमुग्धा हि सत्स्त्रियः। ( कथासरित्सागरे। )
स्निग्धो हि विरहायासे साधुवादं ददाति किम्।
( कथासरित्सागरे। )
स्नुषात्वं पापानां फलमधनगेहेषु सुदृशाम्।
स्नेहस्तु कारणमनर्थपरम्परायाः।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगादिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति। (मेघदूते।)
स्नेहः पापशङ्की। ( अभिज्ञानशाकुन्तले। )
स्पृशन्ति न नृशंसानां हृदयं बन्धुबुद्धयः।
( नैषधीयचरिते। )
स्पृशन्त्यास्तारुण्यं किमिव नहि रम्यं मृगदृशः।
स्पृशन्नपि गजो हन्ति।
स्मर्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः। ( शिशुपालवधे। )
स्रोतोरत्नं विबुधतटिनी।
स्वं स्वं चरित्रं शिक्षेरन्सकाशादग्रजन्मनः। (मनौ)
स्वकर्मसूत्रग्रथितो हि लोकः।
स्वगृहे पूज्यते मूर्खः।
स्वग्रामे पूज्यते प्रभुः।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते।
( कुमारसंभवे। )
स्वजनालोकवातेद्धो दुःखाग्निः कं न तापयेत्।
( कथासरित्सागरे। )
स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम्।
स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता। ( शिशुपालवधे। )
स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा।
स्वदेशे पूज्यते राजा। ( चाणक्यनीतौ। )
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः। ( श्रीमद्भगवद्गीतायाम्। )
स्वपन्त्यज्ञा हि निश्चेष्टाः कुतो निद्रा विवेकिनाम्।
( कथासरित्सागरे। )
स्वपदाच्च्यवमानस्य कस्याज्ञां को हि मन्यते।
( कथासरित्सागरे। )
स्वभाव एवैष परोपकारिणाम्।
स्वभावतः सर्वमिदं हि सिद्धम्।
स्वभावस्वच्छानां पतनमपि भाग्यं हि भवति।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात्।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः। ( किरातार्जुनीये। )
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते।
( रघुवंशे। )
स्ववीर्यगुप्ता हि मनोः प्रसूतिः।
स्वसुखं नास्ति साध्वीनां तासां भर्तृसुखं सुखम्।
( कथासरित्सागरे। )
स्वस्थः को वा न पण्डितः।
स्वस्थे चित्ते बुद्धयः संभवन्ति।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते। ( रघुवंशे। )
स्वाङ्के पीठे च वाचं हरति सुरपतेः केशवस्यापि लक्ष्मीम्।
स्वाधीनकुशलाः सिद्धिमन्तः। ( अभिज्ञानशाकुन्तले। )
स्वातन्त्र्यान्न परं सुखम्। ( महाभारते। )
स्वाधीना दयिता सुतावधि।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं शोचन्ति सन्तो ह्युपकारि पक्षम्। ( किरातार्जुनीये। )
स्वामिन्यसाध्यव्यसने सुखं सन्मन्त्रिणां कुतः।
( कथासरित्सागरे। )

---

१ 'नित्यं छेदस्तृणानां भुवि नखकषणं पादयोश्चाल्पशौचं दन्तानामल्पशौचं वदनमलिनता रूक्षता मूर्धजानाम्। द्वे सन्ध्ये चातिनिद्रा ह्यवसनशयनं ग्रासहास्यातिरेकः' इत्यवशिष्टं पादत्रयम्।

स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति । ( शिशुपालवधे । )

स्वेनानलस्य स्फुटतां यियासोः फूत्कृत्यपेक्षा कियती खलु स्यात् । ( शिशुपालवधे । )

हंसो यथा क्षीरमिवाम्बुमध्यात् ।

हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयन्त्यपः । ( अभिज्ञानशाकुन्तले । )

हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ।

हतं ज्ञानं क्रियाहीनम् ।

हतं राज्यं प्रमादिनः । ( नीतिसर्वस्वे । )

हतं निर्नायकं सैन्यम् ।

हतं सैन्यमनायकम् ।

हतश्चाज्ञानतो नरः ।

हतविधिपरिपाकः केन वा लङ्घनीयः ।

हरति मनो मधुरा हि यौवनश्रीः।(किरातार्जुनीये।)

हरिस्मृतिः सर्वविपद्विदारणम् ।

हसन्नपि नृपो हन्ति ।

हसद्भिः क्रियते कर्म्म रुदद्भिर्भुज्यते फलम् ।

हस्तस्य भूषणं दानम् ।

हा कष्टं खलु वर्तते कलियुगे धन्या नराः सज्जनाः ।

हानिर्मृत्युर्यशोलाभस्तत्तत्काले भविष्यति ।

हास्यादृते किमन्यत्स्यादतिलौल्यवतां फलम् । ( कथासरित्सागरे । )

हा हा तथापि विषयान्न जहाति चेतः ।

हितः परोऽपि स्वीकार्यो हेयः स्वोऽप्यहितः पुनः । ( कथासरित्सागरे । )

हितप्रयोजनं मित्रम् ।

हितभुङ्मितभुग्शाकभुक् ।

हितभुङ्मितभुग्जनो भवेत् ।

हितमारण्यमौषधम् ।

हितं न वाच्यं ह्यहितं न वाच्यं हिताहिते नैव तु वाचनीये । मेरण्डको नाम ऋषिर्महात्मा हितोपदेशेन बलिं प्रविष्टः । ( कथासरित्सागरे ।)

हितं मनोहारि च दुर्लभं वचः । ( किरातार्जुनीये । )

हितैषिणः सन्ति न ते मनीषिणः ।

हितोपदेशो मूर्खस्य कोपायैव न शान्तये । ( कथासरित्सागरे । )

हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा । ( रघुवंशे । )

ह्यर्थो हि लोके पुरुषस्य बन्धुः ।

हेया परस्यापकृते मनीषा ।

हेया न दीनोपकृते मनीषा ।

होमः सर्वस्य पावनम् ।

होमवेलां न लङ्घयेत् । ( नीतिसर्वस्वे । )

ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः । ( नैषधीयचरिते । )

ह्रिया वेश्या विषीदन्ति ह्रीमान्धर्म्मं न मुञ्चति । ( नीतिसर्वस्वे । )

ह्लादयन्ति महात्मानः कस्य चित्तं न धीमतः ।

**इति सुभाषितसुधारत्नभाण्डागारस्य सप्तमं भाण्डं समाप्तम् ।**

भारद्वाजकुलाम्बुधौ समुदितः ख्यातः प्रशस्तैर्गुणैर्निःशेषान्धतमिस्रसंहतिपरो दिव्यां कलामुन्नयन् । दोषायोगमुपेत्य भासितनिजश्रीर्निस्तमःसाध्वसः सन्तापान्तकरोऽभवद्विजपतिः श्रीठण्डुरामाभिधः ॥ १ ॥ तद्भूः श्रीबलदेव इत्यभिधया पृथ्वीतलं पावयन्दोषास्थां विलयं चिराय च नयन्दीप्तिं परां स्थापयन् । उद्बोधं परितः प्रवर्त्य जडतामुन्मीलयन्सर्वतो भास्वन्नित्यमहामहाः सुमनसामामोदयन्मानसम् ॥ २ ॥ तस्य श्रीशिवनाथसूरिरुदभूत्सूनुः प्रभूतोदयो धैर्यौदार्यगभीरताऽऽदिगुणभृद्विश्वेश्वराराधकः । यत्कीर्त्या जगतीतलं विमलितं यत्तेजसा सर्वतो दीप्तिः सञ्चरिता नवैव तमसां पारे समुल्लासिनी ॥ ३ ॥ तस्यात्मप्रभुवा प्रभावमहतामाराधयित्रा सतां सन्तोषाय निगूढतत्त्वविविधग्रन्थाशयोल्लासिना । भाण्डागारमिदं सुभाषितसुधारत्नप्रभूतं स्फुटं व्याख्यायाद्य समर्प्यते सुमनसां संतुष्टये सम्मुखे ॥ ४ ॥ अस्याभ्यासाद्ग्रन्थवर्यस्य शिष्यः सर्वज्ञः स्याद्विस्फुरच्चारुबुद्धिः । अर्थं कामं वेत्ति धर्मं च मोक्षं निःसन्देहं शीलितुं पण्डितोऽपि ॥ ( श्रीशार्ङ्गधरस्य । )

इति **श्रीशिवदत्त**कविरत्नसङ्कलितं टिप्पणीसमेतं सुभाषितसुधारत्नभाण्डागारं समाप्तम् ॥

# क्रय्य-ग्रन्थाः ।



नाम — की. रु. आ.

अमरुशतक–शृंगार और वेदान्तपर काव्य दो टीका सहित. .... ०–१०

अश्वधाटीकाव्य भाषाटीकासमेत. ०–४

ऋतुसंहारकाव्य कालिदासकृत और चौरकविकृत चौरपञ्चाशिकाकाव्य । इसमें षड्ऋतुवर्णनादि राजकुमार बाबू देवनंदनसिंहकृत छन्दोबद्ध भाषाटीका है। ०–१०

कामाक्षिस्तुतिशतक मूककविविरचित ०–४

कलिविडम्बन भाषाटीकासमेत । तथा कलिप्रभाव भाषाटीकासमेत । इसमें कलियुगप्रभाव वर्णन है .... ०–४

किरातार्जुनीयकाव्य–सटीक । ग्लेज कागज २–८

तथा रफ कागजका .... २–०

कुमारसम्भव–महाकवि कालिदासकृत और मल्लिनाथकृत संजीवनीटीकासमेत । इसमें पार्वतीजीकी उत्पत्ति, ब्रह्माजीकी तारकासुरसे क्लेशित देवोंको शिक्षा, मदनदहन, रतिविलाप, पार्वतीके तपका उदय, पार्वतीका शिवजीसे विवाह करनेके निमित्त हिमवान्के पास सप्तऋषियोंको भेजकर विवाहका निश्चय और शिव पार्वतीजीका विवाह विधिपूर्वक वर्णित है. १–१२

कृष्णलीलामृतकाव्य .... .... ०–५

कृष्णकर्णामृतकाव्य– ( बड़ा ही भक्तिमय है ) .... .... ०–६

कार्ष्णिकण्ठाभरण– कार्ष्णिगोपालदास विरचित । नरोत्तमीय टीका तथा अमरेश्वरीय टिप्पणीसहित । इसमें भुजङ्गप्रयात रत्नदशक, तोटकरत्न

नाम — की. रु. आ.

दशक आदि दश दशक है । और श्रीकृष्ण भगवान्की स्तुतिके साथ २ ऐसी उत्तम कविता है कि पण्डितोंका मन मुग्ध हो जाता है। ०–८

गीतगोविन्द–राधाविनोदसमेत–भाषाटीकासहित । इसमें जयदेवगोस्वामिकृत अति ललित संस्कृतमें रागमय राधाकृष्णकी प्रेममयभक्तिकी गानेकी चीजें विद्यमान हैं । गानविद्या जाननेवालोंको अवश्य संग्रह करना चाहिये । यह भगवान्को अत्यन्त प्रिय है । १–८

गीतगोविन्द–मूलमात्र .... .... ०–३

गुरुपीयूषलहरी–गुरुनानकसाहबका वर्णन ०–६

घटकर्परकाव्य–भाषाटीकासमेत. .... ०–२

दशकुमारचरित–( संस्कृत ) .... १–८

दशकुमारचरित–भाषाग्रन्थ–राजकुमारादि दश कुमारोंकी अपूर्व रोचक देशाटनीय विचित्र कथा वर्णित है..... १–०

दृष्टान्तशतक–दोहा–भा० टी० । इसके श्लोक, दोहोंमें यह विचित्रता है कि पूर्वार्द्धमें दृष्टान्त और उत्तरार्द्धमें दार्ष्टान्त क्रमसे कहे गये हैं. .... .... ०–२

नलोदयकाव्य–सटीक । इसमें–महाराजा नल और दमयन्तीका रोचक चरित्र वर्णित है. .... .... .... १–०

पद्यमुक्तावली–इसके श्लोकोंके आदिमें क्रमसे स्वर व्यंजनोंके अक्षर आते हैं । यद्यपि छोटा है किन्तु देखने योग्य है. ०–१॥

पञ्चतन्त्र–मूलमात्र । विष्णुशर्मकृत नीतिशास्त्र..... .... .... २–०

| नाम | की. रु. आ. |
|---|---|
| पञ्चतन्त्र—विष्णुशर्माकृत और पं० ज्वालाप्रसादजीमिश्रकृत सुबोध भाषाटीकासमेत। यह मित्रभेद, मित्रसंप्राप्ति, काकोलूकीय, लब्धप्रणाश, अपरीक्षितकारक इन पाँच तन्त्रोंमें नीतियुक्त सर्वोत्कृष्ट है.... .... .... | ३–० |
| भक्तिरत्नावली—श्रीमद्भागवतोद्धृत स्तुतिसंग्रह. .... .... | ०–४ |
| भामिनीविलास—पं० महावीरप्रसाद द्विवेदीकृत भाषाटीकासहित । इसमें प्रस्ताविकविलास, शृंगारविलास, करुणाविलास तथा शान्तविलासादि अत्यन्त रोचक विषय हैं, पंडितोंके देखने योग्य है। .... | १–४ |
| भोजप्रबन्ध—मूल । कविबल्लालकृत । इसमें भोजराजका चरित्र, राजनीतिसंबंधी भली भांति वर्णित है। | ०–१२ |
| भोजप्रबन्ध—पं०श्यामसुन्दरलाल त्रिपाठीकृत भाषाटीकासमेत..... .... | १–८ |
| भोज और कालिदास—भाषाटीकासमेत। राजा भोज और कालिदासके चातुर्य्यकी उत्तमोत्तम कथाका संग्रह है. | १–८ |
| भंगाभङ्गनिषेध—भाषाटीकासमेत । इसमें भांगकी निंदाका खंडन भलीभाँति किया है.... .... .... | ०–२ |
| मूर्खशतक—भाषाटीकासमेत. .... | ०–१ |
| मेघदूतकाव्य—सटीक. .... .... | ०–८ |
| मेघदूतकाव्य—कालिदासकृत। सान्वय मल्लिनाथी टीका और भाषाटीकासमेत। इसमें—मेघका वर्णन अवलोकन करनेयोग्य है. .... .... .... | ०–१२ |
| रघुवंशमहाकाव्य— ( केवल पाँच सर्ग ) उपरोक्त अलंकारोंसे युक्त भाषाटीकासमेत .... .... | १–८ |
| रघुवंशमहाकाव्य—सटीक सर्ग १से९ तक | ०–१२ |
| रघुवंशमहाकाव्य—सटीक सर्ग ६ से १० तक .... .... | ०–१२ |
| राक्षसकाव्य—संस्कृतटीका और भाषाटीकासहित .... .... | ०–२ |

पुस्तक मिलनेका ठिकाना—

**खेमराज श्रीकृष्णदास,**
**"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,**
**बम्बई.**

**गङ्गाविष्णु श्रीकृष्णदास,**
**"लक्ष्मीवेङ्कटेश्वर" प्रेस,**
**कल्याण-बम्बई.**

